हृष्यति ताच्छील्येनेति हर्षमाण । 'हृष तुष्टौ'। 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३ २ १२९)। विकरोति पूर्वावस्थातो विकृतो भवतीति विकुर्वाण । पूर्ववच्चानश्। अथवा 'अकर्मकाच्च' (१ ३ ३५) इत्यात्मनेपदे[6] शानच्[7]। प्रमुदित[8] मनो यस्य प्रमना[9]। हृष्टान्त करणस्य नामानि ॥ ७ ॥

[1] 'ण्वुलतृचौ (३. १ १३३) इति ण्वुल [2] 'तदधीत तद्वेद' (४ २ ५९) $B_5$
[3] $B_5$, $Gm_3$ add गुणा [4] चरति (४ ४ ८) इति ठक [5] राज्ञा° $B_6$
[6] आत्मनपदत्व $Gm_3$ [7] $B_5$, $Tj_2$ add विकुर्वाण [8] प्रमुदीभूत $B_5$ [9] $Tj_1$ adds हृष्ट मानसमस्येति

(पा) परीक्षक कारणिक । परीक्षकनामनी ॥ वरदस्तु समर्धक[1]। तवर्गतृतीयमध्य[2]। वरप्रदनामनी ॥ हर्षमाणा—चेतन ।[3] हृष्टचित्तनामानि ॥७॥

[1] समद्धक $B_3$ [2] $A_1$ *omits* °मध्य [3] सतुष्ट° $B_3$

**दुर्मना विमना अन्तर्मना. स्यादुत्क उन्मना ।**
**दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि ॥ ८ ॥**

(वि) दुर्मना इति—[1]दुष्ट मनो यस्येति दुर्मना । [2]विरुद्ध मनो यस्यति विमना । [3]अन्तर्लीन [4]मनो यस्येति अन्तर्मना । महाखेदाद् दुष्टचित्तस्य नामानि ॥ उद्गत मनो यस्यति उत्क [5]। उन्मनाश्च । [6]सोत्कण्ठस्य नामनी ॥ दक्षते परकार्य शीघ्र करोतीति दक्षिण । 'दक्ष [7]वृद्धौ शीघ्रार्थे च'। सरति परेच्छामनुसरतीति सरल । 'सृ गतौ'। उदियर्ति परकार्य कर्तुमेतीति उदार । 'ऋ गतौ'। परेच्छानुसारिणो नामनी ॥ [8]शोभना [9]कलास्येति सुकल । त्यागभोगकलासु[10] कुशलस्य नाम ॥ ८ ॥

[1] दु खित $K_4$ $Pt_2$ [2] $K_2$ *omits* [3] $J_1$, $Pt_2$ add चिन्तावशात
[4] अन्तर्धीर $J_1$, $K_2$ P [5] $K_4$ omits [6] उत्कण्ठस्य $J_1$ [7] प्रवृद्धौ $J_1$, $K_5$
[8] $K_5$ omits 4 lines [9] $Pt_2$ adds त्यागभोगयो [10] °कलाकुशल° $J_1$

(विव) दुर्मना—स्यात। दुरवस्थमनस्कत्वेन दुर्मना । विमुख मनो यस्येति विमना । अन्तरेव[1] लीन मनो यस्येति अन्तर्मना । शोकरोपादिना वैमनस्ययुक्तस्य नामानि ॥ उत्क उन्मना । प्रियदर्शनार्यमुद्गत मनो यस्येति उत्क । 'उत्क

उन्मना ' इति [2]सूत्रे (५ २ ८०) उच्छब्दाद् स्वार्थे कन् प्रत्यय इति काशिकाकारः। उत्कण्ठासहितस्य नामनी ।। दक्षिणे सरलोदारौ। दक्षिणे दाक्षिण्यवति परेच्छानुवर्तनशीले शब्दद्वय स्यात्। दक्षते शीघ्र करोतीति दक्षिण·। दक्षते शीघ्रार्थे औणादिक इनन्[3] प्रत्यय. (उ २ ५२)। सरति परेच्छामनुसरतीति सरल.। 'सृ गतौ'। अलच् प्रत्यय[4] (उ १ १११)। उदियर्ति परकीय[5]प्रयोजनेषु इत्युदारः। 'ऋ गतिप्रापणयो.'। घञ्।। सुकलो—भोक्तरि। त्यागभोगशीलयुक्तस्य नाम। शोभना कला त्यागभोगयोर्यस्येति सुकल ।। ८ ।।

[1] B5 Gm3 add वहिरप्यावृत   [2] इत्यत्र सूत्रे काशिका—उच्छब्दात् ससाधनक्रियावचनात् तद्वति कन् प्रत्ययो निपात्यते Tv, मुद्रितग्रन्थे च (पृ ४५)   [3] 'द्रुदक्षिभ्यामिनन्'   [4] 'वृषादिभ्यश्चित्' (उ १ १११)   [5] परक्रिया° B6

(पा) दुर्मना—स्यात्। [1]दुष्टचित्तनामानि। उत्क उन्मना। उत्कण्ठितचित्तनामनी ।। अनुक्तम्—'वैहासिक केलिकील'। वैहासिकपुमान्[2] केलिकील स्यात्। 'नर्विचेवाडु'। दक्षिणे सरलोदारौ। [3]दक्षिणनायकनामानि। 'जार्णनवाडु'। 'अग्राम्ये सरलोदारविदग्धच्छेकदक्षिणा' इति वैजयन्ती (पृ २०२, श्लो २०)। सुकलो—भोक्तरि। दाता[4] भोक्ता च य स सुकल स्यात् ।। ८।।

[1] दून° B3, दु ख° C1   [2] नाम for पुमान् C1.   [3] B3 omits नायक°.
[4] B3 adds च after दाता

तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः।
प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता.।। ६ ।।

(वि) तत्पर इति—[1]तस्याभिमतवस्तुन परोऽधीन तत्पर। प्रसिनोति अभिमतविषये चित्तमिति प्रसित। 'षिञ् बन्धने'। [2]इष्टवस्तुनि आसजति [3]सगच्छत इति आसक्त। 'षञ्ज सङ्गे'। अभिमतविषयतत्परस्य नामनी।। अतिशयेनोद्योगोऽस्त्यस्येति उत्सुक। [4]इष्टार्थे उद्युक्तस्य नाम।। स्वजन प्रत्येतीति प्रतीत। 'इण् गतौ'। प्रथत इति प्रथित। 'प्रथ [5]प्रख्याने'। ख्यायत इति ख्यात [6]। विद्यते[7] ज्ञायत इति वित्त। 'विद ज्ञाने'। विशेषेण ज्ञायत इति विज्ञात।

'ज्ञा अवबोधने'। विशेषेण श्रूयत[8] इति विश्रुत.। 'श्रु श्रवणे'। [9]प्रसिद्धस्य नामानि ॥ ६ ॥

[1] J1, K5 omit तत्पर [2] अभिमतविषये J1, J2, K4 [3] सगच्छति J2, K6. [4] इष्टार्थम् K5 [5] ख्यातौ J1, K4 [6] J1, K2 add 'ख्या प्रकथने'. [7] J1, K2 add अयमसाविति [8] J2, K2, K5 add विज्ञायते. [9] J1 omits °स्य

(विव) तत्परे—आसक्तौ। यदभिमतं तत्रैव वस्तुनि पर एकाग्रचित्तः तत्परः। [1]तस्य नामनी। अभिमतवस्तुनि प्रकर्षेण चित्तं सिनोति[2] बध्नातीति प्रसितः। 'षिञ् बन्धने'। अभिमतविषये सितो बद्ध इति वा। आसजति क्वचिदतिशयेन सक्तो भवतीत्यासक्तः। 'षञ्ज सङ्गे'। कर्तरि क्तः (३. ४. ७२) ॥ इष्टार्थे—उत्सुकः। अभिमतवस्तुन्युद्योगयुक्तः इष्टार्थोद्युक्तः[3]। उच्छब्द उद्योगार्थः। सुशब्दोऽतिशयार्थः। कशब्दः सुखवचनः। उद्योगेनातिशयितं सुखमस्येति उत्सुकः। भोजराजस्तु[4]—

'उदित्युद्योगमाचष्टे स्वित्याधिक्यमभीप्सिते।
तदस्यास्तीति मत्वर्थे कनि स्यादुत्सुको मतः॥'

इति। स्वेप्सितमर्थं प्राप्तुमयं प्रचलितावस्थ इति पूर्वस्मादस्य भेदः॥ प्रतीते—विश्रुताः। गुणेन दोषेण वा येन केनचित् प्रसिद्धस्य नामानि। यथा प्रथितपराक्रमः। प्रख्यातपातक.[5]। विश्रुतचरितः इत्यादि। 'इण् गतौ' इति [6]धातोर्निष्ठायाम् इत इति रूपम्। प्रतीत्युपसर्गस्य व्याप्तिरर्थः। गत्यर्थानां ज्ञानार्थत्वात् प्रतिपुरुषम् इतः[7] ज्ञातः प्रतीतः। प्रथते प्रसिद्धो भवतीति प्रथितः। 'प्रथ प्रख्याने'। क्तः (३.४.७२)। ख्यायते सर्वैरिति ख्यातः। 'ख्या प्रकथने'। क्तः (३. २. १०२)। विद्यते ज्ञायत इति वित्तः। 'विद ज्ञाने'। क्तप्रत्ययः (३. २. १०२)। 'वित्तो भोगप्रत्यययोः' (८. २. ५८) इति निपातनसूत्रे काशिकाकारेण (२, पृ. ४१०) 'वित्तोऽयं मनुष्यः' इत्युदाहृत्य प्रतीत[8] इति व्याख्यातम्। न्यासकारेणापि (भाग २, पृ. १००१) 'प्रतीतो ज्ञात इत्यर्थः'[9] इति विवृतम्। अतश्च 'विद ज्ञाने' इति धातोर्वित्त इति निपातित इति ज्ञायते। विदेर्लाभार्थाद् वित्त इति निष्ठानत्वाभावो निपातित इति सर्वानन्दः[10] (४, पृ. ५)। 'नुदविदोन्दत्रा...' इत्यादिसूत्रे (८. २ ५६) वार्त्तिककारोऽप्याह—

'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
वित्तेर्विन्नश्च वित्तश्च भोगे[11] विन्नश्च विन्दतेः ॥'

इति (काशिका २, पृ. ४१०) । विशेषेण ज्ञायते विज्ञातः । विशेषेण श्रूयते विश्रुतः ॥ ९ ॥

[1] तत्र शब्दद्वय स्यात् $B_5$, $T_{J2}$　[2] $Gm_3$ adds स्म　[3] अभिमते वस्तुनि उद्योगवान् उद्युक्त । इष्टार्थे उद्युक्त $B_5$, $T_{J1}$, Tv　[4] $B_5$, $B_6$ add आह　[5] °पाठक $B_5$, $T_{J2}$　[6] $B_5$ adds अस्मात्　[7] इतो गतोऽवगतो ज्ञात इति यावत् $T_{J1}$, $T_{J2}$　[8] प्रतीत इत्यर्थं $B_5$, मुद्रितग्रन्थे च　[9] 'प्रतीत आख्यात इत्यर्थ' इति मुद्रितग्रन्थे　[10] 'विदिर्लाभे'। 'वित्तो भोगप्रत्यययो' इति निपातनान्न नत्वम् इति मुद्रितग्रन्थे　[11] लाभे $Gm_3$, Tv

(पा) तत्परे—आसक्तौ । [1]आसक्तनामानि ॥ इष्टार्थे—उत्सुक । इष्टार्थे उद्युक्त उत्सुक. स्यात् ॥ प्रतीते—विश्रुता । [2]प्रसिद्धनामानि ॥ ९ ॥

[1] तत्परनामनी $B_3$, $C_1$　[2] विख्यातस्य $B_3$

**गुणैः प्रतीते तु कृतलक्षणाहतलक्षणौ ।**
**इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता ॥ १० ॥**
**अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ।**

(वि) गुणैरिति—[1]कृता सत्कृता लक्षणरूपा गुणा यस्य स कृतलक्षण । आहतास्ताडिता[2] उद्घोपिता लक्षणरूपा[3] गुणा यस्य स [4]आहतलक्षण । [5]प्रख्यातस्य नामनी ॥ [6]इभवन्नीराजनादिपूजामर्हतीति इभ्य । आध्यायन्ति तदुपजीविन एन स्मरन्तीति आढ्य । 'ध्यै चिन्तायाम्'। धनमस्यास्तीति धनी। धनिनो नामानि ॥ स्वमैश्वर्यमस्यास्तीति स्वामी[7]। ईष्टे[8] इतीश्वर । ईशिता च। 'ईश ऐश्वर्ये'। पाति[9] सेवकानिति पति । 'पा रक्षणे'। अधि [10]सेवकानामुपरि भवतीत्यधिभू । नयति स्वसेवकान् [11]नियुङ्क्त इति नायक । नेता च। 'णीञ् प्रापणे'। प्रभवति समर्थो भवतीति प्रभु । 'भू सत्तायाम्'। [12]परिवृहति सेवकान् पोपयतीति परिवृढ । 'वृहि वृद्धौ'। अधिक[13] पातीत्यधिप । स्वामिनो नामानि ॥ १० ॥

[1] कृतमभ्यस्त लक्षण नाम . 'लक्षण नामचिह्नयो ' $Pt_2$ [2] आहृत गुणितमसकृ-दुच्चरित लक्षण $Pt_2$ [3] °रूपगुणा $J_1$ [4] आहितलक्षण इति वा पाठ $K_5$, 'इक्षाकुवश्य . इत्याहितलक्षणोऽभूत्' (रघु ६ ७१) $Pt_2$ [5] $K_5$ adds गुणै ; $J_1$, $K_2$ omit °स्य. [6] इभमर्हति $Pt_2$. [7] $K_2$, $Pt_2$ add नान्त [8] $Pt_2$ adds ताच्छील्येन [9] $K_4$, $Pt_2$ add स्वानुजीविन [10] $Pt_2$ omits सेवकानाम्. [11] विनियुङक्ते $J_2$, $Pt_2$ [12] परिबृहयति $K_5$ [13] $Pt_2$ omits °क

(विव.) गुणैः—लक्षणौ। [1]त्यागशौर्यादिगुणैः प्रसिद्धस्य नामनी। कृतं मुहुरभ्यस्तं लक्षणं नामास्येति कृतलक्षणः। 'गुणिताहते' (श्लो. ८९) इत्यत्रैव वर्गे वक्ष्यति। आहता गुणिता असकृदुच्चारिता इत्यर्थः। लक्षणशब्देन च व्यावृत्तिजनकतया[2] शौर्यधैर्यादयो गुणा उक्ताः। आहितानि लक्षणान्यस्येति आहितलक्षण इति संप्रदायविदः। अन्ये त्वन्यथा व्याचक्रुः। आहितं निहितं जनमुखे स्थापितं लक्षणं गुणजातमस्येत्याहितलक्षण इति। अत्र [3]गुणैरिति पदस्यात्यन्तव्यवहितपूर्वार्धगतप्रतीतिपदेन (श्लो. ९) संबन्धे कारणाभावादव्यवहितानन्तरपठितप्रतीतपदेनाकाङ्क्षितार्थप्रतिपादकत्वाद् गुणप्रतीतिपदयोरुभयोरपि एकपदप्रायत्वेन 'त्वन्ताथादि न पूर्वभाक्' (१. १. ५) इति परिभाषया विरोधाभावो निर्वोढव्यः। 'इक्ष्वाकुवश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्' इति रघुवंशे प्रयोगः (६. ७१)॥ इभ्यः—धनी। बहुधनस्य नामानि। इभं गजमर्हतीति इभ्यः। 'दण्डादिभ्यो यत्' (५. १. ६६) इति यत्प्रत्ययः। आध्यायन्त्येनं सेवका इत्याढ्यः। 'ध्यै चिन्तायाम्'। पृषोदरादिः। अन्यो व्यक्तयोगः[4]॥ स्वामी—अधिपः। जीवनप्रदानादिना[5] रक्षकस्य नामानि। स्वमैश्वर्यं प्राधान्यमस्येति स्वामी। 'स्वामिन्नैश्वर्ये' (५. २. १२६) इति स्वशब्दाद् ऐश्वर्यवचनाद् मत्वर्थे आमिन्प्रत्ययो निपातितः। ईष्टे ताच्छील्येन ईश्वरः। 'ईश ऐश्वर्ये'। 'स्थेशभासपिसकसो वरच्' (३. २. १७५) इति वरच्। स्त्रियां टापि ईश्वरा[6]। 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविप्रयोगः (किरा. ५. ३३)। सर्वानन्दस्त्वाह—'"अश्नोतेराशुकर्मणि वरट् च" (उ. ५. ५८) इति वरट् प्रत्ययः। धातोरादेरकारस्य च ईकारादेशः' (टी. स. ४, पृ. ५)। तन्मते स्त्रियां टित्वेन ङीपि ईश्वरी[7]। '[8]ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्' इति प्रयोगः (तै. आ. १०. १. १०)॥ पाति स्वानुजीविन इति पतिः। 'पातेर्डतिः' (उ. ४. ५८) इति डतिप्रत्ययः। स्त्रीलिङ्गे [9]शुचिशब्दवत्, नपुंसके वारिशब्दवद् रूपमुन्नेयम्। 'ईश ऐश्वर्ये' इत्यस्मादेव

ताच्छील्यार्थे तृन् प्रत्यये (३. २. १३५) ईशिता ।। अधि [10]स्वानुजीविनामुपरि भवतीति अधिभूः । भवतेः क्विप्[11] (३. २. १७६) ।। नयति स्वजनं प्रापयतीति नायकः । 'णीञ् प्रापणे' । ण्वुल् (३. १. १३३) ।। तृच्प्रत्यये नेता ।। इतरापेक्षया प्रकर्षेण भवतीति प्रभुः । 'विप्रसंभ्यो ड्वसंज्ञायाम्' (३. २. १८०) इति भवतेर्डु-प्रत्ययः । डित्त्वेन टिलोपः ।। परिबृहति वर्धत इति परिवृढः । [12]'बृहि वृद्धौ' । 'प्रभौ परिवृढः' (७. २. २१) इति क्तप्रत्ययः, इडागमाभावः प्रत्ययतकारस्य ढत्वं च, नकारहकारयोर्लोपश्च निपात्यते ।। अधि पातीत्यधिपः । कप्रत्ययः (३. १. १३६) ।। १० ।।

[1] °औदार्य° Tv [2] °जनकत्वेन° B5, Tj2 [3] B5, Tv omit 5 lines. [4] धनिशब्द । बहु धनमस्येति । इनि (५ २ ११५) [5] B5, Tj1 omit. [6] 'पुयोगविवक्षाभावात् ङीप्' इति घण्टापथे मल्लिनाथ (पृ ११०) [7] केचित्तदन्यथा व्याचक्षते—'आतो मनिन् क्वनिब्वनिपश्च' (३ २. ७४) । 'अन्येभ्योऽपि दृश्यन्ते' (३ २ ७५) इति सूत्रेण अनाकारान्तस्यापि । 'ईश ऐश्वर्ये' इत्यस्मादेव वनिप्प्रत्यये 'वनो र च' (४ १ ७) इति ङीपि रेफादेशे च ईश्वरीति B5 [8] Tv omits the line [9] रुति° B5 [10] स्वसेवकजनस्य° B5, Gm3 [11] 'भुव सञ्ज्ञान्तरयो .' [12] बृहबृहि Gm3

(पा) गुणै—लक्षणौ । [1]गुणप्रसिद्धनामनी ।। इभ्य—धनी । [2]धनिनामानि । 'अर्थवानस्तिमानपि'[3] । एते द्वे च । स्वामी—अधिप । प्रभुनामानि ।। १० ।।

[1] गुणे C1 [2] धनिव° C1 [3] अशुमान् B3, C1

अधिकर्धिः समृद्धः स्यात् कुटुम्बव्यापृतस्तु यः ।। ११ ।।
स्यादभ्यागारिकस्तस्मिन्नुपाधिश्च पुमानयम् ।

(वि) अधिकर्धिरिति—अधिका ऋद्धिर्यस्येति अधिकर्धि । सम्यग् [1]ऋद्ध यस्येति समृद्ध । समृद्धिरिति पाठे सपूर्णा ऋद्धिर्यस्येति [2]समृद्धि । अधिकसपन्ननामनी ।। अभि अभित [3]आगारे [4]भव वर्तमान [5]अभ्यागारिक । अस्य उप समीपे रक्षणाय कुटुम्ब निधीयत इत्युपाधि [6] । कलत्रादिपोषणे व्यापारवतो नामनी ।। ११ ।।

[1] ऋद्धि Pt2. [2] K3, K5 add 'ऋधु वृद्धौ' [3] अगारे K5. [4] J1 omits.
[5] अगार भक्तिरस्येत्यागारिक , अभि अधिक आगारिक Pt2 [6] उपदधाति कुटुम्बमिति, 'डुधाञ् . ', नियतपुलिङ्गश्च Pt2

(विव.) अधिकर्धिः—स्यात्। अतिशयेन [1]धनधान्यसमृद्धस्य नामनी। 'ऋधु वृद्धौ' इत्यस्मात् संपूर्वान्निष्ठायां (३.४.७२) समृद्धः। कुटुम्ब—पुमानयम्। अत्र कुटुम्बशब्देन पुत्रकलत्रादिवर्गः[2] उच्यते। तत्र [3]व्यापृतः पोषणादिव्यग्रः, तस्यैते नामनी। अत्र अगारशब्दः कुटुम्बोपलक्षकः। अगारं भक्तिसेव्यमस्येति आगारिकः। भक्तिरित्यनुवृत्तौ 'अचित्ताददेशकालाट्ठक्' (४. ३. ९६) इति ठक्[4]। अभ्यधिक आगारिकः अभ्यागारिकः॥ उपेत्युगसर्गः समीपवचनः। सर्वदा उप गृहसमीप एवाधीयत इत्युपाधिः। 'डुधाञ् धारणपोषणयोः'। 'उपसर्गे घोः किः' (३. ३. ९२) इति किप्रत्ययः। कित्वादाकारलोपः[5] (६. ४. ६४)। अयमुपाधिशब्दो योषिदादिविशेषणत्वेऽपि आविष्टलिङ्गत्वात् पुलिङ्ग एवेति दर्शयितुं पुमानित्युक्तम्॥ ११॥

[1] °धान्यादि° B5, TJ1. [2] पोष्यवर्ग B6, TJ2 [3] B5 adds पोषणादि
[4] ठक्प्रत्यय B5, TJ2 [5] 'आतो लोप इटि च'.

(पा) अधिकर्द्धि —स्यात्। अधिकसपद्वतो[1] नाम॥ कुटुम्व—पुमानयम्। कुटुम्वपोषणरतनामनी[2]॥ ११॥

[1] ऋद्धिमत C1 [2] °निरत° B3, C1

**वराङ्गरूपोपेतो यः सिंहसंहननो हि सः॥ १२॥**
**निर्धार्यः कार्यकर्ता यः संपन्नः सत्त्वसंपदा।**
**अवाचि मूकोऽथ मनोजवसः पितृसंनिभः॥ १३॥**

(वि) वराङ्गेति—सिहस्येव सहनन शरीरमस्येति [1]सिहसहननः। वराङ्गरूपोपेतस्य नाम॥ निर्धार्यते जनेभ्य [2]सत्त्वसपत्त्या [3]पृथगुपदिश्यत इति निर्धार्यः। 'धृञ् धारणे'। निवार्य इति वा पाठः। कार्यस्य कर्ता कार्यकर्ता। चित्तोत्कर्षसपन्नस्य कार्यकर्तुर्नामनी॥ मूयते[4] वाक्प्रवृत्तिरस्येति मूक.। 'मूञ् वन्धने'।

वागिन्द्रियविकलस्य नाम ॥ मनोऽस्मिन् पितृबुद्धचा [5]जवते धावतीति मनोजवस । 'जु गतौ' । पितृमनोजेऽभिलाषे वसतीति वा मनोजवस [6] । पितृसनिभस्य नाम ॥ १२-१३ ॥

[1] श्रेष्ठावयवसौदयसहितो य पुरुष स सिंहसहनन इत्युच्यते $Pt_2$ [2] $K_4$, P omit [3] °व्यपदिश्यते $Pt_2$ [4] बध्यते $K_4$, $Pt_2$ [5] जवति $K_4$ $K_5$, जुरिति सौत्रो धातु $K_3$ P [6] $J_2$ $K_2$ add 'वस निवासे'

(विव ) <u>वराङ्ग—हि स</u> । वरं [1]स्वोचितसस्थानविशेषतया [2]श्रेष्ठैरङ्गैः अवयवै रूपेण सौन्दर्येण च य सहित , सिंहस्येव सहनन शरीरमस्येति कृत्वा, स सिंहसहनन उच्यते ॥ <u>निर्धार्य —सपदा</u> । सत्यपि दु खादिकारणे विकाररहित मन सत्त्वम् । तथाभूतया मनोवृत्त्या सपन्नो युक्त एव य कार्यं करोति स निर्धार्य । केचित्तु 'सपतन् सत्त्वसपदा' इति पठन्ति । तत्रापि सपतन् सगच्छमान इत्यर्थ । निर्धार्यते सत्त्वसपत्या[3] जनेभ्य पृथगपदिश्यत[4] इति निर्धार्य ॥ <u>अवाचि मूक</u> । [5]अविद्यमान वागिन्द्रियमस्येति अवाक् । तत्र [6]मूकशब्द । मूयते प्रतिबध्यते भाषण-क्रियायामिति मूक [7] । 'मून्व् बन्धने' ॥ <u>अथ—सनिभ</u> । अवयवसनिवेश-सारूप्यात् गुणसाधर्म्याद् वा य पित्रा सदृश स पितृसनिभ । [8]तस्येद नाम । पितैवार्यमिति जनाना मनो जवतेऽस्मिन्निति मनोजवस । जु इति सौत्रो धातु । [9]औणादिकोऽसचप्रत्यय इति <u>स्वामी</u> (पृ २३८) ॥ १२-१३ ॥

[1] स्वस्वोचित° $B_5$ $Tj_2$ [2] विशिष्टै $B_5$, $Tj_1$ [3] सपदतिशयेन $B_5$ [4] °उपदिश्यते $B_5$, $Tj_2$ [5] अविद्यमाना वागस्यति $B_5$ Tv [6] $B_5$ omits शब्द . [7] 'मू' इति कायति, 'आतोऽनुपसर्गे क' इति भानुजीदीक्षित (पृ ४१०) [8] स मनोजवस इत्युच्यते $B_5$, $Tj_2$ [9] 'औणादिकोऽस —चमसादिवत इति मुद्रितग्रन्थे (पृ २३८)

(पा ) <u>वराङ्ग—हि स</u> । य सर्वाङ्गसुन्दर स सिंहसहनन स्यात् ॥ <u>निर्धार्य —सयुक्त [1] सत्त्वसपदा</u> । य सत्त्वसपत्त्या [2]सयुक्त सन् कार्यकर्ता स निर्धार्य स्यात् ॥ <u>अवाचि मूक</u> । वागिन्द्रियविकलो मूक स्यात् ॥ <u>अथ—पितृसनिभ</u> । पितृसमान पुत्रो मनोजवस स्यात् ॥ [3]'मनोजवस पितृसधर्माणम्' <u>इत्यमरमालाकार</u> ॥ अनुक्तम्—'आमुष्यायण उत्पन्नो य [4]प्रसिद्धकुलात् पितु ' ।

प्रसिद्धकुलात् पितुरुत्पन्नः पुत्र आमुष्यायण. स्यात् ।। 'स तु स्यादर्जुनो यस्तु मातुरेकतनूभव.' । मातुरेक [5]एव सुतोऽर्जुन स्यात् ।। १२-१३ ।।

[1] सपन्न B3, C1. [2] B3 omits सम् [3] 'मनोजवपितृसधर्माण.' इति नाममालेति भानुजीदीक्षित (पृ ४११). [4] विख्यात° A1, C1. [5] B3 omits एव.

**सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः ।**
**लक्ष्मीवाँल्लक्ष्मणः श्रीलः श्रीमान् स्निग्धस्तु वत्सलः ।। १४ ।।**

(वि.) सत्कृत्येति—कूकु कन्या ददातीति कूकुद. । 'डुदाञ् दाने' । कोकते महत् पुण्यमादत्त इति वा । 'कुक आदाने' । कूपद इति वा पाठ. । तदा कूप [1]सत्कृत्यालकृता कन्या [2]ददातीति कूपदः । ब्राह्मविवाहकर्तुर्नाम ।। लक्ष्मीः सपदस्यास्तीति लक्ष्मीवान् । लक्ष्मणश्च । श्रिय लात्यादत्त इति श्रील.[3] । 'ला आदाने' । श्रीरस्यास्तीति श्रीमान् । सपद्युक्तस्य नामानि ।। स्निह्यतीति स्निग्ध. । 'ष्णिह् प्रीतौ' । स्नेहेन युक्तः स्निग्धो वा । वत्सः स्नेहः, [4]सोऽस्यास्तीति वत्सलः । स्नेहयुक्तस्य नामनी ।। १४ ।।

[1] सत्कृत्य J2. [2] यो ददाति स K5 [3] श्लील इति वा पाठ Pt:
[4] J1, K2 omit स .

(विव.) सत्कृत्य—कूकुदः। यः स्वसंपदनुसारेण वस्त्राभरणालंकृतां कन्यां कुलशीलाय वराय विधिवद् ददाति स कूकुदः स्यात् । स्मृतिरपि—'[1]कूकुरित्युच्यते कन्या तद्दाता कूकुदः स्मृतः' इति ।। लक्ष्मीवान्—श्रीमान् । एतानि धनधान्यदासीदासादिसमृद्धियुक्तस्य [2]चत्वारि नामानि । पूर्वोक्त इभ्यादिशब्दवाच्यस्तु [3]केवलधनयुक्त इत्यनयोर्भेदः । लक्ष्मीरस्यास्तीति लक्ष्मणः । 'लक्ष्म्या अच्च' (वा. ५. २. १००) इति [4]पामादिसूत्रेण (५. २. १००) लक्ष्मीशब्दात् मत्वर्थीयो नप्रत्ययः, अकारश्चान्तादेशः । श्रियं लात्यादत्ते श्रीलः । 'आतोऽनुपसर्गे कः' (३. २. ३) । सिध्मादित्वेन (५. २. ९७) वा श्रीशब्दाद् मत्वर्थीयो लच्प्रत्ययः । रलयोरभेदत्वेन श्लील इति लकारद्वयवानिति सुबोधिनी[5] । [6]कपिलकादित्वाद् (वा. ८. २. १८) रेफस्य लत्वमिति सुभूतिचन्द्रः । रेफसहितस्तु अप-

पाठः[7] ॥ स्निग्धस्तु वत्सलः। स्नेहयुक्तस्य नामनी। वयस्ये स्निग्धशब्दः [8]प्रागुक्तः (२. ८. १२)। वत्सः स्नेहोऽस्यास्तीति वत्सलः। 'वत्सांसाभ्यां कामबले' (५. २. ९८) इति लच्प्रत्ययः। अत्र सूत्रे [9]वत्सशब्दस्य कामपदेनार्थाभिधानाद् वत्सलः स्नेहवानिति [10]काशिकाकारेण (२, पृ. ४९) व्याख्यातत्वाच्च वत्सशब्दः स्नेहवचन इति गम्यते[11] ॥ १४ ॥

[1] कुकु Gm3, Tj1. [2] वाचकानि B5, Tv. [3] श्लो. १०, केवलधनिकादस्य भेद B3, Tj2. [4] 'लोमादिपामादिपिच्छादिभ्य शनेलच '. [5] Tv adds °कार [6] 'कपिलकादीना सज्ञाच्छन्दसोर्वा रो लमापद्यत इति वक्तव्यम्'. [7] क्षीर इति. [8] 'ष्णिह प्रीतौ', क्त. [9] B5, Tv add लच्प्रत्ययप्रकृतिभूतस्य. [10] अत एव काशिका 'वत्सल इति स्नेहवानुच्यते' इति B5, मुद्रितग्रन्थे च (२, पृ ४९). [11] क्षत्रियवर्गे वयस्यपर्यायत्वेन स्निग्धशब्द उक्त । अत्र तु स्नेहवन्मात्रे पित्रादावपीति न पौनरुक्त्यम् B5

(पा) सत्कृत्य—कूकुद । [1]अलकारसहिता कन्या वरं सत्कृत्य प्रदाता पिता कूकुद स्यात् ॥ लक्ष्मीवान्—श्रीमान् । श्रीमतो नामानि ॥ स्निग्धस्तु वत्सल । [2]वात्सल्यवतो नाम ॥ १४ ॥

[1] सालकारकन्यकाप्रदाता B3, C1. [2] स्नेहवत B3, C1.

स्याद् दयालुः कारुणिकः कृपालुः सूरतः समाः ।
स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः ॥ १५ ॥

(वि) स्यादिति—दयास्यास्तीति दयालु । दयते ताच्छील्येनेति [1]वा । [2]करुणास्यास्तीति कारुणिक:। कृपास्यास्तीति कृपालु । कृपा लातीति वा । 'ला आदाने'। [3]सूरवत् दयालुर्महिम्ना तपति प्रकाशत इति सूरत.[4] । सुरत इति पाठे सुष्ठु रमते दययेति सुरत. । कृपावतो नामानि ॥ [5]स्व आत्मा तन्त्र प्रधानमस्येति स्वतन्त्रः । अपगतमावृतम् आवरण नियामकपुरुषान्तरमस्येति अपावृत । स्वेन स्वेच्छयैव [6]ईर्यति चरतीति स्वैरी। 'ऋ गतौ'। स्वकीय एव छन्दोऽभिलाषोऽस्येति स्वच्छन्दः। निष्क्रान्तोऽवग्रह [7]परप्रेरणमस्येति निरवग्रह. । स्वतन्त्रनामानि ॥ १५ ॥

[1] 'देङ् रक्षणे' J2, Pt2. [2] कारुण्य Pt2 [3] सूर्यवत् K3, P; सूर्य इव Pt2. [4] K3, Pt2 add 'तप संतापे' [5] स्वम् P, Pt2. [6] ईरितु शीलमस्य Pt2. [7] परग्रहण K4, P, करग्रहण J1; अवग्रहात् Pt2.

(विव.) स्याद् दयालुः—समाः। आपन्नरक्षणेच्छया तदुपायप्रवृत्तिशीलस्य नामानि। दयते दयालुः[1]। 'स्पृहिगृहिपतिदयि[2] ...' (३. २. १५८) इत्यदिना आलुच्। [3]कारुण्यशब्दाद् 'अत इनिठनौ' (५. २. ११५) इति मत्वर्थीये ठनि 'हलस्तद्धितस्य' (६. ४. १५०) इति यकारलोपे कारुणिकः। कृपां लातीति कृपालुः। 'डुप्रकरणे मितद्रवादिभ्य उपसंख्यानम्' (वा. ३. २. १८०) इति डुप्रत्ययः। सूरः सूर्य इव तपति प्रसिद्धतया प्रकाशत इति सूरतः। 'तप संतापे'। 'अन्येष्वपि दृश्यते' (३. २. १०१) इति डः॥ स्वतन्त्रो—निरवग्रहः। [4]स्वेच्छावृत्तेर्नामानि। स्वमेव तन्त्रं प्रधानमस्येति स्वतन्त्रः। अपगतमावृतं प्रावरणं प्रतिबन्धः पुरुषान्तरकृतमस्येति अपावृतः। स्वेन स्वचित्तवशेन ईर्ते प्रवर्तत इति स्वैरी[5]। 'सुप्यजातौ णिनिः ...' [6](३. २. ७८) इति णिनिः। 'स्वादीरेरिणोः ...' [7](वा. ६. १. ८९) इति वृद्धिः। स्वकीय एव छन्दोऽभिप्रायः प्रवृत्तिहेतुरस्येति स्वच्छन्दः। निष्क्रान्तः पुरुषान्तरकृतोऽवग्रहः[8]प्रतिबन्धोऽस्मादिति निरवग्रहः ॥१५॥

[1] Gm3, Tv add 'देङ् रक्षणे'. [2] 'निद्रातन्द्राश्रद्धाभ्य आलुच्' इत्यालुच्प्रत्ययः B5, Tj2. [3] दुर्घटेय वृत्ति। करुणा शीलमस्य, 'शीलम्' (४. ४. ६१) इति ठगिति सुवचत्वात्. [4] स्वतन्त्रस्य B5, Tv. [5] Tv adds 'ईर गतौ कम्पने च'. [6] ताच्छील्ये Tj1, Tj2. [7] Gm3 adds वृद्धिर्वक्तव्या. [8] प्रतिषेधः B5, Tj2

(पा.) स्याद् दयालु.—समा.। [1]दयावतो नामानि ॥ स्वतन्त्रो—निरवग्रहः। स्वाधीननामानि। 'स्वैरः स्वाधीन. स्वरुचि. [2]पथगामी निरङ्कुशः।' एतानि च ॥ १५ ॥

[1] कारुण्यवत B3. [2] पथागामी C1.

परतन्त्रः पराधीनः परवान् नाथवानपि ।
अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥ १६ ॥

(वि ) परतन्त्र इति—[1]पर तन्त्र प्रधानमस्यति परतन्त्र । [2]परस्मिन् [3]अधीन पराधीन । परो [4]नियन्तास्येति परवान् । नाथोऽस्यास्तीति नाथवान् । [5]अध्युपरि इन स्वामी यस्य अधीन । नियम्यते प्रभुणा तिरस्क्रियत[6] इति निघ्न । आयत्यते [7]एककमसु नियुज्यत[8] इत्यायत्त । 'यती प्रयत्ने' । [9]स्वच्छन्दो न भवतीति अस्वच्छन्द । गृह्यत पुरुषार्थनियोगनेति[10] गृह्यक । 'ग्रह उपादाने' । परतन्त्रनामानि ।। १६ ।।

[1] स्वस्मादन्य $Pt_2$  [2] परस्य $K_5$  [3] गुणभूत $Pt_2$  [4] नियामक $J_2$, $K_4$  [5] अधिगत $Pt_2$  [6] निहन्यत पीडयते $J_1$ $Pt_2$  [7] $J_2$ omits एक  [8] $J_1$, $K_4$ P omit  [9] न स्वच्छन्द $J_1$, $K_2$  [10] °निरोधन $J_1$, $J_2$  [11] स्वीनियत व्यापारेषु $Pt_2$

(विव ) परतन्त्र —गृह्यकोऽप्यसौ । परतन्त्रादयो नव [1]परायत्तवृत्तेर्नामानि । पर स्वस्मादन्य श्रेष्ठो वा तन्त्र प्रधानमस्येति परतन्त्र । परस्मिन् आत्मनोऽन्यस्मिन् अधि गुणभूत पराधीन । 'सप्तमी शौण्डै' (२ १ ४०) इति समास । 'अषडक्ष ' [2]इत्यादिना (५ ४ ७) ख । अत्र काशिका—'अध्युत्तरपदस्तत्पुरुष । अधिशब्द शौण्डादिषु पठ्यते। उत्तरत्र विभाषाग्रहणात् नित्य [3]एवाय प्रत्यय ' (२, पृ ८१) । पराधीन परमधिकृत्य गुणीभूत इत्यर्थ । पर. श्रेष्ठो नियामकोऽस्यास्तीति परवान्, नाथवानपि । अधि स्वस्योपरि इन प्रभुरस्येति[4] अधीन ।। निहन्यते प्रतिकलमाचरन् बाध्यत इति निघ्न । 'घञर्थे कविधान स्थास्नापाव्यधिहनियुध्यर्थम्' (वा ३ ३ ५८) इति[5] घञर्थभूते कर्मणि हन्ते कप्रत्यय । 'गमहनजन ' (६ ४ ९८) इत्यादिना हन्तेरुपधालोप । यद्यप्यत्र लोपाजादेशस्य स्थानिवद्भावप्राप्तिरस्ति तथापि 'हो हन्ते .' (७ ३ ५४) इत्यादिसूत्रे काशिकाकारेणैव (२, पृ ३४१) 'स्थानिवद्भावकृत[6] यदानन्तर्यं तद्विघातक [7]वचनारम्भसामर्थ्यत्' इत्युक्तत्वाद् नकारपरतया हकारस्य कुत्वम् ।। आयत्यते नियुज्यते स्वामिनेति आयत्त । 'यती प्रयत्ने'। 'आङित्युपसर्ग पारतन्त्र्यार्थे' इति उपसर्गवृत्तौ आयत्त इत्युदाहृतम् । न स्व छन्दोऽस्येति अस्वच्छन्द । गृह्यते स्वीक्रियते व्यापारेषु स्वामिनेति गृह्य । 'पदास्वैरिबाह्यापक्ष्येषु च' (३ १. ११९) इति गृहेरस्वैरिरूपार्थे क्यप्प्रत्यय । '[8]गुणगृह्या वचने विपश्चित '

इति भारविप्रयोग· (किरा. २ ५)। ततः[9] स्वार्थे कन्प्रत्ययः (ज्ञापित ५. ४. ५) ॥ १६ ॥

[1] °वृत्तौ वर्तन्ते Tv [2] 'अपडक्षाशितङ्ग्वलकर्मालपुरुपाध्युत्तरपदात् ख ' इति खप्रत्यय $B_5$ [3] नित्यश्चाय प्रत्यय इति मुद्रितग्रन्थे (पृ ८१). [4] $B_5$, $T_{J2}$ add बहुव्रीहि [5] $B_5$, Tv add वक्तव्येन [6] °शास्त्रकृतमिति मुद्रितग्रन्थे [7] Printed text omits °आरम्भ° [8] $B_5$, Tv omit the line [9] ततोऽनुकम्पायां $B_5$, Tv

(पा) परतन्त्र —नाथवानपि। [1]परतन्त्रनामानि ॥ अधीनो—गृह्य-कोऽप्यसौ। अधीननामानि ॥ १६ ॥

[1] स्वाधीन° $A_1$, $C_1$

खलपूः स्याद् बहुकरो दीर्घसूत्रश्चिरक्रियः।
जाल्मोऽसमीक्ष्यकारी स्यात् कुण्ठो मन्दः क्रियासु यः ॥ १७ ॥

(वि) खलपूरिति—खल[1] पुनाति शोधयतीति खलपू । 'पूञ् पवने'। [2]कृष्यादिधान्य[3] बहु करोतीति[4] बहुकर । बहुधान्यार्जकस्य नामनी ॥ दीर्घेण कालेन [5]सूत्रयते कार्यं बध्नातीति दीर्घसूत्र । '[6]सूत्र वेष्टने'। चिरेण क्रियते कार्यमनेनेति [7]चिरक्रिय । विमृश्य कार्यं [8]कुर्वतो नामनी ॥ जडति जडीभवतीति जाल्म । 'जड [9]शून्ये'। अविमृश्य [10]कुर्वतो नाम ॥ कुण्ठत्यालस्येन[11] कार्यं हन्तीति कुण्ठ । 'कुठि प्रतिघाते'। कार्येषु मन्दस्य नाम ॥ १७ ॥

[1] $J_2$, $Pt_2$ add खलस्यधान्य [2] कृष्यादिना $J_2$, $K_5$ [3] धान्यसग्रह $J_1$, $K_3$, P [4] 'डुकृञ् करणे' $J_1$ [5] सूत्र विचारात्स्य $Pt_2$ [6] 'सूत्र विमोचने', विमोचन मोचनाभाय $J_2$, $K_4$, $K_5$ [7] चिर क्रियास्येति $Pt_2$ [8] $K_4$ adds श्रमण [9] पातने $J_1$, $K_4$ [10] °कारिण $J_1$, $K_5$ [11] क्रियासु मन्दो भवति $Pt_2$.

(विय) खलपू —करः। यः खले समार्जनादिना निर्तुसं धान्यं राशी-भावेन सगृह्णाति तस्यैते नामनी। खल पुनातीति खलस्थं धान्य निःशेषं [1]गृह्णाति

खलपूः। 'पूञ् पवने'। क्विप् (३. २. ७६) ॥ क्षेत्रसंस्कारधान्यसंग्रहणराशीकरणादिरूपाणि[2] बहूनि कर्माणि करोतीति बहुकरः। 'कियत्तद्...' इत्यादिना[3] (वा. ३. २. २१) अच्प्रत्ययः। स्त्रियां तु टापि बहुकरा ॥ दीर्घसूत्रश्चिरक्रियः। [4]कर्तव्यार्थविषये विलम्बकरणशीलस्य नामनी। चिरेण[5]कालेन सूत्रयते क्रमबद्धानि कर्माणि [6]करोतीति दीर्घसूत्रः। 'सूत्र विमोचने'। चुरादिः। विमोचनं मोचनाभावो [7]ग्रथनमिति धातुवृत्तौ (पृ. ५७१)। पचादिः। चिरकालेन क्रियास्येति चिरक्रियः। चिरशब्दोऽकारान्तोऽप्यस्ति। [8]अत एव 'सायंचिरंप्राह्णे ...' इति सूत्रे (४. ३. २३) काशिका— '[9]सायादयः शब्दा अनव्यया अपि' इति ॥ जाल्मो—स्यात्। अविमृश्य करणशीलस्य नामनी। [10]जाल्मः पामरे व्युत्पादितः (२. १०. १६)। *असमीक्ष्य गुणदोषानविमृश्य करोतीति असमीक्ष्यकारी।* 'सुप्यजातौ णिनिस्ताच्छील्ये' (३. २. ७८) इति णिनिः ॥ कुण्ठो—यः। क्रियामुपक्रम्य कृतविलम्बः कुण्ठ उच्यते। प्रक्रान्त कर्म कुण्ठति आलस्येन प्रतिहन्तीति कुण्ठः[11] 'कुठि प्रतिघाते'। 'पचाद्यच्' (३. १. १३४) ॥ १७ ॥

[1] B5, Tv add पुनाति [2] °राशीकरणानि Tv [3] 'कियत्तद्बहुषु कृञोऽज्विधानम्' B5, Gm3, Tv [4] अविलम्बेन कर्तव्यमप्यर्थं विलम्बेन चिरकालेन य करोति तस्यैते नामनी Tv [5] चिलकालेन Tv. [6] ग्रथ्नाति Tv [7] ग्रन्थनमिति मुद्रितग्रन्थे [8] Tv omits अत एव [9] 'यस्तु स्यतेरन्तकर्मणो घञि सायशब्दस्तस्येदमकारान्तत्व प्रत्ययसन्नियोगेन निपात्यते। चिरशब्दस्यापि मकारान्तत्व निपात्यते' इति मुद्रित काशिकायाम् (१, पृ ३३७) [10] शूद्रवर्गे B5, Tv; जालयति हिताहितज्ञान दूरीकरोतीति जाल्म। बाहुलकात् म इति शब्दकल्पद्रुमकोश (पृ ५३३) [11] 'मन्दस्तुन्दपरिमृज...' (२ १० १८) इत्यादिना शूद्रवर्गे आलस्यवतो नामानुशासन कृतम। इह तु क्रियामुपक्रम्य कृतविलम्बस्य नामेत्यपौनरुक्त्यम् B5, Tv

(पा.) खलपू —कर.। बहुकर. खलपू. स्यात् ॥ दीर्घसूत्रश्चिरक्रिय। [1]विलम्ब्य कार्यकारिणो नामनी ॥ जाल्मो—स्यात्। पूर्वमपर चासमीक्ष्य[2] करोति य. स जाल्म· स्यात् ॥ कुण्ठो—य.। [3]योऽनुद्योगाद् मन्द मन्द करोति स कुण्ठ स्यात् ॥ १७ ॥

[1] विलम्बकनाम A1, C1. [2] असमीक्ष्यकारी A1. [3] कर्मसु मन्द कुण्ठ· स्यात् B3, C1.

**कर्मक्षमोऽलंकर्मीणः क्रियावान् कर्मसूद्यतः ।**
**स कार्मः कर्मशीलो यः कर्मशूरस्तु कर्मठः ॥ १८ ॥**

(वि) कर्मक्षम इति— [1]कर्मणे अल समर्थो भवतीति अलंकर्मीणः । [2]कर्मणि शक्तस्य[3] नाम ॥ क्रियास्यास्तीति क्रियावान् । कार्योद्युक्तस्य नाम ॥ कर्मकरणं शीलमस्येति [4]कार्म. । कर्मकरणस्वभावस्य नाम ॥ कर्मणि शूरः कर्मशूरः । कर्मणि [5]घटते चेष्टत इति कर्मठ । 'घट चेष्टायाम्' । कर्मणि शूरस्य नाम ॥ १८ ॥

[1] कर्मसु K2, K5. [2] Pt2 adds कर्मणि क्षम कर्मक्षम [3] कर्मक्षमस्य K5.
[4] Pt2 adds कर्मशीलश्च. [5] मठति, 'मठ मदनिवासयो' K5

(विव.) कर्मक्षमोऽलंकर्मीणः । [1]यः कृषिकार्येण भारवहनादिकं कर्म कर्तुं क्षमः शक्तः स प्रारम्भात् प्राग् अलंकर्मीण इत्युच्यते । अलं कर्मणे कर्तुं समर्थ इत्यलंकर्मीणः । 'अपडक्ष...' इत्यादिना (५. ४. ७) अलंकर्मशब्दात् स्वार्थे खप्रत्ययः ॥ क्रियावान्—उद्यतः । यः कर्मणि कृतोद्योगः स क्रियावान् उच्यते । क्रियास्यास्तीति । मतुप्[2] (५. २. ९४) ॥ स कार्मः—यः । [3]सर्वदा यत्किंचित्करणस्वभावस्य नाम । कर्मकरणं शीलमस्येति कार्मः । 'छत्रादिभ्यो णः' (४. ४. ६२) इति णप्रत्यये 'कार्मस्ताच्छील्ये' (६. ४. १७२) इति टिलोपो निपातितः ॥ कर्म—कर्मठः । यः प्रयाससहो भूत्वा कृच्छ्रसाध्यमपि[4] यागादिकं वैदिकं लौकिकं वा कर्म फलपर्यन्तं निर्वोढुं समर्थः [5]स कर्मठः । कर्मणि घटते [6]चेष्टत इति कर्मठः । 'कर्मणि घटोऽठच्' (५. २. ३५) इति कर्मशब्दात् सप्तमीसमर्थाद् अठच्प्रत्ययः[7] । 'नस्तद्धिते' (६. ४. १४४) इति टिलोपः । अनायासेन कर्मकरणसामर्थ्यात् [8]पूर्वोक्तादलंकर्मीणाद् अस्य कर्मठस्य प्रयाससहत्वेन भेदोऽवगन्तव्यः ॥ १८ ॥

[1] प्रयासमन्तरेणैव चिकीर्षित कर्म कर्तुं क्षम. B5, Tv. [2] 'तदस्यास्त्यस्मिन्निति मतुप्', 'मादुपधायाश्च मतोर्वो...' इति मतोर्वं इत्यादेश. Tj2. [3] प्रारब्धकर्मनिर्वहणस्वभावयुक्त कार्मं इत्युच्यते B5, Tv. [4] Gm1, Gm2 add कर्म. [5] Gm2 omits स . [6] चेष्टामत्यर्थं करोति Gm1, Gm2. [7] Gm1 omits प्रत्यय . [8] पूर्वस्मात् Gm1.

(पा) कर्मक्षमोऽलकर्मीण । कर्मणि [1]दक्षोऽलकर्मीण स्यात् ।। क्रियावान् —उद्यत । [2]कर्मण्युद्युक्त क्रियावान् स्यात् ।। स कार्म —य । क्रियाशील कार्मः स्यात ।। कर्म—कर्मठ । क्रियाशूर कर्मठ स्यात् ।। १८ ।।

[1] समर्थ $C_1$ [2] कर्मसु $B_3$

**भरण्यभुक् कर्मकरः कर्मकारस्तु तत्क्रियः ।**
**अपस्नातो मृतस्नात आमिषाशी तु शौष्कलः ।। १९ ।।**

(वि) भरण्यभुगिति—भरण्य वेतन भुङ्क्त इति भरण्यभुक्[1] । कर्मण्यभुगिति वा पाठ । परार्थं कर्म [2]करोतीति कर्मकर । भृति गृहीत्वा [3]क्रियाकारिणो नामनी ।। कर्म [4]करोति वेतन विना कर्मकार । 'डुकृञ् करणे' । कर्मकरनियावतो वेतनाग्राह्कस्य नाम ।। अमङ्गलस्नानेन सस्कृत इत्यपस्नात [5] । मृते मरणे स्नातो मृतस्नात । पुत्रादिना उपचारात् स्नापितस्य मतस्य नामनी ।। आमिषमश्नातीति आमिषाशी । [6]शुष्कल शुष्कमासमत्तीति शौष्कल । शाष्कुल इति पाठे शष्कुलीवद् दुर्जरमासमश्नातीति शाष्कुल । आमिषाशिनो नाम ।। १९ ।।

[1] $K_3$ adds 'भुज पालनाभ्यवहारयो ' [2] $Pt_2$ adds भृत्यर्थं [3] कर्म° $J_2$
[4] कारयति $K_3$, $J_2$ [5] अप निकृष्ट स्नात $Pt_2$ [6] शुष्काणा मासखण्डाना समूहो शौष्कम् । तल्लाति $Pt_2$

(विव) भरण्यभुक् कर्मकरः । भरण्यशब्दो भृतिपर्यायत्वेन प्रागुक्तः (२. १०. ३८) । भरण्य [1]भुङ्क्तेऽनुभवतीति भरण्यभुक् । यो भृतिग्रहणेन कर्म करोति, न पुनरात्मार्थं परोपकारार्थं वा, स कर्मकर । 'कर्मणि भृतौ' (३. २. २२) इति टः । [2] 'भृतको भृतिभुक् कर्मकरः' (२. १०. १५) इति [3]शूद्रवर्गोक्तस्य कर्मकरस्येहापि पुनरभिधान प्रागनुक्तस्य भरण्यभुग् [4]इति कथनार्थमिति कश्चित् पौनरुक्त्य[5] परिजहार । तदनुपपन्नम् । तत्रैव भरण्यशब्दस्य भृतिपर्यायत्वेनाभिधानात् । शूद्रवर्गोक्तभृतिभुक्पदेनैव भरण्यभुगित्यस्याप्युक्तप्रायत्वात्[6] । अन्यथा वेतनभुग् इत्यादिपदानामपि वक्तव्यताप्रसङ्गः । अन्ये त्वन्यथा समादधते । कर्मकरकर्मकारशब्दयोरेकप्रकरणपाठे कृते तयोरर्थभेदः सुव्यक्तो भवतीति [7]प्रागुक्त-

स्याप्यत्र निरूपणमिति। स्वामी तु 'कर्मण्यभुक् कर्मकर' इति पाठमाश्रित्य पौनरुक्तयदोष परिहृतवान्[8]। तथा हि—'कर्मण्या तु विधा भृत्या' (२ १० ३८) इति स्त्रीलिङ्ग कमर्ण्याशब्द उक्त। इदानीं कर्मण्यशब्दो [9]नपुसकलिङ्गोऽप्यस्तीति व्याजेन दर्शयितु कर्मण्यभुगित्युक्तमिति। अपरे तु शूद्रस्य भृतिवृत्तितया तत्प्रस्तावेन कर्मकर [10]प्रागुक्त। इदानीं तु क्रियावचनत्वेन[11] विशेष्यनिघ्नत्वादुच्यत[12] इत्याहु ॥ कर्मकारस्तु तत्क्रिय। यो हि भृतिमगृहीत्वैव[13] कर्मकर इव क्रिया करोति [14]शिष्यगर्भदासादि स कर्मकार उच्यते। 'कर्मण्यण्' (३ २ १) इत्यण्प्रत्यये कर्मकार ॥ अपस्नातो मृतस्नात। य पित्रादौ मृते सति कृतस्नान सोऽपस्नात। अपेत्युपसर्गो विरुद्धार्थ। मङ्गलस्नानविरुद्धेन स्नानेन सस्कृतोऽपस्नात इत्यर्थ। सुबोधिनीकारस्तु व्याचष्टे[15]—'यो मृत पश्चात् पुत्रादिना सत्कारार्थं स्नात स्नापित सोऽपस्नात इति ॥ आमिषाशी तु शौष्कल। आमिषमश्नातीत्यामिषाशी। 'सुप्यजातौ' (३ २ ७८) इति णिनि। शुष्काणा मासखण्डाना[16] समूह शौष्कम्। वल्लूरसघात इत्यर्थ। तल्लाति आदत्त इति शौष्कल। 'आतोऽनुपसर्गे क' (३ २ ३)। यो हि यत्र प्रियो भवति स तद्वस्तु चतफलरसादिक [17]दुर्लभमिति मत्वा शुष्क विधाय कालान्तरे भक्षयति तद्वन्मासप्रियोऽपि कश्चित् वल्लूराणि सगृह्य भक्षयतीति शौष्कल इत्युक्त[18]। सुबोधिनीकारस्तु शाष्कुल इति पठित्वा व्याचष्ट। शष्कुलीशब्दोऽत्र दुर्जरत्वगुणयोगाद् आमिषे वर्तते। तमश्नातीत्यर्थे 'प्राग्दीव्यतोऽण्' (४ १ ८३) इति अण्प्रत्यये शाष्कुल इति ॥ १६ ॥

[1] वृत्ति करोति Gm1, Gm2 [2] शूद्रवर्गे Gm1 [3] अनेनैवोक्तस्य Gm1
[4] Gm1 adds पदस्य [5] पौनरुक्तयदोष B5, Gm2 [6] अस्यापि सगृहीतत्वात B5, B6
[7] Gm1, Tv add कर्मकरशब्दस्य [8] समाधात B5, समाधानात Gm2 [9] नपुसकं B6 Gm1 [10] प्राग्दर्शित Gm1, Tv [11] °वचनेन Gm1, Tv [12] उक्त B5 Tv [13] °ग्रहणाभावात Gm1, Tv [14] शिष्यवर्ग° Tj2 [15] आह Gm1, Tv [16] मासाना Gm2, Tv [17] Gm1 adds कालान्तरे [18] उच्यते B6, Tv

(पा) [1]भरण्यभुक्— तत्क्रिय। मूल्योपाधिकर्मकर्ता कर्मकर स्यात्। निरुपाधिककर्मकर्ता कर्मकार स्यात् ॥ अनुक्तम्—'उत्ताल कर्मसु व्यग्र'।

कर्मसु [2]व्यग्र. उत्ताल. स्यात् । 'विस्रब्ध कर्मणि स्थिर ।' कर्मणि स्थिरो विस्रब्ध. स्यात् ॥ अपस्नातो मृतस्नात । मृताना स्नात अपस्नात । अपस्नातो देवदत्त । अपस्नात देवदत्तेन[3] ॥ आमिषाशी तु शौष्कल । मासभोजी शौष्कल स्यात् ॥ १९ ॥

[1] भरण्यभृत् $C_1$ [2] द्रुत $B_3$ [3] $A_1$ adds अपस्नान देवदत्तस्य

**बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ।**
**परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः ॥ २० ॥**

(वि) बुभुक्षित इति—बुभुक्षा सजातास्येति बुभुक्षित । क्षुध्यतीति क्षुधित, क्षुदस्य सजाता वा। 'क्षुध बुभुक्षायाम्'। अत्तुमिच्छु जिघत्सु । 'अद भक्षणे'। अशनाया सजातास्येति अशनायित । अशनमात्मन इच्छतीति वा। भोजनेच्छावतो नामानि ॥ [1]परस्मादेवान्न भोजनमस्यास्तीति परान्न । परपिण्ड [2]परान्नमत्तीति परपिण्डाद । 'अद भक्षणे'। सर्वदा परान्नभोक्तुर्नामनी ॥ सर्वमपि भक्षयतीति भक्षक [3]। 'भक्ष अदने'। घसति ताच्छील्येनेति घस्मर [4]। 'घस्लृ अदने'। अत्ति ताच्छील्येनेत्यद्मर [5]। भक्षणस्वभावस्य नामानि ॥ २० ॥

[1] परस्यान्नमस्येति $J_2$, $Pt_2$ [2] परस्मादन्नपिण्ड $J_1$, $K_3$ [3] भक्षयत्यधिक $J_1$, $Pt_2$, अतिभक्षयति $K_2$ [4] घसनशील $K_3$, $K_5$ [5] अदनशील, 'अद भक्षणे' $J_1$, $K_3$, $K_5$

(विव.) बुभुक्षित —अशनायितः। भोजनेच्छावतो नामानि । अशनायाबुभुक्षाशब्दौ वैश्यवर्गे व्युत्पादितौ (२ ९. ५४)। ताभ्या 'तदस्य सजातम्' (५. २. ३६) इत्यर्थे तारकादित्वाद् इतच्प्रत्यये अशनायित', बुभुक्षित ॥ [1]क्षुध्यतीति क्षुधितः। 'क्षुध बुभुक्षायाम्'। [2]कर्तरि क्त. (३. ४. ७२)। 'वसतिक्षुधोरिट्' (७. २. ५२) इति निष्ठायामिडागमः ॥ अत्तुमिच्छु जिघत्सु । 'अद भक्षणे'। इच्छाया सनि[3] घस्लादेशे च तदन्तात् ताच्छील्ये 'सनाशसभिक्ष उः' (३ २ १६८) इत्युप्रत्यय.॥ परान्नः परपिण्डादः। यः सर्वदा परकीयमेवान्नमश्नाति स्वगृहे तु प्रायेण न भुङ्क्ते[1], तस्य नामनी । परान्नमत्तीति विग्रहे प्रातिपदिकाद् धात्वर्थे णिचि 'पचाद्यचि' (३ १. १३४) परान्नः। परस्यान्नमस्येति व्यधिकरणो बहुव्रीहिः॥ परस्मात् लब्धमेव पिण्डमन्नमत्तीति[5] परपिण्डाद.। 'कर्मण्यण्'

(३. २. १) ।। भक्षको—अद्मरः । यः प्रायेण [6]शष्कुलिकुल्माषफलादिभक्षणस्वभावो[7] भवति तस्य नामानि । भक्षयतीति भक्षक.[8] । ण्वुल् (३. १. १३३) ।। घसति ताच्छील्येन घस्मरः । 'घस्लृ अदने'। 'सृघस्यदः क्मरच्' (३. २. १६०) इति क्मरच् ।। अदनशीलोऽद्मरः[9] । पूर्वसूत्रेण[10] क्मरच् ।। २० ।।

[1] क्षुध्यत इति Gm1 [2] 'गत्यर्थाकर्मकेति' Gm3. [3] 'लुङ्सनोर्घस्लृ'. [4] Gm1 adds स परान्न [5] B5 adds अश्नाति [6] अपूर्व° Tv, अपूप° B5. [7] °भक्षणशीले भक्षकादित्रयम् Tj1, Tv, °शील Gm1 [8] Tv adds 'भक्ष अदने' [9] B5, B6 add अपि [10] पूर्ववत् B5

(पा) बुभुक्षित —अशनायित । [1]भोक्तुमिच्छावतो नामानि ।। परान्न परपिण्डाद । परै सततदत्तान्नस्य [2]पुसो नामनी । 'कृपिकापरिवाड्' ।। भक्षको —अद्मर [3] । [4]सर्वभक्षकनामानि । 'तिंडिपोतु' ।। २० ।।

[1] क्षुधितस्य B3, C1. [2] B3 omits पुस . [3] चर्वरो.. इति पाठान्तरम् A1. [4] A1 adds उत्पन्न°.

आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते ।
उभौ त्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ।। २१ ।।

(वि) आद्यून इति—आ ईपद् दीव्यति क्रीडत्यन्यत्रासक्तत्वाद् आद्यून । 'दिवु [1]क्रीडादौ'। उदरे आसक्त [2] औदरिक । उदरासक्तत्वाद् [3]अनुद्योगवतो नामनी ।। आत्मान [4]स्वदेहमेव बिभर्ति [5]पोपयतीति आत्मंभरि । स्वकुक्षिमेव बिभर्तीति[6] कुक्षिंभरि. । 'डुभृञ् धारणपोषणयो '। भृत्यपोषण विनैव स्वकीयोदर-[7]पूरकस्य नामनी[8] ।। २१ ।।

[1] क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु K3, P. [2] प्रसित J1. [3] अनुत्साहस्य K5 [4] स्वमेव J2, Pt2 [5] K4 omits पोषयति [6] K4 adds पोषयति [7] °पोषकस्य J2 [8] Pt2 adds स्वोदरमेव पूरयतीति स्वोदरपूरक .

(विव.) आद्यून —विवर्जिते । ऐहिकामुष्मिकोपयोगिव्यापारपरित्यागेन[1] यथाकथंचित् स्वोदरपूरणमात्रपरितुष्टस्य नामनी । आदीव्यति ईषत्क्रीडत्यन्यत्रा-सक्तत्वादिति आद्यूनः । 'दिवु [2]क्रीडादौ'। क्तप्रत्ययः (३. ४. ७२) । 'च्छ्वोः

शूडनुनासिके च' (६. ४. १९) इति वकारस्य ऊडादेशे, इकारस्य यणादेशः (६. १ ७७)। 'दिवोऽविजिगीषायाम्' (८. २. ४९) इत्यविजिगीषाविषयत्वाद् निष्ठातकारस्य नत्वम् ॥ उदरे प्रसित औदरिकः। प्रसित इत्यनुवृत्तौ[3] 'उदराट्ठगाद्यूने' (५ २. ६७) इति ठक् प्रत्ययः ॥ उभौ—पूरके। [4]कलत्रादिकमुपेक्ष्य [5]स्वोदरपूरणमात्रनिरतस्य नामनी। आत्मानं स्वमेव बिभर्तीत्यात्मंभरिः। 'फलेग्रहिरात्मंभरिश्च' (३. २. २६) इति निपात्यते। [6]अत्र सूत्रे चकारेण उपपदस्य मुमागमे भृञ इन्प्रत्यये कुक्षिभरिशब्दः[7] ॥ २१ ॥

[1] व्यापार परित्यज्य य केवलमुदरपूरण (पोषण Gm1) मात्रपरितुष्टस्तस्यैते नामनी B5, Tv.   [2] Tv gives the full *Sutra*   [3] B5, Gm1 add उदरशब्दात् सप्तमीसमर्थात्   [4] Gm1, Tv add पोष्यजन   [5] स्वोदरमेव पूरयति तस्यैते नामनी Gm1, Tv.   [6] 'आत्मशब्दस्य उपपदस्य मुमागम इन् प्रत्ययश्च भृञो निपात्यते। अनुक्तसमुच्चयार्थश्चकार । कुक्षिभरि । उदरभरि ।' काशिका (१, पृ १७६).   [7] B6, Gm1, Tv add साधुरित्युक्त .

(पा ) आद्यून —विवर्जिते। पौरुषशून्यस्य[1] नामानि ॥ उभौ—पूरके। स्वकीयोदरमात्रपूरणे[2] निरतस्य नामानि। 'आत्मोदरकुक्षिषु भृञ खिः' (४ ३ २९) इति कातन्त्रसूत्राद् उदरभरिरपि स्यात् ॥ २१ ॥

[1] क्षुधयातिपीडितस्य A1   [2] स्वोदरपूरणमात्रे B3

सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः।
लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ ॥ २२ ॥

(वि ) सर्वान्नीन इति—[1]सर्वमन्न [2]भक्षयतीति सर्वान्नीन । [3]सर्वान्नभोक्तुर्नाम। गृध्यति भृशमभिकाङ्क्षतीति[4] गृध्नु । गर्धनश्च। 'गृधु अभिकाङ्क्षायाम्'। विषयेषु सस्पृहस्य नामनी ॥ लुभ्यति भृशमभिकाङ्क्षतीति लुब्ध । 'लुभ गार्ध्ये'। भृशमभिलषतीति[4] अभिलाषुक । 'लष कान्तौ'। तृष्णातुल्या इच्छास्यास्तीति [5]तृष्णक्। जान्त.। विषयेऽत्यन्तसस्पृहस्य[6] नामनी ॥ भृश लोलुप्यते [7]विमुह्यतीति लोलुपः। 'लुप विमोहने'। भृश लोलुभ्यते गृध्यतीति लोलुभ.। 'लुभ गार्ध्ये'। [7]विषयलम्पटवतो नामनी ॥ २२ ॥

[1] सर्वान्नं J1, Pt2. [2] भुङ्क्ते K3, K5. [3] Pt2 adds सर्वान्नं भुङ्क्ते सर्वान्नभोजी. [4] ताच्छील्येन Pt2 [5] तृष्यति ताच्छील्येनेति Pt2. [6] सुखस्पर्शस्य K5. [7] J1, Pt2 add विषये.

(विव.) सर्वन्नीनः—[1]भोजी । [2]यः सर्वेषां वर्णानां संबन्धि मृष्टममृष्टं वा उष्णमनुष्णं वा भिक्षाटनेन लब्धं सर्वमन्नं भक्षयति स सर्वान्नीनः । 'अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु' (५. २. ६) इति [3]खप्रत्ययः ॥ गृध्नुस्तु—तृष्णक् । गृध्यतीति गृध्नुः । 'गृधु अभिकाङ्क्षायाम्' । दिवादिः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३. २. १४०) इति [4]क्नुप्रत्ययः ॥ 'जुचङ्क्रम्यदन्द्रम्यसृगृधि...' इत्यादिना (३. २. १५०) युचि गर्धनः ॥ लुभ्यतीति लुब्धः । 'लुभ गार्ध्ये' । दिवादिः । 'गार्ध्यमभिकाङ्क्षा'[5] इति धातुवृत्तिः (पृ. ४४१) । कर्तरि क्तः ॥ अभिलषतीत्यभिलाषुकः । 'लष कान्तौ' । कान्तिरिच्छा । 'लषपतपदस्था...' इत्यादिना (३. २. १५४) उकञ् ॥ तृष्यतीति तृष्णक् । 'ञितृषा पिपासायाम्' । दिवादिः । पिपासाशब्देन इच्छामात्रं लक्ष्यते । 'स्वपितृषोर्नजिङ्' (३. २. १७२) । ङित्वाद्[6] गुणाभावः । [7]णत्वकुत्वे च । पञ्चापि लोभाख्यगुणयुक्तस्य नामानि । [8]केचित्तु—आद्यं द्वयं परद्रव्यविषयेच्छायुक्ते, लुब्धादित्रयं तु [9]यत्किंचिन्मात्रविषयेच्छायुक्त इत्याहुः ॥ समौ—लोलुभौ । तृष्णातिशययुक्तस्य नामनी । लोलुप्यते भृशं [10]मुह्यतीति लोलुपः । 'लुप विमोहने' । लोलुभ्यते भृशमभिकाङ्क्षतीति लोलुभः । 'लुभ गार्ध्ये' । अत्रोभयत्रापि उभाभ्यां धातुभ्यां 'धातोरेकाचो हलादेः...' इत्यादिना (३. १. २२) यङ्प्रत्ययः[11] । तदन्तात् पचाद्यचि 'यङोऽचि च' (२. ४. ७४) इति यङो लुक् । 'न धातुलोप...'[12] इत्यादिना (१. १. ४) गुणप्रतिषेधः ॥ २२ ॥

[1] Gm1 omits 4 lines. [2] यदन्न . . तत्सर्वं B5, Tv. [3] सर्वान्नशब्दात् खप्रत्यय । द्वितीयो व्यक्तयोग. B6, Tv. [4] Gm1 omits प्रत्ययः. [5] आकाङ्क्षा इति मुद्रितमाधवीयधातुवृत्तौ (पृ. ४४२). [6] १. १. ५. [7] ८. ४. १; ८. २. ३०. [8] अन्ये तु B5, Gm1. [9] Gm1 omits °मात्र°. [10] विमुह्यति Gm1, Tv. [11] 'लुपसद...' (३ १. २४) इति यङन्तादजिनि भानुजीदीक्षितः (पृ. ४१३). [12] Gm1, adds आर्धधातुके.

(पा.) सर्वान्नीनः—भोजी । सर्वेषामन्नभोजी सर्वप्रकारान्नभोजी च यः स सर्वान्नीन. स्यात् ॥ गृध्नुस्तु—तृष्णक् । तृषिधातोर्नजिङि[1] तृष्णक्[2] । जान्तत्वात्

तृष्णजौ तृष्णज इत्यादि । लुब्धनामानि ॥ समौ—लोलुभौ । लम्पटनामनी । 'लोलुपं लोलुभं लोलं लम्पटं लालसं विदुः' इति हलायुधः (२. १६८) ॥ २२ ॥

[1] B3 adds 'स्वपितृषोर्नजिङ्' (३. २. १७२) इति नजिङ्प्रत्ययः. [2] A1 adds तृषिधातोः 'तत् करोति' (वा. ३. १. २६) इति ण्यन्ताद् ण्वुलि तृष्णक इति अजन्तोऽपि स्यात्.

**सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः ।**
**मत्ते शौण्डोत्कटक्षीबाः कामुके कमितानुकः ॥ २३ ॥**
**कम्रः कामयिताभीकः कमनः कामनोऽभिकः ।**

(वि.) सोन्माद इति—उन्मादेन सह [1]वर्तत इति सोन्मादः । सून्माद इति वा पाठः। उन्मदश्च। [2]उन्माद्यति ताच्छील्येनेति उन्मदिष्णुः । 'मदी हर्षग्लपनयोः'।[3] भूतावेशादिकृतचित्तविभ्रमस्य नामनी ॥ न [4]विनीतोऽशिक्षितोऽविनीतः । समुद्धन्यते सर्वैरपि ताड्यत इति समुद्धतः । 'हन हिंसागत्योः' । अशिक्षितस्य नामनी ॥ [5]माद्यतीति मत्तः । 'मदी हर्षे' । [6]शुण्डा सुरा मदहेतुत्वेनास्यास्तीति शौण्डः । उत्क्रान्तः कटिवसनादिति [7]उत्कटः । क्षीबते माद्यतीति क्षीबः । 'क्षीबृ मदे' । सुरापानमत्तस्य नामानि ॥ कामयते परस्त्रियमिति[8] कामुकः । 'कमु कान्तौ' । कमिता च । अनु कामयत इत्यनुकः । कम्रः । कामयिता च । अभिकामयते अभीकः, अभिकश्च । कमनः कामनश्च । 'कमु कान्तौ' । कामुकनामानि ॥ २३ ॥

[1] सहितः J2, Pt2. [2] उन्मादशील· Pt2. [3] ग्लेपनयो Pt2 [4] विनीतो न भवतीति K4. [5] K5 omits 3 lines. [6] शुण्डा पानागार सुरा वा Pt2. [7] उद्भृतः प्रकाशितः कट श्रोणिभागोऽस्य Pt2. [8] अपि for इति K5.

*(दिव.) सोन्मादः—स्यात् । भूतावेशकृतचित्तविभ्रमस्य नामनी । उन्मादेन* सह वर्तत इति सोन्मादः । उन्माद्यति ताच्छील्येनेति उन्मदिष्णुः । 'अलंकृञ् निराकृञ्...' इत्यादिना (३. २. १३६) 'मदी हर्षग्लेपनयोः' इत्यस्मादुत्पूर्वाद् इष्णुच् । 'उन्मत्त उन्मादवति' (२. ६. ६०) इत्यत्र मनुष्यवर्गे उन्मादाख्यरोगयुक्तस्य नामकथनम् । इह तु भूतावेशकृतचित्तविभ्रमसहितस्य नामानुशासनमिति[1] न पौनरुक्त्यम् ॥ अविनीतः समुद्धतः । वाचा कर्मणा वा [2]परदुःखजनकस्वभाववतो

नामनी[3]। सम्यगुद्धतः गर्वितः समुद्धतः। हन्तेः क्तः॥ मत्ते—क्षीबाः। मद्यपानकृतचित्तविभ्रमस्य[4] नामानि। माद्यति स्म मत्तः। 'न ध्याख्यापॄमूर्च्छिमदाम्' (८. २. ५७) इति निष्ठानत्वप्रतिषेधः॥ 'शुण्डा कादम्बरी मता' इति [5]शाश्वतोक्तेः (पृ. ३०, श्लो. ३४५) शुण्डाशब्देन[6] सुरोच्यते। पानागारं वा। तत्र भवः शौण्डः। शैषिकोऽण् (४.२.९२)॥ उद्भूतः प्रकाशितः कटः श्रोणीभागोऽस्य[7] उत्कटः। क्षीबदशायां कदाचिन्नग्नतया[8] कटिभागः प्रकाशितो भवति। अथवा 'संप्रोदश्च कटच्' (५. २. २९) इति कटच्प्रत्यये उत्कटः॥ क्षीबते माद्यति स्मेति क्षीबः। 'क्षीबृ मदे'। क्तप्रत्ययः। 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (८. २. ५५) इति [9]निष्ठातकारलोपः इडभावश्च निपातितः॥ कामुके—अभिकः। [10]स्त्रीजनासक्तचित्तस्वभावस्य नामानि। कामयते ताच्छील्येनेति कामुकः। 'कमु कान्तौ'। 'लषपतपद...' इत्यादिना (३. २. १५४) उकञ्। तस्मादेव धातोस्ताच्छील्यार्थे[11] तृन्प्रत्यये इडागमे च कमिता॥ 'कमेर्णिङ्' (३. १. ३०), 'आयादय आर्धधातुके वा' (३. १. ३१) इति पाक्षिके णिङ्प्रत्यये कामयिता[12]॥ 'अनुकाभिकाभीकः कमिता' (५. २. ७४) इति निपातनात् कमितेत्यर्थे अनुकः, अभिकः, अभीकः इति त्रयः शब्दाः कन्प्रत्ययान्ताः साधवः॥ 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' (३. २. १६७) इति रप्रत्यये कम्रः॥ 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युचि कमनः। [13]तत एव [14]धातोर्वैकल्पिके णिङ्प्रत्यये (३. १. ३०) पूर्ववद् युचि कामनः॥ २३॥

[1] Gm1, Tv add अर्थभेदात्. [2] °जननस्वभावस्य B5, B6. [3] व्यञ्जनयोगे च B5, Gm1. [4] चित्तविभ्रमे मत्तादिचतुष्टयम् B6, Gm1. [5] शाश्वताभिधानात् B5, Gm1. [6] Gm1 omits शब्देन. [7] यस्येति B5, Tv. [8] वस्त्रस्खलने कटिप्रदेश B6, Tv. [9] B5, Tj2 omit निष्ठा. [10] कामुकादिनवक स्त्रीप्रसङ्गा॰ यत्तस्वभावे वर्तते Gm1, Tv. [11] ताच्छील्येन B5, Gm1. [12] Gm1, Tv add तदन्तात् सनादित्वेन धातुसंज्ञाया तृन्प्रत्यये [13] अत एव Tv. [14] Gm1 adds कर्मणि चार्थे(?).

(पा.) मोन्माद—[1]स्यात्। उन्मत्तनामनी॥ अविनीत. समुद्धतः। अशिक्षितनामनी॥ मत्ते—क्षीवाः। मत्तनामानि॥ कामुके—अभिकः। कामुकनामानि। अनुक्तम्—'भुजङ्गी नर्मठो मिण्ठ पिद्गः पल्लविको विटः।' [2]विटनामानि॥ २३॥

[1] उन्मदिता अपि B3. [2] वेश्यागन्तृ॰ A1.

**विधेयो विनयग्राही वचनेस्थित आश्रवः ।। २४ ।।**
**वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ।**
**धृष्टे धृष्णग् वियातश्च प्रगल्भः प्रतिभान्विते ।। २५ ।।**

(वि ) विधेय इति—'सत्य वद' (तै. उ. १. ११) इत्यादिवाक्यविधातव्यत्वाद् विधेय[1]। 'डुधाञ् धारणपोषणयो'। [2]विनयग्राहिणो नाम ।। आशृणोति [3]मान्यवाक्यमित्याश्रव । 'श्रु श्रवणे'। मान्यवाक्यानुल्लङ्घकस्य नाम ।। वश गतो वश्य । [4]प्रकर्षेण वश नेतु शक्यत्वात् प्रणेय । 'णीञ् प्रापणे'। औपधादिना वशीकर्तुर्वशगतस्य नामनी ।। नितरा सर्वैर्भ्रियत इति निभृत. । [5]'भृञ् भरणे'। निश्चलवागिन्द्रियत्वाद् विनेतु योग्यो विनीत[6] । प्रश्रयते नतो[7] [8]भवतीति प्रश्रित. । 'श्रिञ् सेवायाम्'। अचपलस्य नामानि ।। धर्षयतीति धृष्टः । धृष्णुश्च । 'धृष प्रसहने'। धृष्णगिति वा पाठः। विशेषेण [9]यातो वियातः। धृष्टनामानि ।। [10]प्रगल्भत इति प्रगल्भः। 'गल्भ धाष्टर्ये'। [11]प्रतिभान्वितस्य नाम ।। २४-५ ।।

[1] विधातु नियोक्तु योग्य Pt2 [2] J2, Pt2 add विनय गृह्णाति विनयग्राही. [3] गुर्वादिभिरादिष्ट Pt2 [4] प्रणेतु शक्य K4, Pt2 [5] 'डुभृञ् धारणपोषणयो' Pt2. [6] विनीतेन्द्रियत्वात् K5, विनीयते शिक्ष्यते Pt2 [7] सज्ज K5 [8] भजति J1 [9] आभिमुख्य याति Pt2 [10] प्रौढिमातनोति K4 [11] उन्मेषशालिन्या धियान्वितस्य नाम J2, K4

(विव.) विधेयो—आश्रवः । [1]वचने गुर्वादिकृतवाक्ये कर्तव्याकर्तव्यविषये स्थितोऽविचलितः, तत्र विधेयादयस्त्रयः शब्दा भवन्ति । विधिनिषेधवाक्येष्वप्रमत्ततया विधातु योग्यो विधेयः। 'अचो यत्' (३ १. ९७) इति यत्। 'ईद्यति' (६. ४. ६५) 'सार्वधातुकार्धधातुकयोः' (७. ३. ८४) इति गुणः । 'स्यादाश्रवो विधेयः स्यात्' इति रत्नकोशाभिधाने त्रयाणां पर्यायत्वावगमात् । इदं कार्यमिदमकार्यमिति गुर्वाद्युपदेशो विनयः । तं गृह्णातीति विनयग्राही । 'नन्दिग्रहि . . .' इत्यादिना (३. १. १३४) णिनिः ।। गुर्वादिभिरादिष्टमर्थमाशृणोति अङ्गीकरोतीत्याश्रवः[2] । पचाद्यच् (३. १. १३४) । 'आश्रवोऽस्मि भवतः सहानुजः' इति माघकाव्ये (शिशु १४. ११) प्रयोगः ।। वश्यः प्रणेयः । वश्येत्यादि परचित्तानु-

सरणशीलस्य नामनी । 'वशं गतः' (४. ४. ८६) इति वशशब्दात् यत्प्रत्यये वश्यः। परानुसरण प्रकर्षेण नेतुमर्हः प्रणेयः। 'अचो यत्' (३. १. ९७) ॥ निभृत—समाः। विनययुक्तवाचकत्वेन त्रयोऽपि शब्दाः समास्तुल्या इत्यर्थः। 'भृञ् भरणे' 'णीञ् प्रापणे' 'श्रिञ् सेवायाम्'। एतेभ्यः सोपसर्गेभ्यो धातुभ्यः क्तप्रत्यये [3]क्रमेण निभृतः, विनीतः, प्रश्रितश्च। विनययुक्तस्य नामानि ॥ धृष्टे—वियातश्च। [4]गुरुराजादिसमक्षमात्मश्लाघादिपूर्वकं[5] त्यक्तसंकोचतया व्यापारवतो नामानि। धृष्णोति राजविद्वत्सभासु निर्लज्जतया प्रगल्भत इति धृष्टः। 'ञिधृषा प्रागल्भ्ये'। स्वादिः। क्तः (३. ४. ७२)। यद्यपि 'आदितश्च' (७. २. १६) इति निष्ठाया इडागमः प्रतिषिद्ध एव, तथापि 'धृषिशसी वैयात्ये' (७. २. १९) इत्यर्थविषये नियम्यते॥ 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३. २. १४०) इति क्नुप्रत्यये धृष्णुः। धृष्णक् इति पाठे 'धृषेश्चेति वक्तव्यम्' (वा. ३. २. १७२) इति नजिङ्प्रत्ययः, नकारस्य णत्वे[6] च धृष्णक्। जकारान्तः॥ विशेषेणाभिमुख्यं यातो वियातः। [7]वैयात्यमविनीतत्वमिति ॥ प्रगल्भः प्रतिभान्विते। प्रत्युत्पन्नमतित्वं प्रतिभा। तदुक्तम्—'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता'[8]। लौकिके वैदिके वा कर्मणि प्रतिभया युक्ते प्रगल्भशब्दः। प्रगल्भते प्रौढिमातनोतीति प्रगल्भः। 'गल्भ धार्ष्ट्ये'। भ्वादिः। पचाद्यच् (३. १. १३४) ॥ २४-५ ॥

[1]'सत्य वद, धर्मं चर, निषिद्ध परिहर' इत्यादिक पित्रादिकृतमुपदेश हितबुद्ध्या यः शृणोति तस्य नामानि Gm1, Tv [2]यो हि तिष्ठेति स्वाम्यादिवाक्ये स्थित तदनतिक्रम्य करणशील तत्राश्रवशब्द B5, Gm1 [3]क्तान्तास्त्रय शब्दा Tv [4]°राजादे Tv. [5]Gm1, Tv have समीपे for समक्ष [6]णत्व च Gm3 [7]Gm1 omits the sentence [8]इति रुद्र इति भानुजीदीक्षित (पृ ४१४)

(पा) विधेयो विनयग्राही। विनयग्रहीता[1] विधेय. स्यात्। वचनेस्थित आश्रव.। वचनानुल्लङ्घी आश्रव. स्यात्। वश्य प्रणेय। वशगतनामनी ॥ निभृत—समा। विनीतनामानि॥ धृष्टे—वियातश्च। धृष्टनामानि। धृष्णुवियातश्चेति पाठान्तरम्॥ प्रगल्भ प्रतिभान्विते। प्रतिभावान्[2] प्रगल्भ स्यात्। अनुक्तम्—'यसूचि स्यान्निष्प्रतिभ'। प्रतिभाहीन यसूचि स्यात्। यपूर्चिरिति मूर्धन्यमध्यश्च ॥ २४-५ ॥

[1]°ग्राहिना B3 [2]प्रतिभावति B3

**स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते ।**
**अधीरे कातरस्त्रस्नो भीरुभीरुकभीलुकाः ।। २६ ।।**

(वि ) स्यादिति—शाला स्वगृहमेव प्रवेष्टुमर्हतीति[1] शालीन । अधृष्ट-नाम ।। विगत लक्ष [2]प्रस्तुतार्थविषयज्ञानमस्येति[3] विलक्ष [4] । [5]विस्मयान्वितस्य[6] नाम ।। भयवशात्[7] का ईषत्तरतीति कातर [8] । 'तॄ प्लवनतरणयो ' । त्रस्यति विभेति ताच्छील्येनेति त्रस्नु । 'त्रसी उद्वेगे'[9] । त्रस्त इति वा पाठ । विभेतीति भीरु । भीरुक । भीलुकश्च । 'ञिभी भये' । भयशीलस्य नामानि ।। २६ ।।

[1] शीलमस्य O, P [2] प्रकृत° $Pt_2$ [3] विज्ञय $K_5$ [4] $Pt_2$ adds 'लक्ष दशनाङ्कनयो ' [5] विस्मित° $J_1$ [6] विस्मयनान्वितो विस्मयान्वित $Pt_2$ [7] भयावेशेन $K_5$ [8] केन सुखन न तीण प्राप्तो न भवतीति $Pt_2$ [9] 'त्रसु उद्वेजने $K_3$, $K_6$

(विव ) स्यात—शालीन । अधृष्टे प्रागुक्तधृष्टत्वरहिते[1] शालीनशब्द । सलज्जत्वेन सभासु स्थातुमसमर्थतया [2]स्वशालामेव प्रवेष्टुमर्हतीति शालीन । 'शालीनकौपीने अधृष्टाकार्ययो ' (५ २ २०) इति शालाशब्दात् खञ्प्रत्यय, उत्तरपदलोपश्च[3] निपात्यते ।। विलक्षो विस्मयान्विते । कदाचित् केनचिद् [4]रहसि कृतेऽप्यनुचितव्यापारे[5] कथचित् प्रकटीभूते सति [6]रहसि मया कृतमिद कर्म [7]प्रकाश-मभूदिति कर्तुर्मनसि विस्मयो भवति लज्जा च जायते, तदुभयमप्यत्र विस्मयशब्देन लक्ष्यते, तद्युक्ते विलक्षशब्दो वर्तत इत्यर्थ । तदुक्तमालकारिकै —

'आत्मनश्चरिते सम्यग्ज्ञाते ऽन्यैर्यस्य जायते ।
अपत्रपातिमहती स विलक्ष इति स्मृत ।।'

इति । प्रतिपत्तिमूढतया विगत लक्ष ज्ञानविषयोऽस्येति विलक्ष ।। अधीरे—भीलुका । भयशीलस्य नामानि । धीराद् [8]धैर्ययुक्तादन्योऽधीर । कुशब्द ईषदर्थे । ईषत् तरति भयस्थानमिति कातर [9] (६ ३ १०५) । केन सुखेन न तीर्ण, प्राप्तो न भवतीति वा कातर ।। त्रस्यतीति त्रस्नु । 'त्रसी उद्वेजने' । उद्वेजन भयम् । 'त्रसिगृधि . .' इत्यादिना (३ २ १४०) ताच्छील्ये क्नु ।। बिभेतीति भीरु । 'ञिभी भये' । 'भिय क्रुक्लुकनौ' (३ २ १७४) इति क्रुप्रत्यये भीरु ।

[10]कित्वाद् गुणाभाव (१.१ ५) ॥ क्लुकन्प्रत्यये भीलुकः। भिय. 'क्रुकन्नपि वक्तव्य.' (वा ३ २ १७४) इति क्रुकन्प्रत्यये भीरुकः ॥ अस्मिन् प्रकरणे शब्दा प्रायेण ताच्छीलिकप्रत्ययान्ता ॥ २६ ॥

[1] °प्रागल्भ्यरहिते Gm1. [2] °शालाया B5, B6 [3] प्रवेशनमित्युत्तरपदम् । शालाप्रवेशनमर्हति, खञ् Tv [4] गूढतया Gm1, Tv [5] अकार्ये B5, स्वकार्ये Tv. [6] रह कृत Tv, रहस्यकृत B5 [7] Gm1, Tv add कथ वा, कथ B5 [8] धैर्यवतः Gm1, Tv [9] 'ईषदर्थे' इति को कादेश [10] B5, Gm1 omit the sentence.

(पा) स्यात—शालीन । अधृष्टनामनी ॥ विलक्षो विस्मयान्विते । विस्मयेनान्वितो[1] विलक्ष स्यात् । [2]लज्जयान्वितोऽपि भवति ।

'आत्मनश्चरिते सम्यग्गीतेऽन्तर्यस्य जायते ।
[3]अपत्रपातिमहती स विलक्ष इति स्मृत ॥'

अधीरे—भीलुका । [4]भयशीलस्य नामानि । अनुक्तम्—'[5]दरिते भीतचकितत्रस्तान्तरितशङ्किता '। भीतवतो[6] नामानि । 'वेरचिनवाड्' ॥ २६ ॥

[1] °अन्विते B3 [2] लज्जान्वित B3 [3] अङ्के त्रपा B3, C1 [4] विभ्यत A1. [5] दलिते A1 [6] A1 omits °वत

आशंसुराशसितरि गृहयालुर्ग्रहीतरि ।
श्रद्धालुः श्रद्धया युक्ते पतयालुस्तु पातुके ॥ २७ ॥

(वि) आशंसुरिति—आशसते प्रियमाकाङ्क्षतीति[1] आशंसु, आशंसिता च । 'शंसु स्तुतौ'। अप्राप्तप्रियकामस्य नामनी ॥ गृह्यते ताच्छील्येन गृहयालु । 'गृह ग्रहणे'। ग्रहीतु शीलमस्यास्तीति ग्रहीता। 'ग्रह उपादाने'। ग्रहणशीलस्य नामनी॥ श्रद्धत्ते [2]श्रद्धास्यास्तीति श्रद्धालु । 'डुधाञ् धारणपोषणयो '। श्रद्धायुक्तस्य नाम ॥ [3]पतितु शीलमस्यास्तीति पतयालु । पातुकश्च । 'पत्लृ गतौ'। पतनशीलस्य नामनी ॥ २७ ॥

[1] अभिवाङ्क्षति K3 [2] J1, K2, K3 omit [3] पतति ताच्छील्येन Pt2.

(विव.) आशंसुराशंसितरि । स्वप्रियार्थविषयेच्छायुक्तस्य नामनी । 'आङः शसि इच्छायाम्'[1] इति धातोः 'सनाशसभिक्ष उः' (३. २. १६८) इति उप्रत्यये आशंसुः । तृन्प्रत्यये (३. २. १३५) आशसिता ॥ गृहयालुर्ग्रहीतरि । [2]ग्रहणशीलस्य नामनी । 'गृह ग्रहणे' इति धातुरदन्तश्चौरादिक.[3] । तत्र 'स्पृहि-गृहि . . .' इत्यादिना (३ २. १५८) आलुच्प्रत्यये 'अयामन्ताल्वाय्येत्न्विष्णुषु' (६. ४. ५५) इति णेरयादेशे गृहयालुः । ग्रहयालुरिति रेफसहितः[4] पाठो भ्रान्तिमूलः॥ 'ग्रह उपादाने' [5]इत्यतः तृन् प्रत्यये (३. २. १३५) ग्रहीता[6] (७. २. ३७)॥ श्रद्धालुः श्रद्धया युक्ते । आस्तिक्यबुद्धिः श्रद्धा । तद्युक्तः श्रद्धालुः । श्रद्धत्ते ताच्छील्येनेति । '[7]श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' इति श्रत्पूर्वाद् दधातेः 'स्पृहिगृहि . . .' इत्यादिना[8] (३. २. १५८) आलुच् ॥ पतयालुस्तु पातुके । गुरुत्वादिना पतनशीलस्य नामनी । 'पत गतौ' इत्यदन्तात् चौरादिकात् पूर्ववदालुचि (३. २. १५८) पतयालुः ॥ 'लषपत...' इत्यादिना (३. २. १५४) उकञ्प्रत्यये पातुकः ॥ २७ ॥

[1] 'शसु स्तुतौ' B5, Gm1, 'आङ शसि इच्छायामित्यस्य ग्रहण, न शसे स्तुत्यर्थस्य' काशिका (पृ २०३)　[2] Gm1, Tv add स्वप्रियार्थं　[3] चौरादि Gm3.
[4] सरेफपाठ Gm1, B5　[5] इत्यस्मात् Gm1, Gm3　[6] 'ग्रहोऽलिटि दीर्घ '.
[7] काशिका (१, पृ २२३)　[8] B5, Gm1, Gm3 give the full *sutra* 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्'

(पा.) आशसुराशसितरि । [1]आशसनशीलनामनी ॥ गृहयालुर्ग्रहीतरि । ग्रहणशीलनामनी ॥ श्रद्धालु श्रद्धया युक्ते । [2]श्रद्धायुक्त श्रद्धालु स्यात् । श्राद्धोऽपि स्यात् । 'श्राद्ध श्रद्धालुरास्तिक ' इति वैजयन्ती (पृ २०४, श्लो ३७) । पतयालुश्च पातुके । पतनशीलनामनी ॥ २७ ॥

[1] आशीर्वादशीलनाम A1　[2] श्रद्धायुक्ते B3

लज्जाशीलेऽपत्रपिष्णुर्वन्दारुरभिवादके ।
शरारुर्घातुको हिंस्रः स्याद् वर्द्धिष्णुस्तु वर्धनः ॥ २८ ॥

(वि.) लज्जाशील इति— [1]अपत्रपितु शीलमस्यास्तीति अपत्रपिष्णु । त्रपूष् लज्जायाम्'। [2]लज्जाशीलस्य नाम॥ [3]वन्दनशीलो वन्दारु । [4]अभि-

वादकश्च। 'वदि अभिवादनस्तुत्योः'। अभिवादनशीलस्य नामनी ॥ शृणाति ताच्छील्येनेति शरारुः। 'शॄ हिंसायाम्'। [5]हन्तु शीलमस्यास्तीति घातुकः। 'हन हिंसागत्योः'। हिनस्ति ताच्छील्येनेति हिंस्रः। 'हिंसि हिंसायाम्'। हिंसनशीलस्य नामानि ॥ [6]वर्धितु शीलमस्यास्तीति वर्धिष्णुः। वर्धनश्च। 'वृधु वृद्धौ'। वृद्धिशीलस्य नामनी ॥ २८ ॥

[1] अपत्रपते ताच्छील्येन Pt2.　[2] लज्जा शीलमस्येति लज्जाशील. Pt2.　[3] वन्दते ताच्छील्येन K6.　[4] अभिवादयत इत्यभिवादक. Pt2.　[5] हन्ति ताच्छील्येन Pt2. [6] वर्धते ताच्छील्येन Pt2.

(विव.) लज्जाशीलेऽपत्रपिष्णुः। [1]व्रीडायुक्तस्वभावस्य नामनी। अपत्रपते अपत्रपिष्णुः। 'त्रपूष् लज्जायाम्'। 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रप...' इत्यादिना (३. २. १३६) इष्णुच् ॥ वन्दारुरभिवादके[2]। अभिवादनशब्देन स्वस्तिवादप्रयोजको नमस्कार उच्यते। तस्य कर्ता वन्दारुः। 'वदि अभिवादनस्तुत्योः'। वन्दते। 'शॄवन्द्योरारुः' (३. २. १७३) इत्यारुः ॥ 'वद व्यक्तायां वाचि' इत्यतः सोपसर्गाद् औणादिके बाहुलक उकञ्प्रत्यये अभिवादुकः। 'अभिवादुक एनं भ्रातृव्यो भवति' इति श्रुतौ प्रयोगः[3]। ण्वुल्प्रत्यये अभिवादक इति केचित् ॥ शरारुर्घातुको हिंस्रः। 'शॄ हिंसायाम्' इत्यतो धातोः पूर्ववद् आरुप्रत्यये (३. २. १७३) शरारुः ॥ हन्तीति घातुकः। 'लषपतपद...' इत्यादिना (३. २. १५४) उकञ्। 'हो हन्तेर्ञ्णिन्नेषु' (७. ३. ५४) इति कुत्वम्। 'हनस्तोऽचिण्णलोः' (७. ३. ३२) इति तकारः ॥ हिनस्तीति हिंस्रः। 'हिंसि हिंसायाम्'। 'नमिकम्पि...' इत्यादिना (३. २. १६७) रः। हननशीलस्य नामानि ॥ स्यात्—वर्धनः। वृद्धिशीलस्य नामनी। 'वृधु वृद्धौ'। वर्धते ताच्छील्येनेति वर्धिष्णुः। 'अलंकृञ्...' (३. २. १३६) इत्यादिना इष्णुच् ॥ तत एव धातोः 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युचि वर्धनः ॥ २८ ॥

[1] लज्जमानस्वभावस्य Gm1, Tv.　[2] अभिवादुर इति उरन्प्रत्ययान्तपाठ. चिन्त्य Tv.　[3] दर्शनात् Gm3.

(पा) लज्जाशीलेऽपत्रपिष्णुः। लज्जाशीलोऽपत्रपिष्णुः स्यात्[1] ॥ वन्दारुरभिवादके। [2]वन्दनशीलनाम ॥ शरारुर्घातुको हिंस्रः। [3]हिंसाशीलनामानि ॥ स्याद्वर्धिष्णुस्तु वर्धनः। वृद्धिशीलनामनी ॥ २८ ॥

[1] लज्जाशीलनाम B3　[2] व दना° A1　[3] हिंसन° B3

**उत्पतिष्णुस्तूत्पतितालंकरिष्णुस्तु मण्डनः ।**
**भूष्णुर्भविष्णुर्भविता वर्तिष्णुर्वर्तन. समौ ॥ २९ ॥**

(वि ) उत्पतिष्णुरिति— [1]उत्पतितु शीलमस्यास्तीति उत्पतिष्णु [2] । उत्पतिता च । [3]उत्पतनशीलस्य नामनी ॥ [4]अलकर्तुं शीलमस्यास्तीति अलकरिष्णु [5] । मण्डयति ताच्छील्येनेति मण्डन । 'मडि भूषायाम्' । अलकरणशीलस्य नामनी ॥ [6]भवितु शीलमस्यास्तीति भूष्णु । भविष्णु । भविता च । 'भू सत्तायाम्' । पुन पुनर्भवनशीलस्य केशादेर्नामानि ॥ [7]वर्तितु शीलमस्यास्तीति वर्तिष्णु । वर्तनश्च । 'वृतु वर्तने' । वर्तनशीलस्य कालादेर्नामनी ॥ २९ ॥

[1] उत्पततीति Pt2　[2] 'पत्लृ गतौ' K3 K4　[3] ऊर्ध्वगमन° K4　[4] अलकरोति Pt2　[5] K4, Pt2 add 'डुकृञ करण　[6] भवति Pt2　[7] वर्तते ताच्छील्येन Pt2

(विव ) उत्पतिष्णुस्तूत्पतिता । उत्पतनशीलस्य विहगादेर्नामनी । ऊर्ध्वं पतति गच्छतीत्युत्पतिष्णु [1] । इष्णुच् (३ २ १३६) । तृन्प्रत्यये उत्पतिता (३ २ १३५) ॥ अलकरिष्णुस्तु मण्डन । [2]गृहाद्यलकरणशीलस्य नामनी । पूर्ववद् इष्णुच्प्रत्यये अलकरिष्णु [3] ॥ 'मडि भूषायाम्' । 'कुधमण्डार्थेभ्यश्च' । (३ २ १५१) इति युचि मण्डन ॥ भूष्णु —भविता । पुन पुनर्भवनशीलस्य [4]केशनखादेर्नामानि । [5]ताच्छील्येन भवतीति भूष्णु । 'ग्लाजिस्थश्च ग्स्नु' (३ २ १३९) इति सूत्रे चकरात् भवतेरपि ग्स्नुप्रत्यये भूष्णु ॥ 'भुवश्च' (३ २ १३८) इति इष्णुचि भविष्णु ॥ तृन्प्रत्यये (३ २ १३५) भविता ॥ वर्तिष्णु —समौ । वर्तनशीलस्य नामनी । [6]वर्तते ताच्छील्येनेति वर्तिष्णु । [7]इष्णुच् (३ २ १३६) ॥ 'अनुदात्तेतश्च हलादे' (३. २ १४९) इति युचि वर्तन ॥ २९ ॥

[1] Tj°, Tv add 'पत्लृ गतौ'　[2] देहादि° Gm3　[3] अलपूर्वात् करोते Tj1, Tv　[4] राजादे B5　[5] पुन पुन B5　[6] 'वृतु वर्तने' Gm3　[7] B5 adds 'अलङ्कृञ् ' इत्यादिना

(पा.) उत्पतिष्णुस्तूत्पतिता। उत्पतनशीलनामनी॥ अलंकरिष्णुस्तु मण्डनः। अलकरणशीलनामनी ॥ भूष्णु.—भविता । [1]भवनशीलनामानि ॥ वर्तिष्णुः—समौ । [2]वर्तनशीलनामनी ॥ २९ ॥

[1] B3 adds पुन पुन॰. [2] वृत्त॰ A1.

निराकरिष्णुः क्षिप्नुः स्यात् सान्द्रस्निग्धस्तु मेदुरः ।
ज्ञाता तु विदुरो विन्दुर्विकासी तु विकस्वरः ॥ ३० ॥

(वि.) निराकरिष्णुरिति—[1]निराकर्तुं शीलमस्यास्तीति निराकरिष्णुः। क्षिपति प्रतिपक्षमिति क्षिप्नुः। 'क्षिप प्रेरणे'। परपक्षनिराकरणशीलस्य नामनी॥ सान्द्रमत्यन्त स्निग्ध· सान्द्रस्निग्धः। मेद्यति स्निह्यतीति मेदुरः। 'ञिमिदा स्नेहने'। वनश्रेष्ठस्य [2]शादादेर्नामनी ॥ ज्ञातु[3] शीलमस्यास्तीति ज्ञाता। 'ज्ञा अवबोधने'। वेदितु[4] शीलमस्यास्तीति विदुरः। विन्दुश्च। 'विद ज्ञाने'। पण्डितस्य नामानि ॥ विकसति ताच्छील्येनेति विकासी[5]। 'कस गतौ'। विकस्वरश्च। विकसनशीलस्य पुष्पादेर्नामनी ॥ ३० ॥

[1] निराकरोति Pt2; K4 adds तिरस्कर्तुं, 'डुकृञ् करणे'. [2] शादो बालतृणम्. [3] जानाति ताच्छील्येन Pt2. [4] वेत्ति ताच्छील्येन Pt2. [5] K4, Pt2 add नान्त॰.

(विव.) निराकरिष्णुः क्षिप्नुः स्यात्। [1]अधिक्षेपकरणशीलस्य नामनी। निराकरोतीति निराकरिष्णुः। [2]इष्णुच्प्रत्ययः (३. २. १३६)। क्षिपति [3]अधिक्षिपति क्षिप्नुः। 'क्षिप प्रेरणे'। 'त्रसिगृधिधृषिक्षिपेः क्नुः' (३. २. १४०) इति क्नुः[4] ॥ सान्द्रस्निग्धस्तु मेदुरः। सान्द्रो निबिडावयवारब्धः, स्नेहाख्यगुणयोगेन कार्कश्यरहितः स्निग्धः, सान्द्रश्चासौ स्निग्धश्च सान्द्रस्निग्धः, [5]तथाविधः तरुणवृषभनवजल[6]धरादिर्मेदुर उच्यते। मेद्यतीति मेदुरः। 'ञिमिदा स्नेहने'। 'भञ्जभासमिदो घुरच्' (३. २. १६१) इति घुरच्। अत्र धात्वर्थपर्यालोचनायां स्नेहनमात्रमेव मेदुरशब्दप्रवृत्तिनिमित्तम्। ततश्च स्निग्धत्वं निरन्तरावयवसंश्लेषे[7] सत्येव भवतीति सान्द्रस्निग्धत्वयोः द्वयोरपि कथनम्॥ ज्ञाता विन्दुः। [8]वस्तुविषययाथार्थ्यज्ञानयुक्तस्य नामानि। 'ज्ञा अवबोधने'। तृन्प्रत्यये (३. २.

१३५) ज्ञाता ॥ सम्यग् वेत्तीति विदुरः । 'विद ज्ञाने' । 'विदिभिदिच्छिदेः कुरच्' (३. २ १६२) इति कुरच् ॥ 'विन्दुरिच्छुः' (३ २. १६६) इति निपातनात् तत एव [9]धातोर्विन्दुः ॥ विकासी तु विकस्वरः । विकसनशीलस्य कुसुमादेर्नामनी । विविध कसति गच्छतीति विकासी । 'कस गतौ' । 'सुप्यजातौ णिनिस्ताच्छील्ये' (३. २ ७८) इति णिनिप्रत्ययः । अत्र सूत्रे[10] 'सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम्' इति यद्यपि वृत्तावुक्त (काशिका १, पृ. १८८) तथापि क्वचिदुपसर्गपूर्वकत्वेऽपि णिनिर्भवति । तथा च न्यासकारः (पृ. ६२२)—'अन्येभ्योऽपि दृश्यन्ते (३ २. ७५) इत्यत्र अपिशब्दः सर्वोपाधिव्यभिचारार्थोऽनुवर्तते । तेन[11] उदासारिण्यः प्रत्यासारिण्यः इत्याद्युपसर्गेऽपि णिनिर्भवति' इति[12] ॥ 'स्थेशभासपिसकसो वरच्' (३. २ १७५) इति वरच्प्रत्यये विकस्वरः ॥ ३० ॥

[1] निरसनशीलस्य B5, Tv [2] B6 adds पूर्ववत् [3] आक्षिपति प्रतिपक्ष Tv- [4] Gm3 adds क्त्वाद् न गुण [5] तदुभयविध B6, Tv [6] मेघादि B5 [7] °योगे B5 [8] लौकिक वैदिक वा कार्यतत्त्व यो जानाति तस्य ज्ञातादय त्रय शब्दा स्यु Gm1, Tv [9] विदेर्ज्ञानार्थत्वात् Tj1, Tv. [10] सुपीत्यनुवृत्तौ B5, सुपीति वर्तमाने इति मुद्रितग्रन्थे (पृ १८८) [11] न प्रसारणीत्यादौ Tv, 'तेनोदासारिण्य इत्यत्रोपसर्गे णिनिर्भवति' इति मुद्रितग्रन्थे (पृ ६२२) [12] 'वौ कषलस ' इत्यादिसूत्र (३ २ १४३) वौ कसेत्यादि पठित्वा धिनुणि विकासीत्युक्त टीकासर्वस्वे (पृ १५) एवमेव भानुजीदीक्षित (पृ ४१६).

(पा ) निराकरिष्णु क्षिप्नु स्यात् । निराकरणशीलनामनी ॥ [1]सान्द्रस्निग्धस्तु मेदुर । स्नेहशीलनामनी ॥ ज्ञाता—विन्दु । ज्ञानशीलनामानि ॥ विकासी तु विकस्वर । [2]विकसनशीलनामनी ॥ ३० ॥

[1] सान्द्र A1 [2] विकास° A1

**विसृत्वरो विसृमरः प्रसारी च विसारिणि ।**
**सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी ॥ ३१ ॥**

(वि ) विसृत्वर इति— [1]विसर्तुं शीलमस्यास्तीति विसृत्वर । विसृमर । प्रसारी च । 'सृ गतौ' । विसर्पणशीलस्य जलोपरिस्थितस्य[2] तैलविन्द्वादेर्नामानि ॥

सोढु शीलमस्यास्तीति सहिष्णुः[3]। सहनश्च। 'षह मर्षणे'। क्षाम्यति[4] ताच्छी-ल्येनेति क्षन्ता। क्षमिता। क्षमी च। 'क्षमू[5] सहने'। तेजयति ताच्छील्येन सहत इति तितिक्षुः। 'तिज निशातने[6] क्षमाया[7] च'। सहनशीलस्य नामानि ॥ ३१ ॥

[1] विसरति ताच्छील्येन Pt2. [2] °उपरिस्यस्य K4. [3] सहते ताच्छील्येन Pt2. [4] क्षमते K5, Pt2 [5] क्षमूष् Pt2. [6] निशाने K4, K5. [7] K2, K4, Pt2 omit.

(विव.) विसृत्वरो—विसारिणि। परितः सर्पणशीलस्य जलस्थतैलबि-न्द्वादेर्नामानि। विशेषेण सरति विसृत्वरः। 'सृ गतौ'। 'इण्नशजिसर्तिभ्यः क्वरप्' (३. २. १६३)। कित्त्वाद् गुणाभावः। पित्त्वात्तुगागमश्च[1] (६. १. ७१)। [2]स्त्रियां तु ङीपि (४. १. १५) विसृत्वरी ॥ [3]सृघस्यदः क्मरच्' (३. २. १६०) इति क्मरच्प्रत्यये विसृमरः ॥ 'प्रे लपसृद्रुमथवदवसः' (३. २. १४५) इति घिनुण्प्रत्यये प्रसारी ॥ विपूर्वात् सरतेर्ग्रह्यादिणिनिप्रत्यये (३. १. १३४) विसारी[4] ॥ सहिष्णुः—क्षमी। एतानि

'बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते सति।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥'

इत्युक्तलक्षणक्षमायुक्तस्य नामानि। सहते ताच्छील्येनेति सहिष्णुः। 'षह मर्षणे'। 'अलंकृञ्...' इत्यादिना (३. २. १३६) इष्णुच् ॥ 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युचि सहनः। क्षमत इति क्षमः। 'क्षमूष् सहने'। पचाद्यच् (३. १. १३४)। अस्य धातोः ऊदित्वेनेडागमस्य वैकल्पिकत्वात्[5] (७. २. ४४) तदभावपक्षे तृनि क्षन्ता। इडागमपक्षे क्षमिता ॥ 'शमित्यष्टाभ्यो घिनुण्' (३. २. १४१) इति घिनुण्प्रत्यये क्षमी ॥ 'तिज निशातने' इति धातोः 'गुप्तिज्किद्भ्यः सन्' (३. १. ५) इत्यत्र 'निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्यते' (इष्टिः ३. १. ५) इति क्षमायां सन्प्रत्यये 'सनाशंसभिक्ष उः' (३. २. १६८) इत्युप्रत्यये तितिक्षुः ॥ ३१ ॥

[1] 'ह्रस्वस्य पिति कृति तुक्.' [2] 'टिड्ढाणञ्...' इत्यादिना ङीपि Tj1, Tv. [3] Tj1 adds अत एव धातो. [4] विसरणम्। घञ् (३. ३. १८)। विसारोऽस्यास्ति। इनिः (५. २. ११५) इति भानुजीदीक्षित (पृ. ४१६). [5] 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वा इडागमः.

(पा.) विसृत्वरो—विसारिणि.। [1]विसरणशीलनामानि ।। सहिष्णु.—क्षमी। क्षमाशीलनामानि[2] ।। ३१ ।।

[1] प्रसरण° B3, C1.　[2] सहनशील° C1.

**क्रोधनोऽमर्षणः कोपी चण्डस्त्वत्यन्तकोपनः ।**
**जागरूको जागरिता घूर्णितः प्रचलायितः ।। ३२ ।।**

(वि) क्रोधन इति—क्रुध्यति [1]ताच्छील्येनेति क्रोधन । 'क्रुध [2]कोपे'। न मृष्यति[3] न सहत इत्यमर्षण.। 'मृष [4]तितिक्षायाम्'। कोपो ऽस्यास्तीति कोपी[5]। कोपनशीलस्य नामानि ।। [6]चण्डतेऽतीव कुप्यतीति चण्ड । 'चडि [7]कोपने'। अत्यन्तकोपनस्य नामनी ।। जागर्ति ताच्छील्येनेति जागरूक । जागरिता च । 'जागृ निद्राक्षये'। जागरणशीलस्य नामनी ।। घूर्णते इतस्ततो डोलयत इति घूर्णित । '[8]घुण घूर्ण भ्रमणे'। प्रचल इवाचरतीति प्रचलायित । क उपविश्यैव निद्रा गतस्य नामनी ।। ३२ ।।

[1] Pt2 omits　[2] क्रोधे Pt2　[3] Pt2 adds ताच्छील्येन　[4] सहने K6, Pt2.　[5] K2 adds कुप क्रोधे, कोपे Pt2　[6] चण्डति K6, Pt2　[7] कोपे K2, Pt2　[8] K3 omits घुण

(विव) क्रोधनो—कोपी। क्रोधशीलस्य नामानि। क्रुध्यतीति क्रोधनः[1]। 'क्रुधमण्डार्थेभ्यश्च' (३. २ १५१) इति युच् ।। [2]'मृष सहने' इति धातोः 'अनुदात्तेतश्च . . .' (३. २. १४९) इति युचि मर्षणशब्देन सहनशील उक्तः, तादृशो न भवतीत्यमर्षणः ।। 'कुप क्रोधे' इत्यस्मादावश्यके[3] णिनिप्रत्यये (३. ३. १७०) कोपी ।। चण्डस्त्वत्यन्तकोपनः। 'चडि कोपे' इत्यस्मात् पचाद्यचि (३. १. १३४) चण्डः ।। 'क्रुधमण्ड . . .' (३. २. १५१) इत्यादिना युचि कोपनः ।। अतिशयेन [4]कोपनशीलोऽत्यन्तकोपनः[5] ।। जागरूको जागरिता। निद्रारहितस्य नामनी। जागर्तीति जागरूकः। 'जागृ निद्राक्षये'। 'जागुरूकः' (३. २. १६५) इति ऊकप्रत्ययः ।। तृन्प्रत्यये (३. २. १३५) जागरिता ।। घूर्णितः प्रचलायितः। स्वप्नावस्थातः पूर्वं मनसो निमीलनावस्थामापन्नस्य नामनी। घूर्ण्यते इतस्ततो

डोलायते स्म घूर्णितः। 'घुण घूर्ण भ्रमणे'। क्तः ॥ प्रचल इवाचरतीति प्रचलायितः। [6]उपमानादाचार इत्यर्थे कर्तुः क्यङ (३. १. ११)। सनाद्यन्तत्वेन धातुसंज्ञाया क्तप्रत्यय.॥ ३२ ॥

[1] Tj1, Tj2 add ऋुध कोपे' [2] मृष्यत इति मर्षण Gm3, Tv [3] 'आवश्य-काधमर्ण्ययोर्णिनि ' [4] कोपशील B6 [5] Tv adds क्रुधातिशयवतो नामनी
[6] उपमानादाचारे' (३ १ १०)

(पा) त्राधनो—कोपी। कोपनशीलनामानि ॥ चण्डस्त्वत्यन्ताकोपन.। [1]अतिकोपशीलनामनी ॥ अनुक्तम्—'गोष्ठश्वस्तु स यो द्वेष्टि स्थान एव स्थित परान्'। स्थान एव स्थित सन् परान् यो द्वेष्टि स गोष्ठश्व. स्यात्। [2] 'गेहेनर्दी गृहेशूर'। स्वगृहे शौर्यवतो नामनी ॥ जागरूको जागरिता। जागरणशीलनामनी ॥ घूर्णित प्रचलायित। तन्द्रीवशात् पुन पुन पतनशीलनामनी[3] ॥ ३२ ॥

[1] अतिकोपन° C1 [2] गेहेशूर B3 [3] A1 adds 'कुनिर्कटिवाडु'

**स्वप्नक् शयालुर्निद्रालुर्निद्राणशयितौ समौ।**
**पराङ्मुखः पराचीनः स्यादवाङप्यधोमुखः॥ ३३ ॥**

(वि) स्वप्नगिति—स्वपिति ताच्छील्येनेति स्वप्नक्। 'ञिष्वप् शये'। शेते ताच्छील्येनेति शयालु। 'शीङ स्वप्ने'। निद्राति ताच्छील्येनेति निद्रालु। 'द्रा कुत्सायां गतौ'। निद्राणशीलस्य[1] नामानि ॥ [2]निद्रातीति निद्राण। शेते स्म शयित [3]। सुप्तस्य नामनी ॥ परमञ्चतीति पराक्। पराङ् मुख यस्य पराङ्मुख। पराक् एव पराचीन [4]। 'अञ्चु गतिपूजनयो'। पराङ्मुखस्य नामनी ॥ अव अञ्चति [5]मुखमिति अवाङ्। अपिशब्दाद् अवाचीनश्च। अधामुखस्य नामनी ॥३३॥

[1] °शीनवत K5 [2] निद्रा गच्छति K4 [3] K5, Pt2 add 'शीङ स्वप्ने'
[4] पराञ्चति मुखमिति पराचीन K2, K4, K6 [5] Pt2 omits मुख and adds अधा मुख यस्येत्यधामुख

**(विव) स्वप्नक्—निद्रालु। निद्राशीलस्य[1] नामानि। स्वपितीति स्वप्नक्। 'स्वपितृषोर्नजिङ' (३ २ १७२)॥ शेत इति शयालु। 'शीङ स्वप्ने'।**

'आलुचि शीङो ग्रहणं कर्तव्यम्' (वा. ३. २. १५८) इत्यालुच् ॥ नितरां द्रातीति निद्रालुः । 'द्रा कुत्सायां गतौ' । 'कुत्सिता गतिः पलायनं स्वप्नश्च' इति धातुवृत्तिः[2] (मा. धा पृ. ३६३) । 'स्पृहिगृहि...' इत्यादिना (३. २. १५८) आलुच् ॥ निद्राणशयितौ समौ । निद्रावस्थापन्नस्य नामनी । निद्राति स्मेति निद्राणः । 'द्रा कुत्सायां गतौ' । क्तः । 'संयोगादेरातो धातोर्यण्वतः' (८ २ ४३) इति निष्ठानत्वम् ॥ शेते स्म शयितः । इडागमः । 'निष्ठा शीङ...' इत्यादिना (१. २ १९) कित्त्वप्रतिषेधाद् गुणायादेशौ ॥ पराङ्मुखः पराचीनः । पार्श्वतः पश्चाद्वा भुग्नशिरसो नामनी । पराञ्चति[3] पुरस्तादप्यर्थाद् अन्यतो मुखं प्रसारयतीति पराङ् । 'अञ्चु गतौ' । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चा च' (३. २ ५९) इति क्विन्प्रत्ययः । तदन्तात् प्रातिपदिकाद् 'विभाषाञ्चेरदिक् स्त्रियाम्' (५ ४. ८) इति स्वार्थिके खप्रत्यये पराचीनः । पराग्भूतं मुखमस्येति पराङ्मुखः । स्यादवाङप्यधोमुखः । पुरोभागनमितशिरस्कस्य नामनी । अवेति निपातोऽधोदेशे वर्तते । अवाञ्चतीति अवाङ् । [4]पूर्ववदेव क्विन् (३. २. ५९) । स्त्रियां तु ङीपि अवाची । अपिशब्दात् पूर्ववदेव विकल्पेन स्वार्थिके खप्रत्यये (५. ४. ८) अवाचीनश्च ॥ ३३ ॥

[1] निद्रावस्थापन्नस्य Tj1, Tj2 [2] स्वापश्च इति स्वामी इति मुद्रितग्रन्थे.
[3] Tv adds परावर्तते [4] Tj1, Tv add ऋत्विगादिना

(पा) स्वप्नक्—निद्रालु । निद्राशीलनामानि[1] ॥ निद्राण—समौ । कृतनिद्रस्य[2] नामनी ॥ पराङ्मुख पराचीन । [3]परावक्त्रतमुखनामनी[4] ॥ स्यादवाङप्यधोमुख । अधोमुखनामनी ॥ अनुक्तम्—'उत्तश्य उन्मुखस्तुल्यो' । उपरि पश्यतो नामनी ॥ ३३ ॥

[1] B3 adds स्वप्नक् स्वप्नजो स्वप्नज [2] निद्रावत B3 [3] °मुखस्य A1
[4] A1 adds 'वेनरमुर्दनवाङ्'

देवानञ्चति देवद्र्यङ् विश्वद्र्यङ् विष्वगञ्चति ।
यः सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति ॥ ३४ ॥

(वि) देवानिति—देवान् प्रति अञ्चति [1]गच्छतीति देवद्र्यङ् । देवानुद्दिश्याभिमुख्येन गच्छतो नाम ॥ विष्वक् सर्वतोऽञ्चतीति[2] विष्वद्र्यङ् । य श्रमेण

सर्वतो गच्छति तस्य नाम ।। सहाञ्चतीति सध्रचङ् । योऽन्येन सह गच्छति तस्य नाम ।। तिरोऽञ्चति गच्छतीति तिर्यङ्[3] । यस्तिरो गच्छति तस्य नाम ।। ३४ ।।

[1] K₂, Pt₂ add पूजयतीति वा, 'अञ्चु गतिपूजनयोः'. [2] K₂, K₄ add गच्छति. [3] स्त्रीलिङ्गे सध्रीची, तिरश्ची Pt₂.

(विव.) देवा—देवद्रचङ् । यः सेवार्थं [1]हरिहरादीन् गच्छति तत्र देवद्रचङ् शब्दः ।। विष्वद्रचङ् विष्वगञ्चति । यः क्रमेण विष्वक् सर्वत्राञ्चति गच्छति तत्र विष्वद्रचङ्शब्दः । 'अञ्चु गतिपूजनयोः' । 'विष्वग्देवयोश्च टेरद्रचञ्चतौ वप्रत्यये' (६. ३. ९२) इति [2]अद्रिः । देवशब्दस्य टेरद्रचादेशो देवद्रचङ्शब्दोऽपि तद्वदेव ।। यः सहा—सः । [3]'सहस्य सध्रिः' (६. ३. ९५) इति सहशब्दस्य सध्र्यादेशः । स्त्रियां तु देवद्रीची, विष्वद्रीची, सध्रीचीत्यादयो ङीप्प्रत्ययान्ताः ।। स तिर्यङ् यस्तिरोऽञ्चति । तिर्यगच्छति[4] तिर्यङ् । तिरोऽञ्चति । 'तिरसस्तिर्यलोपे' (६. ३. ९४) इति तिरःशब्दस्य तिर्यादेशः ।। ३४ ।।

[1] शिवलिङ्गशिवप्रतिमादीना प्रति यो गच्छति तत्र Tj₁, Tv. [2] B₅, Gm₃ add वप्रत्ययान्तेऽञ्चतौ परतः. [3] Gm₁, Tv add अन्येन सह योऽञ्चति गच्छति अत्रापि अञ्चतौ परत· [4] Tv adds वक्र गच्छति.

(पा.) देवा—देवद्रचङ् । देवान् प्रति यो याति[1] स देवद्रचङ् । स्त्री चेद् देवद्रीची ।। विष्वद्रचङ् विष्वगञ्चति । सर्वतो[2] यो गच्छति स विष्वद्रचङ् स्यात् । स्त्री चेद् विष्वग्द्रीची ।। यः सहा—सः । यः सह गच्छति स सध्रचङ् स्यात्, स्त्री चेत् सध्रीची ।। स तिर्यङ् यस्तिरोऽञ्चति । तिर्यग् यो गच्छति स तिर्यङ् स्यात् । स्त्री चेत् तिरश्ची ।। ३४ ।।

[1] *B₃ adds पूजार्थं.* [2] *सर्वत्र A₁.*

**वदो वदावदो वक्ता वागीशो वाक्पतिः समौ ।**
**वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि ।। ३५ ।।**

(वि.) वद इति—वदतीति वदः । वदावदश्च । 'वद व्यक्तायां वाचि' । वक्तीति वक्ता[1] । 'वच परिभाषणे' । मुख्यवक्तुर्नामानि ।। वाचामीशो वागीशः ।

वाचा पतिः वाक्पतिः। [2]प्रबन्धादिकरणसमर्थस्य वाग्युक्तस्य नामनी ।। [3]वाचा युक्तौ प्रयोगे पटुः वाचोयुक्तिपटुः । प्रशस्ता वागस्येति वाग्मी । वावद्यते भृश [4]वदतीति वावदूकः । विवक्षितार्थकथनप्रवीणस्य नामानि ।। ३५ ।।

[1] Pt₂ adds ऋकारान्त [2] K₄, Pt₂ add गद्यपद्यादि° [3] वाचोयुक्तिर्वचसा प्रयोग, तत्र Pt₂ [4] वक्तीति K₃; वक्तेति K₅; K₂, Pt₂ add 'वद व्यक्ताया वाचि'

(विव.) <u>वदो—वक्ता</u> । राजब्रह्मसभादौ निर्भीकत्वेनाभिवदनशीलस्य नामानि । वदतीति वदः । 'वद व्यक्तायां वाचि'। पचाद्यच् (३. १. १३४) ।। 'चरिचलिपतिवदीनां द्वित्वमच्याक् चाभ्यासस्य'[1] (वा. ६. १. १२) इति वदेः पचाद्यचि[2] विकल्पेन द्विर्वचने आगागमे वदावदः । अभ्यासस्याग्विधानादेव 'हलादिः शेषः' (७. ४. ६०) अत्र[3]न भवति ।। तृचि वक्ता (३. १. १३३) ।। <u>वागीशो—समौ</u> । गद्यपद्यादिप्रबन्धनिर्माणपाटवसंपन्नस्य नामनी[4] ।। <u>वाचोयुक्ति—वक्तरि</u> । वाचोयुक्तिर्वचसां प्रयोगः । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' (वा. ६. ३. २१) [5]इत्यलुक् । तत्र पटुः चतुरो वाचोयुक्तिपटुः ।। [6]युक्तियुक्तवचसामभिधानशीलतया प्रशस्ता वागस्येति वाग्मी । 'वाचो ग्मिनिः' (५. २. १२४) इति प्रशंसारूपे मत्वर्थे ग्मिनिः ।। वावद्यते साधु वदतीति वावदूकः । 'यजजपदशां यङः' (३. २. १६६) इति सूत्रे वदेरनुप्रवेशः कार्यः इति [7]पदकारवाक्याद् ऊकप्रत्ययः इति <u>क्षीरस्वामी</u> (पृ. २४३) । [8]यङन्तानां, 'यजिजपिदंशिवदामूकः' इति <u>कालापाः</u> इति <u>सर्वानन्दः</u> (टी. स. पृ. १८) । 'उलूकादयश्च' (उ. ४. ४१) इति वदेर्यङन्ताद् ऊकप्रत्यये[9] वावदूकः, इति <u>सुभूतिचन्द्रः</u> ।। तृनि वक्ता (३. २. १३५) ।। ३५ ।।

[1] Tj₁, Tv add वेति वक्तव्यम् [2] Gm₃ adds परत [3] B₅ adds अभ्यासस्य परलोप [4] Tj₂, Tv add वाचामीशो वागीश, वाचा पति वाक्पति [5] Tv adds यथासंख्यमलुग्वक्तव्य इति षष्ठ्या. अलुक्. [6] Gm₃, Tv add विद्वन्मध्ये [7] वृत्तिकार° Tv [8] चेक्रीयीतान्तानामिति मुद्रितग्रन्थे [9] Tv adds एव वा

(पा.) <u>वदो—वक्ता</u> । [1]भाषणाभिज्ञनामानि ।। <u>वागीशो—समौ</u> । [2]निपुणभाषिणो नामनी ।। <u>वाचोयुक्ति—वक्तरि</u> । समञ्जसभाषिणो नामानि[3] ।। ३५ ।।

[1] वक्तृनामानि B3 [2] A1 adds अत्यन्तभाषण* [3] 'मञ्जिमाटलाडिवाडु' A1+

स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।
दुर्मुखे मुखराबद्धमुखौ शक्लः प्रियंवदे ।। ३६ ।।

(वि) स्यादिति—बहु जल्पतीति जल्पाक[1] । 'जप जल्प व्यक्ताया वाचि' । कुत्सिता वागस्येति[2] वाचाल । वाचाटश्च । बहुनिन्दायुक्तवचसो नामानि[3] ।। [4]मुखनिर्गत दुष्ट वचनमस्येति मुखर । अबद्धमनियन्त्रित [5]मुखनि सृत वचनमस्येति अबद्धमुख । दुर्वचसो नामानि ।। शक्नोति प्रियमेव वक्तुमिति शक्ल । [6]श्लक्ष्ण इति वा पाठ । 'शक्लृ शक्तौ' । [7]प्रियवदस्य नामनी ।। ३६ ।।

[1] जल्पति कुत्सित वदति Pt2 [2] वाच सन्ति K4 [3] Pt2 adds बहुध्य-गर्ह्या वाचो यस्येति बहुगर्ह्यवाक् [4] K3, Pt2 add दुष्ट मुख वचनमस्येति दुर्मुख [5] मुखमस्येति Pt2. [6] श्लिष्यते सर्वैरिति श्लक्ष्ण Pt2 [7] प्रिय वदतीति प्रियवद, 'वद व्यक्ताया वाचि' Pt2

(विव.) स्यात्—बहुगर्ह्यवाक् । यः बहूनि प्रकृतानुपयुक्तानि गर्ह्याणि निन्द्यानि च वाक्यानि वक्ति तस्य[1] जल्पाकादयः शब्दाः । जल्पतीति जल्पाकः । 'जल्प व्यक्तायां वाचि' । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' (३. २. १५५) इति षाकन्प्रत्ययः । स्त्रियां तु षित्वाद् ङीषि जल्पाकी ।। बह्वी कुत्सिता वागस्येति वाचालः । वाचाटश्च । 'आलजाटचौ बहुभाषिणि'[2] (५. २. १२५) इति सूत्रस्य पदसामर्थ्यादेव वाचा गर्ह्यत्वमपि लभ्यते । न्याययुक्तपर.सहस्रवादिन्यपि बहु-भाषित्वव्यपदेशाभावात् ।। दुर्मुखे—मुखौ । मुखशब्देनात्र वचनं लक्ष्यते । दुर्मुखे दुर्वचसि देशजातिकुलाद्याक्षेपकनिष्ठुरवचने [3]मुखरादिशब्दद्वयम् । दुष्टं मुखं वचन-मस्येति दुर्मुखः । 'रमुखकुञ्जेभ्यो र इति वक्तव्यम्' (वा. ५. २. १०७) इति निन्दारूपे मत्वर्थे रप्रत्यये मुखरः ।। अबद्धम् असंबद्धम् अनियन्त्रितं मुखमस्येति अबद्धमुखः ह्रस्वादिः ।। शक्लः प्रियंवदे । शक्नोति प्रियमेव वक्तुमिति शक्लः । [4]औणादिको लप्रत्ययः[5] कल्प्य इति सुबोधिनीकारः । प्रायेण प्रियमेव वदतीति प्रियंवदः । 'प्रियवशे वदः खच्' (३. २. ३८) इति खच्, मुमागमश्च ।। ३६ ।।

[1] तत B5, Gm1 [2] Gm3, Tv add कुत्सित इति वक्तव्यम् [3] B6, Gm3 omit मुखरादि°. [4] Tv adds 'शक्लृ शक्तौ' [5] 'मूशक्यादिभ्य क्ल' (उ ४. ११०)

(पा ) स्यात्—बहुगर्ह्यवाक् । [1]बहुभाषिणो नामानि ।। दुर्मुखे—मुखौ । असवद्धवचोवक्तृनामानि । 'वठर स्यान्मातृमुख.'। 'वराकवठरैरहो जगदिद महद्वञ्चितम्'। इत्येते द्वे च ।। श्लक्ष्ण प्रियवदे । [2]प्रियवादिनामनी[3] ।। ३६ ।।

[1] B3 adds निन्द्य°. [2] प्रियवद° A1 [3] शक्ल इति वा पाठ A1.

**लोहलः स्यादस्फुटवाग् गर्ह्यवादी तु कद्वदः ।**
**समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः ।। ३७ ।।**

(वि ) लोहल इति—लोहति स्थानप्रयत्नवैकल्य [1]करोतीति लोहल । 'लुह कत्थनादौ'[2] । अस्फुटवचसो नाम ।। कुत्सित वदतीति कद्वद । 'वद व्यक्तायां वाचि'। [3]निन्द्यवादिनो नाम ।। कुत्सित परदोषप्रख्यापनशीलो वादो भाषण यस्येति कुवाद । कुत्सित वदतीति कुवद इति वा पाठ [4] । कुत्सित चरतीति कुचर [5] । 'चर गतौ'। कुत्सित चरति भाषते कुचर । 'चर गतिभक्षणयो'। परदोषख्यापनशीलस्य नामनी ।। विरुद्ध श्रवणकटु स्वरो यस्येत्यस्वर [6] । असौम्यस्वरवतो नाम ।। ३७ ।।

[1] K2, K3 omit करोति [2] 'लुह गार्ध्ये' इति बोपदेव इति भानुजीदीक्षित (पृ ४१७) [3] Pt2 adds गर्ह्यं वदतीति गर्ह्यवादी [4] K3, K5 add 'वद व्यक्तायां वाचि' [5] K4, K5, K6 add सम्यग्गमनासमर्थस्य नाम [6] मुखविरुद्ध स्वरोऽस्येत्यस्वर K2, K4

(विव.) लोहलः स्यादस्फुटवाक् । स्थानप्रयत्नवैकल्याद् अव्यक्तवचनस्य नाम । [1]लोहति । 'लुह[2] गार्ध्ये' इत्यस्माद् भौवादिकाद् अलप्रत्यये लोहलः इति केचित् । लुनाति वाक्यं मध्ये भिनत्तीति लोहल इत्यन्ये[3] । लोहम् अतिमांसलतया काठिन्येन लोहसदृशं रसनाताल्वादिकर्म लातीति लोहलः (३. २. ३) इत्यपरे ।। गर्ह्यवादी तु कद्वदः । यो गर्ह्यं कुत्सित वचनमल्पमेव वदति ताच्छील्येन स गर्ह्यवादी कद्वदः । [4]वाचाटस्तु बहुभाषीति कद्वदाद् भिन्नः । कुत्सितं वदतीति कद्वदः ।

'रयवदयोश्च' (६. ३. १०२) इति कोः कदादेशः ।। समौ कुवादकुचरौ । कुत्सितः परदोषप्रख्यापनशीलो वादो भाषण यस्येति कुवादः इति सर्वानन्दः[5]। सुबोधिनीकारस्तु द्वितीयमक्षरमोष्ठ्यचवर्गप्रथमयुक्त[6] पठित्वा कुत्सितः पदः पादसाध्यं गमनमस्येति व्याख्याय तत्संवादत्वेन '[7]कुपदे कुचरः' इति वैजयन्तीसंवादं (पृ. २०५, श्लो. ४८) दर्शितवान् । कुत्सितं चरति भाषते गच्छति वा कुचरः । पचाद्यच् (३. १. १३४) ।। स्यादसौम्यस्वरोऽस्वरः । असौम्यः काकस्वरघर्घरादिरश्राव्यस्वरो यस्येति असौम्यस्वरः । विरुद्धः श्रवणकटुः स्वरो यस्येति अस्वरः । अत्र नञ् विरुद्धार्थ.[8] ।। ३७ ।।

[1] लुह्यते $B_5$, $Gm_1$ [2] लुह कत्यनादौ इति स्वामी Tv, कथनादौ $Gm_3$ [3] 'लूञ् छदेने' $Tj_1$ [4] प्रागुक्ताद् बहुभाषिणो वाचाटादस्य भेद Tv, $Gm_3$ [5] परदोषकथनशीले कुवादद्वयम् । कर्मण्यणि कुवाद इति मुद्रितग्रन्थे (टी स पृ २८) [6] कुपाद इति Tv [7] कुपथे $B_5$, $Tj_1$, कुवदे इत्येव मुद्रितग्रन्ये [8] तद्विरोधार्थ $Gm_1$, Tv

(पा) लोहल स्यादस्फुटवाक् । [1]म्लिष्टवचननामनी । [2]'तोक्किमाट लाडिवाडु' । 'लोहलोऽव्यक्तवाग् भवेत्' इति हलायुध (अ मा २ २३२) ।। गर्ह्यवादी तु कद्वद । [3]गर्ह्यवादी कद्वद स्यात् ।। समौ कुवादकुचरौ । [4]निकृष्टवाचिनो नामनी[5] ।। स्यात्—अस्वर । [6]हीनकण्ठस्य नामनी । 'ओरलुकुत्तिकवाडु' ।। ३७ ।।

[1] स्खलद्वचन° $A_1$ [2] $B_3$ omits [3] गर्ह्यवादिनाम $B_3$ [4] म्लेच्छभाषणमद्भाषिण $A_1$ [5] 'नेसचमाटलवाडु' $A_1$ [6] श्रोशध्वनिनामनी $A_1$

**रवणः शब्दनो नान्दीवादी नान्दीकरः समौ ।**
**जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते ।। ३८ ।।**

(वि.) रवण इति—रौति ताच्छील्येन [1]शब्दायते रवण । 'रु शब्दे' । शब्दयत इति शब्दन । 'शब्द शब्दक्रियायाम्'[2] । ध्वनिकरणशीलस्य नामनी ।। नान्दी मङ्गलवाद्य वदतीति नान्दीवादी । नान्दी मङ्गलपाठ करोतीति नान्दीकर । मङ्गलपाठकस्य नामनी ।। जडति जडीभवतीति जड. । 'जल[3] घातने' । न जानातीत्यज्ञ । 'ज्ञा अवबोधने' । जडस्य[4] नामनी ।। एडो बधिर, स चासौ मूकश्च

एडमूकः । अनेडमूक इति पाठे, एडमूको मूकसदृशो भवतीति *अनेडमूकः । अव्युत्पन्नदशायां[5] वक्तु श्रोतु वा [6]शिक्षितस्य नाम ॥ ३८ ॥

[1] K₂, Pt₂ omit शब्दायते. [2] शब्दे K₂, K₄, K₅; आविष्कारे K₆. [3] जड जाड्ये K₅; शून्ये K₂. [4] अज्ञनामनी K₂, K₃, K₄ [5] भाषाया K₅. [6] च अशिक्षितस्य K₄, K₅ * अत्र नञ्शब्दः सादृश्यार्थे.

(विव.) रवणः शब्दनः । नरतिर्यगादिकारणभेदाविवक्षया [1]श्रोतृग्राह्यशब्दप्रवृत्तिहेतोः करितुरगसमुद्रभेरीवीणादेर्नामनी । रौति शब्दायते ताच्छील्येन रवणः । 'रु शब्दे' ॥ शब्दयतीति शब्दनः । 'शब्द शब्दे' [2] । चुरादिः । शब्दः शब्दनमिति तद्वृत्तौ । 'चलनशब्दार्थादकर्मकाद् युच्' (३. २. १४८) इत्युभयत्र[3] युच् । नान्दीवादी—समौ ।

> 'देवद्विजनृपादीनां [4]स्तुतिर्यत्र प्रवर्तते ।
> आशीर्वचनसंयुक्ता [5]सा नान्दी नन्दिनो मुदे ॥' (ना. शा. ५. २४)
> 'नाट्यादौ पठ्यते यत्तु सा नान्दी कथिता बुधैः ।
> सा स्यात् पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता ॥'

इत्यादिना कोहलादिभिरुक्तलक्षणः पद्यविशेषो नान्दीत्युच्यते । यत्किंचिन्मङ्गलसूचकं वाक्यमात्रं वा । तथा च 'नान्दीमुखं कर्म' इति मङ्गलमुखमित्यर्थः । तथा च 'मदकलकलविङ्कीकाकुनान्दीकरेभ्यः' इति मुरारिप्रयोगश्च (अ. रा. २. ४५) । नान्दीं वदति [6]ताच्छील्येनेति नान्दीवादी । 'सुप्यजातौ णिनिस्ताच्छील्ये' (३. २. ७८) इति णिनिः । नान्दीं मङ्गलं करोति वदतीति नान्दीकरः । 'दिवाविभानिशा . . . बहुनान्दी . . .' इत्यादिना (३. २. २) करोतेष्टप्रत्ययः ॥ जडोऽज्ञे । अज्ञे मन्दबुद्धौ जडशब्दः ।

> 'इष्टं वानिष्टं वा [7]सुखमितरद्वा न वेत्ति यो मोहात् ।
> तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥'

इति । जलतीति जडः । 'जल [8]घात्ये' । घात्यं तीक्ष्णत्वाभावः । पचाद्यच् (३. १. १३४) । डलयोरभेदः ॥ एडमूकस्तु—अशिक्षिते । [9]संस्कृतभाषादौ कृतबुद्धिषु

व्यवहरत्सु य स्वयमव्युत्पन्नतया तदीयवाक्यानि श्रोतु प्रतिवक्तु च समर्था न भवति स एडमूक उच्यते । एडो बधिरो मूको वागिन्द्रियरहित , एडश्चासौ मूकश्चेति [10]विशेषणसमास । श्रुतावधारणशक्तिराहित्यप्रतिवचनशक्तिराहित्यलक्षणोभय सादृश्याल्लक्षणाशब्दोऽयम् एडमूक इति । केचित्तु—जडो ऽजेऽनेडमूक इति पठित्वा व्याचक्षते । एडमूक इव भवतीति अनेडमूक । अत्र नञ्शब्द इवार्थे । तदुक्तम्— 'नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थावगते ' इति । अयमर्थ —नञ्युक्त-मिव युक्त चान्यस्मिन् सदृशे वर्तते लोके तथैवार्थसप्रत्ययादिति । ' न खल्वनेडमूका वा सर्व एते महर्षय ' इति सुभूतिचन्द्रेण हर्षप्रयोगो दर्शित ॥ ३८ ॥

[1] अवर्णात्मक° Tv [2] शब्दक्रियायाम $T_{J1}$, $T_{J2}$ [3] $B_5$, $B_6$ omit उभयत्र
[4 5] नित्य यस्मात प्रयुज्यते तस्मान्नान्दीति कीर्तिता in the printed text (p 70)
[6] $Gm_1$ $B_6$ omit ताच्छील्येन [7] सुखदु खे वा इति टीकासवस्वे (पृ १६) [8] घातने Tv
[9] असस्कृत° Tv [10] विशेषेण° $Gm_3$

(पा ) रवण शब्दन । क्रोशनशीलनामनी ॥ नान्दीवादी—समौ । [1]आशी र्वादकनामनी ॥ दवद्विजनृपादीनामाशीर्नान्दीति °कीर्त्यते ' इति रभसकोश । [3]खेलिवादकनामन्यपि स्याताम् । ' दुन्दुभिस्त्वानको भेरी भभा[4] नासूश्च नान्द्यपि ' इति वैजयन्ती (प १४६ श्लो १३३) ॥ जन्मोऽज्ञ । अज्ञनामनी ॥ अनेडमूकस्तु —अशिक्षित । सम्यगुक्त वक्तु श्रोतु चाशिक्षित सन स्ववत्रिमाण यो न जहाति सोऽनेडमक स्यात् । [5]वाक्छ्रोत्रेन्द्रियविकलश्चेद् एडमूक स्यात् । ' एडमूकस्त्ववा क्छ्रुति ' इति वैजयन्ती (पृ २०२, श्लो १३) ॥ ३८ ॥

[1] प्रयोक्तृ for वादक in $B_3$ [2] नान्दी प्रकीर्तिता $B_3$ [3] $A_1$ reads ताडक for वादक [4] बभा $A_1$ [5] वागिन्द्रियश्रोत्रेन्द्रिय° $A_1$

तूष्णींशीलस्तु तूष्णीको नग्नोऽवासा दिगम्बरे ।
निष्कासितोऽवकृष्ट· स्यादपध्वस्तस्तु धिक्कृत· ॥ ३९ ॥

(वि ) तूष्णीमिति—तूष्णीं शीलमस्यास्तीति [1]तूष्णीक । तूष्णी-[2]स्वभावस्य नामनी ॥ न लज्जते व्रीडयतीति नग्न । ' ओलस्जी [3]व्रीडने ' । अविद्य-मान वासोऽस्येति अवासा । दिश एवाम्बर यस्य स दिगम्बर । वस्त्रहीनस्य

नामानि ।। निष्कास्यते निर्वास्यत[4] इति निष्कासितः । 'कस गतौ' । अवकृष्यते बलात्कारेणेति अवकृष्टः । 'कृप विलेखने' । गृहान्निर्वासितस्य नामनी ।। अपध्वस्यत इत्यपध्वस्तः । 'ध्वंसु भ्रंसु [5]अवस्रंसने' । [6]धिक्कृतं तव वर्तनम् इत्येवमुक्तो धिक्कृतः । न्यक्कृतस्य नामनी ।। ३६ ।।

[1] Pt₂ adds तूष्णीशील . [2] K₅, Pt₂ omit व्रीडयति [3] व्रीडे K₃; नजते नग्न', 'नज व्रीडने' K₆; ओनजी' K₅. [4] K₅ *omits.* [5] अध पतने K₄; गतौ K₅. [6] धिगिति कृत. उच्चारित', 'डुकृञ् करणे', करोतिरत्र उच्चारणे Pt₂.

(विव.) तूष्णींशीलस्तु तूष्णीकः । तूष्णीमित्यव्ययं वाङ्मुद्रणे वर्तते । तदेव शीलं यस्य सः तूष्णींशीलः । 'तूष्णीमः शीले को मलोपश्च' (वा. ५. ३. ७१) इति ताच्छील्ये कप्रत्यये तूष्णीकः । मौनशीलस्य नामनी ।। नग्नोऽवासा दिगम्बरः । परिधानप्रावारोभयवस्त्ररहितः पुरुषो नग्नादिशब्दैरुच्यते[1] । परिधानराहित्येन सभामध्ये लज्जत इति[2] नग्नः । 'ओलस्जी व्रीडे' । क्तप्रत्ययः (३. ४. ७२) । 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वम् । कुत्वे सति गकारः । [3]वर्णव्यत्ययाद् नग्न इति सर्वानन्दः । [4]नजिधातोरेवेति सुबोधिनीकारः । अथवा 'छन्दांसि वै नग्ना' इति श्रुतेः नग्नशब्देन वेदा उच्यन्ते । 'तस्माद् यज्ञोपवीत्येवाधीयीत' इति श्रुतेः विवसनस्य वेदाध्ययनाधिकाराभावाद् अविद्यमानवेदत्वेन नग्न इति ।। अविद्यमानवस्त्रत्वाद् अवासाः ।। दिश एवाम्बरं वस्त्रसदृशमस्येति दिगम्बरः ।। निष्कासितोऽवकृष्टः स्यात् । गृहग्रामादिभ्यो बहिर्निःसारितस्य नामनी । निरित्युपसर्गो निषेधे । [5]तत्पूर्वात् 'कस गतौ' इति धातोर्णिचि निष्ठायाम् 'इसुसोः सामर्थ्ये' (८. ३. ४४) इति षत्वे च निष्कासितः । समीपस्थितिं निषिध्य बहिर्निःसारित इत्यर्थः ।। अवज्ञया कृष्यते बहिः क्रियते इत्यवकृष्टः[6] ।। [7]अपध्वस्तस्तु धिक्कृतः । अल्पापराधेषु राजादिभिः 'तव चरित्रं धिक्' इति प्राप्तवाग्दण्डो धिक्कृतः । धिगिति कृत उक्त इत्यर्थः । सः अपध्वस्तः, अपध्वस्यते स्म धिक्कारेण न्यक्क्रियते स्म अपध्वस्तः । क्तः[8] ।। ३६ ।।

[1] कथ्यते B₅, Tj₁, Tj₂. [2] इव Tv. [3] लग्न एव वर्णव्यत्ययान्नग्न इति मुद्रितग्रन्थे (टी. स. पृ. २०). [4] 'ओनजी व्रीडे,' क्त (३ ४ ७२). [5] नि पूर्वात् Tv. [6] B₆ adds 'कृप विलेखने', क्त . [7] Tv omits the word. [8] Tj₁ adds 'ध्वंसु अधःपतने गतौ च'.

(पा) तूष्णीशीलस्तु तूष्णीक । तूष्णीस्वभावमापन्न तूष्णीक [1]स्यात् ॥ नग्नोऽवासा दिगम्बर । अवसननामानि । जिनमुनिनामान्यपि स्यु । [2]'क्षपण. श्रमणो नग्नो नग्नाटश्च दिगम्बर ' इति वैजयन्ती (पृ २०२, श्लो १५) ॥ निष्कासितोऽवकृष्ट स्यात् । [3]गृहात् परिहृतस्य नामनी ॥ अपध्वस्तस्तु धिक्कृत । निर्भर्त्सनेन [4]वहिष्कृतस्य नामनी ॥ ३९ ॥

[1] मौनिनामनी $B_3$ [2] क्षपणश्रमणौ इति मुद्रितग्रन्थे [3] अर्धचन्द्रहस्तप्रहारगृहादिनिष्कासितोऽवकृष्ट स्यात $A_1$ [4] $A_1$ omits निर्भर्त्सनेन

आत्तगर्वोऽभिभूतः स्याद् दापितः साधितः समौ ।
[1]प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः ॥ ४० ॥
निकृतः स्याद् विप्रकृतो विप्रलब्धस्तु वञ्चितः ।
मनोहतः प्रतिहतः प्रतिबद्धो हतश्च स' ॥ ४१ ॥

(वि) आत्तगर्व इति—नृपादिना आत्तो [2]हृतो गर्वो यस्येत्यात्तगर्व । आत्तगन्ध इति वा पाठ । अभिभूयत इत्यभिभूत । राज्ञा हृताभिमानस्य नामनी ॥ राज्ञा दाप्यत इति दापित । 'डुदाञ् दाने' । साध्यते [3]साक्ष्यादिनेति साधित । [4]'साध ससिद्धौ' । [5]राज्ञा विवादेऽपराजितस्य नामनी ॥ प्रत्यादिश्यते निराक्रियते प्रत्यादिष्ट । 'दिश अतिसर्जने' । निराकृतस्य नाम । निरस्यते स्म निरस्त । 'असु क्षेपणे' । प्रत्याख्यायते स्म प्रत्याख्यात । 'ख्या प्रकथने' । निराक्रियते स्म निराकृत । 'डुकृञ् करणे' । विप्रकृतश्च । विप्रलभ्यते स्म विप्रलब्ध । वञ्च्यते स्म वञ्चित । 'डुलभष् प्राप्तौ' । 'वञ्चु प्रलम्भने' । मनसि हत. मनोहृत । मनसि प्रतिहन्यते स्म प्रतिहत । 'हन हिंसागत्यो ' । मनसि प्रतिबध्यते स्म प्रतिबद्ध । 'बन्ध बन्धने' । हन्यते स्म हत । 'हन हिंसागत्यो ' ॥ ४०-१ ॥

[1] Most of the MSS consider the three hemistichs beginning with प्रत्यादिष्ट as interpolations and omit them. [2] $K_3$, $K_5$ omit [3] साक्षिवाक्यादिना $K_5$ [4] $K_5$ adds राध [5] $K_3$ adds 'आदि'

(पिय) आत्तगर्वोऽभिभूत स्यात् । महायुद्धेषु पलायनेन, जल्पवितण्डादौ परवादिकृतनिग्रहप्रापणेन, महापराधेषु धनदण्डमुण्डनादिना वा 'हृताभिमानोऽभि-

भूत [2]। अभिभयते तिरस्क्रियते स्म अभिभूत । क्त । आत्तगन्ध इति केचित् पठन्ति। 'गन्ध अर्दने' इति धातो पीडावचनात् पचाद्यचि (३ १ १३४) गन्ध । आत्त स्वीकृतो गन्धो दु ख येनेति आत्तगन्ध ।। दापित साधित समौ। अर्थविवादेषु पराजितस्यैते नामनी। विवादास्पदीभूत धन धनिने दाप्यते स्मेति दापित । ददातेर्णिचि पुगागमे (७ ३ ३६) च निष्ठा। सुभूतिचन्द्रस्तु[3]—द्वितीयमक्षर प्रथमान्तस्य पठित्वा व्याचष्ट, 'दय दानगतिरक्षणहिंसादानेषु' इति धातोरिद रूपमिति पुरुषोत्तम इति। सर्वानन्दस्तु[4] पाठद्वयेनापि व्याख्यातवान् ।। प्रतिवादिना साक्षिलेख्यादिभि साध्यते स्मेति साधित । अत्राह सुभूतिचन्द्र —' साधिताधिक्षिप्तशब्दयो (श्लो ४०, ४२) मध्ये क्वचित् पुस्तके,

" प्रत्यादिष्टो निरस्त स्यात् प्रत्याख्यातो निराकृत ।
निकृत स्याद् विप्रकृतो विप्रलब्धस्तु वञ्चित ।
मनोहत प्रतिहत प्रतिबद्धो हतश्च स ।।'

इति सार्धश्लोकस्य पाठो दृश्यते। स त्ववान्तरे[5] प्रक्षिप्त । पुरातनव्याख्यातृभि अव्याख्यातत्वात्' इति। दशटीकासर्वस्वकार सर्वानन्दोऽपि प्रत्यादिष्टादिकमर्धत्रय परित्यक्तवानेव। तथापि इदानींतनपुस्तकेषु केषुचिद विद्यमानत्वात् सुबोधिनीकारेण[6] व्याख्याततत्वाच्च अस्माभिरपि तद्व्याख्यानुसारेण[7] विविच्यते[8]। तत्र प्रत्यादिष्टादिचतुष्टय प्रागेकदा पराभूते पुनरपि प्राड्न्यायादिना पराभूते वर्तत इति[9]। प्रतीत्युपसर्ग पौन पुन्ये, निरिति निश्चये यथायथम् उपसर्गवशात् पूर्वोक्त एवार्थे वर्तमानेभ्य 'दिश अतिसर्जने , 'असु क्षेपणे', 'ख्या प्रकथने', 'डुकृञ् करणे' इत्येतेभ्यो धातुभ्य कर्मणि क्तप्रत्यये क्रमेण प्रत्यादिष्ट , निरस्त , प्रत्याख्यात , निराकृत इत्येते चत्वार शब्दा भवन्ति। निराकृतादिद्वय परकृततिरस्कारदु खार्थे वर्तते। निपूर्वो विप्रपूर्वो वा करोतिधातु शत्रुकृततिरस्कारसजाते दु खविशेषे वर्तते। तथा च ' नवीकरिष्यत्युपशुष्यदार्द्र स त्वद्विना मे हृदय निकार इति भारवि (किरा ३ ४४)। 'तस्मिन् विप्रकृता काले तारकेण दिवौकस इति कालिदासश्च (कु स २ १)। तत कर्मणि निष्ठाया निकृतो विप्रकृतश्च ।। विप्रलब्धादिद्वयम् अनाप्तवचनादिना प्रमाणाभासेन विसवादिज्ञानयुक्ते। उपसर्गद्वयवशेन वञ्चनार्थात् लभने कर्मणि निष्ठाया विप्रलब्ध । वञ्च्यते स्म वञ्चित । 'वञ्चु प्रलम्भने'। प्रलम्भन मिथ्याज्ञानमिति [10]धातुवृत्तौ (मा धा पृ ६३)।

मनोहतादिचतुष्क प्रतिकूलार्थप्राप्त्या निरुत्साहे मनसि हतः ताडित इव भवतीति मनोहत'। प्रतिहन्यते स्म प्रतिहत.। प्रतिबध्यते स्म निरुद्ध॰[11] म्रियत इति प्रतिबद्ध[12]। निश्चेष्टत्वेन हतसदृशतया हत॰ ॥ ४०-१ ॥

[1] अपहृत॰ Tv [2] Tv adds इत्युच्यते [3] Gm1 omits सुभति॰. [4] आत्तगन्ध इति पाठ इत्यन्य (टी स पृ २०) [5] अवान्तर B5, B6 [6] TJ2, Tv add साधितपदानन्तर [7] B6 adds किंचिदस्माभि [8] Gm1 omits 3 lines [9] Tv adds सुबोधिनी [10] ॰वृत्ति Tv, प्रलम्भन मिथ्याफलाख्यानम् इति मुद्रितग्रन्थे [11] निरुद्धोद्योग Tv. [12] Tv adds 'बध सयमने'

(पा) आत्तगन्धोऽभिभत स्यात्। तिरस्कृतनामनी ॥ दापित साधित समौ। अत्यन्तनिर्बन्धेन क्लेशितनामनी[1] ॥ [2]प्रत्यादिष्टो—निराकृत। निराकृतनामानि ॥ निकृत स्याद् विप्रकृत। अपकृतस्य नामनी ॥ विप्रलब्धस्तु वञ्चित। प्रतारितस्य नामनी ॥ मनोहत—हतश्च स। हतमनस्कस्य नामानि ॥ ४०-१ ॥

[1] 'कुरकुरघडुवाडु' A1. [2] A1 omits the three hemistichs

**अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ।**
**आपन्न आपत्प्राप्तः स्यात् कान्दिशीको भयद्रुतः ॥ ४२ ॥**

(वि) अधिक्षिप्त इति—अधिक्षिप्यते तिरस्क्रियत इत्यधिक्षिप्त। [1]प्रतिक्षिप्यत इति प्रतिक्षिप्त। 'क्षिप प्रेरणे'। सभाया जितस्य कूटसाक्ष्यादेर्नामनी ॥ कील्यते स्मेति कीलित। 'कील बन्धने'। सयम्यते बध्यते स्म सयत। 'यम उपरमे'। [2]रज्ज्वादिना बद्धचोरादेर्नामानि ॥ आपद्यते आपद[3] प्राप्नोतीति आपन्न। 'पद गतौ'। आपद प्राप्तस्य नाम[4] ॥ का दिश व्रजामीति विह्वलो [5]भवतीति कान्दिशीक[6]। [7]भयद्रुतस्य नाम ॥ ४२ ॥

[1] K2, K5 omit [2] K4 adds बध्यते स्म बद्ध [3] आपद K3 [4] Pt2 adds आपद प्राप्त आपत्प्राप्त, 'आप्लृ व्याप्तौ' [5] K5 omits भवति [6] का दिश गच्छामीति चिन्तयन् पलायित Pt2 [7] Pt2 adds भयेन द्रुत भयद्रुत 'द्रु गतौ'

(विय.) अधिक्षिप्त. प्रतिक्षिप्तः। सभामध्ये कूटसाक्षित्वादिदोषेण सम्यं परेण वा निन्दितस्य नामनी। 'क्षिप प्रेरणे' इत्यस्माद उपसर्गवशेन[1] निन्दार्थपार्य-

त्वाद् धातोः कर्मणि क्तप्रत्यये (३. २. १०२) अधिक्षिप्तः प्रतिक्षिप्तश्च ॥ बद्धे कीलितसंयतौ । चौर्याद्यपराधेषु रज्जुशृङ्खलादिना[2] बद्धस्य नामनी । कील्यते बध्यते स्म कीलितः । 'कील बन्धने' । क्तः । रज्ज्वादिना संयम्यते स्म संयतः । 'यमु उपरमे' । क्तप्रत्यये सति अनुनासिकलोपः[3] (६. ४. ३७) ॥ आपन्न आपत्प्राप्तः स्यात् । राज्यभ्रंशसर्वस्वनाशादिदुर्दशां प्राप्तस्य नामनी । पद्यतिरत्र आङ्पूर्वो [4]विपत्तिवचनः । तथा चोक्तम्—'विपत्त्या[5] विपदापदौ' इति (२. ८. ८२) । आपद्यते स्म आपन्नः । 'पद[6] गतौ' । 'रदाभ्याम् . . .' इत्यादिना (८. २. ४२) निष्ठानत्वम् ॥ आपदं प्राप्तः आपत्प्राप्तः । 'द्वितीया[7] श्रित . . .' इत्यादिना (२. १. २४) समासः ॥ कान्दिशीको भयद्रुतः । शात्रवादिनिमित्ताद् भयात् [8]कां दिशं व्रजामीति चिन्तयन् पलायित· कान्दिशीकः । पृषोदरादित्वात् (६. ३. १०९) साधुः ॥ ४२ ॥

[1] अधिप्रत्युपसर्गवशात् Gm1, Gm3  [2] बद्धे कीलितद्वयम B5, B6  [3] 'अनुदात्तोपदेश झलि क्ङिति'  [4] Tv adds उपसर्गमहिम्ना  [5] 'विपत्तौ' इत्यस्मिन् ग्रन्थे  [6] पद्लृ B5, B6  [7] 'प्राप्तापन्ने च द्वितीयया' (२ २ ४) इति क्षीरस्वामी (पृ २४४)  [8] Tj1, Tj2, Tv *omit the five words* का, *etc*

(पा) अधिक्षिप्त प्रतिक्षिप्त । [1]आरोपितदोषस्य नामनी ॥ बद्धे कीलितसंयतौ । [2]शृङ्खलादिना बद्धस्य नामनी ॥ आपन्न आपत्प्राप्त स्यात । [3]विपदाविष्टनामनी ॥ कान्दिशीको भयद्रुत । भयात् पलायितस्य नामनी[4] ॥ ४२ ॥

[1] चौर्यादिदोषेणारोपित° A1  [2] कृतदारुमयपादबन्धनस्य A1  [3] °नष्ट° B3
[4] यो नष्ट सन् दिगन्तानभिद्रवति स कान्दिशीक स्यात्, 'चडिपारिनवाड्डु' A1

**आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे ।**
**व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ ॥ ४३ ॥**

(वि) आक्षारित इति—आक्षार्यते [1]व्याकृष्यते आक्षारित । क्षारितश्च । [2]'क्षर सचलने ।' अभिशस्यते [3]वाक्यसायकै प्रतुद्यत इत्यभिशस्त । 'शसु हिंसायाम्' । वाक्यपारुष्यात् ब्रह्महत्यादिना[4] दूषितस्य नामनी ॥ [5]सकसति इतस्ततो गच्छतीति सकसुक । 'कस गतौ' । [6]'अस्थिरस्य कूटसाक्ष्यादेर्नाम ॥ [7]व्यसनमियर्ति

प्राप्नोतीति व्यसनार्त । 'ऋ गतौ'। दुराग्रहेण मुखमुपरज्यतेऽस्येति उपरक्त । 'रञ्ज रागे'। प्राप्तव्यसनस्य नामनी ।। [8]विगतव्यापारौ हस्तौ यस्येति विहस्त । व्याकुल्यते मनोऽस्येति व्याकुल । 'कुल सस्त्याने'। किंकर्तव्यतामूढस्य नामनी ।। ४३ ।।

[1] स्वरूपाच्चाल्यते Pt2　[2] K2, K3, K5 omit　[3] वाग्बाणै Pt2
[4] K5 omits °ना°　[5] सम्यक कसति Pt2　[6] Pt2 adds स्थिरो न भवतीति अस्थिर　[7] व्यसनेन ऋत Pt2　[8] व्यापाररहिताविव K5, J1 omits two lines

(विव) आक्षारित —अभिशस्ते । अगम्यागमनमुद्घोष्य[1] दूषिते [2]आक्षारितद्वयम् । आक्षार्यते[3] दु सहवाक्यै सचाल्यते स्म आक्षारित, क्षारितश्च । णिचि कर्मणि क्त । अभिशस्यते तीव्रवाक्यैरित्यभिशस्त । 'शसु हिंसायाम्'। क्त [4] ।। सकसुकोऽस्थिरे । असदिग्धेऽप्यर्थे य सदा सदिग्धे तत्र चलप्रकृतौ सकसुकशब्द इति [5]सर्वानन्द-सुभूतिचन्द्रौ (टी स पृ २१)। सम्यक् कसति चलतीति सकसुक । 'कस गतौ । 'समि कस उकन्' (उ २ ३२) इति उकन्प्रत्यय ।। व्यसनार्तोपरक्तौ द्वौ । समावित्यर्थ । द्यूतमृगयादावत्यन्ताग्रहो व्यसनम् । तेन ऋत प्राप्तो व्यसनार्त । 'ऋते च तृतीयासमासेऽवर्णाद् वृद्धिर्वक्तव्या (वा ६ १ ८९) इति पूर्वपरयोर्वृद्धि । व्यसनेनार्त इति वा ।। द्यूतादिविषयदुराग्रहेणोपरज्यत इति उपरक्त । अथवा राहुणा ग्रस्तोऽर्कश्चन्द्रो वा । अयमपि दुस्त्यजदुराग्रहग्रहग्रस्तत्वेन तत्सादृश्यादुपरक्त इत्युक्त । विहस्तव्याकुलौ समौ । शोकादिना किंकर्तव्यतामूढवाचकत्वेन[6] समावित्यर्थ । निर्व्यापारतया विगताविव हस्तावस्येति विहस्त ।। विशेषेणाकीर्णं कुलमस्येति व्याकुल ।। ४३ ।।

[1] उदघाट्य Tj1, Tj2　[2] शब्दद्वयम Gm1, Gm3　[3] Tv adds 'क्षर सचलन　[4] Gm3 adds घृषिशसी वैयात्ये' (७ २ १९) इति नट　[5] असदह विषयऽपि य सदहकृत इति मुद्रितग्रन्थे　[6] °मूढस्य पर्यायौ Gm3, Tv

(पा) आक्षारित —अभिशस्ते । अभिशस्तनामानि । 'बीडिपवडिनवांडु'।। अनुक्तम्—'आक्षिप्तो हतक समौ'। [1] सर्वनष्ट इत्युक्तस्य[2] नामनी । ' °चट्टमामाटलपाडवाडु ।। सकसुकोऽस्थिर । क्षणिकप्रकृतिक सकसुक स्यात् ।।

व्यसनार्तोपरक्तौ द्वौ । [4]दण्डपीडितस्य नामनी ॥ विहस्तव्याकुलौ समौ । अस्वस्थ-हृदयनामनी ॥ ४३ ॥

[1] सर्वैरपि A₁.　[2] A₁ adds पुस　[3] B₃ omits　[4] दण्डपीडया स्पृष्टस्य A₁.

**विक्लवो विह्वलः स्यात् तु विवशोऽरिष्टदुष्टधीः ।**
**कश्यः कशार्हे सन्नद्धे त्वाततायी वधोद्यते ॥ ४४ ॥**

(वि.) विक्लव इति—विक्लवते [1]कातरीभवतीति विक्लव । 'क्लव कातर्ये' । विरुद्धलक्षणया ह्वलतीति विह्वल.[2] । 'ह्वल [3]चलने' । [4]भयावेशादुत्पन्न-प्रतिभयस्य नामनी ॥ विरुद्ध चिर [5]जीवित वष्टि कामयत इति विवश । 'वश कान्तौ' । अरिष्टैरत्यासन्नमरणचिह्नैर्दुष्टबुद्धेर्नाम ॥ कशामर्हतीति कश्य.[6] । [7]कशा-ताडनार्हस्य नाम ॥ आतत विस्तृतमधिकमपराधमेति[8] इन्याततायी[9] । 'इण् गतौ' । यो वधोद्यत. आसन्नद्ध. तस्य नाम ॥ ४४ ॥

[1] शक्तो न भवति K₂, Pt₂　[2] विरुद्ध ह्वलति K₃, K₅　[3] सचलने Pt₂
[4] °आवेशेन J₁, K₅　[5] Pt₂ omits चिर जीवित　[6] Pt₂ adds कशार्हश्च
[7] कश° J₁.　[8] पाप° *for* अपराध° *in* Pt₂　[9] Pt₂ adds आत पलायमान तयते जिघासया गच्छतीति, 'तय गतौ'

(विव.) विक्लवो विह्वलः । भयादिनिमित्तेन स्वशरीरधारणेऽपि असमर्थस्य[1] नामनी । विक्लबते शक्तो न भवतीति विक्लवः । 'धातुपारायणेऽपठितोऽपि क्लबिधातुरुन्नेयः, पाठस्य प्रदर्शनार्थत्वात्' इति सुबोधिनीकारः[2] । विक्लव इत्यव्युत्पन्नं पदमिति केचित् ॥ विशेषेण ह्वलति चलतीति विह्वलः । 'ह्वल संचलने' । अच् (३. १. १३४) ॥ स्यात्तु—दुष्टधीः । अरिष्टम् आसन्नमहाव्यापत्तिलिङ्गदर्शनम् । तेन दुष्टा कातरा धीर्बुद्धिः यस्य स विवश इत्युच्यते । विविधमरिष्टनिरसनोपायं वष्टि कामयते विवशः । 'वश कान्तौ' । पचाद्यच् (३. १. १३४) ॥ कश्यः कशार्हः । कृतापराधस्य चोरादेर्नामनी । 'अश्वादेस्ताडनी कशा' इति प्रागुक्तां (२. १०. ३१) तामर्हतीति कश्यः । 'दण्डादिभ्यो यः' (५. १. ६६) इति यः ॥ संनद्धे—वधोद्यते । अत्र वधोद्यतपदेन—

'अग्निदो गरदश्चैव [3]शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव[4] षडेते[5] आततायिनः ॥' (शु. नी. ३. ४२)

इति स्मृत्युक्ताः परानिष्टकारिणो गृह्यन्ते । संनद्धे कृतसंनाहे गृहदाहाद्यनिष्ट-कारिणि आततायिशब्द. । आङपूर्वाद् 'अत सातत्यगमने' इति धातोः पचाद्यच् (३. १. १३४) । आतशब्देन समन्ततः पलायमानः उक्त:, तं तयते जिघांसया गच्छतीति आततायी । 'तय गतौ' । 'सुप्यजातौ णिनिः' (३. २. ७८) । आततं यथा भवति तथा अयति ताच्छील्येन गच्छतीति वा ॥ ४४ ॥

[1] असमर्थे विक्लवादिद्वयम् Gm3, Tv [2] 'विक्लवते कातरीभवतीति विक्लव, क्लबिधातुर्यद्यपि धातुपाठेऽनुक्त , तथापि धातुपाठो धातूना प्रदर्शनार्थं , न पुनरपठिता न धातव इति, परिसङ्ख्यानार्थं इति प्रयोगबाहुल्यादुन्नेयोऽपि धातुरेव' *Subodhini* MS Adyar Library, Viśvabhārati MS 657 [3,4,5] शस्त्रोन्मत्त , चैतान्, पड् विद्यात् इति मुद्रितग्रन्थे

(पा) विक्लबो विह्वल । विह्वलनामनी ॥ स्यात्तु—दुष्टधी । [1]अशुभेन मतिभ्रष्टो विवश स्यात् ॥ कश्य कशार्हे । कशाघातार्हे कश्य स्यात्[2] ॥ सनद्ध —वधोद्यते । वधोद्युक्तनामनी ॥ ४४ ॥

[1] शस्त्रघातादिभि $A_1$ [2] $A_1$ adds प्रघणघातार्हे प्रघण्य । अश्वचोदनदण्डचः

द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ ।
विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः ॥ ४५ ॥

(वि) द्वेष्य इति—द्वेषमर्हतीति द्वेष्य[1] । 'द्विष अप्रीतौ' । अक्षिगत-शूकादिवत्[2] पीडाकरत्वाद् अक्षिगत । [3]द्वेष्यनामनी ॥ वधमर्हतीति वध्य । शीर्षच्छेदमर्हतीति शीर्षच्छेद्य । वधार्हस्य नामनी ॥ विषेण वध्यो विष्य । [4]विषवध्यस्य नाम ॥ [5]मुसलेन [6]वधमर्हतीति मुसल्य । मुसलवध्यस्य नाम ॥ ४५ ॥

[1] द्वेष्टु योग्य $Pt_2$ [2] $J_2$, $Pt_2$ add °सिकत° [3] द्वेष्यस्य $K_5$ [4] विषेण $K_5$. [5] $J_1$, $J_2$ omit the word [6] वध्य $Pt_2$

(विव.) द्वेष्ये त्वक्षिगतः । द्वेषविषयमहानिष्टकारिणि अक्षिगतः । नेत्र-मध्यपतिततृणसिकतादिवद् दु.खकारित्वसादृश्याद् अक्षिगत इति रूढलक्षणा ॥ वध्य.—इमौ समौ । ब्रह्महननादिमहापराधकरणेन वधरूपदण्डार्हस्य वाचका-

वित्यर्थः । वधमर्हतीति वध्यः । 'दण्डादिभ्यो य' (५. १. ६६) ।। [1]शीर्षच्छेद शिरसश्छेदनमर्हतीति शीर्षच्छेद्यः । 'शीर्षच्छेदाद्यच्च' (५. १. ६५) इति यत् ।। विष्यो —वध्यः । यो निगूढापकारकारी[2] विषप्रयोगव्यतिरिक्तोपायासभवाद् विषप्रयोगेणैव वध्यो भवति महामान्यादि स विष्य उच्यते । 'नौवयोधर्मविषमूल .. ' इत्यादिना (४ ४. ९१) विषशब्दात् तृतीयासमर्थाद् वध्यार्थे यत्प्रत्ययः ।। मुसल्यो मुसलेन य । वध्यत इत्यनुवर्तते । य. सुवर्णस्तेयादिप्रायश्चित्ताद्यर्थं मुसलेनैव वध्यः स मुसल्य । 'दण्डादिभ्यो य ' (५. १. ६६) [3]इति यः ।। ४५ ।।

[1] शीर्षस्य शिरस छेद, तमर्हतीति Gm3, Tv [2] °अपराध° B5, B6
[3] Tj1, Tj2 omit इति य

(पा) द्वेष्ये त्वक्षिगत । [1]द्वेष्टु [2]योग्यनामनी । 'अनिष्टो दुर्भगोऽपि स ' । एते द्वे च ।। वध्य —इमौ समौ । शिरश्छेत्तु योग्यस्य नामनी ।। विष्यो— वध्य । विषेण हन्तु [3]योग्यो विष्य स्यात् ।। मुसल्यो मुसलेन य । मुसलेन [4]वध्यस्य नाम ।। अनुक्तम्—'स त्वाय शूलिको यस्तु साध्य स्यान् तीक्ष्णसाधनै ' । तीक्ष्णसाधनै साधयितु योग्य आय शूलिक स्यात् ।। ४५ ।।

[1] विद्वेष्टु A1 [2] योग्यस्य B3 [3] योग्यस्य नाम B3 [4] हन्तु योग्यो मुसल्य स्यात A1, C1

शिश्विदानोऽकृष्णकर्मा चपलश्चिकुरः समौ ।
दोषैकदृक् पुरोभागी निकृतस्त्वनृजुः शठः ।। ४६ ।।

(वि) शिश्विदान इति—श्विन्दते [1]कर्मणि [2]शुद्धत्व प्राप्नोतीति शिश्विदान । 'श्विदि श्वैत्ये' । अकृष्ण शुद्ध कम यस्येति [3]अकृष्णकर्मा । शुद्धकर्मणो नामनी ।। [4]चपति मानसस्य प्रीतिमापादयतीति चपल । 'चप [5]सान्त्वने' । [6]चरित्रे चकते प्रीणातीति चिकुर । 'चक तृप्तौ प्रतिघाते च' । चञ्चलस्य विद्युत्प्रकाशादेर्नामनी ।। पुर ताच्छील्येन दोष भजति गृह्णातीति पुराभागी । 'भज सेवायाम्' । [7]दोषैकग्राहिणो नामनी ।। आशा निकृणोति हिनस्तीति निकृत । 'कृञ् हिंसायाम्' । कुटिलहृदयत्वाद् अनृजु । शठतीति शठ । 'शठ कैतवे'[8] । कुटिलहृदयस्य नामानि ।। ४६ ।।

[1] कर्मणा शुद्धो भवति K3, Pt2. [2] शुद्ध J1, J2. [3] Pt2 adds नान्त. [4] चोपति, 'चुप मन्दाया गतौ' Pt2 [5] सचलने K5. [6] चरिते K5. [7] Pt2 adds दोषमेक पश्यति दोषैकदृक्, 'दृशिर् प्रेक्षणे'. [8] हिंसासवलेशनकैतवेषु J1, J2

(विव.) शिश्विदानः कृष्णकर्मा। कृष्णं पापं तथाभूतं कर्म यस्य सः कृष्णकर्मा पापाचरणशीलः। शिश्विदान इति सर्वानन्दसुभूतिचन्द्रौ (टी. स. पृ. २२)। सुबोधिनीकारस्तु शिश्विदानोऽकृष्णकर्मा इति पठित्वा पापादन्यद् अकृष्णं निष्पापं कर्म यस्यासौ अकृष्णकर्मेति व्याख्यातवान्। अत्र च व्याख्याने 'सुकृती पुण्यवान्' (श्लो. ३) इत्यनेनास्य पौनरुक्त्यं परिहरणीयम्। [1]कापुरुषनामानुशासनप्रस्तावे तद्विलक्षणस्यास्य प्रायपाठोऽपि सोढव्यः। चिरंतनप्रयोगदर्शनाद् निघण्ट्वन्तरगवेषणाच्च शब्दार्थनिर्णयोऽधिगन्तव्यः। अथवा अरिष्टशब्दस्य मिथोविरुद्धशुभाशुभार्थद्वयवत्, शिश्विदानशब्दोऽपि पुण्यापुण्यकुलक्षणोभयार्थवाचक इत्यवधातव्यम्। श्वेतते पापविशेषाद् वैवर्ण्यं [2]प्राप्नोतीति श्वितेः 'छन्दसि लिट्' (३. २. १०५) इति लिट्। 'लिटः कानज्वा' (३. २. १०६) इति कानजादेशः। 'लिटि धातोरनभ्यासस्य' (६. १. ८) इति द्विर्वचनम्। कानच्प्रत्ययस्य भाषायामप्यस्ति प्रयोगः। तथा च 'लिटः कानज्वा' इति सूत्रे न्यासकारः (पञ्जिका पृ. ६३२)—'असंयोगान्तेभ्यो [3]हि "असंयोगाल्लिट् कित्" (१. २. ५) इत्येव कित्त्वं सिद्धं, संयोगान्ता अपि भाषायामेव[4] प्रयोजयन्ति "न छन्दसि" इत्यादिना महता सदर्भेण भाषायामेव कित्त्वमर्थवद्भवति' इति प्रत्यपीपदत्॥ चपलश्चिकुरः समौ। समौ इत्यनवस्थितचित्तस्य वाचकावित्यर्थः। [5]प्रागुक्तः संकसुकः संदिहानस्वभावः[6] (श्लो. ४३)। अयं तु नित्यचञ्चलनिश्चयस्वभाव इति ततोऽस्य भेदः। 'चुप मन्दायां गतौ'। चोपति। 'चुपेरच्चोपधायाः' (उ. १. ११६) इति कलप्रत्यये उपधाया अकारश्च। अथवा 'चप सान्त्वने' इति धातोः पचाद्यचि (३. १. १३४) [7]चपः प्रियवादी, तं लात्यात्मसात्करोतीति चपलः (३. २. ३)। चिकुरः केशेषु व्युत्पादितः[8] (२. ६. ९५)॥ दोषैकदृक् पुरोभागी। एकस्मिन्नेव दृङ् मनो यस्येत्येकदृक्। दोष एव एकदृक् दोषैकदृक्। न तु वस्तुगतं गुणमाद्रियत इत्यर्थः॥ पुरोऽग्रतो दोषमेव भजति जानातीति पुरोभागी। 'भज सेवायाम्'। 'संपृचानुरुधा...' इत्यादिना (३. २. १४२) ताच्छील्ये घिनुण्। 'चजोः कु घिण्ण्यतोः' (७. ३. ५२) इति कुत्वम्॥ निकृतस्त्वनृजुः शठः। निगूढापकारकारिणो नामानि। निगूढं कृणोति हिनस्तीति निकृतः। 'कृञ् हिंसायाम्'। क्तः। निकृष्टं

कृतमस्येति वा निकृतः ॥ ऋजो· कपटरहितादन्योऽनृजु. । अथवा 'अनुदरा कन्या' इतिवत् नञि ईषदर्थे मनोवाक्कायकर्मणा मध्ये वाङ्मात्रेणैवार्जवप्रकाशनाद् ईषद्भाव आर्जवस्य । 'शठ कैतवे' इति धातो· पचाद्यचि (३. १. १३४) शठ । 'गूढविप्रियकृच्छठ' इत्यालकारिका[9] ॥ ४६ ॥

[1] कुपुरुष° B6, Tj2　[2] प्राप्त इति निष्पापतया नैमल्येन शुद्धो जात इति 'श्वित्रता वर्णे', 'श्विदि श्वैत्ये च' इति Gm3, Tj5　[3 4] मुद्रितग्रन्थे न दृश्यते　[5] प्रागुक्तात् Tv [6] °स्वभावात् सवसुवाल निरन्तरचञ्चलनिश्चयरूपज्ञानयुक्तत्वेनास्य भेद Tv　[7] चपतीति चप Gm1, Gm3　[8] 'चिनाति चिकुर, चकेर्वा रूपम्' इति क्षीरस्वामी (पृ २४५), 'चि' इति अव्यक्त कुरति । 'कुर शब्दे' । 'इगुपध　' इति क इति भा दी (पृ ४२०), टीकासर्वस्वे (पृ २२) चपलद्वय चपले—

'अविमृश्य तु य　काय पुरुषो वधबन्धनाद्यमाचरति ।
अविनिश्चितकारित्वात् स तु खलु चपलो बुधैर्ज्ञेय ॥' इति

[9] दशरूपकम (२ ७)

(पा) शिश्विदानोऽकृष्णकर्मा । दुराचारनामनी । 'शिश्विदानो दुराचारो [1]निषेधंकरचि खर '[2] इति वैजयन्ती (पृ ८४, श्लो १२) ॥ चपलश्चिकुर समौ । चपलनामनी ॥ [3]दोषैकदृक पुरोभागी । सदा दोषान्वेषी पुरोभागी स्यात् ॥ निकृतस्त्वनृजु शठ । शठनामनी । 'जालिको [4]दण्डुकश्चायम्' । एते द्वे च ॥ ४६ ॥

[1] निषिद्ध° इति मुद्रितग्रन्थे　[2] क्कु A1　[3] A1 adds 'दोषमुने वेदुकुवानि पेल्लु'　[4] दुण्डुक A1

**कर्णेजप. सूचकः स्यात् पिशुनो दुर्जनः खल. ।**
**नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चक. ॥ ४७ ॥**

(वि) कर्णेजप इति—कर्णे जपति सूचयतीति कर्णेजप । 'जप[1] व्यक्ताया वाचि' । सूचयति परकीयदोषानिति सूचक । 'सूच पैशुन्ये' । पिंशति [2]अनृतस्यावयवो भवतीति पिशुन । 'पिश अवयवे' । दुष्टो जनो दुजन[3] । खलति [4]स्वदत्तभाषाविषये चलतीति खल । 'खल [5]सचलने' । दुर्जननामानि ॥ नृन्

परपीडाकरान्[6] शसतीति[7] नृशस.। 'शसु स्तुतौ'। प्राणिनं हन्तीति घातुकः। 'हन हिंसागत्यो'। कृणोति हिंसयति प्राणिनमिति क्रूर[8]। 'कृञ् हिंसायाम्'। महत् पापमस्यास्तीति पाप। परपीडारतस्य नामानि ।। धूर्वति हिनस्तीति धूर्तः। 'धुर्वी हिंसायाम्'। [9]वञ्चयतीति वञ्चक। 'वञ्चु प्रलम्भने'। यः पराधिक्य न प्रकाशयति तस्य नामनी ।। ४७ ।।

[1] $K_2$, $K_4$, $K_5$ add जल्प [2] $K_2$ adds आस्यत, भाषाविषये $K_6$; $K_4$, $K_5$ add य परदोष राज्ञे कथयति तस्य नामानि [3] दुष्ट जनयतीति, 'जनी प्रादुर्भावे' $K_3$, $K_4$. [4] $K_4$ adds राज्ञे. [5] सचये $J_1$, $J_2$. [6] °पीडारतान् $K_2$, $K_4$. [7] $Pt_2$ adds शसति च, 'शसु हिंसायाम्'. [8] कृन्ततीति कूर, 'कृती छेदने' $Pt_2$. [9] वञ्चयते $J_2$.

(विव.) कर्णेजपः सूचकः स्यात्। राजादीनां कर्णे जपति व्यक्तं [1]वदति परकीयदोषानिति कर्णेजपः। 'जप व्यक्तायां वाचि'। 'स्तम्बकर्णयो रमिजपोः' (३.२.१३) इत्यत्र 'हस्तिसूचकयोरिति वक्तव्यम्' इत्यच्। 'हलदन्तात् सप्तम्याः संज्ञायाम्' (६.३.९) इति सप्तम्या अलुक्।। सूचयति परदोषानिति सूचकः। 'सूच पैशुन्ये'। ण्वुल् (३.१.१३३)। तदुक्तम् (शुक्र. ४.५.६९)—

'[2]राजादिभिर्नियुक्तो यः परदोषानवेक्षितुम्[3]।
[4]तदग्रे सूचयन् ज्ञात्वा सूचकोऽयमुदाहृतः[5] ।।'

इति ।। पिशुनो दुर्जनः खलः। संहतेषु मिथो भेदकारिणो नामानीति सुभूतिचन्द्रः। पिशति दोषकारिणमङ्गुल्यादिना सूचयतीति पिशुनः। 'पिश अवयवे'। अवयवोऽङ्गुल्यादिना सूचनमिति धातुवृत्तौ[6] (मा. धा. पृ. ७४)। उनन् प्रत्ययः[7] (उ. ३.५५) ।। दुष्टो जनो दुर्जनः ।। खलति [8]धर्मादिति खलः। 'खल संचलने'। पचाद्यच् (३.१.१३४)। खं रन्ध्रस्थानं लात्यादत्त इति वा। 'आतोऽनुपसर्गे कः' इति कः (३.२.३)। कर्णेजपपञ्चकं [9]परदोषख्यापकमात्र इति केचित् ।। नृशंसो—पापः। परद्रोहाचरणशीलस्य[10] नामानि। नॄन् प्राणिनः शसति हिनस्तीति नृशंसः। [11]'शसु हिंसायाम्'। पचाद्यच्[12] (३.१.१३४)। नैरुक्तो वर्णागमः ।। हन्ति ताच्छील्येनेति घातुकः। 'लषपतपद ...' (३.२.१५४) इत्यादिना हन्तेरुकञ्प्रत्ययः। 'हो हन्तेः...' इत्यादिना (७.३.५४) कुत्वम्, वृद्धिश्च ।।

कृन्ततीति क्रूरः। 'कृती छेदने'। 'कृतेश्छ क्रू च' (उ. २. २३) इति रक्। धातोश्च क्रू इत्यादेशः ॥ पापमस्यास्तीति पापः। अर्शआद्यच् (५. २. १२७) ॥ धूर्तस्तु वञ्चकः। प्रतारणशीलस्य नामनी। धूर्तशब्दोऽक्षदेविनि व्युत्पादितः[13] (२. १०. ४३)। वञ्चकः सृगाले (२. ५. ५) ॥ ४७ ॥

[1] वक्ति Tv. [2 3 4 5] नृपेण विनियुक्त, °अनुवीक्षणे, नृप ससूचयेत्, स इति मुद्रितग्रन्थे [6] 'अवयव इति अवयवक्रियोच्यते' इति मु ग्र (पृ ७४) [7] 'क्षुधिपिशिमिथिभ्य कित्' [8] स्यति ज्ञातार्थान् Tv, स्वप्रतिज्ञातार्थात् $T_{J1}$, $T_{J2}$ [9] एकार्थमिति $T_{J1}$. [10] °शीले नृशसादिचतुष्टयम् $T_{J1}$ [11] 'शसु स्तुतौ', अय हिसायामपीति दुर्ग (मा धा पृ १८०) [12] कर्मण्यण्, अजन्त इति मुकुटोक्त न सम्यक् अजपवादस्याणो जागरूकत्वात् भा दी (पृ ४२१) [13] धूर्वति हिनस्तीति धूर्त। 'धुर्वी हिसायाम्'। 'हसिमृग्रिण् . ' (उ ३ ८६) इति तन्। 'राल्लोप' इति भा दी. (पृ.४२१)

(पा) कर्णेजप —पिशुन। द्विजिह्वनामानि[1] ॥ दुर्जन खल। दुष्टजननामनी ॥ नृशसो—पाप। [2]हिसकनामानि ॥ धूर्तस्तु वञ्चक। धूर्तस्तु व्यसक इति पाठान्तरम्।

> '[3]यदनीव प्रयत्नेन सयोगादेरगौरवम्।
> न [4]छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरय ॥'

इति सरस्वतोकण्ठाभरणवचनाद् (१ १२३) अत्र श्लथोच्चारणम्। वञ्चकनामनी[5] ॥ अनुक्तम्—'समौ दुर्वृत्तदुरटौ'। दुर्वृत्तनामनी ॥ 'ठक्के मायाविमायिनौ'। ठक्कनामनी ॥ ४७ ॥

[1] 'कोड मुजपुवानिपेल्लु' $A_1$ [2] मनुष्यहिसाकर° $A_1$. [3] यदा तीव्र° इति मुद्रितग्रन्थे (पृ १०२) [4] °भङ्गमप्याहु $A_1$, °भञ्जक $B_3$ [5] 'अटमर्दिचेवाडु' $A_1$.

**अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः।**
**कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥**

(वि) अज्ञ इति—[1]किमपि न जानातीत्यज्ञ। 'ज्ञा अवबोधने'। मुह्यति कार्येष्विति मूढ। 'मुह वैचित्ये'। मूर्खश्च। बुद्धिहीनतया यथाजाता

वृद्धिरस्येति यथाजात [2]। अज्ञत्वेन विधातव्यत्वाद् विधेय [3]। स एव वैधेय । बालते आप्लवते मनसि बालिश [4]। 'वाङ् आप्लाव्ये'। मूर्खनामानि ॥ कुत्सितोऽर्य. स्वामी कदर्य । अल्पमेव व्यय कर्तुं कल्पते समर्थो भवतीति कृपण [5]। 'कृपू सामर्थ्ये'। क्षुणत्ति यवाग्वादि कर्तुं तण्डुलादीन् पिनष्टीति क्षुद्र.[6]। 'क्षुदिर् सपेपणे'। किंचिदेवान्न पचनीति किंपचान । [7]मितमेवान्न पचतीति मितपच । 'डुपचष् पाके'। लोभिनो नामानि ॥ ४८ ॥

[1] Pt2 omits किमपि [2] जात इव विवेकशून्यत्वात् Pt2. [3] विधातु योग्य J2, Pt2. [4] परदत्त बलि पूजा श्यतीति Pt2 [5] कल्पते कुटुम्बपीडनेनापि जीवनाय समर्थो भवति Pt2 [6] क्षुद्नाति K3, K6, Pt2 [7] Pt2 adds अत्यल्प

(विव.) अज्ञे—बालिशाः। विवेकरहितस्य[1] [2]नामानि। जानातीति ज्ञः, विद्वान्। [3]ततोऽन्योऽज्ञः॥ मुह्यति कार्येषु व्यामोहं गच्छतीति[4] मूढः। 'मुह वैचित्ये'। क्तप्रत्यये (३.४.७२) 'हो ढः' (८.२.३१) इति ढत्वं ष्टुत्वं (८.४.४१), ढलोपे दीर्घश्च (६.३.१११)॥ [5]उत्पत्त्यवस्थायां यथा मन्दबुद्धिस्तथैव सर्वदापीति यथाजातः॥ मुह्यतीति मूर्खः। 'मुहेः खो मुर्च' (उ.५.२२) इति खप्रत्ययः, धातोर्मुरादेशश्च। 'हलि च' (८.२.७७) इत्युपधादीर्घः॥ स्वयं [6]ज्ञानरहितत्वेन त्वयेदं कर्माचरणमित्थं कर्तव्यमिति परैर्विधातुं योग्यो विधेयः। ततः स्वार्थिकेऽण्प्रत्यये वैधेयः। [7]देवतार्थं दत्तमपूपादिर्बलिं श्यति भक्षणेन तनूकरोतीति बलिशः। 'शो तनूकरणे'। ततः स्वार्थेऽण्प्रत्यये बालिशः॥ कदर्ये—मितंपचाः। [8]लोभातिशयेन कुटुम्बभरणं कुर्वाणस्य नामानि। तथा चोक्तं स्मृतिकारैः—

'आत्मानं धर्मकृत्यं च पुत्रदाराश्च पीडयेत्।
लोभाद् यः पितरौ भृत्यान् स कदर्य इति स्मृतः॥'

इति। [9]अर्यशब्दः स्वामिन्यर्थे निपातितः (३.१.१०३)। कुत्सितोऽर्यः कदर्यः। 'कोः कत्तत्पुरुषेऽचि' (६.३.१०१) इति कुशब्दस्य कदादेशः॥ [10]कुटुम्बपीडनेनापि जीवनाय कल्पते समर्थो भवतीति कृपणः। 'कृपू सामर्थ्ये'। बाहुलकः क्युन्प्रत्ययः। 'कृपो रो लः' (८.२.१८) इति प्राप्तस्य [11]लत्वस्याभावश्च। अन्यस्त्वाह—कुत्सितं पणते व्यवहरति कृपणः। 'पण व्यवहारे स्तुतौ च'। पृषोदरादित्वाद् आद्यवर्णस्यान्यथाभाव इति॥ क्षुणत्ति कुटुम्बं पिनष्टि पीडयतीति क्षुद्रः।

'क्षुदिर् संपेपणे'। 'स्फायितञ्चि ...' (उ. २. १३) इति रक्प्रत्यय ॥ किंचिदेव पचानः किंपचान। 'ताच्छील्यवयोवचनशक्तिषु चानश्' (३. २. १२९)। आगमशासनस्यानित्यत्वाद् मुमागमो नास्ति। अथवा पचतेर्धातो. 'षिद्भिदादिभ्योऽङ' (३. ३. १०४) इत्यङ्प्रत्यये टापि पचाशब्देन पाक उक्त। किमित्येतदव्यय किंचिदर्थे[12]। अत्यल्पया पचया पाकेन अनिति प्राणितीति किंपचानः। 'अन प्राणने'। पचाद्यच् (३. १. १३४) ॥ मितम् अत्यल्पमेव पचतीति मितंपचः। 'मितनखे च' (३. २. ३४) इति खश्। मुमागमश्च (६. ३. ६७)। मितशब्देनार्थग्रहणाद् अल्पपचोऽप्यस्तीति रक्षितः इति सर्वानन्द.[13] (टी. स. पृ. २४) ॥ ४८ ॥

[1] °रहिते TJ1, TJ2  [2] अज्ञादिपट्क Tv.  [3] तस्मात् TJ1  [4] प्राप्नोति TJ1, TJ2.  [5] जनन° TJ1.  [6] TJ1, Tv add लौकिकवैदिककर्मकरणकाले [7] गृहद्वारादौ दत्त TJ1, Tv.  [8] कदर्यादिपञ्चक कुटुम्वभरणमकुर्वाण° TJ1, TJ2, Tv [9] 'अर्य स्वामिवैश्ययो' (३ १ १०३) इति निपातनाद् अर्यशब्देन स्वामी कथ्यते TJ1. [10] कुटुम्ब पीडयित्वा TJ1, TJ2, Tv.  [11] B6 adds बाहुलकत्वात्  [12] Gm3, Tv add यथा—किनर, किंपुरुष इति  [13] 'पान्तावल्पपचान् मुनीन' इति भट्टिरिति (भ का ६ ९६) रक्षित इति मुद्रितग्रन्थे (पृ २४)

(पा) अज्ञे—वालिशा। [1]मूर्खनामानि। 'यो देवानाप्रियोऽनेड'। एते द्वे च ॥ कदर्ये—मितपचा। [2]कार्पण्यवतो नामानि। [3]'लोभि' ॥ ४८ ॥

[1] A1 adds 'येड्डेपातु'  [2] कदर्य° B3  [3] 'क्विनासिवाडु' A1

निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः।
वनीयको याचनको मार्गणो याचकार्थिनौ ॥ ४९ ॥

(वि) नि स्व इति—न विद्यते स्व धनमस्येति [1]निःस्व। [2]दुष्टा विधा प्रकारोऽस्येति दुर्विध। दीयते क्षीयत इति दीन। 'दीङ क्षये'। दरिद्राति दुर्गति प्राप्नोतीति दरिद्र। 'दरिद्रा दुर्गतौ'। दुरवस्था गतो दुर्गत [3]। दरिद्रनामानि ॥ वनति याचत इति वनीयक [4]। 'वनु याचने'। [5]याचतीति याचनक। याचकश्च। 'टुयाचृ याच्ञायाम्'। [6]दातारमेव मार्गयतीति मार्गण। 'मार्ग अन्वेषणे'। अर्थयत इत्यर्थी। 'अर्थ [7]उपयाच्ञायाम्'। याचकनामानि ॥ ४९ ॥

[1] निर्गत स्वादिति Pt2. [2] Pt2 adds जीर्णवस्त्रधारणकदन्नभोजनादिरूपा
[3] K4 adds 'गम्लृ गतौ' [4] K5 adds वनीपक इति पाठे वनी पातीति विग्रह
[5] याचते J2, K3, K5. [6] द्वारमेव K4, K5. [7] K3, K6 omit उप; याचने J2.

(विव.) निःस्वस्तु—दुर्गतोऽपि सः। धनधान्यादिजीवनोपायरहितस्य नामानि[1]। निष्क्रान्तः स्वाद् धनादिति निःस्वः। 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' (वा. १. ४. ७९) इति समासः॥ दुष्टा जीर्णवस्त्रधारणकदन्नभोजनादिरूपा विधा प्रकारा यस्येति दुर्विधः॥ दीयते क्षीयत इति दीनः। 'दीङ् क्षये'। कर्तरि क्तप्रत्यये स्वादीनामोदित्त्वपरिभाषया[2] निष्ठानत्वम् (८. २. ४५)[3]॥ दरिद्राति दुर्गतो भवतीति दरिद्रः। 'दरिद्रा दुर्गतौ'। पचादिः (३. १. १३४)॥ दुःखं गतो दुर्गतः॥ वनीपको—याचकार्थिनौ। [4]याच्ञालब्धमात्रजीवनोपायस्य नामानि। 'वनु याचने' इत्यस्मादिन्प्रत्यये[5] (उ. ४. ११६) वा ङीपि वनी। वनिशब्देन याच्ञाभिधीयते। तां पाति रक्षति सर्वदावतीति वनीपकः। 'संज्ञायां कन्' (५. ३. ७५)। 'नयकदम्बकदम्बकसन्ततप्रसवनीपवनीपकषट्पदः' इति कप्फिणाभ्युदये[6]। सर्वानन्दस्तु (टी. स. पृ. २४) वनीयक इति तालव्यान्तस्थमध्याक्षरपाठेन व्याचष्ट। वनीं याच्ञां आत्मन इच्छतीति [7]क्यचि (३. १. ८) ण्वुलि वनीयक इति॥ [8]याचते याचनः। 'टुयाचृ याच्ञायाम्'। अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युच्। तदन्तात् सज्ञायां कनि (५. ३. ७५) याचनकः॥ याचति। ण्वुलि (३. १. १३३) याचकः॥ मार्गति अन्वेषते दातारमिति मार्गणः। 'मार्ग अन्वेषणे'। नन्द्यादिः (३. १. १३४)॥ 'अर्थाच्चासंनिहिते' (वा. ५. २. १३५) इत्यर्थशब्दाद् इनिप्रत्यये अर्थी॥ ४९॥

[1] नि स्वाद्या पञ्च निर्धने स्यु Tv. [2] 'स्वादय ओदित'—*gaṇasūtra*.
[3] 'ओदितश्च' इति निष्ठानत्वम् Tj1. [4] वनीयकादिपञ्चक याच्ञाप्राप्तमात्रजीवनोपाये Tv.
[5] 'सर्वधातुभ्य इन्'. [6] यमककाव्ये प्रयोग Tv. [7] 'सुप आत्मन. क्यच्'.
[8] याच्यते ऽनेनेति याचनशब्देन देहीत्यादिक पदमभिधीयते। याचन कायति वरयतीति याचनक। 'आतोऽनुपसर्गे क' Tv.

(पा.) नि स्वस्तु—दुर्गतश्च स.। दरिद्रनामानि॥ '[1]कठेरोऽकिंचनो-दु.स्थ'। एनानि त्रीणि च॥ वनीपको—याचकार्थिनौ। याचकनामानि॥ अनुक्तम्—'यद्भविष्यो दैवपर'। [2]स्वप्रयत्नशून्यस्य नामनी[3]॥ 'वराको नामवर्जित.'। अनामधेयनाम॥ ४९॥

[1] कण्ठेद A1, B3   [2] मुखगतमक्षिकानिवारणासमर्थनामनीA1   [3] 'येभ्यराशि, अदु' A1

**[1]अहंकारवानहंयुः शुभयुस्तु शुभान्वितः ।**
**दिव्योपपादुका देवा नृगवाद्या जरायुजाः ।। ५० ।।**

(वि) अहमिति—अहकारोऽस्यास्तीत्यहयु [2] । अहकारवतो नाम ।। [3]शुभमस्यास्तीति शुभयु । शुभान्वितस्य नाम ।। दिवि भवा दिव्या । उपपादुका अयोनिजशरीरिण [4] । दिव्याश्च ते उपपादुकाश्च दिव्योपपादुका देवा । [5]देवाना नाम ।। जरायोर्गर्भाशयात् [6]जाता जरायुजा । मनुष्यगवादीना नाम ।। ५० ।।

[1] अहयु स्यादहकारी इति वा पाठ   [2] Pt2 adds अहमिति मान्तमव्ययम्, अहकारी च   [3] शुभमिति मान्तमव्ययम Pt2   [4] Pt2 adds मात्रादिनिरपेक्षेण   [5] देवादे ° K5   [6] K4 adds उत्पत्तिसमय

(विव) अहयु स्यादहकारो । अहमिति निपातोऽहकारार्थ । अहकारो गर्वोऽस्यास्तीति अहयु । 'अहशुभमोर्युस्' (५. २ १४०) । अत्र सकारानुबन्ध 'सिति च' (१ ४ १६) इति पदसज्ञार्थ । ततश्च 'वा पदान्तस्य' (८ ४ ५९) इति[1] परसवर्णविकल्प ।। शुभयुस्तु शुभान्विते । अहशुभ्मोरिति (५ २ १४०) सूत्रनिर्देशादेव शुभमिति[2] मकारान्तमव्ययमस्तीति सूचितम् । शुभ मङ्गलम् अस्यास्तीति शुभयु । पूर्ववद् युस्प्रत्यय (५ २ १४०) ।। दिव्योपपादुका देवा । इन्द्रादयो देवा, ते दिव्योपपादुका उच्यन्ते । दिवि स्वर्गे भवा दिव्या । [3]'द्युप्रागपागुदक्प्रतीचो यत्' (४ २ १०१) । शुक्लशोणितादिकारणमनपेक्ष्य धर्मविशेषादेवोपपद्यन्त इत्युपपादुका । 'लषपतपद . ' इत्यादिना (३ २ १५५) उकञ् । दिव्याश्च ते उपपादुकाश्चेति कर्मधारय । नारकाणामपि [4]योन्यादिकमनपेक्ष्यैव धर्मवशादुपपादुकत्वमस्तीति तद्व्यावृत्त्यर्थं दिव्यपदम् । अत एव 'स्वर्गोपपादुका देवा' इति त्रिकाण्डे स्वर्गपद [5]व्यावर्तकतयोक्तम् । नृगवाद्या जरायुजा । [6]उत्पत्तिसमये जरायोर्निर्गत्य जाता जरायुजा [7] । आद्यशब्देन अश्वमहिषादयो[8] गृह्यन्ते ।। ५० ।।

[1] B5, Gm3 add अनुस्वारस्य   [2] °निर्देशन शुभमित्यव्ययममन्त मङ्गलवाचकमस्तीति गम्यते Tj1, Tv   [3] दिगादिभ्यो यत् (४ ३ ५४) B5, Gm3, Tj°

[4] योन्यादिकारण Tj1, Tv. [5] व्यावर्तकत्वेन Tv. [6] गर्भवाससमये Gm3, Tj1, Tv. [7] 'पञ्चम्यामजातौ' (३ २ ९८) इति जनेर्ड Gm3. [8] महिपाद्या Gm1, Tj1, Tv.

(पा) अहयु. स्यादहंकारी। [1]अहंकारिणो नामनी। 'गर्विकः स्तब्ध उद्ग्रीव. शौण्डीरो दृप्त इत्यपि'। एतानि पञ्च च ॥ शुभंयुस्तु शुभान्विते। शुभयुक्तनाम ॥ अनुक्तम्—'नीलीरागः स्थिरप्रेमा'[2]। स्थिरस्नेहः नीलीरागः स्यात् ॥ 'हरिद्रारागकोऽन्यथा'। अस्थिरस्नेह. हरिद्रारागकः स्यात् ॥ दिव्योपपादुका देवाः। देवता. दिव्योपपादकारणत्वाद् दिव्योपपादुका. ॥ नृगवाद्या जरायुजाः। नृगवाद्या जरायुकारणत्वात् जरायुजाः ॥ ५० ॥

[1] अहंकारयुक्त° A1. [2] स्थिरस्नेह B3.

**स्वेदजाः क्रुमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः।**
**उद्भिदस्तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम् ॥ ५१ ॥**

(वि) स्वेदजा इति—स्वेदसगृहीतेभ्य [1] पार्थिवपरमाणुभ्यो जाताः स्वेदजा.[2]। क्रुमिदशादीना नाम ॥ अण्डाज्जायन्त इत्यण्डजा.[3]। पक्षिसर्पादीना नाम ॥ भुवमुद्भिनत्तीति उद्भित्। उद्भिद च। 'भिदिर् विदारणे'। उद्भिद्य उद्भिदो जायन्त इति उद्भिज्जा [4]। अङ्कुरजाताना वृक्षगुल्मादीना नामानि ॥ ५१ ॥

[1] स्वेदपरमाणुभ्य K5. [2] स्वेदाद् भौमोष्मण. Pt2. [3] K3, K5 add 'जनी प्रादुर्भावे'. [4] भूमेरुद्भेदनमुद्भित् ततो जातमुद्भिज्जम् Pt2.

(विव.) स्वेदजाः क्रुमिदंशाद्याः। अत्र धर्मवाचिना स्वेदशब्देन भौमोष्मविशेषो विवक्षितः। क्रुमिदंशादीनां पार्थिवपरमाणुजन्यत्वेऽपि स्वेदोपग्रहमन्तरेणानुत्पत्तेः। [1]तदभिसंधाय स्वेदजत्वमुक्तम्। स्वेदात् जाताः स्वेदजाः। 'पञ्चम्यामजातौ' (३. २. ९८) इति डः। आद्यशब्देन मशकमत्कुणादीनां ग्रहणम्। पक्षिसर्पादयोऽण्डजाः। गर्भस्थानान्निर्गतम् [2]उत्पत्स्यमानप्राण्यावारकं शुक्लवर्णं गोलाकारमण्डमिति प्रागुक्तम् (२. ५. ३७)। अण्डाज्जाता अण्डजाः। डः (३. २. ९८)। आदिशब्देन पिपीलिकादीनां ग्रहणम् ॥ उद्भिज्जास्तरुगुल्माद्याः। 'भिदिर् विदारणे[3]'। 'सपदादिभ्यः क्विप्' (वा. ३. ३. ९४) इति क्विपि

भिच्छब्देन भेदनमुच्यते। भूमौ आलवालादिगर्तदेशाद् ऊर्ध्वभागभेदनात् जाता उद्भिज्जाः। डः। आद्यशब्देनात्र तृणौषध्यादीनां ग्रहणम्। एवं च[1] केषांचित् प्राणिनाम् अयोनिजत्वम्, इतरेषां च जरायुजाण्डजस्वेदजोद्भिज्जनिरूपणात् चातुर्विध्यं चेति दर्शितम्। एषां [5]चतुर्विधानामपि एकत्र प्रकरणे स्वर्गादावितः पूर्वं सांगत्याभावाद् [6]बालबुद्धिवैशद्यार्थमेकत्रैव चातुर्विध्यनिरूपणीयतायां विशेष्यनिघ्नप्रस्तावादत्र कथनमित्यवगन्तव्यम्॥ उद्भिदुद्भिज्जमुद्भिदम्। उद्भिज्जप्रसङ्गात् तत्पर्यायानाह। भुवमुद्भिनत्तीति उद्भित्। कर्तरि क्विप् (३. १. ६१)। इगुपधलक्षणे कप्रत्यये (३. १. १३५) उद्भिदम्। विशेष्यनिघ्नशब्दे निर्देशकामचारादत्र [7]नपुंसकत्वम्॥ ५१॥

[1] तत्प्राधान्येन स्वेदजत्वम् Gm1, Tj1, Tv. [2] 'पेशी कोशो द्विहीनेऽण्डम्' (पृ ३५७) इत्यत्र जनिष्यमाण° Gm3, Tj2. [3] Gm3, Tv add इत्यस्मात् [4] Tv adds दिव्योपपादुका इत्यादिना [5] सर्वेषा Tv. [6] शब्द° for बालबुद्धि° Tj1, Tj2. [7] नपुसकनिर्देश Tv.

(पा) स्वेदजा कृमिदंशाद्या.। स्वेदकारणत्वात्[1] स्वेदजा.॥ पक्षिसर्पादयोऽण्डजा। पक्षिसर्पाद्या[2] अण्डकारणत्वाद्[3] अण्डजा॥ उद्भिदस्तरुगुल्माद्या.। तरुगुल्माद्या[2] भूम्युद्भेदकारणत्वाद्[3] उद्भिद॰॥ उद्भिदुद्भिज्जमुद्भिदम्। [4]एतानि त्रीण्यपि एकार्थकानि॥ ५१॥

[1] B3 adds कृमिदशाद्या [2] °आदय B3 [3] °कारणक° B3. [4] अमूनि उद्भिदुद्भिज्जोद्भिदानि A1

सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्।
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्॥ ५२॥
(रम्यं मनोहरं सौम्यं भद्रकं रामणीयकम्।)

(वि) सुन्दरमिति—सुष्ठु नन्दयतीति सुन्दरम्[1]। 'टुनदि समृद्धौ'। रुचिं मनःप्रीतिं राति ददातीति रुचिरम्[2]। 'रा दाने'। चरति मनोऽस्मिन्निति चारु। 'चर [3]गतौ'। सुष्ठु समन्वमत्रास्तीति सुषमम्। साध्नोति सिध्यतीति साधु। '[4]साध संसिद्धौ'। शोभत इति शोभनम्। '[5]शुभ दीप्तौ'। काम्यत इति

कान्तम् । 'कमु कान्तौ' । मनो रमयतीति मनोरमम् । 'रमु क्रीडायाम्' । मनो हरन्तीति मनोहरमिति वा पाठ । रोचत इति रुच्यम् । 'रुच दीप्तावभिप्रीतौ[6] च' । मनसा ज्ञेय मनोज्ञम्[7] । 'ज्ञा अवबोधने' । सर्वैर्मन्यत इति मञ्जु । मञ्जुल च । 'मन ज्ञाने' । [8]मनोहरवस्तुनामानि ॥ ५२ ॥

[1] सुतरामाद्रियते, 'दृङ् आदरे' Pt₂ [2] रोचत इति Pt₂ [3] गतिभक्षणयो J₂, K₆. [4] K₄, K₅ add राध [5] 'शुभ शुम्भ शोभार्थे' K₃, K₆. [6] K₃, K₆ omit अभिप्रीतौ [7] मनोरूपमिन्द्रिय ज्ञातृभूतमत्रेति K₄, K₅ [8] मनोहरस्य वस्तुन K₅, K₆

(विव.) सुन्दरं—मञ्जुलम् । सुन्दरादयो द्वादश शब्दाः सर्वेषामनुकूलवेदनीयस्य[1] वस्तुनो वाचकाः । सुष्ठु आदरो यत्रेति सुन्दरम् । गौरादिपाठात् (४. १. ४१) साधुः । अत एव स्त्रियां ङीष्[2] (४. १. ४१) ॥ रुचिं प्रीतिं राति ददातीति रुचिरम्[3] ॥ चरति मनोऽस्मिन्निति चारु । 'चर [4]गतौ' । 'दृसनिजनिचरिचटिभ्यो ञुण्' (उ. १. ३) इति ञुण् । अत्र द्व्यनुबन्धग्रहण 'जनिवध्योश्च' (७. ३. ३५) इति वृद्धिप्रतिषेधो मा भूदित्येवमर्थं कृतम् ॥ सर्वेषामप्यभिलाषविषयत्वेन तुल्यतया सुष्ठु समं सुषमम् । 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८. ३. ८८) इति षत्वम् ॥ साध्नोति सुखसाधनतयेति साधु । 'साध संसिद्धौ ।' 'कृवापाजि...' इत्यादिना (उ. १. १) उण्प्रत्ययः ॥ शोभत इति शोभनम् । 'शुभ दीप्तौ'[5] । 'अनुदात्तेतश्च हलादेः' (३. २. १४९) इति युच् ॥ काम्यत इति कान्तम् । 'कमु कान्तौ' । क्तः (३. २. १०२) । कस्य सुखस्य अन्तो निश्चयो ऽत्रेति वा ॥ मनो हरत्याकर्षति स्वाधीन करोतीति मनोहरम् । 'हरतेरनुद्यमनेऽच्' (३. २. ९) इत्यच् । केचित् मनो रमयतीति व्युत्पत्त्या मनोरममिति पठन्ति ॥ रोचत इति रुच्यम् । 'रुच दीप्तौ'[6] । 'राजसूयसूर्यमृषोद्यरुच्य...' (३. १. ११४) इत्यादिनिपातनात् साधुत्वम् ॥ मनसा ज्ञायत इति मनोज्ञम्[7] । 'द्वन्द्वमनोज्ञादिभ्यश्च' (५. १. १३३) इति निर्देशात् साधुत्वम् ॥ द्रव्यवचनाद् मञ्जुशब्दाद् भावमात्रविवक्षायां मत्वर्थीये लच्प्रत्यये सति श्यामश्यामलमृदुमृदुलशब्दवद्[8] मञ्जु मञ्जुलमिति शब्दद्वयमपि समार्थम् ॥ ५२ ॥

[1] °वेदनीये वस्तुनि वर्तन्ते Tv. [2] 'षिद्गौरादिभ्यश्च' [3] Tv adds आतोऽनुपसर्गे क '. [4] गतिभक्षणयो Gm₃, गतौ औणादिक उप्रत्यय Tv [5] शोभार्थे

Tj1, Tj2 [6] B5, B6 add अभिप्रीतो च [7] 'ज्ञा अवबोधने' Tj2. [8] °शब्दवदिहापि मञ्जुमञ्जुलशब्दावेकार्थाविति स्थिति Tv

(पा) सुन्दर—मञ्जुलम्। [1]शोभननामानि[2]। 'चक्षुष्य सुभग रम्य लटह[3] हारि वल्गु च'। एतानि षट् च ॥ ५२ ॥

[1] सुन्दर° B3 [2] A1 adds 'चक्कदनम्' [3] लडहम A1

**तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्।**
**अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ॥ ५३ ॥**

(वि) तदिति—आसिच्यते आप्यायते [1]दृगिन्द्रियमनेनेति आसेचनकम्। [2]'षिच क्षरणे'। यस्य दर्शनात् तृप्तेरन्तो नास्ति तस्य चन्द्रमण्डलादेर्नाम ॥ आभिमुख्येनेष्यते प्राप्यत इति अभीष्टम्। 'इष गतौ'[3]। आभिमुख्येनाप्तुमिष्टम् अभीप्सितम्। 'आप्लृ व्याप्तौ'। हृदयस्य प्रिय हृद्यम्। दयते चित्तमादत्त इति दयितम्। 'दय दानगतिरक्षणहिंसादानेषु'। [4]वल्लते प्रीणातीति वल्लभम्। 'वल्ल प्रीतौ'[5]। प्रीणातीति प्रियम्। 'प्रीञ् [6]तर्पणे कान्तौ च'। प्रियवस्तुनो नामानि ॥ ५३ ॥

[1] त्वगिन्द्रियम् K4 [2] षिचिर् K3, K6, Pt2 [3] इच्छायाम् Pt2, K2 omits
[4] वल्लति K3, K4, Pt2 [5] सवरणे J2 [6] प्रीणने K3, K6

(विव.) तदासेचनक—दर्शनात्। यस्य चन्द्रमण्डलादे दर्शनात्[1] चक्षुरादीना तृप्तेरन्तो नास्ति, किंतु पुन पुन दिदृक्षाद्यतिशय एव भवति तच्चन्द्रमण्डलादिकम् आसेचनकमुच्यते। आसिच्यते आपूर्यते दृगिन्द्रियादिकम् अनेनेति आसेचनकम्। [2]'षिच क्षरणे'। आङ्पूर्व.। ल्युट्[3] (३. ३. ११७)। 'सज्ञाया कन्' (५. ३. ७५)। सुभूतिचन्द्रस्तु ह्रस्वादिमाह। न सिञ्चन्ति न क्षरन्ति चक्षुरादीन्यस्मादिति असेचनकमिति। [4]सर्वानन्दोऽपि ह्रस्वत्वमेवाह (टी. स पृ. २५, श्लो. ५१) ॥ अभीष्टे—प्रियम्। [5]इच्छाविषयस्य वस्तुनो नामानि। आभिमुख्येन इष्यत इत्यभीष्टम्। 'इषु इच्छायाम्'। क्तः (३ २ १०२)। आभिमुख्येनाप्तुमिष्टम् अभीप्सितम्। 'आप्लृ व्याप्तौ'। सन् (३. १. ७)। 'आप्ज्ञप्यृधामीत् (७ ४. ५५)। क्त (३. २ १०२)॥ 'हृदयस्य प्रिय' (४. ४. ९५)

इति हृदयशब्दात् यत् । 'हृदयस्य हृल्लेखयदण्लासेपु' (६. ३. ५०) इति हृदादेशः ।। दय्यते याच्यत इति दयितम् । 'दय दानगतिरक्षणयाचनेपु' । क्तः ।। वल्लते प्रीणयतीति वल्लभम्[6] । वल्लिः सौत्रो धातुः । 'रासिवल्लिभ्या च' (उ. ३ १२५) इत्यभच्प्रत्ययः ।। प्रीणातीति प्रियम् । 'प्रीञ् तर्पणे' । [7]इगुपधेत्यादिना (३ १. १३५) कः ।। ५३ ।।

[1] Gm3 adds ज्ञानात् [2] पिचिर् B5, B6, Tj2 [3] 'करणाधिकरणयोश्च' [4] B5 omits the sentence [5] अभीष्टादिपट्कमिच्छाविषये वस्तुनि T१. [6] Tj1, Tj2 add 'वल्ल सवरणे' [7] 'इगुपधज्ञाप्रीकिर क'.

(पा.) तदासेचनक—दर्शनात् । यस्य वस्तुनो दर्शनात् तृप्तेरन्तो नास्ति तत् आसेचनक स्यात् ।। अभीष्टे—प्रियम् । [1]प्रियवस्तुनामानि[2]।। 'हृदिस्पृग्घृदयगमम्' । एते द्वे च ।। ५३ ।।

[1] अभीष्टवस्तु° B3 [2] A1 adds 'पिप्पितमुपेरु'

**निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ।**
**कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ।। ५४ ।।**

(वि ) निकृष्टेति—निकृष्यते तिरस्क्रियत इति निकृष्ट । [1]प्रतिकृष्टश्च । 'कृप विलेखने' । अर्वति [2]श्रेयोलवमनुगच्छतीति अर्वा । नान्तोऽयम् । 'अर्व गतौ' । [3]रिफति हिनस्ति दूपयतीति रेफ । 'रिफ कत्थनयुद्धनिन्दाहिंसादानेपु' । याप्यन्ते गुणा यस्माद् दूप्यन्त इति याप्य[4] । 'या [5]प्रापणे' । अवमत्वाद् अधमत्वाद् अवम [6] । अधमत्वाद् अधम । कुत्सित यथा भवति तथा पूयते विशीर्यत इति कुपूय । 'पूयी विशरणे' । कुत्स्यते सभ्यैरिति कुत्सित [7] । 'कुत्स अवक्षेपणे' । न उद्यते नोच्यत इत्यवद्य । 'वद व्यक्ताया वाचि' । [8]खेटति सभ्यैराक्षिप्यत इति खेट । 'खिट त्रासे' । सभ्यैर्गर्ह्यत इति गर्ह्य [9] । 'गर्ह कुत्सायाम्' । अणति बहु जल्पतीत्यणक । 'अण शब्दे' । जात्या हीनस्य नामानि ।। ५४ ।।

[1] Pt2 adds प्रतिकृष्यते स्म [2] श्रेयास K4, K5, अपकर्प Pt2 [3] रेफति J1, K5, Pt2, Pt2 adds वर्तन [4] यापनीयो याप्य Pt2 [5] जुगुप्सायाम् K5, K6 [6] अवस् अधस् इत्येतौ निपातौ । अव अस्यास्तीति अवम Pt2 [7] कुत्सास्य सजाता Pt2 [8] खिद्यते K5 [9] गर्हितु योग्य Pt2

(विव.) निकृष्ट—अणकाः समाः । [1]निकृष्यते निकृष्टः । प्रतिकृष्यते प्रतिकृष्टः । 'कृष विलेखने' । उपसर्गद्वयं न्यग्भावे वर्तत इति उपसर्गवृत्तौ । यथा —निकृतः प्रतिक्षिप्त इति ।। अर्वति [2]सेवार्थम् अन्यमुपगच्छतीति अर्वा । 'अर्व गतौ' । [3]वनिप्प्रत्ययः (३. २. ७५) । 'अर्वणस्त्रसावनञः' (६. ४. १२७) इति प्राप्तस्त्रादेशस्तु अश्ववचनस्यैव नान्यस्य, प्रयोगाणामदर्शनात् इति वैजयन्ती-व्याख्यायामुक्तम् ।। [4]रिफति सर्वत्र कलहं करोतीति रेफः। 'रिफ [5]कत्थनयुद्धनिन्दा-हिंसादानेषु' । पचाद्यच् (३. १. १३४) । अकारान्तः । 'रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गवत्' इति फकारान्तेषु [6]मार्तण्डेनाभिधानात् ।। याप्यन्ते गुणा अस्मादिति याप्यः । 'याप्ये पाशप्' (५. ३. ४७) इति निर्देशात् साधुः । यापयत्या-त्मानं कृच्छ्रजीवनेनेति वा याप्यः । णिचि पुगागमे[7] (७. ३. ३६) 'अचो यत्' (३. १. ९७) इति यत् ।। अवस् अधस् इत्येतौ द्वावुपसर्गौ निकर्षार्थौ[8] । निकर्षोऽस्यास्तीति अवमः, अधमश्च । 'अवोऽधसोर्लोपश्च'[9] इति वक्तव्या-दुभाभ्यामपि निपाताभ्यां मत्वर्थीयो मक्प्रत्ययः । सलोपश्च ।। कुत्सितं पूयते विशीर्णो भवतीति कुपूयः । 'पूयी विशरणे' । पचाद्यच् (३. १. १३४) । लघूपधत्वाभावाद् गुणाभावः (७. ३. ८६) ।। कुत्सा संजाता अस्येति कुत्सितः । तारकादित्वादितच् (५. २. ३६) ।। नोद्यते नोच्यते न प्रशस्यत इत्यवद्यः । 'वद व्यक्तायां वाचि' । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' (३. १. १०१) इति नञ्पूर्वात् वदेर्यत्प्रत्ययान्तो गर्ह्यरूपार्थे निपातितः ।। खेटति सत्पुरुषानिति खेटः । 'खिट उत्त्रासने' । [10]उत्त्रासनं भयजननमिति धातुवृत्तौ[11] (मा. धा. पृ. १०६) । अच् ।। सम्यग्गर्ह्यत इति गर्ह्यः । 'गर्ह कुत्सायाम्' । 'ऋहलोर्ण्यत्' (३. १. १२४) ।। अणति बहु जल्पतीति अणः । अच् (३. १. १३४) । 'अणतेः क्वुन्, ह्रस्वादिः' इति सर्वानन्दः (टी. स. पृ. २६) ।। ५४ ।।

1 नीत्युपसर्गश्च न्यग्भावे Tv.  2 जीवनार्थं Gm3, Tv.  3 वन्नन्तो निपात-Tj1, Tj2.  4 रेफति B5, B6, Gm1.  5 युद्धादौ Gm3.  6 मार्तण्डेन Gm1, Gm3; रमसेनेति टी स. (पृ. २६)  7 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्याता पुङ्णौ'  8 निकर्षवाचकौ Tj1, Tv.  9 मुद्रितोणादौ तु 'अवद्यावमाधमार्वरेफा' इत्येव दृश्यते (उ ५ ५४).  10 "खिट त्रासे", इह त्रासो भयोत्पादनम्' इत्येव मुद्रितग्रन्थे (पृ १०६)  11 °वृत्तिकार Gm1, Gm3.

(पा.) निकृष्टे—अधमा । 'खेट पाप च रेफ[1] च सप्राहु.' इति हलायुध (अ मा २ १८२)। कुपूय—अणका समा । निकृष्टनामानि[2]। अनुक्तम्—'स स्यादलज किजश्च यस्य जन्म निरर्थकम्'। [3]यस्य पुसो जन्म व्यर्थं स अलज किजश्च स्यात् ॥ ५४ ॥

[1] रेफस प्राहु इति मुद्रितग्रन्थे (पृ ३७) [2] A1 adds 'किडु'. [3] निरर्थकजन्मनो नामानि B3.

**मलीमसं तु मलिनं कच्चरं मलदूषितम् ।**
**पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् ॥ ५५ ॥**

(वि) मलीमसमिति—[1]मलोऽस्यास्तीति मलीमसम्। मलिन च। कुत्सित चरतीति कच्चरम्। 'चर[2] गतौ। [3]मलदूषितस्य नामानि ॥ पुनाति देहादिकमिति पूतम्। पूयतेऽनेनेति पवित्रम्। 'पूञ् पवने'। मेधनीय देहशोधकत्वात् सगमनीय मेध्यम्। 'मेधृ सगमने'[4]। शुद्धिहेतुभूतस्य वस्तुनो नामानि ॥ विशेषेण इन्धे दीप्यत[5] इति वीध्रम्। 'त्रिइन्धी दीप्तौ'। निर्मलस्फटिकादेर्नाम ॥ ५५ ॥

[1] मलम् J2, Pt2. [2] गतिभक्षणयो K6, Pt2. [3] Pt2 adds मलेन दूषित मलदूषितम् [4] सगमे Pt2. [5] J1, Pt2 omit.

(विव.) मलीमस—मलदूषितम्। यत् सहजेन आगन्तुकेन वा किट्टादिना मलेन दूषितं सत् वैवर्ण्यं प्रापितं कास्यताम्रपात्रादिकं [1]तस्य नामानि। मलोऽस्यास्तीति मलीमसम्। मलिनं च। 'ज्योत्स्नातमिस्रा...' इत्यादिसूत्रे (५. २. ११४) मलशब्दाद् ईमसच्इनच्प्रत्ययान्तौ मलीमसमलिनशब्दौ द्वावपि मत्वर्थे निपातितौ ॥ कुत्सित चरतीति कच्चरम्। चरतेः पचाद्यचि (३. १. १३४) 'रथवदयोश्च' (६. ३. १०२) इति चकारात् कोः कदादेशः [2](६. ३. १०१)। केचिदाहुः[3]—काशब्दः कुत्सितार्थः। ततश्च काचर इति दीर्घादिरिति ॥ पूतं पवित्रं मेध्यश्च। पूतपवित्रशब्दौ द्वावपि ब्रह्मवर्गे स्वभावशुद्धपरिव्राजकादिवचनावुक्तौ (२. ७. ४५)। इह तु द्रव्यान्तरशुद्धिहेतुवस्तुवचनादित्यपौनरुक्त्यम्। पुनाति देहादिकमिति पूतम्। पूयतेऽनेन देहादिकमिति पवित्रम्। 'पूञ् पवने'। इत्रप्रत्ययः[4] (३. २. १८६)। शोधनद्रव्येण सङ्गमनाय योग्यो[5] मेध्यः। 'मेधृ

सङ्गमे'। ण्यत्प्रत्ययः[6] (३. १. १२४)।। वीध्रं तु विमलार्थकम्। स्वभावशुद्धस्फटिकादिवचनं विमलशब्दसमानार्थमित्यर्थः। विशेषेण इन्धे वीध्रम्। 'ञिइन्धी दीप्तौ'। औणादिकः क्रन् प्रत्ययः (उ. २. २९)। कित्त्वाद् उपधानकारस्य लोपः[7] (६. ४. २४) ।। ५५ ।।

[1] तत्र मलीमसादिचतुष्कं स्यात् Tj1, Gm3.  [2] 'को क्तत्युक्तयेऽचि'  [3] केचित्तु कौ भूमौ चरतीत्याहु Tv.  [4] 'कर्तरि चर्षिदेवतयो'  [5] योग्यं मेध्यम् Tv.  [6] 'ऋहलोर्ण्यत'  [7] 'अनिदिता हल उपधाया क्ङिति'

(पा) मलीमस—मलदूषितम। [1]मलवतो नामानि ।। पूत—मेध्यं च। पवित्रनामानि। 'शिवं पुण्यं च पावनम्'। एतानि त्रीणि च ।। वीध्रं तु विमलार्थकम्। 'विमले वीध्रं मलिने द्वौ कच्चरमलीमसौ' इति वैजयन्ती (पृ २०६, श्लो ६६)। [2] निर्मलनामानि ।। ५५ ।।

[1] बहुमलयुक्त° A1.  [2] विमल° B3

निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्।
असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके ।। ५६ ।।

(वि) निर्णिक्तमिति—निर्णिज्यते शोध्यत[1] इति निर्णिक्तम्। 'णिजिर् शौचपोषणयो'। शोध्यत इति शोधितम्। 'शुध शौचे'। [2]मृज्यत इति मृष्टम्। [3]'मृजूष् शुद्धौ'। निर्गतं शोध्यात् परित्याज्यादिति निःशोध्यम्। अविद्यमानोऽवस्करोऽस्येति अनवस्करम्। शोधितद्रव्यनामानि ।। [4]न [5]सारोऽस्येत्यसारम्। शीघ्रमेव फलतीति फल्गु। 'ञिफला विशरणे'। निःसारस्य तूलादेर्नामनी ।। [6]बाधकाभावेन[7] शुने हितं शून्यम्। वश्यते काम्यते उपवेशनायेति वशिकम्। 'वश कान्तौ'। तुदति शून्यत्वात् मनः क्लेशयतीति तुच्छम्। 'तुद व्यथने'। रिच्यते वस्तुभिर्हीयत इति रिक्तकम्। 'रिचिर् विरेचने'। [8]वस्तुविरहितस्य गृहादेर्नामानि ।। ५६ ।।

[1] K5, Pt2 omit.  [2] मार्ज्यते स्म K4, K5, Pt2  [3] मृजू K2, K4, K5.  [4] न विद्यते Pt2  [5] परित्यागाशोऽत्र K3, K5; परित्याज्याश Pt2  [6] निवारकाभावात Pt2.  [7] °रहितम् K5.  [8] भूतादिभि Pt2.

(विव.) निर्णिक्त—अनवस्करम् । वस्त्रगालनप्रक्षालनादिभिरपसारित-हेयभागस्य द्रव्यस्य नामानि । निर्णिज्यते शोध्यत इति निर्णिक्तम् । 'णिजिर् शौच-पोषणयोः'[1] । क्तः (३. २. १०२) । 'उपसर्गादसमासेऽपि णोपदेशस्य' (८. ४. १४) इति णत्वम् ।। शोध्यत इति शोधितम् । 'शुध शौचे' । णिचि क्तप्रत्ययः । [2]मृज्यते मृष्टम् । 'मृजूष् शुद्धौ' । 'व्रश्चभ्रस्जसृजमृज . . .' इत्यादिना (८.२.३६) षत्वम् ।। निष्क्रान्तं शोध्यात् परिहरणीयभागाद् इति निःशोध्यम् ।। इह अवस्कर-शब्देन वर्चस्कवाचिना त्याज्यं वस्तुमात्रं लक्ष्यते । अविद्यमानोऽवस्करो यत्र इत्यन-वस्करम्[3] ।। असार फल्गु । यत् सारभागरहितं शिग्रुकाष्ठादिकम्, यच्च ततोऽन्य-दपि उपादेयांशरहितं वाक्यादिकं तत्सर्वं फल्गुशब्देनोच्यते । फलति निःसारत्वेन शीघ्रं विशीर्यत इति फल्गु । 'ञिफला विशरणे' । औणादिक उप्रत्ययः गुगागमश्च[4] (उ. १. १८) । शून्य तु—रिक्तके । [5]स्वसमुचितमनुष्याद्याधेयरहितस्य गृहादे-र्नामानि[6] । यथा—शून्यं गृहम्, शून्यो घट इत्यादि । शुने हितं शून्यम् । 'उगवादिभ्यो यत्' इत्यत्र 'शुनः संप्रसारणं वा च दीर्घत्वम्' (ग. सू. ५. १. २) इति गणसूत्रे श्वन्शब्दस्य यत्प्रत्यये परतः संप्रसारणं भवति, विकल्पेन दीर्घश्च ।। जनान्तरानव-रुद्धत्वेन वशः स्वाधीनत्वमत्रास्तीति वशिकम् । 'वश कान्तौ' । मत्वर्थे ठन्प्रत्ययः ।। 'तुद व्यथने' इत्यस्मात् संपदादिक्विपि (वा. ३. ३. ९४) तुच्छब्दो दुःखवचनः । तुदं श्यति संबन्धरहितत्वेन [7]तनूकरोति, छ्यति छिनत्तीति, तुच्छम् । 'शो तनूकरणे' 'छो छेदने' इति वा धातुः । 'आतोऽनुपसर्गे कः' (३. २. ३) । रिच्यते [8]पृथगवस्थि-तवस्तुभिर्वियुज्यत इति रिक्तम् । 'रिचिर् विरेचने' । क्तप्रत्ययः (३. २. १०२) । कुत्वं च (८. २. ३०) । स्वार्थे कन् (५. ४. ५) ।। ५६ ।।

[1] B3, B6 omit पोषणयो [2] मार्ज्यते B5, Gm3 [3] अनवस्कर Tv
[4] 'फलिपाटिनमिमनिजना गुक्पटिनाकिधतश्च' [5] Tj1, Tv add शून्यादिचतुष्कम्
[6] गृहादौ Tj2, Tv [7] Tv adds प्रक्षेपादिव्यवहारयोग्यत्वेन [8] °अवस्थितैः Gm3, Tj1

(या) निर्णिक्त—अनवस्करम् । [1]क्षालनादिक्रियया निर्मलवस्तुनामानि । असार फल्गु । असारनामनी । शून्य तु—रिक्तके । शून्यनामानि ।। 'वशिकविशिखाविहारिणीष्वभिसारिकासु' इति हर्षचरितप्रयोगात्[2] वशिक ताल-व्यशकारम् ।। ५६ ।।

[1] क्षालनादिना B3, C1 [2] सागरानुप्रासात् A1.

**क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः ।**
**मुख्यवर्यवरेण्याश्च प्रवर्होऽनवरार्ध्यवत् ।। ५७ ।।**
**परार्ध्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् ।।**

(वि) क्लीव इति—प्रधत्ते[1] स्वोपसर्जनीभूत[2] धारयतीति प्रधानम् । प्रकृष्ट मुखमिव प्रियमानसत्वमस्येति प्रमुख । प्रकृष्टो वेक [3]पृथक्त्वमस्ति असामान्यमस्येति प्रवेक [4] । अस्मादुत्तमो[5] नास्तीत्यनुत्तम । उद्गतानाम् उत्कृष्टानामयम् अतिशयेनोन्नत[6] इति उत्तम । मुखमिव प्रधान प्रियमानसत्वमस्येति मुख्य । वरणीयो[7] वर्य. । वरेण्यश्च । 'वृञ् वरणे' । प्रकर्षेण बृहति स्वशेषभूतानुद्धरतीति [8]प्रवर्ह । 'बृहू उद्यमने' । गणस्थानपरार्धं मुख्यभागे भवो वर्तमानोऽनपरार्ध्य । परार्ध्यश्च । [9]अनवरार्ध्य इति वा पाठ । गणकार्यमकृत्वा न गच्छतीत्यग्र [10] । प्राग्र सभाया मुख्यस्थान[11] हरतीति प्राग्रहर । प्राग्रे मुख्यस्थाने भवो वर्तमान प्राग्र्य । अग्रे मुख्यस्थाने भवो वर्तमानोऽग्र्य । अग्रिय , अग्रीयश्च । मुख्यनामानि ।। ५७ ।।

[1] $K_5$, $K_6$ add अस्य  [2] °भूतान् $K_5$  [3] विशेपज्ञानम् $K_5$  [4] $K_4$ adds 'विचिर् पृथग्भावे'  [5] $K_5$ adds अधिक  [6] अतीवोनत $K_5$, अतिशयेनोत्कृष्ट $Pt_2$  [7] $Pt_2$ adds स्वाश्रितैर्भजनीय  [8] प्रकृष्टो वर्ह उद्यमो यस्य $Pt_2$  [9] अवरार्धे भवोऽवरार्ध्य जघन्य । स न भवतीति अनवरार्ध्यं $Pt_2$  [10] अङ्गत्युत्कर्षमित्यग्र । 'अगि गतौ' $Pt_2$  [11] श्रेष्ठ रत्नकुण्डलादिक $Pt_2$

(विव.) क्लीबे—अग्रियम् । सार्धश्लोकेन प्रधानाद्याः सप्तदश शब्दाः तत्तज्जातीयसमूहापेक्षया गुणातिशययुक्तस्य[1] वाचकाः । प्रकर्षेण धत्ते स्वोपसर्जनीभूतान् [2]पुष्णातीति प्रधानम् । ल्युट् (३. ३. ११३) । अस्य प्राकरणिक विशेष्यनिघ्नत्व नास्तीति दर्शयितु क्लीब इत्युक्तम् । [3]ततश्च गुणेषु विनयः प्रधानम्, विद्वत्सु वैयाकरणः प्रधानम् इत्येव भवति । अतश्च 'न जाने सप्रधानो मे शूरो हस्ती सदामदः' इति देवीमाहात्म्येऽपि (१. १४) प्रधानेन सह वर्तत इति बहुव्रीहिरेवेति सर्वानन्दः[4] (टी. स. पृ २८) ।। प्रकृष्ट मुखं वागारम्भोऽस्येति प्रमुखः ।। प्रकृष्टो वेक. पृथक्त्वम् इतरापेक्षमुत्कर्षलक्षण वैलक्षण्यमस्येति प्रवेक. ।। नास्त्युत्तमोऽस्मादित्यनुत्तमः ।। उदिति निपातः उत्कर्षार्थ [5] । अतिशयेन उत्कृष्टः उत्तमः । अतिशायने तमप्प्रत्ययः (५. ३. ५५) ।। मुखमिव प्राधान्येन[6] प्रतीयमानत्वेन

मुख्यः। इवार्थे 'शाखादिभ्यो यः' (५. ३. १०३) इति यः ॥ वरणीयः स्वशोपभूतैर्भजनीय इति वर्यः। 'वर ईप्सायाम्'[7]। चुरादौ अदन्ताद् 'अचो यत्' (३. १. ९७) इति यत् ॥ व्रियते सेव्यत इति वरेण्यः। 'वृञ् वरणे'। 'वृञ एण्यः' (उ. ३. ९८) इत्यौणादिकैण्यप्रत्ययः ॥ प्रकर्षेण बृंहति वर्धते प्रबर्हः। 'बृह बृहि वृद्धौ'। पचादिः (३. १. १३४)। वरः श्रेष्ठः, ततोऽन्योऽवरः। अवरार्धे निकृष्टभावे भवः अवरार्ध्यः[8]। 'परावराधमोत्तमपूर्वाच्च' (४. ३. ५) इति यत्प्रत्ययः। ततो नञ्समासे (२. २. ६) सति अनवरार्ध्यः ॥ [9]प्रधानादिशब्दानां प्रवर्हादिशब्दसाम्यप्रतिपादको वतिप्रत्ययः पादपूरणार्थः ॥ परार्धे श्रेष्ठभागे भवः परार्ध्यः। पूर्ववदेव यत्प्रत्ययः (४. ३. ५) ॥ अङ्गति पुरो गच्छतीत्यग्रः। 'अगि गतौ'। 'अग्राद्यत्' (४. ४. ११६) इति निर्देशाद् बाहुलको रक्प्रत्ययः नकारलोपश्च ॥ प्रकर्षेण अग्रं श्रेष्ठं रत्नकुण्डलपट्टांशुकादिकं हरति स्वीकर्तुमर्हतीति प्राग्रहरः। 'हरतेरनुद्यमनेऽच्' (३. २. ९) इति अच्प्रत्ययः ॥ प्राग्रे [10]पुरःप्रदेशे भवः प्राग्र्यः। अग्रस्थाने भवोऽग्र्यः। 'अग्राद्यत्' (४. ४. ११६) इति यत्प्रत्ययः ॥ 'घच्छौ च' (४. ४. ११७) इति छप्रत्यये अग्रीयः। घप्रत्यये अग्रियः (७. १. २) ॥ ५७ ॥

[1] °युक्ते भवन्ति Tj1, Tv. [2] धारयति Tj2, Gm3 [3] अत Gm1. [4] 'इति चण्डीपाठ सह प्रधानेन वर्तत इति साधु' इति मुद्रितग्रन्थे. [5] उत्कर्षे वर्तते Gm3, Tj2. [6] प्राधान्ये Tv. [7] इच्छायाम् B5, B6, Gm1 [8] परः श्रेष्ठ, ततोऽन्योऽपर। अपरार्धे निकृष्टभावे भव अपरार्ध्यं Tv. [9] प्रवर्हादिशब्दैस्तुल्याः प्रधानादयः शब्दा Tj1, Tv. [10] पुरत Gm1, Gm3

(पा.) क्लीबे—अग्र्याग्रीयम्। दीर्घादि। अग्रियम्। मुख्यवस्तुनामानि ॥ ५७ ॥

श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभने ॥ ५८ ॥
स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ ५९ ॥

(वि.) श्रेयानिति—अतिशयेन प्रशस्यत इति श्रेयान्। श्रेष्ठश्च। 'शसु स्तुतौ'। महिम्ना [1]पुष्यतीति पुष्कलः। 'पुष पुष्टौ'। अतिशयेन

सन् सत्तम । [2]अतिशोभनस्य नामानि ।। व्याघ्र पुगव, ऋषभ[3], कुञ्जर, सिह, शार्दल, नाग, आद्यग्रहणात् चन्द्रादयश्च । एत व्याघ्रादय शब्दा [4]उत्तरपदानि सन्त पुसि पुरूषे[5] श्रेष्ठार्थवाचका[6] [7]श्रेष्ठार्थप्रतिपादनपरा स्यु भवेयु । अत्रोदाहरणानि—पुरुषव्याघ्र, मुनिपुगव, राजर्षभ, नृपकुञ्जर पुरुषसिह,[8] मुनिशार्दूल, गोनाग, मुखचन्द्र इत्यादि ।। ५८-६ ।।

[1] पुष्णाति Pt2 [2] Pt2 adds अत्यन्त शोभनोऽतिशोभन [3] वृषभ J2, K6 [4] उत्तरपद वतमाना K5 [5] पुरुषविषय K5 [6] °गोचरा K5 [7] K5 has श्रैष्ठच° for श्रेष्ठार्थ° [8] पुरुषषभ J2

(विव) श्रेयान्—अतिशोभने । [1]अत्यन्तप्रशसाविषयस्य नामानि । अन्यापेक्षया अतिशयेन प्रशस्य श्रेयान् । 'द्विवचनविभज्य ' इत्यादिना (५ ३ ५७) ईयसुन्प्रत्यय ।। '[2]अतिशायने तमबिष्ठनौ' (५ ३ ५५) इति प्रशस्यशब्दादेव इष्ठन्प्रत्यये श्रेष्ठ । उभयत्रापि प्रशस्यशब्दस्य श्रादेश[3] (५ ३ ६०) ।। पुष्यति पुन पुनराधिक्य प्राप्नोतीति पुष्कल । 'पुष पुष्टौ' । 'पुष कित्' 'कलश्च' (उ ४ ४-५) इति कलन्प्रत्यय[4] ।। अतिशायनार्थे सत्-शब्दात् तमप्प्रत्यये सत्तम[5] । 'अग्र प्राग्रहर श्रेष्ठ मुख्य वर्य प्रवर्हणम्' इति [6]त्रिकाण्डशेषे पाठात्, '[7]श्रेष्ठ प्रधान युक्तमनुत्तम सत्तम प्रबर्हण च' इति नाममालाया पाठाच्च प्रधानाद्या एकविशति शब्दा एकार्था इति केचित् ।। स्युरुत्तरपदे—श्रेष्ठार्थगोचरा । अस्यार्थ —पुरुषमुनिराजादीनामुपमितशब्दाना पूर्वपदत्वे सति उत्तरपदत्वेन समस्यमाना उपमानवचना व्याघ्रादयो नागान्ता शब्दा आद्यशब्दसगृहीता वृषभवृषचन्द्रवराहादयोऽपि महाकविप्रयोगेषु परिदृश्यमाना शब्दाश्च श्रेष्ठार्थगोचरा, *स्वार्थव्याघ्रादिगतसजातीयगुणयुक्तेषु पुरुषादिषु पूर्वपदार्थेषु गुणातिशयप्रतिपादनपरा भवन्तीति* । यथा—पुरुषव्याघ्र, मुनिपुगव, पुरुषर्षभ, वादिसिह, गोनाग, राजचन्द्र इत्यादय प्रयोगानुरोधाद् अवगन्तव्या । 'उपमित व्याघ्रादिभि सामान्याप्रयोगे' (२ १ ५६) इति समास । व्याघ्रादिश्चाकृतिगण । पुमीत्यनेन व्याघ्राद्युत्तरपदानामाविष्टलिङ्गत्वमिति दर्शितम् । तेन योषिद्व्याघ्र, कलत्रशार्दल, [8]अपत्यसिह इत्यादिकमेव भवति ।। ५८-६ ।।

[1] अतिशोभनमतिप्रशसाविषय तत्र श्रेयआद्या शब्दा स्यु Gm3, Tj1 [2] Tv adds अत एव [3] 'प्रशस्यस्य श्र [4] कलप्रत्यय B6, Gm1 [5] अतिशयेन

सन् सत्तम Tj1, Tj2 [6] मुद्रितग्रन्थे न दृश्यते, त्रिकाण्डे इति टी स (पृ २८)
[7] वर्यमिति पाठ भा दी (पृ ४२५) [8] अपत्यव्याघ्र Tj1, Tj2

(पा) श्रेयान—अतिशोभने। [1]अत्यन्तमुख्यभूतवस्तुनामानि ॥ स्युरुत्तरपदे—श्रेष्ठार्थगोचरा। उत्तरपदीभूता व्याघ्रादिशब्दा पूर्वपदार्थश्रैष्ठ्यगमका। पुरुषव्याघ्र, गजपुगव, हयकुञ्जर, ब्राह्मणर्षभ, राजपुण्डरीक, गोवृषभ, कविवराह। पुनिर्देश पूर्वपदसापेक्ष। [2]तेन स्त्रीसत्तमा, कुमारीश्रेष्ठा इत्यादि ॥ ५८-९ ॥

[1] अतिमुख्यवस्तु° B3 [2] A1 omits तेन

**अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने।**
**विशङ्कटं पृथु बृहद् विशालं पृथुलं महत् ॥ ६० ॥**
**रुन्द्रोरुविपुल पीनपीव्नी तु स्थूलपीवरे।**

(वि) अप्राग्र्यमिति—न प्राग्र्य [1]भवतीत्यप्राग्रचम्। प्रधान न [1]भवतीत्यप्रधानम्। उपसृज्यते प्रधानीभूतेनेति[2] उपसर्जनम्। 'सृज विसर्गे'। अमुख्यस्य नामानि॥ [3]विस्तीर्यत इति विशङ्कटम्। विशाल च। प्रथत इति पृथु। पृथुल च। 'प्रथ प्रख्याने'[4]। वर्हति सर्वतो वर्तत इति बृहत्। 'बृह[5] वृद्धौ'। महति पूजयतीति महत्। 'मह पूजायाम्'। रवनेऽन्यवद्वारेंगच्छतीति रुन्द्रम्। 'रुद गतिरेषणयो'। ऊर्णोति आच्छादयतीति उरु। 'ऊर्णुञ् आच्छादने'। विपोलति महत्त्वमाप्नोतीति विपुलम्। 'पुल महत्त्वे'। महत्त्वमापन्नस्य जलादेर्नामानि ॥ प्यायते वर्धत इति पीनम्। पीवर च। 'ओप्यायी वृद्धौ'। स्थूलयते स्थूलम्। 'स्थूल परिबृहणे'। पीनस्य वृषभस्कन्धादेर्नामानि ॥ ६० ॥

[1] J2, K6 omit भवति [2] Pt2 adds नियुज्यते [3] विशीर्यते J2, K4, K5
[4] प्रख्यातौ K5 [5] K5, K6 add बृहि

(पिय) अप्राग्र्य—उपसर्जने। [1]गुणभूतस्य नामानि। प्राग्र्याद् मुख्यादन्यद् अप्राग्र्यम्। प्रधानादन्यदप्रधानम्। उपसृज्यते नियुज्यते प्रधानभूतेनेति

उपमर्जनम् । 'सृज विसर्गे' । ल्युट् (३ ३ ११३) । अप्रधानम् उपसर्जन [2]चेति द्वे पदे नपुसकलिङ्गे इत्यर्थ ॥ विशङ्कट—विपुलम । [3]द्रव्यान्तरापेक्षया महत्त्वाधिकरणपरिमाणयुक्तस्य नामानि । गृहादङगण विशालम् । कुवलादामलक महत् । दर्पणाद् रथाङ्ग महद् इत्यादि । विस्तारार्थात् 'वे शालच्छङकटचौ' (५ २ २८) इति शालच्प्रत्यये विशालम् । शङकटचि विशङकटम् ॥ प्रथत इति पृथु । 'प्रथ प्रख्याने' । 'प्रथिम्रदिभ्रस्जा सप्रसारण सलोपश्च' (उ १ २८) इति कुप्रत्यय सप्रसारण च । [4]पृथुल च ॥ बर्हति वर्धत इति बृहत् । 'बृह वृद्धौ' । उणादौ निपातनात् (उ २ ८४) अतिप्रत्यय ॥ महति पूजयति श्रेय स्थानमिति महत् । 'मह पूजायाम्' । 'वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च' (उ २ ८४) इति अतिप्रत्ययान्तत्वेन शब्दद्वयमपि निपातित शतृवच्च कार्यं भवति ॥ पृथुशब्दाद् भावमात्रविवक्षाया मत्वर्थीये लच्प्रत्यये[4] (५ २ ९७) श्यामलमञ्जुलादिशब्दवत् पृथुलशब्द । पृथुत्व लात्यादत्त इति वा पृथुलम् (३ २ ३) ॥ भूयोऽवयवत्वेन परितो रुन्धन् द्राति कुटिल गच्छतीति रुन्द्र । 'द्रा कुत्सायां गतौ' । मूलविभुजादि । पृषोदरादित्वात् साधु । रुन्द्र प्रातिपदिकमव्युत्पन्नमिति केचित् ॥ ऊर्णोति स्वाधारदेशमाच्छादयतीति उरु । 'ऊर्णुञ् आच्छादने' । 'ऊर्णोतेर्नुलोपश्च' इत्यनुवृत्तौ 'महति ह्रस्वश्च' (उ १ ३२) इति कुप्रत्यय ॥ विशेषेण पोलति महद् भवतीति विपुलम् । 'पुल महत्त्वे' । इगुपधलक्षण क (३ १ १३५) ॥ पीनपीव्नी तु स्थूलपीवरे । [5]वेणुदण्डाद्यपेक्षया परिणाहातिशयवत स्तम्भादेर्नामानि । यथा—तृणकाण्डाद् इक्षुदण्ड पीवर, ततोऽपि कीचक, ततोऽपि स्तम्भ इत्यादि । प्यायते वर्धत इति पीनम् । 'ओप्यायी वृद्धौ' । क्तप्रत्यय (३ ४ ७२) 'प्याय पी' (६ १ २८) इति धातो पीभाव, 'ओदितश्च' (८ २ ४५) इति निष्ठानत्वम् ॥ तत एव धातो 'अन्येभ्योऽपि दृश्यते' (३ २ ७५) इति क्वनिप्प्रत्यये दृशिग्रहणस्य विध्यन्तरोपसग्रहार्थत्वेन सप्रसारणे च पीवा । स्त्रिया तु 'वनो र च' (४ १ ७) इति ङीपि रेफे च पीवरी । 'छित्वरछत्वरधीवरपीवर ' इत्याद्युणादिसूत्रे (उ ३ १) प्यायते पिबतेर्वा पीभाव ष्वरच्प्रत्ययश्च निपात्यत इति वृत्तिकार [6] । स्थूलयत इति स्थूलम् । 'स्थूल परिबृंहणे' । पचाद्यच् (३ १ १३४) ॥ ६० ॥

[1] अप्राग्र्यादित्रय गुणीभूते Tj1, Tj" Tv  [2] इति शब्दद्वय द्विहीने द्वाभ्या स्त्रीलिङ्गपुंलिङ्गाभ्या रहित नपुसक इत्यर्थ Gm3, Tj1  [3] विशङ्कटादिनवकम् आयामविस्ताराभ्या तुल्यरूप रथचक्रादौ स्यात Gm1, Tj"  [4] सिध्मादिभ्यश्च  [5] Gm3, Tv

add स्वसदृश° [6] मुद्रितमाधवीयवृत्तौ न दृश्यते, कौमुदीव्याख्याया तु (पृ ५१३) पा पाने त्रयाणामीत्वमन्तस्य निपात्यत इत्यके। अन्ये तु पीव. स्थौल्ये। एभ्य प्वरचि 'लोपो व्यो - इति लोपमाहु

(पा) *अग्राग्र्य—उपसर्जन। अमुख्यभूतवस्तुनामानि। द्वयहीने नपुसके।* 'उपाग्र[1] तु गुण पुसि क्लीबे स्यादुपसर्जनम्' इति वैजयन्ती (पृ २०६, श्लो. ६४)॥ विशङ्कट—विपुलम्। [2]विपुलनामानि। 'विस्तीर्ण विकराल च व्यढ वित-तमाततम्'। इमानि पञ्च च॥ पीनपीव्नी तु स्थूलपीवरे। स्थूलस्य नामानि॥६०॥

[1] उपाग्र इति मुद्रितग्रन्थे [2] विशालभूतवस्तु° A1

**स्तोकाल्पक्षुल्लका: श्लक्ष्णं सूक्ष्म दभ्रं कृशं तनु॥ ६१॥**
**स्त्रिया मात्रा त्रुटि: पुसि लवलेशकणाणव:।**
**अत्यल्पेऽल्पिष्ठमल्पीय: कनीयोऽणीय इत्यपि॥ ६२॥**

(वि) स्तोकेति—[1]स्तूयत इति स्तोक। 'ष्टुञ् स्तुतौ'। अल्पने महद्वस्तुषु निवार्यत इत्यल्प। 'अल निवारणे'[2]। क्षुद्यत सपिष्यत इति क्षुल्लक। 'क्षुदिर् सपेषणे'। सुष्ठु उक्ष्यते सिच्यत इति सूक्ष्मम्। 'उक्ष सेचने'। स्वरन्ध्रेषु श्लिष्यतीति श्लक्ष्णम्। 'श्लिष आलिङ्गने'। दम्यते शिलादौ सपिष्यत इति दभ्रम्। 'दम्भु विक्षेपे'[3]। कृश्यत इति कृशम्। 'कृश तनूकरणे'। तन्यत इति तनु। 'तनु विस्तारे'। सूक्ष्मस्य तन्वादेर्नामानि॥ [4]मीयत इति मात्रा। 'माङ् माने'। त्रुट्यते छिद्यत इति त्रुटि। 'त्रुट [5]छेदने'। लूयत इति लव। 'लूञ् छेदने'। लिशति[6] अल्पीभवतीति लेश। 'लिश अल्पीभावे'। कणति[7] सूक्ष्मत्वात् कण.। 'कण निमीलने'। अणति याम्यादौ [8]पतित शब्दायत इत्यणु। 'अण शब्दे'। स्वल्पनामानि॥ [9]अतिशयेनाल्पम् अत्यल्पम्। अल्पिष्ठम्। अल्पीय। कनीयश्च। अतिशयेनाणु अणीय। अपिशब्दात् कनिष्ठाणिष्ठशब्दावप्यूह्यौ। अत्यल्पस्य नामानि॥ ६१–२॥

[1] ष्टुञ स्तौति K6, ष्टन J2, K2 [2] भूषणपर्याप्तिवारणेषु K5 [3] 'दम्भु आशातने' K2, क्षेपे K4, रोधने Pt2 [4] मानि Pt2 [5] भेदने K3, K6

[6] लिश्यति K6, Pt2　　[7] Pt2 adds निमीलति　　[8] अणयति कास्यादिकम् Pt2
[9] K5 omits 3 lines

(विव) स्तोकाल्प--कृश तनु। [1]बह्ववयवारब्धापेक्षया न्यूनावयवारब्धस्य नामानि। स्तयत इति स्तोक। 'स्तोकान्तिक　' (२ १ ३९) इति निर्देशात् साधु। अल्यते निवार्यत इत्यल्पम्। 'अल भूषणादौ'। 'बह्वल्पार्थात्　' (५ ४ ४२) इति निर्देशात् साधु ॥ क्षुल्लकशब्द पामरे निरुक्त * (२ १० १६) ॥ सूच्यत इति सूक्ष्मम्। 'सूच पैशुन्ये'। 'सूचे स्मन्' (उ ४ १७८) इति [2]स्मन् ॥ श्लिष्यति सर्वत्र लग्नो भवतीति श्लक्ष्णम्। 'श्लिषेरच्चोपधाया' (उ ३ १९) इति क्स्नप्रत्यय उपधाया अकारादेशश्च। 'षढो क सि' (८ २ ४१) इति षकारस्य ककार। 'इण् को' इत्यादिना (८ ३ ५९) षत्व, णत्व च (८ ४ १)॥ दम्यते क्षिप्यत इति दभ्रम्। 'दम्भु क्षेपे'। रक्[3] (उ २ १३) ॥ कृशतीति कृशम्। 'कृश तनूकरणे'। इगुपधलक्षण क (३ १ १३५)। अथवा क्तप्रत्यये सति 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघा' (८ २ ५५) इति निपातनात् साधुत्वम। निष्ठातकारस्य लोप, इडागमाभावश्च॥ तनुशब्द शरीरे व्युत्पादित[4] (२ ६ ७१) ॥ स्त्रिया मात्रा--कणाणव। [5]परिमाणाल्पविश्रान्तिस्थानस्य परमाण्वादेर्नामानि। मात्रा च त्रुटिश्चेति कृतद्वन्द्वसमासाभ्यामपि 'स्त्रियाम्' इति पद सबध्यते। 'पुसि' इति पद तु लवादिभिश्चतुर्भिरिति षण्णामपि विशेष्यनिघ्नत्व नास्तीति दर्शितम ॥ स्वगतगुरुत्वज्ञानाय तुलया मीयते परिच्छिद्यत इति मात्रा। 'मा माने'। त्रन् (उ ४ १६९) ॥ त्रुटयते छिद्यत इति त्रुटि। 'त्रुट छेदने'। 'इगुपधात [6]कि' (उ ४ १२०) इत्यौणादिक कि ॥ लूयते छिद्यत इति लव (३ ३ ५७) ॥ लिशति अल्पादप्यल्पीभवतीति लेश। 'लिश अल्पीभावे'। तुदादि। अच (३ १ १३४) ॥ कणति स्वल्पपरिमाणत्वेन सकुचितो भवतीति कण। 'कण निमीलने'। 'निमीलन सकोचनम्' इति धातुवृत्ति[7] (मा धा पृ १४७)। अच् (३ १ १३४) ॥ गुरुत्वातिशयाभावाद् नोदनाभिघातयोरसभवेन शब्दोत्पत्तौ कारणाभावाद् विरुद्धलक्षणया अणति शब्दायत इत्यणु। 'अण शब्दे'। 'अणश्च' (उ १ ८) इत्यौणादिक उप्रत्यय ॥ अत्यल्पे--अणीय इत्यपि। स्वल्पपरिमाणद्रव्यान्तरापेक्षया न्यनपरिमाणद्रव्यस्य नामानि। अतिशयेनाल्पम् अल्पिष्ठम्। 'अतिशायने तमबिष्ठनौ' (५ ३ ५५) इत्यल्पशब्दाद् इष्ठन्प्रत्यय। 'द्विवचनविभज्य　' इत्यादिना (५ ३ ५७)

ईयसुन्प्रत्यये अल्पीयः । 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४) इत्यल्पशब्दस्य विकल्पेन कन् इत्यादेशे कनीयः । कनिष्ठशब्दस्याप्युपलक्षणमेतत् ॥ अणुशब्दादीयसुन्प्रत्यये (५. ३. ५७) अणीयः । अपिशब्दाद् अणिष्ठमपि ॥ ६१–२ ॥

उत्तरश्लोकपठिताः प्रभूतादयो द्वादश शब्दाः प्रकृतकार्योपयुक्तापेक्षया अधिकपरिमाणे वर्तन्ते ॥

[1] स्तोकाद्यष्टक भूयोऽवयवारब्धकूश्माण्डफलाद्यपेक्षया न्यूनावयवारब्धे मातुलुङ्गफलादौ स्यात् Gm1, Tj1, Tv. [2] णिलोपे कुत्वपत्वे. [3] स्फायितञ्चि . . . दम्भि . . . शुभिभ्यो रक्. [4] तन्यत इति तनु । 'तनु विस्तारे'। 'भृमृशी . . . तनि . . . मस्जिभ्य उ.' (उ. १. ७). [5] मात्रादिपट्क . . . परमाण्वादौ वर्तते Tj2. [6] 'कित् । केचित्तु इगुपधात् किरिति पठित्वा इणोऽपवाद क्विप्रत्यय इति व्याचख्यु. । तन्न । प्रत्ययस्वरेण ऋष्यादीनामन्तोदात्ततापत्ते । न चेष्टापत्ति ' इत्यादि कौमुदीव्याख्या (पृ. ५३१). [7] निमेपण सकोचः इति मुद्रितग्रन्थे. * क्षुदिर् सपेपणे । 'सपदादिभ्य· क्विप्'। क्षुद लाति । 'आतोऽनुपसर्गे क', 'तोलि', स्वार्थे कन् इति भा. दी. (पृ. ४२६).

(पा.) स्तोकाल्प—कणाणव. । [1]अल्पनामानि । मात्रादयो धर्मिधर्मवचनाः । तव लेशोऽपि न विद्यते प्रियम् । सुखस्य लेशोऽपि न विद्यते भवे ॥ अत्यल्पे —अणीय इत्यपि । अत्यल्पनामानि ॥ ६१-२ ॥

[1] सूक्ष्म° B3; स्वल्प° C1.

प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ ६३ ॥

(वि.) प्रभूतमिति—स्वकार्यमापादयितु[1] प्रभवतीति प्रभूतम्[2]। [3]प्रचीयते बहुभिरवयवैरिति प्रचुरम् । 'चिञ् चयने'। बहूकर्तुमेकत्र [4]प्राज्यते क्षिप्यत इति प्राज्यम् । 'अज गतिक्षेपणयो.'। न दभ्रमदभ्रम्[5] । बंहते सग्रहणेन वर्धत इति बहु । बहुल[6] च । 'बहि महि वृद्धौ'। पुंविन्यनया संज्ञया भूयते ऽनुभूयत इति पुरुहू. । पुरुहूरिति वा पाठः । पूर्यत इति पुरु । 'पूरी आप्यायने'। अतिशयेन बहु भूयिष्ठम् । भूयश्च । स्फायते वर्धत इति स्फारम्[7] । 'स्फायी वृद्धौ'। [8]अनल्पतया भवन्तीति भूरि । 'भू सत्तायाम्'। अनल्पस्य नामानि ॥ ६३ ॥

[1] आसादयितुं $K_5$.　[2] $K_5$, $Pt_2$ add 'भू सत्तायाम्'.　[3] प्रकर्षेण चीयते $J_2$. [4] प्रकर्षेण अज्यते $Pt_2$.　[5] दभ्रमल्प न भवतीति $Pt_2$.　[6] वहु बहुत्वमस्त्यस्येति $Pt_2$. [7] स्फीतम् $K_2$, $K_4$.　[8] भवत्यनल्पमिति $Pt_2$.

(विव.) प्रभूतं—भूरि च। प्रभवति समर्थो भवतीति प्रभूतम्। क्तः (३. ४. ७२)। प्रकर्षेण चीयते उपचीयत इति प्रचुरम्[1]॥ प्रकर्षेण अज्यते व्यक्तीक्रियत इति प्राज्यम्। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। क्यप्प्रत्यये[2] (वा. ३. १. १०९) 'अनिदितां...' (६. ४. २४) इत्यनुनासिकलोपः॥ दभ्रादल्पाद् अन्यद् अदभ्रम्॥ बंहते वर्धत इति बहु। 'बहि महि वृद्धौ।' 'लङ्घिबंह्योर्नलोपश्च' (उ. १. २९) इति उप्रत्ययः नलोपश्च[3]॥ ततो भावमात्रवचनाद् मत्वर्थीये लच्प्रत्यये श्यामलादिशब्दवद्[4] बहुलम्[5]॥ पिपर्ति पूर्यते वा पुरु। 'पॄ पालनपूरणयोः'। 'पॄभिदिव्यधिगृधिधृषिभ्यः' (उ. १. २३) इति कुप्रत्ययः। 'उदोष्ठ्यपूर्वस्य' (७. २. १०२) इत्युत्वम्[6]॥ पुरुभिरवयवैर्भवतीति पुरुभूः। भवतेः क्विप् (३. २. ७६)॥ 'पुरु इत्यनया संज्ञया हूयत इति पुरुहूः' इति सुबोधिनीकारः ऊष्मोपधामाह। सर्वानन्दस्तु (टी. स. पृ. २९) पुरून् [7]हरति हन्ति वा पुरुहम्। 'अन्येष्वपि दृश्यते' (३. २. १०१) इति डप्रत्ययः, इत्यकारान्तमूष्मोपध चाह॥ अतिशयेन बहु भूयिष्ठम्। इष्ठन्प्रत्यये (५. ३. ५५) 'इष्ठस्य यिट् च' (६. ४. १५९) इति यिडागमः, बहोर्भूभावश्च[8] (६. ४. १५८)॥ स्फायते वर्धत इति स्फारम्। 'स्फायी वृद्धौ'। 'स्फायितञ्चि...' (उ. २. १३) इति रक्। स्फिरमिति पाठे 'अजिरशिशिरशिथिरशिबिलस्थिरस्फिरस्थविरखदिराः' (उ. १. ५६) इत्यौणादिकनिपातनात् स्फायतेः किरच्प्रत्ययः, आकारयकारयोर्लोपश्च॥ बहुशब्दाद् अतिशायनविवक्षायाम् ईयसुन्प्रत्यये (५. ३. ५७) 'बहोर्लोपो भू च बहोः' (६. ४. १५८) इति बहोर्लोपे भूभावे च भूयःशब्दः। सकारान्तः॥ अनल्पत्वेन भवतीति भूरि। क्रिन्प्रत्ययः[9] (उ. ४. ६५)॥ ६३॥

[1] $B_5$, $Tj_2$ add 'चिञ् चयने'.　[2] 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' [3] $Gm_3$, $Tj_1$ add 'बह्वल्पार्थात्...' (५. ४. ४२) इति निर्देशात् साधु.　[4] श्यामलपृथुलशब्दवद् बहुलशब्द $B_5$, Tv.　[5] सिध्मादिषु (५. २. ९७) बहुशब्दो न दृश्यते। बहूनर्थान् लातीति सर्वानन्द (टी. स. पृ. २९).　[6] रपरत्व च　[7] हरतिशब्दो मुद्रितग्रन्थे न दृश्यते　[8] 'बहोर्लोपो भू च बहोः'.　[9] 'अदिशदिभूशुभिभ्यः क्रिन्'.

(पा) प्रभत—प्राज्य [1]वहल वहुल वह्। अदभ्र वहुलमिति पाठान्तरम्। [2]पुरुह पुरु—भूरि च। वहुलनामानि ॥ 'समग्र पुष्कल स्फारमदभ्रमतिमात्रकम्'। एतानि पञ्च च ॥ ६३ ॥

[1] वहुक B3  [2] पुरुहू B3

**परःशताद्यास्ते येषा परा संख्या शतादिकात्।**
**गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम् ॥ ६४ ॥**
**विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्।**
**समग्रं सकलं पूर्णमखण्डं स्यादनूनके ॥ ६५ ॥**

(वि) पर शताद्या इति—[1]येषा सख्येयाना शतादिकात् शतसहस्रादिकात् परा अधिका सख्या या विद्यते तया [2]पर शताद्या भवन्ति। आदिग्रहणेन पर सहस्रादय। [3]गणितव्य गणनीयम्। गणेय च। 'गण सख्याने'। सख्येयस्य तारकादेर्नामानि ॥ गण्यते सख्यायत इति गणितम्। [4]सख्यातस्य [5]त्रमुकादेर्नाम ॥ समति न्यूनत्व न प्राप्नोतीति समम्। 'षम अवैक्लव्ये'। सर्वति स्वसवन्धिवर्गोपेत गच्छतीति सर्वम्[6]। 'षर्व गतौ'। [7]त्रिशत्यशेन सह सविशतीति विश्वम्। 'विश प्रवेशने'। नास्ति शेषोऽस्येत्यशेषम्। कृत्यते व्याप्यते स्थानादि कर्म वानेनेति कृत्स्नम्। 'कृती वेष्टने'। समस्यते ऊरीक्रियत[8] इति समस्तम्। 'असु क्षेपणे'। खिलादुपेक्षिताशाद्[9] निवृत्त निखिलम्। नास्ति खिलमुपेक्षिताशोऽत्रेति अखिलम्। [10]शेषान्निष्क्रान्तमिति नि शेषम्। सगतमग्रमग्राशोऽत्रेति[11] समग्रम्। कलाभि[12] सह वर्तत इति सकलम्। पूर्यत इति पूर्णम्। 'पूरी आप्यायने'। न खण्डमखण्डम्। न विद्यते ऊनत्वमत्रेति अनूनकम्[13]। [14]अभिन्नस्य घटादेर्नामानि ॥ ६४-५ ॥

[1] शतात् परा येषा ते पर शता Pt2  [2] सख्येया पर शता भवन्ति K4, K5.
[3] गणयितु शक्य गणनीयम् Pt2  [4] J2 adds सख्यायते स्म सख्यानम्  [5] कामुकाद K5.
[6] श्री[त्रि]यते सजातीयैरिति Pt2  [7] विशति सर्वत्र Pt2  [8] एकीक्रियते J2
[9] खिलात् शून्यात् Pt2  [10] निगनम् J2  [11] अग्रेण Pt2  [12] K5 adds भागै.
[13] अनून J2, K4  [14] सपूर्णस्याभ्रादेर्नामानि K5

(विव ) पर शताद्या —शतादिकात् । अत्र 'शतादिकाद् इत्यादिशब्देन सहस्रादीना ग्रहणम् । ततश्च येषा सख्येयाना गजतुरगादीना सख्या शतसहस्रादे परा अधिका भवति ते पर शतपर सहस्रादिशब्दैरुच्यन्ते । शतात् परा इति विग्रहे 'पञ्चमी' (२ १ ३७) इति योगविभागात् समासे राजदन्तादित्वात् (२ २ ३१) परशब्दस्य पूर्वनिपाते पारस्करादित्वात् (६ १ १५७) सुडागमे च पर शता अश्वा , पर शतान्यश्वीयानि, पर कोटयो गजता इत्यादि भवति । 'आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजता पर शता ' इति माघ (शिशु १२ ५०) । 'ब्रह्मादयो ब्रह्महिताय तप्त्वा पर सहस्र शरदस्तपासि' इति भवभूतिश्च (उ च १ १५) । अत्र सर्वानन्द (टी स पृ ३०)—'गवा पर शत, गवा पर सहस्र-मित्यादि सख्यानमात्रेऽपि नपुसकलिङ्गत्वेन प्रयोगोऽस्ति' इति ।। गणनीय तु गणेयम । गणनार्हद्रव्यस्यैते नामनी । 'गण सख्याने' इति चौरादिकाददन्ताद् धातो 'तव्यत्तव्यानीयर ' (३ १ ९६) इत्यनीयर्प्रत्यये गणनीयम् । तत एव धातो 'अचो यत्' (३ १ ९७) इति यत्प्रत्यये 'क्यस्य विभाषा' (६ ४ ५०) इत्यनुवर्तमानस्य विभाषाग्रहणस्य व्यवस्थितविभाषात्वात 'णेरनिटि' (६ ४ ५१) इति णिलोपाभावे गणेयमिति भवति इति धातुप्रदीपिकायामुक्तम् । 'गण्यमिति तु चिन्त्यम्' इति सर्वानन्द (टी स पृ ३०) । 'गणेरेय ' इति औणादिकसूत्रेण[3] एयप्रत्यये गणेयमिति सुबोधिनीकार ।। सख्याते गणितम् । निश्चितसख्याविशेषस्य क्रमुकादिद्रव्यस्य गणितमिति क्तप्रत्ययान्त (३ २ १०२) नाम ।। अथ सम सर्वमित्यादि यस्य[4] वस्तुन सबन्धिनो लोके वेदे वा प्रसिद्धा यावन्तोऽवयवगुणकर्मा दय सन्ति मात्रयापि वैकल्यरहिता भवन्ति तावत्सबन्ध तद् द्रव्यगुणकर्मादिकमन-न्नमुच्यते । तत्र समादय पूर्णान्तास्त्रयोदश शब्दा स्यु ।। अथ समम—स्यादनूनके । समतीति समम् । '[5]षम ष्टम वैक्लव्ये' । अच् (३ १ १३४) । वैकल्याभावानि-र्भीकत्वेन विरुद्धलक्षणया वैक्लव्य द्रष्टव्यम् । सर्वादिगणेषु पाठादस्य सर्वनामसज्ञा ।। सृतमनेनेति सर्वम्[6] । 'सृ गतौ' । 'सर्वनिघृष्व ' इत्यादिना (उ १ १५९) औणादिकसूत्रेण कर्तृव्यतिरिक्तार्थे वन्प्रत्ययान्त सर्वशब्दो निपातित ।। विशतीति विश्वम् । 'विश प्रवेशने' । 'अशूप्रुषि ' इत्यादिना (उ १ १५७) क्वन्-प्रत्यय ।। अविद्यमान शेषोऽस्येति अशेषम् ।। कृत्यते तिरोधीयते[7] स्वाधारोऽने-नेति कृत्स्नम् । 'कृती [8]वेष्टने' । 'कृत्यशूभ्या क्स्न ' (उ ३ १७) इति क्स्न ।। समस्यते[9] स्वगुणीभूते एकीक्रियत इति समस्तम् । 'असु क्षेपणे' । क्त ।।

निवृत्त [10]खिलमाहृतमस्मादिति निखिलम् ।। अविद्यमानं खिलमत्रेत्यखिलम् ।। निष्क्रान्तं शेषादिति निःशेषम् ।। सगतमग्रम् अग्रभागोऽस्येति समग्रम् ।। कलाभिरवयवैः सह वर्तत इति सकलम् ।। विकलावयवभागो हि खण्डमुच्यते । नास्त्यस्य खण्डमित्यखण्डम् ।। पूर्यते स्वावयवैरिति पूर्णम् । 'पूरी आप्यायने' । वतः (७. २. २७)[11] । पूरितपर्यायोऽपि पूर्णशब्दोऽवगम्यते । आदिशब्देन पुष्कलाविकलाभिन्नादीनां ग्रहणम् ।। 'ऊन परिहाणे' इत्यस्मात् चौरादिकात् पचाद्यचि (३. १. १३४), स्वार्थिके कप्रत्ययः (५. ४. ५) । ततो नञ्समासे (२. २. ६) सति अनूनकम् ।। ६४-५ ।।

[1] शतादिशब्देन Tj2, Tv [2] शतादिकं वर्तत इति मुद्रितग्रन्थे [3] कौमुद्यां न दृश्यते तादृशं सूत्रमुणादिषु [4] Tv adds घटादे [5] षम ष्टम अवैकल्ये इत्यपि धातुपाठ - [6] सरति वस्तुमात्रं इति सर्व । गणपाठादेव प्रवर्तते Gm3, Tv [7] भिद्यते Gm1, छाद्यते Tv [8] छेदने B5, B6 [9] Gm1, Tj2, Tv add स्वावयवार्थे [10] अप्रहृत Tv [11] 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः'

(पा) परः शताद्याः—शतादिकात् । [1]येषां सख्येयानां [2]शतादिकात् परा सख्या ते परःशताद्याः ।

'स जवेन पतन् परःशतानां

पतता व्रात इवारवं वितेने' । (किरा १३ २६)

इति । वैयधिकरण्येनापि प्रयोगः[3], 'परःसहस्रं वरिणा समारे' इति ।। गणनीय तु गणेयम् । सख्यातु योग्यस्य नामनी ।। सख्याते गणितम् । सख्यातनाम ।। अथ सम—स्यादनूनके । समस्तनामानि । [4]सम समौ समे । समस्मै । समेषाम् । समः सर्वार्थे इति नियमादितरार्थेषु सर्वनामसंज्ञा न भवति । तेन समाय समानायेत्यर्थः । [5]समानां सवत्सराणामित्यर्थः । समे साधावित्यर्थः । 'समा स्त्री वत्सरे साधुसर्वतुल्येषु वाच्यवत्' इति वैजयन्ती (पृ २३७, श्लो ६५) ।। अनूनम्—'ग्रण्डनेमोनविवन्ना' । असमस्तनामानि ।। ६४-५ ।।

[1] येषां वैषां A1 [2] शतार्थाः A1 [3] वक्नु गुररम् A1, C1 [4] A1 omits 4 words [5] B3 omits 8 words.

**घनं निरन्तरं सान्द्रं पेलवं विरलं तनु ।**
**समीपे निकटासन्नसंनिकृष्टसनीडवत् ॥ ६६ ॥**
**सदेशाभ्याशसविधसमर्यादसवेशवत् ।**
**उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥ ६७ ॥**

(वि) घनमिति—वायुजलादिना हन्यत इति घनम् । 'हन हिसागत्यो ' । निर्गतमन्तरमत्रेति[1] निरन्तरम् । सह अन्द्यते [2]वध्यत इति सान्द्रम् । 'अदि वन्धने ' । निविडसयोगावयवस्य[3] गाण्यादेर्नामानि ॥ [4]पेल्यते क्षिप्यते शिथिलमयोगावयवेष्विति पेलवम् । 'पिल क्षेपे ' । विशेषेणावयवानामन्तर [5]रातीति विरलम् । 'रा दाने ' । तन्यते विस्तीर्यंत इति तनु । 'तनु विस्तारे '। शिथिलसयोगावयवस्य पटादेर्नामानि ॥ मगता आपोऽत्रेति[6] समीप । निकटति [7]निवध्नातीति निकट । 'कटे वर्पावरणयो '। आसीदन्त्यत्रेत्यासन्न । 'पद्लृ [8]विशरणे ' । सनिकृष्यतेऽस्मादिति[9] सनिकृष्ट । 'कृप विलेखने ' । समान नीडमस्येति सनीड । समानो देशोऽत्रेति सदेशः । [10]अभ्यश्यते व्याप्यत इति अभ्याश. । 'अशू व्याप्तौ ' । समाना विधा अस्येति सविध । समाना मर्यादा अत्रेति समर्याद । समानो वेश प्रवेशोऽत्रेति सवेश । उपगत [11]कण्ठमित्युपकण्ठ । अन्तोऽस्यास्तीति अन्तिक । अभ्यर्द्यते गम्यत इत्यभ्यर्ण । 'अर्द गतौ ' । अभिमुखमग्रमत्रेत्यभ्यग्र । [12]अभित इत्यव्ययम् । समीपस्य नामानि ॥ ६६-७ ॥

[1] अस्येति J2, Pt2　[2] सवध्यते K4, K6　[3] °सयोगावहस्य K6　[4] पिल्यते Pt2　[5] लाति, 'ला दाने' K6　[6] अस्मिनिति Pt2　[7] वध्नाति, 'कट वन्धने ' K6　[8] विशरणादौ J2, K4　[9] Pt2 omits असमात्　[10] अभित अश्यते Pt2, अभ्यस्यत इति अभ्यास इति वा पाठ K5　[11] कण्ठस्य समीपे उपकण्ठम् J2, K4　[12] अभिगच्छतीत्यभित Pt2.

(विव.) घनं निरन्तरं सान्द्रम् । दृढावयवसयोगस्य प्राकाराद्यवयविनो नामानि । निबिडावयवतया वाय्वादिभिर्हन्यत इति घनम् । 'हन हिसागत्योः' । 'मूर्तौ घन.' (३. ३. ७७) इत्यप्प्रत्यय, धातोर्घनादेशश्च ॥ निर्गतमन्तरम् अवयवव्यवधानमस्येति निरन्तरम् ॥ स्वावयवैः सह अन्द्यते बध्यत इति सान्द्रम् । 'अदि बन्धने ' । रक्प्रत्ययः ॥ पेलव विरल तनु । प्रशिथिलावयवसयोगस्य

तूलपटादेर्नामानि । 'पिल क्षेपे' इति धातोर्घञ् (३. ३. १८) । पेलशब्देन शिथिलत्वमुच्यते । पेलं वाति गच्छतीति पेलवम् । कः ॥ स्वगतशैथिल्येन तृणशलाकादिद्रव्यान्तरस्य प्रवेशं विशेषेण रान्ति ददतीति विराः अवयवाः, तान् लातीति विरलम् ॥ तनुशब्दः शरीरे व्युत्पादितः* (२. ६. ७१) ॥

समीपे—अभितोऽव्ययम् । [1]निकटादयश्चतुर्दशशब्दाः समीपे देशतः कालतो वा प्रत्यासन्ने वर्तन्ते । उपकण्ठादिशब्दाना निकटसदेशादिभिरेकार्थत्वलक्षणसादृश्य-प्रतिपादकौ वतिप्रत्ययौ । संगता आपोऽत्र समीपम् । ऋक्पूरब्धू . . . (५. ४. ७४) इत्यादिना अकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६. ३. ९७) इतीत्वम् ॥ [2]नीत्युपसर्गात् कटच्प्रत्यये (५. २. २९) निकटः । अथवा निश्चयेन कटति स्वानन्तरदेशमावृणोतीति निकटः । 'कटे वर्षावरणयोः' । पचाद्यच् (३. १. १३४) ॥ आसीदति स्म आसन्नम् । क्तः ॥ संनिकृष्यते स्म संनिकृष्टम् ॥ समानमेकं नीडं स्थानमस्येति सनीडः । 'वोपसर्जनस्य' (६. ३. ८२) इति समानस्य[3] सभावः । एवं सदेशसविधसमर्यादसवेशशब्दाः [4]वक्तव्याः ॥ अभितोऽश्यते व्याप्यते इत्यभ्याशः । 'अशू व्याप्तौ' । घञ् । तालव्योपध इति केचित् । 'समीपेऽभ्यसनेऽभ्यासः' इति दन्त्योपधेषु रभसवाक्याद् दन्त्योपधोऽयम् । तालव्योपधस्तु चिन्त्य इति सुभूतिचन्द्र-सर्वानन्दौ (टी. स. पृ. ३१) ॥ उपगतः कण्ठमित्युपकण्ठः । [5]'प्रादयो गताद्यर्थे प्रथमया' (वा. २. २. १८) इति समासः ॥ अन्तोऽस्यास्तीति अन्तिकः । मत्वर्थे ठन्प्रत्ययः[6] (५. २. ११५) ॥ [7]अभ्यर्दतीति अभ्यर्णः । 'अर्द गतौ' । क्तः । 'अभेश्चाविदूर्ये' (७. २. २५) इति निष्ठायामिडभावः । 'रदाभ्याम् . . .' इत्यादिना (८. २. ४२) निष्ठानत्वम्, पूर्वदकारस्य च नकारः । 'हलो यमां यमि लोपः' (८. ४. ६४) इति धातुनकारस्य लोपः । 'रषाभ्यां . . .' (८. ४. १) इति णत्वम् ॥ अभिमुखमग्रम् अस्य अभ्यग्रः ॥ अभीत्युपसर्गात् [8]तसिल्प्रत्यये (५. ३. ९) अभित इत्येतदव्ययम् ॥ ६६–७ ॥

[1] निकटादिशब्दचतुष्टयेन तुल्यतया सदेशादिपञ्चकेन च तुल्यतया चत्वारः शब्दा उपकण्ठादय° Gm3, Tj1. [2] 'सम्प्रोदश्च कटच्' (५. २. २९) इति सूत्रे चाद्विकटमित्येव काशिकायां (पृ. ३४) कौमुद्यां च (पृ. २८३). स्वामी तु 'निकट, सम्प्रोदश्चेति कटच्' इत्याह (पृ. २५०) । तदनुसृत्य इतरे व्याख्यातारो भानुजीदीक्षितादयः (पृ. ४२८). [3] समानशब्दस्य Tj1, Tj2. [4] निर्वक्तव्या Tj1 [5] 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' (वा. २. २. १८) इति भा. दी. (पृ. ८२६) [6] 'अत इनिठनौ'. [7] अभ्यर्दने Tj1

[8] तसिप्रत्यये B5, Gm1     * तन्यते आहारेणेति तनु । 'तन विस्तारे'। 'भृमृशी तनि मस्जिभ्य उ' (उ १ ७) इति उ .

(पा) घन निरन्तर सान्द्रम् । निर्गतान्तरनामानि । [1]'दट्टमैनदानिपेल्ल'। 'निविड निविरीस च'। एते द्वे च ।। पेलव विरल तनु । विरलनामानि । [2]'पलुचनिदानि पेल्लु' ।। समीपे—अभितोऽव्ययम् । समीपनामानि । 'समीपाद्या । धर्मे वर्ती तद्वति त्रिषु' इति वैजयन्तीवचनात् (पृ २१२, श्लो १४३) धर्मिणि त्रिलिङ्गा ,[3] धर्मे नपुसकलिङ्गा । समीप पर्वत । पर्वतस्य समीपम् । अभित शब्दो धर्मधर्मिणोरप्यलिङ्ग । अभितो नगरी । नगरीमभित ।। ६६-७ ।।

[1] 'ओत्तैनदि A1     [2] 'पलचैनैनदि' A1     [3] A1 adds भवन्ति

**संसक्ते त्वव्यवहितमपदान्तरमित्यपि ।**
**नेदिष्ठमन्तिकतम स्याद् दूरं विप्रकृष्टकम् ।। ६८ ।।**

(वि) ससक्त इति—ससज्यत इति ससक्तम् । 'षञ्ज सङ्गे' । न व्यवधीयत इति अव्यवहितम् । 'डुधाञ् धारणपोषणयो' । नास्ति तिरस्करणार्थेन [1]पदेनान्तरमिति अपदान्तरम् । अपटान्तरमिति वा पाठ । तदा अपगत पटनान्तरमिति विग्रह । अत्यन्तश्लिष्टस्य नामनी ।। अतिशयेनान्तिक नेदिष्ठम् । समीपतमस्य नाम ।। दु खेनयत[2] इति दूरम् । इण् गतौ' । विप्रकृष्यते समीपादिति विप्रकृष्टम्[3] । दूरनामनी ।। ६८ ।।

[1] व्यवधानमस्येति Pt2     [2] Pt2 adds प्राप्यत     [3] J2 adds 'कृष विलेखन'

(विव) ससक्ते—अपदान्तरमित्यपि । अव्यवहितलग्नस्य नामानि । सज्यते स्म सक्तम् । 'षञ्ज [1]सङ्गे' । क्त । सम्यक् सक्त ससक्तम् । सलग्नमित्यर्थ । [2]वस्त्वन्तरेण यद् व्यवधीयते तद् व्यवहितम् । [3]ततोऽन्यद् अव्यवहितम्[4] । पद पदमात्रपरिमितम् अन्तर मध्यभागोऽस्य नास्तीति अपदान्तरम् । केचित्तु—नास्ति पटेन वस्त्रेणान्तर व्यवधानमस्येति अपटान्तरमिति पठित्वा व्याचक्षते ।। नेदिष्ठमन्तिकतमम् । अन्यापेक्षया अतिशयेनान्तिक सनिकृष्टम् अन्तिकतमम् ।

अतिशयेनान्तिक नेदिष्ठम्[5] । 'अन्तिकबाढयोर्नेदसाधौ' (५. ३. ६३) 'इति अन्तिकशब्दस्य [6]इष्ठनि[7] परतो नेदादेशः । तमप्प्रत्यये अन्तिकतमम् (५. ३. ५५) ॥ स्याद् दूरं विप्रकृष्टकम् । दुःखेन ईयते गम्यत इति दूरम् । 'इण् गतौ' । 'दुरीणो लोपश्च' (उ. २. २२) इति रन्प्रत्ययः । धातोर्लोपश्च । 'रो रि' (८. ३. १४) इत्युपसर्गरेफलोपः । 'ढ्रलोपे ...' (६. ३. १११) इति दीर्घः[8] ॥ द्रव्यान्तरापेक्षया संयुक्तासयोगभूयस्त्वं विप्रकर्षः । तद्युक्तं विप्रकृष्टम्[9] ॥ ६८ ॥

[1] परिष्वङ्गे Tj1 [2] द्रव्यान्तरेण Gm1, Tj1, Tv [3] तस्मात् Tj1, Tv [4] नञ्समास Tj1, Tv [5] इतरापेक्षयात्यन्तसनिकृष्ट Tj1, Tj2. [6] Tj2 adds 'अतिशायने तमबिष्ठनौ' [7] इष्ठन्प्रत्यये Gm3, Tj2 [8] Tj2 adds उपसर्ग°. [9] समीपात् विप्रकृष्यते स्म विप्रकृष्टम् Tj1, Tj2, स्वार्थे कन् विप्रकृष्टकम्

(पा) ससक्ते—अपदान्तरमित्यपि । [1]ससक्तनामानि ॥ नेदिष्ठमन्तिकतमम् । [2]अत्यन्तसमीपनामनी ॥ स्याद् दूर विप्रकृष्टकम् । दूरनामनी ॥ ६८ ॥

[1] अव्यवहितस्य° B3 [2] अतिसमीप° B3

दवीयश्च दविष्ठं च सुदूरं दीर्घमायतम् ।
वर्तुलं निस्तलं वृत्तं वन्धुरं तून्नतानतम् ॥ ६९ ॥

(वि) दवीय इति—अतिशयेन दूर दवीय. । दविष्ठ च । सुतरा दूर सुदूरम् । अत्यन्तदूरनामानि ॥ [1]दृणाति दूरम्थित[2] विदारयतीति दीर्घम् । 'दृ विदारणे' । आयम्यते विस्तीर्यत इत्यायतम् । 'यम उपरमे' । दीर्घस्य नामनी ॥ वर्तते भुवि परिवर्तत इति वर्तुलम् । वृत्त च । 'वृतु वर्तने' । निर्गत तलमस्नेनि निस्तलम् । वर्तुलस्य वन्दुरादेर्नामानि ॥ वध्नात्युन्नतत्वेन सहावनतत्वमिति[3] वन्धुरम् । 'वन्ध वन्धने' । उन्नतानतस्य [4]म्तनादेर्नाम ॥ ६९ ॥

[1] दृणाति K5, K6 [2] दूरस्थितत्वादिति Pt2 [3] अवनत K5 [4] स्थानादे J2

(वियं) दवीयश्च—सुदूरे । इतरापेक्षया अतिशयेन दूरमिति विग्रहे 'द्विवचनविभज्य ...' इत्यादिना (५. ३. ५७) ईयसुन्प्रत्यये 'स्थूलदूर ...'

इत्यादिना (६. ४. १५६) दूरशब्दस्य यणादिलोपे पूर्वस्य च गुणे[1] दवीयः। इष्ठन्प्रत्यये[2] (५. ३. ५५) पूर्ववदेव दविष्ठम्। अतिशयेन दूरं[3] सुदूरम्॥ दीर्घमायतम्। [4]आयामाख्यपरिमाणयुक्तस्य वेणुदण्डादेर्नामनी। दृणाति दूरं दारयतीति दीर्घम्। 'दॄ विदारणे'। बाहुलकात् घञ्[5]॥ दूरदेशमभिव्याप्य यम्यते नियम्यत इति आयतम्। 'यम उपरमे'। क्तप्रत्ययः। आङोऽभिव्याप्तिरर्थः॥ वर्तुलं निस्तलं वृत्तम्। [6]कुत्रापि समप्रदेशरहितस्य [7]कन्दुककपित्थफलादेर्नामानि। भुवि [8]वर्तते नैकत्र तिष्ठतीति वर्तुलम्। 'वृतु वर्तने'। बाहुलक उलच्प्रत्ययः॥ तलति प्रतितिष्ठतीति तलशब्देन समदेशो विवक्षितः। 'तल प्रतिष्ठायाम्'। निर्गतं तलमस्मादिति निस्तलम्॥ क्तप्रत्यये वृत्तम् (३. ४. ७२)। [9]बिम्बग्रहणभागस्य तलयुक्तत्वेऽपि दर्पणादावश्रिरहितत्वसादृश्याद् वृत्तशब्दप्रयोगः॥ बन्धुरं तून्नतानतम्। यदेकमेव स्वभावादुन्नतम् उपाधिवशात् प्रदेशान्तरे चानतम् ईषन्नम्रं लज्जानतमस्तकादि तद् बन्धुरम्[10]। बध्नाति स्वैकदेशमवस्थान्तरं प्रापयतीति बन्धुरम्। 'बधि संयमने'। उरच्प्रत्ययः (उ. १. ४३)। बन्धूरमिति दीर्घमध्योऽप्यस्ति। तथा च रभसः—'बन्धूरबन्धुरौ रम्ये नम्रे हंसे च बन्धुरः' इति॥ ६९॥

[1] Tj2, Tv add अवादेशे च　[2] Tj1, Tj2 add सति　[3] इतरापेक्षया Tj2, Tv　[4] स्वगतपृथुत्वापेक्षया भूप्रदेशस्य सयोगातिशयोपलक्षितव्यायामाख्यपरिमाणयुक्तस्य नामनी Tj1, Tj2　[5] 'अतो दीर्घो यञि' इति सूत्रनिर्देशात् साधु Tj1. [6] Gm1, Tj2 add समन्ततस्तुल्यारोहपरिणाहे　[7] °बिल्वफलादौ वर्तुलादित्रयम् Gm1, Tj1, Tj2　[8] विवर्तते Tj2　[9] ऊर्ध्वाधोभागयो समदेशरहिते दर्पणादौ अश्रिरहितत्वसाम्याद् वर्तुलवृत्तशब्दयो प्रयोग Tj1, Tv.　[10] Gm1, Tj1 add स्यात्। फलभारबन्धुरशाखास्तरव इति। लज्जाया—बन्धुरवदना इत्यादि

(पा) दवीयश्च। सान्तोऽयम्। दविष्ठ च सुदूरे। अतिदूरनामानि॥ दीर्घमायतम्। दीर्घनामनी। 'निङ्वु'[1]॥ वर्तुल निस्तल वृत्तम्। वर्तुलनामानि॥ अनुक्तम्—'सुवृत्त परिमण्डलम्'।[2] अतिवर्तुलनामनी।[3] बन्धुर तून्नतानतम्। मध्योन्नत पार्श्वनत च यत् तद्बन्धुर स्यात्। अनुक्तम्—'स्यपुट विषमोन्नतम्'। मध्यनत पार्श्वोन्नत स्यपुट स्यात्[4]॥ ६९॥

[1] B3 omits　[2] जनतिलरवद् वृत्त° A1　[3] A1 adds चन्द्रवत्.　[4] यदस्ति वस्तु तत A1

उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने ।
न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनतानतम् ।। ७० ।।

(वि.) उच्चेति—उच्चीयत ऊर्ध्वमुपचीयत इत्युच्च । 'चिञ् चयने' । प्राश्नुते प्रकर्षेणोर्ध्वमिति प्राशुः । 'अशू व्याप्तौ' । [1]उन्नमत्यूर्ध्वमित्युन्नतः[2] । 'णम प्रह्वत्वे शब्दे च' । उद्गतमग्रमस्येत्युदग्रः । उच्छ्रीयत ऊर्ध्वं श्रयत इत्युच्छ्रितः । 'श्रिञ् सेवायाम्' । तुञ्ज्यते वाय्वादिना भज्यत इति तुङ्गः । 'तुजि हिंसायाम्' । उन्नतस्य प्रासादादेर्नामानि ।। वामो [3]वल्गुत्वमस्यास्तीति वामनः । निम्नमञ्चति गच्छतीति न्यक् । 'अञ्चु गतौ' । [4]नीचैस्त्व विद्यतेऽस्येति नीचः । खर्वत्यवयव-दार्ढ्येन [5]दृप्यतीति खर्वः । 'खर्व दर्पे' । दैर्घ्याभावाद् ह्रसतीति ह्रस्वः । 'ह्रस शब्दे अल्पत्वे च' । अनुन्नतस्य नामानि ।। अवनतमग्रमस्येत्यवाग्रम् । अधो नमतीत्यवनतम्[6] । आ ईषन्नतम् आनतम् । अधोमुखस्य नामानि ।। ७० ।।

[1] उन्नम्यते J2, K2, K5 [2] K5 adds उन्नीयते [3] वटुत्वम् K2.
[4] नीचत्व K6. [5] तुप्यति J2, K2. [6] अवाङ्नतम् K5.

(विव.) उच्चप्रांशू—तुङ्गे । [1]उत्सेधाख्यपरिमाणयुक्ते[2] [3]तालसालादौ उच्चादिषट्कं वर्तते । उच्चीयते ऊर्ध्वं चीयत इत्युच्चः । 'चिञ् चयने' । [4]'अन्येष्वपि दृश्यते' (३. २. १०२) इति डप्रत्ययः ।। प्रकृष्टा उन्नतत्वेन प्रकाशमाना अंशवोऽवयवा अस्येति प्रांशुः ।। उन्नमति स्म उन्नतः । 'णम प्रह्वत्वे शब्दे' । कर्तरि क्तः (३. ४. ७२) । [5]उद् ऊर्ध्वं गतमग्रमस्येत्युदग्रः । ऊर्ध्वदेशं श्रयति स्म उच्छ्रितः । 'श्रिञ् सेवायाम्' । क्तः ।। तुञ्जयते वाय्वादिना हिंस्यत[6] इति तुङ्गः । 'तुजि हिंसायाम्' । कर्मणि घञ्प्रत्यये (३. ३. १९) 'चजोः कु घिण्यतोः' (७. ३. ५२) इति कुत्वम् । विशेष्यनिघ्नेषु कामचारात् पुंलिङ्गनिर्देशः[7] कृतः ।। अथ वामने—ह्रस्वाः स्युः । [8]द्रव्यान्तरापेक्षया स्वल्पोच्छ्राययुक्तस्य नामानि । नीत्युपसर्गो निकर्षवचनः । 'अञ्चु गतौ' । निकृष्टं अञ्चतीति न्यङ् । 'ऋत्विग्दधृक्...' इत्यादिना (३. २. ५९) अञ्चतेः क्विन् प्रत्ययः । 'क्विन्प्रत्ययस्य कुः' (८. २. ६२) इति कुत्वम् । चकारान्तः । स्त्रियां तु ङीपि नीची[9] ।। नीचैःशब्देन स्वल्पपरिमाणमुच्यते । तद्योगाद् अर्शआद्यचि (५. २. १२७) अव्ययानां भमात्रे टिलोपे (वा. ६. ४. १४४) नीचः ।

नीचशब्दोऽकारान्तः पामरेऽपि व्युत्पादितः (२. १०. १६)। यथा हिरण्यलोहवाहिनीलतादयः शब्दाः सामान्यविशेषोभयरूपार्थाः तद्वदिहापि ॥ मनुष्यवर्गे 'खर्वो ह्रस्वश्च वामनः' इति मनुष्यविशेषे (२. ६. ४६) दर्शिताः। तत्रैव कृतनिर्वचनाश्च[10]। इह तु स्वल्पोच्छ्राययुक्तद्रव्यमात्रवचनत्वेनोच्यन्त इति ज्ञेयम् ॥ अवाग्रेऽवनतानतम्। अवाग्रेऽधोमुखे द्वयम्। अवनतमग्रमस्येति अवाग्रम्। अवनमति स्म अवनतम्। क्तः। ईषन्नमति स्म आनतम्। आङ् ईषदर्थः। अवनतम् आननं मुखमस्येति अवनताननमिति सुभूतिचन्द्रः ॥ ७० ॥

[1] उत्सेधार्थ° Gm1, Tv [2] Tj1, Tj2 add द्रव्ये [3] °सालवृक्षादौ Tj2 Tv. [4] अन्येभ्योऽपि B5, Tv. [5] उदित्युपसर्गं ऊर्ध्वशब्दार्थे वर्तत इति धातुवृत्तौ Tv [6] Gm1, Tj1, Tj2 add भज्यते [7] पुलिङ्गत्वेनानुशासन कृतम् Gm1, Tj2 [8] अत्र वामनखर्वह्रस्वशब्दास्त्रयोऽपि द्रव्यमात्रवचना तद्विशेषवचनाश्च Tj2, Tv [9] नीचाहस्तेन निमृज्यात् इत्यादौ प्रयोगान्तरेऽपि Tj1, Tj2 [10] खर्वति। 'खर्व गतौ'। पचाद्यच् ॥ ह्रसति। 'ह्रस शब्दे'। बाहुलकाद्वन् ॥ वामयति। 'टुवम उद्गिरणे'। ल्युट

(पा) उच्चप्रांशु—तुङ्गे। तुङ्गनामानि ॥ अथ वामने—ह्रस्वा स्यु। वामननामानि[1] ॥ अवाग्रेऽवनतानतम्। [2]अवनतागनामानि[3] ॥ ७० ॥

[1] A1 adds 'पोट्टिवाडु'. [2] अवागताग्र° A1 [3] A1 adds 'वगिनदि'

अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम्।
आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि ॥ ७१ ॥

(वि) अरालमिति—अरा वेप्टनान्यस्य सन्तीत्यरालम्। [1]वर्ज्यते आर्जवमनेनेति वृजिनम्। 'वृजी वर्जने'। जहात्यार्जवमिति जिह्मम्। 'ओहाक् त्यागे'। ऊर्मयो [2]वक्रभावा सन्त्यस्यति ऊर्मिमत्। कुञ्चति वक्रतया[3] अल्पीभवतीति कुञ्चितम्। 'कुच गतिकौटिल्याल्पीभावयो.'। नमतीति नतम्। 'णम प्रह्वत्वे शब्दे'। ईषद्विद्धमाविद्धम्[4]। 'व्यध ताडने'। कुटति कौटिल्य[5] प्राप्नोतीति कुटिलम्। 'कुट कौटिल्ये'। भुजतीति भुग्नम्। 'भुज कौटिल्ये'। वेल्लति [6]श्लक्ष्णतया चलतीव [7]तिष्ठतीति वेल्लितम्। 'वेल्ल चलने'। वञ्चति कौटिल्य प्राप्नोतीति [8]वक्रम्। 'वञ्चु गतौ'। कुटिलस्य केशादेर्नामानि ॥ ७१ ॥

[1] वृज्यते K5, Pt2 [2] भङ्गा Pt2 [3] कुटिलतया J2, K5 [4] आविध्यत इति K3, K4 [5] K1, Pt2 omit. [6] चलति कुटिलतया Pt2 [7] K4 omits [8] वङकनाद् वक्रम् । 'वकि कौटिल्ये गतौ च' K3, K6.

(विव.) अरालं—वक्रमित्यपि । अरालमित्यादिश्लोकेन एकादशनामानि आर्जवविरुद्धावयवसंस्थाने[1] वक्रनाम्ना प्रसिद्धे आन्दोलिकादण्डादौ वर्तन्ते । अरमत्यर्थमल्यते कार्यानुपयोगित्वेन निवार्यत इत्यरालम् । 'अल भूषणपर्याप्तिवारणेषु' ।। इह वृजिनशब्देन पापवाचिना तद्गत हेयत्व लक्ष्यते । तद्योगाद् अर्शआद्यच्[2] (५. २. १२७) । वृजिनम् ।। जहाति त्यजत्यार्जवमिति जिह्मम् । 'ओहाक् त्यागे' । मन्प्रत्ययः[3] (उ. १. १४६) ।। अवयवसंकोचनिबन्धनास्त्ववक्रसंकोचरूपावलय एव सादृश्यात् ऊर्मिशब्देन विवक्षिताः । तद्योगाद् ऊर्मिमत् । मतुप् (५. २. ९४) ।। कुञ्चति अवयवसंकोचेनाल्पीभवतीति कुञ्चितम् । 'कुञ्च क्रुञ्च गतिकौटिल्याल्पीभावयोः' । क्तः ।। नमति प्रह्वीभवतीति नतम् । कर्तरि क्तः (३.४.७२) ।। शरादिभिरीषद्विद्धः आविद्धः । 'व्यध ताडने' । क्तः[4] । स हि दुःसहव्यथाभराद् ईषत्सकुचितावयवो भवति । तत्सादृश्यादिदमपि[5] आविद्धमित्युच्यते ।। अत्र कुटशब्देन गृहवाचिना सादृश्यात् सकुचितावयवभागो[6] विवक्षितः । 'कुट कौटिल्ये' । ततो मत्वर्थे पिच्छादित्वाद्[7] इलच् (५. २. १००) कुटिलम् ।। भुजति कुटिलो भवतीति भुग्नम् । 'भुजो कौटिल्ये' । 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वम् ।। वेल्लति स्वसंनिवेशात् चलतीति वेल्लितम् । 'वेल्ल चलने' । क्तः ।। वञ्चति अग्रावयवैर्मूलभाग गच्छतीति वक्रम् । 'वञ्चु गतौ' । 'स्फायितञ्चिवञ्चि...' इत्यादिना (उ. २. १३) रक्प्रत्ययः । अनुनासिकलोपः[8] । न्यङ्क्वादिः (७. ३. ५३) ।। ७१ ।।

[1] सस्थानयोगे Tj1 [2] °अचि Gm1, Tj1 [3] 'जहाते सन्वदालोपश्च'. [4] 'ग्रहिज्या...' (६ १ १६) इति सप्रसारणम् [5] Tj1 adds कुटिलमपि [6] °भाग उच्यते Gm1, Tj1. [7] काशिकाया कौमुद्या च पिच्छादिपाठे कुटशब्दस्यादर्शनात् 'सलिकलि भूम्य इलच्' (उ १ ५७) इत्यनेन बाहुलकात् कुटिलमिति सुवचम् [8] Gm1 omits

(पा) अराल—वक्रमित्यपि । कुटिलनामानि । [1]'डोवनदि' । अनुयतम्—'विकट तु विरूपकम्' । [2]अतिवक्रनामनी ।। ७१ ।।

[1] B3 omits [2] अत्यन्त° A1, C1.

**ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाकुलौ ।**
**शाश्वतस्तु ध्रुवो नित्यसदातनसनातनाः ।। ७२ ।।**

(वि) ऋजाविति—ऋज्यते आदरेण[1] सपाद्यत इति ऋजु । 'ऋज गतिस्थानार्जनोपार्जनेषु' । न जिह्म इत्यजिह्म [2] । प्रकृष्टोऽवनत्वगुणोऽस्येति प्रगुण । ऋजुनामानि ।। व्यस्यते विपर्यस्यत[3] इति व्यस्त । [4]प्रकृष्टगुणयोगाभावाद् अप्रगुण । आकोलति [5]एकीभवतीत्याकुल । 'कुल सस्त्याने बन्धुषु च' । व्याकीर्णस्य नामानि ।। शश्वद् वर्तमान शाश्वत । ध्रुवतीति ध्रुव । 'ध्रुव स्थैर्ये' । नियत भवो[6] नित्य । सदा भव सदातन । सनातनश्च । विनाशरहितस्य नामानि ।। ७२ ।।

[1] आधारेण उपयुज्यते $K_5$, आदरेणैवार्ज्यते $J_2$ [2] न जिह्मयति $K_4$, जिह्मो न भवति $Pt_2$ [3] $Pt_2$ omits, but adds 'असु क्षेपणे' [4] न विद्यते प्रकृष्टगुणोऽस्य $J_2$, $Pt_2$ [5] ईषत् सस्त्यानो भवति $Pt_2$ [6] भवतीति $J_2$

(विव) ऋजावजिह्मप्रगुणौ । वक्रविरुद्धस्य [1]दीर्घवेणुदण्डादेर्नामानि । [2]ऋज्यते कार्योपयोगित्वेन सपाद्यत इति ऋजु. । 'ऋज गतिस्थानार्जनोपार्जनेषु' । औणादिक कुप्रत्यय (उ १. २७) ।। जिह्माद् भिन्नोऽजिह्म ।। प्रकृष्टो गुण उपादेयत्वलक्षणोऽस्येति प्रगुण ।। व्यस्ते त्वप्रगुणाकुलौ । [3]विप्रकीर्णसनिवेशस्य[4] नामानि । व्यस्यते विरुद्ध क्षिप्यत इति व्यस्तम् । 'असु क्षेपणे' । कर्मणि क्त. ।। रमणीयत्वाभावेन प्रकृष्टगुणाभावाद् अप्रगुण ।। आ समन्तात् कोलति सस्त्यानो भवतीति आकुल । 'कुल सस्त्याने'[5] । मूलविभुजादि[6] (वा. ३. २ ५) ।। शाश्वतस्तु—सनातना । विनाशरहितस्य नामानि[7] । शश्वदिति कालत्रयवाचकमव्ययम् । तत्र भवो वर्तमान शाश्वत । 'तत्र भव' (४. ३. ५३) इत्यण् । 'आराच्छश्वतोर्नेष्यते' इति निषेधात् 'अव्ययाना भमात्रे—' (वा. ६. ४. १४४) इति टिलोपस्याभाव ।। [8]ध्रुवनित्यशब्दौ प्रथमकाण्डे व्युत्पादितौ (१. ३. २०, १. १. ६७) ।। सदासनाशब्दौ कालत्रयवचनाव्ययेषु वक्ष्येते (३ ४ २२, १७) । ताभ्यामुभाभ्यामपि भवार्थे 'सायचिरप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' (४. ३. २३) इति ट्युप्रत्यये तुडागमे च सदातन, सनातनश्च । शाश्वतिकशब्दोऽप्यत्र ।। ७२ ।।

[1] °दण्डादौ ऋज्वादित्रय वक्रव्यतिरिक्ते $T_{J1}$, Tv [2] कौमुद्या तु (पृ. ४६४)—'अर्ज अर्जने', अस्य ऋजिरादेश । अर्जयति गुणान् ऋजु । 'अर्जिदृशि...' इत्यादिना कु (उ १ २७) [3] व्याकीर्ण° $Gm_1$, $T_{J1}$ [4] °सनिवेशे केशवेशादौ व्यस्तादित्रयम् $Gm_1$, $T_{J1}$. [5] Tv adds वन्धुपु च [6] इगुपधज्ञाप्रीकिर क (३ १ १३५) इति भा दी (पृ ४३०) [7] शाश्वतादिपञ्चक विनाशरहिते परमाण्वादौ वर्तते Tv. [8] ध्रुवति । 'ध्रुव स्थैर्ये'। 'इगुपध ' इति क , नियत भव । 'त्यब् नेर्ध्रुवे' (वा. ४ २ १०४)

(पा) ऋजावजिह्मप्रगुणौ । ऋजुनामानि । [1]'चक्कनिदि'। व्यस्ते त्वप्रगुणाकुलौ । व्यस्तनामानि । [1]'वेरे वुडेदि'। अनुक्तम्—'करम्व कम्वरो मिश्र.'। मिश्रनामानि । [1]'कलशिनदि'। शाश्वतस्तु—सनातनाः । [2]स्थिरनामानि ॥ ७२ ॥

[1] B3 omits. [2] ध्रुवस्य° A1.

**स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः ।**
**कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः ॥ ७३ ॥**

(वि) स्थास्नुरिति—तिष्ठति [1]चिरकाल ताच्छील्येनेति स्थास्नु । 'ष्ठा गतिनिवृत्तौ'। अतिशयेन स्थिरः स्थिरतरः। स्थेयाश्च । [2]चिरकाले वर्तमानस्य नामानि ॥ कूटेन निश्चलत्वेन तिष्ठतीति कूटस्थ.[3]। बाल्याद्यवस्थारहितत्वेन[4] भूतभविष्यद्वर्तमानकालव्यापितस्यात्मादेर्नाम ॥ तिष्ठति ताच्छील्येनेति स्थावरः । जङ्गमादितरस्य नाम ॥ ७३ ॥

[1] चिर काल $K_5$, $K_6$ [2] स्थिरकाले $K_2$, $K_4$; स्थिरकालेन $K_6$. [3] $J_2$, $K_2$, $K_5$ add 'ष्ठा गतिनिवृत्तौ'. [4] °राहित्येन $J_2$, $K_4$.

(विव.) स्थास्नुः—स्थेयान् । [1]आशुविनाशिजलबुद्बुदापेक्षया चिरकालावस्थायिनः पाषाणादेर्नामानि । चिरं[2] तिष्ठतीति स्थास्नुः । 'ग्लाजिस्थश्च ग्स्नुः'[3] (३. २. १३९) इति [4]ताच्छील्यार्थे ग्स्नुप्रत्ययः ॥ इतरापेक्षया अतिशयेन स्थिर इति विग्रहे 'द्विवचनविभज्य...' इत्यादिना (५. ३. ५७) तरप्प्रत्यये स्थिरतरः ॥ ईयसुन्प्रत्यये (५. ३. ५७) 'प्रियस्थिर...' इत्यादिना (६. ४. १५७) स्थिरशब्दस्य स्थादेशे च स्थेयान् ॥ एकरूपतया—कूटस्थः । एकेनैव

स्वभावेन निरवधिकालत्रयव्यापको[5] नित्यचैतन्यादिः कूटस्थ इत्युच्यते । 'कूटं निश्चलम्' इति नानार्थे वक्ष्यते (३. ३. ३७) । नैश्चल्येन स्वभावान्तरराहित्येन तिष्ठतीति कूटस्थः (३. २. ४)[6] ॥ स्थावरो जङ्गमेतर. । [7]जङ्गमात् चलनस्वभावात् मनुष्यादेरन्य पर्वतादि. स्थावरः स्यात् । तिष्ठति ताच्छील्येनेति स्थावरः । 'स्थेशभास ...' इत्यादिना (३. २. १७५) वरच् ॥ ७३ ॥

[1] घटपटाद्यपेक्षया चिरकालस्थायिनि पाषाणादौ स्थास्नुप्रभृतित्रयम् Gm1, Tv. [2] चिरकाल Gm1 [3] क्स्नु° B5, Tj2 [4] ताच्छीलिके Gm1, Gm3 [5] °व्यापके नित्यचैतन्यादौ B6, Gm1 [6] 'सुपि स्थ' इति क [7] मनुष्यपश्वादेरन्य पार्थिव पर्वतादि स्थावर स्यात् B5, Tv

(पा) स्थास्नु—स्थेयान । अतिस्थिरनामानि ॥ एकरूपतया—कूटस्थ । एकस्वरूपतया [1]कालव्यापि आकाशादिद्रव्य कूटस्थ स्यात् ॥ स्थावरो जङ्गमेतर । [2]जङ्गमादिनर शैलवृक्षादि स्थावर स्यात् ॥ ७३ ॥

[1] सकलकालेषु वर्तमान B3 [2] वृक्षादिद्रव्यनाम A1, C1

**चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् ।**
**चलनं कम्पनं कम्प्रं चलं लोलं चलाचलम् ॥ ७४ ॥**
**चञ्चलं तरलं चैव पारिप्लवपरिप्लवे ।**

(वि) चरिष्ण्विति—चरति ताच्छील्येनेति चरिष्णु । चरम् । चराचर च । 'चर गतिभक्षणयो' । कदाचित् [1]कुटिल गच्छतीति जङ्गमम् । 'गम्लृ गतौ' । त्रस्यति [2]चिरचलत्वादिति त्रसम् । 'त्रसु उद्वेगे'[3] । इङ्गति चलतीति इङ्गम्[4] । 'इगि गतौ' । गमनशीलस्य नामानि ॥ चलति ताच्छील्येनेति चलनम् । 'चल कम्पने' । कम्पते ताच्छील्येनेति कम्पनम् । कम्प्र च । 'कपि चलने' । चलनशीलस्य नामानि ॥ चलतीति चलम् । चलाचल च । [5]लोडति चलतीति लोलम् । 'लुड विलोडने' । चञ्चतीति चञ्चलम् । 'चञ्चु गतौ' । तरतीति[6] तरलम् । 'तॄ प्लवनतरणयो.' । परिप्लवते गच्छतीति पारिप्लवम् । परिप्लव च । 'प्लुङ् गतौ' । चलतो वृक्षादेर्नामानि ॥ ७४ ॥

[1] भृश Pt2. [2] भीतवत् K5. [3] उद्वेजने J2, K8. [4] Pt2 adds भृश चरतीति चराचरम्। 'चर गतिभक्षणयो'. [5] लुडयते वाय्वादिनेति लोलम्। डलयोरेकत्वात् Pt2. [6] K5 adds चरति.

(विव.) चरिष्णु—चराचरम्। चलनस्वभावस्य [1]मनुष्यपश्वादेर्नामानि। चरतीति चरिष्णु[2]। 'अलङ्कृञ्निराकृञ्...' इत्यादिना (३. २. १३६) इष्णुच्॥ कुटिलं गच्छतीति जङ्गमम्। 'गम्लृ गतौ'[3]। 'नित्यं कौटिल्ये गतौ' (३. १. २३) इति यङ्। 'सन्यङोः' (६. १. ९) इति द्विर्वचनम्[4]। 'नुगतोऽनुनासिकान्तस्य' (७. ४. ८५) इति नुक्। अस्य चानुस्वारपरसवर्णौ। पचाद्यच् (३. १. १३४)। 'यङोऽचि च' (२. ४. ७४) इति यङो लुक्॥ चरतीति चरम्। पचाद्यच् (३. १. १३४)। त्रस्यतीति त्रसम्। 'त्रसी उद्वेगे'। अच्॥ इङ्गति गच्छतीति इङ्गम्। 'इगि गतौ'। अच्॥ चरतीति चराचरम्। 'चरिचलिपति...' (वा. ६. १. १२) इति पचाद्यचि विकल्पेन द्विर्वचनागागमयोः चराचरम्। [5]द्विर्वचनाभावपक्षे चरम्॥ चलनं—कम्प्रम्। [6]चलनस्वभावस्य नामानि। 'चल गतौ', 'कपि चलने' इत्याभ्यां धातुभ्यां 'चलनशब्दार्थादकर्मकाद्युच्' (३. २. १४८) इति ताच्छील्यार्थे कर्तरि युच्प्रत्यये चलनम्, कम्पनम्। 'नमिकम्पि...' इत्यादिना (३. २. १६७) रप्रत्यये कम्प्रम्॥ चलं—परिप्लवे। [7]कादाचित्कचलनयुक्तस्य हस्तादेर्नामानि। 'चल गतौ' इति धातोः पचाद्यचि (३. १. १३४) चलम्॥ [8]लोलति लोलम्। लुड इत्येके पठन्ति। धातोः पचाद्यचि लडयोरभेदः। लुडतिरपठितो धातुरिति माघव्याख्याने वल्लभाचार्यः[9] (शिशु. ३. ७२)॥ चलतीति चलाचलम्। [10]चराचरशब्दवत्॥ चञ्चतीति चञ्चलम्। 'चञ्चु गतौ'। औणादिकः कलच्प्रत्ययः। तरति [11]देशान्तरं प्रति प्लवत इति तरलम्। 'तॄ प्लवनतरणयोः'। अलच्प्रत्ययः॥ [12]परिप्लवते, 'प्लुङ् गतौ' इति धातोः परिपूर्वात् पचाद्यचि (३. १. १३४) परिप्लवम्। ततः स्वार्थिके अण्प्रत्यये (५. ४. ३८) पारिप्लवम्॥ ७४॥

[1] °पश्वादौ चरिष्ण्वादिपट्कम् B5, Gm1. [2] B5, Gm1 add 'चर गतौ'. [3] Gm1 adds सृप्लृ [4] द्वित्वम् Tv, 'स्वाम्यादिस्तु भृशार्थ एव यङमिच्छति' इति भानुजीदीक्षित (पृ ४३१); 'अकौटिल्येऽप्यभिधानाद् यङ' इति मुद्रितस्वामिव्याख्याने (पृ २५२) [5] द्विर्वचनादि° B5, Gm1. [6] चलनादित्रय चलनस्वभावे Tv [7] चलादिसप्तक हस्तादौ B5 [8] लोडति B5, B6. [9] काश्मीरमुद्रितवल्लभव्याख्याने (३ ७१) न दृश्यते [10] चराचरवत् शब्दनिर्वाह B5 [11] प्रदेश° B5. [12] परित प्लवते गच्छतीति B5, Tv.

(पा.) चरिष्णु जङ्गमचरम् । [1]एकवद्भावाद् नपुंसकत्वम् । त्रसमिङ्गम् । संचरणशीलस्य मनुष्यादेर्नामानि ॥ चराचरं । स्थावरजङ्गमोभयनाम[2] । 'उभयं [3]तच्चराचरम्' इति वैजयन्ती (पृ. २०६, श्लो. ६२) ॥ चलनं—परिप्लवे । [4]चलननामानि ॥ ७४ ॥

[1] अत्रैकवद्भावो विभाषा A1. [2] °उभयद्रव्य° A1. [3] 'उभय तु' इति मुद्रित-ग्रन्थे. [4] चल° A1, C1.

अतिरिक्तः समधिको दृढसंधिस्तु संहतः ॥ ७५ ॥
कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।
जठरं मूर्तिमन्मूर्तं प्रवृद्धं प्रौढमेधितम् ॥ ७६ ॥

(वि.) अतिरिक्त इति—अतिरिच्यत इत्यतिरिक्तः । 'रिचिर् [1]विरेचने' । सम्यगधिकः समधिकः । क्लृप्ताधिकस्य नामनी ॥ सहन्यते [2]संधिप्रदेशेषु संश्लिष्यत इति संहतः । 'हन हिंसागत्योः' । दृढमधिहस्तपादाद्यवयवस्य नामनी ॥ कृणोति पीडयतीति कर्कशम्, [3]शर च । 'कृञ् हिंसायाम्' । कक्खट इति वा पाठ. । तदा 'कक्ख हसने' इति धातु । कठति अनेकक्लेशेन[4] जीवतीति कठिनम् । कठोर च । 'कठ कृच्छ्रजीवने' । निन्दितमिव तिष्ठतीति निष्ठुरम्[5] । 'ष्ठा गतिनिवृत्तौ' । दृहतीति दृढम् । 'दृहि वृद्धौ' । जीर्यतेऽनेनेति जठरम् । जरठमिति वा पाठ. । 'जॄष् वयोहानौ' । मूर्ति. [6]काठिन्यमस्यास्तीति मूर्तिमत् । मूर्तं च । कठिनद्रव्यस्य नामानि ॥ [7]प्रवर्धत इति प्रवृद्धम् । 'वृधु वृद्धौ' । प्रकर्षेण [8]वृद्धिं वहतीति प्रौढम् । 'वह प्रापणे' । एधत इत्येधितम् । 'एध वृद्धौ' । प्रवृद्धस्य[9] नामानि ॥ ७५-६ ॥

[1] रेचने K5. [2] Pt2 omits. [3] कृन्ततीति, 'कृती छेदने' Pt2 [4] K5, Pt2 omit अनेक. [5] निशि न तिष्ठति K5; नितरा Pt2. [6] कायम् K5. [7] प्रवर्धयति K4, K5 [8] ऊढ Pt2. [9] J2, K8 add पैत्र्यादे.

(विव.) अतिरिक्तः समधिकः । [1]स्वापेक्षितपरिमाणादभ्यधिकपरिमाण-द्रव्यस्य[2] नामनी । अतिरिच्यते स्म अतिरिक्तः । 'रिचिर् विरेचने'[3] । क्तः (३. २. १०२) । अपेक्षितादपि सम्यगधिकः समधिकः ॥ दृढसंधिस्तु संहतः । दृढावयव-संधानस्य शरीरादेर्नामनी । दृढः संधिर्यस्य दृढसंधिः । सहन्यते स्म संहतः । 'हन

हिंसागत्योः'। क्तः ॥ कर्कश—जठर मूर्तिमन्मूर्तम् । [4]कर्कशादिनवकम् अतिनिबिडावयवसंयोगारब्धे दारुपाषाणादौ वर्तते । कर्को नाम दृढगात्रोऽश्वविशेषः। तमपि श्यति तनूकरोति स्वावयवसंयोगेनेति कर्कशम् । 'शो तनूकरणे' । कप्रत्ययः (३. २. ३) । कठति क्लेशेन जीवति, दुःखकरत्वादस्येति कठिनम् । 'कठ कृच्छ्रजीवने' । इनच्प्रत्ययः (उ. २. ५१) । तत एव धातोः 'कठिचकिभ्यामोरन्' (उ. १. ६७) इत्योरन्प्रत्यये कठोरम् । घातुके क्रूर उक्तः (श्लो. ४७) । परपीडाया निष्ठां [5]तात्पर्यं रातीति निष्ठुरम् । पृषोदरादिः ॥ 'दृढ.स्थूलबलयोः' (७. २. २०) इति निपातनाद् बलवति दृढशब्दो निपातितः[6] ॥ [7]जठरशब्दः कुक्षौ व्युत्पादितः (२. ६. ७७) ॥ रेफोपधोऽय शब्दः । अत एव 'जठरः कठिनेऽपि स्यात्' इति नानार्थवर्गे रेफान्तेषु वक्ष्यते (३. ३. १८६) ॥ मूर्तिः काठिन्यमस्यास्तीति मूर्तिमत् । मतुप् (५. २. ९४) ॥ अर्शआद्यचि (५. २. १२७) मूर्तम्[8] ॥ प्रवृद्धं प्रौढमेधितम् । पूर्वावस्थातो महत्त्वमापन्ने प्रवृद्धादित्रयम् । प्रकर्षेण वर्धते स्म प्रवृद्धम् । 'वृधु वृद्धौ' । क्तः ॥ प्रकर्षेणोह्यते स्म प्रौढम् । 'वह प्रापणे'। क्तप्रत्ययः । 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' (वा. ६. १. ८९) इति वृद्धिः ॥ एध्यते स्म एधितम् । 'एध वृद्धौ' । कर्मणि क्तप्रत्ययः । ७५-६ ॥

[1] °अप्यधिक° B5, Tv [2] °परिमाणस्य दार्वादेरेते द्वे B5, B6 [3] रिक्तीकरणे B5, Gm3 [4] B5, Tv add अत्र त्रिपाद्या [5] B5, B6 omit [6] किमत्र निपात्यते । दृहे क्तप्रत्यये इडभाव । हकारनकारयोर्लोप । परस्य ढत्वम्' इति काशिका (पृ ३०३) [7] जरठ इति पाठे 'जीर्यति, "जॄष् वयोहानौ," बाहुलकादठच्' इति भा दी (पृ ४३२) [8] मूर्च्छति मूर्तम् इति स्वामी (पृ २५२), मूर्च्छति स्म। क्त । 'राल्लोप' (६. ४ २१) इति छलोप । 'न ध्याख्यापॄमूर्च्छिमदाम्' (८ २ ५७) इति निष्ठातकारस्य न नकारादेश

(पा) अतिरिक्त समधिक । अत्यधिकनामनी । [1]'वेग्गलमैनदि' । 'उल्वण चोत्कटोद्रेकौ' । एतानि त्रीणि च ॥ दृढसधिस्तु सहत । दृढसयोगवतो[2] नामनी । 'विग्गिलाकट्टिनदि' । अनुक्तम्—'श्लथ शिथिलमित्यपि'[3] । तद्विपरीतनामनी ॥ कर्कश—मूर्तम् । कठिननामानि ॥ प्रवृद्ध—एधितम् । [4]प्रवृद्धनामानि ॥ ७५-६ ॥

[1] B3 omits [2] दृढबद्ध° A1. [3] A1 adds 'वदलैनदि'. [4] अभिवृद्ध° A1.

पुराणे प्रतनप्रत्नपुरातनचिरंतनाः ।
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ ७७ ॥
नूत्नश्च सुकुमारं तु कोमलं मृदुलं मृदु ।

(वि) पुराण इति—पुरा [1]भव पुराण । पुरातनश्च । पुराणार्थत्वात् प्रतन [2] । प्रत्नश्च । चिर भवतीति चिरत्न । पूर्वभूतस्य कालादेर्नामानि ॥ [3]प्रतिगतमग्रमस्येति प्रत्यग्र । अभिनूयत इत्यभिनव । नवश्च । 'णु स्तुतौ' । नव एव नव्य । नवीन । नूतन । नूत्नश्च । अभिनवस्य नामानि ॥ [4]अल्पाभिघातादिकेन[5] सुष्ठु कुत्सित म्रियत इति सुकुमारम्[6] । 'मृङ प्राणत्यागे' ॥ [7]कम्यते जनैरिति कोमलम् । 'कमु कान्तौ' । मृद्यते वाय्वादिनेति मृदुलम्[8] । मृदु च' । 'मृद क्षोदे' । कोमलस्य पुष्पादेर्नामानि ॥ ७७ ॥

[1] भवतीति Pt2 [2] प्राग्भव इति Pt2 [3] अग्रजत्वम् K4, K6 [4] °अभिघातन° K4 [5] °आदिनैव J2, K5 [6] सुष्ठु कुमारयन्त्यनेनैवेति, 'कुमार क्रीडायाम्' Pt2 [7] काम्यते K4, K5, Pt2 [8] मृदु मृदुत्वमस्यास्तीति Pt2

(विव.) पुराणप्रतन—चिरतनाः । अतिविप्रकृष्टभूतकालसंबन्धिमात्रस्य[1] नामानि । पुरेत्यव्यय चिरविप्रकृष्टं भूतकालमाह । अत एव वक्ष्यति— 'स्यात् प्रबन्धे चिरातीते' (३. ४. २५३) इत्यादि । [2]पुराशब्दात्[3] तत्र भव इत्यर्थे 'सायं चिरं...' इत्यादिना (४. ३. २३) ट्युप्रत्यये तस्य तुडागमे च पुरातनम् । 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४. ३. १०५) इति निर्देशसामर्थ्यात् तुडागमाभावे पुराणम् । स्त्रियां तु ङीपि पुराणी । पुरा [4]पूर्वकालेऽण्यते शब्द्यत इति विग्रहस्तु स्त्रियामनिष्टः । टाबन्तत्व [5]प्रापयेदिति परिहरणीयः । 'नश्च पुराणे प्रात्' (वा. ५. ४. २५) इति वार्त्तिकचकारवचनेन पुराणार्थे वर्तमानार्थात् प्रशब्दात् त्नप् प्रत्यये प्रत्नः । तनप्प्रत्यये प्रतनः । चिरमित्यव्ययात् पूर्ववदेव (४. ३. २३) ट्युप्रत्यये चिरंतनः ॥ प्रत्यग्रो—नूत्नश्च । [6]सन्निकृष्टभूतकालसबन्धिनो नामानि । प्रतिगतमग्रमस्येति प्रत्यग्रः ॥ अभितो नूयते स्तूयत इत्यभिनवः । 'णु स्तुतौ' । 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्ययः ॥ 'पादार्घाभ्या च' (५. ४. २५) इति सूत्रे काशिकाकारः (२, पृ. ८५)— 'अत्र चकारोऽनुक्तसमुच्चयार्थः । तेन यथादर्शनमन्यत्रापि यत्प्रत्ययो भवति' इति । ततश्च नवशब्दात् यत्प्रत्यये नव्य ॥ नव एव

नवीनः । 'नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्ययाः' (वा. ५. ४. २५) इति[7] नवशब्दात् स्वार्थे त्नप्रत्यये नवशब्दस्य नू इत्यादेशे नूत्नः। तनप्प्रत्यये नूतनः। खप्रत्यये नवीनः ॥ सुकुमारं—मृदु। एतानि[8] कुसुमादेः कोमलद्रव्यस्य नामानि। सुष्ठु कुत्सितेनापि अभिघातेन [9]मार्यते विनाश्यत इति सुकुमारम् ॥ काम्यत इति कोमलम्। 'कमु कान्तौ' इति धातोः अलच्प्रत्यये उपधाया ओकारादेशे च कोमलम् इति धातुवृत्तावुक्तम् ॥ मृद्यते स्वल्पाभिघातेनापि क्षुद्यत इति मृदु। 'मृद क्षोदे'। औणादिकः कुप्रत्ययः[10]। ततो भावमात्रविवक्षायां मत्वर्थीये लच्प्रत्यये[11] (५. २. ९७) श्यामश्यामलशब्दवत्[12] मृदुलम् ॥ ७७ ॥

[1] °मात्रे पुराणादिपञ्चकम् B5, Tv. [2] पुरेत्येतत् B5. [3] B5, B6 add अव्ययात् [4] B5 omits [5] आपद्येतेति B5, Tv. [6] प्रत्यग्रादिसप्तक... सबन्धिनि वर्तते B5, Tv [7] B5, B6 add वार्त्तिककारवचनेन. [8] B5, Tv add सुकुमारादीनि. [9] म्रियते नश्यति TJ1, Tv. [10] 'प्रथिमृदि...' इति कु (उ १ २८). [11] 'सिध्मादिभ्यश्च'. [12] पृथुपृथुलशब्दवत् B5.

(पा) पुराणप्रतन—चिरतना.। चिरत्नमपि स्यात्। 'चिरत्नरत्नाधिकमुच्चित चिरात्' इति नैषधः (१. १०७)। [1]पुरातननामानि ॥ प्रत्यग्रो—नूत्नश्च। [2]नूतननामानि ॥ सुकुमार—मृदु। कोमलनामानि[3] ॥ ७७ ॥

[1] B3 omits. [2] नूतनवस्तु° A1. [3] सुकुमार° B3.

अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम् ॥ ७८ ॥
प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम्।

(वि.) अन्वगिति—अनुगच्छन्त पश्चादञ्चते[1] गच्छतीति अन्वक्। 'अञ्चु गतौ'। अत्राव्ययमिति सवध्यते। अक्षस्य पुरोगामिनः अनु पश्चाद् गच्छतीति अन्वक्षम्। [2]पदस्य पुरोगामिनः अनु पश्चाद् गच्छतीति अनुपदम्। यो गच्छन्तमनु पश्चाद् गच्छति तस्य नामानि[3] ॥ प्रत्यक्ष्णोति पुरो व्याप्नोतीति प्रत्यक्षम्। 'अक्षू व्याप्तौ'। इन्द्रियैर्ग्राह्यम् ऐन्द्रियकम्। इन्द्रियग्राह्यस्य रूपरसादेर्नामनी ॥ प्रत्यक्ष न भवतीत्यप्रत्यक्षम्। अधिगतमक्षमिन्द्रियम्[4] अध्यक्षम्[5]। तदतिक्रान्तम् अत्यध्यक्षमिति वा पाठ। इन्द्रियाण्यतिक्रान्तमतीन्द्रियम्। इन्द्रियैरग्राह्यस्य नामनी ॥ ७८ ॥

[1] अञ्चति K4, K5. [2] K4 omits two lines [3] अनुगन्तुर्नामानि K5.
[4] K5 omits इन्द्रियम्. [5] अतामतिशान्तमत्यक्षम् K4, K5

(विव.) अन्वक्—अव्ययम्। यो गच्छन्तमनुगच्छति [1]तस्य नामानि। अनु पश्चाद् अञ्चति गच्छतीति अन्वक्। 'अञ्चु [2]गतिपूजनयोः'। 'ऋत्विग् ...'[3] इत्यादिना (३. २. ५६) क्विन् प्रत्ययः। चकारान्तः। 'आगच्छतोऽनूचि गजस्य घण्टयोः' इति माघः[4] (शिशु. १२. ३४)। स्त्रियां तु[5] ङीपि अनूची ॥ अनुगतमक्षं पादरूपं कर्मेन्द्रियमस्येति अन्वक्षम् ॥ पुरोगतापेक्षया अनुगतं [6]पश्चाद्भूतं पदमस्येति अनुपदम्। बहुव्रीहित्वोपाधिकवक्ष्यमाणपरोपगतव्युदासाय क्लीबमित्युक्तम्। [7]अतश्च गुरोरनुपदमन्तेवासी भर्तुरनुपदं पत्नी इत्याद्येव भवति। यदा तु पदस्य पुरोगतस्य[8] पश्चादिति विग्रहो विवक्षितः, तदा 'अव्ययं विभक्ति ...' इत्यादिना (२. १. ६) पश्चादर्थेऽव्ययीभावादव्ययत्वम्। केचित्तु 'क्लीबमव्ययम्' इति शब्दद्वयस्य प्रागुक्तगत्या अन्वक्षशब्देनापि संबन्धमाहुः[9] ॥ प्रत्यक्षं स्यादैन्द्रियकम्। बुद्धीन्द्रियग्राह्यस्य [10]रूपरसादेर्नामनी। प्रतिगतम् अक्षमिन्द्रियमिति प्रत्यक्षम्। प्रतीतमक्षेणेति वा। यथा प्रत्यक्षा बुद्धिः। प्रत्यक्षो घटः। प्रत्यक्षं रूपमित्यादि। अध्यक्षमिति केषांचित् पाठः। [11]तत्रापि पूर्ववदेव निरुक्तिक्रमः। इन्द्रियादागतम् ऐन्द्रियकम्। [12]कुलालादेः (४. ३. ११८) आकृतिगणत्वाद् वुञ् ॥ अप्रत्यक्षमतीन्द्रियम्। पूर्वोक्तात् प्रत्यक्षादन्यद् अप्रत्यक्षम्। अतिक्रान्तमध्यक्षम्[13] अत्यध्यक्षम् इति केचित्। इन्द्रियमतिक्रान्तम् अतीन्द्रियम् ॥ ७८ ॥

[1] तस्मिन् अन्वगादिचतुष्टयम् B5, Tv. [2] गतौ याचने च Tj1, Tj2 [3] B5 adds दधृक् [4] माघकाव्ये प्रयोग B5, B6 [5] B5, Tv add 'अञ्चते ..' (वा. ४ १ ६) [6] पश्चादगत Gm3, Tv [7] ततश्च B5 [8] B5 omits [9] इच्छन्ति Tv [10] रसादेरेते Tv. [11] अत्रापि B5 [12] 'कुलालादिभ्यो वुञ्' इति वुञ् B5, B6 [13] अतिक्रान्तमक्षम् अत्यक्षम् B5, Tv.

(पा) अन्वक्—अव्ययम्। [1]अनुगतनामानि। 'बेनुसनितदि '[2]। अनुक्तम्—' सहित सहित युक्तयुतमन्वीत[3]मन्वितम्'। युतनामानि। [2]'कूडिनदि' ॥ प्रत्यक्ष स्यादैन्द्रियकम्। चक्षुरादीन्द्रियविषयनामनी। अध्यक्षसमक्षशब्दावपि स्त। 'अध्यक्षप्रत्यक्षौ तु समक्षवत्' इति वैजयन्ती (पृ २१२, श्लो १३३) ॥ अप्रत्यक्ष-

मतीन्द्रियम् । अप्रत्यक्षनामनी । परोक्षशब्दोऽप्यस्ति । 'परोक्षेऽतीन्द्रियः'[4] इति वैजयन्ती (पृ २१२, श्लो १३३) ॥ ७८ ॥

अनुगमन° A1. [2] B3 omits. [3] A1 adds दीर्घमध्यम्. [4] अतीन्द्रियम् B3.

**एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि ॥ ७९ ॥**
**अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि च ।**

(वि) एकतान इति—एकस्मिन्नेव [1]विषये तानो बुद्धिविस्तारोऽस्येति एकतान । अन्यस्मिन्नेव विषये वृत्तिर्यस्येति अन्यवृत्ति [2] । न अन्यवृत्तिरनन्यवृत्ति· । एकमग्रम् [3]एकदेशस्थ ज्ञेयमस्येति एकाग्र· । [4]एकमेवायन गतिरस्येति एकायन । एकविषय सर्गो निश्चयोऽस्य एकसर्गः । एकाग्र एव एकाग्र्य. । ऐकाग्र्य इति वा पाठ । एकमेवायन गति गत प्राप्त एकायनगत । एकाग्रचित्तस्य[5] नामानि ॥ ७९ ॥

[1] तानो विषयो J2, K6 [2] न विद्यतेऽन्या वृत्तिर्व्यापारो यस्य Pt2. [3] अग्रदेशस्ज्ञेयम् K5, Pt2 [4] एकस्मिन्नेव विषयेऽयन ज्ञान J2, Pt2. [5] एकविषयकस्य K5.

(विव.) एकतानो—गतोऽपि च । एकतानादिसप्तकं तदेकायत्तचित्ते । 'तनु[1] श्रद्धोपकरणयोः' इति चुरादिः, ण्यन्तात् [2]'एरचि' (३. ३. ५६) तानो विस्तारः । एकस्मिन्नेव विषये तानोऽस्यास्तीति एकतानः ॥ एकमग्रम् अग्रस्थं ज्ञेयमस्येति एकाग्रः । स्वार्थिकेऽण्प्रत्यये सति ऐकाग्रः । एकस्मिन्नेव विषयेऽयनमिन्द्रियगतिरस्येति एकायनः । एकस्मिन्नेव विषये सर्गो निश्चयोऽस्येति एकसर्गः । एकमग्र्यं ज्ञेयमस्य एकाग्र्यः । एकमयनं विषयस्थानं गतः एकायनगतः ॥ ७९ ॥

[1] 'तनु यज्ञोप°' B5, B6. [2] 'एरच्' Tj1, Tj2

(पा) एकतानो—गतोऽपि च । एकाग्रनामानि ॥ ७९ ॥

**पुंस्यादिः पूर्वपौरस्त्यप्रथमाद्या अथास्त्रियाम् ॥ ८० ॥**
**अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमम् ।**

(वि) पुंसीति—आदीयते [1]प्रथममुपादीयत इत्यादिः । [2]'दा दाने' । पूर्वतीति पूर्वं । 'पूर्व पूरणे'[3] । [4]पुर पूर्वस्मिन् काले देशे वा भवः पौरस्त्यः ।

प्रथतेऽनेनाद्वितीयेनेति[5] प्रथमः । 'प्रथ [6]प्रख्या ' । आदौ भवः आद्यः । प्रथमभाविनः पदार्थस्य नामानि ।। [7]अमति उपान्त्यपङ्क्तिपदार्थमतिक्रम्य गच्छतीति अन्तः । 'अम गत्यादिषु' । जघने पश्चाद् भवं जघन्यम् । चरति उपान्तं [8]पर्यन्तमतिक्रम्य तदनन्तरस्थानं गच्छतीति चरमम्[9] । अन्ते भवमन्त्यम् । पश्चाद् भवं पाश्चात्यम् । पश्चिमं च । [10]अन्तिमस्य पदार्थस्य नामानि ।। ८० ।।

[1] प्रारम्भसमय एव व्यवह्रियते Pt2   [2] 'डुदाञ् दाने' J2, Pt2.   [3] 'पुर्व पर्व मर्व पूरणे' K3, K5.   [4] पूर्वं K6   [5] सद्वितीयेन K5; सद्द्वि° J2   [6] ख्यातौ K3, K6   [7] अनति पुनाति J2   [8] K5 omits पर्यन्तम्.   [9] 'चर गतिभक्षणयो ' Pt2   [10] अन्तम्य K2.

(विव.) पुंस्यादिः—प्रथमाद्याः । [1]यत्किंचिदपेक्षया प्राक्कालसंबन्धिनः पञ्च नामानि । आदीयते प्रारम्भसमय[2] एव व्यवह्रियत इत्यादिः[3] । 'उपसर्गे घोः किः' (३. ३. ९२) । [4]भार्याकलत्रादिविशेषणत्वेऽपि आदिशब्दः पुंलिङ्ग एवेति नियम्यते ।। [5]पुरं वाति गच्छति श्रेष्ठत्वेनेति पूर्वः । 'वा गतिगन्धनयोः' । 'आतोऽनुपसर्गे कः' (३. २. ३) ।। पुरः पूर्वस्मिन् काले देशे वा भवः पौरस्त्यः । [6]'दक्षिणापश्चात्पुरसस्त्यक्' (४. २. ९८) इति त्यक्प्रत्ययः । 'किति च' (७. २. ११८) इति वृद्धिः ।। प्रथते द्वितीयादिभिः सहेति प्रथमः । 'प्रथ प्रख्याने' । 'प्रथेरमच्' (उ. ५. ६८) इत्यमच्प्रत्ययः ।। आदौ देशे काले वा भवः आद्यः । 'दिगादिभ्यो यत्' (४. ३. ५४) इति यत्प्रत्ययः ।। अथास्त्रियाम्—पश्चिमम् । षडेतानि [7]दानादानादिक्रियासु गणनासमाप्तिस्थानस्य नामानि । अमति समाप्तिं गच्छतीत्यन्तः । 'अम गत्यादिषु' । कर्तरि क्तः (३. ४. ७२) । अन्तशब्दस्य योषिदादौ विशेष्यभूतेऽपि पुंनपुंसकलिङ्गयोरन्यतरत्वमेवेति दर्शयितुम् अस्त्रियामित्युच्यते । जघन्यादयस्तु शब्दा लिङ्गत्रयेऽपि भवन्ति । जघने पश्चाद्भागे भवतीति जघन्यम् । दिगादित्वाद् (४. ३. ५४) यत् ।। प्रथमप्रतीतस्थानमुपक्रम्य[8] चरतीति चरमम् । 'चर गतौ' । 'प्रथेरमच्' इत्यनुवृत्तौ 'चरेश्च' (उ. ५. ६९) इत्यमच् ।। अन्तेऽवसाने भवम् अन्त्यम् । दिगादित्वाद् (४. ३. ५४) यत् । पश्चाद् देशे काले वा भवं पाश्चात्यम् । 'दक्षिणापश्चात्पुरसस्त्यक्' (४. २. ९८) इति त्यक् ।। पश्चाद् भवं पश्चिमम् । 'अग्रपश्चाड्डिमच्' (वा. ४. ३. २३) इति डिमच् । [9]डित्वात् टिलोपः ।। ८० ।।

[1] पञ्चैते शब्दा B5, Gm3, Tv  [2] B5 omits समये.  [3] B5, Tv add 'डुदाञ् दाने'.  [4] स्त्रीलिङ्गपदार्थे विशेष्येऽपि B5, Gm1, Tv.  [5] पूर्वति, 'पूर्व पूरणे,' अच् (३. १ १३४) इति स्वामिभानुजीदीक्षितौ.  [6] दिगादित्वात् B5.  [7] दानादानक्रमसमाप्ति° B5, Tv.  [8] अतिक्रम्य B5, B6.  [9] Gm1, Gm3 omit the sentence

(पा) पस्यादि —प्रथमाद्या । आदिनामानि ॥ अथास्त्रियाम्—पश्चिमम् । अन्त्यनामानि ॥ ८० ॥

**मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम् ॥ ८१ ॥**
**साधारणं तु सामान्यं एकाकी त्वेक एककः ।**
**भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ॥ ८२ ॥**

(वि) मोघमिति— [1]मुह्यत्यस्मिन्निति मोघम् । 'मुह वैचित्ये' । निर्गतोऽर्थः प्रयोजनमस्मादिति निरर्थकम् । निरर्थकस्य [2]वस्तुनो नामनी ॥ अज्ञान स्पशते बाधत इति स्पष्टम् । 'स्पश बाधनस्पर्शनयो' । स्फुटति प्रकाशत इति स्फुटम् । 'स्फुट विकसने'[3] । अतिव्यक्तस्य नामनी ॥ [4]प्रकृष्टं व्यज्यत इति प्रव्यक्तम् । 'अञ्जू व्यक्तिम्रक्षण[5]कान्तिगतिषु' । उल्बणति हठात् दर्शनं गच्छतीति उल्बणम्[6] । 'वण गतौ' । हठाद्दर्शनेन [7]ज्ञायमानवस्तुनो नामनी ॥ समानमाधारणम् एकस्थानमस्येति साधारणम् । समानस्य भावः सामान्यम् । अप्रातिस्विकपदार्थस्य नामनी ॥ एति कार्यं कर्तुं स्वयमेव गच्छतीत्येकः । [8]एकाकी । एककश्च । 'इण् गतौ' । सहायरहितस्य नामानि ॥ अनिति पृथगेव प्राणितीति अन्यः । 'अन प्राणने' । अन्य एवान्यतर । एति पृथग्गच्छतीत्येकः । त्विषति पृथग् भासत इति त्वः । 'त्विष दीप्तौ' । एकतर इति वा पाठ । स्वयमेतीति इतरः[9] । प्रकृतादन्यार्थस्य[10] नामानि ॥ ८१-२ ॥

[1] मुह्यत्यत्र पुरुषो भ्रान्तिवशात् Pt2  [2] J2, K6 omit.  [3] विदलने K5.  [4] प्रकर्षेण K3, K5  [5] °श्लक्ष्ण° K3, K6, Pt2  [6] उत्कृष्टत्वेन वण्यते शब्द्यते, 'वण शब्दे' Pt2  [7] जायमान° K6.  [8] K2, Pt2 add एक एव  [9] एति पृथगेव गच्छति स्वयमेव K5  [10] K5 omits अर्थ

(विव) मोघं निरर्थकम् । स्वगतधर्मवैकल्यवशात् निरर्थकस्यैते नामनी । मुह्यत्यत्र[1] पुरुषो कार्यसाधकत्वभ्रान्त्येति[2] मोघम् । 'मुह वैचित्ये' । 'हलश्च'

(३. ३. १२१) इति घञ्[3] । [4]न्यङ्क्वादिकुत्वम् (७. ३. ५३) ।। निष्क्रान्तोऽर्थः प्रयोजनमस्मादिति निरर्थकम् ।। स्पष्टं स्फुटम् ।। [5]स्वगतजातिगुणादिवैशिष्ट्येन प्रतीयमानस्यैते नामनी । स्पशते स्वविषयमज्ञानं बाधत इति स्पष्टम् । 'स्पश बाधन-स्पर्शनयोः' । कर्तरि क्तः[6] (३. ४. ७२) । [7]षत्वष्टुत्वे[8] ।। स्फुटति विकासितमिव प्रकाशत इति स्फुटम् । 'स्फुट विकसने' । इगुपधलक्षणः कः (३. १. १३५) । व्यक्तशब्दोऽप्यत्र ।। प्रव्यक्तमुल्बणम् । अतिदूरत्वादिदोषसंभवेऽपि स्वगतसकल-धर्मवैशिष्ट्येन [9]प्रतीयमानस्यैते नामनी । प्रकर्षेण व्यज्यत इति प्रव्यक्तम् । 'अञ्जू व्यक्तौ' । क्तः । अथवा 'अञ्चु गतिपूजनयोः' । गत्यर्थाः ज्ञानार्थाः । कर्मणि क्तः (३. २. १०२) । 'यस्य विभाषा' (७. २. १५) इति निष्ठाया-मिडभावः । [10]कुवलादामलकं व्यक्तम् इत्यपादानविषयत्वाद् 'अञ्चोऽनपादाने' (८. २. ४८) इति निष्ठानत्वं न भवति ।। उत्कृष्टत्वेन बण्यते शब्द्यत इति उल्बणम् । 'बण शब्दे' । पृषोदरादित्वाद् वर्णव्यत्ययः[11] । स्पष्टादयश्चत्वारोऽप्ये-कार्था इति केचित्[12] ।। साधारणं तु सामान्यम् । यो [13]ह्यनेकव्यक्तीनां तुल्यरूपो गुणकर्मादिः, यश्चानेकानुभवयोग्यो ग्रामादिः, तस्य द्विविधस्यापि नामनी । साधारण-समानशब्दौ सदृशपर्यायेषु शूद्रवर्गे व्युत्पादितौ[14] (२. १०. ३७) । समान एव सामान्यम् । चातुर्वर्ण्यादित्वात् (वा. ५. १. १२४) स्वार्थिकः [15] ष्यञ् । 'सामा-न्योऽयं धर्मसेतुर्नृपाणाम्' इति प्रयोगः । धर्मयोरेव साधारण्यम्, सादृश्यं तु धर्मा-श्रययोरिति साधारणसदृशयोर्भेदः ।। एकाकी त्वेक एककः । असाहयस्य नामानि । एति पृथगेव गच्छतीति एकः । 'इण् गतौ' । 'इण्भीकापाश ...' इत्यादिना (उ. ३. ४३) कन्प्रत्ययः ।। एक एव एकाकी । 'कन्लुकौ च' (४. ३. ५१) इति वर्तमाने 'एकादाकिनिच्चासहाये' (५.३.५२) इत्याकिनिच्प्रत्यये एकाकी । चकारात् कन्प्रत्यये एककः । तस्य वैकल्पिके लुकि एकः ।। भिन्नार्थका—इतरा-वपि । भिन्नशब्दस्य योऽर्थः प्रकृतादन्यत्वलक्षणः, तदर्था अन्यतरादयः पञ्च शब्दा इत्यर्थः । अनिति प्राणिति जीवति प्रतियोगिसद्भावेनेति अन्यः । 'अन प्राणने' । अघ्न्यादिगणपाठात् (उ. ४. ११२) साधुः ।। अल्पाच्तरमिति (२. २. ३४) ज्ञापकाद् अन्यशब्दादपि स्वार्थ एव तरप्प्रत्यये अन्यतरः । एकशब्दो व्युत्पादितः ।। त्वशब्दस्त्वखण्ड एव भिन्नार्थ इति सुबोधिनीकारः । 'उतो त्वस्मै तन्वं विसस्रे' (ऋक्. १०. ७१. ४) इति श्रुतौ प्रयोगः ।। एति पृथगेव गच्छतीति इतरः । 'इण् गतौ' । स्वार्थीयतरप्प्रत्ययः । इतं रातीति वा[16] ।। ८१-२ ।।

[1] अस्मिन् B5, Tv [2] भ्रान्तिवशात् TJ1, TJ2 [3] B5, B6, Gm3 add 'करणाधिकरणयोश्च' [4] °आदित्वात् B5 [5] °जात्यादि° B5, B6 [6] क्तप्रत्यय B5 [7] व्रश्च (८ २ ३६) [8] ष्टुना ष्टु (८ ४ ४१) [9] प्रकाशमानस्य TJ1, TJ2 [10] कोलात् Tv [11] पक्षे ल इति स्वामी (पृ २५३) [12] टी स (पृ ३७) [13] स्थाणुपुरुषादि° B5, Gm1, Tv [14] सह आधारणेन वर्तते । 'वोपसर्जनस्य' इति सभाव, साधारण, समान मानमस्येति समान । 'समानस्य छन्दसि . ' इति स इति भा. दी (पृ ४०३) [15] स्वार्थे Gm3, Tv [16] 'आतोऽनुपसर्गे क' (३ २ ३)

(पा) मोघ निरर्थकम् । [1]व्यर्थनामनी । 'अन्तर्गडु निरर्थकम्' इत्यस्मिन्नर्थे हलायुध (अ मा ४ ८९) ।। स्पष्ट—उल्वणम् । व्यक्तनामानि । 'प्रकट विशर चापि' । एते द्वे च ।। साधारण तु सामान्यम् । [2]अनेकसम्बन्धकार्थनामनी । 'चतुर्मुखकुटुम्बिनी द्रविडमात्रसाधारणी' । 'विक्रमव्यतिहारेण सामान्याभूद् द्वयोरपि' (रघु १२ ९३) ।। एकाकी—एकक । असहायनामानि ।। भिन्नार्थका—इतरावपि । भिन्ननामानि । 'वेरैनवानि [3]पेरु' । 'अन्यतगदीनि सर्वनामानि' इत्यतानि सर्वनामानि । अन्यतरस्मात् । एकस्मात् । [4]त्वत्त्वपदावन्यार्थकाविति त्वच्छब्दोऽपि त्वशब्दार्थ एव ।। ८१-२ ।।

[1] निरर्थनाम A1 [2] °सबन्धिभूतैकार्थ° A1 [3] B3 omits [4] B3 adds अस्मात

**उच्चावचं नैकभेदमुच्चण्डमविलम्बितम् ।**
**अरुंतुदं तु मर्मस्पृगबाध तु निरर्गलम् ।। ८३ ।।**

(वि) उच्चावचमिति—[1]उच्च च तदवाक् च उच्चावचम् । नैकेऽनेके भेदा अस्य सन्तीति नैकभेदम् । अनेकप्रकारस्य [2]चित्रादेर्नामनी ।। उच्चण्डति कोपेनाशु भवतीत्युच्चण्डम् । 'चडि कोपे' । न विद्यते विलम्बितमस्येत्यविलम्बितम् । कोपन क्रियमाणापकारवद् आशुकृतस्य नामनी ।। अरूपि[3] व्रणानि[3] तुदतीत्यरुंतुदम् । 'तुद व्यथने' । मर्माणि स्पृशतीति मर्मस्पृक् । 'स्पृश सस्पर्शने' । मर्मव्यथाकरस्य[4] वचनादेर्नामनी ।। न विद्यते बाधा[5] अस्येत्यबाधम् । निष्क्रान्तमर्गलाद् नियामकादिति निरर्गलम् । उच्छृङ्खलशीलस्य नामनी ।। ८३ ।।

[1] उच्चमवचञ्चति, 'चञ्चु गतौ' $J_2$, $K_6$　[2] विश्वादे $K_5$　[3] $K_5$ adds इव.　[4] °व्यथाकारस्य $K_2$　[5] $Pt_2$ adds निरोध .

(विव.) उच्चावचं नैकभेदम् । अविद्यमान एको भेदः[1] स्वगतावान्तरविशेषोऽस्येति नैकभेदम् । स्थावरजङ्गमात्मकं जगदादि तदुच्चावचमुच्यते । उदक् चावाक् च उच्चावचम् । मयूरव्यंसकादिपाठात् साधुः । 'उच्चावचैरुपगतेषु सहस्रसङ्ख्याम्' इति माघकाव्ये प्रयोगः (शिशु. ४. ४६) ॥ उच्चण्डमविलम्बितम् । 'चण्डस्त्वत्यन्तकोपनः' इति प्रागुक्तम् (श्लो. ३२) । त्वरायाः कोपकार्यत्वात् त्वरायुक्त एव कारणप्राधान्येन[2] उच्चण्ड इत्युक्तः । स्वर्गवर्गोक्तस्यापि (पृ. ४४) अविलम्बितपर्यायान्तरकथनार्थमत्राभिधानमिति ज्ञेयम्[3] ॥ अरुंतुदं तु मर्मस्पृक् । [4]अतिदुःखजनकस्य शस्त्रप्रहाराभिशंसनादेर्नामनी । अरूंषि व्रणानि तत्सदृशानि मर्माणि वा तुदतीति अरुंतुदम् । 'तुद व्यथने' । 'विध्वरुषोस्तुदः' (३. २. ३५) इति खश् । 'अरुर्द्विषत् . . .' इत्यादिना (६. ३. ६७) मुमागमः । संयोगान्तलोपः (८. २. २३) ॥ 'स्पृश [5]स्पर्शने' । 'स्पृशोऽनुदके क्विन्' (३. २. ५८) इति क्विन्प्रत्यये कुत्वे च[6] (८. २. ६२) मर्मस्पृक् ॥ अबाधं तु निरर्गलम् । अनिवारितोद्योगस्य नामनी । अविद्यमानो बाधः प्रतिरोधोऽस्येति अबाधम् ॥ निष्क्रान्तोऽर्गलात् प्रतिबन्धकादिति निरर्गलम् ॥ ८३ ॥

[1] Tv adds प्रकार　[2] °व्यपदेशेन Tv　[3] न पौनरुक्तचम् Tv　[4] मर्मपीडाकरस्यैते नामनी *Gm3*, *Tv*.　[5] उपतापे *Tj1*, *Tj2*　[6] 'क्विन्प्रत्ययस्य कु '

(पा) उच्चावच नैकभेदम् । 'नञो नलोपो य प्रोक्तो न स मध्यपदे परे' इति नलोपो न भवति । [1]वहुप्रकारकनामनी ॥ उच्चण्डमविलम्बितम् । [2]विलम्बशून्यस्य नामनी ॥ अरुंतुदस्तु मर्मस्पृक् । मर्मस्थानव्यथकनामनी ॥ अबाध तु निरर्गलम् । अप्रतिरोधकनामनी । 'अपि निर्यन्त्रणोद्दामोच्छृङखलानर्गलादि च' । एतान्यपि । [3]'स्यादनर्गलमुद्दाममच्छृङखलमयन्त्रितम्' इति [4]वैजयन्ती (पृ २१२, श्लो. १३२) ॥ ८३ ॥

[1] °प्रकारभृते $A_1$, $C_1$.　[2] अकालक्षेप° $A_1$　[3] वशे इति मुद्रितग्रन्थे　[4] $A_1$ adds एतस्मिन्नर्थे

**प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च ।**
**वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणे । ८४ ॥**

(वि.) प्रसव्यमिति—प्रगत सव्याद् वामभागाद् दक्षिण[1] प्राप्तमिति प्रसव्यम् । प्रतिस्पर्धि कूलमस्येति प्रतिकूलम्[2] । अपगत सव्याद् [3]वामभागादिति अपसव्यम् । [4]अपतिष्ठत्यनुकूलमपाम्येति[5] अपष्ठु । 'ष्ठा गतिनिवृत्तौ'। प्रतिकूलस्य नामानि ॥ [6]वमयति यज्ञसूत्रमनेनेति[7] वामम् । 'टुवमु उद्गिरणे'। सूयते यज्ञसूत्रमनेनेति[8] सव्यम् । 'षुञ् अभिषवे'। शरीरस्य वामभागस्य नामनी ॥ अपत्रान्त सव्यभागादिति अपसव्यम् । दक्षते वलवत्तया वर्धत इति दक्षिणम् । 'दक्ष वृद्धौ शीघ्रार्थे च'। शरीरस्य [9]दक्षिणभागार्धस्य नामनी ॥ ८४ ॥

[1] K5 adds भाग [2] K6 omits [3] Pt2 omits. [4] आनुकूल्य वर्जयित्वा Pt2 [5] K5 adds तिष्ठति [6] वमति J2, K5, Pt2 [7] Pt2 omits अनेन [8] अत्र Pt2 [9] दक्षिणार्धभागस्य K5

(विव.) प्रसव्यं—अपष्ठु च । [1]प्रस्तुतार्थविरोधिनोऽर्थस्य [2]नामानि । [3]स्रोतस. स्वारसिकगमनविरोधिकूलाभिमुखवचनः प्रतिकूलशब्दः स्वाभाविकार्थविरोधिकमात्रसाधर्म्येण विरुद्धमात्रे वर्तते । प्रगतमपसृतं सव्यादिति दक्षिणभागस्थितं प्राचीनावीताख्यं ब्रह्मसूत्रं प्रसव्यापसव्याभ्यामुच्यते । तत्साधर्म्येण [4]शुभकार्यविरुद्धमात्रेणान्यदपि प्रकृतकार्यविरोधि [5]प्रसव्यापसव्यशब्दाभ्यामुक्तम् । अपेत्युपसर्गो वर्जने । अपतिष्ठत्यानुकूल्यं वर्जयित्वा तिष्ठतीति अपष्ठु । 'अपदु.सुपु स्थः' (उ. १. २५) इति तिष्ठतेः कुप्रत्ययः । कित्वादाकारलोपः (६. ४. ६४) । 'अम्बाम्ब . . .' इत्यादिना (८. ३. ९७) षत्वम् । 'तव धर्मराज इति नाम कथमिदमपष्ठु पठ्यते' इति इति माघकाव्ये प्रयोगः (शिशु. १५. १७) ॥ वामं—सव्यं स्यात् । शरीरस्य वामार्धं सव्यं स्यात् । वमतीति वामम् । 'टुवम उद्गिरणे'। [6]ज्वलादित्वाद् णप्रत्ययः (३. १. १४०) ॥ सूयते सव्यम् । 'षुञ् अभिषवे'। 'अचो यत्' (३. १. ९७) । 'सव्यं वामे च दक्षिणे' इत्यजयः ॥ अपसव्यं तु दक्षिणम् । [7]शरीरस्य दक्षिणमर्धम् अपसव्यम् । अपक्रान्तं सव्यादित्यपसव्यम् । दक्षते वीर्ययुक्तत्वेनेति दक्षिणम् । 'तस्माद् दक्षिणोऽर्ध आत्मनो वीर्यवत्तरः' इति श्रुतेः । 'दक्ष वृद्धौ'। इनन्प्रत्ययः[8] (उ. २. ५०) ॥ ८४ ॥

[1] प्रकृतकार्य° Gm3, Tv  [2] Gm1, Tv add एतानि चत्वारि  [3] प्रवाहस्य स्वच्छन्दगमन° Gm3, Tv  [4] °विरोधित्व° Tj1, Tv  [5] प्रसव्य भवति। एवमप-सव्यमपि Gm3, Tv  [6] घञ्प्रत्यय (३ ३ १६), सुनोतीति सव्यम् Gm3, Tv  [7] Tv adds शरीर इत्यनुवर्तते  [8] B5, Tv add 'द्रुदक्षिभ्यामिनन्'

(पा) प्रसव्य—अपष्ठु च। प्रतिकूलनामानि ॥ वाम—स्यात्। वाम[1] दक्षिणेतरत्। तत् शरीरे सव्य[2] स्यात् ॥ अपसव्य तु दक्षिणम्। दक्षिण नाम वामेत-रत्। तत्तु शरीरेऽपसव्य स्यात्। सव्यमपि स्यात्[3]। [4]'सव्यवामे च दक्षिणे' इति जयकोश। 'सव्यहस्त च खङ्ग' इति पुरातनप्रयोग ॥ ८४ ॥

[1] A1 adds नाम  [2] सव्यत A1, C1  [3] C1 omits  [4] सव्यम् C1, 'सव्यसव्यहस्तैकखङ्ग' A1

**संकटं ना तु संबाधः कलिलं गहनं समे ।**
**संकीर्णं संकुलाकीर्णे मुण्डितं परिवापितम् ॥ ८५ ॥**

(वि) सकटमिति—[1]सकटन्त्यन्योन्यमत्रेति सकटम्। 'कटे वर्षावरणयो'। अस्मिन् परस्पर सबाध्यन्त[2] इति सबाध। 'बाधृ लोडने'[3]। सकोचस्थलनामनी ॥ कल्यते क्षिप्यते मतिरत्रेति कलिलम्। 'कल किल क्षेपे'। गाहते मतिरत्रेति गह नम्। 'गाहू विलोडने'। दुर्विज्ञेयस्य नामनी ॥ सकीर्यते नैरन्तर्येणेति सकीर्णम्। 'कॄ विक्षेपे'। सकोलति निरन्तरीभवतीति सकुलम्। 'कुल सस्त्याने'। आकीर्यत इत्याकीर्णम्। सकीर्णस्य नामानि ॥ [4]मुण्ड्यते खण्ड्यत इति मुण्डितम्। 'मुडि खण्डने'। परिवाप्यते खण्ड्यते परिवापितम्[5]। 'डुवप् बीजसताने'। [6]क्षुरा-दिनापसारितकेशश्मश्रुशिरसो नामनी ॥ ८५ ॥

[1] सकुचति Pt2  [2] सम्यक् बाध्यन्ते K5, Pt2 adds जना  [3] विलोडने J2, K6  [4] Pt2 adds स्म  [5] परित शिरसि वाप केशखण्डन जातोऽस्य Pt2  [6] क्षुरोत्सारित° K5

**(विव) सकट—सबाध। [1]बहुद्रव्यसकीर्णस्याल्पीयस आधारस्य नामनी। सकोचरूपार्थात् समित्युपसर्गात् 'सप्रोदश्च कटच्' (५ २ २९) इति कटच्-प्रत्यये सकटम् ॥ [2]अन्योन्यसमर्दने[3] बाध्यन्तेऽत्र जना इति सबाध। 'बाधृ विलो-डने'। अधिकरणे घञ् (३.३ १२१)। [4]सबाधशब्दस्य विशेष्यायत्तलिङ्गत्वाप-**

वादार्थं नेत्युक्तम् । ततश्च विप्रसंबाधः सभा, जनसंबाधो राजद्वारम् इत्येव भवति ॥ कलिलं—समे । दुष्प्रवेशस्यैते नामनी । कलिं विवादं लात्यादत्त इति कलिलम् । [5]' कल किल क्षेपे ' इति वा धातोः इलच्प्रत्यये[6] (उ. १. ५४) कलिलम् ॥ गहनं वने व्युत्पादितम्[7] (२. ४. १) ॥ संकीर्णं संकुलाकीर्णम् । नैरन्तर्येण बहुविधद्रव्यैरधिष्ठितस्य हट्टादेर्नामानि । संकीर्यते नैरन्तर्येण क्षिप्यत इति संकीर्णम् । आकीर्णं च । ' कॄ विक्षेपे ' । ' ॠत इद्धातोः ' (७. १. १००) इति इत्वम् । क्तः । ' र्वोरुपधाया . . . ' (८. २. ७६) इति दीर्घः । ' रदाभ्याम् . . . ' इत्यादिना (८. २. ४२) निष्ठानत्वम् ॥ सम्यक् कोलति संस्त्यानं भवतीति संकुलम् । ' कुल संस्त्याने ' । मूलविभुजादिः (वा. ३. २. ५) । ' शकि शङ्कायाम् ' इत्यस्माद् उलच्प्रत्यये शङ्कुलमिति तालव्यादिरिति गोवर्धनः ॥ मुण्डितं परिवापितम् । क्षुरेण मूलपर्यन्तं कृत्तकेशश्मश्रोः पुरुषस्य नामनी । मुण्ड्यते स्म मुण्डितम् । ' मुडि खण्डने ' । क्तः ॥ धातूनामनेकार्थत्वाद् वपिर्मुण्डनार्थः[8] । ' केशश्मश्रु वपते ', ' केशश्मश्रुनखानि वापयित्वा ' इत्यादयः प्रयोगाः । परितः शिरसि वापः केशखण्डनं संजातोऽस्येति परिवापितम् ॥ ८५ ॥

[1] प्रचुर° Gm3, Tv. [2] परस्पर° B5, E6, Tv. [3] °सवन्धेन Tv. [4] स्त्रीनपुंसकयोरपि विशेष्ययोस्त्वय पुलिङ्ग एवेति दर्शयितु नेत्युक्तम् Gm3, Tv. [5] कल्यते क्षिप्यतेऽत्र बुद्धिरिति Gm1, Tv. [6] Tv adds ' सलि कलि . . ' इत्यादिना. [7] ' गाहू विलोडने ' । ' बहुलमन्यत्रापि ' (उ २ ७८) इति युच् । पृषोदरादित्वात् ह्रस्व ' इति भानुजीदीक्षित (पृ. ४३५). [8] ' तथा च भाष्यम्—" वपि प्रकिरणे दृष्टो मुण्डने चापि दृश्यते " इति । स्वार्थिकणिचि परिवापितम् ' इति टी स. (पृ ३८).

(पा.) सवट—सबाधः । [1]सवटनामनी ॥ ' इद्वाडिम्विदि '[2] कलिलं—समे । प्रवेष्टुमशक्यनामनी । ' चोररानिदि ' ॥ सकीर्णं सकुलाकीर्णम् । सकीर्णनामानि । ' सर्दाडचिनदि ' ॥ मुण्डित परिवापितम् । परित. छिन्ननामनी । [3]लोमच्छेदननामनी अपि । ' वपि. प्रकिरणेऽभीष्टः केशच्छेदेऽपि दृश्यते ' इति धातुप्रदीप ॥ ८५ ॥

[1] निर्बन्ध° A1 [2] B3, C1 omit. [3] A1 adds निजयरगट्टविलोमच्छेदनाम.

ग्रथितं ग्रन्थितं दृब्धं विसृतं विस्तृतं ततम् ।
अन्तर्गतं विस्मृतं स्यात् प्राप्तप्रणिहिते समे ॥ ८६ ॥

(वि) ग्रथितमिति—[1]ग्रथ्यते बध्यत इति ग्रथितम । 'ग्रन्थ संदर्भे' । ग्रन्थित च । 'ग्रथि कौटिल्ये' । दृभ्यत ग्रथ्यत इति दृब्धम् । 'दृभी [2]ग्रन्थे' । ग्रथितस्य [3]पुष्पादेर्नामनी ।। विस्रियत इति विसृतम् । 'सृ गतौ' । विस्तीर्यत इति विस्तृतम् । 'स्तृञ् आच्छादने' । तन्यत इति ततम् । 'तनु विस्तारे' । विस्तृतस्य नामानि ।। [4]अन्तगतवद् न प्रकाशत इति अ तगतम् । विस्मयत इति विस्मृतम् । 'स्मृ आध्याने' । विस्मृतस्य नामनी ।। प्राप्यत इति प्राप्तम् । 'आप्लृ व्याप्तौ' । प्रणिधीयत इति प्रणिहितम् । प्राप्तस्य वस्तुनो नामनी ।। ८६ ।।

[1] ग्रथ्यते K5 K6 [2] ग्रथने K3, K6 [3] पुष्पमाल्यादे J2, K5
[4] अन्तरेव गच्छति स्म Pt2

(विव) ग्रथित—दृब्धम् । आनुपूर्वीविशेषेणैवावयवकृतस्य पुष्पमालादे कविनिबद्धश्लोकादेश्च [1]नामानि । ग्रथ्यते संदर्भ्यते कुसुमादिभिरिति ग्रथितम् । 'ग्रन्थ संदर्भे' । क्र्यादि । 'संदर्भो निबन्धनम्' इत्युक्त धातुवृत्तौ[2] । क्तप्रत्यये 'अनिदिताम्[3] '(६ ४ २४) इत्युपधानकारलोप ।। 'ग्रथि कौटिल्ये' इति भौवादिक । 'कौटिल्य कुसृतिर्बन्धश्च' इति धातुवृत्तौ (पृ ६४) । क्त । 'इदितो नुम्धातो' (७ १ ५८) इति नुम् । सर्वानन्दस्त्वाह—धातूनामनेकार्थत्वेन ग्रन्थरूपार्थे वर्तमानाद् 'मृद क्षोदे' इति धातोर्ण्यन्तात् स्वार्थे मर्दितम् इति[1] । अन्ये तु सदीयते सहतत्वेन सूच्यादिना सच्छिद्र क्रियत इति सदितम् इत्याहु ।। दृभ्यत इति दृब्धम् । 'दृभी ग्रन्थे' । क्त (३ २ १०२) । ग्रन्थो ग्रन्थनम् ।। विसृत—ततम् । परिणाहवत प्रसारितस्य कटकम्बलादेर्नामानि । विस्रियते प्रसार्यते स्म विसृतम् । 'सृ गतौ' । क्त (३ ४ ७२) ।। विस्तीर्यते स्म विस्तृतम् । 'स्तृञ् आच्छादने' । क्त । [5]तायते स्म ततम । तनोतें क्तप्रत्यय । 'अनुदात्तोपदेशवनतितनोति ' इत्यादिना (६ ४ ३७) नकारलोप ।। अन्तर्गत—स्यात् । पूर्वकालोपलब्धस्य संस्कारप्रमोषाद् बुद्ध्यनारूढस्य नामनी । [6]अन्तर्गतवदप्रकाशमानत्वाद अन्तर्गतम् ।। अत्र वीत्युपसर्गो निषेधे । तत्पूर्वात् 'स्मृ चिन्तायाम'[7] इति धातो कर्मणि क्तप्रत्यये (३ २ १०२) विस्मृतम् ।। प्राप्तप्रणिहिते समे । प्रत्यासन्नवस्तुवाचकत्वेन तुल्ये इत्यर्थ । [8]प्रकर्षेण आप्यत इति प्राप्तम्[9] । प्रकर्षेण निधीयते सनिधौ स्थाप्यत इति प्रणिहितम् । उपसर्गद्वयपूर्वाद दधाते क्तप्रत्यय । दधातेर्हिरादेश (७ ४ ४२) । 'नेर्गदनदपतपदघुमास्यति ' इत्यादिना (८ ४ १७) णत्वम् ।। ८६ ।।

[1] B5, Γv add त्रीणि [2] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते [3] 'अनिदिता हल उपधाया क्ङिति' [4] ग्रन्थनेऽपि वृत्ति इति मु ग्र (पृ ३६) [5] तन्यते स्म, 'तनु विस्तारे Tj1, Tj2 [6] अप्रकाशमानत्वसादृश्यात B6, Tj2 [7] 'स्मृ स्मरणे' Gm1, Gm3 [8] प्राप्यते स्म Tv [9] Tj1, Tv add 'आप्लृ व्याप्तौ'

(पा) ग्रथित—दृब्धम् । तन्त्वादिना [1]गुम्फितस्य नामानि ॥ विसत—ततम । [2]विस्तृतनामानि ॥ अन्तर्गत—स्यात । [3]अनाध्यातनामनी । [4]'मरवपड्ढदि'॥ प्राप्त—समे । प्राप्तनामनी । [4]'दोरकपड्ढदि' । अनुक्तम्—उपस्थित तृपनतम-पपन्नमिति त्रयम् । उपस्थितनामानि ॥ 'उपनतमणिवन्धे मूर्ध्नि पौलस्त्यशत्रो सुरभि सुरविमुक्त पुष्पवर्षं पपात' इति रघवश (१२ १०२) । [5]तत्र मणिवन्ध पट्टाभिषेकसमय ॥ ८६ ॥

[1] रचित° A1 [2] तत° A1 [3] विस्मृतस्य° B3 [4] B3 omits [5] C1 omits

**वेल्लितप्रेङ्खिताधूतचलिताकम्पिता धुते ।**
**नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरिताः समाः ॥ ८७ ॥**

(वि) वेल्लितेति—[1]वेल्लति चलतीति वेल्लित । 'वेल्ल चलने' । [2]प्रेङ्खति चलतीति प्रेङ्खित । 'इखि गतौ' । आधूनुने कम्पत इति आधूत [3] । धुतश्च । 'धूञ् कम्पने' । [4]चलतीति चलित । 'चल कम्पने' । आकम्पत इति आकम्पित [5] । 'कपि चलने' । कम्पितस्य शाखादेर्नामानि ॥ नुद्यते प्रेर्यत इति नुत्त । नुन्नश्च । 'नुद प्रेरणे' । अस्यत इत्यस्त । 'असु क्षेपणे' । निष्ठीव्यत इति निष्ठ्यूत [6] । 'ष्ठिवु निरसने' । आविध्यत इत्याविद्ध । 'व्यध ताडने' । क्षिप्यत इति क्षिप्त । 'क्षिप प्रेरणे' । ईर्यत इतीरित । 'ईर प्रेरणे' । प्रेरितस्य शरादेर्नामानि ॥ ८७ ॥

[1] वेल्लयते स्म Pt2 [2] प्रेङ्खयते स्म Pt2. [3] आधूयते स्म Pt2. [4] चाल्यते स्म Pt2 [5] आकम्प्यते स्म Pt2 [6] निष्ठीव्यते स्म Pt2

**(विव) वेल्लित—धुते । [1]वाय्वभिघातादिनिमित्तेन[2] चलनक्रियायुक्तस्य नामानि । वेल्लति स्म वेल्लितम् । 'वेल्ल चलने' । अत्र धातुवृत्तिकार —'धातोर-सयोगान्तत्वेऽपि प्रयोगवशाद् द्विवद्धो लकार ' इति । प्रकर्षेण इङ्खति स्म प्रेङ्खित ।**

'इखि गतौ'। आधूनुते स्म आधूतः। 'धूञ् कम्पने'। आङ्पूर्वः। चलति स्म चलितः[3]।। 'कपि चलने' इत्यस्माद् आङ्पूर्वात् क्तः आकम्पितः। 'धुञ् कम्पने' इत्यतो ह्रस्वान्तात् धुतः।। नुत्त—समाः। [4]नोदनाख्यसयोगादिना प्रेरितस्य शरादेर्नामानि। 'णुद प्रेरणे' इत्यतो धातोः कर्मणि क्तप्रत्यये 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (८. २. ५६) इति वैकल्पिके निष्ठानत्वे नुन्नः। तदभावपक्षे नुत्तः।। 'असु क्षेपणे' इत्यस्माद् अस्तः।। 'ष्ठिवु निरसने' इत्यस्माद्धातोर्निष्ठाया 'च्छ्वोः शूडनुनासिके च' (६. ४. १९) इत्यूठादेशे[5] निष्ठ्यूतः। रूढ्या वृत्त्या मुखवाय्वभिघातेन मुखकुहराद् बहिः प्रेरिते श्लेष्मलालादिके वर्तमानोऽपि निष्ठ्यूतशब्दः प्रेरितत्वसादृश्याद्[6] अन्यत्रापि शरादौ वर्तते।। आविध्यते स्म आविद्धः। 'व्यध ताडने'। क्तप्रत्यये 'ग्रहिज्यावयिव्यधि ...' इत्यादिना (६. १. १६) संप्रसारणम्। 'झषस्तथोर्धोऽधः' (८. २. ४०) इति निष्ठातकारस्य धत्वम्।। 'क्षिप प्रेरणे' इति धातोः क्षिप्तः।। ईर्यते स्म ईरितः। 'ईर प्रेरणे'। चुरादिः। क्तप्रत्यये इडागमः। 'निष्ठाया सेटि' (६. ४. ५२) इति णिलोपः।। ८७।।

[1] वाय्वादि° Gm3, Tv [2] °निमित्तान्तरेण B5, B6. [3] Tv adds 'चलि गतौ', 'चल कम्पने' Tj1, Tj2 [4] Gm1, Tv add सप्तैते [5] °आदेशे कृते B6, Gm3 [6] साम्यात् Tv

(पा) वेल्लित—धुते। चलितनामानि[1]। करेण कम्पित खड्ग। 'प्रेङ्खोलितस्तरलितो लोलितान्दोलितावपि'। आन्दोलितनामानि। [2]'अल्लाडिपड्डदि'।। 'आन्दोलिता करतले [3]नवशक्तिकेयम्'। 'पृथुलजघनभार मन्दमान्दोलयन्ती' इति बाण।। नुत्त—समा। क्षिप्तनामानि। [2]'दोब्बलवड्डदि'। अनुक्तम्— [4]'आवर्हितोच्छूतोत्खातोत्पाटितोन्मूलिता समा'। [5]उत्पाटितनामानि। 'पेरकपड्डदि'।। ८७।।

[1] कम्पित° B3, C1 [2] B3 omits [3] °शाक्तिका° C1 [4] °उत्पात° A1
[5] उन्मूलित° B3 C1

परिक्षिप्तं तु निवृतं मूषितं मुषितार्थकम्।
प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताहते।। ८८।।

(वि) परिक्षिप्तमिति—[1]परिक्षिप्यते समन्ताद् वेष्ट्यत इति परिक्षिप्तम्। 'क्षिप प्रेरणे'। नितरा व्रियते निवृतम्। 'वृञ् वरणे'। नियत भ्रियते[2] निभृतमिति वा पाठ। [3]कण्टकादिपरिवेष्टितस्य क्षेत्रादेर्नामनी॥ मूष्यत इति मूषितम्। मूष स्तेये'। मुष्यत इति मुषितम्। 'मुष स्तेये'। तस्करितस्य नामनी॥ [4]प्रकर्षेण वर्धत इति प्रवृद्धम्। 'वृधु वृद्धौ'। प्रसरतीति प्रसृतम्। 'सृ गतौ'। [5]प्रसृतस्य जङ्घादेर्नामनी॥ व्ययादौ न्यस्यते स्वामिनेति न्यस्त। 'असु क्षेपणे'। निसृज्यते स्वामिनेति निसृष्ट[6]। कार्येषु स्वामिना नियुक्तस्य ग्रामाधिपादेर्नामनी[7]॥ गुण्यत इति गुणितम्। 'गुण अभ्यासे'। आहन्यतेऽभ्यस्यत[8] इति आहतम्। अभ्यस्तवेदादेर्नामनी॥ ८८॥

[1] परित क्षिप्यते Pt2 [2] 'भृञ भरणे' K2 [3] वङ्क्वादि° J2, K8 [4] प्रवर्धते स्म Pt2 [5] वर्धितस्य K5 [6] 'सृज विसर्गे' K2, K5 [7] भूमौ निहितस्य वस्तुन K5 [8] सख्यान्तरेण Pt2

(विव) परिक्षिप्त तु निवृतम्। [1]यदृच्छागतपश्वादिसचारपरिहाराय कण्टकशाखादिभिरावृतस्यारामादेर्नामनी। परित क्षिप्यते बहि सचाराद् निरस्यत इति परिक्षिप्तम्[2]॥ नितरा व्रियते कण्टकशाखादिभिरिति निवृतम्। 'वृञ् वरणे'। क्त॥ मूषित मुषितार्थकम्। स्तेनापहृतवचनो मुषितशब्द, तत्समानार्थो मूषितशब्द इत्यर्थ। 'मुष स्तेये' इत्यतो लघूपधाद् धातो क्र्यादे क्तप्रत्यये मुषितम्। दीर्घोपधात्तु[3] भौवादिकाद् मूषितम्॥ प्रवृद्धप्रसृते। एतदादिश्लोकद्वयान्तस्थित[4] समे (श्लो ९०) इति पदम् एतदादिभिर्द्वादशभिर्विशेष्यं सबध्यते। प्रपूर्वो वृधि प्रसरणे वर्तते। तथा च—'तस्मादय प्रववृधे पृथिवीपतीनामुद्गीतपुण्यचरितो भुवनेषु वश'[5] इति भवभूतिप्रयोग। प्रौढेऽपि प्रवृद्धमुक्तम्[6] (श्लो ७६)। प्रसरति स्म प्रसृतम्। 'सृ गतौ'। क्त॥ न्यस्तनिसृष्टे। चोरादिपरिहाराय[7] परहस्ते स्थापितस्य सुवर्णादेर्नामनी। दानोपभोगादिभ्यो निवार्य अस्यते क्षिप्यत इति न्यस्तम्। नियमेन सृज्यते दीयत इति निसृष्टम्। 'सृज विसर्गे'। क्तप्रत्यय। [8]षत्व ष्टुत्व[9] च॥ गुणिताहते। य कश्चिदेकादिसख्याव्यञ्जकमङ्क फलकादौ [10]क्वचिद् विन्यस्य सोऽङ्को यत्सख्यागुणितो विधित्सित तत्सख्याङ्कमधो विन्यस्य गणितशास्त्रोक्तक्रमेण उपरितनमङ्कमाहत्य अङ्कान्तर निधायाभ्यस्त सत् गुणिताहत-

शब्दाभ्यामुच्यते । गुण्यतेऽभ्यस्यते स्म गुणितम् । 'गुण अभ्यासे' ॥ [11]गणकै-रङ्कान्तरेणाहन्यत इति आहतम् । 'हन हिंसागत्योः' । क्तः ॥ ८८ ॥

[1] चोरादि° for पश्वादि Tv　[2] TJ1 adds 'क्षिप प्रेरणे'　[3] Tv adds 'मूष स्तेये'　[4] °द्वयान्ते श्रूयमाण B8, Tv.　[5] रुद्ध Gm1, Gm3　[6] Tv adds अस्मिन्नेव वर्गे　[7] परिहारार्थं Gm3, Tv.　[8] 'व्रश्च ' (८ २ ३५)　[9] ८ ४ ४१　[10] उपरिपङ्क्तौ निधाय Gm1, Gm3.　[11] Tv adds य कश्चिदङ्क

(पा) परिक्षिप्त तु निवृतम् । परित वेष्टितस्य[1] नामनी । [2]'मुसुरुको-पङ्कदि' ॥ मूषित मुषितार्थकम् । चोरित मुषित स्यात्[3] ॥ प्रवृद्धप्रसृते । प्रसृतना-मनी । [2]'प्रसरेपङ्कदि' । 'तस्मादय प्रववृधे पृथिवीपतीनामुद्गीतपुण्यचरितो[4] भुवनेषु वश ' इति धर्मशर्माभ्युदय [5] ॥ न्यस्तनिसृष्टे । समर्पितनामनी । 'ग्रामेष्वात्म-निसृष्टेषु '[6] (रघु १ ४४) ॥ गणिताहते । द्वे चत्वारि अष्टावित्यावर्तना-मनी ॥ ८८ ॥

[1] छादित° B3, C1　[2] B3 omits　[3] मुषितनाम B3, C1　[4] उद्रिक्त° for उद्गीत° in B3　[5] मुद्रितग्रन्थे न दृश्यते　[6] °विसृष्टेषु इति मु ग्र (पृ १४)

**निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते ।**
**द्रुतावदीर्णे उद्गूर्णोद्यते कारितशिक्षिते ॥ ८९ ॥**

(वि) निदिग्धेति—निदिह्यत उपचीयत इति निदिग्धम् । 'दिह उपचये' । उपचीयत इति उपचितम् । 'चिञ् चयने' । उपचितस्य धान्यादेर्नामनी ॥ गुह्यत इति गूढम् । 'गुहू संवरणे' । [1]गुप्यत इति गुप्तम् । 'गुपू रक्षणे' । गुप्तस्य [2]धान्यादेर्नामनी ॥ गुण्ठ्यते [3]माल्यादिनेति गुण्ठितम् । 'गुठि वेष्टने' । रूष्यत इति रूषितम् । 'रुष हिंसायाम्'[4] । माल्यादिना रूषितस्तनादेर्नामनी ॥ द्रूयत इति द्रुतम् । 'द्रु गतौ' । अवदीर्यत इति अवदीर्णम् । 'दॄ विदारणे' । विदारितस्य नामनी ॥ उद्गूर्यत इति उद्गूर्णम् । 'गुरी उद्यमने' । उद्यम्यत इति उद्यतम्[5] । उद्युक्तस्य नामनी ॥ कार्यते शिक्ष्यत इति कारितम्[6] । शिक्ष्यत इति शिक्षितम् । 'शिक्ष विद्योपादाने' । शिक्षितस्य [7]विद्यादेर्नामनी ॥ ८९ ॥

[1] गाप्यते J2, K5, K6. [2] घनादे K4, K5, [3] धूल्यादिना K5, Pt2. [4] 'रुप व्याप्तौ' Pt2. [5] 'यम उपरमे' K4, K5. [6] काचमारोपित काचिनम्, शिक्यमारोपित शिक्यितम् Pt2 [7] शिप्यादे K5

(विय.) निदिग्धोपचिते । हरितालसुधाहिङ्गुलादिलिप्तस्य कुड्यादेर्नामनी । नितरां दिह्यते[1] स्म निदिग्धम् । 'दिह उपचये' । क्तः[2] ।। उपचीयते द्रव्यान्तरेण वर्ध्यत इति उपचितम् । 'चिञ् चयने' । क्तः । उपसर्गवशादत्र वृद्धिरर्थः ।। गूढगुप्ते । यस्य कस्यचिदप्रकटीभूतस्य[3] वस्तुनो नामनी । गुह्यते स्म गूढम् । 'गुहू संवरणे' । क्तप्रत्यय'ढत्व'ष्टुत्वढलोपाः[6] ।। [7]गुप्यते स्म गुप्तम् । [8]'गुपू रक्षणे' । क्तः ।। गुण्ठितरूषिते । द्रव्यान्तरेणाच्छादितस्य[9] नामनी । यथा—उत्तरीयावगुण्ठितं कुचमण्डलम् । रेणुरूषितं शिरः[10] इत्यादि । 'गुठि वेष्टने' इति धातोः कर्मणि क्तप्रत्यये गुण्ठितम् ।। रूषिः लौकिको धातुः व्याप्त्यर्थो भूवादिषु विज्ञेयः । ततः कर्मणि निष्ठायां रूषितम् ।। द्रुतावदीर्णे । द्रवीभूतस्य मांसादेर्नामनी । द्रूयते स्म द्रुतम् । 'द्रु गतौ' ।। अवदीर्यते स्म प्रशिथिलावयवत्वेनेत्यवदीर्णम् । 'दॄ विदारणे' । कर्मणि क्तप्रत्यये ऋत इत्वं[11] निष्ठानत्वं च ।। उद्गूर्णोद्यते । ऊर्ध्वदेशसंयोगं प्राप्तस्य[12] खड्गलगुडादेर्नामनी । [13]उद्गूर्यते स्म उद्गूर्णम् । 'गुरी उद्यमने' । निष्ठानत्वम् (८. २. ४२), उपधादीर्घश्च (८. २. ७७) ।। 'यम उपरमे' इत्यस्माद् निष्ठायामनुनासिकलोपे (६. ४. ३७) उद्यतः । उद्गूर्णोच्छ्रिते इति केचित् पठन्ति । 'श्रिञ् सेवायाम्' इत्यतः उत्पूर्वात् क्तप्रत्यये उच्छ्रितम् ।। कारितशिक्षिते । समे इत्येव । लौकिके वैदिके वा कर्मणि[14] कृताभ्यासस्य नामनी । यथा कारितो युद्धकर्मणि, शिक्षित इत्यर्थः । शिक्षां कार्यते स्मेति कारितम् । कृञो णिचि निष्ठा ।। शिक्ष्यते स्म शिक्षितम् । 'शिक्ष विद्योपादाने' । क्तः । सुभूतिचन्द्रस्तु काचितशिक्यिते इति पठित्वा व्याचष्ट । काचवद् अञ्चितं कृतं काचितम् । शिक्यवत् कृतं शिक्यितम् । संहतमित्यर्थः इति । टीकासर्वस्वकारोऽपि तमेव पाठं मनसि निधाय व्याकृत । 'काचितादिद्वयं शिक्यारोपिते वर्तते । "प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च" (ग. सू. ७. ४. ६७) इति काचशब्दात् शिक्यशब्दाच्च णिचि तदन्ताद् धातुद्वयादपि क्तप्रत्यये काचितं शिक्यित चेति' (पृ. ४०) ।। ८६ ।।

[1] Tv adds उपचीयते [2] 'झपस्तथो ' इति धत्वम् । [3] अप्रकटीकृतस्य TJ1, Tv [4] 'हो ढ ' [5] 'ष्टुना ष्टु ' [6] 'ढो ढे लोप ' 'ढ्रलोप .' इति

दीर्घश्च.　[7] गोप्यते स्म $B_5$, $B_6$　[8] 'गुप गोपने' $Gm_1$, $Gm_3$　[9] अभिभूतरूपस्य Tv.　[10] घट: $Tj_1$, Tv.　[11] 'हृलि च' इति दीर्घः　[12] प्रापितस्य Tv.　[13] उद्गुरते उद्यद्धृते स्म Tv.　[14] लौकिकेषु वैदिकेषु वा कर्मसु Tv.

(पा.) निदिग्धोपचिते[1] । अवचितनामनी । [2]'पेपवड्डिदि' ॥ गूढगुप्ते । गुप्तनामनी । 'दाचवड्डिदि' । गुण्ठितरूषिते । परागादिना छन्ननामनी ॥ द्रुतावदीर्णे । स्वयं विदीर्णनामनी । 'द्रुत शीघ्रे[3] शीघ्रगतेऽप्यवदीर्णविलीनयोः' इति वैजयन्ती (पृ. २२८, श्लो. ८) । 'द्रु गतौ' इत्यर्थपाठो[4] निदर्शनम् । तदुक्तम्—

'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृता लोके पाठस्तेषां निदर्शनम् ॥'

उद्गूर्णोद्यते । उत्क्षिप्तनामनी । उद्गूर्णः करवालः ॥ काचितशिक्यिते । [5]कारडिकायन्त्रे धृतस्य नामनी ॥ ८९ ॥

[1] 3 pages break in $A_1$.　[2] $C_1$ omits.　[3] शीघ्रम् $B_3$, $C_1$.　[4] अर्थपाठ $C_1$.　[5] कारटिका° $C_1$.

**घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे ।**
**वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम् ॥ ९० ॥**

(वि) घ्राणेति—घ्रायत[1] इति घ्राणम् । घ्रात च । 'घ्रा गन्धोपादाने'। घ्रातस्य पुष्पादेर्नामनी ॥ दिह्यत इति दिग्धम् । 'दिह उपचये' । लिप्यत इति लिप्तम् । 'लिप उपदेहे' । लिप्तस्य भित्त्यादेर्नामनी ॥ समुदच्यत इति समुदक्तम् । 'अञ्चु गतिपूजनयोः' । उद्ध्रियत इति उद्धृतम् । 'हृञ् हरणे' । उद्धृतस्य शल्यादेर्नामनी ॥ वेष्ट्यत इति वेष्टितम् । 'वेष्ट वेष्टने' । वलयाकार[2] सजातोऽस्येति वलयितम् । वेष्टितस्य वस्त्रादेर्नामनी । संवीयत[3] इति संवीतम् । 'व्येञ् संवरणे' । रुध्यते आव्रियत इति रुद्धम् । 'रुधिर् आवरणे' । आव्रियत इत्यावृतम् । 'वृञ् वरणे' । वस्त्रादिना आवृतस्य देहादेर्नामनी ॥ ९० ॥

[1] घ्रायते स्म $Pt_2$.　[2] वलय $K_5$.　[3] $J_2$ adds आच्छाद्यते, सव्यायत $K_6$.

(विव.) घ्राणघ्राते । घ्राणेन्द्रियानुभूतगन्धस्य कुसुमादेर्नामनी । घ्रायते स्म घ्रातम् । 'घ्रा गन्धोपादाने' । कर्मणि क्तप्रत्ययः । 'नुदविदोन्द...' इत्यादिना (८. २. ५६) वैकल्पिके निष्ठानत्वे घ्राणम्[1] ।। दिग्धलिप्ते । चन्दनादिना लिप्तस्य नामनी । दिह्यते स्म दिग्धम् । 'दिह उपचये' । उपचयो लेप इति धातुवृत्तौ[2] । क्तप्रत्यये 'दादेर्धातोर्घः' (८. २. ३२) इति घत्वे 'झषस्तथोर्धोऽधः' (८. २. ४०) इति धत्वम् ।। लिप्यते स्म लिप्तम् । 'लिप उपदेहे' । क्तः ।। समुदक्तोद्धृते समे । कूपादेरधःप्रदेशाद्[3] ऊर्ध्वप्रदेशमात्रं नीतस्य जलादेर्नामनी । सम्यग् उदच्यते उद्ध्रियते स्म समुदक्तम् । 'अञ्चु गतिपूजनयोः' । अत्राञ्चतेः पूजार्थत्वाभावाद् 'अञ्चेः पूजायाम्' (७. २. ५३) इति प्राप्तस्य [4]इडागमस्याभावः । 'उदितो वा' (७. २. ५६) इति इडागमस्य क्त्वाप्रत्यये वैकल्पिकत्वाद् 'यस्य विभाषा' (७. २. १५) इति निष्ठायामिडभावः । 'उदक्तमुदकं [5]कूपात्' इत्यादिवद् अञ्चनस्यापि अपादानविषयत्वाद् 'अञ्चोऽनपादाने' (८. २. ४८) इति निषेधाद् निष्ठानत्वस्याभावः[6] ।। समुदस्तेति क्वाचित्के पाठे सोपसर्गद्वयात् 'असु क्षेपणे' इति धातोः कर्मणि क्तप्रत्ययः ।। उद्ध्रियते स्मेति उद्धृतम् । 'हृञ् हरणे' । क्तः । प्रागुक्तम्[7] उद्गूर्णमुद्यतं चेति[8] शब्दद्वयं तु स्वशरीरापेक्षया उपरिप्रदेशं नीते लगुडादौ वर्तत इति न पौनरुक्तयम् । [9]क्वचिद् अर्थसाकर्यप्रयोगो लक्षणया निर्वोढव्यः ।। वेष्टितं स्याद् वलयितम् । लतादिना वेष्टितस्य वृक्षप्रकाण्डादेर्नामनी । 'वेष्ट वेष्टने' इति धातोर्निष्ठायां वेष्टितम् ।। वलयो वलयाकारोऽस्य संजात इति वलयितम् (५. २. ३६) ।। संवीतं रुद्धमावृतम् ।। हिमधूमाद्यावरकद्रव्यव्याप्तसर्वावयवस्य पर्वतादेर्नामानि । समन्ततो वीयते उद्यत इति संवीतम् । 'व्येञ् संवरणे' । क्तप्रत्यये यजादित्वात् (६. १. १५) संप्रसारणे परपूर्वत्वे[10] च (६. १. १०८) 'हलः' (६. ४. २) इति दीर्घः ।। 'रुधिर् आवरणे' इत्यतः क्तप्रत्यये रुद्धम् ।। 'वृञ् वरणे' इत्यस्माद् आङ्पूर्वाद् आवृतम् ।। वेष्टितादयः पञ्चैकार्था इति केचित् ।। ९० ।।

[1] Gm3, Tv add तदभावे घ्रातम् [2] दिह्यते उपलिप्यते इति मा धा वृत्तौ दृश्यते (पृ ३२३) [3] Tv adds भूतलात् [4] अवकाशाभावात् B6, Tv. [5] काशिका (पृ ४०८) [6] निष्ठानत्व न भवति Tv. [7] Tj1, Tv add उदाहरणम् [8] श्लो ८६ [9] Gm1, Gm3, Tv omit the sentence [10] 'सप्रसारणाच्च' इति पूर्व एकादेश

(पा.) घ्राणघ्राते । [1]आघ्रातनामनी ॥ दिग्धलिप्ते । पङ्कादिना लिप्त-नामनी ॥ समुदक्तोद्धृते समे । [2]उद्धृतस्य जलादेर्नामनी ॥ वेष्टितं—रुद्धमावृतम् । [3]परिवेष्टितनामनी ॥ ६० ॥

[1] आघ्रातस्य पुष्पादेः $C_1$.  [2] $C_1$ adds कूपात्.  [3] $B_3$ adds नद्यादिना.

रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानि तेजिते ।
स्याद् विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते ॥ ६१ ॥

(वि.) रुग्णमिति—रुज्यत इति रुग्णम् । 'रुजो भङ्गे' । भुज्यत इति भुग्नम् । [1]'भुजो कौटिल्ये' । भुग्नस्य रथादेर्नामनी ॥ निशायते तनूक्रियत इति निशितम् । शात च । 'शो तनूकरणे' । क्ष्णूयते तनूक्रियत इति क्ष्णुतम् । 'क्ष्णु तेजने' । [2]तेज्यते निशायत[3] इति तेजितम् । 'तिज निशातने' । शाणादिना तीक्ष्णी-कृतस्य खड्गादेर्नामानि ॥ पच्यते स्मेति पक्वम् । 'डुपचष् पाके' । [4]पतनोन्मुखस्य [5]फलादेर्नाम ॥ जिह्रेतीति ह्रीणः । ह्रीतश्च[6] । 'ह्री लज्जायाम्' । लज्जास्य सजातेति लज्जित । व्रीडितस्य नामानि[7] । ६१ ॥

[1] भुज $J_2$, $K_4$, $K_6$.  [2] तिज्यते $Pt_2$.  [3] $Pt_2$ omits  [4] विनाश° $K_5$.
[5] सस्यादे $K_4$, $K_5$  [6] ह्रीरस्य सजाता $K_5$  [7] लज्जायुक्तस्य वध्वादे $K_5$.

(विव.) रुग्णं भुग्ने । [1]आनताग्रभागस्य नामनी । यथा—फलभारभुग्ना-स्तरवः इति । 'रुजो भङ्गे' 'भुजो कौटिल्ये' । आभ्यां धातुभ्यां कर्मणि क्तप्रत्यये 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वेन रुग्णम् । भुग्नं च ॥ अथ—तेजिते । शाणादिनिघर्षणेन तीक्ष्णीकृतधाराप्रदेशस्य [2]खड्गादेर्नामानि । 'शो तनूकरणे' इत्यतो निपूर्वात् कर्मणि क्तप्रत्यये 'शाच्छोरन्यतरस्याम्' (७. ४. ४१) इति विक-ल्पेन इत्वे निशितम् । [3]तदभावपक्षे शातम् । क्ष्णूयत इति क्ष्णुतम् । 'क्ष्णु तेजने' । तेजनं तनूकरणम् । 'तिज निशाने' इत्यतः चौरादिकात् तेजितम्[4] ॥ स्यात्—पक्वम् । विनाशः विलयनम्, तत्र उन्मुखम् । आसन्नविनाशमित्यर्थः । यथा—पक्वो ज्वरः । पक्वः प्रतिश्यायः इत्यादि । परिणतेऽपि पक्वं वक्ष्यते[5] । पच्यते स्म पक्वम्[6] । 'पचो वः' (८. २. ५२) इति निष्ठातकारस्य वकारः ॥ ह्रीणह्रीतौ तु लज्जिते । व्रीडायुक्तस्य नामनी । जिह्रेति स्म ह्रीणः । ह्रीतश्च । 'ह्री लज्जायाम्' ।

'मुदविद...' इत्यादिना (८. २. ५६) विकल्पेन निष्ठानत्वम् ।। लज्जास्य सजाता[7] लज्जित. । तारकादि. (५ २. ३६) ।। ६१ ।।

[1] Gm3, Tv add स्वकीयमूल प्रति [2] क्षुरिका° Tj1, Tj2 [3] इत्वाभाव° B5, B6 [4] ७ ३ ८६ [5] श्लो ६६ [6] B6 adds 'डुपचष् पाके' [7] इति विग्रहे तारका दित्वाद् इतच्प्रत्यये लज्जित Gm1, Gm3, Tv

(पा) रुग्ण भुग्ने । [1]भुग्ननामनी ।। अथ—तेजिते । उत्तेजितनामानि ।। स्यात्—पक्वम् । आसन्नविनाशनाम[2] । 'पक्वो मानज्वर स्त्रीणाम्' ।। ह्रीण—लज्जिते । लज्जितनामानि ।। ६१ ।।

[1] वक्रस्य° C1 [2] आसन्नविनाश पक्व स्यात् C1

**वृते तु वृत्तवावृत्तौ संयोजित उपाहितः ।**
**प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्नुते ।। ६२ ।।**

(वि) वृत इति—व्रियते[1] कन्यादिनेति वृत । 'वृञ् वरणे' । वृत्यते स्मेति वृत्त । 'वृतु वर्तने' । वावृत्यते व्रियते स्मेति वावृत्त । 'वावृतु वरणे' । कन्यादिना वृतस्य वरादेर्नामानि ।। सयोज्यते[2] युगादिनेति सयोजित । 'युजिर् योगे' । उप समीपे आधीयते स्थाप्यत इत्युपाहित । युगादिना सयोजितस्य वलीवर्दादेर्नामनी ।। प्राप्तु योग्य प्राप्यम् । 'आप्लृ व्याप्तौ' । गन्तु [3]योग्य गम्यम् । समासादितु प्राप्तु योग्य समासाद्यम् । 'पद्लृ विशरणादौ' । प्राप्तव्यस्य वस्तुनो नामानि ।। स्यन्दते स्मेति स्यन्नम् । 'स्यन्दू प्रस्रवणे' । रीयते [4]प्रस्रवतीति रीणम् । 'रीङ [5]स्रवणे' । स्रवतीति स्रुतम् । 'स्रु गतौ' । स्नौति स्रवतीति[6] स्नुतम् । 'ष्णु प्रस्रवणे' । [7]सुषिरद्वारान्नि सृतस्य जलादेर्नामानि ।। ६२ ।।

[1] Pt2 adds स्म [2] सयुज्यते K5, Pt2 [3] J2 K4, K6 add प्राप्तु [4] स्रवति J2, K6 [5] प्रस्रवणे K3, K4, K6 [6] K5 omits [7] K3, K4 omit द्वारात

(विव) वृते—वावृत्तौ । [1]प्रसन्नदेवता प्रति प्रार्थितार्थस्य नामानि । व्रियते स्म वृतम् । 'वृञ् वरणे' । क्तः । यथा वृत. पुत्र इति ।। 'तप ऐश्वर्ये' इत्यनन्तर

दिवादिषु 'वावृतु वर्तने' इति पठ्यते। तत्र वाग्रहणं पूर्वस्य धातोः दैवादिकविकल्पनार्थमिति [2]व्याख्याने 'वृतु वर्तने' इत्यस्मादेव धातोः कर्मणि क्तप्रत्यये वृत्तम्। अपरे तु—वाशब्दमप्युत्तरधात्ववयवमाहुः। तन्मते वावृत्यते स्मेति वावृत्तम्। 'वावृतु वर्तने'। वर्तनं वरणमिति धातुवृत्तिः[3]। कर्मणि क्तप्रत्ययः। तथा च—'ततो वावृत्यमानासौ रामशालां न्यविक्षत' इति भट्टिः (४. २८)। अत्र वावृत्यमाना वृण्वतीत्यर्थः॥ संयोजित उपाहितः। द्रव्यान्तरेण सह प्रापितसंयोगस्य वस्तुनो नामनी। सम्यग् योजितः संयोजितः॥ [4]उप समीपे आधीयते स्म उपाहितः[5]। 'उपाहितां वक्षसि पीवरस्तने' इति भारविः[6] (किरा. ८. ३७)॥ प्राप्यं—समासाद्यम्। प्राप्तुं शक्यं ग्रामादिकं प्राप्यम्। [7]'ऋहलोर्ण्यत्' (३. १. १२४)॥ 'गम्लृ गतौ' इत्यतः 'पोरदुपधात्' (३. १. ९८) इति यत्प्रत्यये गम्यम्॥ [8]आङि सदिः पद्यर्थे इति चौरादिकाद्धातोः शक्यार्थे ण्यत्प्रत्यये (३. १. १२४) समासाद्यम्॥ स्यन्नं—स्नुतम्। प्रशिथिलावयवावरुद्धतटाकसेतुघटादेः बहिर्निःसृतजलक्षीरादेर्नामानि। 'स्यन्दू प्रस्रवणे' इत्यतः कर्तरि क्तप्रत्यये (३. ४. ७२) 'रदाभ्याम्...' इत्यादिना (८. २. ४२) निष्ठानत्वे स्यन्नम्। रीयते स्म रीणम्। 'रीङ् गतौ' दैवादिकाद्धातोः 'स्वादय ओदितः' (ग. सू.) इत्यतिदेशाद् 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वम्॥ स्रवति स्म स्रुतम्। 'स्रु स्रवणे'[9]॥ स्नौति स्म स्नुतम्। 'ष्णु प्रस्रवणे'॥ ९२॥

[1] स्वेच्छया प्रार्थितार्थे वृतादित्रयम्। यथा—वृतो वर, वृत राज्यमित्यादि Gm3, Tv [2] इति केचिद् व्याचक्षते। तन्मते Gm1, K5, Tv [3] मा धा वृत्तौ न दृश्यते [4] उपपूर्वात् 'अह् व्याप्तौ' इत्यस्मात् क्त Tv [5] Gm3 adds दधाते क्त। 'दधातेर्हि' (७ ४ ४२) [6] माघ Tj1; एव सति 'उपाहितैर्वपुषि निवातवर्मभि' (१७ ५१) [7] Gm3, Tv add 'आप्लृ व्याप्तौ' [8] 'आङ पद पद्यर्थे' इति मा धा (१ ५६५). [9] Gm3 adds 'जालुपेक'

(पा) वृते—वावृत्तौ[1]। वृतनामानि। 'ततो [2]वावृत्तमाना सा रामशाला न्यविक्षत' इति भट्टि (४ २८)॥ सयोजित उपाहित। द्रव्यान्तरेण मिश्रितस्य नामनी। क्षीरेणोपाहित नीरम्॥ प्राप्य—समासाद्यम्। प्राप्त योग्यनामानि॥ स्यन्न—स्नुतम्। स्यन्ननामानि[3]॥ ९२॥

[1] व्यावृत्तौ B3. [2] व्यावृत्त° B3. [3] प्रस्रुत° C1.

संगूढः स्यात् संकलितोऽवगीतः ख्यातगर्हणः ।
विविधः स्याद् बहुविधो नानारूपः पृथग्विधः ॥ ९३ ॥

(वि) सगूढ इति—सगुह्यते[1] सकल्यत इति सगूढ । 'गुहू सवरणे'। सकल्यत[2] इति सकलित । सकलितस्य भारतमञ्जर्यादेर्नामनी ॥ [3]अवगीयते पापिष्ठोऽसाविति शब्द्यतेऽवगीत । 'गै शब्दे'। ख्यात गर्हण यस्येति ख्यातगर्हण । प्रख्यातनिन्दस्य नामनी ॥ विचित्रा विधा प्रकारोऽस्येति विविध । बह्वचो विधा प्रकारा अस्येति बहुविध । पृथग्विधश्च[4] । नानाविधानि रूपाण्यस्येति नानारूप. । बहुरूपस्य मयूरादेर्नामानि ॥ ९३ ॥

[1] सगुह्यते J2, K6, Pt2. [2] Pt2 adds सक्षेप्य गण्यते स्म [3] अव निकृष्ट गीयते स्म Pt2 [4] J2 adds पृथग्विधा यस्येति

(विव.) संगूढः स्यात् संकलितः । [1]बहुविधोऽप्यर्थः क्वचिदेकत्र सक्षिप्तः संगूढादिशब्दद्वयेनोच्यते । यथा—श्रीमहाभारतार्थो बालभारताख्ये काव्ये[2] । यथा वा—श्रीरामायणार्थः संक्षेपरामायणे इत्यादि । गणितज्ञैरप्युक्तम्—

'यद्वस्तु भिन्नकृत्येषु विभज्य विनियोजितम् ।
अङ्गैरेकीकृताङ्कं चेत् संकलीकृतमुच्यते ॥'

इति । [3]सक्षेपेण गुह्यते संव्रियत इति संगूढः । 'गुहू संवरणे'। क्तः । गुप्तेऽपि गूढ उक्तः ॥ सकल्यते संक्षिप्यत इति संकलितः । कलतिः [4]सर्वार्थो धातुः ॥ अवगीतः ख्यातगर्हणे । लोकप्रसिद्धमहापातकादिदोषदूषितस्य[5] नामनी । अवगीयते [6]सगर्हं शब्द्यत इति अवगीतः । 'गै शब्दे'। क्तः[7] । अवेत्युपसर्गो गर्हार्थः ॥ विविधः—पृथग्विधः । विचित्ररूपस्य मयूरादेः कालभेदेन वा नानाप्रकारस्य मेघमण्डलादेर्नामानि । विचित्रा विधा प्रकारो यस्येति विविधः । अन्ये व्यक्तयोगाः ॥ ९३ ॥

[1] भूमाप्यर्थं Gm3, Tv [2] Tj1, Tj2 add सक्षिप्त . [3] सगूह्यते B5, B6. [4] सकलार्थं B5, Gm1 [5] निन्दाप्रगम्य Gm3, Tv. [6] सगर्वं Tv. [7] 'भूमाख्या—' (६ ८ ६६) इतीत्वम्

(पा) सगूढ स्यात सकलित । भुगतत्वेन गृहस्य नामनी ॥ अवगीत ख्यातगर्हण । प्रकटनिन्दायुक्त[1] ऽवगीत स्यात् । पुन: पुन प्रेक्षितमपि । 'अव-

गीत मुहुर्दृष्टम्' इति हलायुध (अ मा ४ ७०) ।। विविध—पृथग्विध ।
नानाविधनामानि ।। ६३ ।।

[1] °निन्दायुक्तस्य नामनी $C_1$

**अवरीणो धिक्कृतश्चाप्यपध्वस्तोऽवचूर्णित ।**
**अनायासकृत फाण्ट स्वनित ध्वनित समे ।। ६४ ।।**

(वि) अवरीण इति—अवगीयते भृश पीडयत इति अवरीण । 'री गतिरेषणयो '[1] । धिक्क्रियते तिरस्क्रियत इति धिक्कृत । अपध्वस्यते पीडयत इति अपध्वस्त । 'ध्वसु भ्रसु अवस्रसने'[2] । अवचूर्ण्यते सपिष्यत[3] इति अवचूर्णित । चूर्ण सपेषणे' । परैरत्यन्तपीडितस्य नामानि ।। फणति [4]द्रवत्वाद् गच्छतीति फाण्टम् । 'फण गतौ' । आयास विनैव कृतस्य [5]सोमकषायादिविशेषनाम ।। स्वन्यत इति स्वनितम् । स्वन शब्दे'[6] । ध्वन्यत इति ध्वनितम् । 'ध्वन शब्द' । कृतनिनदस्य भर्यादेर्नामनी ।। ६४ ।।

[1] रीङ स्रवण $J_2$, $K_6$　[2] अध पतने $K_4$, $Pt_2$ omits भ्रसु　[3] पीडयते $Pt_2$
[4] द्रवरूपत्वान्नैव स्रावतिष्ठत $Pt_2$　[5] सोष्णस्य कषाय° $K_2$　[6] $K_2$, $K_3$, $K_5$ add अव्यक्ते

(विव) अवरीणो—अवचूर्णित । 'परैरत्यन्त पीडितस्य चत्वार्येतानि नामानि' इति सुबोधिनीकार । अवगहित यथा भवति तथा रीयते भृश पीडयत इति अवरीण । 'री गतिरेषणयो ' । रेषण हिसेति धातुवृत्ति[1] । क्त । 'ल्वादिभ्य ' (८ २ ४४) इति निष्ठानत्वम् । अत्र केचित्—अधरीण इति द्वितीयाक्षर दन्त्यवर्गचतुर्थं पठन्ति । तत्राधरशब्दात् खप्रत्ययोपपत्तिश्चिन्तनीया ।। धिक् इत्यव्यय [2]भर्त्सनशब्दस्य विषय । [3]कृतो धिक्कृत ।। ध्वसि धातुपारायणे गत्यर्थ पठित । प्रयोगे तु हिसाया वर्तते । तत कर्मणि क्तप्रत्यये ऽपध्वस्त ।। दु खजनकत्वसादृश्यात् चूर्णशब्देन परकृतस्तिरस्कारो विवक्षित । अवकीर्णं चूर्णमस्मिन्निति, अवचूर्ण कृतोऽवचूर्णित । टीकासर्वस्वकारस्तु अपध्वस्तावित्रय क्षिप्तचूर्णे वतत इति व्याचष्ट[4] (पृ ४२) । अवचूर्णयतीति णिचि (३ १ २५) क्तप्रत्यये अवचूर्णित ।। अनायासकृत फाण्टम । आयास प्रयत्नाधिक्यम् । तदन्तरेणैव स्वल्पव्यापारमात्रात्

कषायरूपं यद्द्रवति तत् फाण्टमित्युच्यते । फणति गच्छति द्रवरूपत्वाद्[5] नैकत्रावतिष्ठत इति फाण्टम् । 'फण गतौ' । क्तप्रत्यये सति 'क्षुब्धस्वान्त... फाण्टबाढानि...' इत्यादिना (७. २. १८) निपातनाद् इडागमाभावः । ष्टुत्वं च । अत्र सूत्रे काशिका—'यदपक्वम्[6] अपिष्टं कषायम् उदकसंपर्कमात्राद् विभक्तरसम् ईषदुष्णं भवति तत्फाण्टमुच्यते । अल्पप्रयाससाध्यत्वाद् अनायासेन लक्ष्यते' इति (पृ. ३०३) । अत्र टीकासर्वस्वकारोऽपि—

[7] 'द्रव्यादचूर्णितात् तोये प्रतप्ते विनिवेशिते ।
रसो निर्याति यः सद्यः स फाण्ट इति संस्तुतः ।।'

इति । [8]सुभूतिरप्याह—'यदुदकनिमज्जनमात्रेण तस्मिन्नेवाह्नि निर्यासविनिर्गमात् संपन्नमौषधं कषायद्रव्यात्मकं तदनायासकृतं फाण्टमिति' ।। स्वनितध्वनिते समे । ताड्यमानस्य भेर्यादेर्नामनी । व्यक्तयोगे च ।। ९४ ।।

[1] रेपण वृक्शब्द इति मा धा (पृ ५२६) [2] भर्त्सने धिगिति B5, Gm1, Tj1. [3] कृत Gm3 [4] मुद्रितग्रन्थे तु 'दृप्तचूर्णे(?) लेखादौ' इति दृश्यते [5] °रूपत्वेन Gm3 [6] 'यदशृत अल्पप्रयत्न' इति मुद्रितग्रन्थे [7] 'द्रव्यादायोत्थितात् चैव सस्थिते... सस्तुत' इति मु ग्रन्थे [8] सुभूतिचन्द्रोऽपि Tj1, Tj2

(पा) अवरीणो धिक्कृत । निन्दितनामनी[1] ।। अवध्वस्तोऽवचूर्णित. । चूर्णीकृतनामनी । अनुक्तम्—'अवज्ञातोऽपहस्तित' । करविसृष्टनामनी ।। अनायासकृत फाण्टम् । आयासेन विना रचित फाण्ट स्यात्[2] । फाण्टमौपधम् ।। स्वनित ध्वनित समे । शब्दितनामनी ।। ९४ ।।

[1] धिक्कृत° C1. [2] अनायासकृतनाम C1

**बद्धे संदानितं मूतमुद्दितं संदितं सितम् ।**
**निष्पक्वं क्वथितं पाके क्षीराज्यहविषां शृतम् ।। ९५ ।।**

(वि) बद्ध इति—बध्यते स्म बद्धम् । 'बध संयमने' । सदान्यते बध्यत इति संदानितम्[1] । 'दान खण्डने' । मूयत इति मूतम्[2] । 'मूञ् बन्धने' । उद्दीयत[3] इति उद्दितम् । संदीयत इति संदितम् । 'दो ऽवखण्डने' । सीयत इति सितम् । 'षिञ् बन्धने' । रज्ज्वादिना बद्धस्य [4]पश्वादेर्नामानि ।। निःशेषेण[5] पक्व[6] निष्पक्वम् ।

क्वथ्यते [7]निःशेषेण पच्यते क्वथितम् । 'क्वथे निष्पाके' । अष्टभागावशिष्टस्य [8]कषायादेर्नामनी ॥ श्रायते पच्यत इति शृतम् । 'श्रा पाके' । क्षीराज्यहविषां पाकस्य नाम ॥ ६५ ॥

[1] सदान बन्धनमस्य मजानम् Pt2    [2] Pt2 adds मूर्णमिति वा पाठ    [3] J2, Pt2 add बध्यते    [4] अश्वादे. K4    [5] नितरा Pt2    [6] पच्यते K3, Pt2    [7] निष्पच्यते Pt2    [8] कषायित° K6

(विव.) बद्धे—सितम् । रज्ज्वादिना निगलितावयवस्य बलीवर्दादेर्नामानि । 'बध संयमने'[1] इत्यतः कर्मणि क्तप्रत्यये बद्धम् । [2]'दाम संदानम्' इति पूर्वमुक्तम्[3] (१, पृ. ५६६) । तत् संजातमस्येति संदानितम् । तारकादिः (५.२.३६) । 'मूङ बन्धने' इति धातोर्मूतम् । टीकासर्वस्वकार आह (पृ. ४३)—'मुर्वी बन्धने' इत्यतः कर्मणि क्तप्रत्यये[4] [5]वकारलोपे "र्वोरुपधाया दीर्घ इकः" (८.२.७६) इत्युपधादीर्घे च मूर्णम्' इति ॥ [6]उत्पूर्वः संपूर्वश्च द्यतिधातुः बन्धने वर्तते । अत एव प्रागुक्तम् (१, पृ. ४६६) 'समे तुद्दानबन्धने' इति । ततः क्तप्रत्यये सति उद्दितम् । संदितं च । 'द्यतिस्यति . . .' इत्यादिना (७.४.४०) इत्वम् ॥ 'षिञ् बन्धने' इत्यतः क्तप्रत्यये धात्वादिसत्वे (६.१.६४) च सितम् ॥ निष्पक्वं क्वथितम् । अग्निसंयोगेनाष्टमभागावशेषितस्य त्रिफलाकषायादेर्नामनी । निःशेषेण पच्यते स्म निष्पक्वम्[7] ॥ 'क्वथे निष्पाके' इत्यतः कर्मणि क्तप्रत्यये क्वथितम् ॥ पाके—शृतम् । पक्वेषु [8]पुरोडाशाज्यक्षीरेषु प्रत्येकं शृतशब्दो वर्तत इत्यर्थः । 'शृतं मयि श्रयताम्' (तै. ब्रा. ३. ७. ६ १२) इति क्षीरे प्रयोगः । 'आग्नीध्रो हवींषि सुशृतानि करोति' इति हविर्मात्रे इत्यादि । हविर्ग्रहणेनैव क्षीरस्यापि ग्रहणे 'शृतं पाके' (६. १. २७) इति सूत्रे [9]'क्षीरहविषोरिति वक्तव्यम्' इति वार्त्तिकच्छायया पृथग्ग्रहणम् । 'घृतमाज्यं हविः' (१, पृ. ५८५) इत्यादौ हविःशब्दस्य घृतमात्रे रूढत्वात् तस्यैव ग्रहणं मा भूदित्याज्यस्याप्युपादानं कृतम् । क्वचित्तु 'पाके स्यात् क्षीरहविषोः शृतम्' इत्येव पाठः । श्रायत इति शृतम् । 'श्रा पाके' इति क्षीरहविषोरर्थयोः [10]शृभावो निपातितः ॥ ६५ ॥

[1] 'बन्ध बन्धने' Tj1, Tj2    [2] Gm3, Tv add वैश्यवर्गे    [3] प्रागुक्तम् Gm3    [4] वलोपदीर्घणत्वानि इति मु ग्रन्थे    [5] 'राल्लोप' (६ ४ २१)    [6] 'दो अवखण्डने' इति धातु Gm3, Tv    [7] 'पचो व' (८ २ ५२)    [8] अत्र हवि शब्देन चरुपुरोडा-

शादिक विवक्षितम् $Gm_3$, Tv [9] 'पाकग्रहण निपातनविषयप्रदर्शनार्थं तेन क्षीरहविषोरेव' इति काशिकायाम् (पृ १२०) [10] 'श्रृत पाके' इति सूत्रेण

(पा) वद्धे—सितम् । वद्धनामानि ।। निष्पक्व[1] क्वथितम् । नितरामग्निना [2]सतप्तनामनी ।। पाके—श्रृतम् । क्षीरादीना पाके श्रृत स्यात् । श्रृत क्षीरामाज्य हविर्वा । अन्यत्र श्राणा यवागू ।। ६५ ।।

[1] निष्पक्वे $B_3$ [2] क्वथितस्य $C_1$

**निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतानिले ।**
**पक्वं परिणते गूनं हन्ने मीढं तु मूत्रिते ।। ६६ ।।**

(वि) निर्वाण इति—निर्वाति शाम्यति स्मेति निर्वाण । 'वा गतिगन्धनयो '। शान्तमुनिवह्न्योर्मोक्षादेर्नाम ।। निर्गतो वातोऽस्येति निर्वात[1] । निवृत्तसचारस्य वायोर्नाम ।। पच्यते [2]कालक्रमेणेति पक्वम् । 'डुपचष् पाके' । परिणमति अवस्थान्तरमापद्यत इति परिणतम् । 'णमु प्रह्वत्वे शब्दे च' । कालेन परिणाम[3] गतस्य [4]बुद्ध्यादेर्नामनी ।। गूयते गुदेनोत्सृज्यते गनम् । 'गु पुरीषोत्सर्गे' । हद्यते गुदेनेति हन्नम् । 'हद पुरीषोत्सग' । गुदान्नि सृतस्य[5] पुरीषादेर्नामनी ।। मिह्यते [6]सिच्यतेऽनेनेति मीढम् । 'मिह सेचने' । मूत्र्यते प्रस्रूयत इति मूत्रितम्[7] । 'मूत्र प्रस्रवणे' । मेहनेनोत्सृष्टस्य मूत्रस्य नामनी ।। ६६ ।।

[1] निर्वाति स्म $Pt_2$ [2] $J_2$ omits काल [3] परिपाक $K_3$, $K_5$ [4] °पर्णमूलादे $J_2$, $K_5$, $Pt_2$ adds पक्वा बुद्धि , पक्व फलम् [5] निर्गतस्य $K_5$ [6] परिपिच्यते $K_5$ [7] मूत्रम् $K_3$, $K_4$, $K_5$

(विव.) निर्वाणो मुनिवह्न्यादौ । निर्वाति स्म निर्वाणः । 'वा गतिगन्धनयो'' । क्त. । 'निर्वाणोऽवाते' (८. २. ५०) इति वातव्यतिरिक्तार्थे निष्ठानत्वेन निपातितः । यथा—निर्वाणो मुनि', मुक्त इत्यर्थ' । निर्वाणो गजः, मग्न इत्यर्थः । निर्वाणो मोक्ष इत्यादि ।। निर्वातस्तु गतेऽनिले । [1]वातरहित इत्यर्थः । निर्वाति स्म निर्वातः । निर्वातो देश । निर्वाता शाला । निर्वातं [2]मन्दिरमित्यादि ।। पक्व परिणते । कालवशेन परिपाक गते[3] अवस्थान्तरापन्नत्वेन पक्वसादृश्यात् पक्वम् । यथा—पक्वा बुद्धि', पक्व कार्यम् इत्यादि । पक्वशब्दोऽत्रैव वर्गे व्युत्पादितः[4]

(श्लो. ६१) ।। परिणमति स्म परिणतम् । पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणामः । 'उपसर्गादसमासेऽपि णोपदेशस्य' (८. ४. १४) इति णत्वम् ।। गूनं हन्नं । गुदमुखाद् बहिरुत्सृष्टस्य पुरीषादेर्नामनी । यथा—गूनं पुरीषम् । गूना यवागूः इत्यादिमनुष्यवर्गोक्तानि उत्सृष्टानुत्सृष्टसाधारणपुरीषस्येति न पौनरुक्तयम् । [5]गूयते स्मेति गूनम् । 'गु पुरीषोत्सर्गे' । 'दुग्वोर्दीर्घश्चेति वक्तव्यम्' (वा. ८. २. ४४) इति निष्ठानत्वं दीर्घश्च । हद्यते पायुदेशादिति हन्नम् । 'हद पुरीषोत्सर्गे' । 'रदाभ्याम् ...' (८. २. ४२) इति निष्ठानत्वम्[6] । केचित्तु शब्दद्वयमपि कर्तरि निष्ठायां कृतपुरीषोत्सर्गे प्राणिनि वर्तत इत्याहुः[7] ।। मीढं तु मूत्रिते । बहिरुत्सृष्टस्य मूत्रस्य नामनी । मिह्यते सिच्यते स्म मीढम् । 'मिह सेचने' । क्तप्रत्यये 'हो ढः' (८. २. ३१) इति ढत्वे 'झषस्तथोर्धोऽधः' (८. २. ४०) इति निष्ठातकारस्य धत्वे, ष्टुत्वे (८. ४. ४१) ढलोपे[8] (८. ३. १३) दीर्घश्च (६. ३. १११) ।। मूत्र्यते प्रस्रूयत इति मूत्रितम् । 'मूत्र प्रस्रवणे' । शब्दद्वयमपि पूर्ववत् कर्तरि निष्ठायाम् उत्सृष्टमूत्रे प्राणिनि वर्तत इति केचित् । यथा मूत्रितो बाल इत्यादि ।। ६६ ।।

[1] श्रान्तवायो निवात , वायुरहितो भवतीति निर्वात Gm3, Tv. [2] गृहम् B5, B8. [3] बुद्धयादौ पक्वशब्द Tj1, Tj2. [4] विनाशोन्मुखे पक्वशब्दो निरुक्त Tv. [5] Gm3 adds उत्सृज्यते [6] Tv adds गून पुरीष, गूना विष्ठा, हन्न पुरीष, हन्ना विष्ठा. [7] इति पूर्ववत् पौनरुक्तयपरिहार Gm3, Tv [8] 'ढो ढे लोप ' इति लोपे 'ढ्लोपे पूर्वस्य दीर्घोऽण ' इति दीर्घ T\

(पा.) निर्वाणो मुनिवह्न्यादौ । मुनिवह्निप्रभृतौ निर्वाण स्यात् । निर्वाणो मुनि' । मुक्त इत्यर्थ । निर्वाणो वह्नि', दीपो वा । विनश्वरतया[1] स्थित इत्यर्थ' । निर्वाणो हस्ती । जले निमग्न इत्यर्थ । 'निर्वाण निर्वृतौ मोक्षे विनाशे गजमज्जने' इति विश्वप्रकाशिका[2] (पृ. ५२, श्लो. ५६) ।। निर्वातस्तु गतेऽनिले । वायावपि निर्वात स्यात् । निर्वातो वायु' । स्थिर इत्यर्थ. ।। पक्व परिणते । परिपक्वनामनी ।। गून हन्ने । कृतपुरीषस्य नामनी ।। मीढ तु मूत्रिते । कृतमूत्रस्य नाम ।। ६६ ।।

[1] विनष्टतया B3. [2] 'निर्वाणमस्तगमने निर्वृतौ गजमज्जने' इति मु ग्रन्थे.

**पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते ।**
**दान्तस्तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः ॥ ९७ ॥**

(वि.) पुष्ट इति—पुष्यत इति पुष्टम् । पुषित च । 'पुष पुष्टौ' । पुष्टावयवस्य नामनी ॥ सह्यते मृष्यते स्मेति सोढम् । 'षह मर्षणे' । क्षम्यत इति क्षान्तम् । 'क्षमूष् सहने' । [1]सहनादेर्नामनी ॥ [2]उद्वम्यते उद्वान्तम् । 'टुवमु उद्गिरणे' । [3]उद्गम्यते स्म उद्गतम् । त्वगादिक भित्त्वोद्गतस्य [4]लोहितादेर्नामनी ॥ दम्यते शिक्ष्यत इति दान्तः । दमितश्च । 'दमु [5]उपशमने' । आचार्यादिशिक्षया शिक्षितस्य नामनी[6] ॥ शम्यते स्मेति शान्तः । शमितश्च । 'शमु उपशमने' । शान्तस्य मुन्यादेर्नामनी ॥ [7]प्रार्थ्यत इति प्रार्थितः । 'अर्थ उपयाच्ञायाम्' । अर्द्यते स्म अर्दित. । 'अर्द गतौ याचने च' । याचितस्य पदार्थस्य नामनी ॥ ९७ ॥

[1] मर्षितस्य शपनादे K5; क्षमादे. K4; K2 omits. [2] उद्वमति स्म Pt2
[3] उद्गच्छति स्म Pt2; K6 omits. [4] रोहित° K2, K6. [5] उपशमे K4.
[6] 'पूर्वं तप क्लेशसह उक्तम् । इदानी सामान्येन वहनादिक्लेशसहे दान्तद्वयम्' इति टी. स (पृ ४४). [7] अर्थ्यंत इति K6.

(विव.) पुष्टे तु पुषितम् । मृष्टाहारादिभिः उपचितावयस्य नामनी । [1]पुष्यते स्म पुष्टम् । 'पुष पुष्टौ' । दिवादिः । अनिट्कारिकासु पुष्यति शुष्यतीति दैवादिकस्य ग्रहणात् इडागमो नास्ति । भौवादिकात्तु कर्मकर्तरि क्तप्रत्यये भवत्येव । स्वयमेव पुष्यते स्म पुषितम् ॥ सोढे क्षान्तम् । [2]अनादृतस्य वाक्पारुष्यादेरपराधस्य नामनी । यथा—सोढाः परुषालापाः, सोढः कशाघातः इति । सह्यते स्म सोढम् । 'षह मर्षणे' । क्तप्रत्ययः । ढत्वधत्वष्टुत्वढलोपेषु 'सहिवहोरोदवर्णस्य' (६. ३. ११२) [3]इत्योकारादेशः ॥ क्षम्यते स्म क्षान्तम् । 'क्षमूष् सहने' । कर्मणि क्तप्रत्यये सति 'अनुनासिकस्य क्विझलोः क्ङिति' (६. ४. १५) इत्युपधादीर्घः, अनुनासिकस्य परसवर्णादेशश्च (८. ४. ५८) ॥ उद्वान्तमुद्गते । वल्मीककुहरादेरुद्गच्छतो[4] दन्दशूकादेर्नामनी । उद्वम्यते बहिरुद्गीर्यते स्मेति उद्वान्तम् । क्तप्रत्ययः । उपधादीर्घः (६. ४. १५), परसवर्णादेशश्च (८. ४. ५८) ॥ 'ओहाङ् गतौ' इति धातोः उत्पूर्वात् 'ओदितश्च' (८. २. ४४) इति निष्ठानत्वे सति उद्धानमिति सुभूतिचन्द्रादयः । [5]गमेरुत्पूर्वात् कर्तरि क्तप्रत्यये (३. ४. ७२) उद्गतः ॥ दान्तस्तु दमिते । कर्मकरणभारवहनादिक्लेशसहत्वेन कृतशिक्षस्य [6]भृत्यवली-

वर्दादेर्नामनी । [7]ब्रह्मवर्गोक्तस्यापि दान्तस्य (१, पृ. ४७४) विशेष्यनिघ्नप्रस्तावे वैकल्पिकरूपान्तरप्रदर्शनार्थमभिधानमित्यपौनरुक्त्यम् । दम्यते स्वामिना नियम्यत इति दमितः । 'दमु उपशमे'। हेतुमण्णिजन्तात् कर्मणि क्तप्रत्यये इडागमे 'निष्ठायां सेटि' (६.४.५२) इति णिलोपः । 'वा दान्तशान्त ...' इत्यादिना (७.२.२७) विकल्पेन निपातनाद् इडागमाभावे दान्तः ।। शान्तः शमिते । [8]प्रतिक्रिया-निर्वर्तितस्य[9] रोगादेर्नामनी । 'शमु उपशमे' इत्यतो हेतुमण्णिचि पूर्ववदेव शमित, शान्त इति रूपद्वयसिद्धिः ।। प्रार्थितेऽर्दितः । याचितस्य [10]धनादेर्नामनी । 'अर्थ उपयाच्ञायाम्' इत्यस्मात् चुरादिण्यन्तात् कर्मणि क्तप्रत्यये प्रार्थितः ।। 'अर्द गतौ याचने च' इत्यतः कर्मणि क्तप्रत्यये इडागमे च अर्दितः ।। ९७ ।।

[1] पुष्यति B5, Tj1 [2] यथाकथचिदापादितगुर्वादिचित्तविक्षेपशिष्यादिकृतापराधस्य नामनी Tv [3] Gm3, Tv add ढ्लोपे [4] अदृश्यप्रदेशादूर्ध्वमुद्गच्छता Tj1, Tv [5] 'गम्लृ गतौ' इत्यस्मात् B6, Tj2. [6] Tv adds शिष्य° [7] ब्रह्मवर्गे तप क्लेशसहो दान्त उक्त । इदानी तु सामान्येन Tv [8] चिकित्सादिकरणेन Gm1, Gm3 [9] निवृत्तस्य Tv [10] पदार्थस्य Gm3, Tv

(पा) पुष्टे तु पुषितम् । पुष्टनामनी ।। सोढे क्षान्तम् । [1]सोढनामनी ।। उद्वान्तमुद्गते । उद्गतनामनी । दान्तस्तु दमिते । दमितनामनी । दान्तोऽश्व [2] ।। शान्त शमिते । शमितनामनी । शान्तो रोग ।। प्रार्थितेऽर्दित [3] । याचित-नामनी ।। ९७ ।।

[1] क्षान्तस्य C1 [2] C1 adds बलीवर्द इत्यादि [3] अर्थित B3

**ज्ञप्तस्तु ज्ञापिते छन्नश्छादिते पूजितेऽञ्चितः ।**
**पूर्णस्तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः ।। ९८ ।।**

(वि) ज्ञप्त इति—ज्ञाप्यत इति ज्ञप्त । ज्ञापितश्च । 'ज्ञा अवबोधने' । उपाध्यायादिना[1] ज्ञापितस्य पदार्थस्य नामनी ।। छद्यत इति छन्न । 'छद अपवारणे' । छादितश्च । [2]छादितस्य [3]पङ्कजादेर्नामनी ।। पूज्यत इति पूजित । 'पूज पूजायाम्' । अञ्चयते पूज्यत इति अञ्चित । 'अञ्चु गतिपूजनयो [4] । पूजितस्य देवादेर्नामनी । पूर्यत इति पूर्ण । पूरितश्च । 'पूरी आप्यायने' । जलादिना पूरितस्य कुम्भादेर्नामनी ।। क्लिश्यते[5] बाध्यत इति क्लिष्ट । क्लिशितश्च[6] ।

'क्लिशू विबाधने'। दारिद्र्यादिना [7]पीडितस्य नामनी ॥ अवस्यति पर्यवस्यति स्मेति अवसितः। सितश्च। 'षोऽन्तकर्मणि'। [8]समाप्तस्य कार्यादेर्नामनी ॥९८॥

[1] उपाध्यायेन J2, K6 [2] आच्छादितस्य K5 [3] पञ्जरादे. K5. [4] पूजायाम् K3, K6. [5] दु खादिना K5 [6] क्लेशित. K4 [7] बाधितस्य J2. [8] सक्तस्य J2, K4, K6

(विव.) ज्ञप्तस्तु ज्ञापिते। गुरूपदेशादिना प्रकाशितस्यार्थस्य नामनी। यथा—[1]ज्ञप्तोऽयमर्थः। ज्ञापितोऽयमर्थः। 'ज्ञा अवबोधने' इत्यस्माद् हेतुमण्ण्यन्ताद् 'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' (७. २. २७) इति सर्वार्थसाधारण्येन निपातनादिडागमाभावे ज्ञप्तः। इडागमपक्षे ज्ञापितः। केचित्तु—ज्ञपित इति ह्रस्वादि पठित्वा ज्ञपिते संज्ञपिते छागादौ वर्तत इति व्याचक्षते। तत्र 'ज्ञा मारण-तोषणनिशामनेषु' इति धातुसूत्रेण मित्संज्ञायां सत्यां 'मितां ह्रस्वः' (६. ४. ९२) इति ह्रस्वत्वे च ज्ञपितमिति भवति। ज्ञप्तशब्दस्य तु सर्वार्थसाधारण्येन निपातनाद् मारिताद्यर्थत्रयेऽपि साधुत्वम्। यथा—'संज्ञप्तहोमं[2] जुहोति' (आप. श्रौ. ७. १७. ३) इत्यादि ॥ छन्नश्छादिते। आवरणकद्रव्येणाप्रकाशितरूपस्य नामनी। यथा—मेघच्छन्नो दिनकरः, [3]सिचयच्छन्नं कुचयुगम् इत्यादि। छाद्यते स्म छन्नः। छादितश्च। 'छद अपवारणे'। अत्रापि पूर्ववद् विकल्पेन निपातनात् शब्दद्वय-सिद्धिः ॥ पूजितेऽञ्चितः। 'पूज पूजायाम्' इत्यतः कर्मणि क्तप्रत्यये पूजितः। 'अञ्चु गतिपूजनयोः'। 'अञ्चेः पूजायाम्' (७. २. ५३) इति नियमाद् 'यस्य विभाषा' (७. २. १५) इतीडागमप्रतिषेधो[4] नास्ति। 'नाञ्चेः पूजायाम्' (६. ४. ३०) इत्युपधानकारलोपाभावे सति अञ्चितः। 'स्यादर्हिते नमस्यित . . .' (श्लो. १०१) इत्यादिना वक्ष्यमाणाद् गुर्वादिरूपात् पूजिताद् अन्यादृश एवायं पूजितः केनचिद्विशेषेण प्राप्तोत्कर्षलक्षणः। [5]तत्राञ्चितशब्दः। यथा—'हासाञ्चिता वचोभङ्गी वलनाञ्चितमीक्षणम्' इति ॥ पूर्णस्तु पूरिते। उदकादिना[6] पूरितस्य कटकादेर्नामनी। [7]पूर्यते स्म पूर्णः। पूर्ववन्निपातनात् (७. २. २७) साधुः। वैकल्पिक इडागमे सति पूरितः ॥ क्लिष्टः क्लिशिते। पुत्रशोकादिना पीडितस्य नामनी। क्लिश्यते स्म क्लिष्टः। [8]'क्लिशू विबाधने'। क्तः। क्लिशितश्च, 'क्लिशः क्त्वानिष्ठयोः' (७. २. ५०) इति विकल्पेनेडागमः ॥ अवसिते सितः। समाप्तस्य[9] नामनी। अवस्यति अन्तं गच्छति स्म अवसितः। सितश्च।

'षोऽन्तकर्मणि'। क्तप्रत्ययः। 'द्यतिस्यतिमास्थामित्ति किति' (७. ४. ४०) इति धातोराकारस्येत्वम् ॥ ९८ ॥

[1] विज्ञप्त Tv [2] °होमान् B5, B6 [3] वस्त्रच्छन्न Gm3, Tv [4] °अभाव Tj1, Tj2 [5] तथाञ्चित° Gm1, Tv [6] उदकादिभि Tv [7] Gm3, Tv add 'पूरी आप्यायने' [8] क्लिश B5, B6 [9] Gm3, Tv add शास्त्रव्याख्यानादे

(पा) ज्ञप्तस्तु ज्ञापिते। घटादिपाठाद् बोधितनामनी। चुरादिपाठाद् बुद्धनामनी॥ छन्नश्छादिते। [1]आच्छादितनामनी॥ पूजितेऽञ्चित। पूजार्थेऽञ्चित स्यात्। सेट्। अन्यत्रानिट्। उदक्तमुदक कूपात्॥ पूर्णस्तु पूरिते। पूरितनामनी॥ क्लिष्ट क्लिशिते[2]। क्लेशितनामनी। [3]'उदिकिपपड्ढवाड्'। अवसिते सित। निश्चितनामनी॥ ९८॥

[1] छादित° A1, C1 [2] क्लेशिते B3, C1 [3] B3 omits

प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते।
वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते॥ ९९॥

(वि) प्रुष्टेति—[1]प्रुष्यत इति प्रुष्ट। 'प्रुष दाहे'[2]। प्लुष्यते प्लुष्ट। 'प्लुष दाहे'। उष्यत इत्युषित। 'उष दाहे'। दह्यत इति दग्ध। 'दह भस्मीकरणे'। दग्धस्य तृणादेर्नामानि॥ तक्ष्यत इति तष्ट। 'तक्षू तनूकरणे'। त्वक्ष्यत इति त्वष्ट। 'त्वक्षू तनूकरणे'। [3]वर्धक्यादिना तनूकृतस्य काष्ठादेर्नामनी॥ वेध्यते स्मेति वेधित[4]। 'विध विधाने'। छिद्र सजातमस्येति छिद्रित। विद्ध्यत इति विद्ध। 'व्यध ताडने'। सूच्यादिना विद्धस्य [5]कर्णमूलादेर्नामानि॥ विद्यत विचार्यते विन्न। वित्तश्च। 'विद विचारणे'। विचार्यत इति विचारित। 'चर गतिभक्षणयो'[6]। विचारितस्य कार्यादेर्नामानि॥ ९९॥

[1] प्रोष्यते K5 [2] प्रुष प्लुष दाहे K5, Pt2 [3] वास्यादिना K5 [4] वेधोऽस्य सजात Pt2 [5] K5 omits मूल [6] 'विचिर पृथग्भावे K3, K4, K6

(विव) प्रुष्ट—दग्धे। भस्माङ्गारावशेषितस्य काष्ठादेर्नामानि। 'प्रुष प्लुष दाहे'। 'उष दाहे'। 'दह भस्मीकरणे'। एतेभ्य कर्मणि क्तप्रत्यये [1]प्रुष्ट, प्लुष्ट, उषित, दग्धश्चेति चत्वार शब्दा क्रमेण निर्वक्तव्या॥ तष्टत्वष्टौ तनूकृते।

[2]वास्यादिव्यापारकृतेन बहिरवयवापसारणेन स्वल्पपरिमाणीकृतस्य स्तम्भादेर्नामानि। 'तक्षू त्वक्षू तनूकरणे'। आभ्या धातुभ्यां कर्मणि क्तप्रत्यये 'स्कोः संयोगाद्योरन्ते च' (८. २. २९) इति संयोगादिभूतस्य ककारस्य लोपे निष्ठातकारस्य ष्टुत्वे तष्टं त्वष्टं च ॥ वेधितच्छिद्रितौ विद्धे। सूच्यादिना सरन्ध्रीकृतस्य नामानि। वेधः सूच्यादिकृतं रन्ध्रं संजातोऽस्येति वेधितः। 'विध विधाने' इत्यस्माद्वा चुरादिण्यन्तात् कर्मणि निष्ठा ॥ छिद्रं रन्ध्रं संजातमस्येति छिद्रितः ॥ विद्धम् इहैव वर्गे[3] व्युत्पादितम् (श्लो. ८७) ॥ विन्नवित्तौ विचारिते। उभयत्र गुणदोषतारतम्यचिन्तया ग्राह्यत्वेन निर्धारितार्थस्य नामानि। 'विद विचारणे' इति धातोः कर्मणि निष्ठायां 'नुदविद...' इत्यादिना (८. २. ५६) विकल्पेन निष्ठानत्वे विन्नः, वित्तश्च ॥ ९९ ॥

[1] 'यस्य विभाषा' (७ २ १५) इति नेट्　[2] तक्षणादिना Gm3, Tv.　[3] Tj1, Tj2 add प्राक्

(पा) प्रुष्ट—दग्धे। दग्धनामानि ॥ तष्ट—तनूकृते। [1]वास्यादिनाल्पीकृतनामानि। [2]'चक्कपङ्कदि'। वेधित—विद्धे। विद्धनामानि। [2] 'कोरयपङ्कदि' ॥ विन्न—विचारिते। विचारितनामनी ॥ ९९ ॥

[1] वास्यादिना स्वल्पीकृत° B3, C1　[2] B3 omits

निष्प्रभे विगतारोकौ विलीने विद्रुतद्रुतौ ।
सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ ॥ १०० ॥

(वि) निष्प्रभ इति—निर्गता प्रभा अस्मादिति [1]निष्प्रभ.। विशेषेण गता प्रभा अस्मादिति विगत[2]। न विद्यते रोको दीप्तिर्यस्येति अरोकः[3]। दिवा निष्प्रभस्य चन्द्रमण्डलादेर्नामानि ॥ विलीयतेऽग्नाविति विलीन.। 'ली द्रवीकरणे'[4]। विद्रवत्यग्निसयोगादिति विद्रुत। द्रुतश्च। 'द्रु गतौ'। अग्निसयोगाद् विलीनस्य घृतादेर्नामानि ॥ सिद्ध्यतीति सिद्ध। 'षिधु सराद्धौ'। निर्वर्तत इति निर्वृत्त[5]। 'वृतु वर्तने'। निष्पद्यत इति निष्पन्न। 'पद गतौ'। पाकादिना सिद्धस्यौदनादेर्नामानि। दार्यत[6] इति दारित। 'दॄ विदारणे'। भिद्यत इति भिन्न। भेदितश्च। 'भिदिर् विदारणे'। प्रहारादिना भिन्नस्य घटादेर्नामानि ॥ १०० ॥

[1] निर्गत प्रभाया Pt2. [2] विशेषेण रत उपरत विरत Pt2 [3] विशेषेण गत आरोक आरोचन दीप्तिरस्येति विगतारोक, 'रुच दीप्तौ' K5 [4] 'लीङ् श्लेषणे' K5 [5] निर्वर्त्यते स्म Pt2 [6] K1, K5 add विदार्यते

(विव.) निष्प्रभे विरतारोकौ[1]। कान्तिहीनस्य दिवातनचन्द्रादेर्नामानि। निर्गता प्रभा कान्तिरस्मादिति निष्प्रभः। विरतश्च अरोकश्चेति द्वन्द्वः। सतोऽप्यर्थक्रियाकारित्वाभावाद् विरतः उपरतसदृश इत्यर्थः[2]। 'रुच दीप्तौ' इत्यस्माद्धातोः घञि (३. ३. १८) रोको दीप्ति·। स नास्त्यत्रेति अरोकः। एष चिरंतनव्याख्यातृसंमतः पाठ.। कश्चित्तु—विगतः आलोकः प्रकाशोऽस्येति विगतालोक इति पाठेन व्याचष्ट॥ विलीने विद्रुतद्रुतौ। अग्निसंयोगादिना द्रवीभूतस्य सर्पिर्जतुसुवर्णादेर्नामानि। विलीयत इति विलीनम्। 'लीङ् द्रवीकरणे'। क्तः। 'आज्य विलाप्य' इत्यादिप्रयोगः॥ द्रवत्वगुणयोगाद् द्रवति गच्छति नैकत्रावतिष्ठत इति द्रुतम्। विद्रुतं च। 'द्रु गतौ'। क्तः (३. ४. ७२)॥ सिद्धे निर्वृत्तनिष्पन्नौ। पाकादिसंस्कारनिष्पन्नस्य भक्तव्यञ्जनादेर्नामानि। यथा—[3]'सिद्धस्य हविष्यस्य जुहुयात्' इति। 'षिधु संराद्धौ' इत्यतः[4] सिद्धम्। निर्वृत्तनिष्पन्नशब्दावपि उपसर्गवशात् तदर्थावेव[5]॥ दारिते भिन्नभेदितौ। कुठारादिभिराग्रादामूल द्विधाकृतस्य वेणुदलादेर्नामानि। दार्यते स्म दारितम्। 'दॄ विदारणे'। क्तः। भिद्यते स्म भिन्नः। 'भिदिर् विदारणे'। रुधादिः। चुरादावप्यय धातु· पठ्यते। ततो ण्यन्तात् कर्मणि क्तप्रत्यये भेदित.॥ १००॥

[1] विगतालोकौ Gm1, Gm3 [2] अविद्यमानसादृश्याद् विगत Gm3 [3] सिद्ध-मोदनम्। 'अथ सायप्रात सिद्धस्य हविष्यस्य जुहुयात् Tv [4] इत्यस्मात् कर्मणि क्तप्रत्यये Tj2, Tv [5] निर्वर्तते स्म। 'वृतु वर्तने। क्त। निष्पद्यते स्म। 'पद गतौ'। क्त

*(पा)* *निष्प्रभे विगतारोकौ[1]। अप्रतिभस्य नामानि। [2]विगतोऽपि स्यात्।* 'विगतौ वीतनिष्प्रभौ' इति रुद्र॥ विलीने विद्रुतद्रुतौ। वह्न्यादिना द्रवीभूतस्य[3] नामानि। [4]'करगपङ्कदि'॥ सिद्धे निर्वृत्तनिष्पन्नौ। परिसमाप्तनामानि[5]॥ दारिते भिन्नभेदितौ। द्वेधाकृतनामानि[6]॥ १००॥

[1] विगतालोक A1 [2] विगतालोकविगतौ निष्प्रभौ B3 [3] विलीन॰ A1, C1 [4] B3 omits [5] समाप्ति॰ A1 [6] दारित॰ A1, द्वैधीकृत॰ C1

**ऊतं स्यूतमुतं चेति त्रितयं तन्तुसंतते ।**
**स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् ।। १०१ ।।**

(त्रि) ऊतमिति—ऊय्यते तन्तुभि. सतन्यत इति ऊतम् । 'ऊयी तन्तुसताने'[1] । सीव्यत इति स्यूतम् । 'षिवु तन्तुसताने' । ऊयते तन्तुभि. सतन्यत इति उतम् । 'वेञ् तन्तुसताने'[2] । बहुतन्तुसमूहस्य कन्थादेर्नामानि ।। अर्ह्यत इत्यर्हितम् । 'अर्ह पूजायाम्' ।। [3]नम कृत नमस्यितम् । नमसित च । 'णमु प्रह्वत्वे शब्दे च' । अपचाय्यते पूज्यत इत्यपचायितम् । अपचित च । 'चायृ पूजानिशामनयो.' । अर्च्यत इत्यर्चितम् । 'अर्च पूजायाम्' । अर्चितस्य [4]देवगृहादेर्नामानि ।। १०१ ।।

[1] Ks adds इति प्रथमो धातु [2] इति द्वितीयो धातु K8. [3] नमस्यत इति K3, K6, Pt2 [4] गुर्वादि K5; गृहादे K4

(विव.) ऊतं—तन्तुसंताने । तन्तुभिः संतन्यते सूचीमूलस्थरन्ध्रप्रवेशितैः सूक्ष्मसूत्रैर्व्याप्यत इति तन्तुसंततः कन्थाकूर्पासादिः तत्रेत्यर्थः[1] । 'ऊयी तन्तुसंताने' इत्यतः क्तप्रत्यये ऊतम् । स्यूतशब्दो वैश्यवर्गे व्युत्पादितः[2] (पृ. ५६६) ।। [3]'[4]वेञ् तन्तुसंताने' इत्यतः क्तप्रत्ययसंप्रसारण'पूर्वरूपत्वेषु[5] उतम् ।। स्यादर्हिते—अपचितम् । इतो वर्गसमाप्तिपर्यन्तं वृत्तद्वादशकमार्याच्छन्दः । पूजितो हरिहरगुर्वादिः, तत्रैते शब्दा वर्तन्ते । अर्ह्यते स्म अर्हितम् । 'अर्ह पूजायाम्' । हरिहरगुर्वादिः नमस्यते पूज्यते स्मेति नमस्यितः । 'नमो वरिवश्चित्रङः क्यच्' (३. १. १९) इत्यत्र नमसः पूजायाम् इति वक्तव्येन पूजाकरणार्थे क्यच्प्रत्यये सति सनाद्यन्तत्वेन धातुसंज्ञाया कर्मणि क्तप्रत्यये इडागमश्च ।। 'क्यस्य विभाषा' (६. ४. ५०) इति वैकल्पिके यकारलोपे नमसितः ।। अपचाय्यते पूज्यते स्म अपचायितः । 'चायृ पूजानिशामनयोः' इति कर्मणि क्तप्रत्यये इडागमश्च ।। तत एव धातोः 'अपचितं च' (७. २. ३०) इति सूत्रेण निष्ठायामनिट्त्वस्य चिभावस्य च निपातनाद् अपचितम् ।। अर्च्यते स्मेति अर्चितम् । 'अर्च पूजायाम्' ।। १०१ ।।

[1] Tv adds त्रय एते शब्दा स्यु [2] सीव्यते स्म । 'षिवु तन्तुसताने' क्त । च्छ्वो ' (६ ४ १९) इति ऊठ् [3] TJ1, TJ2 add ऊयते स्म [4] 'ग्रहिज्या ..' इति सप्रसारणम् [5] 'सप्रसारणाच्च' इति पूर्वरूपम्

(पा.) उत—तन्तुमतते । [1]तन्तुसतानितनामानि । [2]'कुट्टपङ्कदि' ॥ स्यादर्हिते—अपचितम् । पूजितनामानि[3] ॥ १०१ ॥

[1] तन्तुभि. सवेष्टितस्य° B3　[2] B3 omits.　[3] A1 adds कर्मणि क्तान्ता सर्वे.

**वरिवसितं वरिवस्यितमुपासितं चोपचरितं च ।**
**संतापितसंतप्तौ धूपितधूपायितौ च दूनश्च ॥ १०२ ॥**

(वि.) वरिवसित इति—वरिवस्यत उपास्यत[1] इति वरिवसितम् । वरिवस्यित च । उपास्यते सेव्यत इति उपासितम् । 'आस उपवेशने'[2] । उपचर्यते सेव्यत इति उपचरितम् । 'चर गतौ'[3] । शिष्यादिभि: मसेवितस्य उपाध्यायादेर्नामानि ॥ सतप्यते स्म सतापित: । सतप्तश्च । 'तप संतापे' । [4]धूप्यते सतप्यत इति धूपित । धूपायितश्च । 'धूप सतापे' ॥ दूयत इति दून । 'दूङ परितापे' । [5]अग्न्यादिसतप्तस्य[6] नामानि ॥ १०२ ॥

[1] K4 omits.　[2] Pt2 adds उपपूर्वं सेवायाम्　[3] J2, Pt2 add भक्षणयो.
[4] Pt2 adds धूपाय्यते स्म　[5] अग्न्यादिना K4.　[6] K4 adds पीडितस्य.

(विव.) वरिवसितं—चोपचरितं च । पुत्रशिष्यादिभिः कृतपरिचर्याविशेषस्य[1] पितृगुर्वादेर्नामानि । 'नमो वरिवश्चित्रङ: क्यच्' (३. १. १९) इत्यत्र वरिवस: [2]परिचर्याकरणरूपेऽर्थे क्यच्प्रत्यये[3] पूर्ववदेव वैभाषिके यलोपे वरिवसितम्, वरिवस्यितं च[4] ॥ उपास्यते स्म उपासितम् । 'आस उपवेशने' ॥ उपचर्यते स्म उपचरितम् । 'चर गतौ'[5] । उपपूर्वः सेवार्थ इति धातुवृत्तौ[6] ॥ संतापित—दूनश्च । *निदाघक्षुत्तृष्णादिभिः पीडितस्य नामानि । 'तप संतापे' इत्यस्मात् चौरादिकात्* संपूर्वात् कर्मणि क्तप्रत्यये संतापितः । भौवादिकात्तु संतप्तः ॥ धूप्यते स्म धूपितः । 'धूप संतापे' । 'गुपूधूप . . .' (३. १. २८) इत्यादिसूत्रे 'आयादय आर्धधातुके वा' (३. १. ३१) इति विकल्पेनायप्रत्यये धूपायितः ॥ 'टुदु उपतापे' इत्यस्माद् 'दुग्वोर्दीर्घश्च' (वा. ८. २. ४४) इति [7]निष्ठानत्वे दूनः[8] । यद्वा 'दूङ परितापे' इत्यस्मात् स्वादय ओदित इति प्रतिज्ञानाद् 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वे दूनः ॥ १०२ ॥

[1] °परिचर्यस्य Tv [2] परिचर्यामिति वक्तव्यबलेन Gm3, Tv [3] B5, B6 add सति [4] Gm3, Tv add इति रूपद्वयम् [5] गतिभक्षणयो TJ1, TJ2 [6] माधवीयधातुवृत्तौ न दृश्यते [7] इति दीर्घनिष्ठानत्वयो Gm3, Tv [8] कौमुद्यां तु (पृ ४७६) 'टुदु उपतापे' इत्यय न गृह्यते सानुबन्धकत्वात् । मृदुतया दुतयेति माघ (६ ५६) इति । अत्र मल्लिनाथ —'दुतया पीडितया। "टुदु उपतापे" इति धातो सौवादिकत्वात् कर्मणि क्त ' (पृ १५८)

(पा ) वरिवसिते—चोपचरित च । [1]सेवितनामानि ।। संतापित—दूनश्च । [2]संतप्तनामानि ।। १०२ ।।

[1] B3 adds गुर्वादि [2] अग्न्यादिना C1

**हृष्टे मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः ।**
**छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम् ।। १०३ ।।**

(वि ) हृष्ट इति—हृष्यतीति हृष्ट । 'हृष तुष्टौ' । माद्यति तुष्यतीति मत्त. । 'मदी हर्षे'[1] । तृप्यतीति तृप्त । 'तृप तृप्तौ'[2] । प्रह्लादते स्म प्रह्लन्न. । 'ह्लादी सुखे अव्यक्तशब्दे च'[3] । प्रमोदत इति प्रमुदित । 'मुद हर्षे' । प्रीयते स्म प्रीत । 'प्रीङ प्रीणने' । [4]हृष्टस्य नामानि ।। छिद्यते स्म छिन्नम् । 'छिदिर् द्वैधीकरणे' । छायते स्म छातम् । छित च । 'छो छेदने' । लूयते स्म लूनम् । 'लूञ् छेदने'[5] । कृत्यते स्म कृत्तम् । 'कृती छेदने' । [6]दायते स्म दातम् । 'दाप् लवने' । दीयत इति दितम् । 'दो अवखण्डने' । वृश्च्यते स्म वृक्णम् । 'ओव्रश्चू छेदने' । लवित्रादिना छिन्नस्य वस्त्रादेर्नामानि ।। १०३ ।।

[1] 'मदी हर्षग्लेपनयो ' K2, K4, K6 [2] प्रीणने J2, Pt2 [3] K3, K4 omit अव्यक्तशब्दे [4] सतुष्टस्य J1, J2 [5] भेदने K2 [6] K5 adds छिद्यते

(विव.) हृष्टो—प्रीतः । [1]इष्टप्राप्तिजनितानन्दयुक्तस्य नामानि । हृष्यति स्म हृष्टः[2] । सर्वं एते कर्तरि क्तप्रत्ययान्ताः ।। माद्यति स्म मत्तः । 'मदी हर्षे' । 'न ध्याख्यापॄमूर्च्छिमदाम्' (८. २. ५७) इति निष्ठानत्वप्रतिषेधः । क्षीबेऽपि मत्त उक्तः (श्लो. २३) । तृप्यति स्म तृप्तः । [3]तृपिर्दिवादिः ।। प्रह्लादते स्म प्रह्लन्नः । 'ह्लादी सुखे च' । 'ह्लादो निष्ठायाम्' (६. ४. ९५) इति ह्रस्वत्वम् । रदाभ्यामिति (८. २. ४२) निष्ठानत्वम् ।। 'मुद हर्षे' इत्यस्माद्

मुदितः । प्रीयते स्म प्रीतः[4] ॥ छिन्नं—वृक्णम् । लवित्रादिना छिन्नस्य तृणादेर्नामानि । [5]सर्वाण्यपि कर्मणि क्तप्रत्ययान्तानि[6] । छिद्यते स्म छिन्नम् । 'छिदिर् द्वैधीकरणे' । निष्ठानत्वे (८. २. ४२) छिन्नम् ॥ [7]'छो छेदने' । क्तः । छातम् । 'शाच्छोरन्यतरस्याम्' (७. ४. ४१) इति विकल्पेनेत्वे छितम् ॥ 'लूञ् छेदने' लूनम् । 'ल्वादिभ्यः' (८. २. ४४) इति निष्ठानत्वम् ॥ कृत्यते छिद्यते स्म कृत्तम् । 'कृती छेदने' । 'श्वीदितो निष्ठायाम्' (७. २. १४) इति इडागमप्रतिषेधः ॥ दायते स्म दातम् । 'दाप् लवने' ॥ दीयते खण्ड्यते स्म दितम् । 'दो अवखण्डने' । 'द्यतिस्यतिमास्थामित्ति किति' (७. ४. ४०) इति इत्वम् ॥ वृश्च्यते स्म वृक्णम् । 'ओव्रश्चू छेदने' इत्यस्मात् 'स्कोः संयोगाद्योरन्ते च' (८. २. २९) इति संयोगादिभूतस्य [8]सकारस्य लोपः । 'ग्रहिज्या . . .' इत्यादिना (६. १. १६) संप्रसारणम्[9] ॥ १०३ ॥

[1] °प्रापित° Tv. [2] Tj1, Tj2 add 'हृप तुष्टौ' [3] 'तृप प्रीणने' दिवादि Tv [4] B5, B6 add 'प्रीङ् प्रीणने' [5] सर्व एते Gm3, Tv. [6] °प्रत्ययान्ता Gm3, Tv. [7] Tv adds छायते स्म [8] धातुपाठे व्रश्चू इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देश इति बालमनोरमायाम् (पृ १५८). [9] 'ओदितश्च' (८ २ ४५) इति निष्ठानत्वम्.

(पा) [1]<u>हृष्टो—प्रीत</u> । हृष्टनामानि[2] ॥ <u>छिन्न—वृक्णम्</u> । छिन्ननामानि ॥ १०३ ॥

[1] हृष्ट इति पारिजातपाठ [2] सतुष्ट° C1

**स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम् ।**
**लब्धं प्राप्तं विन्नं भावितमासादितं च भूतं च ॥ १०४ ॥**

(वि) <u>स्रस्तमिति</u>—[1]स्रस्यते स्रस्तम् । 'स्रंसु अवस्रंसने' । ध्वस्यते ध्वस्तम् । 'ध्वंसु अवस्रंसने' । भ्रश्यत इति भ्रष्टम् । 'भ्रशु [2]अवस्रंसने' । [3]स्कद्यत इति स्कन्नम् । 'स्कन्दिर् गतिशोषणयोः' । पद्यते स्रस्यते पन्नम् । 'पद[4] गतौ' । [5]च्यूयत इति च्युतम् । 'च्युङ गतौ' । गल्यत इति गलितम् । [6]'गल स्रवणे' । स्रस्तस्य वस्त्रादेर्नामानि ॥ लभ्यत इति लब्धम् । 'डुलभष् प्राप्तौ' । प्राप्यत इति प्राप्तम् । 'आप्लृ व्याप्तौ' । विद्यत इति विन्नम् । 'विद्लृ लाभे' । भाव्यत इति भावितम्, भूत च । 'भू प्राप्तौ' । आसाद्यते प्राप्यत इति आसादितम् । 'पद्लृ [7]विशरणादौ' । [8]लब्धस्य दानादेर्नामानि ॥ १०४ ॥

[1] स्रसते स्म, ध्वसते स्म, 'स्रसु ध्वसु अवस्रसने' $Pt_2$. [2] अध पतने $Pt_2$. [3] स्कन्दति स्म $Pt_2$ [4] पद्लृ $J_1$, $J_2$, $Pt_2$ [5] च्यवते स्म $Pt_2$ [6] गलति स्म, 'गल सक्षरणे' $Pt_2$ [7] विशरणगत्यवसादनेषु $K_3$, $K_8$. [8] प्राप्तस्य वस्तुन. $K_5$

(विव.) स्रस्तं—गलितम् । [1]नूतनघटादेरधःप्रसृतस्य [2]तैलजलादेर्नामानि । 'स्रंसु अवस्रंसने' 'ध्वंसु गतौ', 'भ्रंसु [3]अधःपतने', 'स्कन्दिर् गतिशोषणयोः', 'पद गतौ', 'च्युङ गतौ', 'गल स्रवणे'। एतेभ्यः सप्तभ्यो धातुभ्यः कर्तरि क्तान्ताः स्रस्तादयः सप्त शब्दा वेदितव्याः। चतुर्थपञ्चमयोस्तु रदाभ्यामिति (८. २. ४२) निष्ठानत्वम् ॥ लब्धं—भूतं च । यथेष्टविनियोगत्वेन प्राप्तस्य नामानि । 'डुलभष् प्राप्तौ' इत्यतः लब्धम् । प्रपूर्वाद् आप्नोतेः [4]प्राप्तम् । 'विद्लृ लाभे' इत्यतो निष्ठानत्वे विन्नम् ॥ 'भू प्राप्तौ' इत्यात्मनेपदी [5]धृषादौ पठितः । तस्माद् 'आधृषाद्वा'[6] इति विकल्पेन णिचि भावितम् । तदभावपक्षे भूतम् । [7]आङः सदिः पद्यर्थ इति चौरादिकाद् आङ्पूर्वाद् आसादितम् । सर्व एते कर्मणि निष्ठान्ताः ॥ १०४ ॥

[1] शरावादे $Tj_1$, Tv. [2] घृतादे $Gm_3$, Tv. [3] अवस्रसने $B_6$ [4] $Tj_1$, $Tj_2$ add 'आप्लृ व्याप्तौ'. [5] *$Gm_3$ adds* चौरादिको धातु [6] गणसूत्रम् (७ ४ २). [7] पद्लृ विशरणादौ'

(पा) स्रस्त—गलितम् । [1]च्युतनामानि ॥ लब्ध—भूत च । [2]लब्ध-नामानि ॥ १०४ ॥

[1] गलित° $B_3$ [2] प्राप्त° $C_1$

**अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् ।**
**आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च ॥ १०५ ॥**

(वि) अन्वेषितमिति—अन्वेष्यत[1] इत्यन्वेषितम् । 'एषृ[2] गतौ' । गवेष्यत इति गवेषितम् । 'गवेष मार्गणे' । अन्विष्यत इत्यन्विष्टम् । 'इषु इच्छायाम्'[3] । मार्ग्यत इति मार्गितम् । 'मार्ग अन्वेषणे' । मृग्यत इति मृगितम् । 'मृग अन्वेषणे' । आदराद् विचेतव्यस्य वस्तुनो नामानि ॥ अर्द्यत पीड्यत इत्यार्द्रम् । 'अर्द हिंसायाम्' । आर्द्रेण[4] सह वर्तत इति सार्द्रम् । क्लिद्यत इति क्लिन्नम् । 'क्लिदू आर्द्रीभावे' । तिम्यत[5] इति तिमितम् । 'तिम आर्द्रीभावे' । स्तिम्यत इति

स्तिमितम् । 'ष्टिम आर्द्रीभावे'। [6]समुचत आर्द्रीक्रियत इति समुन्नम् । उत्तं च । 'उन्दी क्लेदने'। आर्द्रीभृतस्य नामानि ॥ १०५ ॥

[1] अन्विष्यते Pt2 [2] इष K3, K1. [3] Pt2 adds अनुपूर्वोऽन्वेषणे [4] आर्द्रं-मार्द्रत्वम् Pt2. [5] तिम्यति, स्तिम्यति Pt2 [6] सम्यग् उनत्तीति Pt2

(विव.) अन्वेषितं—मृगितम् । आदरातिशयेनजिज्ञासितार्थस्य नामानि । [1]'एषृ गतौ', अनुपूर्वः, 'गवेष मार्गणे', 'इषु इच्छायाम्' 'मार्ग अन्वेषणे' 'मृग अन्वेषणे'; एतेभ्यो धातुभ्यः कर्मणि निष्ठान्ता अन्वेषितादयः पञ्च शब्दाः ॥ आर्द्रं—उत्तं च । आतपवातादिभिरनपाकृतजलावयवसुश्लेषस्य[2] वस्त्रादेर्नामानि । अर्द्यते रसग्रहणार्थं पीडयते स्म आर्द्रम् । 'अर्द हिंसायाम्'। आङ्पूर्वः, रक्प्रत्ययः[3] (उ. २. १८) ॥ आर्द्रशब्देन धर्ममात्रविवक्षायाम् आर्द्रत्वेन सह वर्तत इति सार्द्रोऽपि[1] ॥ क्लिद्यते स्म क्लिन्नम् । 'क्लिदू आर्द्रीभावे'। निष्ठानत्वं च (८. २. ४२) ॥ 'तिम ष्टिम आर्द्रीभावे' इत्याभ्यां धातुभ्यां कर्मणि क्तप्रत्यये इडागमे च क्रमेण तिमितं स्तिमितं च ॥ 'उन्दी क्लेदने' इत्यतः 'नुदविदोन्दत्रा...' इत्यादिना (८. २. ५६) विकल्पेन निष्ठानत्वे समुन्नम् । अभावपक्षे उत्तं च ॥ १०५ ॥

[1] इष Tv [2] °सक्लेशस्य पङ्कादे Tv [3] Gm3, Tv add 'अर्देर्दीर्घश्च'.
[4] B5, B6 omit अपि

(पा) अन्वेषित—मगितम् । [1]अन्वेषितनामानि । [2]'वेतकपङ्कदि' ॥ आर्द्रं—उत्त च । आर्द्रनामानि ॥ १०५ ॥

[1] मार्गित° A1 [2] B3 omits

त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च ।
अवगणितमवमतावज्ञाते अवमानितं च परिभूते ॥ १०६ ॥

(वि) त्रातमिति—त्रायत इति त्रातम् । त्राण च । 'त्रैङ् पालने'। रक्ष्यत इति रक्षितम् । 'रक्ष पालने'। अव्यत इत्यवितम् । 'अव रक्षणे'[1] । गोप्यन[2] इति गोपायितम् । गुप्त च । 'गुपू रक्षणे'। रक्षितस्य नामानि ॥ अवगण्यते नाद्रियत[3] इत्यवगणितम् । 'गण सख्याने'। अवमन्यतेऽवश्लाघ्यत

इत्यवमतम् । 'मन ज्ञाने' । अवज्ञायते तिरस्क्रियत इति अवज्ञातम्[4] । अवमान्यत इत्यवमानितम् । 'मान पूजायाम्' । परिभूयत इति परिभूतम् । 'भू सत्तायाम्'[5] । तिरस्कृतस्य नामानि ।। १०६ ।।

[1] रक्षणादौ Pt₂  [2] गोपाय्यते J₁, K₃, K₄  [3] J₂, K₆ omit  [4] J₁, J₂ add 'ज्ञा अवबोधने'  [5] Pt₂ adds परिपूर्वस्तिरस्कारे

(विव.) त्रातं—गुप्तं च । चोरव्याघ्रादिभयाद्यपाकरणेन[1] रक्षितस्य नामानि । षडमी शब्दाः कर्मणि निष्ठान्ताः । त्रायते स्म त्रातम् । 'त्रैङ् पालने' । 'नुदविदोन्दत्रा ...' इत्यादिना (८. २. ५६) विकल्पेन निष्ठानत्वे त्रातं त्राणं च । 'रक्ष पालने'[2], रक्षितम् । 'अव रक्षणे'[3], अवितम् । 'गुपू रक्षणे' इत्यस्माद् गुप्तम् । 'आयादय आर्धधातुके वा' (३. १. ३१) इत्यायप्रत्यये तदन्ताद्धातोः क्तप्रत्यये [4]गोपायितम् ।। अवगणितं—परिभूते । परिभूयते [5]आदरविषयतया न स्वीक्रियते स्मेति परिभूतम् । तत्र अवगणितादयः शब्दाः वर्तन्ते[6] । 'गण संख्याने'[7], 'मन ज्ञाने' दैवादिकः, 'ज्ञा अवबोधने', 'मान पूजायाम्'; अवेत्युपसर्गवशाद् अवज्ञालक्षणेऽर्थे वर्तमानेभ्यः चतुर्भ्यो धातुभ्यः क्रमेण अवगणितम्, अवमतम्[8], अवज्ञातम्, अवमानितं चेति चत्वारः शब्दाः स्युः ।। १०६ ।।

[1] °आदिनिमित्तभयनिरसनेन Gm₃, Tv  [2] [3] Tj₁, Tj₂ add इत्यतो, इत्यस्मात्  [4] B₅, B₆ omit क्तप्रत्यये  [5] अनादर° Tj₂  [6] स्यु Tv.  [7] B₆ adds चुरादौ अदन्त  [8] Gm₁, Gm₃ add यश्च श्यनि पठ्यते मनिरिति [काशिका] पाठादत्रेडागमो नास्ति

(पा) त्रात—गुप्त च । रक्षितनामानि ।। अवगणित—परिभूते । [1]परिभूतनामानि ।। १०६ ।।

[1] *अवमानित° B₃; तिरस्कृत° C₁*

त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टम् ।
उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम् ।। १०७ ।।

(वि) *त्यक्तमिति*—[1]*त्यज्यत इति त्यक्तम् । 'त्यज हानौ'* । [2]हीयत इति हीनम् । 'ओहाक् त्यागे' । विधूयत इति विधुतम् । 'धुञ् कम्पने' । समुज्झ्यत इति समुज्झितम् । 'उज्झ उत्सर्गे' । धूयत इति धूतम् । 'धू विधूनने' ।

उत्सृज्यत इति उत्सृष्टम् । 'सृज विसर्गे' । [3]त्यक्तस्य नामानि ॥ उच्यत इत्युक्तम् । 'वच परिभाषणे' । भाष्यत इति भाषितम् । 'भाष व्यक्ताया वाचि' । उद्यत इति उदितम् । 'वद व्यक्ताया वाचि' । जल्प्यत इति जल्पितम् । [4]'जल्प व्यक्ताया वाचि' । आख्यायत इति आख्यातम् । 'ख्या प्रकथने' । अभिधीयत इत्यभिहितम् । 'डुधाञ् धारणपोषणयोः' । लप्यत इति लपितम् । 'लप व्यक्ताया वाचि' । भाषितस्य नामानि ॥ १०७ ॥

[1] Pt₂ adds स्म.　[2] K₅ omits two lines　[3] K₅ adds अन्योद्देश विना.
[4] जप जल्प° K₂, K₃

(विव.) <u>त्यक्तं—उत्सृष्टम्</u> । दृष्टादृष्टोपकारकोद्देशं विनैव वैराग्येण परिहृतस्य नामानि । सर्वे एते कर्मणि क्तप्रत्ययान्ताः । 'त्यज हानौ' । [1]त्यक्तम् ॥ हीयते स्म हीनम् । क्तः । 'घुमास्थागापाजहातिसां हलि' (६. ४. ६६) इति ईकारादेशे हीनम्[2] ॥ 'धुञ् कम्पने' [3]इत्यतो ह्रस्वादेर्विपूर्वाद् विधुतम् ॥ 'उज्झ त्यागे' संपूर्वः । उज्झितम्[4] ॥ 'धू विधूनने' । तौदादिकाद् दीर्घादेर्धूतम् ॥ 'सृज विसर्गे' इत्यतः उत्पूर्वाद् उत्सृष्टम्[5] ॥ <u>उक्तं—लपितम्</u> । [6]कण्ठरवेण व्यक्ततया प्रकाशितस्य वचसस्तदर्थस्य च नामानि । 'वच परिभाषणे' । 'वचिस्वपि ...' इत्यादिना (६. १. १५) संप्रसारणे उक्तम् ॥ 'भाष व्यक्तायां वाचि' इत्यतो भाषितम् ॥ 'वद व्यक्तायां वाचि' इत्यतो यजादिसंप्रसारणे (६. १. १५) सति उदितम् ॥ 'जल्प व्यक्तायां वाचि' इत्यतो जल्पितम् ॥ 'ख्या प्रकथने' इत्याङ्-पूर्वतः आख्यातम् ॥ अभि इत्युपसर्गवशाद् [7]अर्थान्तरेण वर्तमानात् कर्मणि क्तप्रत्यये 'दधातेर्हिः' (७. ४. ४२) इति हिरादेशे सति अभिहितम् ॥ [8]'लप व्यक्तायां वाचि' इत्यतो[9] लपितम् ॥ १०७ ॥

[1] Tv adds त्यज्यते स्म　[2] Gm₃, Tv add ओदितश्च इति निष्ठानत्वम्; ओहाक् त्यागे इति धातु.　[3] विधूयते स्म Gm₃, Tv.　[4] समुज्झ्यते स्म Gm₃, Tv.
[5] उत्सृज्यते स्म Gm₃, Tv.　[6] यद् व्यक्तमुक्त Tv　[7] उक्ते अर्थे Tj₁, Tj₂.
[8] रप लप Tj₁, Tj₂.　[9] इत्यस्मात् B₅, B₆

(पा) <u>त्यक्त—उत्सृष्टम्</u> । त्यक्तनामानि ॥ <u>उक्त—लपितम्</u> । [1]उक्त-नामानि ॥ १०७ ॥

[1] भाषित° B₃, C₁.

**बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसितावगते ।**
**ऊरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम् ।। १०८ ।।**
**संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम् ।**

(वि) बुद्धमिति—बुध्यत इति बुद्धम् । 'बुध अवगमने' । [1]बुध्यत इति बुधितम् । 'बध बोधने' । मन्यते स्म मनितम् । 'मन अवबोधने' । विद्यत इति विदितम् । 'विद ज्ञाने' । प्रतिपद्यते ज्ञायत इति प्रतिपन्नम् । 'पद गतौ'[2] । अवसीयत[3] इत्यवसितम् । 'पोऽन्तकर्मणि' । अवगम्यत इत्यवगतम्[4] । 'गम्लृ गतौ' । ज्ञातस्य नामानि ।। ऊरीक्रियतेऽङ्गीक्रियत इति ऊरीकृतम् । उररीक्रियत इति [5]उररीकृतम् । अङ्गीक्रियत इत्यङ्गीकृतम्[6] । आश्रूयतेऽङ्गीक्रियत इत्याश्रुतम् । सश्रुतम् उपश्रुत च । 'श्रु श्रवणे' । प्रतिज्ञायत इति प्रतिज्ञातम् । सगीर्यतेऽङ्गीक्रियत इति सगीर्णम् । 'गृ शब्दे'[7] । विद्यत इति विदितम् । 'विद ज्ञाने' । समाधीयतेऽङ्गीक्रियत इति समाहितम् । 'डुधाञ् धारणपोषणयो' । उपगम्यत इत्युपगतम् । अङ्गीकृतस्य नामानि ।। १०८ ।।

[1] बोध्यते $J_1$, $K_6$ [2] $Pt_2$ adds सर्वे गत्यर्था ज्ञानार्था [3] $J_2$, $K_2$, $K_5$ add ज्ञायते [4] $Pt_2$ adds अवपूर्वो ज्ञानार्थ [5] ऊररीकृतमिति वा पाठ $Pt_2$
[6] $J_2$, $K_2$, $K_5$ add 'डुकृञ् करणे' [7] निगरणे $K_5$

**(विव.)** बुद्ध—अवगते । [1]ज्ञातार्थस्य नामानि । [2]'बुध अवगमने' । अनिट्कारिकासु शुध्यति बुध्यतीति पाठाद् अस्य बुध्यतेर्दैवादिकत्वेन इडागमाभावे बुद्धम्[3] । 'बुध बोधने' इति तु भौवादिकाद् इडागमे सति बुधितम् ।। 'मन अवबोधने' इति स्वादेरिडागमे मनितम् । 'मन ज्ञाने' इत्यस्य तु दैवादिकत्वेन 'यश्च श्यनि पठ्यते मनिः' (काशिका २, पृ. २६६) इति पाठाद् इडागमो नास्ति । अथवा—मन.शब्दात् 'तत्करोति' (ग. सू.) इति णिचि टिलोपे मनितम् ।। 'विद ज्ञाने' इत्यतो[4] विदितम् ।। [5]'पद गतौ', प्रतिपूर्वो ज्ञानार्थः । निष्ठानत्वे (८. २. ४२) प्रतिपन्नम् ।। 'षोऽन्तकर्मणि' । धातुरयपूर्वो ज्ञानार्थ । [6]'द्यतिस्यति...' इत्यादिना (७. ४. ४०) इत्वेऽवसितम् ।। अवगम्यते स्म अवगतम् ।। सर्वे शब्दाः कर्मणि निष्ठान्ताः ।। ऊरीकृत—उपगतम् । ऊरीकृतमित्यादिश्लोकेनैकादशशब्दाः अभ्युपगतार्थवाचकाः । ऊरी-उररीतिशब्दयोः अङ्गीकरणार्थे वर्तमानयोः 'ऊर्यादिच्विडाचश्च' (१. ४. ६१) इति गतिसंज्ञायां 'कुगतिप्रादयः' (२. २. १८) इति

कृदन्तेनोत्तरपदेन समासे ऊरीकृतम् उररीकृतं च । अत्र आद्यो दीर्घादिः । द्वितीयो ह्रस्वादिः । आर्यावृत्तानुरोधात् । नैषधकाव्ये तु 'अर्थिषु स्वयमुरीकृतकाम्या' (५. ११७) इति प्रथमो ह्रस्वादिरपि प्रयुक्तः[8] । द्वितीयस्तु दीर्घादिरप्यस्तीति *अव्ययवर्गे (३. ३. २५४) वक्ष्यते[9] ।। अङ्गीक्रियते स्म अङ्गीकृतम् ।। आश्रूयते स्म आश्रुतम् । 'श्रु श्रवणे' । उपसर्गवशाद् अङ्गीकारार्थत्वम् । अत एव संश्रुतम् उपश्रुतं च ।। प्रतिपूर्वत्वेनाङ्गीकारार्थात् जानातेः प्रतिज्ञातम्[10] ।। संपूर्वस्य 'गॄ निगरणे' इति धातोरङ्गीकारार्थत्वं प्रसिद्धम् । 'ॠत इद्धातोः' (७. १. १००) इति इत्वम् । 'रदाभ्या . . .' (८. २. ४२) इति निष्ठानत्वे च सगीर्णम्[11] ।। धातूनामनेकार्थत्वाद् 'विद ज्ञाने' इत्यस्माद् इडागमप्रतिषेधाभावाद् विदितम् ।। सम्यगाधीयते स्म समाहितम् । 'दधातेर्हिः' (७. ४. ४२) ।। उपगम्यते स्म उपगतम् ।। सर्वत्रोपसर्गवशादत्र धातूनामङ्गीकारार्थत्वं[12] विज्ञेयम् ।। १०८ ।।

[1] ज्ञातस्य Tv. [2] Tv adds बुध्यते स्म [3] 'झषस्तथोर्धोऽध' इति धत्वम् । 'झला जश् झशि' इति जशादेश [4] Gm3, Tv add प्रतिषेधाभावादिडागमे. [5] प्रतिपद्यते स्म प्रतिपन्नम् Tv [6] अवसीयते स्म Tv [7] अभ्युपगतार्थस्य एतान्येकादश नामानि Tv. [8] पठित Tj1, Tj2 [9] 'ऊर्यूरी चोररी च' इति Tv [10] Gm3, Tv add 'सम प्रतिज्ञाने' (१ ३ ५२) इति सूत्रे प्रतिज्ञानमङ्गीकार इति (अभ्युपगम इति मु ग्रन्थे पृ ५४) काशिकाकार [11] 'हलि च' इति इको दीर्घ . [12] अनेकार्थत्वम् B5, B6 * नानार्थाव्ययवर्गे

(पा.) बुद्ध—अवगते । [1]अवगतनामानि ।। ऊरीकृत—उपगतम् । अङ्गीकृतनामानि ।। १०८ ।।

[1] विदित° B3, C1

ईडितशस्तपणायितपनायितप्रणुतपणितपनितानि ।। १०९ ।।
अवगीर्णवर्णिताभिष्टुतेलितानि स्तुतार्थानि ।

(वि) ईडितेति—ईड्यत इतीडितम् । ईलित च । 'ईड स्तुतौ' । शस्यत इति शस्तम् । 'शसु स्तुतौ' । [1]पणाय्यते स्तूयते पणायितम् । पणित च । 'पण व्यवहारे स्तुतौ च' । [2]पनाय्यते पनायित पनित च । [3]'पन स्तुतौ' । प्रणूयत इति प्रणुतम् । 'णु स्तुतौ' । [4]अवगीर्यते स्तूयत इत्यवगीर्णम् । 'गॄ शब्दे' ।

वर्ण्यन इति वर्णितम् । 'वर्ण[5] वर्णक्रियाविस्तारगुणवचनेषु' । अभिष्टूयत इत्यभिष्टुतम् । स्तुत च । 'ष्टुञ् स्तुतौ' । स्तुतस्य नामानि ।। १०९ ।।

[1] पण्यते J2, K6, Pt2 [2] पन्यते स्म Pt2 [3] पन च J2 [4] अपिगीर्णं इति भानुजीदीक्षितीये पाठ, अभिगीर्णं इति टीकासर्वस्वे [5] वर्ण स्तुतौ Pt2, J2 adds वर्ण वर्णक्रियायाम्, वर्ण स्तुतौ इति धातु K3

(विव.) ईडित—स्तुतार्थानि । ईडितादय. शब्दा एकादश स्तुतशब्दसमानार्थाः । ईडयते स्तूयते स्म ईडितम् । 'ईड स्तुतौ' । लडयोरेकत्वे ईलित च ।। शस्यते स्म शस्तम् । 'शसु स्तुतौ' ।। पण्यते स्म पणितम् । 'पण व्यवहारे स्तुतौ च' । मूर्धन्यपञ्चम-मध्यम् । 'पन च' इति धातोस्तु पनितमिति दन्त्यपञ्चममध्यम् । आभ्यामेव धातुभ्याम् 'आयादय आर्धधातुके वा' (३. १. ३१) इति विकल्पेन आयादेशे पणायित पनायित च ।। 'णु स्तुतौ' इत्यस्मात् प्रपूर्वात् प्रणुतम् । 'उपसर्गादसमासेऽपि . . .' (८. ४. १४) इति णत्वम् । 'गॄ शब्दे' इत्यस्माद् [1]अवपूर्वाद् अवगीर्णम् ।। 'वर्ण स्तुतौ'[2] इत्यस्माद् वर्णितम् ।। 'ष्टुञ् स्तुतौ' इत्यस्मात् स्तुतम् । तत एवाभिपूर्वाद् अभिष्टुतम्[3] ।। १०९ ।।

[1] अभिपूर्वाद् अभिगीर्णम् B5, B6 [2] वर्णक्रियाविस्तारगुणवचनेषु Tj1, Tj2 [3] उपसर्गात् सुनोति इति षत्वम

(पा) ईडित—स्तुतार्थानि । स्तुतनामानि ।। १०९ ।।

**भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम् ।। ११० ।।**
**अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितं भुक्ते ।**

(वि) भक्षितेति—भक्ष्यत इति भक्षितम् । 'भक्ष अदने' । [1]चर्व्यत इति चर्वितम् । 'चर्व अदने' । लिप्यते भक्ष्यत इति लिप्तम् । 'लिप उपदेहे' । लीढमिति वा पाठ [2] । प्रत्यवसीयत[3] इति प्रत्यवसितम् । 'षोऽन्तकर्मणि' । [4]गिल्यत इति गिलितम् । 'गिल अदने' । खाद्यत इति खादितम् । 'खादृ भक्षणे' । प्सायत इति प्सातम् । [5]'प्सा रक्षणभक्षणयो' । अभ्यवह्रियते भक्ष्यत इति अभ्यवहृतम्[6] । अद्यत इत्यन्नम् । जग्ध च । 'अद भक्षणे' । ग्रस्यत इति ग्रस्तम् । ग्लस्यत इति ग्लस्तम् । 'ग्रसु ग्लसु अदने' । अश्यत इत्यशितम् । 'अश भोजने'[7] । भुज्यत इति भुक्तम् । 'भुज पालनाभ्यवहारयो' । भुक्तस्य[8] नामानि ।। ११० ।।

[1] K3 omits 4 lines. [2] लीढमिति पाठे लिह्यते भक्ष्यत इति लीढम् । 'लिह आस्वादने' K2. [3] K3, K6 add भक्ष्यते [4] गीर्यत इति गिलितम् । 'गॄ निगरणे' K4, K6 [5] 'प्सा भक्षणे' K5, K6 [6] J2, K2 add 'हृञ् हरणे' [7] भक्षणे K5 [8] K2, K5 add अन्नादे

(विव.) भक्षित—भुक्ते । भुक्तस्यान्नादेर्नामानि । 'भक्ष अदने' इत्यस्माद् भक्षितम्[1] ।। 'चर्व अदने' इत्यस्मात् चर्वितम् ।। धातूनामनेकार्थत्वाद् भक्षणरूपार्थे वर्तमानात् 'लिप उपदेहे' इत्यस्मात् लिप्तम् ।। [2]उपसर्गद्वयवशाद्[3] भक्षणे वर्तमानात् स्यतेः प्रत्यवसितम् ।। 'गिल अदने' इत्यतो[4] गिलितम् ।। 'खादृ भक्षणे' इत्यतः खादितम् ।। 'प्सा भक्षणे' इत्यस्मात् प्सातम् ।। अभ्यवपूर्वाद्[5] 'हृञ् हरणे' इत्यस्माद् अभ्यवहृतम् ।। अद्यते स्म जग्धम् । 'अद भक्षणे' । 'अदो जग्धिर्ल्यप्ति किति' (२. ४. ३६) इति जग्धादेशः । अस्मादेव धातोः 'अन्नाण्णः' (४. ४. ८५) इति निर्देशसामर्थ्याद् अन्नम् ।। 'ग्रसु ग्लसु अदने' इत्याभ्यां धातुभ्यां ग्रस्तं ग्लस्तं च ।। अश्यते स्म अशितम् । 'अश भोजने' । भुज्यते स्म भुक्तम्[6] ।। ११० ।।

[1] Tj1, Tj2 add सर्वत्र क्त [2] B5, B6 add 'पोऽन्तकर्मणि' [3] °वशेन Tv [4] इत्यस्मात् Tv [5] हरते Gm3, Tv [6] Gm1, Gm3 add 'भुज पालनाभ्यवहारयो'.

(पा.) भक्षित—भुक्ते । भुक्तनामानि ।। ११० ।।

क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ।। १११ ।।
क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ।

(वि) क्षेपिष्ठेति—अतिशयेन क्षिप्र क्षेपिष्ट । अतिशयेन क्षुद्र क्षोदिष्ठ । अतिशयेन प्रिय प्रेष्ठ । अतिशयेन उरु वरिष्ठ । अतिशयेन स्थूल स्थविष्ठ । अतिशयेन बहुल[1] बंहिष्ठ । एते[2] शब्दा क्रमात् क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहूना प्रकर्षार्था अतिशयार्था भवन्ति ।। १११ ।।

[1] बहु J2, K4 [2] एतेषा K6

(विव.) क्षेपिष्ठ—प्रकर्षार्थाः । क्षिप्रादीना बह्वन्ताना [1]षण्णा मध्ये ये पदार्थाः क्षिप्रत्वादितत्तद्धर्मप्रकर्षवन्तो भवन्ति तथाभूतार्थवचना इष्ठन्प्रत्ययान्ताः[2]

क्षेपिष्ठादय· षडपि शब्दा· क्रमेण भवन्तीत्यर्थः । अतिशयेन क्षिप्र इति विग्रहे 'अतिशायने तमबिष्ठनौ' (५ ३ ५५) इतीष्ठन्प्रत्यये, 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणा यणादिपर पूर्वस्य च गुण·' (६. ४. १५६) इति यणादिपरस्य लोपे पूर्वस्य च गुणे क्षेपिष्ठ· । एव क्षुद्रशब्दादपि क्षोदिष्ठ.।। द्वितीयार्धे वृत्तानुरोधात् प्रयुक्तेन अभीप्सितपदेन तत्पर्यायः प्रियशब्दो लक्षितः । ततश्च अतिशयेन प्रिय इति विग्रहे 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणा प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दा.' (६. ४. १५७) इति सूत्रेण प्रियशब्दस्य [3]प्रादेशे प्रेष्ठः ।। पृथुशब्देन तत्पर्याय.[4] उरुशब्दो लक्ष्यते । ततश्च अतिशयेन उरुरिति विग्रहे उरुशब्दस्य 'प्रियस्थिर . . .' इत्यादिना (६. ४. १५७) वरादेशे च वरिष्ठ. ।। पीवरशब्देन तत्समानार्थः स्थूलशब्दोऽभिप्रेत. । ततश्च अतिशयेन स्थूल इति विग्रहे इष्ठनि यणादिलोपे गुणे च स्थविष्ठः ।। बहुशब्देन बहुलशब्दोऽभिप्रेतः । तस्य 'प्रियस्थिर . . .' इत्यादिना (६. ४. १५७) बहादेशे बंहिष्ठः ।। १११ ।।

[1] षड्विधाना B6 [2] Tv adds प्रथमार्थे द्वन्द्वसमास [3] प्र इत्यादेशे Tj1, Tj2
[4] तत्पर्यायभूत° Gm3, Tv

(पा) क्षेपिष्ठ—प्रकर्षार्था । क्षेपिष्ठादय शब्दा क्षिप्रादीना प्रकर्षार्थका । अतिशयेन क्षिप्र क्षेपिष्ठ । अतिशयेन क्षुद्र क्षोदिष्ठ । अतिशयेन प्रिय प्रेष्ठ । अतिशयेन उरु वरिष्ठ । अतिशयेन स्थूल स्थविष्ठ । अतिशयेन बहुलो बंहिष्ठ [1] ।। १११ ।।

[1] प्रियोरुस्थूलशब्दाना अभीप्सितपृथुपीवरशब्दा छन्दोभङ्गभयात् B3

साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः ।। ११२ ।।
बाढव्यायतबहुगुरुवामनवृन्दारकातिशये ।।

इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने विशेष्यनिघ्नवर्गः

(वि) साधिष्ठेति—अतिशयेन बाढ[1] साधिष्ठ । अतिशयेन दीर्घो द्राघिष्ठ । अतिशयेन स्फिर[2] स्फेष्ठ । अतिशयेन गुरु गरिष्ठ । [3]अतिशयेन ह्रस्वो ह्रसिष्ठ । अतिशयेन वृन्दारको मनोज्ञो[4] वृन्दिष्ठ । एते शब्दा क्रमेण बाढव्यायतबहुगुरुवामनवृन्दारकाणाम् अतिशयार्था भवन्ति ।। ११२ ।।

इति बगलभट्टोपाध्यायसूरिसुतलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ
विशेष्यनिघ्नवर्गं समाप्त

[1] साधु $K_5$  [2] $K_5$ adds स्फीत  [3] $K_3$ omits  [4] मनोज्ञतया $J_2$

(विव.) साधिष्ठ—अतिशये । अत्रातिशयशब्दोऽतिशयवति[1] वर्तते । बाढादीनां मध्ये तत्तद्धर्मातिशययोगिनि[2] प्रथमार्थे द्वन्द्वसमाससंगृहीता इष्ठन्प्रत्ययान्ताः साधिष्ठादयः शब्दा वर्तन्ते । अतिशयेन बाढ इति विग्रहे 'अन्तिकबाढयोर्नेदसाधौ' (५. ३. ६३) इति साधादेशे सति साधिष्ठः ॥ अत्रापि [3]वृत्तानुरोधात् प्रयुक्तेन व्यायतशब्देन तत्पर्यायो दीर्घशब्दोऽभिप्रेतः । अतिशयेन दीर्घ इति विग्रहे 'प्रियस्थिर...' इत्यादिना (६. ४. १५७) दीर्घशब्दस्य द्राघ्यादेशे द्राघिष्ठः ॥ बहुशब्देन तत्पर्यायस्फिरशब्दो गृह्यते । तस्य स्फ इत्यादेशे स्फेष्ठः ॥ गुरुशब्दस्य [4]गरादेशे गरिष्ठः ॥ इह वामनशब्देन ह्रस्वशब्दो विवक्षितः । तस्य 'स्थूलदूर...' इत्यादिना (६. ४. १५६) यणादिलोपे ह्रसिष्ठः ॥ 'वृन्दारके सुरे श्रेष्ठे मनोज्ञे वाच्यलिङ्गवत्' इति [5]प्रतापमार्तण्डेनाभिधानाद् इह वृन्दारकशब्देन मनोज्ञः श्रेष्ठश्च विवक्षितः । तत्र अतिशयविवक्षाया वृन्दादेशे वृन्दिष्ठः ॥ उपलक्षणमेतत् । एवमेव क्षुद्रादिशब्देभ्यः तत्तदतिशयविवक्षाया तमप्प्रत्ययान्ता अप्युदाहार्याः । यथा—क्षिप्रतमः, प्रियतम इत्यादयः । तथा 'द्विवचनविभज्योपपदे तरबीयसुनौ' (५. ३. ५७) इति सूत्रेण तरप्प्रत्ययान्ता ईयसुन्प्रत्ययान्ताश्च विशेष्यनिघ्नत्वेन विज्ञेया इति सर्वं समञ्जसम् ॥ ११२ ॥

बोम्मगण्टचप्पयार्येण नामलिङ्गानुशासने ।
विशेष्यनिघ्नवर्गस्य संक्षिप्य व्याकृतिः कृता ॥
इह यत्त्यक्तमज्ञानादालस्याद् यदुपेक्षितम् ।
प्रमादादन्यथोक्तं यत् तद्विद्वद्भिर्विशोध्यताम् ॥

इति विशेष्यनिघ्नविवरणं समाप्तम्

[1] अतिशये $B_6$  [2] °योगिन्यर्थे $T_{J1}$, $T_{J2}$  [3] छन्दोऽनुरोधात् $Gm_3$  [4] गर् इत्यादेशे $T_V$  [5] प्रतापमार्तण्ड° $Gm_3$, Tv

(पा.) साधिष्ठ—अतिशये । साधिष्ठादयो बाढादीनामतिशयार्थका. । अतिशयेन बाढ साधिष्ठ । अतिशयेन दीर्घो द्राघिष्ठ । अतिशयेन स्फिरः

स्फेष्ठ । अतिशयेन गुरुर्गरिष्ठ । अतिशयेन ह्रस्वो ह्रसिष्ठ । अतिशयेन वृन्दारको वृन्दिष्ठ[1] ।। ११२ ।।

इति [2]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते विशेष्यनिघ्नवर्ग

[1] B3 adds दीर्घस्फिरह्रस्वशब्दाना व्यायतबहुवामनशब्दा पूर्ववत् [2] °नरसिंह° A1

---

## २. संकीर्णवर्गः

**प्रकृतिप्रत्ययार्थाद्यैः संकीर्णे लिङ्गमुन्नयेत् ।**
**कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः ।। १ ।।**

(वि) अथ सकीर्णवर्गमुपक्रमते[1] प्रकृतीति—प्रत्ययेतरभागः प्रकृतिः । [2]प्रकृतेरितर प्रत्यय । प्रकृतिभागस्य अभिधेयमर्थ. । [3]आद्यशब्देन रूपभेद-[4]साहचर्य च । एतै प्रकृत्यादिभि सकीर्णेऽस्मिन् वर्गे लिङ्गं स्त्रीपुनपुसकमुन्नयेत् उत्प्रेक्षेत ।। पुन पुनः क्रियत इति कर्म क्रिया च । 'डुकृञ् करणे' । एते[5] व्यापारस्य नामनी ।। अपरे च परे च अपरस्परा । बहुभिरविच्छेदेन क्रियमाणाया गत्यादेर्नाम ।। १ ।।

[1] उच्यते J2 [2] प्रकृतीतर K5, K6 [3] आदि° J2. [4] सहचर्या J2 [5] एतौ K4

(विव.) प्रकृति—लिङ्गमुन्नयेत् । उद्देशक्रमानुरोधेन (श्लो. ३. १. १) संकीर्णवर्गं वक्तुमुपक्रमते । प्रकृतिः प्रातिपदिकम् । प्रत्ययः कृत्तद्धितरूपः । अर्थोऽभिधेयरूपः । [1]इह संकीर्णवर्गे विधेयशब्दस्य लिङ्गसंदेहे तत्तल्लिङ्गविशेष-नियतैः प्रकृत्यादिभिः यथासंभवं लिङ्गमुत्प्रेक्षेतेत्यर्थः । अस्य च वर्गस्य संकीर्ण-पदाभिलक्ष्यत्वमिह वक्ष्यमाणार्थानामुपसंग्राहकैकनिगमाभावात् । तथा हि—न तावत् तेषामर्थानां प्रागनुक्तत्व[2] समानो धर्मः । उक्तानामपि ज्वरहूतिख्यातिसंप्रहावीना-मभिधानात् । नापि धर्ममात्रत्वम् । धर्मिणामपि उपघ्नस्तम्बघ्नादीनामपि

(श्लो. १६, ३५) वक्ष्यमाणत्वात् । नाप्याविष्टलिङ्गत्वम् । अपरस्परस्तम्बघ्नादीनामपि कथनात् । नापि प्रागुक्तस्वर्गव्योमादिसंबन्धित्वादिलक्षणसर्वोपसंग्राहकात्यन्ताभावः । राजकगाणिक्यादिवद् (२. ८. ३, २. ६. २२) मानुष्यककारीषादीनां (श्लो. ४२, ४३) सत्यपि मनुष्यसंबन्धे तत्तत्प्रकरणपाठपरिहाणेनात्रैव[3] निरूपणाद्[4] भूविशेषस्य संस्तावस्यापि (श्लो. ३४) अत्रैव प्रस्तुतत्वात् । अन्यस्यापि कस्यचित् समानधर्मस्य दुर्निरूपत्वेनानन्तरवर्गस्य लूनविशीर्णप्रायार्थसंकुलत्वेन सकीर्णसंज्ञया व्यवहारः उपपद्यते ।

तत्र प्रकृत्या लिङ्गोन्नयनं यथा—अपरे च परे चेति द्वन्द्वसमासे अपरस्पराः । क्रियासातत्ये सुडागमो निपातितः । अत्र परवल्लिङ्गतानियमात् परशब्दस्य च सर्वनामत्वेन वाच्यलिङ्गतानियमाद् अपरस्परप्रातिपदिकस्यापि वाच्यलिङ्गत्वं निश्चीयते । अपरस्पराः सार्था यान्ति । अपरस्पराणि ब्राह्मणकुलानि इत्यादि । *तथा 'तद्युक्तात् कर्मणोऽण्' (५. ४. ३६) इति सूत्रेण नपुंसकलिङ्गात् कर्मशब्दात् स्वार्थ एव उत्पन्नतद्धितान्तस्य कार्मणशब्दस्यापि प्रकृतिवदेव नपुंसकलिङ्गत्वम् । अत एव बालो बालकः । शारी शारिका । स्थानमेव स्थानकम् इत्यादिस्वार्थिकप्रत्ययान्ताना प्रकृतिलिङ्गत्वमेव । चातुर्वर्ण्यादिषु तु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति वचनात् प्रकृतिलिङ्गातिवृत्तिः तत्र तत्र विशेषविधानादवगन्तव्या । दान्तिः शान्तिः कान्तिः इत्यादीनां स्त्र्यधिकारविहितप्रत्ययान्तानां (३. ३. ९४) प्रत्ययवशेनैव स्त्रीत्वनिश्चयः। प्लोषश्लेषग्रहजयादिशब्दानामत्र सप्तमीविभक्तयन्तत्वेन पाठात् लिङ्गसंदेहे 'घञन्ताः पुंसि' (श्लो. ३. ५. १५) इति पुंलिङ्गत्वं प्रत्ययैरेवावगम्यते । गतम् इत्यादौ नपुंसकत्वं भावविहितक्तप्रत्ययेन (३. ३. ११४) निश्चीयते इत्यादि । अर्थेन यथा—त्राणशब्दो (श्लो. ८) निष्ठान्तो वाच्यलिङ्गः । ल्युडन्तश्चेद् नपुंसकलिङ्गः (३. ३. ११५) । एवं च 'रक्षणस्त्राणे' (श्लो. ८) इत्यत्र भाववचनरक्षणशब्दसमभिव्याहृतत्राणशब्दस्य नपुंसकलिङ्गत्वं रक्षणरूपभावार्थेन[5] निर्णीयते[6] । 'गीर्णे गिरौ' (श्लो. ११) इत्यत्र गिरिशब्दस्य स्त्रीलिङ्गपुंलिङ्गयोस्तुल्यरूपत्वेऽपि पर्वतवाचकस्य पुंलिङ्गत्वावधारणाद् इह तद्विलक्षणगरणरूपभावार्थेन स्त्रीलिङ्गत्वमवसीयते । प्रत्ययार्थाभ्यां समुच्चिताभ्यां यथा—सहस्रमस्यास्तीत्यर्थे 'तपःसहस्राभ्यां विनीनी' 'अण् च' (५. २. १०२-३) इति मत्वर्थीयेऽण्प्रत्यये साहस्राः सामन्ता इत्यादिरूपेण साहस्रशब्दो वाच्यलिङ्गः । समूहार्थे तु भिक्षादिषु (४. २. ३८) पाठाद् अण्प्रत्यये सति नपुंसकलिङ्गः । एवं च सति साहस्रकारीष... (श्लो. ४३) इत्यत्र द्वन्द्व-

समासमध्यवर्तितया साहस्रशब्दस्य लिङ्गसंदेहे सति अण्प्रत्ययस्य समूहार्थावलम्बनेन भैक्षादिशब्दवत् (४. २. ३८) नपुंसकत्वनिर्णायकत्वमित्यादि यथासंभवमुदाहार्यम् ।

आद्यशब्दगृहीतेन रूपभेदेन यथा—शमथः, दमथः (श्लो. ३); छिदा, भिदा (श्लो. ५); विधूननं, विधुवनम् (श्लो. ४) इत्यादि । विशेषविधिना यथा—'वेदना न ना' (श्लो. ६) । 'अथास्त्रियां तु निष्ठेवः' (श्लो. ३७) इत्यादि । 'डिम्बे डमरविप्लवौ' (श्लो. १४) इत्यादौ साहचर्यात् समासाच्च लिङ्गनिश्चय इति द्रष्टव्यम् ।। अत्र संकीर्ण इत्युपलक्षणम् । तथा चेह ग्रन्थे सर्वत्रापि नाम्नामेव एव लिङ्गनिर्णयोपायो बोद्धव्यः । ननु यद्येवं ग्रन्थादावेवेदं वक्तव्यमिति चेत् सत्यम् । प्रागुक्ते स्वर्गादिवृन्दिष्ठान्ते (श्लो. ३. १. ११२) शब्दप्रपञ्चे परिचितनिरुक्तिमार्गस्य प्रकृतिप्रत्ययविवेकः सुकरः इत्यत्रैवेदमुक्तम् । अत एव लिङ्गसंग्रहवर्गादावप्ययमर्थः कथयिष्यत इति सर्वमनवद्यम् ।।

कर्म क्रिया इत्येते व्यापारस्य नामनी । क्रियत इति कर्म । औणादिको मनिन्प्रत्ययः (उ. ४. १४५) । 'कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतम्' इति रुद्रवचनात् कर्मशब्दः पुंनपुंसकलिङ्ग इति दशटीकासर्वस्वकारः (३, पृ. ५१) । 'क्षपयत्यशुभं कर्म कर्माणं चिनुते शुभम्' इति प्रयोगश्च तेनैव दर्शितः । 'कृञः श च' (३. ३. १००) इति भावार्थे शप्रत्यये तस्य ङिद्वद्भावेन गुणाभावे सति 'रिङ् शयग्लिङ्क्षु' (७. ४. २८) इति रिङादेशे च क्रियाशब्दः । अत्र शेषकारः—'कारः कृत्यं न ना कारिः प्रश्नोक्त्योः कारिका कृतिः' इति । 'डुकृञ् करणे' इत्यतो भावे घञि कारः । 'विभाषा कृवृषोः' (३. १. १२०) इति भावार्थे क्यप्प्रत्यये कृत्यम् । न ना; पुंलिङ्गं न भवतीत्यर्थः । 'कृञः श च' (३. ३. १००) इति चकारेण क्यप्प्रत्यये कृत्याशब्दः स्त्रीलिङ्गः । 'विभाषाख्यानपरिप्रश्नयोरिञ् च' (३. ३. ११०) इति इञ्प्रत्यये कारिशब्दः स्त्रीलिङ्गः । 'कां कारिमकार्षीः' इत्यादिप्रश्नोत्तरयोरेव कारिशब्दस्य साधुत्वम् । धात्वर्थनिर्देशे ण्वुलि (३. १. १३३) कारिका । स्त्रियां क्तिनि (३. ३. ९४) कृतिः ।।

सत्सातत्ये गम्ये स्युरपरस्पराः । संततस्य भाव इति संततशब्देन विग्रहेऽपि 'अविरविकन्यायेन' सततशब्दात् तद्धितोत्पत्तौ सातत्यमिति रूपम् । तस्या अध्ययनगत्यादिकायाः क्रियायाः सातत्ये अपरैः परैः संघीभूय बहुभिरविच्छेदेन क्रियमाणायाः प्रबन्धे विवक्षिते सति अपरस्परा इत्ययं शब्दः प्रवर्तत इत्यर्थः । अपरे च परे

चेति द्वन्द्वसमासे 'अपरस्पराः क्रियासातत्ये' (६. १. १४४) इति सूत्रेण सुडागमो निपातितः। अत्र काशिकाकारेण 'अपरस्पराः सार्था यान्ति'[8] इत्युदाहरणं प्रदर्श्य, तस्यार्थोऽपि दर्शितः[9] 'सततमविच्छेदेन गच्छन्तीत्यर्थः' इति (२, पृ. १४७)। अत्र द्वन्द्वसमासे परवल्लिङ्गत्वानियमात् (२. ४. २६) परशब्दस्य च सर्वनामत्वेन वाच्यलिङ्गत्वाद् 'अपरस्पराणि ब्राह्मणकुलानि वहन्ति' इत्युदाहार्यम्[10]। क्रियाप्रबन्धविवक्षाया अभावे तु अपरस्परा सुडागमरहित एव प्रयोज्यः[11]। अत्र सुभूतिचन्द्र.—'तत्सातत्य इत्यत्र सातत्य क्रियावता क्रियायाश्च विशेषणम्। तथा च यत्र क्रियावता तत्र वाच्यलिङ्गत्वम् अपरस्परशब्दस्य। यत्र क्रियायास्तत्र नपुंसकत्वमिति पूर्णचन्द्र'। अत एव "निर्दिष्ट कर्मसातत्ये सुधीभिरपरस्परम्" इति भागुरिः। क्रियाविशेषणत्वे यथा—अपरस्परमधीयन्ते माणवका.' इति ॥ १ ॥

[1] Tv adds आद्यशब्देन प्रायशो रूपभेदेन साहचर्यविशेषविधीना ग्रहणम्। तथा चात्र शेषकार —'रूपेणोक्त्या साहचर्याल्लिङ्गोत्प्रेक्षा प्रकीर्णके' इति [2] °क्तार्थत्व Gm3, Tv [3] °प्रकरणाविपातेनालैव Tj1, Tj2 [4] कथयिप्यमाणत्वात् Tv [5] 'यजयाच नङ्' भावार्थे विधीयते [6] निश्चीयते B5, B6 [7] युज्यते Gm3, Tv [8] गच्छन्तीति मुद्रितग्रन्थे [9] विवृत B5, B6 [10] Tv adds दर्शयितु तत्सातत्य इत्युक्तम् * Tv adds तथा आनन्दनसभाजने (श्लो ७) इत्यत्र समासे सुपो लुकि कृते निर्देशसाधारण्याद आनन्दनशब्दस्य पुनपुसकत्वसदेह। सभाजनशब्दस्य द्विवचनान्तस्य स्त्रीनपुसकविषय सदेह एव। [11] अपरपरा इति

(पा) [1]प्रकृति—अपरस्परा। प्रस्तावभावाद्युपाधिभि पूर्वोक्तप्रकीर्णशब्दसग्रहार्थेऽस्मिन् सकीर्णवर्गे प्रकृत्यर्थप्रत्ययार्थरूपभेदैर्लिङ्ग तर्कयेत्। अपरस्परा· इत्यत्र प्रकृत्यर्थो लिङ्गगमक[2]। 'स्फातिर्वृद्धौ' (श्लो ६) इत्यत्र प्रत्ययार्थ। कर्म क्रिया इत्यत्र रूपभेद। [3]भ्रमिर्भ्रमे इत्यत्र साहचर्यमगोचरम्। विशेषविधेरनुक्तत्वात् तदनुपादानम्। गीर्णिर्गिरौ (श्लो ११) इत्यत्र साहचर्यम्। 'सवेदो वेदना न ना' (श्लो ६) इति क्वचिद् विशेषविधि॥ क्रियासातत्ये विषये क्रियावत्सु त्रिलिङ्गोऽपरस्परशब्द स्यात्। अपरे च परे च अपरस्परे। अपरस्परा वाहनार्थ गच्छन्ति। क्रियाया नपुसक एव। अपरस्पर गच्छन्ति। 'निर्दिष्ट कर्मसातत्य सुधीभिरपरस्परम्' इति भागुरि ॥ १ ॥

[1] A1 adds an invocatory verse

कृपाशीला बाला विपुलगुणशाला भ्रमरवं-
संसत्काला कालान्तर[सु]कुलपाला शिवकलाम।

त्रयीमूलाजाला दरस्रुचिरडोलान्तरगता
चिदुद्वेला [का]लाङकुरनिकुरलीला हृदि भजे ॥

धेनुवागीश्वर्यै नम ।

[2] 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो' (२ ४ २६) इति परशब्दस्य सर्वनामत्वात् त्रिलिङ्गता

[3] 'भ्रमो भ्रमी' इति ६ श्लोके.

**साकल्यासङ्गवचने पारायणतुरायणे ।**
**यदृच्छा स्वैरिता हेतुशून्या त्वास्था विलक्षणम् ॥ २ ॥**

(वि) साकल्येति—पारं साकल्यमयन्ते प्राप्नुवन्ति येनेति पारायणम् । 'अय पय गतौ'। साकल्यवचनस्य वेदपारायणादेर्नाम । तुरया त्वरया अयन्ते येन तुरायणम् । परायणमिति वा पाठः । धर्ममेव परमित्ययन्ते[1] येन परायणम् । [2]आसक्तिवचनस्य [3]धर्मपरायणादेर्नाम ॥ स्वयमृच्छा[4] इच्छा यदृच्छा । स्वैरिणः स्वतन्त्रस्य भाव. स्वैरिता । स्वेच्छानामनी ॥ हेतुशून्या[5] आस्था अकारणस्थितिः विलक्षणमुच्यते । विगतं [6]लक्षणमालोचनमत्रेति विलक्षणम् । [7]विलक्षणनाम ॥२॥

[1] K2, K4 add नियत गच्छन्ति. [2] आसङ्ग° K5 [3] °पारायणादे. K4, K6.
[4] K5 omits ऋच्छा [5] प्रयोजनशून्या Pt2 [6] कारण for आलोचन Pt2
[7] अवारण° K2, K3, K4.

(विव.) साकल्य—तुरायणे । वेदसंहितादेः यस्य कस्यचिद् ग्रन्थस्य साकल्येन कथनं साकल्यवचनम् । सङ्गः स्खालित्यम् । तद्राहित्येन कथनम् असङ्गवचनम् । तयोरुभयोरर्थयोः क्रमेण द्वावपि शब्दौ भवतः[1] । पारं साकल्यम् अयन्ते प्राप्नुवन्ति येन तत् पारायणम् । त्वरणं तूः । 'ञित्वरा संभ्रमे' । भावे क्विप् । 'ज्वरत्वर...' इत्यादिना (६. ४. २०) ऊठ् । तुरा त्वरया असक्तमयन्ते गच्छन्ति येन तत् तुरायणम् । 'पारायणतुरायणचान्द्रायण...' (५. १. ७२) इति निर्देशात् साधुत्वम् । [2]चिरंतनव्याख्यातारस्तु—'पारायणपरायणे' इति पठित्वा व्याचक्रुः—'साकल्यमासङ्गश्च तौ वदतः' इति । अत्र साकल्यार्थः पारायणशब्दः । तथा च भट्टिकाव्ये—'रत्नपारायणं नाम[3] लङ्केयं मम मैथिलि' इति (५. ८६) । अत्र साकल्यार्थो गम्यत इति साकल्यवचनत्वम् । आसङ्ग आसक्तिः । तद्वाचकः परायणशब्दः । यथा—'अथ मोहपरायणा सती' (कु. सं. ४. १) इति । मोहासक्तमनोरथर्थः । यदृच्छा स्वैरिता । [4]स्वैरो स्वतन्त्रः । तस्य भावः स्वैरिता ।

स्वेच्छाकृतव्यापारो यदृच्छेत्यर्थः । 'ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु' इति गत्यर्थाद् धातोरकारप्रत्यये (३. ३. १०३) ऋच्छा । स्वयमृच्छा स्वेच्छा । 'ऋलृक्' (मा. सू. २) इति सूत्रे 'लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः' इति वार्त्तिककारोच्चारणात् साधुत्वम् । 'स्वय विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया' इति माघश्लोकव्याख्याने (शिशु. १. ७१) वल्लभाचार्यः[5] । 'यदृच्छाशब्दो स्वेच्छार्थो व्युत्पत्तिरहितः । न ह्यत्रावयवार्थानुसारिणी व्युत्पत्तिरस्तीति' ।। हेतुशून्या त्वास्था[6] विलक्षणम् । प्रयोजनरहिता यत्र कुत्रचिदास्था स्थितिर्विलक्षणमुच्यते । विगतं लक्षण स्थितिज्ञापकं प्रयोजनमत्रेति विलक्षणम् ।। २ ।।

[1] Gm3, Tv add इत्यर्थं [2] सुभूतिचन्द्रसर्वानन्दादयस्तु Gm3, Tv. [3] नाम्ना इति मुद्रितग्रन्थे [4] 'मन्दस्वच्छन्दयो स्वैर' इति वक्ष्यते (३ ३ १९२) । स्वतन्त्रप्रवृत्तिमान् स्वैरी । तस्य भाव स्वैरिता । स्वेच्छाकृतव्यापारो यदृच्छेत्यर्थं Tj1, Tj2, Tv. [5] काश्मीरीयवल्लभदेवव्याख्याने न दृश्यते [6] आस्था B5, B6

(पा) साकल्य—परायणे[1] । पारायणशब्द साकल्यवचन । साकल्य कार्त्स्न्यम् । [2]परायणशब्द आसङ्गवचन । आसङ्ग आश्रय । 'त्रिषु स्यात् तत्परेऽभीष्टेऽप्याश्रये क्ली परायणम्' इति रभस । 'अथ मोहपरायणा सती' (कु स ४ १) इत्यत्र बहुव्रीहिवशात् स्त्रीलिङ्ग ।। यदृच्छा स्वैरिता । नियमत्यागनामनी । 'यदृच्छा नियमोज्झिति' इति वैजयन्ती (पृ. १९२, श्लो. ६) ।। हेतु—विलक्षणम् । [3]हेतुशून्य विलक्षण स्यात् ।। २ ।।

[1] तुरायणे C1 [2] तुरायणशब्द C1 [3] हेतुशून्या A1

**शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।**
**अपदानं कर्मवृत्तं काम्यदानं प्रवारणम् ।। ३ ।।**

(वि) शमथ इति—शमन शमथ । शम, शान्तिश्च । 'शम [1]उपशमे' । क्रोधाद्युपरमस्य नामानि ।। दमन दान्ति. । दमथ, दमश्च । 'दमु उपशमे'[2] । क्लेशसहनस्य नामानि ।। अपदायते शोध्यत[3] इति अपदानम् । 'दैप् शोधने' । अवदानमिति वा पाठ । वृत्तस्य [4]शुद्धकर्मणो नाम ।। [5]प्रवार्यतेऽशुभादिव मनेनेति प्रवारणम् । 'वृञ् वरणे' । ऐच्छिकदानस्य नाम[6] ।। ३ ।।
।।

[1] उपशमने J2, K2. [2] उपशमने J2, K5 [3] शुध्यते Pt2 [4] शुद्धस्य K4, K6. [5] K5, K6 omit [6] J2 adds काम्येन काम्यस्य वा दान काम्यदानम्.

(विव.) शमथ —शान्तिः । कामक्रोधाद्युपरमस्य नामानि । 'शमु उपशमे' इत्यस्मात् 'शमिदमिभ्यामथच्' इत्यौणादिके[1] अथच्प्रत्यये शमथः ॥ घञि (३. ३. १८) 'नोदात्तोपदेशस्य...' (७. ३. ३४) इति [2]वृद्धिप्रतिषेधे शमः ॥ स्त्रिया क्तिनि (३. ३. ९४) 'अनुनासिकस्य क्विझलोः क्ङिति' (६. ४. १५) इति दीर्घे शान्तिः ॥ दान्ति —दमः । मनसः प्रत्याहारादिक्लेशसहिष्णुताया नामानि । 'दमु उपशमे' इति धातोः पूर्ववदेव शब्दत्रय व्युत्पादनीयम् ॥ अपदान कर्मवृत्तम् । [3]वृत्तं दृढ शुद्धमित्यर्थः । निर्व्यूढमित्येके । तथाभूत कर्म अपदानम् । अप इति निपातो वर्जनार्थः । पुरुषोऽपदायते शुध्यते इतरसाधारण्यपरिहारेण[4] सोत्कर्षः प्रतीयतेऽनेनेति अपदानम् । 'दैप् शोधने' । करणे ल्युट् (३. ३. ११५) ॥ काम्यदान प्रधारणम् । [5]काम्यस्य कमनीयस्य कनकरत्नादेर्वस्तुनः कामनापूर्वक च दान[6] प्रधारणमिति सुभूतिचन्द्रः । दातृप्रतिग्रहीत्रो. प्रकृष्टं मनसो धारणमत्रेति प्रधारणम् । अन्ये तु पाठान्तरेण निर्ब्रुवते—प्रभूतधनप्राप्त्या याचकैरलंबुद्धया कृत प्रकृष्ट वारण निवारणम्[7] अत्रेति [8]प्रवारणमिति ॥ ३ ॥

[1] 'बाहुलकाच्छमिदमिभ्याम्' [अथ] इति कौमुद्याम् (उ ३ ११३). [2] वृद्ध्यभाव Gm3, Tv [3] Gm1, Gm3 add वृत्त शुद्ध [4] इतरासाधारण्येन Tj1, Tj2 [5] कामस्य कमितु Tv [6] दान प्रदानमित्यर्थ इति सुभूति. Tv [7] Tj1, Tj2 add प्रतिषेधवचनम्. [8] प्रचारणमिति टीकासर्वस्वे (३, पृ ५२)

(पा) शमथ —शान्ति । [1]क्रोधरागादिराहित्यनामानि ॥ दान्ति — दम । क्लेशसहिष्णुतानामानि ॥ अपदान कर्मवृत्तम् । अन्तस्थद्वितीय [2]पवर्गद्वितीय च स्यात् । वृत्त कर्म [3]अपदान स्यात् ॥ काम्यदान प्रवारणम् । काम्यवस्तुप्रदान प्रवारण स्यात् ॥ ३ ॥

[1] कामक्रोधादि° B3, C1 [2] B3 omits [3] अवदान A1, C1

वशक्रिया संवननं मूलकर्म तु कार्मणम् ।
विधूननं विधुवन तपण प्रीणनावनम् ॥ ४ ॥

(वि ) वशक्रियेति—सवन्यते वशीक्रियतेऽनेनेति सवननम्[1] । 'वन सभक्तौ'[2] । वशीकरणस्य नाम ।। कर्मैव कार्मणम् । मूलैरौपधादिमूलैर्यत् क्रियते तस्य कर्मणो नाम ।। विधूयतेऽनेनेति विधूननम्[3] । 'धञ् कम्पने' । विधुवन च । 'ध विधनने' । व्यजनादेश्चाननस्य[4] नामनी ।। [5]तृप्यतेऽनेनेति तर्पणम् । 'तृप प्रीणने' । प्रीयतेऽनेनेति प्रीणनम् । 'प्रीञ्[6] तर्पणे' । अव्यतेऽनेनत्यवनम् । 'अव रक्षणादौ'[7] । ब्राह्मणादीनाम् अन्नादितर्पणस्य नामानि ।। ४ ।।

[1] सम्यग्वनन व्यापार Pt2 [2] वनु व्यावृत्तौ' Pt2 [3] विधूति Pt2
[4] J2 adds व्तस्तत [5] J2 Pt2 add तृप्यति भोक्ता [6] प्रीङ् प्रीणन K2 O
[7] अव प्रीतौ K8

(विव ) वशक्रिया सवननम् । मणिमन्त्रादिभिर्वशीकरणस्य नामनी । वशस्य स्वानुवृत्ते[1] क्रिया करण वशक्रिया । सम्यग् वनन सवननम् (३ ३ ११५) । वनु[2] इति धातु । अस्यायमर्थ । वनुधातुरस्मिन्नर्थे वर्तत इति शृङ्गग्राहिकया नोच्यते । किंतु सर्वेऽप्यर्था अस्य धातोरिति । अतोऽत्र वशीकरणमर्थ ।। मूलकर्म तु कार्मणम । 'तस्येदम्' (४ ३ १२०) इत्यण् । 'अन्' (६ ४ १६७) इति प्रकृतिभाव । 'कार्मण मन्त्रतन्त्रादियोजने [3]कर्मणि स्मृतम्' इति विश्वप्रकाश (पृ ५२, श्लो ५६) । तथा च मुरारिनाटके (अनर्घ ३ १६) प्रयोग —

' निर्मायकार्मणमृचामघमर्षणीना-
मुन्मार्जनिर्जगदघानि तवाद्य वाच ' ।

इति । अघमर्षणमन्त्राणा वशीकरण विधाय तन्मन्त्रनिर्वर्त्यसकलदुरितविध्वसन-कार्यस्य स्वयमेव विधायकास्तव वाच इत्यर्थ । अथवा इह प्रवृत्तिहेतुभूत वाचिक मूलशब्देनोच्यते । 'यद्वाचा वदति तत्कर्मणा करोति' इति श्रुते (नृसिंह उ १) । वाचिक श्रुत्वा यत्कर्मणा क्रियते तत् कार्मणमित्यर्थ । तथा च 'तद्युक्तात् कर्मणोऽण्' (५ ४ ३६) इत्यत्र काशिकाकार (२, पृ ८६)—' व्याहृतार्थया वाचा यत्कर्म युक्त तदभिधायिन कर्मशब्दात् स्वार्थेऽण्प्रत्ययो भवति । कर्मैव कार्मणम् । वाचिक श्रुत्वा तथैव यत्कर्म क्रियते तत्कार्मणमित्युच्यते' इति । कात्योऽपि— 'श्रुत्वा तु वाचिक कर्म क्रियमाण तु कार्मणम्' इति । अत्रापि व्याख्याने प्राक्प्रदर्शित एव प्रयोग । [4]'निर्माय कैतवरहितम् । तच्च तत्कार्मण चेति निर्माय-

कार्मणमित्येकं पदम्। अघमर्षणमन्त्रव्याहृतार्थयुक्तकर्मरूपत्वात् कार्मणमिति वाचामाविष्टलिङ्गं विशेषणम्। अत एव जगदघानामुन्मार्जनशीला इति स्वार्थिकप्रत्ययान्तानां प्रकृतिलिङ्गकत्वं स्यात्। वर्गसिद्धत्वाद् इह रूपभेदेन कार्मणशब्दस्य नपुंसकलिङ्गत्वं प्रकाश्यते ॥ विधूननं विधुवनम्। वक्ष्यमाणशेषकारोक्तशब्दसहिता विधूननादयो द्वादशशब्दा व्यजनपादपादिचलनप्रयोजकव्यापारस्य वाचकाः। विधूयते व्यजनादिकमनेन प्रयोजकव्यापारेणेति विधूननम्। 'धूञ् कम्पने'। विपूर्वो हेतुमण्णिचि (३. १. २७) 'धूञ्प्रीञोर्नुग्वक्तव्यः' (वा. ७. ३. ३७) इति करणे ल्युटि (३. ३. ११५) 'णेरनिटि' (६. ४. ५१) इति णिलोपः ॥ विपूर्वाद् 'धू विधूनने' इत्यतो ल्युटि (३. ३. ११५) [5]कुटादित्वेन (१. २. १) गुणाभावाद् उवङादेशे विधुवनम्। शेषे—

> 'विधूनना विधवनं विधूतिर्विधुतिः स्त्रियौ।
> विधून्यं च विधव्यं च विधूयं च विधाव्यवत् ॥
> विधुवो विधवस्तुल्यौ'।

इति। 'धूञ् कम्पने' इत्यस्मात् णिचि नुकि (वा. ७. ३. ३७) 'ण्यासश्रन्थो युच्' (३. ३. १०७) इति युचि विधूननाशब्दो रूपभेदात् स्त्रीलिङ्गः ॥ ऋयादेः स्वादेर्वा 'धुञ् कम्पने' इत्यतो ह्रस्वात् ल्युटि गुणे विधवनम् ॥ 'धूञ् कम्पने' इत्यतो दीर्घान्तात् ऋयादेः स्वादेर्वा 'धू विधूनने' इत्यतः तौदादिकाद्वा स्त्रियां क्तिनि (३. ३. ९४) विधूतिः। 'धुञ् कम्पने' इत्यतो ह्रस्वान्ताद् विधुतिः ॥ विपूर्वाद् धूनयतेः 'अचो यत्' (३. १. ९७) इति यत्प्रत्यये विधून्यम्। 'धू विधूनने' इत्यस्मात् कुटादेर्यति विधूयम्। 'ओरावश्यके' (३. १. १२५) इति धुनातेर्धुनोतेर्वा ण्यति वृद्धौ 'वान्तो यि प्रत्यये' (६. १. ७९) इति वान्तादेशे च विधाव्यम्। धुवतेः कुटादेरप्रत्यये उवङादेशे विधुवः। स्वादेः ऋयादेर्वा अप्रत्यये गुणे च विधवः। अन्तिमयोर्द्वयोः लिङ्गतः समत्वमिति शेषकारोयतुल्यशब्दस्यार्थः ॥ तर्पणं प्रीणनावने। अन्नादिना यत् परस्य तृप्तिजननं तस्य नामानि। तृप्यति भोक्ता अनेनेति तर्पणम्। 'तृप प्रीणने' (३. ३. ११५) ॥ [6]प्रीयतेऽनेनेति प्रीणनम्। णिचि 'धूञ्प्रीञोर्नुग्वक्तव्यः' (वा. ७. ३. ३७) इति नुगागमः ॥ अव्यतेऽनेन पुमानिति अवनम् (३. ३. ११५)। 'अव [7]रक्षणगतिप्रीतिषु' ॥ ४ ॥

[1] °र्तित्वस्य Gm1, Tv. [2] 'वनु क्रियासामान्यार्थे' Tj1, Tj2 [3] कर्मकारके

इति मु ग्र [4] मुरारिश्लोके [5] 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति ङित्वाद् गुणाभाव [6] Tv adds 'प्रीञ् तर्पणे'. [7] Tv *gives the full sūtra*, 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छावाप्त्यालिङ्गनहिंसादानभागवृद्धिषु'.

(पा) वशक्रिया सवननम् । वश्यकर्म [1]सवनन स्यात् । 'सवनन समालोचे वशीकारे प्रकीर्तितम्' इति विश्वप्रकाशिका (पृ ९८, श्लो १५६) । मूलकर्म तु कार्मणम् । मन्त्रतन्त्रादियोजनानाम । 'कार्मण मन्त्रतन्त्रादियोजने कर्मकारके' इति विश्व (पृ. ५२, श्लो. ५६) ।। मूलकर्म च कार्मणम्, इति पाठोऽप्युपपन्न । 'सवनन कार्मण वशीकरणम्' इति हलायुध (अ मा ४ ३१) ।। विधूनन विधुवनम् । [2]विधुतिनामनी । 'विदिरिचुट'[3] ।। तर्पण प्रीणनावनम् । [4]तृप्तिनामानि । 'तनिवि'[3] ।। ४ ।।

[1] सवदन A1, C1 [2] विधूति° C1 [3] B3 omits [4] तृप्तजन° B3

पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि ।
सेवनं सीवनं स्यूतिर्विदरः स्फुटनं भिदा ।। ५ ।।

(वि) पर्याप्तिरिति—[1]परिरक्षितुमाप्ति पर्याप्ति । 'आप्लृ व्याप्तौ' । परित्रायतेऽनेनेति परित्राणम्[2] । 'त्रैङ पालने' । वधोद्यतस्य हस्तस्य धारणमत्रास्तीति हस्तधारणम् । वध्यरक्षणस्य[3] नामानि ।। सीव्यते तन्तुभि सतन्यत इति सीवनम् । सेवनम् । स्यूतिश्च । 'षिवु तन्तुसताने' । छिन्नवस्त्रादे सूच्यादिना सीवनस्य[4] नामानि ।। विदीर्यत इति विदर । 'दॄ विदारणे' । स्फुटयत इति स्फुटनम् । 'स्फुटिर् विशरणे'[5] । भिद्यत इति भिदा । 'भिदिर् विदारणे' । घटादिच्छेदनस्य[6] नामानि ।। ५ ।।

[1] रक्षितु परित आप्यते K2 [2] परित त्राणन J2, K3 [3] रक्ष्यस्य K4, K6 [4] सेवनस्य K5 [5] विदारणे K6 [6] °भेदनस्य J2

(विव.) पर्याप्ति.—इत्यपि । वध्यघातुकयोर्मध्येऽनुप्रविश्य घातुकहस्तस्य धारणं कृत्वा यद् वध्यस्य परिरक्षण तस्यैतानि[1] नामानीति सुबोधिनीकारः । त्रायस्व त्रायस्वेति विक्रोशमुपश्रुत्य मारणोद्यतस्य निषेधः[2] पर्याप्त्यादित्रयमिति सुभूतिचन्द्रश्च । 'पर्याप्नोतु[3] सुहृदं महाभागः' इति महावीरनाटके प्रयोगश्च ।

पर्याप्नोतु वालिना हन्यमानं सुग्रीवं रक्षतु रामः[4] इत्यर्थः। परिरक्षितुमाप्तिः पर्याप्तिः। क्तिन् (३. ३. ९४)। भावे ल्युटि (३. ३. ११५) परित्राणम्। मारकहस्तस्य धारणं निर्व्यापारीकरणमत्रेति हस्तधारणम्। रक्षकहस्तेन वध्यस्य धारणं रक्षणमिति वा हस्तधारणम्। [5]घातकहस्तस्य [6]वारणं निवारणमत्रेति निरुच्य[7] हस्तवारणमिति केचित् पठन्ति॥ सेवनं—स्यूतिः। छिन्नवस्त्रादेः सूच्यादिसंधानकरणस्य नामानि। 'षिवु तन्तुसंताने' इति धातोर्ल्युटि (३. ३. ११५) लघूपधगुणे (७.३.८६) च सेवनम्। 'ष्ठिवुसिव्योर्दीर्घश्च' (सर. कण्ठा. २. ४. १६७) इति[8] विकल्पेन दीर्घे सीवनम्॥ तस्मादेव स्त्रियां क्तिनि (३.३.९४) 'च्छ्वोः शूडनुनासिके च' (६. ४. १९) इति ऊठि यणादेशे च स्यूतिः॥ विदरः स्फुटनं भिदा। वेणुदण्डादीनामग्रादामूलं द्विधाकरणस्य नामानि। 'दृ विदारणे' इति धातोः 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्यये विदरः॥ 'स्फुट विशरणे' इति धातोर्ल्युटि कुटादित्वेन ङित्त्वाद् (१. २. १) गुणाभावे स्फुटनम्॥ अत एव धातोर्घञि ङित्वाभावेन गुणे स्फोटश्च॥ 'भिदिर् विदारणे' इत्यतः 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इति अङ्प्रत्यये भिदा[9]। घञि भेदः, ल्युटि भेदनं च॥ ५॥

[1] Tj2 omits एतानि. [2] निषेधे Tj2. [3] 'पर्याप्तो नु' इति टीकासर्वस्वे (३, पृ. ५३). [4] Tj2 omits. [5] मारव° B5, B6 [6] धारण B5, Gm1. [7] कृत्वा Tj2 [8] पृषोदरादित्वाद् वा दीर्घ. इति भा. दी. (पृ. ४४७). [9] Tv adds 'शेषे—स्फोटभेदौ च भेदने' इति, ङित्वाभावेन गुणे घञि स्फोट.

(पा.) पर्याप्तिः—[1]इत्यपि। अलमिति [2]वचननामानि। [3]'चालुनु अट्टु'। सेवनं—स्यूति.। सूच्यादिना स्यूतिनामानि। 'कुट्टुट'। विदरः[4]—भिदा। विदारणनामानि[5]। 'चीरट'॥ ५॥

[1] हस्तवारणमिति पाठ A1, C1. [2] वृद्धि° B3. [3] B3 omits. [4] विदार: A1 [5] द्विकरण° B3

आक्रोशनमभीषङ्गः संवेदो वेदना न ना।
संमूर्च्छनमभिव्याप्तिर्याच्ञा भिक्षार्थनार्दना॥ ६॥

(वि) आक्रोशनमिति—आक्रोशति अनेनेत्याक्रोशनम्। 'क्रुश आह्वाने रोदने च'। अभिषज्यत इत्यभीषङ्गः[1]। 'षञ्ज सङ्गे'। शपनस्य नामनी॥

मविद्यत[2] इति संवेदः। वेदना च। 'विद ज्ञाने'। मिथः संवित्तेर्नामनी॥ समूर्च्छ्यते[3] व्याप्यत इति संमूर्च्छनम्। 'मूर्च्छा मोहसमुच्छ्राययोः'। अभिव्याप्यत इत्यभिव्याप्तिः[4]। 'आप्लृ व्याप्तौ'। धूपगन्धादेः समन्ताद् व्याप्तेर्नामनी[5]॥ याच्यत इति याच्ञा। 'टुयाचृ याच्ञायाम्'। भिक्ष्यत इति भिक्षा। 'भिक्ष भिक्षायाम्'[6]। अर्थ्यत इत्यर्थना। 'अर्थ उपयाच्ञायाम्'। अर्द्यते[7] याच्यत इत्यर्दना। 'अर्द गतौ याचने च'। याचनानामानि॥ ६॥

[1] अभिपङ्ग· K6.　[2] सवेदन Pt2　[3] समन्ताद् मूर्च्छन व्याप्ति Pt2　[4] अभितो व्याप्तिः J2　[5] व्यापन° K5.　[6] याच्ञायाम् K3, K6　[7] अर्दन Pt2

(विव.) आक्रोशनमभीषङ्गः। दुरात्मनानेन गर्हितं कर्माचरितमित्यादिरूपेण निष्ठुरभाषणस्य नामनी। आक्रोशन्ति जना अनेनेत्याक्रोशनम्। 'क्रुश आह्वाने रोदने च'। करणे ल्युट् (३. ३. ११५)॥ आभिमुख्येन शापवचनानां सञ्जनं करणमभीषङ्गः। 'षञ्ज सङ्गे'[1]। अभिपूर्व आक्रोशने। [2]'उपसर्गात् सुनोति...' इति (८. ३. ६५) षत्वम्। 'उपसर्गस्य घञि...' (६. ३. १२२) इति दीर्घः॥ संवेदो वेदना न ना। [3]ययोः कयोश्चित् मिथः संप्रतिपत्तेर्नामनी इति केचित्। ज्ञानविशेषस्यानुभवस्य नामनी इति सर्वानन्दः[4]। 'विद ज्ञाने' इत्यतः संपूर्वाद् घञि (३. ३. १८) संवेदः॥ 'घट्टिवन्दिविदिभ्य उपसंख्यानम् (वा. ३. ३. १०७) इति युचि वेदना॥ न ना इति। पुंलिङ्गो न भवतीत्यर्थः। ल्युटि (३.३.११५) वेदनम्॥ संमूर्च्छनमभिव्याप्तिः। [5]धूमादीनामन्ततः प्रसरणस्य नामनी। समन्ततो मूर्च्छनं संमूर्च्छनम्। 'मूर्च्छा मोहसमुच्छ्राययोः'। ल्युट् (३. ३. ११५)। अभितः समन्ततो व्याप्तिः अभिव्याप्तिः। क्तिन् (वा. ३. ३. ९४)[6]॥ याच्ञा भिक्षार्थनार्दना। [7]दातारं प्रति स्वाभीष्टवस्तुविषयवाञ्छाविष्करणस्य नामानि। 'टुयाचृ याच्ञायाम्' इति धातोः 'यजयाच...' इत्यादिना (३. ३. ९०) नङ्प्रत्यये श्चुत्वेन च याच्ञा॥ 'भिक्ष याच्ञायाम्' इत्यस्माद् 'गुरोश्च हलः' (३. ३. १०३) इत्यकारप्रत्यये भिक्षा[8]। 'अर्थ उपयाच्ञायाम्' इति चौरादिकाद् युचि (३.३.१०७)[9] अर्थना॥ 'अर्द गतौ याचने च' इति धातोः 'हेतुमति च' (३. १.२६) इति चकारेण स्वार्थे णिच्प्रत्यये युचि च अर्दना॥ ब्रह्मवर्गोक्तताया अपि (पृ. ४६६) याच्ञायाः प्रागनुक्तपर्यायान्तरप्रदर्शनार्थं पुनरिहानुक्रमणमिति[10] ज्ञेयम्॥ ६॥

[1] घञ् (३ ३ १८), 'नोदात्त ' इति (७ ३ ३४) वृद्धयभाव [2] Tv gives the full Sūtra— उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम [3] एते वादिप्रतिवादिनो अन्ययोर्वा मिथ Tv [4] 'सवेदद्वयमनुभवे' इति मु ग्र (३ पृ ५४) [5] Gm3, Tv add सर्जरस° [6] 'क्तिनाबादिभ्यश्च वक्तव्य '. [7] वाचा कर्मणा वा परकीयवस्तुविषयवाञ्छा° Gm3, Tv [8] स्त्रियामप्रत्यय (३ ३ १०२) [9] 'ण्यासश्रन्थो युच् [10] मपौनरुक्त्यम् Tj1, Tj2

(पा ) आक्रोशनमभीषङ्ग । निर्भर्त्सननामनी । 'तिट्टट'[1] । सवेदो वेदना न ना । ज्ञाननामनी । 'तेलिवि' ।। समर्च्छनमभिव्याप्ति । सर्वत प्रसरणनामनी । 'शिलोच्चये मूर्च्छति मारुतस्य' इति (रघु २ ३४) ।। याञ्त्रा भिक्षार्थनार्दना । [2]याञ्त्रानामानि ।। ६ ।।

[1] B3 omits [2] याचना° B3, C1

**वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने ।**
**आप्रच्छनमथाम्नायः सप्रदायः क्षये क्षिया ।। ७ ।।**

(वि ) वर्धनमिति—[1]वर्ध्यते छिद्यत इति वर्धनम् । 'वर्ध छेदनपूरणयो ' । छिद्यत इति छेदनम् । 'छिदिर् द्वैधीकरणे' । छेदननामनी ।। [2]आनन्द्यत इत्यानन्दनम् । 'टुनदि समृद्धौ' । सभाज्यते प्रीयतेऽनेनेति सभाजनम् । 'सभाज [3]प्रीतिसवनयो ' । [4]आपृच्छ्यत इत्याप्रच्छनम् । 'प्रच्छ ज्ञीप्सायाम्' । सुहृदाद्यालिङ्गनसभाषणादिसुखावहस्य[5] नामानि ।। आम्नायते गुरुपारपर्येणाभ्यस्यत इत्याम्नाय । 'म्ना अभ्यासे' । सम्यक् सरहस्य [6]प्रदीयत इति सप्रदाय । 'डुदाञ् दाने'। गुरुपरपरायातस्य विद्यास्थानस्य नामनी ।। क्षीयत इति क्षय । क्षिया च । 'क्षि क्षये'[7] । आचारादिनाशस्य नामनी ।। ७ ।।

[1] वर्धो वधनम Pt2 [2] आनन्द Pt2 [3] प्रीतिदशन J2, प्रीतिदर्शनयो K5, K6 [4] आपृच्छा Pt2 [5] °ज यसुखस्य K5 [6] K6 adds अस्मै, शिष्याय J2 [7] 'क्षीष् हिंसायाम्' K4, K6

**(विव ) वर्धन छेदने । घटपटादिवस्तूना [1]शकलीकरणस्य नामनी । 'वर्ध छेदनपूरणयो ' इत्यत चौरादिकात् ल्युटि (३.३ ११५) वर्धनम् ।। 'छिदिर् द्वैधीकरणे' इत्यस्मात् छेदनम् । [2]वर्धनसाहचर्यात् प्रत्ययार्थवशेन च नपुसकत्वम् ।**

युच्प्रत्ययान्तत्वे तु शब्दद्वयस्यापि स्त्रीलिङ्गः। एवमुत्तरत्रापि तत्र तत्र प्रत्ययवशेन लिङ्गविशेषनिर्णयः कार्यः ॥ अथ द्वे—आप्रच्छनम्। [3]प्रयाणादिसमये सुहृद्बान्धवादीनामालिङ्गनसंलापादिसंजातसुखानुभवस्य[4] नामानि। 'टुनदि समृद्धौ' इति धातोः आङ्पूर्वात् ल्युटि (३. ३. ११५) आनन्दनम्। 'मत्रि गुप्तभाषणे' इत्यत आङ्पूर्वात् ल्युटि आमन्त्रणमिति केचित् पाठान्तरेण[5] व्याचक्रुः ॥ 'सभाज प्रीतिसेवनयोः' इत्यतः चौरादिकात् ल्युटि सभाजनम्। 'सभाजनायोपगतान् [6]मुनीन्द्रान्' इति रघुवंशे (१४. १८) प्रयोगः ॥ 'प्रच्छ ज्ञीप्सायाम्' इति धातुः आङ्पूर्व [7]आनन्दनार्थः। यथा—'आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्' इति कालिदासः (मेघ. १. १२)। ततो ल्युटि आप्रच्छनम् ॥ अथाम्नायः संप्रदायः। सद्गुरुपरंपरोपदेशप्राप्तस्य वेदव्याकरणादेः विद्यास्थानस्य नामनी। वेदमात्रेऽपि आम्नाय उक्तः। आम्नायते गुरुपारंपर्येणाभ्यस्यत इत्याम्नायः। 'म्ना अभ्यासे'। सम्यक् सरहस्यं शिष्याय प्रदीयत इति सप्रदायः। उभयत्रापि कर्मणि घञि (३. ३. १८) 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युगागमः। शब्दद्वयमपि [8]भावविहितघञन्तत्वेन सद्गुरुपरंपरागतसरहस्योपदेशमात्रवचनमिति केचित् ॥ क्षये क्षिया। क्षये आचारनाशलक्षणक्षयविशेषे क्षियाशब्दो वर्तत इत्यर्थः। अत एव 'क्षियाशीः प्रैषेषु तिङाकाङ्क्षम्' (८. २. १०४) इति सूत्रे काशिकाकारः (२, पृ. ४२०)—'क्षिया आचारभेदः,' धर्मव्यतिक्रम इति। 'क्षि क्षये' इत्यस्माद् 'एरच्' (३. ३. ५६)[9] क्षयः। 'क्षीष् हिंसायाम्'। 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इत्यङि क्षिया। एरचः पुलिङ्गविषयः। अङस्तु स्त्रीलिङ्गः। अतो विषयभेदाद् न बाध्यबाधकभावः। यथा बाधाबाध इति गणवृत्तावप्युक्तम्। [10]स्वय रथेन याति उपाध्यायं पदाति गमयति इत्याद्याचारभेदः क्षियेति। शब्दद्वयमपि [11]अपचयमात्रवचनमिति केचित् ॥ ७ ॥

[1] Tv adds अनेक° [2] B5, B6 omit वर्धन° [3] गमनादि Gm3
[4] समापण° for सलाप° Gm3, Tv [5] पाटान्तरमाहु Gm1, Gm3. [6] स दिव्यान् इति मु ग्र (पृ २८१) [7] साधो यामीत्यामन्त्रणेन सभाजय इति मल्लिनाथ
[8] घञ्प्रत्ययस्य भावार्थतया Tv [9] Gm3, Tv add 'क्षि क्षये' इत्यस्माद् अच्प्रत्यये क्षय.
[10] स्वयमोदन भुङ्क्ते, उपाध्याय सक्तून् पाययति Tv [11] नाशमात्रमिति Tj1, Tj2

(पा.) वर्धन छेदने। छेदननामनी। [1]'नरकुट'। अथ द्वे[2]—आप्रच्छनम्। यात्रादिषु [3]बन्धुमित्रादीनाम् अनुज्ञावाप्तिनामानि। 'आपृच्छस्व प्रियसखममुम्'

इति (मेघ १ १२)। अथाम्नाय सप्रदाय । वशपारपर्यनामनी ॥ क्षय क्षिया।[4] क्षयनामनी ॥ ७ ॥

[1] B3 omits [2] आमन्त्रण° B3, C1 [3] B3 omits मित्र [4] A1, C1 add भय भियेति पाठ—भीतिनामनी

ग्रहे ग्राहो वश· कान्तौ रक्षणस्त्राणे रणः क्वणे ।
व्यधो वेधे पचा पाके हवो हूतौ वरो वृतौ ॥ ८ ॥

(वि) ग्रह इति—[1]गृह्यत इति ग्रह । ग्राहश्च । 'ग्रह उपादान'। पत्राद्युपादानस्य नामनी ॥ [2]उश्यते काम्यत इति वश । 'वश कान्तौ'। काम्यत इति कान्ति । 'कमु कान्तौ'। इच्छानामनी॥ [3]रक्ष्यत इति रक्षण । [4]रक्ष इति वा पाठ[5]। त्रायत इति त्राणम् । 'त्रैङ पालने'। रक्षणस्य नामनी ॥ रण्यत[6] इति रण । 'रण शब्दे'। क्वणन क्वण । 'क्वण शब्दे'। वीणादिक्वाणनामनी॥ विध्यत इति व्यध । वेधश्च। 'व्यध ताडन' 'विध विधाने'। मणिमुक्तादिच्छिद्रक्रियानामनी॥ पच्यत इति पचा। पाकश्च। 'डुपचष् पाके'। शाकादिपक्तिनामनी[7]॥ हूयत इति हव । हूतिश्च। ह्वेञ स्पर्धायां शब्दे च'। आह्वानस्य नामनी ॥ व्रियत इति वर । वृतिश्च। 'वृञ् वरणे'। कन्यादिवरस्य[8] नामनी ॥ ८ ॥

[1] ग्रहण Pt2 [2] वशन Pt2 [3] रक्षण Pt2 [4] रक्षा J2 K2 [5] K2 K3 add रक्ष पालन [6] J2 adds शब्द्यत [7] पचन° K5 [8] °वरणस्य K4 K6

(विव) ग्रहे ग्राह । प्राप्तार्थस्य स्वीकरणस्य नामनी। 'ग्रह उपादाने' इति धातो भावार्थे 'ग्रहवृदृनिश्चिगमश्च' (३ ३ ५८) इत्यप्प्रत्यये ग्रह । घञि ग्राह ॥ वश कान्तौ। इच्छाया नामनी। 'वश कान्तौ'। कान्तिरिच्छा इति धातुवृत्तौ[1]। 'वशिरण्योरपसख्यानम्' (वा ३ ३ ५८) इत्यपि वश ॥ कर्मे स्त्रियां क्तिन्[2] (३ ३ ९४) कान्ति ॥ रक्षणस्त्राणे। रक्षणस्य नामनी। 'रक्ष पालने' इति धातो 'यजयाच ' इत्यादिना (३ ३ ९०) नङ्प्रत्यये रक्षण ॥ 'त्रैङ पालने' इत्यतो भावे ल्युटि त्राणम्॥ अत एव प्रत्ययवशाद नपुसकत्वम्॥ रण क्वणे। शब्दकरणस्य नामनी। 'रण शब्दे'। 'वशिरण्योरपसख्यानम्' (वा ३ ३ ५८) इत्यप्प्रत्यये रण ॥ 'क्वण शब्दे'। 'क्वणो वीणायां च' (३ ३ ६५) इत्यपि

क्वणः। घञि क्वाणः॥ व्यधो वेधे। मणिमुक्तादौ छिद्रकरणस्य नामनी। 'व्यध ताडने'। 'व्यधजपोरनुपसर्गे' (३. ३. ६१) इत्यपि व्यधः॥ 'विध विधाने' इत्यतो भावे घञि (३. ३. १८) वेधः॥ पचा पाके। ओदनपचनक्रियाया नामनी। 'डुपचष् पाके'। षिद्भिदादिभ्योऽङ्[3] (३. ३. १०४) पचा॥ घञि पाकः। पुलिङ्गः। 'स्थागापापचो भावे' (३. ३. ९५) इति क्तिनि पक्तिरपि॥ हवो हूतौ। आह्वानस्य नामनी। 'ह्वेञ् स्पर्धायां शब्दे च'। 'ह्वः संप्रसारणम्...' (३. ३. ७२) इत्यनुवृत्तौ 'भावेऽनुपसर्गस्य' (३. ३. ७५) इत्यपि हवः। स्त्रियां क्तिनि (३. ३. ९४) [4]यजादिसंप्रसारणे (६. १. १५) पूर्वरूपत्वे[5] (६. १. १०८) दीर्घे हूतिः। शब्दादिवर्गोक्ताया (१, पृ. १०६) अपि हूतेः पर्यायान्तरप्रदर्शनार्थमिहाभिधानम्[6]॥ वरो वृतौ। वृतिर्वरणम् इष्टवस्तुविषय. प्रार्थनाविशेषः। तत्र वरशब्दो वर्तते। 'वृञ् वरणे'। 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इति अप्प्रत्यये वरः। स्त्रियां क्तिनि वृतिः। अत्र सुभूतिचन्द्रः—वृतिर्ग्रामादिवेष्टनम्। तत्र वरशब्दो वर्तत इति। यस्तु प्रसन्नदेवताद्यनुग्रहलभ्यः पुत्रपश्वादिरूपो वरः सोऽत्र न विवक्षित, [7]भावार्थवचनशब्दप्रस्तावाद् वृतिशब्दस्य तत्र प्रयोगाभावाच्च॥ ८॥

[1] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते [2] 'आयादय ' (३ १ ३१) इति णिङभावे क्विन् इति भा दी (पृ ४४८); अनुनासिकस्य इति उपधाया दीर्घ [3] 'षिद्भिदादिभ्योऽङ्' [4] 'वचिस्वपियजादीनां किति' [5] 'संप्रसारणाच्च' [6] Tv adds इति ज्ञेयम् [7] भाववचनसमभिव्याहारात् Gm3, Tv

(पा) ग्रहो ग्राह। ग्रहणनामनी। 'ग्रहिच्'[1]॥ वश कान्तौ। अभिलाषनामनी। 'कोरिक'[1]॥ रक्षणस्त्राणे। रक्षा[2] त्राणे इति पाठान्तरम्। [3]रक्षणनामनी॥ रण क्वणे। ध्वनिनामनी॥ व्यधो वेधे। वेधननामनी। 'कोरसुट'॥ पचा पाके। पाकनामनी। अनुक्तम्—'मास्पाक स्यान्मासरचनम्'। मासपचननामनी॥ हवो हूतौ। आह्वाननामनी॥ वरो वृतौ। वरणनामनी॥ ८॥

[1] B3 omits [2] रक्षेति B3, C1 [3] रक्ष° A1

**ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ।**
**स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे॥ ९॥**

(वि) ओप इति—[1]उप्यत इति ओप । 'उप दाहे'। [2]प्लुष्यत इति प्लोप.। 'प्लुष दाहे'[3]। दाहस्य नामनी ।। नीयते प्राप्यते नयः। नायश्च। 'णीञ् प्रापणे'। प्राप्तिनामनी ।। जिनाति वयोहानिमापद्यते ययेति ज्यानि.। 'ज्या वयोहानौ'। जीर्यत इति जीर्णि.। 'जॄष् वयोहानौ'। वयोहानेर्नामनी ।। भ्रमण भ्रम । भ्रमिश्च। 'भ्रमु अनवस्थाने'। भ्रान्तिनामनी ।। स्फाय्यत इति स्फातिः। 'स्फायी वृद्धौ'।। वर्धत इति वृद्धि.। 'वृधु वृद्धौ'। वृद्धिनामनी ।। [4]प्रथ्यत इति प्रथा। 'प्रथ [5]प्रख्याने'। ख्यायत इति ख्याति.। 'ख्या प्रकथने'। [6]प्रख्याति-नामनी ।। स्पृश्यत इति स्पृष्टि.। 'स्पृश सस्पर्शने'। पृष्टिरिति वा पाठः। तदा 'पृची मपर्के' इति धातु.। पृच्यत इति पृक्ति.। पूर्वोक्त एव धातु । सपर्कस्य नामनी ।। स्नूयत इति स्नव । 'ष्णु प्रस्रवणे'। स्रूयत इति स्रव.[7]। 'स्रु गतौ'। जलादिस्रवणस्य नामनी ।। ६ ।।

[1] ओपण Pt2. [2] प्लोपण Pt2. [3] 'उप प्लुप दाहे' K5. [4] प्रथन Pt2. [5] ख्यापने K3, K6, ख्याने Pt2. [6] ख्याति° J2. [7] K5, K6 add स्रुतिश्च.

(विव.) ओषः प्लोषे। [1]वह्निसंयोगजस्य तृणादेर्भस्मीभावस्य नामनी। 'उष दाहे' 'प्लुष दाहे' इति धातुद्वयाद् घञ् (३.३.१८) क्रमेण ओषः प्लोषश्च। 'प्रुष दाहे' इति धातोः प्रोष इति रेफादिर्वा ।। नयो नाये। प्रापणस्य नामनी। 'णीञ् प्रापणे'। 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति बहुलग्रहणाद् अचि नयः (३.३.५६)। 'श्रिणीभुवोऽनुपसर्गे' (३.३.२४) इति घञि नायः ।। ज्यानि-र्जीर्णौ। [2]शरीरादेः कालविशेषापादितनिःसारत्वरूपावस्थाविशेषनामनी। 'ज्या वयोहानौ' इति धातोः 'ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः' (वा. ३. ३.९४) इति क्तिन्प्रत्ययापवादत्वेन निप्रत्यये ज्यानिः। 'जॄष् वयोहानौ'। क्तिनि 'ॠकारल्वा-दिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्' (वा. ८. २. ४४) इति नत्वे[3] जीर्णिः। शब्दद्वयमपि स्त्रीलिङ्गम् ।। भ्रमो भ्रमौ। भ्रमणरूपक्रियाविशेषस्य नामनी। 'भ्रमु अनवस्थाने'। भावे घञि नोदात्तोपदेशाद् (७. ३. ३४) इति वृद्धिप्रतिषेधे भ्रमः।। 'इक् कृष्यादिभ्य इति वक्तव्यम्' (वा. ३. ३. १०८) इति भावे स्त्रियामिक्-प्रत्यये भ्रमिः। वा ङीपि भ्रमी[4] च ।। स्फातिर्वृद्धौ। शरीरादीनामवयवोपचयस्य नामनी। 'स्फायी वृद्धौ' इत्यतः स्त्रियां क्तिनि 'लोपो व्योर्वलि' (६. १. ६६) इति यकारलोपे स्फातिः।। 'वृधु वृद्धौ' इत्यतो क्तिनि वृद्धिः। द्वयमपि प्रत्ययतः

स्त्रीलिङ्गम् ॥ प्रथा ख्यातौ । कुलशीलविद्याद्युत्कर्षजनितायाः प्रसिद्धेर्नामनी । 'प्रथ प्रख्याने' इति धातोः 'घटादयः षितः' (ग. सू.)[5] इति परिभाषया 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इत्यङि प्रथा ॥ 'ख्या प्रकथने' इत्यतः स्त्रियां क्तिनि ख्यातिः ॥ स्पृष्टिः पृक्तौ । हस्तादिना घटादिस्पर्शनस्य नामनी । 'स्पृश संस्पर्शने'। स्त्रियां क्तिनि व्रश्चेत्यादिना[6] (८. २. ३६) षत्वे स्पृष्टिः । 'पृची संपर्के' इति धातोः स्त्रियां क्तिनि (३. ३. ९४) पृक्तिः । प्रत्ययतो द्वावपि स्त्रीलिङ्गौ ॥ स्नवः स्रवे । अपक्वघटादेर्बहिर्भागे[7] जलादिप्रस्रवणस्य नामनी । 'ष्णु प्रस्रवणे' । 'स्रु [8]गतौ' । आभ्यां धातुभ्याम् 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्यये स्नवः स्रवश्च । बाहुलके घञि स्रावोऽप्यस्ति ॥ ९ ॥

[1] वह्निसबन्धजननेन काष्ठादे Gm1, Tv [2] शरीरस्य वा अन्यस्य वा घटपटादे Tj1, Tj2. [3] B6 adds रदाभ्यामिति, णत्वे च [4] तत्र भ्रमो गौरादिरपि इति टीस (पृ ५६). [5] कौमुदी (पृ ३५६) [6] 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशाष' [7] अध पार्श्वभागे वा Gm3, Tv [8] स्रवणे B5, B6

(पा) ओष प्लोषे । [1]दाहनामनी ॥ नयो [2]नाये । नीतिनामनी ॥ ज्यानिर्जीणा । जरानामनी ॥ भ्रमो भ्रमौ । भ्रमणनामनी ॥ अत्र भ्रमिशब्दस्य [3]पूर्वापरसाहचर्यं लिङ्गज्ञापकम् । वैजयन्त्या तु (पृ १९२, श्लो १०) 'चक्रावर्तो भ्रमो भ्रान्तिर्भ्रमिर्घूर्णिश्च घूर्णनम्' इति स्वपर्यायसाहचर्यं एव । स्फातिर्वृद्धौ । [4]शरीराद्यभिवृद्धिनामनी ॥ प्रथा ख्यातौ । [5]प्रसिद्धिनामनी ॥ स्पृष्टि पृक्तौ । स्पर्शननामनी ॥ स्नव स्रवे । स्रवणनामनी ॥ ९ ॥

[1] दहन° B3, C1. [2] न्याये A1 [3] पूर्वपर्याय° A1. [4] शरीरोपचय° B3. [5] प्रसिद्ध° A1.

एधा समृद्धौ स्फरणं स्फुरणे प्रमितौ प्रमा ।
प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे ॥ १० ॥

(वि) एधेति—एध्यत इत्येधा[1] । 'एध वृद्धौ' । समृध्यत इति समृद्धि । 'ऋधु वृद्धौ' । समृद्धिनामनी ॥ स्फर्यत इति स्फरणम् । स्फुर्यत इति स्फुरणम् । 'स्फर स्फुर स्फुरणे'[2] । [3]स्फुरणेति वा पाठ । ओष्ठादिचलनस्य नामनी ॥ प्रमीयते

सम्यगनुभूयत[4] इति प्रमिति । प्रमा च । 'माङ माने'। सम्यगनुभवस्य[5] नामनी ।। प्रसूयत इति प्रसूति. । प्रसवश्च । 'षूङ प्राणिप्रसवे'[6]। 'षू प्रेरणे' इति वा धातु.। प्राणिप्रसवस्य नामनी ।। श्च्युत्यत[7] इति श्च्योत. । 'श्च्युतिर् क्षरणे'। प्रकर्षेण जिघर्त्यनेनेति प्राघार । 'घृ क्षरणदीप्त्यो.'। क्षरणस्य नामनी ।। क्लाम्यत इति क्लमथ[8]। क्लमश्च । 'क्लमु ग्लानौ'। क्लान्तिनामनी ।। १० ।।

[1] विधा इति भानुजीदीक्षितीये पाठ । तदा विपूर्वाद् 'डुधाञ् धारणपोषणयो' इत्यत 'आतश्चोपसर्गे' (३ ३ १०६) इत्यङ [2] चलने K3, K6. [3] 'स्वार्थण्यन्ताद्युच् (३ ३ १०७)। सज्ञापूर्वकत्वान्न गुण' इति भा दी (पृ. ४४६). [4] अनुमीयते K5. [5] अनुभूतसाधनस्य J2, K6. [6] प्राणिगर्भविमोचने K6. [7] श्च्योत्यते K6. [8] क्लमथु J2, K2.

(विव.) एधा समृद्धौ। धनधान्याद्यतिशयस्य नामनी। 'एध वृद्धौ' इत्यतः 'गुरोश्च हलः' (३. ३. १०३) इत्यकारप्रत्यये एधा । सुभूतिचन्द्रस्तु— विपूर्वाद् दधातेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङि विधेति पाठान्तरेण व्याख्यातवान्[1]। तत्संवादत्वेन [2]'विधार्नाद्धप्रकारेषु गजान्ने वेतने विधा' इति रुद्राभिधानमप्युदाजहार ।

'उत्क्षिप्तहस्ततलदत्तविधानपिण्ड-
स्नेहस्रुतिस्नपितबाहुरिभाधिराजम्' ।

इति माघकाव्ये (शिशु. ५. ५१) प्रयोगः ।। 'ऋधु वृद्धौ'। संपूर्वस्य क्तिनि समृद्धिः ।। स्फरणं स्फुरणे । ओष्ठनयनपक्ष्मादिस्पन्दनस्य[3] नामनी । 'स्फर स्फुर स्फुरणे'। तत्र प्रथमाद्धातोः कण्ठ्यस्वरोपधात् ल्युटि स्फरणम्। द्वितीयाद्[4] ओष्ठ्यस्वरोपधात् कुटादित्वेन (१.२.१) गुणप्रतिषेधे ल्युटि स्फुरणम्। स्पन्दनशब्दोऽप्यत्र[5] ।। प्रमितौ · प्रमा। सम्यगनुभवस्य नामनी। 'माङ माने' इत्यस्माद् धातोः सोपसर्गाद् भावे क्तिनि 'द्यतिस्यतिमास्था . . .' इत्यादिना (७. ४. ४०) धातोरित्वे क्तिनि प्रमितिः ।। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङि प्रमा ।। प्रसूतिः प्रसवे । गर्भविमोचनस्य नामनी । [6]'षूङ प्राणिप्रसवे' 'षू प्रेरणे'[7] इति वा धातोः स्त्रियां क्तिनि प्रसूतिः ।। 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्यये प्रसवः ।। श्च्योते प्राघारः । [8]घटादिगतस्य [9]क्षीरघृतादेरुपरिप्रदेशादुच्चलनेनाधोदेशे क्षरणस्य नामनी।

'श्च्युतिर् क्षरणे'। घञि श्च्योतः ॥ 'घृ क्षरणदीप्त्योः' इत्यस्मात् प्रपूर्वाद् घञि 'उपसर्गस्य घञि...' (६. ३. १२२) इति दीर्घे प्राघारः ॥ क्लमथः क्लमे। व्यायामादिना मनसः निःसहत्वनामनी। 'क्लमु ग्लानौ'। [10]औणादिकोऽथच्-प्रत्ययः[11] ॥ घञि क्लमः[12] (७. ३. ३४) ॥ १० ॥

[1] व्याख्याय Gm1, Tv. [2] विधानार्थे Tv. [3] चलनस्य Tj1, Tj2. [4] उकारोपधात् B6, Tv. [5] Tv adds केचित् स्पन्दने इति पठित्वा 'स्पन्द किंचिच्चलने' इति धातो स्पन्दनमित्याहु [6] °गर्भविमोचने Tv. [7] प्रसवैश्वर्ययो Tv [8] पूर्णस्य Tv. [9] जल° Tj1, Tj2. [10] शमादिभ्यो ऽथच् इति भा दी (पृ ४५०). [11] उकारान्तस्त्वपपाठ Tv. [12] 'नोदात्तोपदेश. .' इति न वृद्धि.

(पा) एधा समृद्धौ। [1]धनधान्यसमृद्धिनामनी। 'एधा ऋद्धिप्रकारेषु गजाना वेतने विधा' इति रुद्र.[2] ॥ [3]स्फुलन स्फुरणे। स्फुरणनामनी। [4]'निगनिगसेरसुट'। 'स्फर सचलने' इति केषाचित् सकारसहितफकारोपधम् ॥ प्रमितौ प्रमा। यथार्थज्ञाननामनी[5] ॥ प्रसूति प्रसवे। गर्भमोचननामनी ॥ श्च्योत प्राघारे। धारानामनी। 'व्यक्तस्कन्धकवन्धवन्धरधिरप्राघार[6]निष्यन्दिना' इति भवभति. (मालती. ५ २६) ॥ क्लमथ. क्लमे। ग्लानिनामनी ॥ १० ॥

[1] धनादि° B3. [2] 'विधा गजान्ने ऋद्धौ च' इति मेदिनी (भा दी पृ ४४६). [3] स्फुरणम् A1. [4] B3 omits. [5] प्रमाणसाध्यनामनी A1 [6] °प्राग्भार° इति निर्णयसा मु ग्र

उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्रये।
क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ॥ ११ ॥

(वि) उत्कर्ष इति—[1]उत्कृष्यतेऽनिशय्यत इति उत्कर्ष। 'कृष विलेखने'। अतिशय्यत[2] इत्यतिशय.। 'शीङ् स्वप्ने'। [3]आभिमुख्यनामनी ॥ [4]सधीयत इति सधि.। 'डुधाञ् धारणपोषणयो'। श्लिष्यते सवध्यत इति श्लेष। 'श्लिष आलिङ्गने'। सवन्धनामनी ॥ [5]विसीयत इति विषय.। 'षिञ् वन्धने'। आ समन्तात् [6]श्रीयत इत्याश्रय.। 'श्रिञ् सेवायाम्'। स्थानस्य नामनी ॥ क्षिप्यत इति क्षिपा। क्षेपण च। 'क्षिप प्रेरणे'। क्षेपणस्य नामनी ॥ गीर्यत इति गीर्णि.। गिरिश्च। 'गॄ निगरणे'। निगरणस्य नामनी ॥ गूर्यत इति गुरणम्[7]। 'गुरी

उद्यमने'। उद्यम्यत इत्युद्यम'। 'यम उपरमे'। उपसर्गवशाद् धातोरुद्योगार्थः। उद्योगस्य नामनी ।। ११ ।।

[1] उद् ऊर्ध्वं कर्षणम् Pt2. [2] अतिशयनम् Pt2; अतिशयित K6. [3] आधिक्य° J2, K3. [4] सधान Pt2. [5] विशेषेण सीयन्ते वस्तून्यत्रेति Pt2. [6] श्रयते K6. [7] गूरणमिति वा पाठ K3, K4.

(विव.) उत्कर्षोऽतिशये। [1]विद्याशौर्यधनादीनां पराकाष्ठाविश्रान्तेर्नामनी। 'कृष विलेखने' इत्यतः उत्पूर्वाद् घञि (३. ३. १८) उत्कर्षः।। 'शीङ् स्वप्ने' इत्यतः सोपसर्गादेरचि (३. ३. ५६) अतिशयः।। संधिः श्लेषे। संबन्धस्य नामनी। संपूर्वाद् दधातेः 'उपसर्गे घोः किः' (३. ३. ९२) इति किप्रत्यये [2]आकारलोपे च संधिः।। 'श्लिष आलिङ्गने' इत्यतो घञि श्लेषः।। विषय आश्रये। आलम्बनस्य नामनी। यथा घटादिविषयं ज्ञानं संग्रामाश्रयोऽयमभिनिवेश इति विशेषेण सीयते बन्ध इव तिष्ठत्यत्रेति विषयः। 'षिञ् बन्धने'। [3]अधिकरणे 'एरच्' (३. ३. ५६)। 'परिनिविभ्यः सेवसितसय...' इत्यादिना (८. ३. ७०) षत्वम्। 'विषयो गोचरे देशे रूपादौ नित्यसेविते' इत्यजयः ।।आ समन्तात् श्रीयत इत्याश्रयः। 'श्रिञ् सेवायाम्'।'एरच्' (३. ३. ५६)। सर्वानन्दस्तु (पृ. ५७) 'शीङ् स्वप्ने' इति धातोर्विपूर्वाद् एरचि विशयः, आशय इति शब्दद्वयमपि तालव्योष्ममध्यं रेफरहितं चाह। यथा—आमाशयः, पक्वाशयः, जलाशय इति।। क्षिपायां क्षेपणम्। प्रेरणाया नामनी। 'क्षिप प्रेरणे'। भिदादित्वाद् अङि (३. ३. १०४) क्षिपा। ल्युटि क्षेपणम्।। गीर्णिर्गिरौ। निगरणस्य नामनी। 'गॄ निगरणे' इत्यतः क्तिन्प्रत्यये (३. ३. ९४) ऋत इकारादेशे (७. १. १००) 'ऋकारल्वादिभ्यः क्तिन् निष्ठावद्भवति' (वा. ८. २. ४४) इति वक्तव्यान्निष्ठावद्भावेन तकारस्य नत्वे [4]गीर्णिः।। 'इक् कृष्यादिभ्यः' (वा. ३. ३. १०८) इति इक्प्रत्यये गिरिः। शेषे— 'स्यादुद्गिरणमुद्गिरौ'। 'टुवमु उद्गिरणे' इति धातुनिर्देशाद् उद्गिरणशब्दः साधुः। तथा च निगरणावगरणादावस्त्येव गुणः।। गुरणमुद्यमे।[5] ताडनादिहेतोर्लगुडादेरुद्यमनस्य नामनी। 'गुरी उद्यमने'। ल्युटि कुटादित्वाद् (१. २. १) गुणाभावे गुरणम्। 'यमः समुपनिविषु च' (३. ३. ६३) इति नियमाद् उत्पूर्वाद् यमिधातोरप्प्रत्ययो नास्त्येव। किंतु 'हलश्च' (३. ३. १२१) इति घञा भाव्यम्। तथापि 'गुरी उद्यमे' इति धातुनिर्देशसामर्थ्याद्युद्यमशब्दः साधुः।

**चौरादिकात्तु 'गुरी उद्यमे' इति धातोर्युचि (३. ३. १०७) गोरणा । ल्युटि गोरणं च ॥ ११ ॥**

[1] विद्यागुणादीना Tv [2] 'आतो लोप इटि च' [3] 'एरच्' इति सूत्रे अकर्तरि सज्ञाया भावे इत्येवानुवृत्ते भावे इत्येव सुवचम् । 'भावप्रत्ययानामेव पूर्वापरयोर्दर्शनेन अधिकरणार्थस्यानौचित्यात् । ल्युट्प्रसङ्गाच्च' इति भा दी (पृ ४५०) [4] 'हलि च' इति दीर्घ [5] ताडनादिसाधन" K5, K6. [6] Tv adds 'गुरणे गोरण न ना'। स्त्रीनपुसकयोरित्यर्थ

(पा ) उत्कर्षोऽतिशये। अतिशयनामनी । [1]प्राग्भारोऽपि। 'प्राग्भारोऽतिशय स्मृत ' इत्यस्मिन्नर्थे हलायुध [2] ॥ सधि श्लेषे । [3]सयोगनामनी । [4]सभेदसनिपातसश्लेषादीनि अस्मिन्नर्थे इति वैजयन्ती (पृ १६४, श्लो २६) ॥ विषय आश्रये । [5]नित्यसेवितनिद्राहारादीना नामनी । 'विषयो गोचरे देशे रूपादौ नित्यसेविते' इत्यजयकोश ॥ क्षिपाया क्षेपणम् । प्रेरणनामनी । 'नूकुट' ॥ गीर्णिर्गिरौ । गिलननामनी । 'मृगुट' ॥ [6]गुरणमुद्यमे । उद्यमननामनी । 'येत्तुट' ॥ ११ ॥

[1] A1 omits [2] हलायुधकोशे न दृश्यते । वैजयन्त्या तु 'प्राग्भारोऽतिशयो भर ' (पृ १६२, श्लो ३) इति दृश्यते [3] कूट° A1 [4] 'सभेद सनिपातसश्लेषौ' C1, मुद्रितग्रन्थे च [5] B3 omits निद्राहारादीना [6] गूरणम् A1.

**उन्नाय उन्नये श्रायः श्रयणे जयने जयः ।**
**निगादो निगदे मादो मद उद्वेग उद्भ्रमे ॥ १२ ॥**

(वि ) उन्नाय इति—(उद्) ऊर्ध्वं नीयत[1] इत्युन्नाय । उन्नयश्च । 'णीञ् प्रापणे'। [2]ऊर्ध्वनयनस्य वा उत्प्रेक्षाया वा नामनी ॥ श्रीयत इति श्राय । श्रयण च । 'श्रिञ् सेवायाम्'। सेवाया नामनी ॥ 'श्राव [3] श्रवणे' इति पाठे 'श्रु श्रवणे' इति धातु । श्रुतेर्नामिनी ॥ जीयत इति जयनम् । जयश्च । 'जि अभिभवे' इति प्रथमो[4] धातु । 'जि ज्य' इति द्वितीयो धातु । [5]पराभिभवस्य नामनी ॥ निगद्यत इति निगाद । निगदश्च । 'गद व्यक्ताया वाचि'। स्फुटकथनस्य नामनी ॥ माद्यत इति माद । मदश्च । 'मदी [6]हर्षे'। विद्याधनाधिवयनिबन्धनहर्षस्य नामनी ॥ उद्विज्यते ऊर्ध्वं चाल्यत इत्युद्वेग । 'ओविजी भयचलनयो.'। उद्भ्राम्यत इत्युद्भ्रम । 'भ्रमु चलने'। ऊर्ध्वचलनस्य नामनी ॥ १२ ॥

[1] ऊर्ध्वं नयन Pt2 [2] K2, K6 add अनुसरणस्य वा, ऊर्ध्वप्रेरणस्य K5 [3] श्रव K4 [4] K5 omits. [5] पराभवस्य K4, पराभवनस्य K5. [6] K2, K4, K5 add ग्लपनयो

(विव.) उन्नाय उन्नये। यस्य कस्यचिद् द्रव्यस्य[1] ऊर्ध्वदेशं प्रति प्रापणस्य नामनी। मुसलमुन्नयति। [2]ऊहस्य नामनी इत्यपरे। यथा—'भाविकार्यमुन्नयेत्'[3] इति। 'अवोदोर्नियः' (३. ३. २६) इति घञि उन्नायः। बाहुलकाद् एरचि (३.३.५६) उन्नयः॥ श्रायः श्रयणे। आश्रयस्य नामनी। 'श्रिञ् सेवायाम्'। 'श्रिणीभुवोऽनुपसर्गे' (३. ३. २४) इति घञि श्रायः। ल्युटि श्रयणम्॥ जयने जयः। सर्वोत्कर्षेण वृत्तेः पराभिभवनस्य नामनी। 'जि अभिभवने'। ल्युटि जयनम्। एरचि (३. ३. ५६) जयः। 'जि जये' इति वा॥ निगादो निगदे। व्यक्तभाषणस्य नामनी। 'गद व्यक्तायां वाचि' इत्यतो वेति वर्तमाने 'नौ गदनदपठस्वनः' (३. ३. ६४) इति पाक्षिके अप्प्रत्यये निगदः। पक्षे 'हलश्च' (३. ३. १२१) इति घञि निगादः॥ मादो मदे। [4]विद्याभिजनधनादिसमृद्धिजनितहर्षातिशयस्य नामनी। 'मदी हर्षे' इत्यतः 'सध मादस्थयोश्छन्दसि' (६. ३. ९६) इति सूत्रे घञ्प्रत्ययान्तत्वेन निर्देशाद् मादशब्दः साधुः[5]। 'मदोऽनुपसर्गे' (३.३.६७) इत्यप्प्रत्यये मदः॥ उद्वेग उद्भ्रमे। ऊर्ध्वचलनस्य नामनी इति सुबोधिनी। उद्भ्रमः चमत्कार इति [6]सर्वानन्दसुभूतिचन्द्रौ। अनवस्थितचित्तत्वमित्यपरे। 'ओविजी भयचलनयोः'। भावे घञ्। 'चजोः...' (७. ३. ५२) इति [7]कुत्वे गुणे च उद्वेगः॥ 'भ्रमु चलने' इत्यतो घञि भ्रमः[8]॥ १२॥

[1] Tv adds अधोदेशावस्थितस्य [2] तस्मात् सक्तुद्भनीय नापरमुन्नयते इत्याद्यूहस्य नामनी Gm3, Tv. [3] उन्नयते Tj1, Tj2 [4] Tv omits अभिजन° [5] 'क्वचिदपवाद' इति न्यायाद्वा घञ् इति भा दी (पृ ४५०) [6] उद्वेगद्वय चमत्कारे इति सर्वानन्द (पृ ५८) [7] 'चजो कु घिण्ण्यतो' इति कुत्वम् [8] 'नोदात्तोपदेशस्य मान्तस्याताचमे' इति न वृद्धि

(पा) उन्नाय उन्नये। [1]निमग्नादेरुद्धरणनामनी। [2]'पोडवुगापेट्टुट'॥ श्राय श्रयण। [3]श्रयणनामनी॥ जयने जय। विजयनामनी। 'गेलुचुटनु'। सर्वोत्कर्षनामापि स्यात्। [4]'सा जयति सरस्वती देवी'। 'स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः' इति नैषध. (२. १६)॥ निगादो निगदे। [5]व्यक्तोक्ति-

नामनी । 'पलुकुट' ।। मादो मदे । मदनामनी ।। उद्वेग उदभ्रमे । [6]उद्भ्रमनामनी । उव्वचेसुट' ।। १२ ।।

[1] A1 omits [2] B3 omits [3] आश्रयण° A1 [4] वासवदत्ता १ [5] °भावित° C1 [6] उदभ्रमण° C1

**विमर्दनं परिमलेऽभ्युपपत्तिरनुग्रहः ।**
**निग्रहस्तु निरोधः स्यादभियोगस्त्वभिग्रह. ।। १३ ।।**

(वि) विमर्दनमिति—[1]विमद्यत इति विमर्दनम् । 'मृद क्षोदे' । मिथ. परिमल्यत इति परिमल [2] । 'मल मल्ल धारणे' । द्रव्ययोरन्योन्यघट्टनस्य[3] नामनी ।। [4]अभ्युपपद्यत इत्यभ्युपपत्ति । 'पद गतौ' । अनुगृह्यते स्वीक्रियत इत्यनुग्रह । 'ग्रह उपादाने' । उपकारस्य नामनी ।। [5]नियमेन गृह्यत इति निग्रह । निरुध्यत इति निरोध । 'रुधिर् आवरण' । तद्विरुद्धस्यानुग्रहविरुद्धस्य[6] नामनी ।। (अभि) आभिमुख्येन युज्यत इत्यभियोग । 'युजिर् योगे' । आभिमुख्येन गृह्यत इत्यभिग्रह । 'ग्रह उपादाने' । आभिमुख्येनोद्यमनस्य नामनी ।। १३ ।।

[1] विशेषेण मर्दन Pt2 [2] परिमल्यते धायतऽनेनति Pt2 [3] °सघट्टनस्य K4
[4] अभ्युपपादन Pt2 [5] नियमनाय ग्रहण J2 Pt2 [6] K5 adds अपकारस्य

(विव) विमर्दन परिमल । कुङ्कुमकर्पूरादिद्रव्ययो परस्परसघट्टनस्य नामनी । 'मृद क्षोदे' । क्षोद सपेपणम् । भावे ल्युटि (३ ३ ११५) विमर्दनम् ।। 'मल मल्ल धारणे' इत्यतो भावे घञि (३ ३ १८) वृद्धिविधे सज्ञापूर्वकत्वात् 'सज्ञापूर्वको विधिरनित्य ' इति परिभाषया [1]वृद्धिरत्र न भवति ।। अभ्युपपत्तिरनुग्रह । [2]मन प्रसादपूर्वकस्य समाननाविशेषस्य नामनी । 'पद गतौ' । अभ्युपपूर्वोऽनुग्रहे वर्तते । तथा च—'रतिमभ्युपपत्तुमादरात्' [3]इति कालिदास (कु स ४ २५) । तत स्त्रिया क्तिनि अभ्युपपत्ति [4] ।। 'ग्रहवृदृनिश्चिगमश्च' (३ ३ ५८) इति गृह्णातेरनुपूर्वाद् अप्प्रत्यये अनुग्रह ।। निग्रहस्तु निरोध स्यात । अपकारकरणस्य नामनी । नियमनाय ग्रहण निग्रह । निपूर्वस्य गृह्णातेरप् (३. ३ ५८) ।। नितरा रोध [5] निरोध । विशेषेण रोधो विरोध इति केचित् पठन्ति । सुबोधिनीकारस्तु—'निग्रहस्तद्विरुद्ध स्यात्', तद्विरुद्धोऽनुग्रहविरुद्धोऽपकारक इति व्याचष्ट ।।

अभियोगस्त्वभिग्रहः। अपचिकीर्षया प्रबलेन दुर्बलस्याक्रमणम् अभियोगः[6] इति सुभूतिचन्द्रः। अभियोगादिद्वयम् उद्योगे वर्तत इति सर्वानन्दः (पृ. ५६)। बहुश्रुतत्वादिना जातस्योत्कर्षस्य[7] नामनी इति भोजराजः[8]। 'अभियुक्ताः पुनरेवमाहुः' इति प्रयोगश्च ॥ १३ ॥

[1] 'अत उपधाया' (७ २ ११६) इति वृद्धि [2] Gm3, Tv add दानमानादि पूर्वक° [3] आतुराम् इति मुद्रितग्रन्थे [4] 'खरि च' [5] 'रुधिर् आवरणे' घञ् [6] अभिपूर्वस्य 'युजिर् योगे' इति धातो घञ्, गृह्णाते अप् (३ ३ ५८) अभिग्रह [7] परिचयातिशयस्य Gm1, Tv [8] नाचिराज Tj1, Tj2

(पा.) विमर्दन परिमल। [1]कुङ्कुमचन्दनादिभि समर्दननामनी। [2]कस्तूरिकादे पेपणनामापि॥ अभ्युपपत्तिरनुग्रह। अनुग्रहनामनी॥ निग्रहस्तु निरोधः स्यात्। निग्रहनामनी॥ अभियोगस्त्वभिग्रह। अभिगम्याक्रमनामनी[3]। 'अभिपूर्वौ ग्रहियुजी अभिगम्यान्क्रमे स्मृतौ' इति उपसर्गमञ्जरी। अनुक्तम्— 'परस्पर स्यादन्योन्यमितरेतरमित्यपि'। परस्परनामनी[4]। एते अमन्ते। [5]इमे सख्यौ परस्पर प्रयच्छत। इमा सख्य परस्पराद् बिभ्यति। शाकटायनमते पुलिङ्गैकवचने स्याताम्। इमे सख्यौ परस्परस्ते प्रयच्छत। इमा. सख्य. परस्पराद् बिभ्यति॥ १३॥

[1] B3 omits कुङ्कुम° [2] कस्तूरिका विल्वमध्ये निक्षिप्य A1 [3] °आक्रमण° B3, C1 [4] A1 adds 'तमलो तमरु अनुट'. [5] B3 omits the four lines.

**मुष्टिबन्धस्तु संग्राहो डिम्बे डमरविप्लवौ।**
**बन्धनं प्रसितिश्चारः स्पर्शः स्प्रष्टोपतप्तरि॥ १४॥**

(वि) मुष्टीति—मुष्टेर्बन्ध मुष्टिबन्ध[1]। सगृह्यते मुष्टिरत्रेति सग्राह। 'ग्रह उपादाने'। मल्लयोरन्योन्यमुष्टिबन्धनस्य नामनी॥ डीयते जनोऽनेनेति डिम्ब। 'डीङ विहायसा गतौ'। दाम्यत इति डमर। 'दमु उपशमे'[3]। विप्लाव्यते [4]विद्राव्यते जनोऽनेनेति विप्लव। 'प्लुङ गतौ'। उपद्रवनामानि॥ बध्यत इति बन्धनम्। 'बन्ध बन्धने'। प्रसीयते [5]बध्यत इति प्रसिति। 'षिञ् बन्धने'। चरति मन्दमनेनेति चार। 'चर गतौ'। बन्धनस्य नामानि॥ स्पृशत्युपतापयतीति

स्पर्श । स्प्रष्टा च । 'स्पृश उपतापे'। उपतापयतीति उपतप्ता । 'तप सताप'।
[6]उपतापकारिणो वैर्यादर्नामानि ॥ १४ ॥

[1] J2 K6 omit　[2] K3 K4 omit विहायसा　[3] उपशमन K3 K4 K6
[4] द्राव्यते K4　[5] पीडयत K4 K6　[6] स्वारयति उपतापयति स्वार । स्वृ शब्दो पतापयो ' K2 K4, K6

(विव) मुष्टिबन्धस्तु सग्राह । सगृह्यत इति कर्मणि घञन्तत्वेन फलकस्य मुष्टिग्राह्यो भाग क्षत्रियवर्गे (पृ ५३७) सग्राह उक्त । इह तु सगृह्यन्ते सक्षिप्यन्तेऽङ्गुलयोऽत्रेति अधिकरणव्युत्पत्त्या मल्लादेरङ्गुलिसनिवेशविशेष सग्राह उच्यत इत्यपौनरुक्तम्। [1]'समि मुष्टौ' (३ ३ ३६) इति घञ्। तथा च 'खटको मुष्टि स्त्रिया च सग्राह' इति बोपालितेन मुष्टिपर्यायत्वेन कथित । 'खादयन्त फलरस मुष्टिसग्राहपीडितम्' इति भट्टि[2] (भ का ७ ४०) ॥ डिम्बे डमरविप्लवौ । परचक्राक्रमणनिमित्तस्य [3]प्रजापलायनग्रामदाहधनधान्यादिनाशरूपस्य क्षोभस्य नामानि । डयन्ते पलायन्ते प्रजा अत्रेति डिम्ब[4]। 'डीङ् विहायसा गतौ'। अतो डिम्बप्रत्यये टिलोपे च डिम्ब इति पवर्गतृतीयोपध । अस्मादेव धातो डमरप्रत्यये पूर्ववत् टिलोपे च डमर[5]॥ स्वदेश विहाय प्लव पलायन विप्लव । 'प्लुङ् गतौ'। 'ऋदोरप्' (३ ३ ५७) ॥ बन्धन प्रसितिश्चार । येन निगडादिना बध्यते तत्र बन्धनादित्रयमिति टीकासर्वस्वकारेण व्याख्याय चारशब्दस्य बन्धनवचनत्वे 'बन्धापसर्पयोश्चार' इति रुद्राभिधान दर्शितम् (पृ ५६)। अपरे तु 'समे तूद्दानबन्धने' इति प्रागुक्तस्यैव (पृ ४६६) बन्धनस्य पर्यायान्तरप्रदर्शनमित्याहु । 'इद किल तस्याश्चारजनदु सचार चारागारम्' इति ययातिचरितनाटके प्रयोगश्च । चारागार बन्धनशालेत्यर्थ ॥ 'षिञ् बन्धने'। स्त्रिया क्तिनि प्रसिति ॥ मन्द चरत्यनेनेति चार । 'चर गतौ'। करणे घञ्। चारा गूढचारिण सन्त्यत्रेति वा। अर्शआद्यच् (५ २ १२७) ॥ स्पर्श स्प्रष्टोपतप्तरि। उपतापजनकरोगस्य नामानि। स्पृशति उपताप जनयतीति स्पर्श । 'स्पृश उपतापे'। 'पदरुजविशस्पृशो घञ्' (३ ३ १६) इत्यत्र 'स्पृश उपताप इति वक्तव्यम्' इति[6] वचनात् कर्तरि घञ्। 'रुजायां स्पर्शके स्पर्शो दानस्पर्शनयोरपि' इति रुद्र । वासरूपविधिना (३ १ ९४) च तृच्प्रत्यये 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (६ १ ५९) इत्यमागमे स्प्रष्टा ॥ उपपूर्वात् तपते तृचि (३ १ १३३) उपतप्ता ।

अत्र शेषकारः—'स्पर्ष्टा च स्वरिता स्वर्ता' इति स्पृशेरेव तृचि अमागमाभावपक्षे गुणे सति स्पर्ष्टा। 'स्वृ शब्दोपतापयोः' इत्यस्मात् कर्तरि तृचि 'स्वरतिसूतिसूयति...' इत्यादिना (७ २. ४४) इडागमस्य वैकल्पिकत्वात् स्वरिता स्वर्ता च इति रूपद्वयम्। केचित्तु—पूर्ववाक्ये बन्धनादिपदद्वयमेव पर्यायत्वेन व्याख्याय, समनन्तरपद स्पार इति पठित्वा तदादिचतुष्कमपि उपतापजनकरोगवाचकमाहुः। तत एव धातोः स्वार्थण्यन्ताद् अच्प्रत्यये स्पार इति निर्ब्रुवते। अपरे तु—'बन्धन प्रसिति. स्पर्श. स्परस्प्रष्टोपतप्तरि' इति पठित्वा स्परतेः पचाद्यचि स्पर इत्याहुः ॥ १४ ॥

[1] Tv adds सपूर्वस्य गृह्णाते [2] भट्टिकाव्ये प्रयोग Tv [3] प्रजापरिपालनधर्मनाशादिरूपक्षोभस्य Tv [4] डयन विद्रवो डिम्ब, 'डीङ् गतौ' इति स्वामी, डिम्बनम। 'डि विनोदे'। घञ इति भा दी [5] डयन डमर इति स्वामी, 'डम' इति शब्दस्य राणम्। 'रा दाने'। बाहुलकात घञर्थे क इति भा दी [6] वा ३ ३ १६ [7] 'वासरूपो ऽस्त्रियाम'.

(पा) मुष्टिवन्धस्तु सग्राह। मुष्टिवन्ध सग्राह स्यात्। [1]'अक्लीबौ मुष्टिमुस्तू द्वौ सग्राहो [2]मुचुटि स्त्रियाम्' इति मुष्टिमात्रे वैजयन्ती (पृ १७६, श्लो ७६)॥ डिम्ब डमरविप्लवौ। मुष्टिप्रहारादीना नामानि। [3]'पिडिकिटिपोट्लु'॥ 'उपलिङ्गमुपद्रव'। एते द्वे च॥ वन्धन प्रसतिश्चार। वन्धननामानि। 'बन्धोपसर्पयोश्चार' इति रुद्र॥ स्पर्श स्प्रष्टोपतप्तरि। रागनामानि। 'रुजाया स्पर्शके स्पर्शो दानस्पर्शनयोरपि' इति रुद्र॥ १४॥

[1] अस्त्रिया A1, C1 [2] मुचिटु A1 [3] B3 omits.

**निकारो विप्रकारः स्यादाकारस्त्विङ्ग इङ्गितम्।**
**परिणामो विकारो द्वे समे विकृतिविक्रिये॥ १५॥**

(वि) निकार इति—[1]निकृष्ट करण निकार। [2]विरुद्धप्रकारेण करण विप्रकार। [3]खलीकरणस्य नामनी॥ आक्रियते आविष्क्रियतेऽभिप्रायोऽनेनेत्याकार। 'डुकृञ् करणे'। [4]इङ्गति जानाति निगूढमभिप्रायमनेनेति इङ्गितम्। इङ्गश्च। 'इगि गतौ'। चेष्टितस्य नामानि॥ [5]परिणमति कालेनेति परिणाम।

'णमु प्रह्वत्वे [6]शब्दे च'। विक्रियत इति विकारः। विकृतिश्च। [7]विक्रिया च। विकारस्य नामानि ॥ १५ ॥

[1] निकृष्टकरण Pt2 [2] विरुद्धकरण Pt2 [3] दुर्जनीकरणस्य K4, K6 [4] इङ्ग्यते ज्ञायतेऽभिप्रायोऽनेन Pt2 [5] परिणति. कालेनान्यथेति Pt2 [6] J2, K2, K4 omit शब्दे च [7] विरुद्धा क्रिया Pt2

(विव.) निकारो विप्रकारः स्यात्। अकृत्यार्थकरणोद्घाटनेन दुर्जनीकरणस्य नामनी। अपकारमात्रस्य नामनी इत्यपरे। निकृष्टं करणं निकारः। विरुद्धप्रकारेण करणं विप्रकारः। भावे घञ्[1] (३. ३. १८) ॥ आकारस्त्विङ्ग इङ्गितम्। यद्यप्यत्र, [2]'आकारैरिङ्गितैर्गत्या ज्ञायतेऽन्तर्गतं मनः' इति स्मृतौ (म. स्मृ. ८. २६); 'तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च' इत्यादिमहाकविप्रयोगे च (रघु. १. २०) इङ्गिताकारयोरस्त्येव भेदः। आलंकारिका अप्याहुः[3]—'आकारशब्दस्य द्वावर्थौ, इङ्गितम् आकृतिश्च' इति। अत एव वक्ष्यति—'आकाराविङ्गिताकृती'(३. ३. १६२) इति। तथा चात्र इङ्गितपर्यायेणोक्त इति। इङ्गति जानाति गूढमर्थमनेनेति इङ्गः। 'इगि गतौ'। गतिर्ज्ञानम्। करणे घञ् ॥ [4]'नपुंसके भावे क्तः' (३. ३. ११४) इति क्तप्रत्यये इङ्गितम्। उपचारात् करणे तस्य वृत्तिः ॥ परिणामो विकारे। पूर्वरूपपरित्यागेन रूपान्तरापत्तिलक्षणे विकारविशेषे परिणामशब्दः स्यात्। यथा क्षीरस्य परिणामो दधि। मृत्पिण्डस्य घटः। काष्ठस्य भस्म इत्यादि। 'णम प्रह्वत्वे शब्दे च' इत्यस्मात् परिपूर्वात् भावे घञि 'उपसर्गादसमासेऽपि ...' (८. ४. १४) इति णत्वे परिणामः[5]। 'षोडशकश्च विकारः' (साङ्ख्य. ३) इत्यादावुपचाराद् भाववचनयोरपि परिणामविकारशब्दयोः प्रयोगः ॥ द्वे समे विकृतिविक्रिये। परिणामरूपस्यान्यस्य वा प्रकृतेरन्यथात्वमात्रस्य नामनी। यथा—भ्रूविकृतिः, स्वरविक्रिया इत्यादि। स्त्रियां क्तिनि (३. ३. ९४) विकृतिः ॥ 'कृञः श च' (३. ३. १००) इति शप्रत्यये[6] विक्रिया। इमे द्वे उपपदेऽर्थतो लिङ्गतश्च समे तुल्ये इत्यर्थः ॥ १५ ॥

[1]'अचो ञ्णिति' (७ २ ११५) इति वृद्धि. [2] मनुस्मृतौ पूर्णश्लोकस्तु—'आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मन' इति. [3] Gm3, Tv add 'चेष्टा निगूढभावा च बोधिका कथितेङ्गितम्। भ्रुकुटीमुखरागादिराकार इति शब्द्यते' इति. [4] Tj1, Tj2 add अस्मादेव धातो.. [5] B5, B6 add

भावे घञि विकार [6] Tv adds सार्वधातुके यक् (३ १ ६७), 'रिङ शयग्लिङक्षु' (७ ४ २८) इति रिडादेशे च

(पा ) निकारो विप्रकार स्यात् । [1]दन्तनिष्पीडनादिजनितमुखविकारादि-नामनी ।। आकारस्त्विङ्ग इङ्गितम् । [2]भ्रुकुटिबन्धाद्यङ्गविकारनामनी ।। परिणामो विकार । प्रकृत्यन्यथाभावनामनी ।। द्वे—विक्रिये । अमार्गनामनी । 'अमार्गो विक्रिया स्त्रियाम्' इत्यमरमाला । अनुक्तम्—'भङ्गिस्तु व्याकृतिर्भवेत्' । पृथ-ग्प्रकारनामनी । [3]'वेरेवोक्पैनदि' ।। १५ ।।

[1] B3 omits °आदि°. [2] भ्रुकुट्यादि° B3, C1 [3] B3 omits

**अपहारस्त्वपचयः समाहारः समुच्चयः ।**
**प्रत्याहार उपादानं विहारस्तु परिक्रमः ।। १६ ।।**

(वि ) अपहार इति—[1]अपह्रियत इत्यपहार । 'हृञ् हरणे' । अप-चीयते हीयत[2] इति अपचय । 'चिञ् चयने' । [3]हानेर्नामनी ।। एकत्र समाह्रियत इति समाहार[4] । एकत्र समुच्चीयत इति समुच्चय । अनेकस्य एकत्र समावेशस्य नामनी ।। प्रत्याह्रियत इति प्रत्याहार । उपादीयत इति उपादानम्[5] । 'डुदाञ् दाने' । अङ्गनादिविषयेभ्य इन्द्रियादीनामाकर्षणस्य नामनी ।। विशेषेण चित्त-माह्रियत इति [6]विहार । परित क्रम्यत इति परिक्रम । 'क्रमु पादविक्षेपे' । क्रीडासचारनामनी ।। १६ ।।

[1] अपहरण Pt2 [2] क्षीयते K5 [3] हरणादे J2 [4] समाहरण Pt2
[5] उप समीपे आदान Pt2 [6] विहरण Pt2

**(विव.)** अपहारस्त्वपचयः । पूर्वावस्थापेक्षया जातह्रस्वत्वस्य[1] नामनी । यथा—आचारापहारः, विद्यापहार इति । अपेत्युपसर्गो ह्रस्वार्थे । तथा हि—'अपान्यथात्वे विश्लेषे ह्रस्वोद्घाटनवारणे' इति उपसर्गवृत्तौ । ततश्च 'हृञ् हरणे' इत्यस्माद् भावे घञि (३. ३. १८) अपहारः ।। 'चिञ् चयने' इत्यस्माद् एरचि (३. ३. ५६) अपचयः ।। समाहारः समुच्चयः । अनेकेषामेकत्र समावेशस्य नामनी । यथा—स्मृतिसमुच्चयः, शब्दसमुच्चयः[2] इति ।। प्रत्याहार उपादानम् ।

इन्द्रियार्थेभ्यो[3] रूपादिभ्य आकृष्य [4]चक्षुरादीनामुपादानं स्वायत्तताकरणम्, स प्रत्याहार इत्युच्यते । प्रत्याहरणं प्रत्याहारः । भावे घञ् । दाञो ल्युटि (३. ३. ११५) उपादानम् ॥ विहारस्तु परिक्रमः । क्रीडार्थमुद्यानादौ संचरणस्य नामनी । 'क्रमु पादविक्षेपे' । भावे घञ् । 'नोदात्त...' इति (७. ३. ३४) न वृद्धिः ॥ १६ ॥

[1] °हीनत्वस्य Gm1, Tv　[2] Gm3, Tv add प्रमाणसमुच्चय, समा इत्युपसर्गद्वयाद् हृञ्धातो घञि समाहार, समुदिति उपसर्गद्वयात् चिनोते एरचि समुच्चय. [3] इन्द्रियार्थं B5, B6　[4] चक्षुरादिना B6

(पा) अपहारस्त्वपचय । [1]वहुन्यल्पाहरणनामनी । [2]'अधिकमदु अल्पमुदिनुट' ॥ समाहार समुच्चय । भिन्नानामेकत्र समावेशनामनी । 'वोरदिक्कुन गूडुट'[2] ॥ प्रत्याहार उपादानम् । प्रवहत्करणप्रत्याहरणनामनी[3] ॥ विहारस्तु परिक्रम । विलाससचारनामनी । [2]'नडपाडु' ॥ १६ ॥

[1] वहुलेऽप्यापहारनामनी A1, C1　[2] B3 omits　[3] °स्वाधीनकरण° C1

अभिहारोऽभिग्रहणं निर्हारोऽभ्यवकर्षणम् ।
अनुहारो ऽनुकारः स्यादर्थस्यापगमे व्ययः ॥ १७ ॥

(वि) अभिहार इति—आभिमुख्येन ह्रियत[1] इति अभिहार । आभिमुख्येन ग्रहणमभिग्रहणम्[2] । आभिमख्येन[3] ग्रहणस्य नामनी ॥ [4]निर्ह्रियत इति निर्हार । अभ्यवकृष्यत इति अभ्यवकर्षणम् । 'कृष विलेखने' । यन्त्रयुक्त्या शल्यादीना वहिष्करणस्य नामनी ॥ अनुह्रियत इत्यनुहार[5] । अनुक्रियत इत्यनुकार[6] । [7]रूपाद्यनुकरणस्य नामनी ॥ [8]व्यय्यते येन व्यय । 'व्यय वित्तसमुत्सर्गे' । अर्थापगमस्य[9] नामनी ॥ १७ ॥

[1] हरणम् 'हृञ् हरणे' Pt2　[2] J2, Pt2 add 'ग्रह उपादाने'　[3] अभिमुखहरणस्य K5　[4] नितरा हरण Pt2.　[5] Pt2 adds अनुपूर्वो हरति सादृश्ये　[6] अनुकरण, 'डुकृञ् करणे' Pt2　[7] K6 omits आदि　[8] व्ययति K4, K6　[9] °अपगमनस्य K4, K5

(विव) अभिहारोऽभिग्रहणम् । चौर्येणाभिमुख्यस्य ग्रहणस्य नामनी । अत एव वक्ष्यति—'अभिहारोऽभियोगे च चौर्ये सनहनेऽपि च' (३. ३. १६८)

इति[1] ।। निर्हारोऽभ्यवकर्षणम् । शरीरादौ प्रविष्टस्य शल्यादेर्बहिराकर्षणस्य नामनी। 'कृष निष्कर्षे' इत्यस्मादभ्यवपूर्वात् ल्युटि अभ्यवकर्षणम् ।। अनुहारोऽनुकारः स्यात् । परकृतचेष्टावेषभाषादिसदृशचेष्टादियोगित्वस्य नामनी । अनु सादृश्ये, तद्योगाद् धातुद्वयस्यापि तादर्थ्यम् ।। अर्थस्यापगमे व्ययः । दृष्टार्थमदृष्टार्थं वा साधनादिवियोगस्य नामनी । 'व्यय वित्तसमुत्सर्गे' इति चौरादिकाद् धातोरचि 'अतो लोपः' (६. ४. ४८) इत्यकारलोपे व्ययः[2] ।। १७ ।।

[1] हृञ् हरणे । अभिपूर्वाद् घञि अभिहार , 'ग्रह उपादाने' । अभिपूर्वात् ल्युटि अभिग्रहणम् [2] व्ययनम् । 'व्यय वित्तसमुत्सर्गे' । अदन्त । घञ् । एरच् (३ ३ ५६) वा इति भा दी

(पा ) अभिहारोऽभिग्रहणम् । मार्गप्रहरणनामनी । [1]'तेरत्राटुगोट्टुट' ।। निर्हारोऽभ्यवकर्षणम् । [2]सस्योपघातुक[3]तृणाद्युत्पाटननामनी । 'कलप्रतिचुट'[1] ।। अनुहारोऽनुकार. स्यात् । अनुकरणनामनी । [1]'पोविके' ।। अर्थस्यापगमे व्यय । अर्थापगमननामनी[4] । 'वेच्चम्'[1] ।। १७ ।।

[1] B3 omits [2] °अपहारक° A1. [3] C1 omits °तृण° [4] °अपगम व्यय स्यात् A1.

प्रवाहस्तु प्रवृत्तिः स्यात् प्रवहो गमनं बहिः ।
वियामो वियमो यामो यमः संयामसंयमौ ।। १८ ।।

(वि ) प्रवाह इति—[1]प्रवाह्यत इति प्रवाह. । 'वह प्रापणे' । प्रवर्त्यते प्रवाह्यत इति प्रवृत्ति.[2] । 'वृतु वर्तने' । [3]उदकादेरविच्छेदेन प्रवर्तनस्य नामनी ।। प्रवर्पेण वहन गमन प्रवह । वहिर्गमनस्य नाम ।। विविधो यामो वियाम[4]। वियमश्च। 'यम उपरमे' । [5]परिपीडाद्युपशमस्य[6] नामनी ।। यमन याम. । यमश्च । उपरतिमात्रस्य नामनी ।। सयम्यत इति सयामः । सयमश्च[7] । अत्यन्तोपरमस्य नामनी ।। १८ ।।

[1] प्रवर्पणाविच्छेदन वहतीति Pt2. [2] प्रवर्तन इति Pt2. [3] उत्कादे. J2. [4] विशेषेण यमन Pt2. [5] परित्रीडा° J2 [6] °गमनस्य K3, K5 [7] K2 adds 'यम उपरम', उपशमने J2.

(विव.) प्रवाहस्तु प्रवृत्तिः स्यात्। जलादेरन्यस्य वा विच्छेदरहितानुवृत्तेर्नामनी। यथा—नदीप्रवाहः, विद्याप्रवाह इति। प्रकर्षेण वाहो वहनं विषयान्तरप्राप्तिः प्रवाहः[1]। प्रकृष्टा विच्छेदरहिता वृत्तिः प्रवृत्तिः[2]॥ प्रवहो गमनं बहिः। गृहनगरादेर्बहिर्गमनस्य नाम। 'प्रवहः स्याद् बहिर्यात्रा' इति भागुरिः[3]। प्रकृष्टो वहः प्रवहः। 'गोचरसंचरवह...' इत्यादिना (३. ३. ११९) साधुः। बहुलग्रहणादच्प्रत्ययो वा॥ वियामो—संयमौ। परोपद्रवादिभ्य उपरतेर्नामानि। वेत्यनुवृत्तौ 'यमः समुपनिविषु च' (३. ३. ६३) इति सोपसर्गाद् अनुपसर्गादपि पाक्षिकेऽप्प्रत्यये यमः, वियमः, सयमः इति त्रयः शब्दाः। तदभावपक्षे 'हलश्च' (३. ३. १२१) इति घञि वियामः, संयामः, यामः इति शब्दत्रयम्। केचिदत्र व्याकुर्वते—वियामादिद्वय मनोवाक्कायपूर्वकविरोधोपरतिवाचकम्। यामादिद्वयम् उपरतिमात्रवचनम्। सयामादिद्वयम् आत्यन्तिकोपरतिवाचकमिति॥ १८॥

[1] 'वह प्रापणे', घञ् [2] 'वृतु वर्तने', क्तिन् (३ ३ ९४) [3] इति [भागुरिनिर्मित] त्रिकाण्ड इति टी स (पृ ६२)

(पा) प्रवाहस्तु प्रवत्ति स्यात्। [1]परपरानामनी। 'प्रवाहस्तु परपरा' इति वैजयन्ती (पृ १९५, श्लो ३९)॥ प्रवहो गमन वहि। 'प्रवामो गमन वहि' इति पाठान्तरम्। वहिर्गमन प्रवह [2] स्यात्॥ वियामो—सयमौ। हिसाद्युपरतिनामानि॥ १८॥

[1] अविच्छेदगमन° $C_1$ [2] B3 adds प्रवासश्च

हिसाकर्माभिचारः स्याद् जागर्या जागरा द्वयोः।
विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये॥ १९॥

(वि) हिसाकर्मेति—[1]परमभिभवितु चार [2] चरणम् अभिचार। हिंसाकर्मणो नाम॥ जागरण जागर्या। जागरा च। 'जागृ निद्राक्षये'। निद्राभङ्गस्य[3] नामनी॥ कार्याणा विहनन[4] विघ्न। अन्तरा मध्येऽयन [5]विच्छेदोऽन्तराय। 'अय पय गतौ'। प्रतिकूलमूहन प्रत्यूह। 'ऊह वितर्के'। प्रारब्धकार्याणा प्रतिकूलस्य नामानि॥ [6]उपहन्यत इत्युपघ्न। 'हन हिंसागत्यो'। अत्र धातोर्गत्यर्थ। अन्तिकाश्रयणस्य नामनी॥ १९॥

[1] परान् Pt2 [2] J2, K2 omit चार. [3] निद्राभावस्य J2, K6. [4] हनन कार्यस्य Pt2 [5] K3, K6 omit विच्छेद [6] उप समीपे हन्यते गम्यते K4, K5

(विव.) हिंसाकर्माभिचारः स्यात्। परमारणार्थमनुष्ठेयं श्येनादिकर्म अभिचार उच्यते। परमभिचरितुं चरणमभिचारः। 'चर गतिभक्षणयोः'। अभिपूर्वो हिंसायां वर्तते[1]। यथा—'प्रत्यगेनमभिचारः स्तृणुते', 'श्येनेनाभिचरन् यजेत' इति ॥ जागर्या जागरा द्वयोः। निद्रानाशस्य नामनी। 'कृञः श च' (३. ३. १००) इत्यत्र 'जागर्तेरकारो वा'[2] (वा. ३. ३. १०१) इत्यकारप्रत्ययशप्रत्ययौ। तत्र शप्रत्ययपक्षे 'सार्वधातुके यक्' (३. १. ६७) इति यक्। उभयत्र 'जाग्रोऽविचिण्णल्ङित्सु' (७. ३. ८५) इति गुणे जागर्या जागरेति शब्दद्वयम् इति सुबोधिनीकारः। 'रिङ्शयग्लिङ्क्षु' (७. ४. २८) इति रिङादेशे जागृिया इति धातुपारायणम् इति सर्वानन्दः (पृ. ६२)। अकारप्रत्ययबलेन केवलस्य स्त्रीलिङ्गस्यैव उन्नयनं मा भूदिति द्वयोरित्युक्तम्। तेन घञ्प्रत्यये पुंलिङ्गोऽप्यस्तीति दर्शितम् ॥ विघ्नोऽन्तरायः प्रत्यूहः। कार्यसिद्धिप्रतिबन्धनस्य नामानि। यथा—घटसिद्धेश्चक्रचीवराद्यभावः। अर्थसिद्धेः पिशुनव्यापार इति। विहन्त्यनेन पुरुषः कार्यसिद्धिमिति विघ्नः। 'हन हिंसागत्योः'। 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (वा. ३. ३. ५८) इति घञर्थे कप्रत्ययः। 'गमहनजन ...' इत्यादिना उपधालोपः, 'हो हन्तेः' (७. ३. ५४) इति कुत्वम् ॥ अन्तरा मध्ये आयः[3] अयनं कार्यव्यवधानमत्रेति अन्तरायः ॥ प्रतिकूलम् ऊह्यतेऽनेनेति प्रत्यूहः। 'ऊह वितर्के'[4] ॥ स्यादुपघ्नोऽन्तिकाश्रये। समीपभूत आश्रये उपघ्नशब्दः। उप समीपे हन्यते गम्यत इत्युपघ्नः। 'हन हिंसागत्योः'। 'उपघ्न आश्रये' (३. ३. ८५) इति निपातितः। 'आश्रयशब्दः [5]सामीप्यं प्रत्यासत्तिं [6]लक्षयति' इति काशिका (१, पृ. २२०) ॥ १६ ॥

[1] Tv adds ततो घञ् [2] B5, B6 add इति वक्तव्यम् [3] 'अय गतौ' घञ्. [4] Tj1, Tj2 add घञि प्रत्यूहः. [5] Gm3, Tv omit. [6] उपलक्षयति Gm1, Tv.

(पा) हिंसाकर्माभिचारः स्यात्। हिंसानामनी ॥ जागर्या जागरा द्वयोः। [1]निद्राक्षयनामनी ॥ विघ्नो—प्रत्यूहः। विघ्ननामानि ॥ स्यादुपघ्नोऽन्तिकाश्रये। समीपाश्रयनाम[2]। 'छेदादिवोपघ्नतरोर्व्रततयौ' इति रघुवंशे[3] (१४. १) ॥ १६ ॥

[1] °नाश° A1, C1. [2] A1 adds 'अङरु'. [3] A1 omits रघुवशे.

**निर्वेश उपभोगः स्यात् परिसर्पः परिक्रिया ।**
**विधुरं तु प्रविश्लेषोऽभिप्रायश्छन्द आशयः ॥ २० ॥**

(वि.) निर्वेश इति—[1]निर्विश्यते उपभुज्यत इति निर्वेश । 'विश प्रवेशने'। [2]उपभुज्यत इति उपभोग । 'भुज पालनाभ्यवहारयो.'। सुखदु ख-साक्षात्कारस्य नामनी ॥ परित [3]सर्पण परिसर्प । 'सृप्लृ गतौ'। परित सर्पण-क्रिया[4] परिक्रिया। समन्तात् सर्पणस्य नामनी ॥ विगता धू कार्यभारोऽत्रेति विधुरम्। प्रविश्लिष्यते [5]कार्यभारोऽत्रेति प्रविश्लेष । 'श्लिष आलिङ्गने'। विरहस्य नामनी ॥ अभिप्रयन्ति पदार्था अस्मिन्निति अभिप्राय । 'इण् गतौ'। छन्दयन्ति आच्छादयन्त्यत्रेति छन्द । 'छदि सवरणे'[6]। आशेरते पदार्था अत्रेत्या-शय । 'शीङ स्वप्ने'। अभिप्रायस्य नामानि ॥ २० ॥

[1] निर्वेशन Pt2 [2] उपभुक्ति Pt2 [3] सर्प्यते K5, सृप्यते J2 [4] सर्पणम् K5, K6 [5] K5 omits भार [6] आच्छादने दीप्तौ च K3, K6, 'छदि आह्लादने' Pt2

(विव) निर्वेश उपभोगः स्यात्। सुखदु खसाक्षात्कारस्य नामनी। निरुपसर्गपूर्वाद् 'विश प्रवेशने' इत्यतो भावे घञि (३. ३. १८) निर्वेशः ॥ 'भुज परिपालनाभ्यवहारयो.' इत्यस्माद् उपपूर्वाद् भावे घञि उपभोगः। एवमादौ तदर्थविहितप्रत्ययान्तरान्तानि निर्वेशनमुपभुक्तिरित्यादीनि पर्यायतया द्रष्टव्यानि ॥ परिसर्पः परिक्रिया। समन्तात् सर्पणस्य नामनी। परितः सर्पण परिसर्प। 'सृप्लृ गतौ'। घञ् ॥ परित. सर्पणरूपा क्रिया परिक्रिया[1] ॥ विधुर तु प्रविश्लेप। प्रकर्षेण विश्लेपो दूरभूतत्व वा विधुरमुच्यते। विगता धू. कार्यभारोऽत्रेति विधुरम्[2]। 'वैफल्येऽपि च विश्लेषे विधुर विक्लवे त्रिषु' इति रभसः। 'विधुर किमतः परं [3]वद' इति भारविप्रयोगः (किरा. २. ७)[4] ॥ अभिप्रायश्छन्द आशयः। मनोगतार्थस्य नामानि। अभिप्रायः 'इण् गतौ'। पचाद्यच् (३ १. १३४)। अभिप्रीणाति श्रोतॄन् इति वा। 'प्रीञ् [5]तर्पणे कान्तौ च'। घञ् ॥ छन्दयति आह्लादयति। 'छदि[6] आह्लादने'। घञ्। साहचर्येण पुलिङ्गत्वाद् अकारान्तत्वम्। 'छन्दानुवृत्तिदु साध्याः' इति [7]प्रयोगः (शिशु. २. १०५) ॥ आसमन्ताच्छेते मानसमिति आशय.। 'शीङ स्वप्ने'[8] ॥ २० ॥

[1] 'कृञ श च' इति श । 'सार्वधातुके यक्' इति यक् । 'रिङ शयग्लिङ्क्षु' इति रिङ, क्रिया [2] 'ऋकपूरब्धू पथामानक्षे' इत्यकारप्रत्यय [3] परै इति मु ग्रन्थे [4] प्रविपूर्वात् 'श्लिष आलिङ्गने' इत्यतो भावे घञि प्रविश्लेष [5] प्रीणने B5, B6 [6] छदिधातु भिन्नाभिप्रायो दृश्यते विविधग्रन्थेषु [7] Gm1 adds माघ° [8] एरचि (३ ३ ५६) आशय .

(पा) निर्वेश उपभोग स्यात् । उपभोगनामनी ॥ परिसर्प परिक्रिया । [1]परिजनपरिवेष्टननामनी ॥ विधुर तु प्रविश्लेषे । विकलत्वनामनी[2] । 'वैकल्येऽपि च विश्लेषे विधुर [3]तद्वति त्रिषु' इति त्रिकाण्डशेष (पृ ३३, श्लो ६२५) ॥ अभिप्रायश्छन्द आशय । भावार्थनामानि । 'आकूतिमतमाकूत भावोऽभिप्राय आशय' इति वैजयन्ती (पृ ६७, श्लो १७४) ॥ २० ॥

[1] °परिचेष्ट° A1 [2] C1 adds विश्लिष्टे तु त्रिलिङ्गकम् [3] विकले इति मुद्रितग्रन्थे

**सक्षेपणं समसनं पर्यवस्था विरोधनम् ।**
**परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ २१ ॥**

(वि) सक्षेपणमिति—[1]वहव एकत्र सक्षिप्यन्त इति सक्षेपणम्[2] । 'क्षिप क्षेपणे' । समस्यन्तेऽत्रेति[3] समसनम् । 'असु क्षेपणे' । प्रकीर्णाना पदार्थानामेकत्र स्थापनस्य नामनी ॥ पर्यवस्थीयत इति पर्यवस्था[4] । 'ष्ठा गतिनिवृत्तौ' । विरुध्यत इति विरोधनम् । 'रुधिर् आवरणे' । सहानवस्थानादिलक्षणविरोधस्य नामनी ॥ परित सरण परिसर्या । परीसारश्च[5] । 'सृ गतो' । [6]परित सचारस्य नामनी ॥ आसनमास्या[7] । आसना च । 'आस उपवेशने' । [8]स्थीयत इति स्थिति । 'ष्ठा गतिनिवृत्तौ' । उपवेशनस्य नामानि ॥ २१ ॥

[1] बहुरेकत्र सक्षिप्यते K6 [2] सक्षेप सक्षेपणम् Pt2 [3] J2 adds क्षिप्यन्ते॰ [4] परित नानादेशेषु अवस्थानम् Pt2 [5] K5 adds परिसारश्च [6] खले बलीवर्दाद्यटनक्रियानामनी J2, K6, Z1 [7] आस्यत इति, आसन च K5 [8] सस्थान Pt2

(विव) सक्षेपण समसनम् । विप्रकीर्णाना पदार्थानामेकत्र राशीकरणस्य नामनी । सहततया क्षेपण सक्षेपणम्[1] ॥ 'असु क्षेपणे' इत्यस्मात् ल्युटि (३. ३. ११५) असनम् । सभूय असन समसनम् । 'सक्षेप सहार.[2] समासस्सग्रहः समाहारः'

इति श्लोकार्थपर्यायेषु बोपालितः ॥ पर्यवस्था विरोधनम्। सहानवस्थानादिलक्षणविरोधस्य नामनी । मिथो विरोधेन परितो नानादेशेषु अवस्थानं पर्यवस्था । 'ष्ठा गतिनिवृत्तौ'। 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ ॥[3] परिसर्या परीसारः। सर्वतो भ्रमणशीलस्य नामनी । परितः सरणं परिसर्या । 'सृ गतौ' । 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' (वा. ३. ३. १०१) इति साधुः ॥ सरतेर्घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (६. ३. १२२) इति दीर्घे परीसारः ॥ स्यादास्या त्वासना स्थितिः। उपवेशस्य नामानि[4]। 'आस उपवेशने'। 'ऋहलोर्ण्यत्' (३. १. १२४) आस्या वासरूपपरिभाषया[5] (३. १. ९४) ॥ 'ण्यासश्रन्थो युच्' (३. ३. १०७) इति युचि आसना ॥ 'स्थागापापचो भावे' (३. ३. ९५) इति क्तिन्। 'द्यतिस्यतिमास्थामित्ति किति' (७. ४. ४०) इति इकारादेशे स्थितिः ॥ २१ ॥

[1] सपूर्वस्य क्षिपेर्ल्युटि सक्षेपणम् [2] सभाव Tj1, Tj2. [3] 'रुधिर् आवरणे'। विपूर्वस्य ल्युटि विरोधनम् [4] Gm1 omits 4 lines [5] 'वासरूपोऽस्त्रियाम्' असमानरूप प्रत्ययोऽपवादो वा भवति

(पा) सक्षेपण समसनम् । [1]वहुना ग्रन्थेन वक्तव्यस्याल्पेन कथननामनी ॥ पर्यवस्था विरोधनम् । शत्रुत्वस्वीकरणनामनी ।[2] 'पगवट्टुट' ॥ परिसर्या परीसार । [3]गिरिनगरादीना [4]समीपस्थ मार्गमनुसृत्य गमननामनी ।[3] 'पर्वतादुलबोत्तुपट्टिपोवुट'॥ स्यादास्या त्वासना स्थिति । उपवेशनामानि ॥ २१ ॥

[1] बहुलग्रन्थेनोच्यमानमर्थम् A1 [2] B3, C1 *omit.* [3] गिर्यादीना B3. [4] समीपमार्गं B3

विस्तारो विग्रहो व्यासः स तु शब्दस्य विस्तरः ।
स्यान्मर्दनं संहननं विनाशः स्याददर्शनम् ॥ २२ ॥

(वि) विस्तार इति—विस्तीर्यत इति विस्तार[1]। 'स्तृञ् आच्छादने'। विविच्य ग्रहण विग्रह[2]। विविच्य असन क्षेपो व्यास[3]। 'असु क्षेपणे'। विस्तारस्य नामानि ॥ विस्तीर्यत इति विस्तर.। शब्दविस्तरस्य नाम ॥ मृद्यतेऽङ्गमनेनेति मर्दनम् ।[4] 'मृद मर्दने'। सहन्यते मृद्यत इति सहननम् । सवाहनमिति पाठे सवाह्यन्ते

ऽङ्गान्यत्रेति सवाहनम् । [5]'वह प्रापणे' । अङ्गमर्दनस्य नामनी ॥ विनश्यत इति विनाश । 'णश अदर्शने' । [6]अदर्शनस्य नाम ॥ २२ ॥

[1] विस्तृति विस्तार Pt2  [2] J2, K2 add 'ग्रह उपादाने'.  [3] विविधमासन, 'आस उपवेशने' Pt2  [4] 'मृद क्षोदे' Pt2  [5] 'वाहृ प्रयत्ने' Pt2  [6] दर्शनाभावस्य K5

(विव.) विस्तारो विग्रहो व्यासः । कटकम्बलादिसंबन्धिनो विस्तीर्णत्वस्य नामानि । 'स्तृञ्[1] आच्छादने' विपूर्वः, 'प्रथने वावशब्दे' (३. ३. ३३) इति घञ्प्रत्ययः ॥ विविच्य ग्रहणं विग्रहः[2] ॥ विविधं विविच्य वा [3]असनं व्यासः । 'असु क्षपेणे' । भावे घञ् ॥ स तु शब्दस्य विस्तरः । स व्यासः शब्दसंबन्धी चेद् विस्तर उच्यते । 'प्रथने वावशब्दे' (३. ३. ३३) इति शब्दविषये घञ्निषेधाद् 'ऋदोरप्' इत्यप्प्रत्यये विस्तरः । स्यान्मर्दनं संहननम् । करचरणादिसुखकरस्य संपीडनस्य नामनी । मृद्यतेऽङ्गान्यनेनेति मर्दनम् । 'मृद क्षोदे' । ल्युट् ॥ संहन्यते निपीड्यतेऽङ्गमनेनेति संहननम् । 'संवाहनं संहननम्' इति सुभूतिचन्द्रस्य पाठः । 'वाहृ प्रयत्ने संमर्दने च' । अस्माद् भावे ल्युटि संवाहनम् ।

'कान्ताजनं सुरतखेदनिमीलिताक्षं
संवाहितुं समुपयानिव मन्दमन्दम् ।'

इति भारविः (किरा. ६. ७६) । 'संवाहयामि चरणावुत पद्मताम्रौ' इति कालिदासश्च (शाकु. ३. २०) । 'श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम्' इति स्मृतौ'[4] (या. स्मृ. १. ६. २०६) । 'संवाहनं [5]संवहने भारादेरङ्गमर्दने' इति विश्वप्रकाशश्च (पृ. ६८, श्लो. १६४) ॥ विनाशः स्याददर्शनम् । [6]ध्वंसनिमित्तस्तिरोभावनिमित्तो वा ज्ञानविषयत्वाभावो वा विनाश उच्यते । 'ध्रुवं प्रणाशे[7] प्रहितस्य पत्रिणः शिलोच्चये तस्य विमार्गणं नयः' इति तिरोधाननिबन्धने भारविप्रयोगः (किरा. १४. ६) । घटनाशः पटनाशः इत्यादौ अन्यत्र प्रसिद्ध एव । 'णश अदर्शने' इत्यतो विपूर्वाद् भावे घञि (३. ३. १८) विनाशः ॥ २२ ॥

[1] 'स्तृञ् आच्छादने' B3, B6  [2] 'ग्रह उपादाने' । 'ग्रहवृदृ...' इत्यप्प्रत्ययः ।  [3] भासन Tj1, Tj2.  [4] स्मृतिश्च Gm1.  [5] वाहेर्णिजि इति मुद्रितपाठे  [6] दर्शन° Gm1, Tv.  [7] प्रणाश इति मु प.

(पा ) विस्तारो विग्रहो व्यास. । स्वल्पस्यानल्पीकरणनामानि । [1]'पिन्नदि पेट्टचेनुट ' ।। स च शब्दस्य विस्तरः । अनल्पशब्देन कथन विस्तरः स्यात्[2] । शब्द-प्रपञ्चनाम इत्यर्थः ।। सवाहन मर्दन स्यात । [3]पादाद्यङ्गमर्दननामनी । ' सवाहयामि चरणावुत पद्मताम्रौ ' (शाकु ३. २०), किंच ' सभोगान्ते मम समुचितो हस्त-सवाहनानाम् '[4] इति मेघसदेशे (२. ३६) ।। विनाश· स्याददर्शनम् । अदर्शननाम[5] । ' अणुगुटि '[6] ।। २२ ।।

[1] B3 omits. [2] अनल्पत्व शब्दस्य चेद् विस्तर B3 [3] B3, C1 omit पादादि [4] A1 adds ' यास्यत्यूरु सरसकदलीस्तम्भगौरश्चलत्वम् ' [5] लोपनाम A1 [6] B3, C1 add ' नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ '.

**संस्तवः स्यात् परिचयः प्रसरस्तु विसर्पणम् ।**
**निवाकस्तु प्रयामः स्यात् संनिधिः संनिकर्षणम् ।। २३ ।।**

(वि ) सस्तव इति—सस्तूयते परिचीयत[1] इति सस्तव.[2] । ' ष्टुञ् स्तुतौ ' । परिचीयत इति परिचय । ' चिञ् चयने ' । परिचयनामनी ।। प्रकर्षेण सरण प्रसर [3] । ' सृ गतौ ' । विशेषेण सर्पण विसर्पणम् । ' सृप्लृ गतौ ' । तैलविन्द्वादेः प्रसरणस्य[4] नामनी ।। नियत वचन निवाक । नीवाकश्च । ' वच परिभाषणे ' । प्रकर्षेण यमन प्रयाम । ' यम उपरमे ' । न्यूनाधिक्यरहितप्रमाणवचनस्य नामनी ।। [5]सनिधीयत इति सनिधि । ' डुधाञ् धारणपोषणयो ' । सनिकृष्यत[6] इति सनि-कर्षणम् । ' कृष विलेखने ' । प्रत्यासत्तेर्नामनी ।। २३ ।।

[1] K5 omits परिचीयते. [2] सस्तवन Pt2 [3] प्रसार्यत इति K5 [4] प्रसरस्य J2 [5] सनिधान Pt2 [6] सनिकर्ष J2, K2

(विव.) संस्तवः स्यात् परिचयः । स्नेहपूर्वकस्य विस्रम्भस्य नामनी । 'ष्टुञ् स्तुतौ' । 'ऋदोरप्' (३.३.५७) ।। 'चिञ् चयने' । 'एरच्' (३. ३. ५६) । उपसर्गवशाद् धातुद्वयस्य परिचयार्थत्वम् ।। प्रसरस्तु विसर्पणम् । स्वल्पलता-विटपादेः समन्ताद् व्यापनस्य नामनी । ' सृ गतौ ' । [1]बहुलग्रहणात् स्वार्थे प्रपूर्वा-दप्प्रत्यये प्रसरः ।। विशेषेण सर्पणं विसर्पणम्[2] । परिसर्पः परिक्रिया (श्लो २०) परिसर्या परीसारः (श्लो. २१) प्रसरस्तु विसर्पणम् (श्लो. २३) इति विप्रकीर्ण-पठितस्य पादत्रयस्यावान्तरभेदश्रयणेऽर्थभेदोऽनुसंधेयः[3] । पर्यायान्तरदर्शनाभिप्रायेण[4]

वा पौनरुक्त्य परिहरणीयम् ।। निवाकस्तु प्रयामः स्यात् । न्यूनाधिकभावरहितस्य प्रमाणभूतवचनस्य नामनी । वाको वचनम् । नियत वाको निवाक । 'वच परिभाषणे' । भावे घञ् (३. ३. १८) । [5]कुत्वम् (७. ३. ५२), [6]'उपसर्गस्य ...' इत्यादिना (६.३.१२२) दीर्घे च नीवाकः ।। प्रकर्षेण यमो[7] न्यूनाधिकभावाभ्या-मुपरमणमत्रेति, 'हलश्च' (३. ३. १२१) इति घञि प्रयामः । संनिधिः सनि-कर्षणम् । प्रत्यासत्तेर्नामनी । दधाते सनिपूर्वाद् 'उपसर्गे घो कि' (३. ३ ९२) इति पुलिङ्ग.[8] । [9]कृषेर्ल्युटि सनिकर्षणम् ।। २३ ।।

[1] 'कृत्यल्लुटो बहुलम्' (३ ३ ११३) [2] 'सृप्ल गतौ', ल्युट् [3] °आश्रयणेन° B5
[4] °प्रदर्शन° B5. [5] 'चजो कु घिण्यतो' [6] उपसर्गस्य घञ्यमनुष्ये बहुलम्'
[7] यमन Gm1 [8] 'आतो लोप इटि च इत्याकारलोप [9] B6 adds 'कृष विलेखने'.

(पा) सस्तव स्यात् परिचय । [1]अभ्यासनामनी । 'अभ्यास स्यात् परिचय' इति वैजयन्ती (पृ १२०, श्लो १६५) ।। प्रसरस्तु विसर्पणम् । [2]कण्डूत्या-दिविसर्पणनामनी । 'शिव्वमुतिपपट्टुट' ।। नीवाकस्तु प्रयाम स्यात् । जयघण्टि-कादिमुखेन धान्याद्यर्घप्रख्यापननामनी । 'धान्यादुलघुवचेसुट' ।। सनिधि सनि-कर्षणम् । [3]समीपनामनी । 'पोदुट'[4] ।। २३ ।।

[1] परिचय° C1 [2] सिहुल्लिकाकण्डूतिप्रसृति° A1 [3] प्राप्तिनाम A1
[4] B3 omits

लवोऽभिलावो लवने निष्पावः पवने पवः ।
प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनम् ।। २४ ।।

(वि) लव इति—लूयत[1] इति लव । अभिलाव । लवन च । 'लूञ् छेदने' । तृणादिच्छेदनस्य नामानि ।। नितरा [2]पूयते धान्यमत्रेति निष्पाव । पवन च । पवश्च । 'पूञ् पवने' । धान्यादेर्निस्तुषीकरणस्य नामानि ।। प्रसङ्गेन [3]कार्यमत्र स्तयत इति प्रस्ताव । 'ष्टुञ् स्तुतौ' । कार्यं कर्तुमवसरतीति अवसर । 'सृ गतौ' । [4]अवसरस्य नामनी ।। त्रस्यति[5] भीतवदितस्ततश्चलतीति त्रसर । 'त्रसी उद्वेगे'[6] । [7]सूत्राणा वेष्टन सूत्रवेष्टनम् । 'वेष्ट वेष्टने' । सूत्रस्य[8] वेष्टन-क्रियाया नामनी ।। २४ ।।

[1] J2 adds छिद्यते　[2] पवन Pt2　[3] स्तवन K6, Pt2　[4] J2, K2 add राजादे .　[5] K3, K4 add सूत्रमवेष्यते　[6] उद्वेजने K2, K3, K5　[7] सूत्र वेष्टयतेऽत्र J2, K2, K5　[8] K5 adds यन्त्रवहनार्थम्

(विव.) लवो ऽभिलावो लवने । लविन्नादिना व्रीह्यादिस्तम्बच्छेदनस्य[1] नामानि । 'लूञ् छेदने'। 'ऋदोरप्' (३. ३. ५७) इत्यपि लवः । 'निरभ्योः पूल्वोः' (३. ३. २८) इति घञि अभिलावः[2] ॥ निष्पावः पवने पवः । धान्यादीना निस्तुषीकरणस्य बहुलीकरणस्य नामानि । 'पूञ् पवने'। 'निरभ्योः पूल्वोः' (३. ३. २८) इति घञि निष्पावः ॥ ल्युटि पवनम् । 'ऋदोरप्' (३. ३. ५७) इत्यपि पवः ॥ प्रस्तावः स्यादवसरः । कर्तव्यार्थोचितकालस्य[3] नामनी । प्रस्तूयते कार्यमस्मिन्निति प्रस्तावः । 'ष्टुञ् स्तुतौ'। 'प्रे द्रुस्तुस्रुवः' (३. ३. २७) इत्यधिकरणे घञ् ॥ अवसरन्ति कार्यं कर्तुमवनता गच्छन्त्यत्रेत्यवसरः । 'सृ गतौ'। 'पुंसि सञ्ज्ञायां घः प्रायेण' (३. ३. ११८) इति घ.[4] ॥ त्रसरः सूत्रवेष्टनम् । तन्तुवायैः [5]पटवासार्थं कल्पितस्य दीर्घतन्तुवेष्टितस्य नामनी । त्रस्यति भीतवद् इतस्ततश्चलतीति त्रसरः । 'त्रसी उद्वेगे'[6] । औणादिकोऽरन्प्रत्ययः । सर्वानन्दस्तु (टी. स. पृ ६५) तसर[7] इति प्रथमाक्षर रेफरहितमाह ॥ सूत्रं वेष्टयतेऽत्रेति सूत्रवेष्टनम् । रूपभेदाद् नपुसकत्वम् ॥ २४ ॥

[1] °छेदस्य Gm1　[2] B8 adds ल्युटि लवनम्　[3] उचितस्य B5　[4] बाहुलकादप् इति भा दी (पृ ४५४)　[5] पटार्थं T1　[6] उद्वेजने Tj1, Tj2　[7] Sarvānanda adds—'तन्यृषिभ्यां क्सरन्' (उ ३ ७५)

(पा ) लवोऽभिलावो लवने । [1]सस्यादीना [2]छेदननामानि । [3]'चेनुकोसुट्ट' ॥ निष्पाव पवने पव । वायुना धान्यनिस्तुषीकरणनामानि । [3]'तर्पेत्तुट' ॥ प्रस्ताव स्यादवसर । वेलानामनी । 'प्रस्तावोऽवसरो वेला' इति वैजयन्ती[4] ॥ त्रसर सूत्रवेष्टनम् । तन्तुवायोपकरणनामनी[5] । 'परटे' ॥ २४ ॥

[1] क्षेत्रे व्रीह्यादीना C1　[2] A1 adds शाकटादिना　[3] B3 omits　[4] मुद्रितग्रन्थे न दृश्यते　[5] °सूत्रवेष्टन° A1

**प्रजनः स्यादुपसरः प्रसरप्रणयौ समौ ।**
**धीशक्तिर्निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥**

(वि) प्रजन इति—प्रजायन्ते पशवोऽस्मिन्निति[1] प्रजन.। 'जनी प्रादुर्भावे'। उपसरति वृषोऽस्मिन्निति उपसर[2]। 'सृ गतौ'। पशूना गर्भग्रहणस्य[3] नामनी ॥ प्रीत्या प्रसार्यत इति प्रसर[4]। प्रश्रय इति वा पाठः। प्रणीयते प्रार्थ्यत इति प्रणयः। 'णीञ् प्रापणे'। प्रीत्या प्रार्थनस्य नामनी ॥ निष्क्रम्यते वहिष्क्रियतेऽज्ञानमनेनेति निष्क्रम। 'क्रमु पादविक्षेपे'। [5]धीशक्ते· प्रज्ञासामर्थ्यस्य नाम ॥ सन्नामन्ति [6]सक्लेशेन गच्छन्त्यनेनेति सन्नमः। दुर्गे दुर्गमे प्रवाहादौ सचरन्त्यनेनेति दुर्गसचर·। 'चर [7]गतौ'। दुस्तरप्रवाहादौ काष्ठादिभिर्बद्धस्य सेत्वादेर्नामनी ॥ २५ ॥

[1] अनेन Pt2 [2] उपसरणम् Pt2 [3] °ग्रहणकालस्य K6 [4] J2, K5 add 'सृ गतौ'. [5] J2 adds धिय शक्ति धीशक्ति [6] K5 omits स, सचरन्ति Pt2 [7] गतिभक्षणयो J2, K2, Pt2

(विव.) प्रजनः स्यादुपसरः। [1]पुंगवादीनां मैथुनोपसर्पणस्य नामनी। गर्भग्रहणस्य कालस्येत्यन्ये। प्रजायन्ते पशवोऽत्रेति प्रजनः। 'जनी प्रादुर्भावे'। अधिकरणे घञ्प्रत्यये 'जनिवध्योश्च' (७.३.३५) इति वृद्धिप्रतिषेधः ॥ उपसरति[2] वृषभो गां गर्भमाधातुमत्रेति उपसरः। 'प्रजने सर्तेः' (३.३.७१) इत्यप् ॥ प्रसरप्रणयौ समौ। प्रीतिपूर्वकप्रार्थनानामनी इति केचित्। विनयस्य नामनी इत्यपरे[3]। प्रीतिप्रकर्षेण सरणं प्रसरः। 'ॠदोरप्'[4] ॥ प्रीत्यानयनं प्रणयः[5]। 'उपसर्गादसमासेऽपि...' (८.४.१४) इति णत्वम् ॥ धीशक्तिर्निष्क्रमः। धियो बुद्धेः शक्तिः सामर्थ्यविशेषः।

> 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा।
> ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥'

इत्युक्तलक्षणः[6]; स निष्क्रमः। निष्क्रम्यते बहिः क्रियते तत्त्वज्ञानजननद्वारेणाज्ञानमनेनेति[7] निष्क्रमः[8]। 'निष्क्रमो बुद्धिसंपत्तौ निर्गमे दुष्कुलेऽपि च' इति विश्वप्रकाशः (पृ. ११३, श्लो. ३८) ॥ अस्त्री—दुर्गसंचरः। जलपङ्कादिप्रायदेशे शकटादीनां गमनागमनसौलभ्यार्थं पाषाणादिभिर्बद्धस्य सेत्वादेर्नामनी। संक्रामन्ति सुखेन गच्छन्ति अनेनेति संक्रमः। करणे घञ् ॥ [9]दुर्गेऽपि मार्गे सम्यक् चरन्त्यनेनेति दुर्गसंचरः। 'गोचरसंचर...' इत्यादिना (३.३.११९) साधुः ॥ २५ ॥

[1] पुगवाना स्त्रीगवीपु गर्भाधानाय मैथुनाभियोगस्य नामनी B5, Tj1, Tv [2] Tj2 adds उपभोगेपु [3] अन्ये Tj2 [4] बहुलग्रहणात् स्वार्थे प्रपूर्वादप्प्रत्यये प्रसर इति पूर्वमुक्तम् (श्लो २४) [5] 'णीञ् प्रापणे' 'एरच्', प्रश्रय इति पाठे 'श्रिञ् सेवायाम्' 'एरच्' [6] B5 adds इति अष्टलक्षणस्य [7] द्वारा for द्वारेण B3, Tj2 [8] 'क्रमु पादविक्षेपे', घञ्, नोदात्तेति (७ ३ ३४) न वृद्धि [9] दुर्गमे पथि पङ्कादिना विपमे मार्गे सचरन्ति B5, Tj2

(पा ) प्रजन स्यादुपसर । गोमहिष्यादिबालगर्भनामनी । [1]'लेत-चूलुतान'। उपचर इति पाठान्तरम् । [2]प्रसादप्रणयौ समौ । प्रसन्नतानामनी । 'प्रसाद प्रणयो [3]मत ' इति हलायुध (अ मा ४ ८८) ।। धीशक्तिर्निष्क्रम । [4]बुद्धिशक्ति निष्क्रम स्यात् ।। अस्त्री—दुर्गसचर । दुर्गपथनामनी ।। २५ ।।

[1] B3 omits [2] प्रसर इति पाठान्तरम् C1 [3] स्मृत इति मुद्रितग्रन्थे [4] बुद्धिसपत् A1

**प्रत्युत्क्रमः प्रयोगार्थः प्रक्रमः स्यादुपक्रमः ।**
**स्यादभ्यादानमुद्घात आरम्भः संभ्रमस्त्वरा ।। २६ ।।**

(वि ) प्रत्युत्क्रम इति—प्रत्युत्क्रमणमुद्योग प्रत्युत्क्रम । प्रयोगोऽर्थो यस्येति प्रयोगार्थ । प्रयोगम्य कर्म कर्तुमुत्पन्नप्रयत्नस्य नामनी । प्रत्युद्गम प्रयोगार्थ-मिति पाठे प्रकृष्टयुद्धार्थं भटनिर्गमनस्य नाम ।। प्रक्रम्यत इति प्रक्रम । उपक्रम्यत इत्युपक्रम । 'क्रमु पादविक्षेपे'। कर्मण प्रथमयोगस्य[1] नामनी ।। आभिमुख्ये-नादान स्वीकरणमभ्यादानम् । 'दा दाने' । उद्घन्यत प्रारभ्यते क्रियमाण कर्मनेनेति उद्घात [2] । 'हन हिंसागत्यो ' । आरभ्यत इत्यारम्भ । 'रभ राभस्ये '[3] । बीजा-वापार्थं व्यापारोपक्रमस्य नामानि । सभ्रमण सभ्रम । 'भ्रमु अनवस्थाने'। त्वर्यत इति त्वरा । 'ञित्वरा सभ्रमे'। [4]व्यग्रतानामनी[5] ।। २६ ।।

[1] °प्रयोगस्य K5 [2] उद् हनन गमनमुद्घात Pt2 [3] J2, K2 omit [4] सभ्रम° J2 [5] K4 has a break of one page

(विव ) प्रत्युत्क्रम प्रयोगार्थ । यस्य कस्यचिदर्थस्य स्वयमाचरणेन परेषा पुर. प्रकाशन प्रयोग । तदुक्तम्—

'सत्त्वेनाङ्गेन वा वाचा वस्तुनस्तद्विदां पुरः ।
प्रकाशनं प्रयोगः स्यात् ॥'

इति । यथा [1]नाटचप्रयोगः, यज्ञप्रयोगः, शब्दप्रयोगः । तेन प्रयोगशब्देन समानार्थः प्रत्युत्क्रमशब्द इत्यर्थः । कर्तव्यार्थं प्रति उत्क्रम उद्योगः प्रत्युत्क्रमः[2] । सुबोधिनीकारस्त्वाह—प्रकृष्टो योगः प्रयोगः, युद्धमिति यावत् । तदर्थस्तत्प्रयोजनो भटनिर्गमः प्रत्युत्क्रम इति ॥ प्रक्रमः स्यादुपक्रमः ॥ क्रियायाः प्रारम्भस्य नामनी । यथा—अध्ययनस्य प्रणवोच्चारणम्, पाकक्रियायाः चुल्लीसंमार्जनमित्यादि । 'क्रमु पादविक्षेपे' । प्रोपेत्युपसर्गद्वयम् आरम्भार्थे । घञ्[3] (३. ३. १८) ॥ स्यात्—आरम्भः । कर्मप्रारम्भस्य नामानि । यथा—स्थाल्यां [4]क्षालिततण्डुलप्रक्षेपणं पाककर्मणि[5] आरम्भः । एकाह्नाध्ययनं [6]स्वाध्यायाध्ययनस्यारम्भः । द्वितीयदिनाध्ययनमन्वारम्भः इत्यादि । स्मृतावपि—

'प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं[7] विवाहादौ श्राद्धे पाकपरिक्रिया ॥'

इति । आभिमुख्येनादानं स्वीकरणम् अभ्यादानम्[8] । 'ओमभ्यादाने' (८. २. ८७) । अभ्यादानमारम्भ[9] इति काशिकाकारः (पृ. ४१७) । उद्गतस्य घातो[10] गमनमत्रेति उद्घातः । अत्र हन्तिर्गत्यर्थः ॥ आरम्भणमारम्भः । 'रभ राभस्ये' । घञ्[11] । राभस्यं [12]कार्योपक्रम इति धातुवृत्तौ (मा. धा. पृ. २७२) । अन्ये तु व्याचक्षते—प्रत्युत्क्रमादयः पञ्चैकार्था इति । तथा च शेषे—'उद्घातः स्यादुपोद्घातः' इति । उपोद्घातो नाम भविष्यदर्थस्योपयुक्तस्यार्थस्य उपक्षेप[13] इति । तदुक्तम्—'चिन्तां प्रकृतिसिद्धयर्थामुपोद्घातं प्रचक्षते' इति । संभ्रमस्त्वरा । व्यग्रताया नामनी । संभ्रमणं संभ्रमः । 'भ्रमु अनवस्थाने' । घञ् ॥ 'ञित्वरा संभ्रमे' इति धातोर्घटादित्वेन [14]षित्परिभाषया 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इति अङ्प्रत्यये त्वरा ॥ २६ ॥

[1] नाटचे Tj2 [2] 'प्रत्युत्क्रम. प्रयुद्धार्थम्' इति भागुरि (टी. स. ३, पृ. ६६). [3] नोदात्तेति न वृद्धि B5. [4] प्रक्षालित° Tj2 [5] °कर्मण. B5. [6] स्वाध्यायस्य Tj2 [7] °मुखे Tj2. [8] भावे ल्युट्. [9] प्रारम्भ· इति मुद्रितग्रन्थे. [10] हन्, पक्ष; 'हनस्तोऽचिण्णलो' इति तकारादेश [11] 'रभेरशब्लिटो' इति नुम् (मा दी. p. 454 fn.).

[12] राभस्यमुपत्रम इति मुद्रितग्रन्थे [13] आरम्भ B5, TJ2 [14] घटादय. पित (गणसूत्रम्).

(पा) प्रत्युन्नम प्रयोगार्थ । प्रयोगनामनी ।। प्रक्रम स्यादुपक्रम· । ज्ञात्वारम्भनामनी ।। स्यात्—आरम्भ । आरम्भनामानि । 'दोरक्कोट'[1] ।। सभ्रमस्त्वरा । सभ्रमनामनी । [2]सरम्भपाठोऽपि । 'आवेश सवेग सरम्भ सभ्रमस्त्वराटोप ' [3]इति हलायुध (अ मा ४. ३७) ।। २६ ।।

[1] B3 omits [2] 'सरम्भ सभ्रमस्त्वरा' इति पाठोऽप्युपपन्न A1 [3] सभ्रमस्तथाटोप इति मुद्रितग्रन्थे

**प्रतिबन्धः प्रतिष्टम्भोऽवनायस्तु निपातनम् ।**
**उपलम्भस्त्वनुभवः समालम्भो विलेपनम् ।। २७ ।।**

(वि) प्रतिबन्ध इति—[1]प्रतिबध्यते रुध्यत इति प्रतिबन्ध । 'बन्ध [2]बन्धने'। प्रातिकूल्येन स्तम्भन प्रतिष्टम्भ[3]। 'स्तम्भु [4]रोधनस्तम्भनयो '। निरोधस्य नामनी ।। अवनीयते अध प्राप्यत इति अवनाय । 'णीञ् प्रापणे'। नियात्यते [5]अध नियत इति नियातनम्[6]। 'यत [7]निराकारोपस्कारयो '। निपातनमिति वा पाट । अध पातनस्य नामनी ।। [8]उपलभ्यते ज्ञायत इति उपलम्भ । 'डुलभष् प्राप्तौ'। अनुभूयते ज्ञायत इत्युनुभव । 'भू सत्तायाम्'। स्मृतिव्यतिरिक्तज्ञानस्य नामनी ।। [9]समालभ्यते लिप्यत इति समालम्भ । विलिप्यत इति विलेपनम् । 'लिप उपदहे'। विलेपनस्य नामनी ।। २७ ।।

[1] प्रातिकूल्येन बन्धन Pt2 [2] सयमने K3, K6 [3] प्रतिष्टभ्यत इति J2, K6 [4] प्रतिबन्धने K4 [5] अध पात्यते K5 [6] नितरा यातनम् Pt2 [7] नियमावस्कन्दनयो K6 [8] उपलब्धि Pt2 [9] K5 omits 4 lines

**(विव.)** **प्रतिबन्ध. प्रतिष्टम्भ· । कार्यप्रतिबन्धनस्य[1] नामनी । प्रातिकूल्येन बन्धन प्रतिबन्धः । 'बन्ध बन्धने' । घञ्[2] । प्रातिकूल्येन स्तम्भन प्रतिष्टम्भः । स्तम्भेः सौत्राद् धातो. 'स्तन्भे.' (८ ३. ६७) इति मूर्धन्यादेशः ।।** अवनायस्तु निपातनम् । अधोनयननामनी । अवनयनम् अध. पातनम् अवनाय । 'णीञ् प्रापणे'। 'अवोदोर्नियः' (३ ३. २६) इति घञ् ।। निकृष्ट पातन निपातनम्[3]।

नियातनमिति पाठे 'यत [4]निकारोपस्कारयोः' इत्यतो ण्यन्तात् ल्युट् (३. ३. ११५)। उपलम्भस्त्वनुभवः। स्मृतिव्यतिरिक्तज्ञानस्य नामनी। 'डुलभष् प्राप्तौ'। भावे घञ्। 'उपसर्गात् खल्घञोः' (७. १. ६७) इति नुमागमः॥ 'भू सत्तायाम्'। 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्यये अनुभवः॥ समालम्भो विलेपनम्। चन्दनादिना गात्रघर्षणस्य नामनी। आङ्पूर्वो लभिः स्पर्शे वर्तते। समित्युपसर्गस्य सम्यक्त्वमर्थ.। सम्यक् चासौ आलम्भश्चेति समालम्भ.[5]। आलम्भनस्य सम्यक्त्व चन्दनादिसहितहस्तकृतत्वेन भवतीति [6]समालम्भनेनानुलेपनमुच्यते॥ 'लिप उपदेहे' इत्यस्मात् ल्युटि विलेपनम्॥ २७॥

[1] प्रतिघातस्य Tj2 [2] 'हलश्च' (३ ३ १२१) [3] पततेर्ण्यन्तात् ल्युट् [4] निराकार° Tj2 [5] भावे घञ्। 'उपसर्गात् खल्घञो' इति नुम् [6] समालम्भ-शब्देन Tj2.

(पा) प्रतिबन्ध प्रतिष्टम्भ। प्रतिहतिनामनी। [1]'तडसुव'॥ अवनायस्तु निपातनम्। [2]पातननामनी। [1]'पडदोब्बुट'॥ उपलम्भस्त्वनुभव। [3]स्खलितभिन्नज्ञाननामनी। 'तेल्सिनदितिरुगतेल्सुट'॥ समालम्भो विलेपनम्। चन्दनाद्यनुलेपननामनी॥ २७॥

[1] B3 omits [2] निपातनस्य° C1 [3] ज्ञातस्य पुनर्ज्ञाननामनी A1.

**विप्रलम्भो विप्रयोगो विलम्भस्त्वतिसर्जनम्।**
**विश्रावस्तु प्रविख्यातिरवेक्षा प्रतिजागरः॥ २८॥**

(वि) विप्रलम्भ इति—[1]विप्रलभ्यते वियुज्यत इति विप्रलम्भ[2]। विप्रयुज्यत इति विप्रयोग[3]। 'युजिर् योगे'। दम्पत्यो परस्पर विरहस्य विसंवादस्य वा नामनी॥ विलभ्यते दीयत इति विलम्भ। 'डुलभष् प्राप्तौ'। अतिसृज्यते दीयत इति अतिसर्जनम्। [4]'सृज विसर्गे'। दानस्य नामनी॥ विश्रूयते दिगन्तेष्विति विश्राव[5]। प्रविख्यायते प्रकथ्यते दिगन्तेष्विति प्रविख्याति[6]। 'ख्या प्रकथने'। प्रतिख्यातिरिति वा पाठ। [7]ख्यातेर्नामनी॥ अवेक्ष्यत इत्यवेक्षा। 'ईक्ष दर्शने'। प्रतिजागरण प्रतिजागर। 'जागृ निद्राक्षये'। अवधानस्य नामनी॥ २८॥

[1] विप्रकर्षेण लम्भन Pt2 [2] J2, Pt2 add 'डुलभष् प्राप्तौ' [3] विप्रयुक्ति Pt2
[4] K3, K6 omit [5] J2, K2 add 'श्रु श्रवणे' [6] प्रतिख्यायते प्रतिख्याति K5
[7] प्रसिद्धे K5

(विव.) विप्रलम्भो विप्रयोगः । विप्रकृष्टः प्रलम्भः प्राप्तिरस्येति विप्रलम्भः[1] ॥ विप्रयोगोऽपि[2] तद्वत् । यत्र पुनर्नायिकानायकयोः मिथः संबन्धो भावी स एव विश्लेषः पूर्वानुरागादिरूपः शृङ्गारविशेषो विप्रलम्भ उच्यते । न तु विश्लेषमात्रम् ॥ विलम्भस्त्वतिसर्जनम् । 'विपूर्वो लम्भतिर्दाने वर्तते' इत्युपसर्गवृत्तौ ।

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे' ।

इति काव्यप्रकाशिकोदाहरणश्लोके (पृ. ७२, श्लो. ४८) दानार्थत्वेनास्य प्रयोगः ॥ 'सृज विसर्गे' । [3]ल्युटि अतिसर्जनम् । ब्रह्मवर्गोक्तस्यापि दानार्थस्य[4] (पृ. ४६७) पर्यायान्तरप्रदर्शनार्थमिहापि वचनमिति ज्ञेयम्[5] ॥ विश्रावस्तु प्रविख्यातिः । विशिष्टं श्रवणं दिगन्तरेषु प्रसिद्धिर्विश्रावः । 'श्रु श्रवणे' । 'वौ क्षुश्रुवः' (३. ३. २५) इति घञ् । प्रकृष्टा[6] विख्यातिः प्रविख्यातिः[7] ॥ अवेक्षा प्रतिजागरः । पूर्वानुभूतार्थप्रत्यक्षस्य नामनी । प्रागनुभूतस्य पुनरनुसंधानम् अवेक्षा[8] । [9]'गुरोश्च हलः' (३. ३. १०३) इत्यप्रत्ययः । अत एव स्त्रीलिङ्गत्वम् ॥ पूर्ववृत्तमर्थं प्रति जागरणम् ऐकाग्र्यं प्रतिजागरः[10] ॥ २८ ॥

[1] विप्रपूर्वस्य लभेर्भावे घञि 'उपसर्गात् खल्घञोः' इति नुम् [2] 'युजिर् योगे' घञ्
[3] B5 adds इत्यस्मात् [4] 'दानमुत्सर्जनविसर्जने' इति ब्रह्मवर्गे [5] Tv adds एव सर्वत्र पौनरुक्त्य परिहार्यम् (परिहरणीयम् B5) [6] अतिशयिता B5, Gm3, Tv
[7] 'ख्या प्रकथने' क्तिन् (३ ३ ९४) [8] प्रत्यवेक्षा B5, B6. [9] 'ईक्ष दर्शने'
[10] 'जागृ निद्राक्षये'। घञ। 'जाग्रोऽविचिण्णल्ङित्सु' (७ ३ ८५) इति गुण

(पा ) विप्रलम्भो विप्रयोग । [1]सानुरागयो स्त्रीपुरुषयोरसप्राप्तिनामनी ॥ विलम्भस्त्वतिसर्जनम् । वितरणनामनी ॥ विश्रावस्तु परिख्याति[2] । प्रसिद्धिनामनी ॥ अवेक्षा प्रतिजागर । सरक्षणनामनी । [3]'अरयकपेरु' ॥ २८ ॥

[1] वियोगनामनी B3 [2] प्रतिख्याति B3, प्रविख्याति C1. [3] B3 omits

**निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने ।**
**आदीनवास्रवौ क्लेशे मेलके सङ्गसंगमौ ॥ २६ ॥**

(वि.) निपाठेति—निपठ्यत[1] इति निपाठ । निपठ । पाठश्च । 'पठ व्यक्ताया वाचि'। स्तुत्यादिपठनस्य नामानि ॥ [2]तिम्यत इति तेमः । 'तिम आर्द्रीभावे'। स्तिम्यत इति स्तेम । 'स्तिम आर्द्रीभावे'। समुद्यते सिच्यत इति समुन्दनम् । 'उन्दी क्लेदने'। सेचनस्य नामानि ॥ [3]आदीन परिक्षीण वाति गच्छतीति आदीनव । 'वा गतिगन्धनयो'। आस्रवन्ति इन्द्रियाण्यनेनेति आस्रवः । 'स्रु गतौ'। क्लेशस्य[4] नामनी ॥ मेल्यते सेव्यत इति मेलनम् । 'मिल [5]सगमे'। सज्यत इति सङ्ग । 'षञ्ज सङ्गे'। सगम्यत इति सगम[6]। सश्लेषणस्य नामानि ॥ २६ ॥

[1] निपठन Pt2 [2] तेमन तेम, स्तेमन स्तेम Pt2 [3] आ समन्ताद् दीनान् वाति गच्छति Pt2 [4] J2 adds क्लेशन क्लेश, 'क्लिशू विबाधने' [5] सगमने J2, K2, K4 [6] K4, K5 add 'गम्लृ (सृप्लृ J2) गतौ'.

(विव.) निपाठनिपठौ पाठे। गद्यपद्यादिपठनस्य नामानि। 'पठ व्यक्तायां वाचि' इति धातोः 'नौ गदनदपठस्वनः' (३. ३. ६४) इति पाक्षिके अप्प्रत्यये निपठः। तदभावपक्षे घञि निपाठः। पाठश्च (३. ३. १८) ॥ तेमस्तेमौ समुन्दने। [1]वस्त्रशरीरादीनामार्द्रीभवनस्य[2] नामानि। 'तिम ष्टिम आर्द्रीभावे' इति धातुभ्यां घञि क्रमेण तेमः स्तेमश्च ॥ 'उन्दी क्लेदने' इत्यस्मात् ल्युटि (३. ३. ११५) समुन्दनम् ॥ आदीनवास्रवौ क्लेशे। रागद्वेषादिलक्षणक्लेशस्य नामानि। आ समन्ताद् दीना[3] अत्यन्तपरिक्षीणाः, तान् वातीति आदीनवः। 'वा गतिगन्धनयोः'। *'आतोऽनुपसर्गे कः' (३. २. ३) ॥ आस्रवति शिथिलीभवत्यनेनेति आस्रवः*[4]। 'यद्वासुदेवेनादीनमनादीनवमीरितम्' इति माघः[5] (शिशु. २. २२) ॥

'जीवाजीवास्रवा बन्धसवरावपि निर्जरः ।
मोक्षश्चेतीह तत्त्वानि सप्त स्युर्जिनशासने ॥'

इति क्लेशपदार्थे जैनानामास्रवशब्दः प्रसिद्धः[6] ॥ मेलके सङ्गसंगमौ। संश्लेषस्य नामानि। मिलधातुर्लौकिकः संश्लेषणार्थः। घञि मेलः। स्वार्थे कप्रत्यये (५. ४. ५)

मेलकः। 'द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः' इति लीलावत्यां वल्लभाचार्यप्रयोगः। ल्युटि मेलनमिति केचित् पठन्ति॥ 'षञ्ज सङ्गे' इति धातोः भावे घञ्प्रत्यये कुत्वे च[7] (७.३.५२) सङ्गः॥ 'गम्लृ गतौ'। 'ग्रहवृदृनिश्चिगमश्च' (३.३.५८) इत्यप्प्रत्यये गमः। सम्यग् गमः संगमः॥ २६॥

[1] B5, Gm3, Tv add जलादिना [2] °आर्द्रीभावस्य B3, Gm3, Tv [3] 'दीङ् क्षये', भावे क्त, 'स्वादय ओदित' (गणसूत्र), 'ओदितश्च' (८ २ ४५) इति नत्वम् इति भा दी [4] 'स्रु गतौ', 'ऋदोरप्' [5] माघकाव्ये प्रयोग B5 [6] 'जीवाजीवास्रवबन्धसवरनिर्जरमोक्षास्तत्त्वानि' (तत्त्वार्थाधिगमसूत्रम् १ ४) इति सर्वदर्शनसग्रहे (पृ ७३) [7] 'चजो कु घिण्ण्यतो'

(पा) निपाठनिपठौ पाठे। [1]पाठनामानि॥ [2]तेमस्तेमौ समुन्दने। सेचननामानि। 'तड्पुट'[3]॥ आदीनवास्रवौ क्लेशे। क्लेशनामानि। [4]'दोषे त्वादीनवास्रवौ' इति दोपार्थे वैजयन्ती (पृ १६२, श्लो ४)॥ मेलके सङ्गसगमौ। [5]मेलननामानि। 'मेलमु'[3]॥ २६॥

[1] पठनस्य C1 [2] A1 adds सान्तोऽयम् [3] B3 omits [4] 'रोषे त्वादीनवाश्रवौ' इति मुद्रितग्रन्थे [5] मेल° A1, C1

**अन्वीक्षणं विचयनं मार्गणं मृगणा मृगः।**
**परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्॥ ३०॥**

(वि) अन्वीक्षणमिति—[1]अन्वीक्ष्यते मृग्यत इत्यन्वीक्षणम्[2]। 'ईक्ष दर्शने'। उपसर्गवशाद् धातूनामनेकार्था भवन्ति। [3]विचीयते मृग्यत इति विचयनम्। 'चिञ् चयने'[4]। मार्ग्यत इति मार्गणम्। 'मार्ग अन्वेषणे'। मृग्यत इति मृगणा। मृगश्च। 'मृग अन्वेषणे'। अन्वेषणस्य नामानि॥ [5]परिरभ्यते आलिङ्ग्यत इति परिरम्भ। 'रभ राभस्ये'। [6]परिष्वज्यत इति परिष्वङ्ग। 'ष्वञ्ज परिष्वङ्गे'। सश्लिष्यत इति सश्लेष। 'श्लिष आलिङ्गने'। उपगूह्यते आलिङ्ग्यत इति उपगूहनम्[7]। आलिङ्गनस्य नामानि॥ ३०॥

[1] अनुसृत्य ईक्षणम् Pt2 [2] K5 adds सवीक्षणमिति वा पाठ [3] विचितिविचयनम् Pt2 [4] K3, K5 add विपूर्व अन्वेषणे [5] परिरम्भण परिरम्भ Pt2 [6] परित स्वञ्जन Pt2 [7] K5 adds 'गुह सवरणे', 'ऊदुपधाया गोह' इति ऊकारादेश

(विव.) अन्वीक्षणं—मृगः। प्रियवस्तुविषयस्यान्वेषणस्य नामानि। मुहुरीक्षणम् अन्वीक्षणम्। 'ईक्ष दर्शने'। ल्युट्। [1]सम्यग् ईक्षणं समीक्षणमिति पाठान्तरेण केचित् प्रवर्तन्ते ॥ 'चिञ् चयने' इति धातोरुपसर्गवशाद् अर्थान्तरे वर्तमानात् ल्युटि विचयनम् ॥ 'मार्ग अन्वेषणे' [2]इत्यतो ल्युटि मार्गणम् ॥ 'मृग अन्वेषणे' इत्यस्मात् चौरादिकाद् अदन्ताद् युचि[3] (३. ३. १०७) मृगणा। अदन्तत्वाद् गुणाभावः ॥ [4]तत एव धातोः 'एरजण्यन्तानाम्'[5] इति ण्यन्तनिषेधस्य प्रायिकत्वाद् अचि प्रत्यये णिलोपे च मृगः। घञि वा मृगः ॥ शेषे—'अथ मार्गणा। मृगणं विचयोऽन्वीक्षाप्यन्वेषणगवेषणे स्त्रीक्लीबयोः' इति। ब्रह्मवर्गे तु (पृ. ४६६) अन्वेषणागवेषणाशब्दौ स्त्रीलिङ्गावुक्तौ[6]। अतः शब्दद्वयमपि स्त्रीनपुंसकोभयलिङ्गम् ॥ परिरम्भः—उपगूहनम्। आलिङ्गनस्य नामानि। 'रभ राभस्ये' इति धातोः परिपूर्वाद् घञि 'रभेरशब्लिटोः' (७. १. ६३) इति नुमागमे परिरम्भः ॥ 'ष्वञ्ज परिष्वङ्गे' इत्यतो घञि कुत्वे[7] च (७. ३. ५२) 'उपसर्गात् सुनोति ...' इत्यादिना (८. ३. ६५) षत्वे च परिष्वङ्गः ॥ 'श्लिष आलिङ्गने' इत्यतो घञि संश्लेषः ॥ 'गुहू संवरणे' इत्यस्मादुपपूर्वात्[8] ल्युट्प्रत्यये लघूपधगुणे (७. ३. ८६) 'ऊदुपधाया गोहः' (६. ४. ८९) इत्यूकारादेशे [9]सति उपगूहनम् ॥ ३० ॥

[1] कश्चित्तु समीक्षणमिति पाठमाह B6. [2] इति धातो. Tv. [3] 'ण्यासश्रन्थो युच्' इति युच् [4] तस्मात् Tv. [5] स्वामिटीकायामपि एव दृश्यते (पृ २६६). [6] Gm3, Tv add 'लीलावत्याम् अन्वेषणगवेषणशब्दौ स्त्रीनपुसकयोर्वर्तेते' इत्यर्थं. [7] 'चजो कु घिण्यतो'. [8] Tv adds आलिङ्गनार्थात् [9] B5 adds कृते

(पा) अन्वीक्षण—मृग। मृगयेति वा पाठ। अन्वेषणनामानि ॥ [1]परिरम्भ—उपगूहनम्। आलिङ्गननामानि। 'आलिङ्गन [2]तथा क्रोडीकरण चाङ्कपाल्यपि'। एतानि त्रीणि च ॥ ३० ॥

[1] परीरम्भ C1. [2] A1 omits तथा.

**निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्।**
**प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥**

(वि) निर्वर्णनमिति—[1]निर्वर्ण्यते दृश्यत इति निर्वर्णनम्। [2]'वर्ण वर्णक्रियाविस्तारगुणवचनेषु'। [3]निध्यायते दृश्यत इति निध्यानम्। 'ध्यै चिन्तायाम्'।

दृश्यत इति दर्शनम्[4] । आलोक्यत इति आलोकनम् । 'लोकृ दर्शने' । ईक्ष्यत इति ईक्षणम् । 'ईक्ष दर्शने' । ईक्षणस्य नामानि ।। [5]प्रत्याख्यायते निराक्रियत इति प्रत्याख्यानम् । 'ख्या प्रकथने' । निरस्यत इति निरसनम् । 'असु क्षेपणे' । प्रत्यादिश्यत इति प्रत्यादेश: । 'दिश अतिसर्जने' । [6]निराक्रियत इति निराकृति । निराकरणस्य नामानि ।। ३१ ।।

[1] नितरा वर्णन $Pt_2$    [2] वर्ण स्तुतौ $K_5$.    [3] नितरा ध्यान $Pt_2$.    [4] $J_2$, $K_2$ add 'दृशिर् प्रेक्षणे'.    [5] प्रतिविरुद्धमाख्यान $Pt_2$    [6] निकृष्टम् आ समन्तात् करण $Pt_2$

(विव.) निर्वर्णनं—ईक्षणम् । [1]चाक्षुषज्ञानविषयीकरणस्य नामानि । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' । 'ध्यै चिन्तायाम्' । एतावुपसर्गवशाद् ईक्षणार्थौ । 'दृशिर् प्रेक्षणे' 'लोकृ दर्शने' 'ईक्ष दर्शने' । एतेभ्य: क्रमेण ल्युडन्ता: निर्वर्णनादय: [2]शब्दा: ।। प्रत्याख्यानं—निराकृति: । निराकरणस्य नामानि । 'ख्या प्रकथने' । 'असु क्षेपणे' । आभ्यां ल्युटि क्रमेण प्रत्याख्यानं निरसन च । 'दिश अतिसर्जने' [3]इत्यतो घञि प्रत्यादेश: । करोते: स्त्रियां क्तिनि (३. ३. ६४) निराकृति: । उपसर्गवशाद् धातुचतुष्टयस्यापि एकार्थत्वम् ।। ३१ ।।

[1] चक्षुरिन्द्रियविषयीकरणनामानि $Gm_1$, Tv    [2] $Tj_1$, $Tj_2$ add पञ्च    [3] इति धातो Tv.

(पा ) निर्वर्णन—ईक्षणम् । अत्रैकवद्भाव । दर्शननामानि । [1]'निभालननिशामने' । एते द्वे च ।। प्रत्याख्यान—निराकृति । निराकरणनामानि[2] ।।३१।।

[1] निफालन° $A_1$    [2] उपसर्गवशादर्थविशेष $C_1$

**उपशायो विशायश्च पर्यायशयनार्थकौ ।**
**अर्तनं च ऋतीया च हृणीया च घृणार्थका: ।। ३२ ।।**

(वि ) उपशाय इति—[1]उपशय्यते पर्यायेण निद्रायत इति उपशाय । विशायश्च । 'शीङ स्वप्ने' । पर्यायशयनस्य नामनी ।। ऋत्यत इति अर्तनम् । ऋतीया च । [2]'ऋति घृणायाम्'[3] इति सौत्रो धातु । हृणीयत इति हृणीया । 'हृणीङ रोषणे लज्जाया च' । [4]घृणानामानि ।। ३२ ।।

[1] उपशाय्यते K6; उपशयन Pt2 [2] 'ऋति सौत्रो धातु घृणाया वर्तते' (काशिका पृ १५३) [3] जुगुप्सायाम् Pt2 [4] 'घृ सेचने'। वाहुलकान्नक्। घृणा। इति भा दी (पृ ८८)

(विव.) उपशायो—अर्थकौ। नगरप्राकारादिरक्षणे[1] नियुक्तानां[2] मध्ये केषुचित् जाग्रत्सु केषाचित् शयनम्, शयितेषु जाग्रत्सु पूर्वं जाग्रतां शयनम्। एवंक्रमेण स्वेच्छापरिकल्पितप्रहरमुहूर्ताद्यवच्छेदेन शयनं पर्यायशयनम्। तत्र उपशायविशाय-शब्दौ भवतः। जाग्रतामुप समीपे शयनमुपशायः॥ वैपरीत्येन विपर्यासेन वा शयनं विशायः। 'व्युपयोः शेतेः पर्याये' (३. ३. ३९) इति घञ्॥ अर्तनं—घृणार्थकाः। ऋतिः सौत्रो धातुः। घृणार्थ इति काशिका (पृ. १५३)। अत्र न्यासकारः (१, पृ. ५२१)—'सूत्र एव पठितत्वात् सूत्रे भवः सौत्रः। घृणा जुगुप्सा, [3]तस्यामय धातुर्वर्तते' इति। तथा च अर्तनादयस्त्रयः शब्दा जुगुप्सावचना इत्यर्थः। ततश्च ऋतेर्धातोर्भावे ल्युटि (३. ३. ११५) गुणे च अर्तनम्॥ तस्मादेव धातोः 'आयादय आर्धधातुके वा' (३. १. ३१) इति 'ऋतेरीयङ्' (३. १. २९) इति ईयङ्प्रत्यये सति तदन्तस्य धातुसंज्ञायाम् (३. १. ३२) 'अप्रत्ययात्' (३. ३. १०२) इति भावे स्त्रियामकारप्रत्यये [4]टापि च ऋतीया॥ हृणीङ[5] इति कण्ड्वादौ पठ्यते। ततः 'कण्ड्वादिभ्यो यक्' (३. १. २७) इति यकि पूर्ववदकारप्रत्यये (३. ३. १०२) हृणीया॥ ३२॥

[1] रक्षणार्थम् Tv [2] Gm3, Tv add भृत्यादीना. [3] स्वभावत एव वर्तते इति मुद्रितग्रन्थे. [4] Tj1, Tj2 omit टापि [5] Tv adds 'हृणीङ रोषे लज्जाया च

(पा.) उपशायो—अर्थकौ। उपशायविशायशब्दौ [1]पर्यायशयनार्थकौ स्याताम्। पर्यायार्थमात्रवाचिविति हलायुध.[2] (अ. मा ४. ५४)।

'परिपाट्यानुपूर्वी स्यादुपशायोऽनुपात्यय.।
अनुक्रमश्च पर्यायो विशाय परिकीर्तितः॥'

इति। अर्तन—घृणार्थकाः। [3]जुगुप्सानामानि॥ ३२॥

[1] पर्यायशयननामनी B3. [2] इति केचित् B3 [3] घृणा° C1

स्याद् व्यत्यासो विपर्यासो व्यत्ययस्तु विपर्ययः।
पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्ययः॥ ३३॥

(वि) स्यादिति—व्यतिक्रम्यासन व्यत्यास । [1]वैपरीत्येनासन विपर्यास । 'असु क्षेपणे'। व्यतिक्रम्यायन व्यत्यय । विपर्ययश्च । 'इण् गतौ'। [2]कर्मणो व्यत्ययादेर्नामानि ।। क्रम परित्यज्यायन पर्यय । अतिक्रमणमतिक्रम । अतिक्रम्य पतनमतिपात. । 'पत्लृ गतौ'। उपपन्नस्य अत्यय [3] उपात्यय [4]। [5]आचारव्यतिक्रमस्य नामानि ।। ३३ ।।

[1] विपरीतमसन K3, Pt2 [2] कर्मणा व्यतिक्रमस्य K5 [3] अत्ययन Pt2
[4] J2, K5 add 'इण् गतौ' [5] आचाराद्यतिक्रमस्य J2, K5

(विव.) स्याद्—विपर्यासः। नियतस्थानस्य सतः स्थानान्तरापत्तेर्नामनी। यथा—व्यत्यस्तपदान्वयः श्लोकः। मन्त्रविपर्यासः। तन्त्रविपर्यास इति। प्राप्तस्थानमतिक्रम्य तद्विरोधेनासन क्षेपण व्यत्यासः।। उचित स्थान परिहाय विरोधेनास क्षेपण विपर्यासः। 'असु क्षेपणे'। घञ् ।। व्यत्ययस्तु विपर्ययः। प्रतिलोमक्रमस्य नामनी। यथा—'विपरीतौ परिग्रहावेके समामनन्ति। एतद्वा विपरीतम्' इति। सहजसिद्धस्य पूर्वापरभवस्य व्यतिलङ्घनेन तद्विपरीतस्य अयन प्राप्तिः व्यत्ययः ।। [1]पर्ययो नाम क्रमातिक्रमः। विरुद्धश्चासौ पर्ययश्चेति विपर्यय.।। पर्ययो—उपात्ययः। तस्मिन्नतिक्रम इत्यर्थ.। ततश्च पर्ययादयश्चत्वारः शब्दाः पर्याया इत्युक्त भवति। ब्रह्मवर्गे पूर्वमानुपूर्वप्रसङ्गाद् अतिक्रमे बुद्धिस्थे तद्वाचकत्वेन पर्ययातिपातोपात्ययशब्दास्त्रयोऽप्युक्ता.[2] (पृ. ४७१), व्युत्पादिताश्च। इह तु व्युत्क्रमालकारादौ प्रतिलोमक्रमातिक्रमणेऽप्येषा शब्दाना प्रवृत्तिरस्तीति दर्शयितु त एव शब्दा उच्यन्त इति न पौनरुक्तचम्। अतिक्रमस्य उपात्ययरूपत्वेन 'इण् गतौ' इति धातोः 'परावनुपात्यय इणः' (३. ३. ३८) इति घञ्प्रतिषेधे[3] 'एरच्' (३. ३. ५६) इत्येरचि पर्ययः।। क्रमस्यातिलङ्घनमतिक्रमः। अति क्रमस्य पतन प्राप्तिरतिपात.। उपपन्नस्य क्रमस्यात्ययः उपात्ययः। 'इण् गतौ'। एरच्[4] ।। ३३ ।।

[1] विपर्ययोऽतिक्रम । तस्मिन्नतिक्रमात् क्रमविपर्यय इत्युक्तम् Tv [2] Tv adds 'पर्यायोऽतिक्रमस्तस्मिन्नतिपात उपात्यय', आनुलोम्यविरुद्धश्च पर्ययश्च विपर्यय [3] Tj1, Tj2 add सति [4] एते शब्दा प्रागपि व्युत्पादिता Tv

(पा) स्याद—व्यत्ययश्च विपर्यये। विपर्यासनामानि। 'नडमड्ट' ।।
पर्ययो—उपात्यय। अतिक्रमणनामानि ।। ३३ ।।

**प्रेषणं यत् समाहूय तत्र स्यात् प्रतिशासनम् ।**
**स संस्तावः क्रतुषु या स्तुतिभूर्मिद्विजन्मनाम् ॥ ३४ ॥**

(वि) प्रेषणमिति—[1]प्रतिशास्यत इति प्रतिशासनम् । 'शासु अनुशिष्टौ'। भृत्यादिक समाहूय यत्प्रेषण तस्य नाम ॥ सस्तुवन्ति [2]इन्द्रादीन् उद्गात्रादयोऽत्रेति सस्ताव । 'ष्टुञ् स्तुतौ' । [3]द्विजन्मना क्रतुषु या स्तुतिभमि. तस्या नाम ॥ ३४ ॥

[1] भृत्यान् प्रति शासन Pt2 [2] इन्द्रादय सस्तूयन्तेऽत्रेति J2, K3 [3] द्विजन्मना क्रतुभूमिषु या स्तुति स सस्तव K6

(विव.) प्रेषणं—प्रतिशासनम् । आह्वानेन अभिमुखीभूताना शिष्य-पुत्रादीनां कर्तव्यार्थे यत् प्रेषणं नियोजनं तत्र प्रतिशासनशब्दः । [1]कार्यमर्थं प्रति शासनं प्रतिशासनम् । 'शासु अनुशिष्टौ'। ल्युट् । यथा—आग्नीध्र व्रीहिणौ पुरोडाशौ अधिश्रयेत्यादि ॥ स संस्तावः—द्विजन्मनाम् । क्रतुषु अग्निष्टोमादि-यज्ञेषु द्विजन्मनाम् [2]उद्गात्रादीनां [3]स्तोत्रकरणार्थमुपविष्टानामधिकरणभूता सौमिकवेद्या उत्तरासस्मीपस्था वा सदःशालायामौदुम्बर्यन्तरा[4] वा या भूमिः स संस्ताव उच्यते । संस्तुवन्त्यत्र उद्गात्रादय इति संस्तावः । 'ष्टुञ् स्तुतौ'। 'यज्ञे समि स्तुवः' (३. ३. ३१) इत्यधिकरणे घञ् ॥ ३४ ॥

[1] वर्तव्य° Gm1, Tv [2] छन्दोगाना Tv [3] Gm3, Tv add बहिष्पवमानादि°. [4] मध्यमस्थूणासमीपे TJ1, TJ2

(पा) प्रेषण—प्रतिशासनम् । समाहूय[1] प्रेषण [2]प्रतिशासन स्यात् ॥ सस्तावस्तु—द्विजन्मनाम् । यज्ञेषु ब्राह्मणानामृक्पाठभूमि [3] सस्ताव स्यात् । क्वचिदर्थसस्तावमपलभ्य स्थिता इति पाठक्रमेऽपि स्यात् ॥ ३४ ॥

[1] C1 adds भृत्यान् [2] A1 adds यत् तत् [3] स्तुतिभूमि C1

**निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ।**
**स्तम्बघ्नस्तु स्तम्बघनः स्तम्बो येन निहन्यते ॥ ३५ ॥**

(वि) निधायेति—उद्घन्यते तनूक्रियते [1]तक्षणीय काष्ठमत्रेत्युद्घन । 'हन हिंसागत्यो.'। [2]तक्षणाश्रयदारुनाम ।। स्तम्बो [3]हन्यतेऽनेनेति स्तम्बघ्न.। स्तम्बघनश्च । स्तम्बो येन हन्यते तस्य[4] नामनी ।। ३५ ।।

[1] K5 omits　　[2] यत्र काष्ठे काष्ठ निधाय तक्ष्यते तस्याधिकरणीभूतस्य काष्ठस्य नाम J2, K2, K4　　[3] निहन्यते K5　　[4] J2, K2, K4 add लवित्रादे.

(विव.) निधाय—उद्घनः । [1]तक्ष्यमाणकाष्ठस्याधारभूतं काष्ठमुद्घन इत्युच्यते । उद्घन्यते [2]तक्षणीयकाष्ठमत्र तनूक्रियत इति उद्घनः । 'उद्घनोऽत्याधानम्' (३. ३. ८०) इति निपातनात् साधुः ।। स्तम्बघ्नस्तु—निहन्यते । येन खनित्रादिना वीरुत्तृणादिस्तम्बः समूलं निहन्यते छिद्यते स स्तम्बघ्नः । 'करणे हनः' इति पदद्वयस्यानुवृत्तौ 'स्तम्बे क च' (३. ३. ८३) इति कप्रत्यये 'गमहन...' इत्यादिना (६. ४. ९८) उपधालोपे 'हो हन्तेः'[3] (७. ३. ५४) इति कुत्वे च स्तम्बघ्नः । अत्र उपधालोपस्य स्थानिवद्भावो नास्ति । तथा च काशिकाकारः (पृ. ३४१)—'ञ्णित्प्रत्ययो हन्तेर्विशेषणम् । नकारो हकारस्य । नकारे परतो हन्तेर्हकारस्य इति संनिपातकृतमानन्तर्यमाश्रीयते । स्थानिवद्भावकृतं तु यदनानन्तर्यं तदविघातकं वचनसामर्थ्यात्' इति । महाभाष्यकारस्तु (१. १. ५८, पृ. १५३)—'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति नपदान्तसूत्रस्थवार्त्तिकमाश्रित्य स्थानिवद्भावं परिजहार । सूत्रस्थचकारादप्प्रत्यये घनादेशे च स्तम्बघनः । यथा [4]इषीकया स्तम्बो हन्यते । तत्र स्त्रीलिङ्गविषये कप्रत्ययस्य सर्वापवादत्वात् स्तम्बघ्नेति केचित् । 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३. ३. ९७) इति निपातनस्य सर्वापवादत्वात् स्तम्बहा इति भवितव्यमित्यपरे । सूत्रस्य चकारादप्प्रत्यये घ्नादेशे च स्तम्बघ्नः । स्त्रीत्वविवक्षायां तु—'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन' (वा. ३. ३. १२६) इति वार्तिककारवचनाद् अप्प्रत्ययबाधकत्वेन प्रसक्तः स्त्रीप्रत्ययं बाधित्वा सक्तुधानी तिलपीडनी इतिवत् स्तम्बहननीति भवितव्यमिति । तदेतन्महाभाष्ये 'स्तम्बे क च' (३. ३. ८३, पृ. १५१) इति सूत्रे स्पष्टमुक्तम् ।। ३५ ।।

[1] काष्ठस्य तक्षणार्थं तदध स्थापितमाधारभूत Tv　　[2] तक्षणा Tv　　[3] 'हो हन्तेर्ञ्णिन्नेषु'.　　[4] एषीकयेति महाभाष्ये (३ ३ ८३)

(पा) निधाय—उद्घन । यत्र काष्ठे काष्ठ निक्षिप्य तक्ष्यते स तक्ष्यमाणस्तरु उद्घन स्यात् । अनुक्तम्—'यत्र निक्षिप्य कूटेन हन्यते सा निघातिका'। यत्र निक्षिप्यायसमुद्गरेण निहन्यते सा निघातिका[1] स्यात् । [2]'यिनुमुकोट्टिदागलि' ॥ स्तम्बघ्नस्तु—निहन्यते । शाल्यादिस्तम्बो येन निहन्यते [3]छिद्यते [4]तादृशो लवित्रादि स्तम्बघ्न स्तम्बघनश्च स्यात् । [2]'बडिकाडवलि' ॥ ३५ ॥

[1] निघानका इति वैजयन्त्याम् (पृ १३७, श्लो २६). [2] B3 omits
[3] छेद्यते A1. [4] तादृश शक्टलवित्र K1

**आविधो विध्यते येन तत्र विष्वक्समे निघः ।**
**उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥**

(वि) आविध इति—आ [1]समन्ताद् [2]विध्यतेऽनेनेति आविध. । 'व्यध ताडने'। सूच्यादिनाम ॥ [3]नियत हन्यने [4]ताडचत इति निघ.[5] । समन्तात् समस्य वेदिकादेर्नाम ॥ उत्कीर्यते धान्यमिति[6] उत्कार । निकीर्यत इति निकार. । 'कॄ विक्षेपे'। धान्योत्क्षेपणस्य नामनी ॥ ३६ ॥

[1] K4, K5 omit [2] K4, K5 add वर्णादिक. [3] निहन्यते K6
[4] दीर्यते K5 [5] 'हन हिंसागत्यो.' J2 [6] धान्यमवेति K6.

(विव.) आविधो विध्यते येन तत्र । येन सूच्यादिना मणिमुक्तादिकं विध्यते सरन्ध्रं क्रियते तत्र [1]आविधशब्दः । आविध्यतेऽनेनेति आविधः । 'व्यध ताडने'। 'घञर्थे कविधानम् स्थास्नापाव्यधिहनियुध्यर्थम्' (वा. ३. ३. ५८) इति कप्रत्ययः[2] । अत्र शेषकारः[3]—

'आविधो मणिदार्वादेः सरन्ध्रीकृतिसाधनम् ।
पाषाणप्रेरकं यत्र चाविद्धं केचिदूचिरे ॥'

इति ॥ विष्वक्समे निघः । समन्ततः समे तुल्यारोहपरिणाहे द्रव्ये निघशब्दः । यथा—निघाः वृक्षाः । निघाः शालयः । निघो धान्यराशिरित्यादि । नियतं हन्यते समन्ततः सम्यक्प्राप्त्यर्थं ताडघत इति निघः[4] । 'निघो निमितम्' (३. ३. ८७) इति निपातनाद् अप्प्रत्ययः, टिलोपः, घत्वं च ॥ उत्कारश्च—उत्क्षेपणार्थकौ । पलालतृणशोधापगमार्थं[5] धान्यस्य शूर्पादिभिरूर्ध्वक्षेपणं राशीकरणं वा धान्योत्क्षेपणम्, तदभिधायकावित्यर्थः । [6]'उन्योः' इत्यनुवृत्तौ 'कॄ धान्ये' (३. ३. ३०) इति सूत्रेण 'कॄ विक्षेपे' इति धातोर्घञि उत्कारः, निकारश्च ॥ ३६ ॥

[1] आविद्ध° Tj1, Tj2　[2] 'ग्रहिज्या . .' इत्यादिना सप्रसारणम्　[3] धनजय· Tv.
[4] Gm1, Tv add 'हन हिंसागत्यो'.　[5] अपसरणार्थम् B5, B6.　[6] 'उन्योर्ग्र.' (३. ३. २६)

(पा ) आविधो विध्यते येन तत्र । येन विध्यते स [1]आविधः स्यात्[2] ॥ विष्वक्समे निघः । निघ इति पाठ एव साधु. । सदृशारोहपरिणाहवान्निघः स्यात् । [3]'वडिशलमुदलैनदि' । अनुक्तम्—'स्नेहे तिलाना तैलं स्याद् अन्येषामन्यपूर्वकम्' । तिलाना स्नेह. तैल स्यात् । अन्येषा स्नेह. अन्यवाचकवद् एरण्डतैलमित्यादि । 'अविसोढाविदूसाविमरीसानि पयस्यवे' । अवे पयसि अविसोढादिशब्दत्रय[4] स्यात् ॥ उत्कारश्च—उत्क्षेपणार्थकौ । उत्कारनिकारशब्दौ द्वौ धान्यानामुत्क्षेपणार्थकौ स्याताम् ॥ ३६ ॥

[1] आविद्ध A1, C1.　[2] A1 adds शशयष्टचादिनाम । 'बडिकोलमोदलैंनदि'.
[3] B3 omits.　[4] °आदित्रय शब्दा स्यु A1

**निगारोद्गारविक्षावोद्ग्राहा निगरणादिषु ।**
**आरत्यवरतिविरतय उपरामेऽथास्त्रियां तु निष्ठेवः ॥ ३७ ॥**
**निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ।**

(वि.) निगार इति—निगीर्यत इति निगार[1] । 'गॄ निगरणे' । निगरणस्य नाम ॥ उद्गीर्यत इत्युद्गार[2] । वमननाम ॥ विक्ष्यत इति विक्षाव[3] । 'टुक्षु शब्दे' । वासस्य नाम ॥ उद्गृह्यत इत्युद्ग्राह । 'ग्रह उपादाने' । उद्ग्रहणस्य नाम ॥ आरम्यत उपरम्यत[4] इत्यारति· । अवरति । विरति[5] । उपरामश्च । 'रमु क्रीडायाम्' । कार्यादिनिवृत्तिनामानि ॥ निष्ठीव्यत इति निष्ठीव । निष्ठेव[6] । निष्ठ्यूति· । निष्ठेवनम् । निष्ठीवन च । 'ष्ठिवु निरसने' । आस्यगतश्लेष्मादिनिरसनस्य नामानि ॥ ३७ ॥

[1] निगरण निगार Pt2　[2] उद्गरणम् Pt2.　[3] विरुद्ध क्षव Pt2　[4] K5 adds उपरम्यत इत्युपरति　[5] विरम्यत इति K5　[6] नितरा ष्ठेव Pt2

'(विव.) निगार—तु गरणादिषु । निगारादयश्चत्वारः शब्दा यथाक्रमं निगरणोद्गिरणक्षवनोद्ग्रहणरूपेष्वर्थेषु वर्तन्त इत्यर्थः । तत्र निगारोऽभ्यवहरणम् । [1]'गीर्णिर्गिरौ' इत्युक्तम् (श्लो. ११)। तथापि शब्दान्यत्वाद् उद्गारशब्दप्रसङ्गाच्च

निगारोऽप्युच्यत इति न पौनरुक्त्यम्। उदानवायोः सशब्दमास्यमुखान्निर्गमनं वमनं वा उद्गारः। 'उन्न्योर्ग्रः (३. ३. २९) [2]इत्युभयत्रापि घञ्॥ विक्षावः कासः। 'टुक्षु शब्दे' इति धातोः 'वौ क्षुश्रुवः' (३. ३. २५) इति घञ्॥ कस्यचिदूर्ध्वीकृत्य ग्रहणम् उद्ग्राहः। यथा—[3]'पदवीमुद्गृहीतालकान्ताः' इति कालिदासः (मेघ. १.८)। 'उदि ग्रहः' (३.३.३५) इति घञ्॥ अथार्यावृत्तद्वयम्। आरति— उपरामे। निवृत्तिनामानि। 'रमु क्रीडायाम्' इति धातोः स्त्रियां क्तिनि (३. ३. ९४) 'अनुदात्तोपदेश...' इत्यादिना (६.४.३७) अनुनासिकलोपे च आरतिः, अवरतिः विरतिश्च। तस्मादेव धातोरुदात्तोपदेशाभावाद् 'नोदात्तोपदेश...' इत्यादिना (७. ३. ३४) वृद्धिप्रतिषेधो नास्ति। 'यम उपरमे' इति वृद्धिरहितत्वेन सत्यपि निर्देशे 'अबाधकान्यपि निपातनानि' इति वचनाद् वृद्धिबाधो नास्ति। किं तु उपरामशब्दोऽप्यस्ति। अत एव 'नोदात्तोपदेशस्य...' (७. ३. ३४) इति सूत्रे काशिकाकारः (पृ. ३३५)—'यमु उपरमे' इति निपातनाद् उपरमशब्दोऽप्यनुसर्तव्यः[4] इति॥ अथास्त्रियां—अभिन्नानि। आस्यगतश्लेष्मादिनिरसनरूपार्थाभिधायकत्वेन चत्वारः शब्दा [5]एकार्था इत्यर्थः। 'ष्ठिवु निरसने'। ह्रस्वोपधाद् धातोर्भावे घञि (३. ३. १८) लघूपधगुणे च (७. ३. ८६) निष्ठेवः। 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः' (वा. १. ३. ५) इति वचनाद् धात्वादेः सत्वं न भवति। तु शब्दः पादपूरणार्थः इति सुबोधिनीकारः। सर्वानन्दस्तु (पृ. ७०) 'वा स्त्रियाम्' इति पठित्वा निष्ठेवशब्दो रूपभेदात् पुंलिङ्गः। विकल्पेन स्त्रीत्वविधानात् स्त्रियां टापि निष्ठेवेत्याह। सुभूतिचन्द्रस्तु तमेव पाठमाश्रित्य आकारप्रश्लेषेण व्याचष्ट। 'अस्त्रियामित्यत्र नञ् सादृश्यार्थत्वाद् अस्त्रीशब्देन स्त्रीसदृशनपुंसकव्यक्तचभिधानाद् निष्ठेवशब्दो विकल्पेन नपुंसकलिङ्गः, रूपभेदात् पुंलिङ्गश्च' इति॥ तत एव धातोः क्तिनि 'च्छ्वोः शूडनुनासिके च' (६. ४. १९) इत्यूठि निष्ठ्यूतिः। 'ष्ठिवुसिव्योर्ल्युटि वा दीर्घः' (सर. कण्ठा. २. ४. १६७) इति ल्युटि विकल्पेन दीर्घे च निष्ठीवनम्। पक्षे लघूपधगुणे (७. ३. ८६) निष्ठेवनम्॥ ३७॥

[1] Tv adds यद्यपि [2] इति 'गॄ निगरणे' इति धातो [3] Gm3, Tv add त्वामारूढ पवन° [4] मुद्रितग्रन्थे 'निपातनादनुगन्तव्य' इति दृश्यते [5] एकार्थाभिधायका Tv

(पा ) निगार—तु गरणादिषु । निगारादय शब्दा गरणादिष्वर्थेषु स्यु. । निगारो निगरण भोजनम् । उद्गार उद्गरण वमनम् । विक्षावो विक्षवण ध्वनि । [1]'विक्षावस्तत्र लोकाना जामदग्न्यमिहाह्वयत्' इति भट्टिः । उद्ग्राह उद्ग्रहण च धारणार्थ [2]कलशादिकण्ठवद्धरज्जुनामनी[3] ।। आरति—उपरामे । [4]विश्रान्तिनामानि ।। अथास्त्रिया—अभिन्नानि । निष्ठीवननामानि । [5]'त्राशि-उमुयिट' ।। ३७ ।।

[1] विक्षावैस्तोयविश्राव तर्जयन्तो महोदधे ' इति भट्टिकाव्ये (७. ३६) दृश्यते [2] कलशाननबद्ध° A1, C1 [3] C1 adds 'उगमु' [4] विराम° B3 [5] B3 omits

**जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः ।। ३८ ।।**
**उदजस्तु पशुप्रेरणमकरणिरित्यादयः शापे ।**
**गोत्रान्तेभ्यस्तस्य वृन्दमित्यौपगवकादिकम् ।। ३९ ।।**

(वि ) जवन इति—जवतेऽनेनेति जवनम्[1] । जूतिश्च । 'जु गतौ' । [2]वेगगतिनामनी ।। सीयत इति साति । 'षोऽन्तकर्मणि' । अवसानस्य नाम ।। ज्वर्यत इति ज्वर [3] । जर्तिश्च । 'ज्वर रोगे' । ज्वरस्य नामनी ।। उदज्यते पशवोऽनेनेति उदज । 'अज गतिक्षेपणयो ' । पशुप्रेरणस्य नाम ।। अकरणिरित्यादय शापे वर्तन्ते । न क्रियत इत्यकरणि । आदिग्रहणाद् अजननि, [4]अवग्राह, निग्राह. इत्यादय शापे वर्तन्त । शापस्य नामानि ।। [5]गोत्रप्रत्ययान्तेभ्य शब्देभ्य तस्य समूह इत्यस्मिन्नर्थे औपगवकम् इत्यादय शब्दा [6]वर्तन्ते । उपगोरपत्यानि औपगवा । तेषा समूह औपगवकम् । आदिग्रहणाद् गार्गकम् । दाक्षकमित्यादि[7] ।। ३८—९ ।।

[1] जवो जवनम् Pt2 [2] वेगवत K6 [3] ज्वरण Pt2 [4] निग्रह, अवग्रहः J2, K6 [5] J2, K2, K4 omit प्रत्यय [6] प्रवर्तन्ते J2 [7] J2, K2 add वात्सकम

(विव.) जवने जूति· । वेगगतेर्नामनी । जु इति सौत्रो धातुर्गत्यर्थः । 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३. ३. ९७) इति निपातनात् क्तिन्प्रत्ययो दीर्घश्च । [1]ल्युटि जवनम् ।। सातिस्त्ववसाने स्यात् । अवसान क्रियायाः समाप्तिः । 'षोऽन्तकर्मणि' इति धातोः पूर्ववद् निपातनात् (३. ३. ९७) सातिशब्दः साधुः ।

अथ ज्वरो जूर्तिः। ज्वराख्यरोगविशेषस्य नामनी। 'ज्वर रोगे' इति धातोर्घञि घटादित्वेन मित्त्वपरिभाषया[2] (६. ४. ९२) वृद्ध्यभावे ज्वरः॥ 'स्त्रियां क्तिन्' (३. ३. ९४)। 'ज्वरत्वर...' इत्यादिना (६. ४. २०) वकारस्योपधायाश्च ऊडादेशे जूर्तिः॥ उदजस्तु पशुप्रेरणम्। गवादिपशूनां प्रदेशान्तरं प्रति चालनमुदजः। 'अज गतिक्षेपणयोः' इत्यस्मात् 'समुदोरजः पशुषु' (३. ३. ६९) इत्यप्प्रत्यये उदजः॥ अकरणिरित्यादयः शापे। [3]शाप आक्रोशः। 'आक्रोशे नञ्यनि.' इत्याक्रोशरूपार्थे गम्यमाने करोतेः अनिप्रत्ययः। अकरणिस्ते वृषल भूयात्, कृष्यादिकर्मणः फलं मा भूद् इत्यर्थः। 'तस्याजननिरेवास्तु जननीक्लेशकारिण' इति माघकाव्ये (शिशु. २. ४५)। जन्मफलस्य पौरुषस्याभावे जन्मैव[4] मा भूदित्यर्थः। तथा 'आक्रोशेऽवन्योर्ग्रहः' (३. ३. ४५) इत्याक्रोशरूपार्थे भावे घञि अवग्राहो निग्राहश्च। 'अवग्राहोऽस्य वृषल ते भूयात्, निग्राहस्ते वृषल भूयात्' [5]इत्यादयः प्रयोगा अवसेयाः॥ गोत्रान्तेभ्य.—आदिकम्। तस्य वृन्दम् इत्या वर्गपरिसमाप्तेरधिकारः। गोत्रमपत्यम्। गोत्रान्तेभ्यः 'तस्यापत्यम्' (४. १. ९२) इत्यादिना [6]ये विहिता अणादिप्रत्ययाः तदन्तेभ्य औपगवगार्ग्यदाक्ष्यादिशब्देभ्यः 'तस्य समूहः' इत्यर्थे (४. २. ३७) औपगवकम्। गार्गकम्। दाक्षकम् इत्यादीनि शब्दरूपाणि भवन्ति। 'गोत्रोक्षोष्ट्रोरभ्र...' इत्यादिना (४. २. ३९) वुञ्प्रत्ययः, अकादेशश्च[7] (७. १. १)॥ ३८–९॥

[1] B5, B6 omit   [2] 'मिता ह्रस्व'; सञ्ज्ञापूर्वकत्वाद् वृद्ध्यभाव इति भा दी (पृ ४५७)   [3] शापे आक्रोशे Tj1, Tj2   [4] जननमेव Gm3, Tv   [5] इत्यादयो ग्राह्या Tv   [6] विहिताणादिप्रत्ययान्तेभ्य Tj1, Tj2   [7] 'युवोरनाकौ'

(पा) जवने जूति। वेगनामनी॥ सातिस्त्ववसाने स्यात्। अवसाननामनी। [1]'तिक्कोणि'॥ अथ ज्वरे जर्ति। ज्वरनामनी॥ उदजस्तु पशुप्रेरणम्। [2]गवादीना पश्चाच्चोदननामनी। [1]'पसुलवन्नाडुट'॥ अकरणिरित्यादय शापे। आक्रोशेऽकरण्यादय शब्दा स्यु। अकरणिस्ते भूयात्[3]। 'आक्रोशे नञ्यनि' (३ ३ ११२) इति अनिप्रत्यय। निग्राहस्ते भूयात्। अवग्राहस्ते भूयात्। 'आक्रोशेऽवन्योर्ग्रह' (३ ३ ४५) इति घञ्॥ अनुक्तम्—'विधिर्नियोग सप्रेष'। नियोगनामानि॥ 'निर्बन्धोऽभिनिवेशवत्'। निर्बन्धनामनी॥ 'परभागो [4]गुणोत्कर्ष'। गुणोत्कर्षनामनी॥ 'प्रभवन्ती प्रभाविता'। प्रभावनामनी॥ 'अस्तुकारोऽभ्यु-

पगम.'। अङ्गीकारनामनी ।। 'तत्परत्व तु तत्पग'। तात्पर्यनामनी ।। 'प्रणाम प्रणिपात स्यात्' । प्रणामनामनी ।। 'प्रश्रयोऽनुनय समौ' । अनुनयनामनी ।। 'अभ्युत्थान गौरव स्यात्' । [5]गौरवनामनी ।। 'प्रतिपत्ति प्रगल्भता'। प्रागल्भ्य-नामनी।। [6]गोत्रान्तेभ्य —आदिकम् । औपगवाद्यपत्यप्रत्ययान्तेभ्य शब्देभ्यस्तस्य समूह इत्यर्थे औपगवकादिशब्दा स्यु । औपगवकम् । कापटकम् । गार्गकम् इत्यादि ।। ३८–९ ।।

[1] B3 omits　[2] गवादिपश्चादटननाम A1　[3] B3, C1 add अजीवनिस्तेऽस्तु
[4] गुणोत्कर A1, C1　[5] अभ्युत्थान° A1　[6] B3 adds गोत्रोक्षोष्ट्रेत्यादिना (४ २ ३९) वुञ्प्रत्यये

**आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम् ।**
**माणवानां तु माणव्यं सहायानां सहायता ।। ४० ।।**

(वि) आपूपिकमिति—अपूपाना समूह आपूपिकम् । अपूपसमूहस्य नाम । शष्कुलीना समूह शाष्कुलिकम् । शष्कुलीसमूहस्य नाम । अचेतनाना पर्वतादी-नामेवमादीनि [1]समूहनामानि भवन्ति । माणवाना समूहो माणव्यम्[2] । सहायाना समूह सहायता ।। ४० ।।

[1] °आदिसमूह° K5　[2] माणवा बालास्तेषा समूह Pt2, K4 omits 3 lines

(विव.) आपूपिक—अचेतसाम् । अचेतसा चेतनरहिताना प्राणिव्यति-रिक्तानामिति यावत् । तेषामपूपादीना समूहा. [1]यथातयं ठक्प्रत्ययान्तैः शब्दैरुच्यन्ते । अपूपाना समूह आपूपिकम् । शष्कुलीना समूहः शाष्कुलिकम् । आद्यशब्देन[2] पर्वताना समूहः पार्वतिकम् । इत्यादय उदाहर्तव्याः । अत्र सर्वत्र 'अचित्तहस्तिधेनोष्ठक्' (४. २. ४७) इति ठक्प्रत्यय ।। माणवाना तु माणव्यम् । माणवाना बालाना समूहो माणव्यम् । 'ब्राह्मणमाणववाडवाद्यन्' (४. २. ४२) इति यन्प्रत्ययः ।। सहायाना सहायता । [3]सहायाना साहाय्यकारिणा समूहः सहायता । 'ग्रामजनबन्धुसहायेभ्यस्तल्' (४. २. ४३) ।। ४० ।।

[1] यथाक्रम B5, Tj1　[2] Tj2 adds अन्येषामप्यचेतनाना　[3] सहकारिवचनात् सहायशब्दात् समूहार्थे तल्प्रत्यये सति सहायता Tj2, Tv

(पा ) आपूपिक—अचेतसाम् । अपूपाद्यचित्ताना समूह आपूपिकशाष्कुलिकादिशब्दाः स्यु· । अपूप भक्ष्यम् । 'औगुलु' । तेपा समूह आपूपिकम् । [1]शष्कुलिः [2]कर्णाकारभक्ष्यम् । 'चविकलमु' । तेपा ममृहः शाष्कुलिक स्यात् । लड्डुका भक्ष्यविशेपा । तेपा समहो लाड्डुकिकम् । केकुन्दा मोदकाः । 'टंटकुडमुलु' । तेपा समूहः कैकुन्दिकम् ॥ माणवाना तु माणव्यम् । माणवकसमूहो माणव्यं स्यात् ॥ सहायाना सहायता । सहायसमूहः .सहायता स्यात् । [3]साहायकमपि ॥ ४० ॥

[1] शष्कुली B3 [2] $A_1$ adds नाम [3] साहाय्यकम् A1.

**हल्या हलानां ब्राह्मण्यबाडव्ये तु द्विजन्मनाम् ।**
**द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमिति क्रमात् ॥ ४१ ॥**

(वि ) हल्येति—हलाना समूहो हल्या । ब्राह्मणाना समूहो ब्राह्मण्यम् । बाडवाना [1]विप्राणा समूहो बाडव्यम् । [2]पर्शुकाना समूहः पार्श्वम् । [3]पृष्ठाना समूह· पृष्ठ्यम् ॥ ४१ ॥

[1] $K_5$ omits [2] पर्शुका पार्श्वास्थीनि तेपा समूह $Pt_2$ [3] पृष्ठाना यज्ञसबन्धिस्तोत्रविशेपाणा समूह $Pt_2$

(विव.) हल्या हलानाम् । हलानां सीराणां समूहो हल्या । 'पाशादिभ्यो यः' (४. २. ४६) इति [1]यप्रत्ययः ॥ ब्राह्मण्य—द्विजन्मनाम् । ब्राह्मणपर्यायेपु बाडवशब्दोऽप्युक्तः[2] । तेषां समूहो ब्राह्मण्यं बाडव्यं च । 'ब्राह्मणमाणवबाडवाद्यन्' (४. २. ४२) इति यन् ॥ द्वे पर्शुकानां—अनुक्रमात्[3] । 'पार्श्वास्थनि तु पर्शुका' इति प्रागुक्तम् (पृ. ४०६) । पर्शुरेव पर्शुका । स्वार्थे कप्रत्ययः पादपूरणार्थः । 'अश्वपशुमनडुत्पर्शुं वा दत्तः' इति प्रयोगदर्शनात् । पर्शूनां समूहः पार्श्वम् । 'पर्श्वा णस् वक्तव्यः' (वा. ४. २. ४२) इति णस्प्रत्ययः । अत्र 'सिति च' (१. ४. १६) इति पर्शुशब्दस्य पदसंज्ञायाम् [4]आकडारपरिभाषया (१. ४. १) [5]भसंज्ञानिमित्तगुणाभावेन यणादेशे पार्श्वम् ॥ अत्र पृष्ठशब्दो यज्ञसंबन्धिस्तोत्रविशेपवचनः । न शरीरावयववचनः । [6]तथा च रथन्तरबृहद्वैरूपवैराजशाक्वररैवतरूपाणि षट् पृष्ठानि, तेषां पृष्ठानां समूहः पृष्ठ्यम् । 'पृष्ठादुपसंख्यानम्' (वा. ४. २. ४२) इति यन्प्रत्ययः ॥ ४१ ॥

[1] इति य Tj2 [2] २ ७ ४ (पृ ८५२) [3] इति क्रमात् इति वा पाठ Tj1, Tj2 [4] आ कडारादेकसज्ञया Tj2 [5] भसज्ञानिवृत्तेर्गुणाभावेन Tj2 [6] ततश्च Tj2

(पा) हल्या हलानाम्। हलसमहो हल्या स्यात् ॥ ब्राह्मण्य—द्विजन्मनाम्। द्विजसमूहो ब्राह्मण्य वाडव्य च स्यात् ॥ द्वे पर्शुकाना—अनन्तमात्। [1]पर्शूना समूह पार्श्व स्यात्। पृष्ठाना समूह पृष्ठ्य [2]स्यात् ॥ ४१ ॥

[1] पर्शुकाना B3 [2] B3 adds च

**खलानां खलिनी खल्याप्यथ मानुष्यकं नृणाम् ।**
**ग्रामता जनता धूम्या पाश्या गल्या पृथक् पृथक् ॥ ४२ ॥**
**अपि साहस्रकारीषचार्मणाथर्वणादिकम् ।**

**इति संकीर्णवर्गः ।**

(वि) खलानामिति—खलाना समूह खलिनी। खल्या च। मनुष्याणा समूहो [1]मानुष्यकम्। ग्रामाणा समूहो ग्रामता। जनाना समूहो जनता। धूमाना समूहो धूम्या। पाशाना समूह पाश्या। गलाना समूहो गल्या। सहस्राणा समूह साहस्रम्[2]। करीषाणा समह कारीषम्। चर्मणा समह चार्मणम्। वार्मणमिति पाठे वर्मणा कवचाना समूह। अथर्वाणा समूह आथर्वणम्। आदिशब्दाद् आङ्गारम्। पादातम्। दाक्षिणमित्यादि। एतानि क्रमात् तत्तत्समहनामानि ॥ ४२ ॥

इति श्रीवङ्कलकामयभट्टोपाध्यायसूनुलिङ्गयसूरिरचितायाममरकोशपदविवृतौ सकीर्णवर्ग

[1] मानुष्यम् J2 [2] साहस्रकम् J2

(विव.) खलाना खलिनी खल्यापि। खलो धान्यकणिशशातनस्थानम्। तेषा समूह इत्यर्थे 'खलगोरथात्' (४ २. ५०) इति खलशब्दाद् यप्रत्यये खल्या। 'इनित्रकट्यचश्च' (४.२.५१) इति इनिप्रत्यये खलिनी ॥ अथ मानुष्यक नृणाम्। नृणा मनुष्याणां समूह इत्यर्थे नृशब्दपर्यायभूताद् मनुष्यशब्दाद् 'गोत्रोक्षोष्ट्र ...' इत्यादिना (४. २. ३९) वुञ्प्रत्यये मानुष्यकम्। 'प्रकृत्याके राजन्यमनुष्ययुवान॰'

(वा ६ ४ १६३) इति प्रकृतिभावाद् 'आपत्यस्य च तद्धितेऽनाति' (६ ४ १५१) इति यलोपस्याभाव ।। ग्रामता—आथर्वणादिकम । ग्रामादय पञ्च शब्दा सहस्रकरीषवर्माथर्वशब्दाश्चत्वार इत्येव नवभ्य शब्देभ्य प्रत्येक तेषा ग्रामादीना समूहेऽर्थे विवक्षिते ग्रामताजनतादयो नव शब्दा प्रत्येक वर्तन्ते । ग्रामतादिशब्दाना[1] पर्यायत्व मा भूदिति पृथकपृथगित्युक्तम् । 'ग्रामजनबन्धुसहायेभ्यस्तल्' (४ २ ४३) इति समहार्थे ग्रामता जनता च । पाशादित्वेन यप्रत्यये (४ २ ४९) धूम्यादयस्त्रय शब्दा । धूमाना समूहो धूम्या । पाशाना समूह पाश्या । गलाना समूहो गल्या । पाशादौ पोटगल इति पठ्यते[2] । तत्र पोटगलो बृहत्काश इति वृत्तिकारेण विवरण कृतम् । ततश्च गल्येति शब्देन पोटगल्येति शब्द उपलक्षित इति केचित् । अपरे तु गणपाठे पोटशब्दो गलशब्दश्चेति शब्दद्वय मत्वा गलाना कण्ठाना समूहो गल्येत्याहु । सहस्राणा समूह साहस्रम् । करीषाणा शुष्कगोमयाना समूह कारीषम् । वर्मणा कवचाना समहो वार्मणम् । अथर्वनामा कश्चिद् ऋषि । 'तमथर्वान्वविन्दत्' 'अथर्वा त्वा [3]प्रथमो निरमन्थत्' (तै स ४ १ ३ २[4]) इति श्रुतौ दर्शनात् । तेन दृष्टो वेदभागोऽपि अभेदोपचाराद् अथर्वशब्देनोच्यते । तथा च स्मृति — [5]'वेदाथर्वपुराणानि सेतिहासानि शक्तित ' (याज्ञ १ ५ १०१) इति । 'अथाथर्वनिधेस्तस्य' इति कालिदासश्च (रघु १ ५९) । अथर्वणा समूह आथर्वणम् । अथवा अथर्वमन्त्राध्येतार अथर्वणा तेषा समूह आथर्वणम् । सर्वत्र 'भिक्षादिभ्योऽण्' (४ २ ३८) इत्यण् । अन्ये त्वाहु —अथर्वणा प्रोक्तम् आथर्वणम् । तदधीयत इत्याथर्वणिका । तेषा समूह आथर्वणम् । 'आथर्वणिकस्येकलोपश्च' (४ ३ १३३) इत्यणि इकलोप इति ।। आदिशब्देन अङ्गाराणा समूह आङ्गारम् । चर्मणामजिनाना समहश्चार्मणम् इत्यादीनि भिक्षादिगणपठितानि सर्वाण्यपि प्रातिपदिकानि अण्प्रत्ययान्तत्वेनोदाहर्तव्यानि । [6]इह मूलग्रन्थकारेणापठिता केचन शब्दा शेषकारेण दर्शिता । यथा—'परभागो गुणोत्कर्ष '। गुणातिशयनामनी । 'प्रतिपत्ति प्रगल्भता '। दाढ्यस्य नामनी । 'श्रन्थन [7]ग्रन्थन गुम्फ सदर्भो रचना न ना '। गद्यपद्यादिनिर्माणस्य नामानि । 'प्रणिपातस्त्वनुनय प्रणय सान्त्वना न ना '। सामवादस्य नामानि । 'क्रीडा विनोद '। क्रीडाया नामनी । 'खेदस्तु निर्वेदश्चावसन्नता '। नैष्फल्ययुद्धेर्नामानि । 'स्पर्शपालि परिष्वङ्ग '। आलिङ्गनस्य नामनी । 'विगान वचनीयता '। निन्दाया नामनी । 'विवृति पञ्जिका टीका '। व्याख्यानग्रन्थस्य नामानि । 'कृतमाकृतमाशय '। अभिप्राय-

नामानि । 'आभाणकः प्रवादः स्यादैतिह्यं लोकविश्रुतिः'। अनिश्चितमूलस्य[8] लोकप्रवादस्य नामानि ॥ ४२ ॥

बोम्मगण्टचप्पयाचार्यः पदवाक्यप्रमाणवित् ।
संकीर्णवर्गं व्याचष्ट नामलिङ्गानुशासने ॥
इह यत्त्यक्तमज्ञानादालस्याद्यदुपेक्षितम् ।
प्रमादादन्यथोक्तं यद् विद्वद्भिस्तद्विशोध्यताम् ॥
श्लोकाः [9]संकीर्णवर्गे स्युर्द्विचत्वारिंशदीरिताः ।

इति संकीर्णविवरणं समाप्तम् ।

[1] प्रत्येक प्रतिनियतार्थवचनत्वमेव । न तु पर्यायत्वम् $Gm_3$, Tv [2] मुद्रितकौमुदीगणपाठे गल इति शब्दो दृश्यते (पृ ६५१) [3] त्वाङ्गिरसो निरमन्थत् Tv [4] वाज स ११ ३२ [5] $Gm_3$, Tv add ऋचो यजूंषि सामानि अथर्वाङ्गिरसश्च ये [6] अत्र ग्रन्थकारेणानुक्ताना केषाचिदर्थाना पर्याया ° Tv [7] ग्रथन $B_5$, $E_6$ [8] $Tj_2$ adds लोकविश्रुतस्य वा [9] सकीर्णगा सार्धा द्वि° Tv

(पा) खलाना खलिनी खल्यापि । खला दुर्जना । खला कुलटा । 'खलो नीच खलेन्वरी' इति वैजयन्ती (पृ २३२, श्लो २५)। तया तामा च समूह खलिनी खल्या च स्यात् ॥ अथ मानुष्यक नृणाम् । मनुष्यसमूहो मानुष्यक स्यात् ॥ ग्रामता—पृथक् । ग्रामतादयो ग्रामादिसमूहवचना । गल्याशब्द[1] पोटगलसमूहवचन । पाशादिपु गल इति पोटगलस्य सघातविगृहीतस्य ग्रहणमिति गणकोशटीकाकार ॥ अपि साहस्र—आथर्वणादिकम् । साहस्र वाग्गेय चार्मणम् आथर्वण भार्मणम् आङ्गारमित्येतानि सर्वाण्यपि तत्तत्समूहवचनानि ॥ ४२ ॥

इति [2]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचिते
अमरपदपारिजाते सकीर्णवर्ग

[1] A1 adds पृथक्पृथक् [2] °नरसिंह° A1

---

## ३. नानार्थवर्गः

**नानार्थाः केऽपि कान्तादिवर्गेष्वेवात्र कीर्तिताः ।**
**भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते ।। १ ।।**

(वि) अथ नानार्थवर्गमुपक्रमते—

नानार्थवर्गविवृतिर्वृत्तरूपेण कथ्यते ।
[1]अनुक्ता ग्रन्थकारेण ग्रन्थगौरवभीरुणा ।। 1 ।।
तन्त्रान्तरस्थो नानार्थपदम्यार्थो यथामति ।
चापित्वादिपदाधाराद्विस्तरेणेह कथ्यते ।। 2 ।।

अस्यार्थं —अत्र कान्तखान्तादिवर्गेषु[2] ये केऽपि कतिचिन्नानार्था शब्दा कीर्तिता । येषु पर्यायेष्वपि ये भूरिप्रयोगा तेष पर्यायेषु[3] त एव भूरिप्रयोगा शब्दा वक्ष्यन्ते[4] । अत्र [5]कान्ता पूर्वमुच्यन्ते ।। १ ।।

[1] अनुक्त $J_2$ [2] वर्गेष्वेव $K_6$ [3] $K_5$ omits [4] पठ्यन्ते $J_2$ [5] कान्त उच्यते $J_2$

(विव) [1]एकार्थानेकपर्यायाः प्रथमं प्रतिपादिताः ।
पदमेकमनेकार्थं संप्रति प्रतिपाद्यते ।।

ननु इतः प्रागेव तत्तत्पर्यायप्रस्तावेषु अनेकार्थशब्दानामप्युक्तत्वेन[2] तेषामनेकार्थत्वस्यापि व्यक्तत्वाद् वक्तव्यान्तराभावेन व्यर्थोऽयं वर्गान्तरारम्भः । [3]अथ मतम्—वक्ष्यमाणानां नाकादिशब्दाना प्रागाकाशादिपर्यायशब्देष्वेवाभिहितत्वाभावात् तादर्थ्यप्रतिपत्तये वर्गान्तरारम्भ इति । तर्हि तेषा स्वर्गादिरूपार्थत्वस्य कथितत्वाद् इह तादर्थ्याभिधानं व्यर्थमेव स्यात् । यदि शब्दश्रवणसमनन्तरमेव तेषामनेकार्थप्रतिपत्तये युगपदेव संगृह्य सर्वार्थाभिधानमित्युच्यते[4] तर्हि श्लोकसालावृकादिशब्दानामिव (श्लो. २, १२) नाकादिशब्दानामपि नानार्थवर्ग एव प्रयत्नमात्रेण बह्वर्थताप्रतीतेः पर्यायकाण्डे तत्कथनप्रयासो[5] निरर्थक एव स्यात् । किंच—इह कतिपयानामेव नानार्थशब्दानामभिधानं क्रियते, न सर्वेषाम् । तेषामपि न सर्वेऽप्यर्था [6]पठ्यन्ते । किमनेनाभिधानवैरूप्येणेत्यत्राह—नानार्थाः—पर्यायेष्वपि तेषु ते ।

अस्यार्थः—शब्दानामर्थाभिधाने विरलप्रयोगत्वं प्रचुरप्रयोगत्वं चेति द्वैरूप्यम्। तत्र कतिपयशब्दा अत्र नानार्थवर्गान्तर्गतकान्तखान्ताद्यवान्तरवर्गेष्वेव तत्तदर्थवाचकत्वेन कीर्तिताः, न तु तत्पर्यायप्रस्तावे। कुतः? तत्प्रयोगस्य क्वाचित्कत्वेन यत्र क्वापि तदुक्तिमात्र एव तात्पर्यात्। यथा—'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' (श्लो. ५) इत्यादि। ये तु शब्दा येष्वर्थविशेषेषु भूरिप्रयोगाः प्राचुर्येण प्रयुक्ताः ते शब्दाः तेषु तदर्थवाचकेषु पर्यायेषु अपिशब्दात् कान्तादिवर्गेष्वपि कीर्तिता इत्यर्थः। अत्रायमभिप्रायः—नाकशब्दस्य स्वर्गरूपार्थ एव प्रचुरप्रयोगत्वाद् उभयत्राभिधानम् (१.१.६, ३.३.२)। आकाशरूपार्थे तु प्रयोगस्य क्वाचित्कत्वाद् नानार्थवर्ग एवाभिधानम्। गोशब्दस्य सौरभेय्यां प्रयोगप्राचुर्याद् उभयत्र कथनम् (२.९.६६, ३.३.२५)। इष्वाद्यर्थेषु विरलप्रयोगत्वाद् नानार्थवर्ग एव निरूपणम्। सालावृकादिशब्दानां (श्लो. १२) तु वानराद्यर्थत्रयेऽपि क्वाचित्कप्रयोगत्वाद् अनेकार्थमध्य एव कथनम्। चित्रभानुभानुहंसादीनां सर्वार्थेषु प्रसिद्धसाम्याद् उभयत्राभिधानमित्यादि सर्वत्र विवेचनीयम्।

अत्र केऽपीत्यनेनायमर्थः सूचितः। नाकादिशब्दानां प्रदर्शनमात्रपरत्वाद-त्रानुक्ता अपि सर्वज्ञेश्वरनादेयीप्रभृतयोऽपि शब्दाः पर्यायकाण्डे तत्पर्यायप्रत्यवेक्ष-णाद् अभिधानान्तरपरिशीलनाच्च नानार्थत्वेनोह्येया इति कान्तादिवर्गेष्वित्यनेनैतत् सूचितम्। स्वग्रन्थे नानार्थकाण्डीयशब्देष्वन्तिमव्यञ्जननियम एव। न तु ग्रन्थान्तरे इव द्व्यक्षरत्र्यक्षरादिनियम इति। अस्य च नियमस्याकरणे 'प्रतिष्ठा कृत्यमा-स्पदम्' (श्लो. ९४) 'उत्सेधः कार्य उन्नतिः' (श्लो. ९६) 'संज्ञा स्यात् चेतना नाम' (श्लो. ३३) इत्यादौ विधेयशब्दसंदेहः स्यात्[7] ॥ १ ॥

[1] Gm3 adds अथ नानार्थवर्गारम्भ　　[2] °उक्तत्वेनानेकार्थ° Gm3 Tv.
[3] वयमत्र वक्ष्यमाणाना Tv　　[4] उच्येत Gm3 Tv.　　[5] कथनप्रयोजन निरर्थकम् Tv.
[6] कथ्यन्ते Tv　　[7] Gm3, Tv add अथवा अस्य श्लोकस्यायमर्थः। नानार्थ इति पदद्वयम्, कर्मधारयो वा। इह वर्गे नाकादिशब्दाना नानाभूता भिन्नप्रकारा. केचिदर्था: कान्तादिवर्गेष्वेव कीर्तिता। न पर्यायकाण्डे। तेष्वाकाशादिरूपार्थेषु तेषा नाकादिशब्दाना प्रयोग.

(पा.)　पदनतविबुधालि प्रोल्लसद्गण्डपाली
　　मृगगणवृतवल्ली बाहुकञ्जन्मृणाली।
पुरहरकुलपाली धामसिन्धुप्रणाली
　　हतदितिभुतमौलिर्भ्राजते भद्रकाली ॥

नानार्था —तेषु ते। पूर्वमकस्मिन्नर्थे अनेके शब्दा उक्ता । इदानीमनेकेष्वर्थेषु एक शब्द कथ्यते। तत् कन पकारेणेति चेदत्रैव कान्तादिवर्गेषु केऽपि कीर्तिता । अस्मिन् वर्गे कान्तखान्तादिप्रकरणेष केचन प्रदर्शिता । 'शरे खड्गे च सायक' (श्लो २) इति ये केऽपि भरिप्रयोगा त केऽपि पर्यायेष्वपि प्रदर्शिता । किंच येष्वर्थेषु ये केचन शब्दा भूरिश वाल्यनाटकादिप्रयुक्ता तेष्वर्थेषु त एव शब्दा केचन पर्यायेषूक्ता । अपिशब्दो नियमप्रतीत्यर्थं । 'सुरलोको द्योदिवौ द्वे' (१, पृ ६), 'द्योदिवौ द्वे स्त्रियामभ्रम्' (पृ ५०) इति पर्यायेषूक्ता अत्रापि वचन कथिता । 'आशुगौ वायुविशिखौ' (श्लो १९) इत्येकतरस्य पर्यायोक्तावपि । 'जम्बुकौ क्रोष्टुवरुणौ' (श्लो ३) इति मिलिता अपि केचन कीर्तिता ॥ १ ॥

**आकाशे त्रिदिवे नाको लोकस्तु भुवने जने।**
**पद्ये यशसि च श्लोकः शरे खड्गे च सायकः॥ २॥**

(वि) [1]अम्बरे सुरलोके च नाकशब्द [2] प्रकीर्तित ।
[3]न विद्यतेऽक दु खमत्रेति नाक ।

ब्रह्मलोकादिके लोके जन लोक उदाहृत ॥ 3 ॥

लोक्यते आलोक्यत[4] इति लोक । 'लोकृ दर्शने'।

समाख्यावृत्तयोश्चैव श्लोकशब्द उदाहृत ।

श्लोक्यत इति श्लोक । 'श्लोकृ सघाते'[5]।

वाणे [6]खड्गान्तरे क्षीणे सायक परिकीर्तित ॥ 4 ॥

स्यति सायतीति वा सायक । 'षोऽन्तकर्मणि', 'षै क्षये'॥ २॥

[1] आकाशे $J_2$ [2] नाकलोक $K_3$ [3] $J_2$ omits the sentence [4] $J_2$ omits
[5] शब्दसघाते $K_5$ [6] खड्गेऽन्तवे $J_2$, $K_5$

(विव) अथ नानार्थशब्दा उच्यन्ते—आकाशे त्रिदिवे नाक । स्वर्गवदन्तरिक्षस्यापि पुण्यफलप्राप्यत्वाद् नास्ति अक दु खमत्रेति नाक ।

शब्दा नानार्थवर्गीया पूर्वं कृतनिरुक्तय ।
केचिदत्र निरुच्यन्ते ग्रन्थविस्तरतो भयात् ॥

लोकस्तु भुवने जने । भुवनशब्देन [1]त्रीणि [2]सप्त [3]चतुर्दश वा भुवनानि विवक्षितानि । जनशब्देन च शिरःपाण्याद्यङ्गसंस्थानविशेषयुक्तं तिर्यग्व्यतिरिक्तं मनुष्यादिप्राणिमात्रमुच्यते । यथा—'अयं जनः प्रष्टुमनास्तपोधने' (कु. सं. ५. ४०), 'जनाय शुद्धान्तचराय शंसते' (रघु. ३. १६), सुजनो दुर्जनः इत्यादिप्रयोगदर्शनात् । क्वचित्तु समुदायेऽपि प्रयुज्यते । यथा—'सखीजनोद्वीक्षणकौमुदीसुखम्'[4] (रघु. ३. १), 'अप्सरोजनसंकीर्णे विमाने' इत्यादि । इह तु जनशब्दः समूहार्थः । तत्र लोकशब्दो यथा—[5]'स्त्रीलोकः परिकलयांचकार तुल्यम्', राजलोक इति ॥ पद्ये यशसि च श्लोकः । पद्ये पादबद्धे । यथा—'मा निषाद प्रतिष्ठां त्वमगमः' (रामा. १. २. १५) इत्यादौ । श्लोक्यत इति श्लोकः । 'श्लोकृ संघाते' । घञ् । यशसि च यथा—पुण्यश्लोकः इत्यादि ॥ शरे खड्गे च सायकः । स्यति [6]प्रतिपक्षं नाशयतीति सायकः । 'षोऽन्तकर्मणि' । कर्तरि ण्वुल् (३. १. १३३) । 'आतो युक् चिण्कृतोः' (७. ३. ३३) इति युगागमः । चकारसूचितमर्थान्तरं शेषकारेण दर्शितम् । 'सायको क्षेतृसातारौ [7]त्रिलिङ्गौ' इति । 'क्षि क्षये' इत्यस्मात् तृजन्तेन क्षेतृशब्देन क्षित उच्यते । सातृशब्देन नाशकरः । अस्मिन्नेवार्थद्वये त्रिलिङ्गौ वाच्यलिङ्गौ इत्यर्थः ॥ २ ॥

[1] भू, भुवस्, स्वर्. [2] भू, भुवस्, स्वर्, महर्, जनस्, तपस्, सत्यम्. [3] भू - सत्यम्, अतल, वितल, सुतल, रसातल, तलातल, महातल पाताला [4] °मुखमिति मुद्रितग्रन्थे. [5] त्रिलोक Tv [6] परपक्ष Tj1, Tj2 [7] त्रिलिङ्गाविति निश्चितौ Gm3, Tv

(पा.) आकाशे—सायक । [नाक] भूम्यामपि स्यात् । [1]'स्वर्गे भूम्यम्बरे नाकः' इति हलायुध. (अ मा ५ १५) । ग्रन्थविस्तरभीत्या[2] अत्र दुर्बोधाशमात्रस्यैव[3] विवरणम् ॥ २ ॥

[1] 'कथ्यतेऽम्बरे नाक' इत्येव मुद्रितग्रन्थे दृश्यते (पृ ८५) [2] भयात् B3
[3] °मात्रविवरणम् B3, C1

जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटार्भकौ ।
आलोकौ दर्शनोद्योतौ भेरीपटहमानकौ ॥ ३ ॥

(वि.) वरुणे फेरवे नीचे जम्बुकोऽयमुदाहृतः ।
जमतीति जम्बुकः । 'जमु अदने' ।

[1]भृष्टे तिलकृते भक्ष्ये शिशौ च पृथुको मत ॥ 5 ॥

पृथु अत्यर्थं कायतीति पृथुक । 'कै शब्दे' ॥

आलोको वर्तते दीप्तावीक्षणे वन्दिभाषणे ।

आलोक्यतेऽवधार्यत[2] इत्यालोक ।

आनको मुरजे भेर्यां पटहे [3]गर्जदम्बुदे ॥ 6 ॥

आ समन्तादनितीत्यानक [4]। 'अन प्राणने'। 'अण शब्दे' इत्यस्माद् आणक इति वा पाठ ॥ ३ ॥

[1] भृष्टव्रीहिकृते भक्षे J2 K2, K5  [2] K5 omits  [3] स्वनदम्बुदे K3, K5
[4] अनकमिति वा पाठ K4

(विव) जम्बुकौ क्रोष्टुवरुणौ। जम्बुकश्च जम्बुकश्च जम्बुकौ इत्येकशेष । सृगालोऽपि जम्बुक, पश्चिमदिक्पतिरपि जम्बुक इत्यर्थ । एवमुत्तरत्रापि द्विवचनबहुवचनान्ताना विधेयशब्दानामेकशेषार्थोऽनुसधेय । जमतीति जम्बुक [1]। 'जमु अदने'। शेषे—'अथ जम्बुक । नीचे स्याज्जम्बुकस्तद्वत्'। जम्बुकोऽपि तद्वत् जम्बुकशब्दवद् अर्थत्रयेऽपि वर्तत इत्यर्थ ॥ पृथुकौ चिपिटार्भकौ। भृष्टावहतव्रीह्यादिकृतो भक्ष्यविशेष चिपिट । अर्भक शिशु । तयोरुभयो प्रत्येक [2]पृथुकशब्द ॥ आलोकौ दर्शनोद्योतौ। चक्षुर्जन्य ज्ञान दर्शनम्। सौरादिकप्रकाश उद्योत । तयोरर्थयो क्रमेण भावे करणे च घञि आलोक । शेषे—'बन्दिभाषण आलोक'। अवधारय आलोकयेत्यादिरूपे बन्दिभाषणे आलोकशब्दो वर्तत इत्यर्थ । आलोक्यते राजादिरनेनेत्यालोक । करणे घञ्। [3]'आलोकशब्द वयसा विरावै' इति कालिदास (रघु २ ६)। अन्यत्रापि—

'स राजककुदव्यग्रपाणिभि पार्श्ववर्तिभि ।
ययावुदीरितालोक '[4] ॥

इति (रघु १७ २७)॥ भेरीपटहमानकौ। भेरी च पटहश्च वाद्यविशेषौ। तत्र प्रत्येकम् आनकशब्दो वर्तते। आनको दन्त्यपञ्चममध्याक्षर । केचित्तु 'अण शब्दे' इत्यस्माद् अणति शब्दायत इति द्वितीयाक्षर मूर्धन्यपञ्चममाहु । भेरी पटहम् इत्यत्र 'जातिरप्राणिनाम्' (२ ४ ६) इत्येकवद्भाव । तूर्याङ्गिके तु

मार्दङ्गिकपाणविकम् इत्यादि द्वन्द्व[5] एवोदाहरणम् । शेषे—'मृदङ्गे स्वनदम्बुद आनक' ' इति । विश्वप्रकाशेऽपि—'आनकः पटहे भेर्यां मृदङ्गे स्वनदम्बुदे' इति (पृ. ८, श्लो. ६६) ॥ ३ ॥

[1] मृगय्वादि (उ १ ३७) । 'मितद्र्वादयश्च' (वा ३ २ १८०) इति साधु इति भा दी (पृ २१५, ४५८) [2] पृथुरेव [पृथुक ] । सज्ञाया कन् (५ ३ ७५) । प्रथते । 'प्रथ प्रख्याने' । 'अर्भकपृथुकपाका वयसि' (उ ५ ५३) इति साधुर्वा (भा दी पृ ४५८) [3] 'आलोको जयशब्द स्यात्' इति विश्व (रघु पृ ३०), [4] इति हलायुध (रघु पृ {३४१) इति मल्लिनाथव्याख्या । उभयत्र मुद्रितग्रन्थयो न दृश्यते [5] काशिका (१, पृ १२७).

(पा ) जम्बुकाविति—वरुण पश्चिमदिकपाल । [1]नीचोऽपि । 'जम्बुक. [2]फेरवे नीचे प्रतीचीदिक्पतावपि ' इति विश्व (पृ १३, श्लो १४१) ॥ चिपिट इति धाना । 'अटुकुलु' ॥ (आलोक ) वन्दिभापणेऽपि स्यात् । 'आलोको दर्शने द्योते आलोको वन्दिभापणे ' इति विश्व (पृ १०, श्लो १०३) ॥ भेरीपटहम् । अत्र तूर्याङ्गत्वादेकवद्भाव ॥ आनकौ । [3]मृदङ्गस्वनदम्बुदावपि स्याताम्[4] । 'आनक. पटहे भेर्यां मृदङ्गे स्वनदम्बुदे ' इति विश्व (पृ ८, श्लो ६६) ॥ ३ ॥

[1] A1 omits [2] श्वापदे इति मुद्रितग्रन्थे [3] A1 adds मृदु° [4] B3 omits

**उत्सङ्गचिह्नयोरङ्कः कलङ्कोऽङ्कापवादयोः ।**
**तक्षको नागवर्धक्योरर्कः स्फटिकसूर्ययोः ॥ ४ ॥**

(वि ) स्थानान्तिकोरुचिह्नेषु [1]कोपे रूपकभूपयो ।
नाटकादिपरिच्छेदे चित्रे युद्धेऽङ्क उच्यते ॥ 7 ॥

अमन्ति [2]बाला अस्मिन्निति अङ्क । 'अम गत्यादिषु ' ॥

सिंहाणनिन्दयोश्चिह्ने कलङ्क परिकीर्तित ।

[3]कल्यतेऽङ्कपत[4] इति कलङ्क । 'कल शब्दसख्यानयो '[5] ॥

तक्षको वृक्षभेदे स्याच्चक्षु श्रवसि तक्षणि ॥ 8 ॥

तक्ष्णोतीति तक्षक । 'तक्षू [6]त्वक्ष तनूकरणे ' ॥

अर्क शत्रेऽर्कपर्णे स्यात् ताम्रे स्फटिकसूर्ययोः ।

अर्च्यत इत्यर्कः । 'अर्च पूजायाम्' ॥ ४ ॥

[1] क्रोडे J2 [2] वाक्यानि K5. [3] काल्यते J2, K6 [4] K5 adds अनेन
[5] सस्थाने K3, K4. [6] J2 omits त्वक्ष.

(विव.) उत्सङ्गचिह्नयोरङ्कः । उत्सङ्ग ऊरुप्रदेशः । 'वामोत्सङ्गगता देवी' इत्यादिप्रयोगात् । चिह्नं लाञ्छनम् । ज्ञापकमिति यावत् । अङ्कयत इत्यङ्कः । 'अकि लक्षणे' । क्रमात् कर्मणि करणे च घञ् । शेषे—'अङ्कश्चित्रयुद्धे भूषान्तिकपरिच्छिदि । स्थाने च रूपके क्रोडे' इति । चित्रयुद्धं द्वन्द्वयुद्धम् । अत्र भूषाशब्देन गोपालस्त्रीभिः प्रकोष्ठे धारणीयो देशभाषायाम् अङ्काख्ययैव प्रसिद्ध आभरणविशेषो विवक्षितः । परिच्छिदीति क्लीबन्तशब्देन परिच्छेद उक्तः । स च नाटकादावेकाहचरितरूपकः शब्दसंदर्भः । रूपकं तु नाटिकादिषु प्रसिद्धम्[1] । क्रोडं भुजान्तरम् । विश्वप्रकाशेऽपि—

'अङ्कः स्थानेऽन्तिके [2]मन्तौ रूपकोत्सङ्गलक्ष्मसु ।
नाटिकादिपरिच्छेदे चित्रयुद्धे च भूषणे' ॥ (पृ. ५, श्लो. ३८)

इति ॥ कलङ्कोऽङ्कापवादयोः । अङ्कोऽत्र चिह्नम् । कल्यते क्षिप्यत इति कलः । 'कल किल क्षेपे' । [3]अङ्कयतेऽनेनेत्यङ्कः । कलश्चासावङ्कश्च कलङ्कः । शकन्ध्वादित्वात् पररूपम् (वा. १. १. ६४) । शेषे—'कलङ्को लोहकिट्टकः' इति ॥ तक्षको नागवर्धक्योः । नागः सर्पविशेषः तक्षकनाम्ना प्रसिद्धः । तक्ष्णोति त्वगादिकमिति तक्षकः । 'तक्ष् त्वक्ष्[4] तनूकरणे' ॥ अर्कः स्फटिकसूर्ययोः । अर्च्यत इत्यर्कः । 'अर्च पूजायाम्' । कर्मणि घञ् । विश्वप्रकाशे—'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ' इति (पृ. ४, श्लो. २७) ॥ ४ ॥

[1] B5, B6 add नवममङ्कसञ्ज्ञयैव प्रसिद्ध करुणरसप्रायम्. [2] क्रोडे Tj1, Tj2.
[3] Tv omits अनेन. [4] Gm1 omits त्वक्ष.

(पा.) उत्सङ्ग—अङ्कापवादयोः । उत्सङ्गशब्देन [1]उपरिदेशोरूपरिदेशयोरत्र ग्रहणम् । 'अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः' इति उरोदेशे माघः (शिशु. २. ५३) । 'कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं संचरन्ती'

इति ऊरुपरिदेशे[2] बाण. (काद. पृ. २६०) ॥ अङ्कश्चिह्नम्। नागः सर्पविशेषः। [अर्क.] ज्येष्ठभ्रातर्यपि स्यात्। 'अर्कोऽर्कपर्णे[3] स्फटिके ज्येष्ठभ्रातरि भास्वति' इति वैजयन्ती (पृ. २१४, श्लो. ४) ॥ ४ ॥

[1] उरोदेशोरुभागयो A1.　[2] ऊरुभागे A1　[3] अर्कवर्णे B3, C1

**मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः।**
**स्यात् पुलाकस्तुच्छधान्ये संक्षेपे भक्तसिक्थके ॥ ५ ॥**

(वि) ब्रह्मात्मानिलवह्न्यग्निकृतान्तार्केषु पुंसि कः ॥ 9 ॥

क [1]शीर्षजलसौख्येषु सर्वनाम्नि त्रिषु स्मृतः।

कायते स्तूयत इति क । 'कै शब्दे' ॥

पुलाक क्षुद्रधान्ये स्यात् क्षिप्रे[2] भक्तकणेऽपि च ॥ 10 ॥

पुलति पाकेन महत्त्वमापद्यत इति पुलाक । 'पुल महत्त्वे'[3] ॥ ५ ॥

[1] शिर J2　[2] क्षिप्ते K5, K6　[3] J2 adds क्षिप्रे च, क्षिप्रत्वे च K2, K3, K4

(विव.) मारुते—शिरोऽम्बुनोः। पुंसि आत्मनीत्यर्थः। [1]वायौ ब्रह्मणि सूर्ये आत्मनि इत्येवमर्थचतुष्टये रूपभेदादेव कशब्दः पुंलिङ्गः। मूर्धनि जले च नपुंसकलिङ्गः। कनति प्रकाशत इति कम्। [2]'कनी दीप्तिकान्तिगतिषु'। 'अन्येष्वपि दृश्यते[3] (३. २. १०१) इति डप्रत्ययः। [4]अत्र विश्वप्रकाशः (पृ. ४, श्लो. २४)— 'को ब्रह्मात्मानिलार्केषु . . . सुखशीर्षजलेषु कम्' इति। शिरोजलवाचकं कमित्यव्ययवर्गे वक्ष्यते (श्लो. २५०) ॥ स्यात् पुलाकः—सिक्थके। 'तुच्छधान्यं तण्डुलशून्यं पलालम्' इति सुभूतिचन्द्रः। 'प्रियङ्गुश्यामाकादिक्षुद्रधान्यम्' इति सुबोधिनीकारः। संक्षेपो नाम विस्तरविरोधिसंकोच इति प्रसिद्धः। तथा च [5]बुद्धचरिते प्रयोगः— 'निबोध किंचित्तु पुलाकमात्रं वाक्यं मुनेर्वाक्यविदां वरस्य' इति। भक्तसिक्थकं नाम स्थाल्यां पाकवशेन विक्लिन्नो महत्त्वमापन्नः तण्डुलपरिणाम ओदनरूपः। यथा— 'स्थालीपुलाकन्यायः' इति। पुलति महत्त्वमापद्यत इति पुलाकः। 'पुल महत्त्वे'। 'पिनाकादयश्च' इति उणादिषु (४. १५) निपातितः। अथवा इगुपधलक्षणे

कप्रत्यये (३. १. १३५) पुलशब्देन महत्त्वपरिणामवद् द्रव्यं तण्डुलादिकमुच्यते। तदकतीति पुलाकः । 'अक अग कुटिलाया गतौ'। भावार्थे क्विपि पुलं महत्त्वम् अकतीति वा ।। ५ ।।

[1] वायुब्रह्मसूर्यात्मरूपचतुष्टये Tv [2] 'कन दीप्तौ' B5, B6 [3] अन्येभ्योऽपि Gm1, Tv [4] Tv adds अत्र शाश्वतकोश —'क प्रजापतिरुद्दिष्ट को वायुरिति शब्दत । कश्चात्मनि समाख्यात क प्रकाश उदाहृत ' इति। मुद्रितग्रन्थे तु 'क वारिशिरसो कश्च प्रजापत्यात्मवायुपु' (पृ १८, श्लो १९९), 'क सुखेऽपि विजानीयात्' (पृ ६६, श्लो ७७१) इति दृश्यते [5] एव टीकासर्वस्वे (पृ ७४), असपूर्णमुद्रितग्रन्थे श्लोकोऽय न दृश्यते

(पा ) मारुते—शिरोऽम्बुनो । [क] पुस्यात्मन्यपि[1]। 'प्रजापत्यात्मवातार्के क शिरोऽम्बुसुखेपु कम्' इति रभसकोश । स्यात् पुलाक —सिक्थके। [2]भक्तसिक्थकमन्नकण । [3]'पट्टक मेतुकु'। [4]'ग्रासोद्गलितसिक्थेन किं न्यून करिणो भवेत्' ।। ५ ।।

[1] A1 omits अपि [2] भक्तसिक्थ नामान्नाश A1. [3] B2 omits [4] ग्रासाद् गलित॰ B3, C1

**उलूके करिणः पुच्छमूलोपान्ते च पेचकः ।**
**कमण्डलौ च करकः सुगते च विनायकः ।। ६ ।।**

(वि ) पेचको गजलाङ्गूलमूले वायसवैरिणि ।
पचति स्वेन नेत्रज्योतिपा काकानिति पेचक । 'डुपचष् पाके' ।।
कुण्डिदाडिमवर्षाश्मपक्षिभेदकरेपु[1] च ।। 11 ।।
कीकसे [2]मस्तके चापि करक परिकीर्तित. ।
कीर्यत इति करक । 'कॄ विक्षेपे' ।।
विनायकस्तार्क्ष्यविष्णुविघ्नेशेपु गुरौ जिने[3] ।। 12 ।।
वीना पक्षिणा नायको विनायक । 'णीञ् प्रापणे' ।। ६ ।।

[1] भेदे J2 [2] मस्तकस्यापि K4, K8. [3] जने K8

**(विव.) उलूके—पेचकः ।। पुच्छमूलस्य अधः समीपे गुदाच्छादकमांसपिण्ड इति सुभूतिचन्द्रः। 'पेचको गजलाङ्गूलमूलपर्यन्तघूकयोः' इति विश्वप्रकाशः**

(पृ. ६, श्लो. ८६)। केचित्तु[1] पुच्छमूले पुच्छप्रान्ते चेत्यर्थद्वयपरत्वेन व्याचक्षते। तथा च प्रतापः—'उलूके गजलाङगूले मूलपर्यन्तयोरपि' इति। अयं शब्दः प्रागेव [2]व्युत्पादितः (२. ५. १५)। कमण्डलौ च करकः। कमण्डलुः कुण्डिका। चकारादन्यत्रापि। तथा च प्रतापः—

करकः पक्षिभेदे स्यात् कमण्डलुकरङ्कयोः।
करदाडिमयोः पुंसि स्त्रियामपि घनोपले ॥

इति। पक्षिभेदः कृकराख्यः। 'करङ्को [3]मस्तके शस्यनारिकेलफलास्थनि' इति विश्वप्रकाशवचनात्[4] (पृ. १४, श्लो. १४८)॥ सुगते च विनायकः। चकारसमुच्चितोऽर्थः शेषे—'विनायकस्तु हेरम्बे गरुत्मति गुरावपि' इति। वीना पक्षिणा नायकत्वाद् विनायको गरुत्मान्। गुरावपि। विनेतृत्वाद् विनायकः॥ ६॥

[1] Tj1, Tj2 omit केचित्तु [2] पचति सतपति, पच्यते वा दुःखेन। 'डुपचष पाके'। 'पचिमच्योरिच्चोपधाया' (उ ५ ३७) इति वुन्। अत इत्वम्। 'पुगन्त ' इति गुण इति भा दी (पृ २१६) [3] मस्तकास्थि स्यात् B5, Gm1 [4] Tv adds प्रताप एव वर्षप्रस्तावे वर्षशब्दस्य वर्षोपलवचनस्य द्विलिङ्गत्वमाह—वर्षग्रावाण करका द्वयोरिति

(पा) उलूके—पेचक[1]। कमण्डलौ च करक। वर्षोपलदाडिमयोरपि स्यात्। चशब्द उक्तसमुच्चये ऽनुक्तसमुच्चये च, अनुक्तवचन लिखितम्॥ सुगते च विनायक। हेरम्बादयोऽपि। 'विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने[2] जिने[3] गुरौ' इति विश्व (पृ १७, श्लो १८८)॥ ६॥

[1] उलूकादिषु पेचकशब्द स्यात् C1 [2] विघ्ने A1 [3] जने A1, B3

किष्कुर्हस्ते वितस्तौ च शूककीटे च वृश्चिकः।
प्रतिकूले प्रतीकस्त्रिष्वेकदेशे तु पुंस्ययम्॥ ७॥

(वि) वितस्तौ कुत्सिते विष्कुमाने[1] हस्तप्रकोष्ठके[2]।
किमपि [3]कूयतेऽनेनेति किष्कु। 'कु शब्दे'॥

वृश्चिको भेषजे[4] राशौ शूककीटे[5] विषक्रिमौ॥ 13॥

वृश्चतीति वृश्चिक.। 'ओव्रश्चू छेदने'॥

प्रतीक प्रतिकूले स्यादङ्गे[6] [7]वैलोम्यभाविणि।

[प्रत्येति] प्रतिकूलमेतीति प्रतीक. । 'इण् गतौ' ॥ ७ ॥

[1] याने Z1; महा° K5. [2] °प्रकोष्ठयो K2, K4 [3] कायते K8; कौतीति J2, K5 [4] वृषभे K6 [5] °कीले K3, K6 [6] अन्ने J2. [7] अङ्गवैलोम्य° Z1.

(विव.) किष्कुर्हस्ते वितस्तौ च। चतुर्विंशत्यङ्गुलो हस्तः। वितस्तिः द्वादशाङ्गुलः। [1]अत्र रुद्रोऽपि—'किष्कुर्हस्ते वितस्तौ च[2] प्रकोष्ठेऽप्यनपुंसकम्'[3] इति। किंचिदिति कूयते शब्द्यत इति किष्कुः। 'कु शब्दे'। बहुलग्रहणात् कर्मणि डुप्रत्ययः। 'अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः' इति सुडागमः॥ शूककीटे च वृश्चिकः। [4]पुच्छाग्रे शूकवान् कीटः शूककीटः। रक्तभ्रमर इत्यन्ये। चकाराद् द्रोणे इति प्रागुक्तः (१, पृ. ३३६)। शेषे—'वृश्चिकस्त्वौषधे राशौ' इति। औषधम् [5]ओषधिविशेषः। वृश्चिको राशिस्तुलाराशेरनन्तरः॥ प्रतिकूले—पुंस्ययम्। [6]प्रतीकः प्रतिकूलार्थश्चेद् विशेष्यानुरोधात् त्रिलिङ्गः। एकदेशोऽवयवः। तत्र पुंलिङ्गः॥ ७ ॥

[1] Gm3, Tv add शेषे—प्रकोष्ठे कुत्सिते किष्कुर्द्विचत्वारिंशदङ्गुल. [2] ना B5, B6. [3] पुनपुसकम् Tj1, Tj2 [4] पुच्छाग्रोपरि Tv. [5] गुल्मविशेष.। आन्ध्रभाषाया 'तेलुमणिचेट्टुपेरु' Gm1. [6] प्रत्येति, प्रतीयते वा। 'इण् गतौ'। 'अलीकादयश्च' (उ ४ २५) इति साधु इति भा. दी (पृ २५८).

(पा) किष्कुर्हस्ते—वृश्चिक·। [1]वृश्चिकेऽपि स्यात्॥ प्रतिकूले—पुस्ययम्। अनुकूलेऽपि त्रिलिङ्ग[2]। 'नाङ्गे[3] प्रतीकस्त्रिषु तु प्रतिकूलानुकूलयोः'[4] इति वैजयन्ती (पृ २६१, श्लो ५४) ॥ ७ ॥

[1] राशौ मासे वा. [2] B3 omits [3] मुखे इति मुद्रितग्रन्थे [4] °अनुरूपयो इति मुद्रितग्रन्थे.

**स्याद् भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च।**
**ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले॥ ८॥**

(वि.) भूनिम्बे भूतिकः [1]ध्यामे दीप्यके भूस्तृणे मतम्॥ 14 ॥

भुवि ऊतिर्यस्येति भूतिकम्। 'ऊयी तन्तुसताने'॥

कोशातकी कचे[2] ज्योत्स्नाघण्टालीघोषकेषु[3] च ।
मृदङ्गफलक्ष्वेडादेवतालीषु[4] वर्तते ॥ 15 ॥

कोशमतति कोशातकी । 'अत सातत्यगमने' ॥ ८ ॥

[1] ध्याने J2, नाम K5 [2] करे J2 [3] °घण्टारी° K6. [4] देवदाडिपु J2, K6.

(विव ) स्याद् भूतिक—भूस्तृणेऽपि च । भूनिम्ब किराततिक्त. । कत्तृण देवजग्धाख्य सौगन्धिकम् । भूस्तृणमपि प्रागुक्तम् (१, पृ. ३१६) । भुवि ऊतिरस्येति भूतिकम् । 'अन्येषामपि दृश्यते' (६. ३. १३७) इति दीर्घे[1] भूतीकमपि । तथा च विश्वप्रकाशे—'भूतीकमपि [2]भूनिम्बे कर्पूरतृणदीप्ययो.' इति (पृ. ११, श्लो. ११०) । कर्पूरतृण भूस्तृणम्[3] । स्वामी तु (पृ. २७०)—कत्तृणमित्यस्य स्थाने कट्फल इति पठित्वा कट्फल [4]श्रीपर्णीति व्याचष्ट ॥ ज्योत्स्निकाया—कोशातकी । ज्योत्स्निका पटोलिका । घोषोऽत्र धामार्गवाख्यस्तिक्तफल' लताविशेष । [5]तथा च माधव.—'घोषो धामार्गवे पल्या कोशातक्या ध्वनावपि' इति । कोशाख्य जालाकार बीजपिधानम् अतति व्याप्नोतीति कोशातकी । हरीतक्यादि[6] (४ ३. १६७) ॥ ८ ॥

[1] दीर्घविकल्प Tv [2] भूनिम्वदीप्यकर्पूरकत्तृणे इति मु ग्र [3] Gm3, Tv add तथा च वामन प्रदीपे— स्याद भूतिक गन्धतृण मालाकर्पूरनाम च इति [4] श्रीफल Tj1, Tj2 [5] अत एव Gm1, Tv [6] गौरादि Tv

(पा ) स्याद भूतिक—भूस्तृणेऽपि च । भूतीकमिति दीर्घमध्यमपि । 'भूतीकमपि[1] [2]भूनिम्वदीप्यकर्पूरकत्तृण' इति विश्व (पृ ११, श्लो ११०) ॥ ज्योत्स्निकाया—कोशातकी । कोशातक्या त्रय ॥ ८ ॥

[1] इति B3, C1 [2] भूनिम्बे दिव्य° B3

सिते च खदिरे सोमवल्कः स्यादथ सिह्लके ।
तिलकल्के च पिण्याको बाह्लीक रामठेऽपि च ॥ ९ ॥

(वि ) [1]कैटर्ये [2]खदिरे सोमवल्कशब्दोऽभिधीयते ।
सोमवत् श्वेत [3]वल्कमस्येति सोमवल्क ।

पिण्याकस्तिलकल्के स्यात् कुङ्कुमे चैव [4]सिह्लके ॥ 16 ॥

पिण्डवदकतीति पिण्याक. । 'अक अग कुटिलायां गतौ'। सिह्ल:[5] सल्लकीत्वगादिना कृतो धूप. ॥

याजकाङ्कुशवीरेषु हिङ्ग्वश्वविषयेषु च ।
बाह्लीक बाह्लिक चापि कुङ्कुमे च प्रकीर्तितम् ॥ 17 ॥

वीरमुशीरम् । [6]प्रायेण बाह्लिकदेशभवत्वाद् बाह्लिकम् ॥ ६ ॥

[1] कंडर्यें $K_2$, $K_5$. [2] कदरे $K_4$, $K_6$ [3] वल्कलम् $K_3$, $K_6$. [4] हिङ्गुनि $K_4$, $K_6$. [5] सिल्ह. $K_5$, $K_6$. [6] प्राय. $J_2$

(विव.) अथ कट्फले—सोमवल्कः स्यात् । कट्फलः श्रीपर्णी। सित इति खदिरविशेषणम् । [1]कदराख्यो वृक्षविशेष इत्यर्थः। सोमस्य [2]यज्ञियलताविशेषस्य वल्कमिव वल्कं त्वगस्येति सोमवल्कः ॥ अथ सिल्हके—पिण्याकः । [3]सल्लकीत्वक्सुगन्धादिकृतो धूपस्तु सिल्हक इत्युक्तलक्षणः (१, पृ. ४४३) ॥ तिलकल्कं चात्र यन्त्रनिष्पीडनेनोद्धृततैलं कल्कम् । पिण्डं पिण्डाकारमकतीति पिण्याकः । वर्णव्यत्ययः । शेषे—'पिण्याको हिङ्गुकुङ्कुमे'। हिङ्गु च कुङ्कुमं चेति समाहारद्वन्द्वः । विश्वप्रकाशेऽपि—'पिण्याकः सिल्हके[4] हिङ्गौ तिलचूर्णे च[5] कुङ्कुमे' (पृ. ६, श्लो. ८३) ॥ बाह्लीकं रामठेऽपि च । रामठं हिङ्गु । तत्र रूपभेदाद् नपुंसकलिङ्गः । प्रायेण बाह्लीकदेशे भवत्वाद्[6] बाह्लीकम् । शेषे—'बाह्लीको विषयाश्वयोः । नप् कुङ्कुमे च वीरे च बाह्लीकं बाह्लिकं समम्' इति । विषयो बाह्लीकाख्यो देशः । अश्वः तद्देशप्रभवः । तत्र उभयत्र रूपभेदात् पुंलिङ्गः । वीरम् उशीरम् । तत्र नप् नपुंसकलिङ्गमित्यर्थः । [7]बाह्लीकमिति मध्यदीर्घोऽप्यस्ति । तया च शब्दभेदप्रकाशे—'बाह्लीको बाह्लिकश्चापि गाण्डीवो गाण्डिवोऽपि च' इति ॥ ६ ॥

[1] खदिराख्य: $B_5$. [2] यज्ञीय॰ Tv. [3] Tv omits गन्धवीत्यन्. [4] गिह्लकें इति मु. ग्र. [5] अपीनि मु. प्र. [6] जातत्वात् $B_5$, $B_6$. [7] बाह्लीकशब्दो मध्यदीर्घो मध्यह्रस्वश्च । द्वयमेवार्षम् । कुङ्कुमवीरहिङ्गुषु नपुंसकम्, अन्यत्र पुंलिङ्गः. Tv.

(पा) अथ कट्फले—[1]रामठेऽपि च। चशब्देन पिण्याकेऽपि। 'पिण्याकः [2]सिल्हके हिङ्गौ तिलचूर्णे [3]च कुङ्कुमे' इति विश्व (पृ ६, श्लो ८३) ॥ ९ ॥

[1] बाह्लिक A1 [2] सिह्लके इति मु ग्र [3] अपि इति मु ग्र.

**महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः।**
**रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस्त्रिषु ॥ १० ॥**

(वि) विश्वामित्रमुनौ शक्रे गुग्गुलावाहितुण्डिके।
चण्डिकाया नदीभेदे कुशाख्यग्रन्थवेत्तरि ॥ 18 ॥
उलूके नकुले चैव [1]खनके कौशिको भवेत्।

कुशिकस्यापत्य कौशिक। अन्यत्र व्युत्पत्तिर्यथार्हमूह्या[2] ॥

रोगातञ्चनशङ्कासु तापे चातङ्क इष्यते[3] ॥ 19 ॥

आतञ्चन [4]क्षीरादिद्रव्यपरिणमनम्। आतङ्कत्यनेन कृच्छ्रेण जीवतीति आतङ्क। 'तकि कृच्छ्रजीवने गतौ च'[5] ॥

स्वल्पधातुकनि स्वेषु क्षुल्लक परिकीर्तित।

[6]क्षुध लातीति क्षुल्लक। 'ला आदाने' ॥ १० ॥

[1] कनके K5 [2] यथाकथचित् J2 [3] उच्यते K2, K4, K5 [4] K5 omits द्रव्य° [5] K3, K4 omit गतौ च [6] क्षुद क्षोद K6, क्षुत K5

(विव.) महेन्द्र—कौशिक। कोशो धनसमृद्धिः प्रयोजनमस्येति कौशिकः इन्द्रः, स एवात्र महेन्द्रशब्देनोक्तः। 'महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्' इति श्रुते (ऐ. ब्रा. ३. २१)। इन्द्रेण केनचित् कारणवशेन कदाचिद् उलूकवेषः परिगृहीत इति [1]घूकोऽपि कौशिकः। कोशेन [2]सर्पग्रहणपेटिकया व्यवहरतीति कौशिकः व्यालग्राही। गुग्गुलुवृक्षे प्रागुक्तः (१, पृ. २३६)। शेषे—

'कौशिको मुनिभेदे च नकुले कोशवत्यपि।
उद्गातरि कुशाजीवे गौरीनद्योस्तु कौशिकी ॥'

इति । मुनिभेदः विश्वामित्रः । नकुलो बभ्रुः । कोशो धनस्य समूहः[3] । पुराणादिग्रन्थसंदर्भो वा । सोऽस्यास्तीति वा कोशवान् । कोशं वेत्तीति वा कौशिकः[4] । त्रिवृत्पञ्चदशादिस्तोत्रियेषु[5] गणनार्थौदुम्बराः शङकवः कुशा उच्यन्ते । ताभिर्व्यवहरतीति कौशिकः । उद्गाता प्रथमः छन्दोगेषु । कुशो दर्भः, कुशं जलं, कुशीत्ययोविकारश्च । तेन जीवतीति कौशिकः । पार्वत्यां नदीभेदे च कौशिकीति ङीबन्तस्त्रीलिङ्गः । कुशिकात् जाता कौशिकी ॥ रुक्—आतङ्कः । आतङ्कति कृच्छ्रेण जीवत्यनेनेति आतङ्कः । 'तकि कृच्छ्रजीवने' । अधिकरणे करणे वा (३. ३. १२१) घञ् । रुग् रोगः । तापः पीडा । शङ्का भयम् । शेषे—'आतञ्चने स्यादातङ्कः' । क्षीरस्य [6]रूपपरिणामहेतुभूतं [7]दध्यादिकमातञ्चनमुच्यते ॥ स्वल्पेऽपि क्षुल्लकस्त्रिषु । स्वल्पं सूक्ष्मम् । शेषे—'दरिद्रे क्षुल्लकस्त्रिषु' । 'क्षुध बुभुक्षायाम्' । क्षुधं लातीति क्षुल्लकः ॥ १० ॥

[1] उलूकोऽपि Tv [2] °वारण° Gm3, Tv [3] Tj1 adds तद्वान्. [4] सोऽपि कौशिक उच्यते Tv [5] °स्तोमेषु B5, B6 [6] Tv adds दधि° [7] Tj1, Tj2 add क्षीरावाप्य

(पा) महेन्द्र—कौशिक । कौशिकस्य एते चत्वार. । रुक्—आतङ्क. । मुरजध्वनावपि स्यात् । 'आतङ्को रोगसतापशङ्कासु मुरजध्वनौ' इति विश्वः (पृ. १४, श्लो १५१) ॥ स्वल्पेऽपि[1] क्षुल्लकस्त्रिषु । क्षुद्रशङ्खेऽपि[2] । 'शम्बूकास्ते क्षुल्लका क्षुद्रशङ्खा' इति हलायुध (अ मा. ३. ४२) ॥ १० ॥

[1] तु A1. [2] A1 adds पुलिङ्ग .

**जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः ।**
**व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः ॥ ११ ॥**

(वि) जैवातृक[1] पुत्रजलभैषज्यायुष्मदिन्दुषु ॥ 20 ॥

[2]जीवतीति जैवातृक. । 'जीव प्राणधारणे' ॥

[3]वर्तका पक्षिभेदे स्याद् वर्तकोऽश्वखुरे मत. ।

भुवि वर्तत इति वर्तकः । 'वृतु वर्तने'[4] ॥

व्याघ्रदिग्गजभैषज्यसितच्छत्रसिताम्बुजे ॥ 21 ॥
कोशकृज्जन्तुभेदे च पुण्डरीकोऽभिधीयते ।

पुणतीति पुण्डरीकः । 'पुण कर्मणि शुभे' ॥

मयूरस्य शिखायां च भूषणे जीरके तथा ॥ 22 ॥
प्रदीपेऽप्यजमोदाया दीपक. परिकीर्तितः ।

दीपयतीति दीपक.। 'दीप दीप्तौ'[5] ॥ ११ ॥

[1] जैवातृक J2. [2] जीवयति J2, K3, K4 [3] वर्तक K5. [4] K5 omits.
[5] कान्तौ J2

(विव.) जैवातृकः शशाङ्केऽपि । अपिशब्दाद् आयुष्मति प्रागुक्तः (२. १. ६) । विश्वप्रकाशे—'जैवातृकः [1]कृषे चन्द्रे भैषज्यायुष्मतोरपि' (पृ. १८, श्लो. २०४) इति । कृषः कृषकः[2] । 'जैवातृकः कुटुम्बी च क्षेत्रकृत् कृष इत्यपि' इति शेषकारेण[3] पर्यायकाण्डेऽभिधानात् ॥ खुरेऽप्यश्वस्य वर्तकः । अपिशब्दात् पक्षिभेदे प्रागुक्तः (१, पृ. ३५५) ॥ व्याघ्रेऽपि पुण्डरीको ना । पुण्डरीकपत्राकारचर्मगतरेखासादृश्यात्[4] पुण्डरीकशब्देनोच्यते । तद्योगाद् अर्शआद्यचि (५. २. १२७) पुण्डरीको व्याघ्रः । अत्र विशेषाद् व्याघ्रवाचकः पुंलिङ्गः । सिताम्भोजे तु नपुंसकं प्रागुक्तम् (१, पृ. १८१) 'पुण्डरीकं [5]सिताम्भोजम्' इति । 'पुण्डरीको व्याघ्रभेदे दिग्गजेक्षुप्रभेदयोः' इत्यजयः । यवान्यामपि दीपकः । यवानी अजमोदा । शेषे—'दीपकः स्यादलंकारे यवानीर्बर्हिचूडयोः' इति । अलंकारे दीपकाख्यः प्रसिद्धः[6] । शेषस्थेन यवानीशब्देन जीरको विवक्षितः । 'दीपनीया दीपनी च यवानी जीरकोऽपि च'[7] इति नामावल्यामभिधानात् । विश्वप्रकाशेऽपि—[8]'दीपकस्त्वजमोदायां यवानीर्बर्हिचूडयोः' (पृ. १२, श्लो. १२१) इति । बर्हिचूडा मयूरशिखाख्य ओषधिविशेषः ॥ ११ ॥

[1] कृशे इति मु. ग्र [2] कर्षक Tv [3] 'जैवातृक कृशे चन्द्रे दीर्घायुषि च स त्रिषु' इति त्रिकाण्डशेषे (पृ. २३, श्लो ५७५). [4] °युक्तत्वात् Gm3, Tv [5] सिताम्भोजे सितच्छत्रेऽपि कीर्तितम् Gm3, Tv [6] B5 adds शब्दालंकारेषु [7] Tv adds अजाजी चैव जीवा च दीपको दीप्यकस्तथा. [8] 'दीप्यक चाजमोदे स्याद् यवानीर्बर्हिचूडयो.' इति (पृ. १२, श्लो १२१), 'दीपक चागलकारे दीपको दीप्तिकारके' (पृ १०, श्लो. १००) इति च मुद्रितग्रन्थे.

(पा) जैवातृक शशाङ्केऽपि। 'जैवातकश्चन्द्रभिषगायुष्मत्सु कृषीवले' इति वैजयन्ती (पृ २७७, श्लो ६)। खुरेऽप्यश्वस्य वर्तक। वृत्तिकर्तरि त्रिलिङ्ग ॥ व्याघ्रेऽपि पुण्डरीको ना। व्याघ्रो व्याघ्रभेद।

'पुण्डरीक सितच्छत्रे सिताम्भोजे च कीर्तितम्।
पुण्डरीको व्याघ्रभेद दिग्गजे क्षुद्रभेकयो ॥'

इति जयकोश। यवान्यामपि दीपक[1]। जीरकेऽपि स्यात्[2]। 'अजाजी तु जया दीप्यो जीरको जीरण [3]सित' इति वैजयन्ती (पृ १२६, श्लो ८३) ॥ ११ ॥

[1] दीप्यक इति पारिजाते पाठ [2] $B_3$, $C_1$ omit स्यात [3] शित A1

**सालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम्।**
**पीडार्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते ॥ १२ ॥**

(वि) कपौ शुनि च गोमायौ सालावृक उदाहृत ॥ 23 ॥
स्यति वर्वर्ते चेति सालावृक। 'षोऽन्तकर्मणि'। 'वृक आदाने' ॥

पर्वतोद्भवधात्वादौ गैरिक कनकेऽपि च।

गिरौ भव गैरिकम् ॥

[1]व्यलीकमप्रियाकार्यवैलक्ष्यानृतपीडने ॥ 24 ॥

शुभ व्यलति [2]निवारयतीति व्यलीकम्। 'अल [3]वारणे' ॥

अलीकमनृते प्रोक्त ललाटाप्रिययोरपि।

अलतीत्यलीकम्। 'अल [4]भूषणपर्याप्तिवारणेषु' ॥ १२ ॥

[1] °वैलक्षण्य° $K_3$ [2] $K_5$ omits नि [3] निवारण $K_2$, $K_3$, $K_4$
[4] भूषण $K_2$, $K_6$

(विव) सालावृका—श्वान। सालान् वृक्षादिवर्तिनो जीवान् आवर्कन्ते भक्षयन्तीति सालावृका। [1]'वृक आदाने'। दन्त्यादि। वैजयन्त्या नानार्थकाण्डे दन्त्यादिप्रकरणेऽभिधानात्[2]। 'इन्द्रो यतीन् सालावृकेभ्य प्रायच्छत्' इति श्रुते-

(ताण्डच. ८. १. ४)। [3]तालव्यादिरिति सुभूतिचन्द्रः। स्वर्णेऽपि गैरिकम्। अपि शब्दाद् 'गैरिकं तु विशेषतः'[4] इति प्रागुक्तधातुविशेषे (१, पृ. २१३)। गिरौ भवं गैरिकमिति अविरविकन्यायेन गिरिशब्देन[5] विगृह्य गिरिकशब्दात् तद्धितोत्पत्तिः॥ पीडार्थेऽपि व्यलीकं स्यात्। विशेषेण सौमुख्यमलति वारयतीति व्यलीकम्। 'अल भूषणपर्याप्तिवारणेषु'। 'अलीकादयश्च' (उ. ४. २५) इतीकन्प्रत्ययान्तो निपातितः। पीडा दुःखमिति टीकासर्वस्वकारेण व्याख्यातम्[6] (पृ. ७३)। दक्षिणावर्तस्तु—'व्यलीकनिश्वासमिवोत्ससर्ज' इति कुमारसंभवश्लोकव्याख्याने (३. २५) व्यलीकं लज्जेति व्याख्याय तत्संमतित्वेन 'व्रीडार्थेऽपि व्यलीकं स्यात्' इत्यमरसिंहाभिधानं पपाठ। तथा च 'सत्रान्ते सचिवसखः पुरस्त्रियाभिर्गुर्वीभिः शमितपराजयव्यलीकान्' इति कालिदासप्रयोगः (रघु. ४. ८७)। [7]शेषे—'व्यलीकमप्रियाकार्यवैलक्ष्यानृतकामजे' इति। कामजः कामावेशकृतोऽपराधः॥ अलीकं त्वप्रियेऽनृते। अप्रियमनिष्टम्। शेषे—'अलीकं तु ललाटे स्यात्' इति॥ १२॥

[1] Tj1, Tj2 add कुक [2] मुद्रितग्रन्थे तु (पृ २६८, श्लो. ४६) 'सालावृको वृके' इति शेषकाण्डे पुलिङ्गाध्याये दृश्यते [3] शालावृक इति [4] विशेषकम् B5, B6. [5] गिरिणा Tv [6] मुद्रितग्रन्थे 'अप्रियाकारविलक्षेष्वपि व्यलीकम्। दीर्घमध्यम्' इत्येव दृश्यते. [7] अपिशब्दार्थं शेषे Tv.

(पा.) सालावका —गैरिकम्। जाजिन्यपि स्यात्। व्रीडार्थेऽपि व्यलीकं स्यात्। प्रतारणेऽपि स्यात्[1]। 'व्यलीक स्यात् प्रतारणम्' इति हलायुध' (अ. मा. ४. ६३)। 'पीडार्थेऽपि व्यलीक स्यात्' इति पाठे[2] पीडनेऽपि स्यात्[3]॥ अलीक त्वप्रियेऽनृते॥ १२॥

[1] B3 omits स्यात् [2] पाठेन A1 [3] C1 omits.

शीलान्वयावनूके द्वे शल्के शकलवल्कले।
साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले॥ १३॥
दीनारेऽपि च निष्कोऽस्त्री

(वि.) [1]गतजन्मन्यनूकः[2] स्यादनूकं शीलवशयोः॥ 2 ॥

अनूच्यत इत्यनूकम्। 'उच समावाये'॥

शकले वल्कले चैव शल्कशब्द उदाहृतः ।

[3]शलतीति शल्कम् । 'शल [4]आशुगमने' ॥

सुवर्णाष्टोत्तरशते वक्षोभूषणकर्षयोः ॥ 26 ॥
[5]स्वर्णदीनारपलयोर्निष्कः स्यात् पुनपुंसकम् ।

नितरां कायते स्तूयत इति निष्क. । 'कै शब्दे' ॥ १३ ॥

[1] गजतन्वनि(?) $K_5$, $K_6$. [2] अनूक $K_2$ [3] $J_2$ omits the line. [4] चलनसवरणयो. इति मुद्रितग्रन्थेषु. [5] स्वर्णे $K_4$, $K_5$

(विव.) शीलान्वयावनूके । शीलं स्वभावः । अन्वयः वंशः । उभयत्र[1] रूपभेदाद् नपुंसकम् । अनूच्यति प्रजासु समवैति इत्यनूकम् । 'उच समवाये' । कप्रत्ययः[2] (३. १. १३५) । न्यङ्क्वादिः (७. ३. ५३) । शेषे—'अनूकं गतजन्मनि' इति । शेषस्थं केचित् पुंलिङ्गं पठन्ति ॥ द्वे शल्के शकलवल्कले । शकलं खण्डम् । वल्कं वृक्षादित्वक् । ते उभे शल्कवाच्ये । 'साम्यं गतेनाशनिना मघोनः [3]शशाङ्कशल्काकृतिपाण्डुरेण' इति शल्कशब्दस्य खण्डवाचकत्वे भारविप्रयोगः (किरा. १७. ५१) । 'शल्कैरतां रात्रिमग्निमिन्धते' इति श्रुतिश्च[4] । अथवा शकलं मत्स्यानां कवचप्राया त्वक् । तद्योगाद् मत्स्यः शकलीत्युच्यते । 'तथा पाठीनराजीवसशल्काश्च द्विजातिभिः' इति प्रयोगः (या. स्मृ. १. ७. १७७) । शलन् गच्छन् कायति शल्कम् । 'शल [5]आशुगमने' । 'कै शब्दे ॥ साष्टे शते—निष्कोऽस्त्री । अष्टाभिः सह वर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे' (२. २. २८) इति बहुव्रीहिसमासे सति साष्टन्शब्दात् सप्तम्येकवचने आत्वे नपुंसकह्रस्वत्वे च साष्टे इति भवति । नकारान्तमिदम् । अत्र 'बहुव्रीहौ संख्येये डज् . . .' इत्यादिना (५. ४. ७३) डच्प्रत्यये साष्टमित्यकारान्तमिति केचित्[6] । तदुक्तम्—'संख्याव्यय . . .' (२. २. २५) इति यो बहुव्रीहिः तस्येदं ग्रहणमिति काशिकाकारेण (१, पृ. ६५) डच्प्रत्ययविधायकसूत्रे व्याख्यातत्वात् प्रत्येकं कर्षपरिमितानां सुवर्णानां साष्टे अष्टोत्तरशत इत्यर्थः । हेम्नि पलषोडशांशपरिमिते हेम्नीत्यर्थः । 'गवामभावे निष्कः स्यात्' इत्यादौ तथाभूते प्रयोगदर्शनात् परिमाणविशेषमनादृत्य हेममात्र एवेति केचित् । उरोभूषणमिह पदकसंज्ञया लोके प्रसिद्धो वक्षोभूषणविशेषः । 'हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्' इति कालिदासप्रयोगः (कु. सं. २. ४९) । अत्र

पलशब्देन राजतं पलं विवक्षितम् । 'द्वे कृष्णले रूप्यमाषः' (या. स्मृ. १. १३. ३६४) इत्यादिरजतपरिमाणाधिकारे 'निष्कं सुवर्णाश्चत्वारः' (या. स्मृ. १. १३. ३६५) इति याज्ञवल्क्येनाभिधानात् । तत्रैव विज्ञानेश्वरेणापि 'पूर्वोक्तताश्चत्वारः सुवर्णा एको [7]राजतनिष्को भवति' इति व्याख्यातत्वाच्च । दीनारो देशान्तरे स्वनाम्नैव[8] प्रसिद्धः इति सर्वानन्दः (टी. स. पृ. ७७) । 'दीनारमाहतं हेमसप्तत्या कृष्णलैर्मतम्' इत्यपरे । अत्रार्थपञ्चके प्रत्येकं निष्कशब्दो वर्तते । अपिशब्दात् पलचतुर्थांशोऽपि । तथा च वैजयन्त्याम् (पृ. २३३, श्लो. ४५)—

निष्कोऽस्त्री हेम्नि दीनारे [9]साष्टकर्षशते पले ।
वक्षोविभूषणे कर्षे ॥

इति । निश्चयेन कायति स्तूयत[10] इति निष्कः । क.[11] (३. १. १३६) ॥ १३ ॥

[1] उभयत्रापि Tv [2] 'इगुपधज्ञाप्रीकिरः कः' [3] शशाङ्कखण्डेति मु ग्र (पृ ३६५) [4] 'शल्कैरग्निमिन्धान' इति तै ब्रा (१ २ १ १५) [5] 'शल गतौ' Tv [6] केनचिदुक्तम् । तदनुपपन्नम् Tv. [7] राजतो निष्क इति मु ग्र (पृ १११) [8] स्वनामप्रसिद्धे इति मु ग्र (पृ ७७) [9] साष्टे इति मु ग्र [10] काम्यत इति स्वामी (पृ २७१) [11] 'आतश्चोपसर्गे'

(पा) शीलान्वयावनूके द्वे। गतजन्मनि पुलिङ्ग[1]। 'अनूक तु कुले शीलेऽप्यनूको गतजन्मनि' इति विश्व (प ११, श्लो ११४) ॥ शल्के शकलवल्कले । वल्केऽपि स्याताम् । 'वल्क तु वल्कले खण्डे शल्क[2] शकलवल्कयो' इति विश्व (पृ ६, श्लो ४३) ॥ साष्टे शते—निष्कोऽस्त्री ॥ १३ ॥

[1] $B_3$, $C_1$ add एव [2] शल्क वल्कलखण्डयो $C_1$

कल्कोऽस्त्री शमलैनसोः ।
दम्भेऽप्यथ पिनाकोऽस्त्री शूलशंकरधन्वनोः ॥ १४ ॥

(वि) विट्किट्टभदम्भेषु[1] कल्क.[2] शमलपापयो ॥ 27 ॥
शमल विनीयाख्य[3] द्रवचूर्णम् । पाप कलयतीति कल्क. । 'कल सख्याने' ॥

त्रिशूले पासुवर्षे स्यात् पिनाको हरकार्मुके ।

अपि नाकतीनि पिनाक । 'अक अग[4] कुटिलाया गतौ' ॥ १४ ॥

[1] °इभदन्तेपु इति भा दी (पृ ४६०) [2] कल्क K5 [3] हुडाख्यद्रव्यचूर्णम् K5
[4] J2 omits अग

(विव.) कल्कोऽस्त्री—दम्भेऽपि । [1]कपायपानकादिद्रव्ये वस्त्रनिष्पीडनेन निःस्राविते सति यद्वस्त्रलग्नमवशिष्टं [2]सद्रवमौषधचूर्णं शमलशब्देन विवक्षितम् । पुरीष च । एनः पापम् । स्वभावतो दोषयुक्तस्य सम्यग्वेषाभिनयो दम्भः । सर्वानन्दस्तु—मलेन पापेन सह वर्तत इति 'समलः पापाशयः' इति दन्त्यादि पठित्वा व्याचष्ट (टी. स. पृ. ७७) । तथा च रुद्रः—'त्रिषु पापाशये कल्कोऽस्त्री विट् किट्टेभदम्भयोः' इति ॥ कल्यते क्षिप्यते निरस्यत इति कल्कः । 'कल किल क्षेपे' । 'मुञ्जकल्कहलिषु' (३. १. ११७) इति निर्देशात् साधुः ॥ अथ पिनाको—धन्वनोः । शूलम् आयुधविशेषः । साहचर्यात् तदपि शांकरमेवेति स्वामी[3] (पृ. २७२) ॥ १४ ॥

[1] वापाय° Gm3 [2] सद्रस° Tv [3] त्रिशूल शाकरमेवात्र इति स्वामी, Tv adds °सुबोधिनीकारौ, पाति । 'पिनाकादयश्च' (उ ४ १५) इति पातेराक इत्व नम् च इति भा दी (पृ १७)

(पा) कल्कोऽस्त्री—शकरधन्वनो । धन्वसाहचर्यात्[1] शूलमायुधविशेष[2] । 'पिनाको हरकोदण्डे [3]पासुवर्षत्रिशूलयो' इति विश्व (पृ. ६, श्लो ८३) ॥ १४ ॥

[1] सामानाधिकरण्य स्यात् A1 [2] A1 omits विशेष. [3] पाशुवर्ष° इति मु ग्र

**धेनुका तु करेण्वां च मेघजाले च कालिका ।**
**कारिका यातनावृत्त्योः* कर्णिका कर्णभूषणे ॥ १५ ॥**
**करिहस्ताङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे ।**

(वि) करेणुगौर्योर्धेन्वा च कृपाण्या धेनुका मता ॥ 28 ॥

[1]वत्सो धयत्येनामिति धेनु । 'धेट् पाने' । धेनुरेव धेनुका ॥

मेघवृन्दे श्यामिकाया योगिन्या च मलीमसे ।
वृद्धाभिधान्या धूमाल्या कृष्णाया नववारिदे ॥ 29 ॥

*रोमालिवृश्चिकावल्यो सुराया काकयोषिति ।*
अमदेयद्रव्यमूल्ये [2]काकमूलीपटोलयोः ।। 30 ।।
[3]ज्वालामालाख्यभैषज्ये कालिका परिकीर्तिता ।

कालवर्णत्वात् कालिका ।।

क्रियाविवरणश्लोकशिल्पेषु नटयोषिति ।। 31 ।।
[4]नारकीवेदनाया च कारिकाशब्द उच्यते ।

क्रियत इति कारिका[5] ।।

त्रमुकादिजटाशे च [6]कुट्टिन्या कर्णभूषणे ।। 32 ।।
पद्मकोश्या हस्तिहस्ते मध्याङगुल्या च कर्णिका ।

कृणाति स्त्रीमस्तकादि यया सा कर्णिका[7] ।। १५ ।।

[1] K3, K4 omit the derivation of धेनु　[2] काकमाची* J2.　[3] चटामासा* J2, K5　[4] नारके K3, नारक्या K5　[5] J2 adds 'डुकृञ् करणे'.　[6] कुट्टन्या K6.
[7] J2 adds मता　*कृत्यो इति पाठान्तरम्

(विव.) धेनुका तु करेण्वां च। धयत्येनां वत्स इति धेनुका। 'धेट् पाने'। शेषे—'धेनुका त्वश्वयोषिति। भवान्यां च कृपाण्यां च प्रसूतायां पशौ गवि' इति। अश्वयोषिद् बडवा ।। मेघजाले च कालिका। मेघजालं मेघसंघः। कृष्णवर्णत्वात् कालिका। जानपदादिसूत्रेण (४. १. ४२) कालशब्दाद् [1]वर्णरूपार्थे ङीपि तदन्तादेव 'प्रातिपदिकस्य ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (परिभाषा ४. १. १) इति न्यायेन 'कालाच्च' (५. ४. ३३) इति स्वार्थिके कन्-प्रत्यये 'केऽणः' (७. ४. १३) इति ह्रस्वे च कालिका। न च वाच्य विप्रतिषेधात् *तद्धितबलीयस्त्वम् इति ङीप बाधित्वा तद्धित एव प्राप्नोतीति। 'ङ्याप्प्रातिप-*दिकात्' (४. १. १) इत्यत्र ङीप्ग्रहणसामर्थ्याद् ङ्यन्तादेव तद्धितोत्पत्त्युपपत्तेः। ङ्याप्प्रातिपदिकाद् इत्यत्र ङीप्ग्रहणं प्रत्याख्यातवतो महाभाष्यकारस्य मते तु कालशब्दाद् वर्णवचनाद् अर्शआद्यचि (५. २. १२७) द्रव्यवचनात् 'कालाच्च' (५. ४. ३३) इति स्वार्थिके कन्प्रत्यये सति ततः स्त्रीत्वविवक्षायां टापि 'प्रत्ययस्थात्...' (७. ३. ४४) इति इत्वे च कालिकाशब्दसिद्धिः[2]। *कालितरेत्यादौ तु ङीपोऽन्तरङ्गस्य बहिरङ्गेण तरपा सह नास्ति विप्रतिषेधः।

[3]परनित्यान्तरङ्गेति न्यायात् (परिभाषा १ ३ ११)। ततश्च ङीप्युत्पन्ने [4]लिङ्ग-विशिष्टादपि प्रातिपदिकात् प्रातिपदिकत्वनिबन्धनात् तद्धितोत्पत्तिरित्यलमेतावता। चशब्दार्थं शेषे—

'दोषे स्वर्णादिधातूना कृष्णावृद्धिसुरासु च।
ऋमदेये वस्तुमूल्ये योगिन्यम्बिकयोरपि ॥
[5]पटोलशाखारोमालीमासीकाकीषु कालिका ॥'

इति। धातुदोष श्यामिकास्य[6]। कृष्णा कृष्णवर्णा काचित् मषीमृदादिका। ऋणग्रहणकाले धनिकाधमर्णसप्रतिपत्त्या कृतकाले देया वृद्धि कालिकेति स्मृतिषु प्रसिद्धा। सुरा मद्यम्। वस्तुन नयकालेऽस्य पण्यस्य क्रयमेतावदियता कालेन दिनक्रमेण मासक्रमेण दास्यामीति क्रायिकेण सप्रतिपद्य देय मूल्यम्। योगिनी चतुःषष्टिसख्यासु योगिनीषु[7] कालिका नाम महाकालस्थाने प्रसिद्धा। अम्बिका पार्वती। रोमाली नाभिदेशादूर्ध्वस्था रोमराजि। धूमालिरिति क्वचित्पाठ[8]। तत्र धूमरेखेत्यर्थ। मासी जटामासी। काकी काकस्त्री। काकमाची नाम गुल्मविशेष इति केचित्॥ कारिका यातनावृत्त्योः। यातना नरकदु खम्। कारिका श्लोक-रूपेण कृता व्याख्यावृत्ति। यथा—शाबरभाष्ये प्रथमपादस्य भट्टपादैः कृता। यथा वा आपस्तम्बीयकल्पसूत्रस्य त्रिकाण्डी। 'कॄ हिंसायाम्' 'डुकृञ् करणे'। क्रमेण धात्वर्थनिर्देशे ण्वुलि (वा ३ ३ १०८) कारिका। शेषे—'कारिका नट-योपाया दिवाकीर्त्यादिशिल्पके' इति[9]। श्मश्रुकर्मचेलधावनादिरूप शिल्पम्, दिवा-कीर्त्यादिशिल्पकरण च कारिका॥ कर्णिका—बीजकोश्याम्। [10]कर्णिका तालपत्रे पूर्वमुक्ता (१, पृ ४२८)। अङ्गुलिरग्रभाग। तत्र तु किरति जलमिति कर्णिका। 'कॄ विक्षेपे'। नप्रत्यये (उ ३ १०) स्वार्थे क (५ ४ ५)। पद्मबीजकोशी वराटकाख्या कर्णिकासदृशाकारत्वात् कर्णिका ॥ १५ ॥

[1] वणवचनाद अशआद्यचि Tv [2] °निष्पत्ति Gm1, Gm3 [3] 'परनित्यान्त रङ्गापवादानामुत्तरोत्तर बलीय' [4] 'प्रातिपदिकग्रहण लिङ्गविशिष्टस्यापि ग्रहणम्' [5] °रोमानि° B5, B6 [6] कालिकाख्य TJ1, TJ2 [7] योगिनी कालिकानाम्न्येव Tv [8] °पुस्तकपाठ B5 B6 [9] Tv adds विश्वप्रकाशेऽपि—कारिका नटयोषिति। कृतौ विवरणश्लोक यातनायां च कारिका। नापितादिकशिल्पेऽपि (पृ १५ श्लो १६०–२) [10] कणभूषण तालपत्रम्। तत्र व्युत्पत्तिरुक्ता Tv * घरूपेति ह्रस्व

(पा ) धेनुका तु करेण्वा च । [1]सद्य सूतगवादिकेऽपि स्यात् ।। मेघजाले च कालिका । [2]स्वर्णदोषे सुराया च काल्या कालीत्वे च स्यात् ।। कारिका यातना-वृत्यो । वृत्तिर्नाम विवरणश्लोक । [3]'वृत्तौ विवरणश्लोके यातनाया च कारिका । नापितादिकशिल्पेऽपि' इति विश्व (पृ १५, श्लो १६०) ।। कर्णिका—बीज-कोश्याम् । [4]पद्मबीजकोश्या पुलिङ्गश्च स्यात् । 'कर्णिका [5]कर्णिकश्चाथ पद्माक्ष पद्मकर्कटी' इति वैजयन्ती (पृ १५७, श्लो ४६) । अन्यत्र स्त्रीलिङ्ग एव । 'कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । नमुकादिच्छटाशे च कर्णिका[5] कर्ण-भूषणे' इति विश्व (पृ १५, श्लो १५७–८) ।। १५ ।।

[1] A1 adds धेन्वामपि स्यात [2] A1 omits the two words [3] कृतौ इति मु ग्र [4] C1 omits "बीज" [5] कर्णिकम इत्येव मु ग्र

**वृन्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः ।। १६ ।।**
**स्याद् दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः ।**
**लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः ।। १७ ।।**
**(भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम् ।**
**रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे च कण्टकः ।।)**

## इति कान्तवर्ग.

(वि ) मनोज्ञमुख्यदवेषु वृन्दारक उदाहृत ।। 33 ।।

प्रशस्त वृन्दमस्यास्तीति वृन्दारक ।।

सख्यासख्येयमुख्यान्यासहायेष्वेक उच्यते ।

स्वयमेव एतीत्येक । 'इण् गतौ' ।।

[1]दाम्भिकोऽत्यन्तविक्षिप्तदृष्टौ कौक्कुटिकेऽपि च ।। 34 ।।

दम्भ प्रयोजनमस्येति दाम्भिक । कौक्कुटिको मायावी ।।

कार्याशक्ते स्वामिभावदर्शी लालाटिक स्मृत ।

कोपप्रसादचिह्नं प्रभुललाट पश्यतीति लालाटिकः ॥

कटकः कङ्कणे शैलनितम्बे राष्ट्रकेऽपि च ॥ 35 ॥

कटतीति कटकः । 'कटे वर्षावरणयोः' ॥

द्रुमस्य [2]तीक्ष्णावयवे [3]सूच्यग्रक्षुद्रवैरिणोः ।
रोमाञ्चे परुषालापे कण्टकः परिकीर्तितः ॥ 36 ॥

कणत्यनेन [4]ताडित इति कण्टकः । 'कण शब्दे' ॥ १६-१७ ॥ ॥

इति कान्तवर्गः

[1] °अधिक° K2, K3, K4; °अन्तिक° K5. [2] सूक्ष्म° K3, K8. [3] सूच्यग्रे K4, K5. [4] तापित. K2.

(विव.) वृन्दारकौ रूपिमुख्यौ। रूपी सुरूपः। मुख्यः श्रेष्ठः। प्रशस्तं वृन्दं स्वोपसर्जनीभूतमस्यास्तीति वृन्दारकः। 'शृङ्गवृन्दाभ्यामारकन् वक्तव्यः' (वा. ५. २. १२२)। लिङ्गत्रयेऽप्युदाहार्यम्। स्त्रीत्वविवक्षायां तु 'न यासयोः' (७.३.४५) इति सूत्रे 'वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम्' (वा.७.३.४५) इति वचनादपि परतः इत्वप्रतिषेधेऽस्य वैकल्पिकत्वादत्र स्त्रीलिङ्गे वृन्दारका वृन्दारिकेति रूपद्वयमस्ति[1]। देवतापर्यायेषु प्रागुक्तः (१, पृ. ६) ॥ एके मुख्यान्यकेवलाः। मुख्ये यथा—सर्वसत्त्वैकबन्धुः। अन्यार्थे यथा—[2]इत्येके प्राहुः[3]। केवलः सहायरहितः। तत्र यथा—'एकोऽजयद् रिपुपुराणि हरः खरादीन्' इति[4]। एति गच्छति इत्येकः। 'इण् गतौ'। औणादिकः कन् (उ. ३. ४३)। शेषे—'एकः संख्येयभेदे स्यात्' इति। एको घटः[5]। इत्यादि ॥ स्याद् दाम्भिकः—ईक्षणः। दम्भः प्रयोजनमस्येति दाम्भिकः[6]। तदुक्तम्—

'मृषैव याायजूकादिवेषमालम्ब्य जीवति ।
आत्मस्तुतिपरो यश्च स हि दाम्भिक उच्यते ॥'

इति[7]। यश्च परिव्राजकादिर्गमनसमये कुक्कुटवत् चक्षुःसंयमनेन किंचित् किंचित् पुरोदेशं पश्यन् शनैर्गच्छति स अदूरेरितेक्षणः। तावुभौ कौक्कुटिकशब्देनोच्येते। 'मिथ्याचर्या कल्पना स्यात् कुक्कुटिः कुहना तथा' इति रत्नकोशे।

कुक्कुटिं कुहनां पश्यतीति कौक्कुटिकः। 'संज्ञाया ललाटकुक्कुटचौ पश्यति' (४. ४. ४६) इति ठकि कौक्कुटिको दाम्भिकः। कुक्कुटवन्मन्दं मन्दं चरतीति कौक्कुटिको द्वितीयः। एष स्वाभाविकचेष्टायुक्तः, प्रथमस्तु प्रतारक इत्यनयोर्भेद इति सुभूतिचन्द्रः॥ लालाटिकः—कार्याक्षमश्च यः। भालं ललाटम्। प्रभोः कोपप्रसादाभिव्यञ्जकभ्रूकुटिरेखादिपरिज्ञानाय [6]भालं ललाटं यः पश्यति स लालाटिकः। भावदर्शीति पाठे भावोऽभिप्रायः, तदर्थमिति[9] ललाटमेव पश्यतीति लालाटिकः। 'संज्ञाया ललाटकुक्कुटचौ पश्यति' (४. ४. ४६) इति ठक्प्रत्ययः। यश्च स्वकीयमन्यदीयं वा कर्तुं न शक्नोति, किं तु 'यथा ललाटे लिखितं तत्तथा न तदन्यथा' इति सर्वदा स्वललाटमेव पश्यति, न तु क्वचिदप्युद्युङ्क्ते, सोऽपि लालाटिकः॥ 'भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्'। भूभृतः पर्वतस्य नितम्बो मध्यभागः इत्येकमभिधेयम्, वलयः करभूषणं, चक्रं सैन्यम्। एषु कटकद्वयसारविच्चक्रं राष्ट्रम् इत्यपरे। यथा—आन्ध्रकटकं, कर्णाटककटकम् इति। सुभूतिचन्द्र-सर्वानन्दौ तु—भूभृन्नितम्बेत्यादिकं श्लोकार्धं प्रक्षिप्तं मन्यमानौ न व्याचक्रतुः। अत एव त्रिषूत्तरे इत्यत्र कान्तवर्गसमाप्तिपर्यन्ता शब्दाः वाच्यलिङ्गा इति व्याचक्रतुश्च। सुबोधिनीकारादयस्तु—पठित्वा व्याख्यातवन्तः। [10]'रोमाञ्चे क्षुद्रशत्रौ च तरोरङ्गे[11] च कण्टकः'। कं सुखं टङ्कयति [12]बध्नातीति कण्टकः। 'टकि बन्धने'। एतदपि श्लोकार्धं प्रक्षिप्तमेव नामरसिंहीयमिति सम्प्रदायः॥ १६-१७॥

इति कान्तवर्गः

[1] Tv adds योषिद्वृन्दारका, कलत्रवृन्दारकम् इत्यादि। [2] एके आचार्या Gm3, Tv [3] Tj1, Tj2 add अन्य इत्यर्थ [4] Tv adds 'चकितमनस क्षुद्रस्यैकाकिनोऽपि कुतो भयम्' इति [5] पट B6 [6] 'प्रयोजनम्' (५ १ १०९) इति ठञ्, 'चरति' इति ठक् वा [7] B5 adds इत्युक्तलक्षण [8] फाल Tj1 [9] तदर्थमिव Tj1 [10] सूच्यग्रे Tv [11] रोमहर्षे Tv [12] प्रतिबध्नाति Tj1

(पा) वृन्दारकौ रूपिमुख्यौ। त्रिषूत्तरे इत्यधिकारात् त्रिलिङ्ग.। वृन्दारिका कन्या वृन्दारकं कुलमिति वरयितुर्भाग्यम्। एके मुख्यान्यकेवला। 'देवेष्वेको महादेवो देवानेकान्न मन्महे'॥ स्याद् दाम्भिक —ऐक्षण। दाम्भिकौ दूरेरितेक्षणौ पुरुषौ कौक्कुटिकौ स्याताम्॥ लालाटिक —अक्षमश्च य। य प्रभोर्भावदर्शी[1], भावजिज्ञासु प्रभो, कार्याक्षम कार्यानिस स लालाटिक स्यात्॥ १६-१७॥

अनुक्तम्—

क्रुपायामपि शूकः स्यादपयाने सृगालिका ।

अपयानं पलायनम् ॥

द्रावकम्तु विदग्धेऽपि मातुल्यामपि चाम्बिका ॥
वा द्रोण्या कविवेकः स्यान्मृणालेऽपि च कोरकम् ।
कवाटकुटकेऽपि स्यात् [2]कूचिकाथ कनीनिका ॥
स्वल्पाङ्गुलौ चालिरुते वस्त्रभङ्गेऽपि चोर्मिका ।

स्वल्पाङ्गुलिः कनिष्ठिका । वस्त्रभङ्गः 'नेरि' ।

करिण्या चापि गणिका वन्धकी नर्तकी तथा ॥
स्याद् रत्नकङ्कणाङ्गारशकटचोरपि पुष्पकम् ।
भयानकस्तु शार्दूले सिंहिकातनयेऽपि च ॥

सिंहिकातनयो राहुः ॥

कौतुकं हस्तसूत्रे स्यान्नर्मण्यपि च विस्मये ।
भवेज्जलकरङ्कस्तु नारिकेलफलेऽम्बुदे ॥
लोचकस्त्वक्षितारे स्याद् भुवि रक्तांशुके जने ।
पुलको हस्तिकवले रोमाञ्चे सूक्ष्मजन्तुषु ॥
घोलको भग्नभाण्डे स्याद् भटाना च शिरस्त्रके ।
नालीकं स्यात् पद्मषण्डे पद्मे च विशिखे पुमान् ॥
[3]नालिको ग्रामकूटे स्याद् विधवाया तु जालिका ।
रुण्डिका दूतिकाया स्याद् रणभूमौ च रुण्डिका ॥
[4]रत्तको रक्तवस्त्रे स्यादनुरक्तेऽपि रक्तकः ।
अनुरागे स्त्रीजिते स्यात् काकरुकश्च निर्धने ॥
रुचकौ भूषणरवौ खड्गिखड्गौ करालिकौ ।
खनकौ चोरवित्तज्ञौ कर्कौ [5]कुलिरदर्पणौ ॥

भवेद् गुणनिका नृत्ये पाठस्यावर्तनेऽपि च ।
स्यात्तु घर्घरिका क्षुद्रघण्टिकाभृष्टधान्ययोः ॥
खद्योते चिलिमिलिका कण्ठिका विद्युति स्रजि ।

कण्ठिका कण्ठमाला ॥

इति कान्ताः

[1] °भालदर्शी B3. [2] कुञ्चिका 'कुञ्चकोल' A1. [3] जालिक, ग्रामकूटो ग्रामग्रन्थि A1. [4] रक्तकम् C1 [5] कुलक° A1.

अथ खान्तवर्गः—

**मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ ।**
**शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्रीन्द्रियेऽपि खम् ॥ १८ ॥**
**घृणिज्वाले अपि शिखे ।**

**इति खान्ताः**

(वि) रश्मिकान्त्योर्मयूखः स्याज्ज्वालाया ज्वलनस्य च ।

मिनोत्यन्धकारमिति मयूख. । 'डुमिञ् प्रक्षेपणे' ॥

मधुव्रते [1]रणे वाणे शिलीमुख उदाहृतः ॥ 37 ॥

शिली शल्य मुखे यस्य शिलीमुख ॥

शङ्ख. कम्वौ ललाटास्थिनिधिसख्यौपधेष्वपि[2] ।

श सुख खनति [3]जनयतीति शङ्खः । 'खनु अवदारणे'[4] ।

इन्द्रियस्वर्गनगरसुखक्षेत्राम्बरेषु च ॥ 38 ॥
सवेदने शून्यविन्दौ खशब्द. परिकीर्तित.[5] ।

खन्यत इति खम् ।

ज्वालाकिरणचूडासु शिफाया च शिखा स्मृता ॥ 39 ॥

शाखतीति शिखा । 'शाखृ व्याप्तौ'। । १८ ॥

इति खान्तवर्ग [6]

[1] शरे K5, K6 [2] निधौ नाम्नचौपधेऽपि च J2, K5 [3] K4 omits जनयति
[4] K2, K4, K6 add जननार्थे च [5] परिभाषित K2, K3, K4 [6] K3 K5
ad dखान्तशब्दसख्या—५

(विव.) मयूख—ज्वालासु । त्विट् कान्तिमात्रम् । करः किरणः । ज्वाला वह्निशिखा ॥ अलिबाणौ शिलीमुखौ । अलिः भ्रमरः[1] ॥ शङ्खो—न स्त्री । निधि शङ्खाख्यो निधिविशेषः । ललाटास्थि ललाटस्य प्रान्तभागस्थमस्थि । 'ललाटास्थिनिस्तोदशङ्खयोस्तथा' इति वाग्भटः। रूपभेदादर्थद्वयेऽपि पुलिङ्गः । कम्बुवाचकश्चेत् पुनपुसकलिङ्गः । शं सुख खनति [2]जनयतीति शङ्खः । 'खनु अवदारणे'। डप्रत्ययः (३. २. १०१)[3] ॥ इन्द्रियेऽपि खम् । इन्द्रियं चक्षुरादिकं खन्यत इति खम् । व्याडिश्च—'ख क्लीबे शून्यबिन्दौ[4] च स्वर्गाकाशेन्द्रियेषु च' इति । 'तस्मिन् गते [5]ख सुकृतोपपन्नम्' इति स्वर्गे प्रयोगो रघुवशे (१८. २२) ॥ घृणिज्वाले अपि शिखे । घृणिः मरीचिः । ज्वाला वह्निसबन्धिनी । 'कचबन्धे[6] शिफारश्म्योश्चूडाग्निज्वालयोः शिखा' इत्यजयः ॥ १८ ॥

इति खान्तवर्गः[7]

[1] Tj1 adds बाण सायक [2] जन्यते Tj1. [3] 'अन्येष्वपि दृश्यते'
[4] °बिम्बे Tv [5] द्या सुकृतोपलब्धाम्, स्व सुकृतोपलब्धम् इति च मु ग्र [6] शिखा°
B6, Gm1 [7] इति खान्ता शब्दा Tj1.

(पा) मयूख—ज्वालासु । त्विट् प्रभा । कर [1]किरण ॥ अलिबाणौ— इन्द्रियेऽपि [2]खम् । 'खमिन्द्रियसुखे स्वर्गे शून्ये बिन्दौ विहायसि' इति विश्व (पृ २२, श्लो १) ॥ घृणि—शिखे । 'शिखा ज्वालाकेकिमौल्यो शिखा[3] शाखाग्रमौलिषु' इति वैजयन्ती (पृ २२३, श्लो ४०) ॥ अनुक्तम्—

उपलेपे च गोमुखम् ।
मुख्योपायद्वार्य मुख सुखमानन्दतोययो. ।
नपुसक तु पाताले [4]पुस्यौर्वे वडवामुख. ॥
त्रिशिख [5]शेखरे शूले प्रेङ्खाश्वगतिनृत्तयो ॥ १८ ॥

इति खान्ता

[1] B3 adds ज्वाला वह्निशिखा　[2] B3, C1 add अपिशब्दात्　[3] शिफा इति मु ग्र　[4] पुसीशे C1　[5] शिखरे A1.

**अथ गान्तवर्ग:——**

**शैलवृक्षौ नगावगौ ।**
**आशुगौ वायुविशिखौ शरार्कविहगाः खगाः ॥ १९ ॥**

(वि ) गिरिद्रुमार्कसर्पेषु नगागौ परिभाषितौ[1] ।
न गच्छतीति नग । [2]अगश्च । [3]'गम्लृ सृप्लृ गतौ' ॥
जङ्घाले मारुते बाणेऽप्याशुग परिकीर्तित ॥ 40 ॥
आशु गच्छतीत्याशुग ॥
बाणार्कपक्षिदेवेषु ग्रहेषु च [4]खगो मत ।
खे गच्छतीति खग ॥ १९ ॥

[1] परिकीर्तितौ J2, K6　[2] K1 omits　[3] K5 omits सृप्लृ　[4] खगा मता K5

(विव.) शैलवृक्षौ नगावगौ । अगशब्दो नगशब्दश्च प्रत्येक पर्वते पादपे च वर्तते। न गच्छतीति नगः[1]। 'नगोऽप्राणिष्वन्यतरस्याम्' (६.३.७७) इति विकल्पेन नञः प्रकृतिभावः। तदभावपक्षे नलोपे सत्यगः। 'अगो भुजङ्गे शैले च वृक्षभास्करयोरपि' इति प्रतापः। आशुगौ वायुविशिखौ। विशिखो बाणः। जङ्घालेऽप्याशुगशब्दः। [2]आशु गच्छति। डः (वा. ३.२.४८) ॥ शरार्कविहगाः खगाः। शरो बाणः। विहगः पक्षिमात्रम्। 'खगो विहङ्गशरयोर्ग्रहसूर्यामरेष्वपि' इति प्रतापः ॥ १९ ॥

[1] Tv adds 'गम्लृ गतौ', 'डप्रकरणेऽन्येष्वपि दृश्यते' (वा. ३. २. ४८).
[2] B5, Gm3 omit the derivation.

(पा.) शैलवृक्षौ नगावगौ । [1]शैलवृक्षौ नगौ अगौ च स्याताम् । आशुगौ— खगा । 'पतङ्गः शलभे शालौ मार्जारेऽग्नौ[2] रवौ खगे' इति वैजयन्ती (पृ. २४२, श्लो. ४०) ॥ १९ ॥

[1] A1 omits शैलवृक्षौ. [2] अर्के खगे शरे B3, C1.

**पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः ।**
**पशवोऽपि मृगा वेगः प्रवाहजवयोरपि ॥ २० ॥**

(वि.) दिवाकरे [1]शालिभेदे [2]विशेषे विहगस्य च ॥ 41 ॥
पारदे शलभे चैव पतङ्गः परिकीर्तितः ।

पततीति पतङ्ग । 'पत्लृ गतौ' ॥

क्रमुकाख्यद्रुमे वृन्दे पूगशब्द. प्रकीर्तितः ॥ 42 ॥

पुनातीति पूगः । 'पूञ् पवने' ॥

पशौ नक्षत्रभेदे च [3]हरिणे कुञ्जरान्तरे ।
मृगयाया च याच्ञाया मृगशब्दोऽभिधीयते ॥ 43 ॥

मृग्यत इति मृगः । 'मृग अन्वेषणे' ॥

वले नदीप्रवाहे च महाकालफलेऽपि च ।
विण्मूत्रादिप्रवृत्तौ स्याद् वेगः शृङ्गारभावने[4] ॥ 44 ॥

विज्यत[5] इति वेगः । 'ओविजी भयचलनयोः' ॥ २० ॥

[1] शारिभेदे K5 [2] नि शेषे J2. [3] कुञ्जरे हरिणेऽपि च J2. [4] °भावजे J2; सस्कारभेदके K5. [5] वीयते, 'वी गत्यादिषु' K5.

**(विव.) पतङ्गौ पक्षिसूर्यौ च । पक्षी शलभाख्यः प्रागुक्तः (१,पृ. ३५१) । पततीति पतङ्गः[1] । शेषे—'शालिभेदे पक्षिमात्रे पतङ्गः पारदेऽपि च' इति ॥**

पूगः क्रमुकवृन्दयोः। इह क्रमुकशब्देन [2]ब्रह्मदारु गुवाकश्चेत्युभयं विवक्षितं वनौषधिवर्गे (पृ. २४०, ३२२), तदुभयपर्यायेषु क्रमुकपूगशब्दयोरपि[3] पाठात्। एकजातीयानामेककर्मोपजीविनां समूह एव पूगशब्दस्य मुख्योऽर्थः। 'नृपेणाधिकृताः पूगाः श्रेणयोऽथ [4]कुलानि च'-इत्यादिषु[5] च (या. स्मृ. २. २. ३०) प्रसिद्धः। समूहमात्रे तूपचारात् प्रयोगः। फले तु क्लीबम्॥ पशवोऽपि मृगाः। पशवः गोमहिष्यादयः। अपिशब्दात् सिंहप्रभृतयश्च सिंहादिवर्गे मृगशब्देनोक्ताः.[6] (पृ. ३३४)। तद्विशेषः कुरङ्गः। तथा च प्रतापः—'मृगो नक्षत्रभेदे स्यात् कुरङ्गे कुञ्जरान्तरे। मृगव्याद्यापशुषु' इति। नक्षत्रभेदो मृगशीर्षाख्यः। कुञ्जरान्तरं च गजविशेषः। तदुक्तम्—

'भद्रो [7]मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः[8]।
वनप्रचारसारूप्यसत्त्वभेदविनिश्चिताः॥'

इति॥ वेगः प्रवाहजवयोरपि। विजते चलत्यनेनेति वेगः। 'ओविजी भयचलनयोः'। करणे घञ्। कुत्वं [9]च (७. ३. ५२)। प्रवाहे यथा—'नदी वेगेन शुध्यति' (मनु. ५. १०८)। शेपे यथा—'वेगो महाकालफले विण्मूत्रादिविनिर्गमे' इति। महाकालफलः किंपाकसंज्ञो वृक्षविशेषः। [10]'वेगान्न धारयेद् वातविण्मूत्रक्षवतृट्क्षुधाः' इति विष्ठादेर्बहिःप्रवृत्तौ॥ २०॥

[1] 'पतेरङ्गच् पक्षिणि' (उ १ १२४) [2] ब्रह्मदारु पूगश्च Tv. [3] Tj1 adds उभयो [4] धनिकुलानि Tv [5] Tj1 adds स्थलेषु [6] 'इत्यादयो मृगेन्द्राद्या गवाद्या पशुजातय' इत्येव मूले (पृ ३३४) [7] मन्द B5, B8 [8] First hemistich quoted in Apte's Dict, p 1284 Attributed to *Matangalilā* by Nilakantha's Comm on *Ram* 1 6 25 [9] 'चजो कु घिण्यतो' [10] 'न वेगान् धारयेद् धीमान्' इति चरकसंहितायाम् अ ७, श्लो १

(पा) पतङ्गौ—मृगा। पशव सिंहादयः। 'गवेषणायां सिंहादौ सौम्यर्क्षे हरिणे मृग' इति रुद्र। वेग प्रवाहजवयोरपि॥ २०॥

पराग: कौसुमे रेणौ स्नानीयादौ रजस्यपि।
गजेऽपि नागमातङ्गावपाङ्गस्तिलकेऽपि च॥ २१॥

(वि.) चन्दने पुष्परजसि [1]धूलिस्नानीयचूर्णयोः ।
उपरागेऽस्तशैले च [2]परागः परिकथ्यते ।। 45 ।।

परागच्छतीति पराग । 'गम्लृ गतौ' ।।

नागकेसरपुनागनागदन्तगजेषु च ।
[3]क्रूराचारे पन्नगे च वारिदे वायुसेनयोः[4] ।। 46 ।।
रङ्गे स्त्रीकरणे चैव नागशब्दोऽभिधीयते ।

स्त्रीकरणं नाम [5]रतिकालक्रियमाणनागवन्धः[6] । नाग इव क्रूरो नागः ।।

दन्तावले च चण्डाले मातङ्गः समुदाहृतः ।। 47 ।।

मतङ्गात् जायत इति मातङ्गः ।।

अपाङ्गस्तिलके च स्यान्नेत्रप्रान्ताङ्गहीनयोः ।

अपगतमङ्ग यस्येत्यपाङ्गः ।। २१ ।।

[1] धूली° J2. [2] परागस्त्वभिधीयते K5 [3] क्रूराकारे J2. [4] °सीसयो. J2-
[5] रतिकाले K4, K5 [6] °क्रियमाण K4.

(विव.) परागः—रजस्यपि। कौसुम इति रेणुविशेषणम्। पुष्पप्रभवं रज इत्यर्थः। स्नानकाले शरीरोद्वर्तनार्थं सुगन्धि चूर्णं स्नानीयम्। आदिशब्देन पटवासकुन्तलवासकादिकं गृह्यते। रजःशब्देन रेणुमात्रं विवक्षितम्।। गजेऽपि नागमातङ्गौ। नागो मातङ्गश्चेति शब्दद्वयमत्र प्रतिपाद्यम्। तत्र नागशब्दस्य अपिशब्दसूचितोऽर्थः[1] शेषे—

'नागकेसरपुंनागनागदन्तेषु पन्नगे ।
क्रूराचारे च मेघे च वायौ नागः पुमान् भवेत् ।।
नागं स्त्रीकरणे रङ्गसीसयोः स्त्री तु योषिति ।'

इति। नागकेसरश्चाम्पेयः। पुंनागो देववल्लभः। नागदन्तो निर्यूहाख्यः। एषु त्रिष्वर्थेषु [2]नामैकदेशन्यायेन नागशब्दो वर्तते। पन्नगः काद्रवेयः प्रागुक्तः (पृ. १४८)। उपमानात् क्रूरकर्मणि। अगो गमनरहितो न भवतीति व्युत्पत्त्या वायुमेघयोः। एष्वर्थेषु पुंलिङ्गः। स्त्रीकरणं नाम सुरतसमये स्त्रीपुंसयोरवयवसंश्लेषविशेषः[3]

नागबन्धाख्यम्। रङ्गं त्रपु। सीसं प्रसिद्धम्। अस्मिन्नर्थत्रये रूपभेदाद् नपुंसकम्। योषिच्छब्देन तद्विशेषो विवक्षितः। गजजातीयसर्पजातीयवृत्तौ[4] वर्तमानश्चेत् स्त्रीलिङ्गः। तत्र जानपदादिसूत्रेण (४.१.४२) नागी [5]स्थौल्यार्थी। 'जातेरस्त्री...' (४.१.६३) इति ङीषि नागी। स्थूला गजी [6]गजयोषिद्वेत्यर्थः। मातङ्गशब्दस्तु चण्डाले प्रागुक्तः (पृ. ६३१)॥ अपाङ्गस्तिलकेऽपि च। तिलकः तमालपत्रम् (१, पृ. ४४०)। अपि शब्दाद् नेत्रान्ते। अपगतोऽङ्गाद् अपाङ्गः। अपजनपूर्वाङ्गपदे पुलिङ्गे। [7]'नित्यमिमनिजन्ताश्च' इति लिङ्गानुशासनवचनात् पुलिङ्गत्वम्। अङ्गहीने तु वाच्यलिङ्गः॥ २१॥

1 °सूचनार्थं Tj1. 2 Tj1 omits two lines 3 अवयवावयव° Tj1
4 स्त्रीव्यक्तौ for वृत्तौ Tj1 5 स्थौल्यार्थे Tv 6 नागयोषिद्वा B5 7 'इमनन्तो यथाणिमा' इति हर्षवर्धनकृतलिङ्गानुशासने (पृ २७, श्लो ३१)

(पा) पराग—रजस्यपि। स्नानीय गन्धचूर्णम्[1]। गजेऽपि नागमातङ्गौ। [2]'ग्राहाश्राहिगजा नागा' इति वैजयन्ती (पृ २१६, श्लो ३०)। 'पार्वत्यामपि मातङ्गी' इति वैजयन्ती (पृ २७२, श्लो १४)। अपाङ्गस्तिलकेऽपि च। अपिशब्देन[3] नेत्रान्तेऽपि स्यात्[4]॥ २१॥

1 °चूर्ण A1 2 ग्राहाद्रयहि° A1 3 °शब्दात् C1 4 C1 omits अपि स्यात्

**सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु।**
**योगः संनहनोपायध्यानसंगतियुक्तिषु॥ २२॥**

(वि) स्वभावे [1]निश्चये मोक्षे सृष्टौ त्यागात्मनोरपि॥ 48॥
अध्याये च तथोत्साहे सर्गशब्दोऽभिधीयते[2]।

सृज्यत इति सर्ग। 'सृज विसर्गे'॥

[3]अपूर्ववस्तुसप्राप्तावुपायध्यानयुक्तिषु॥ 49॥
वपु स्थैर्ये सनहने[4] द्रव्ये विस्रम्भघातिनि।
[5]कार्मणौपधयोर्योगो विष्कम्भादौ च सगतौ॥ 50॥

युज्यत इति योग। 'युजिर् योगे'॥ २२॥

[1] निश्चले $J_2$ [2] शब्द प्रकीर्तित $J_2$ [3] अपूर्ववसु° $K_4$ [4] सहनने $K_6$
[5] कर्मण्य° $K_5$ $K_6$

(विव) सर्ग —सृष्टिषु। अनागन्तुको धर्म स्वभाव। उत्पत्तिसिद्ध इत्यर्थ। यथा जलस्य [1]शैत्य निसर्ग। निर्मोक्ष त्याग। यथा बाणविसर्ग। निश्चयोऽध्यवसाय। यथा—'गृहाण शस्त्र यदि सर्ग एष ते' (रघु ३ ५१) इति। अध्यायो नाम रामायणादिमहाकाव्येषु कथाना विश्रान्तिस्थानम्। यथा—'सर्गबन्धो महाकाव्यम्' (काव्यादर्श १ १४)। सृष्टिरुत्पादनम्। यथा—'सर्गस्थित्यन्तकारणम्'[2] इति। 'सृज विसर्गे' इति धातोर्यथायथ कर्मणि करणे भावे च घञि सर्ग॥ योग — युक्तिषु। महाकर्मसु सभृतसभारस्य तदेकतानत्व सनहनम्। यथा—'सेतुबन्धे कृतोद्योग' इति। सनहन कवचादिकमिति केचित्। सामदानादिरुपाय। यथा—'तन्त्रावापविदा[3] योगैर्मण्डलान्यधितिष्ठता' इति माघकाव्ये (शिशु २ ८८)। ध्यान चित्तवृत्तिनिरोध। यथा—'योगेनान्ते तनुत्यजाम्' इति रघुवशे (१ ८)। सगति सश्लेष। यथा—रत्नवियोग काञ्चनस्य इति। युक्ति योग्यता, यथार्हत्वमित्यर्थ। यथा—यथायोगमितरेषाम् इति। 'युजिर् योगे' इति धातोर्यथायथ भावे कर्मणि करणे च घञि योग। शेषे—'योग सूत्रे द्रव्यलाभे विष्कम्भादौ च भेषजे' इति। पाणिन्यादीना सूत्रे यथा योगविभागादिष्टसिद्धि इति। अलब्धद्रव्यलाभे यथा—'उपेयादीश्वर चैव योगक्षेमार्थसिद्धये' (या स्मृ १ ५ १००)। 'विष्कम्भ प्रीतिरायुष्मान्' इत्यादय सप्तविंशतिर्योगा ज्योति शास्त्रे प्रसिद्धा। भेषजमौषधम्। यथा—गुग्गुलुयोग, पिप्पल्यादियोग॥ २२॥

[1] नैल्यम् Tv [2] प्रलयस्थितिसर्गाणाम एक कारणता गत इति कुमारसभव (२ ६) [3] °विदा Tv

*(मा) सर्ग —सृष्टिषु। निर्मोक्षस्त्याग। निश्चयो निर्णय। 'गृहाण* शस्त्र यदि सर्ग एष त' (रघु ३ ५१)। अध्याय काव्यपरिच्छद। सृष्टिर्निर्माणम्॥ योग —युक्तिषु। सनहन कवचम्। [1]'जागर ककटो[2] योग सनाह स्याडुरच्छद' इति रत्नकोश। उपाय सामादि[3]। [4]सगति सङ्ग। अपूर्वसप्राप्तेरन्य। 'योगोऽपूर्वार्थसप्राप्तौ सगतिध्यानयुक्तिषु' इति विश्व[5] (पृ २४, श्लो ११)। युक्तिर्युजिर्धात्वर्थ, नियोगोपयोगादि॥ २२॥

[1] जगरः $A_1$, $C_1$.　[2] कंचपः $C_1$.　[3] समाधिः $A_1$.　[4] $C_1$ omits two words.　[5] रद्रः $B_3$, $C_1$.

भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।
चातके हरिणे पुंसि सारङ्गः शबले त्रिषु ॥ २३ ॥

(वि.) सुखे [1]वेश्याभृतौ रिक्थे फणिनः फणदेहयोः ।
रक्षणेऽभ्यवहारे च [2]वर्तने भोग उच्यते ॥ 51 ॥

भुज्यत इति भोगः । [3]'भुज पालनाभ्यवहारयो.' ॥

सारङ्गो हरिणे भृङ्गे चातके शबले गजे ।

सारं गच्छतीति सारङ्ग.[4] ॥ २३ ॥

[1] वश्या° $K_5$, $K_6$　[2] चेतने $J_2$　[3] $K_2$, $K_6$ *omit.*　[4] $J_2$ adds 'गम्लृ सृप्लृ गतौ'.

(विव.) भोगः—काययोः । सुखं सुखानुभवः । यथा—'भोगी परिजनैः सह' इति । वश्यस्त्रीणां रिरंसुभिः देयं धनादिमूल्यं स्त्र्यादिभृतिः । यथा—'भोगं तु म आचक्ष्व [1]यस्मादिह स्त्रियो भोगमेव हारयन्ते' इति । आदिशब्देन स्वकीयधान्यादिप्रापणार्थं परकीयाणां घोटकबलीवर्दादीनाम् अध्वयोजनानुसारेण कल्पितं मूल्यं गृह्यते । 'भुज परिपालनाभ्यवहारयोः' इति धातोः भावादौ घञि भोगः । शेषे—'कौटिल्ये पालने च स्याद् [2]दाने च द्रविणेऽपि च' इति । 'भुजो कौटिल्ये' इति धातोः निष्पन्नस्य कौटिल्यमर्थः ॥ चातके—शबले त्रिषु । चातकः पक्षिविशेषः प्रागुक्तः (पृ. ३४०) । हरिणः कुरङ्गः । शबलः कर्बुरवर्णः । शेषे—'हस्तिभृङ्गौ च सारङ्गौ' इति । विश्वप्रकाशेऽपि—'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' (पृ. २७, श्लो. ४६) इति । सजातीयैररम् अत्यर्थं गच्छतीति सारङ्गः (वा. ३. २. ३८)[3] । साराणि श्रेष्ठानि अङ्गान्यवयवानि अस्येति वा सारङ्गः । शकन्ध्वादित्वात् पररूपत्वम्[4] (वा. ६. १. ९४) ॥ २३ ॥

[1] तस्मादिह $B_5$, $B_6$　[2] स्यादादाने (?).　[3] 'खच्च डिद्वा वक्तव्यः'.
[4] शकन्ध्वादिषु पररूपं वक्तव्यम्

(विव.) स्वर्गेषु—पुंसि गौः। इषुः बाणः। पशुः गोत्वजात्याक्रान्ता व्यक्तिः स्त्री च पुमांश्च। वज्रः कुलिशः। घृणिः रश्मिः। [1]गोशब्दः स्वर्गादिष्वर्थेषु वर्तमानो लक्ष्यदृष्टचा प्रयोगानुसारेणार्थविशेषेषु स्त्रीलिङ्गः पुंलिङ्गश्च विज्ञेय इत्यर्थः। अत्र लिङ्गव्यवस्था सर्वानन्दसुभूतिचन्द्रोदाहृतत्रिकाण्डशेषाभिधाने (पृ. २४, श्लो. ६११–२) दर्शिता। तथा हि—

'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान्।
स्त्री बाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु[2] भूम्नि च[3] ॥'

इति। स्वर्गाद्यर्थचतुष्टये पुंलिङ्गः। बाणाद्यर्थेषु षट्सु स्त्रीलिङ्गः। अप्सु जले स्त्रीलिङ्गो बहुवचनान्तश्च भवतीत्यर्थः॥ लिङ्गं चिह्नशेफसोः। [4]चिह्नम् अनुमितिसाधनम्। यथा—धूमोऽग्नेर्लिङ्गम् इति। असाधारणधर्ममात्रं च चिह्नम्। यथा—'स वर्णिलिङ्गी विदितः समाययौ' इति (किरा. १. १)। 'यद्विष्णोर्लिङ्गधारणम्' इति च। शेफो मेहनम्। यथा—'अन्तर्लिङ्गं न शोधयेत्', 'एका लिङ्गे गुदे तिस्रः' इति (मनु. ५. १३६)। लिङ्गति ज्ञापयति गूढमर्थं गमयतीति लिङ्गम्। 'लिगि गतौ'। घञ्। सांख्योक्तप्रकृतौ च लिङ्गस्य व्यवहारः। शिवमूर्तिविशेषश्च। [5]'बाणलिङ्गे शिवः साक्षात्' इति ॥ २५ ॥

[1] गच्छतीति गौः। 'गमेर्डो.' (उ. २. ६६). [2] मुद्रितग्रन्थे °दृग्धीदिग्वाग्भूषु इति दृश्यते. [3] ककुप्सु च (टी. स. पृ. ८१). [4] लिङ्गम् Tv. [5] नर्मदानद्युद्भव धवलशिवलिङ्गम्.

(पा.) स्वर्गेषु—चिह्नशेफसोः। स्वर्गादिषु पुलिङ्गः। इष्वादिषु स्त्रीलिङ्गः।

'गौः स्वर्गे वृषभे रश्मौ [1]वज्रे चन्द्रमसि स्मृतः।
[2]अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौः स्मृता[3] ॥

इति विश्वः (पृ. २४, श्लो. १) ॥ २५ ॥

[1] अभ्रे A1 [2] अर्जुने C1, मुद्रितग्रन्थे च. [3] मता B3.

**शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः।**
**भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥**

## इति गान्तवर्गः

(वि.) सानौ [1]विषाणे प्राधान्ये शिखरे पर्वतस्य च ॥ 56 ॥
क्रीडाम्बुजलयन्त्रे च शृङ्गशब्दः प्रयुज्यते[2] ।

शृणातीति शृङ्गम् । 'शॄ हिंसायाम्' ॥

मातङ्गेऽपि वराङ्ग स्याद् गुह्ये मूर्ध्नि गुडत्वचि ॥ 57 ॥

[3]वर च तदङ्ग च वराङ्गम् ॥

भगो माहात्म्यवीर्यश्रीकीर्तिवैराग्ययुक्तिपु[4] ।
[5]ज्ञानेच्छायत्नगुह्येषु धर्मे चैश्वर्यसूर्ययो. ॥ 58 ॥

भज्यते सेव्यत[6] इति भग । 'भज सेवायाम्' ॥ २६ ॥

इति गान्तवर्ग [7]

[1] विशेषे K6 [2] उदाहृत J2; प्रकीर्तित K4, K5 [3] J2 omits. [4] भूमिपु J2. [5] ज्ञानेच्छायत्न° J2 [6] J2, K5 omit. [7] K4 adds गान्तशब्दसख्या २४

(विव.) शृङ्गं प्राधान्यसान्वोश्च । प्रधानस्य भावः प्राधान्यम् । प्रभुत्वमिति यावत् । यथा—'शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः' (रघु. ६. ६२) इति । सानु गिरिशिखरम्, प्रस्थश्च । [1]तथा च कात्यः—'शृङ्गं शिखरं सान्वपि' इति । शृङ्गशब्दः पुंलिङ्गेऽप्यस्ति । तथा च वैजयन्त्याम् (पृ. २३७, श्लो. ८७)—'क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः । पश्वङ्गे च' इति । कूर्चशीर्षे पुंलिङ्गः प्रागुक्तः (पृ. ३०२) । मद्गुरस्य प्रियायां (पृ. २७२) विषायां च (पृ. २७३) क्लीबन्तः प्रागुक्त.[2] ॥ वराङ्गं मूर्धगुह्ययोः । गुह्यं योनिः । अवयवेषु श्रैष्ठ्यादुभयोर्वराङ्गत्वम् । 'गुडत्वचि वराङ्गं स्याद् योनौ मूर्ध्नि गजे तु ना' इति रभसः ॥ भगः—कीर्तिषु । श्रीः संपत्तिः कान्तिश्च । कामो योनिः इच्छा च । माहात्म्यशब्देन ज्ञानवैराग्यैश्वर्ययोगो विवक्षितः । वीर्यमकुण्ठिता शक्तिः । यत्न उत्साहः । अर्कः सूर्यः । कीर्तिः साधुवादः । रूपभेदात् पुंलिङ्ग इति सुभूतिः । रभसकोशे तु—'भगं श्रीयोनिवीर्येषु ज्ञानवैराग्यधर्मयोः' इत्यादि

(पा) भोग—काययो । स्त्र्यादिभृतिर्नाम [1]लञ्जिकादिवेतनम् । [2]'चिडुपुमुदलैनदि' ॥ चातके—शबले त्रिषु । भृङ्गकुरङ्गगजेषु च पुलिङ्गः । 'सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे' इति विश्व. (पृ. २७, श्लो. ४६) ॥ २३

[1] लञ्जिकाया एकवेलासभोगार्थं दीयमानवस्त्रदानादि A1. [2] B3 omits.

**कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे ।**
**यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु ॥ २४ ॥**

(वि.) शाखामृगे च मण्डूके प्लवग. सूर्यसारथौ ॥ 52 ॥

[1]प्लवैरुल्लङ्घनैर्गच्छतीति प्लवग [2] ॥

पराभवे चाभिषङ्गस्तथैव क्लेशशापयो.[3] ।

अभिषज्यत इत्यभिषङ्ग. । 'षञ्ज सङ्गे' ॥

युगो रथाद्यवयवे युग हस्तचतुष्टये ॥ 53 ॥
कृतत्रेतादिके चैव युग्मे वृद्ध्याख्यभेषजे ।

युज्यत इति युग. । 'युजिर् योगे'[4] ॥ २४ ॥

[1] J2 omits derivation [2] K3 adds 'गम्ऌ गतौ'. [3] °तापयो J2.
[4] J2 omits.

(विव.) कपौ च प्लवगः । प्लवैरुल्लङ्घनैर्गच्छतीति प्लवगः[1] । चशब्दाद् मण्डूके । यस्तु प्लवेनोडुपेन गच्छति, यश्च उत्प्लुत्य गच्छति सोऽपि प्लवगः ॥ शापे—पराभवे । अपकारिणामनिष्टाशंसनं शापः । मिथ्याभिशंसनं वा । तिरस्कारः पराभवः । दोषाणामभिषञ्जनम् अभिषङ्गः । 'षञ्ज सङ्गे' । घञ् (३. ३. १८, ८. ३. ६५)[2] । 'आक्रोशे शपथेऽपि स्यादभिषङ्गः पराभवः' इति रुद्रः ॥ यानाद्यङ्गे—कृतादिषु । यानं रथः । आदिशब्देन शकटलाङ्गलादेः ग्रहणम् । तस्याङ्गे उपकरणे तुरगबलीवर्दादिस्कन्धनिधेये काष्ठविशेष इत्यर्थः । तत्र युगशब्दः पुलिङ्गः । पाणिपादादिवस्तुद्वयसमुदायरूपे युग्मम् । कृतत्रेताद्वापरकलिषु वर्तमानो नपुंसकलिङ्गः । युगशब्दः प्रागेव व्युत्पादितः[3] (पृ. ३५८) । शेषे—'युगं हस्तचतुष्के स्यादौषधे वर्षपञ्चके' इति । 'युगेन पतितं त्यजेत्' इति हस्तचतुष्टये

प्रयोगः। औषधे वृद्धिसंज्ञे। 'इमे हि षष्टिः प्रभवादयोऽब्दाः युगानि हि द्वादश पञ्चकं च' इति ज्योतिःशास्त्रप्रसिद्धो वर्षपञ्चके युगशब्दः ॥ २४ ॥

[1] 'डप्रकरणेऽन्येष्वपि दृश्यते' (वा. ३. २. ४८) इति डः. [2] 'उपसर्गात् सुनोति ...' इत्यादिना षः. [3] युजिर् योगे। घञ्। कुत्वम् (७. ३. ५२)। 'तद्वहति रथयुग ...' इति निपातनान्न गुण..

(पा.) कपौ च प्लवगः। 'प्लवगो वानरे भेके सारथौ चोष्णदीधितेः' इति विश्वः (पृ. २६, श्लो. २८)। शापे—पराभवे। शापशब्देन शपथाक्रोशयोरेव ग्रहणम्। 'आक्रोशे शपथेऽपि स्यादभिषङ्ग. पराभवे' इति [1]वैजयन्ती (पृ. २६५, श्लो. १०) ॥ यानाद्यङ्गे—वृतादिषु। हस्तचतुष्टयेऽपि नपुसकम्[2]। 'युगं हस्तचतुष्केऽपि रथसीराङ्गयोर्युगः' इति विश्व.[3] (पृ. २४, श्लो. ४) ॥ ॥ २४ ॥

[1] इति विश्व. B3; मुद्रितवैजयन्त्या 'अभिषङ्गस्त्वभिभवे सग आक्रोशनेऽपि च' इति, विश्वप्रकाशिकाया 'अभिषङ्गस्तु शपथे स्यादाक्रोशे पराभवे' इति च दृश्यते (पृ २८, श्लो ५६) [2] नपुसक A1. [3] बोम्मगण्टीयविवरणे 'इति रुद्र ' इति दृश्यते.

**स्वर्गेषुपशुवाग्वज्रदिग्नेत्रघृणिभूजले ।**
**लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥ २५ ॥**

(वि.) पशुदिग्वज्रनेत्रेषु स्वर्गबाणजलेषु च ॥ 54 ॥
मेदिन्या किरणे वाचि गोशब्द परिकीर्तित[1] ।

गोशब्दस्य लक्ष्यदृष्ट्या यथार्ह लिङ्गमुन्नेयम्। गच्छतीति गौ ।

साङ्ख्योक्तप्रकृतौ चिह्ने तथा शेफानुमानयो. ॥ 55 ॥
शिवमूर्तिविशेषे च लिङ्गशब्दोऽभिधीयते[2] ।

लिङ्गति लय गच्छत्यस्मिन् [3]जगदिति लिङ्गम्[4] ॥ २५ ॥

[1] परिकथ्यते J2 [2] लिङ्ग समभिधीयते J2, K4, K5 [3] K6 omits जगत्.
[4] K4 adds 'लिगि गतौ'.

(विव.) स्वर्गेषु—पुंसि गौः। इषुः बाणः। पशुः गोत्वजात्याक्रान्ता व्यक्तिः स्त्री च पुमांश्च। वज्रः कुलिशः। घृणिः रश्मिः। [1]गोशब्दः स्वर्गादिष्वर्थेषु वर्तमानो लक्ष्यदृष्टचा प्रयोगानुसारेणार्थविशेषेषु स्त्रीलिङ्गः पुंलिङ्गश्च विज्ञेय इत्यर्थः। अत्र लिङ्गव्यवस्था सर्वानन्दसुभूतिचन्द्रोदाहृतत्रिकाण्डशेषाभिधाने (पृ. २४, श्लो. ६११–२) दर्शिता। तथा हि—

'स्वर्गे रश्मौ च वज्रे च बलीवर्दे च गौः पुमान्।
स्त्री बाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सु[2] भूम्नि च[3] ॥'

इति। स्वर्गाद्यर्थचतुष्टये पुंलिङ्गः। बाणाद्यर्थेषु षट्सु स्त्रीलिङ्गः। अप्सु जले स्त्रीलिङ्गो बहुवचनान्तश्च भवतीत्यर्थः॥ लिङ्गं चिह्नशेफसोः। [4]चिह्नम् अनुमितिसाधनम्। यथा—धूमोऽग्नेर्लिङ्गम् इति। असाधारणधर्ममात्रं च चिह्नम्। यथा—'स वर्णिलिङ्गी विदितः समाययौ' इति (किरा. १. १)। 'यद्विष्णोर्लिङ्गधारणम्' इति च। शेफो मेहनम्। यथा—'अन्तर्लिङ्गं न शोधयेत्', 'एका लिङ्गे गुदे तिस्रः' इति (मनु. ५. १३६)। लिङ्गति ज्ञापयति गूढमर्थं गमयतीति लिङ्गम्। 'लिगि गतौ'। घञ्। सांख्योक्तप्रकृतौ च लिङ्गस्य व्यवहारः। शिवमूर्तिविशेषश्च। [5]'बाणलिङ्गे शिवः साक्षात्' इति ॥ २५ ॥

[1] गच्छतीति गौः। 'गमेर्डोः' (उ. २. ६८)। [2] मुद्रितग्रन्थे °दृग्धीदिग्वाग्भूषु इति दृश्यते. [3] ककुप्सु च (टी. स. पृ ८१)। [4] लिङ्गम् Tv. [5] नर्मदानद्युद्भव धवलशिवलिङ्गम्.

(पा.) स्वर्गेषु—चिह्नशेफसोः। स्वर्गादिषु पुलिङ्गः। इष्वादिषु स्त्रीलिङ्गः।

'गौः स्वर्गे वृषभे रश्मौ [1]वज्रे चन्द्रमसि स्मृतः।
[2]अर्जुनीनेत्रदिग्बाणभूवाग्वारिषु गौः स्मृता[3] ॥

इति विश्वः (पृ. २४, श्लो. १) ॥ २५ ॥

[1] अभ्रे A1 [2] अर्जुने C1, मुद्रितग्रन्थे च. [3] मता B3.

शृङ्गं प्राधान्यसान्वोश्च वराङ्गं मूर्धगुह्ययोः ।
भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ॥ २६ ॥

इति गान्तवर्गः

(वि.) सानौ [1]विषाणे प्राधान्ये शिखरे पर्वतस्य च ॥ 56 ॥
क्रीडाम्बुजलयन्त्रे च शृङ्गशब्दः प्रयुज्यते[2] ।

शृणातीति शृङ्गम् । 'शॄ हिंसायाम्' ॥

मातङ्गेऽपि वराङ्गं स्याद् गुह्ये मूर्ध्नि गुडत्वचि ॥ 57 ॥

[3]वरं च तदङ्गं च वराङ्गम् ॥

भगो माहात्म्यवीर्यश्रीकीर्तिवैराग्ययुवतिषु[4] ।
[5]ज्ञानेच्छायत्नगुह्येषु धर्मे चैश्वर्यसूर्ययोः ॥ 58 ॥

भज्यते सेव्यत[6] इति भगः । 'भज सेवायाम्' ॥ २६ ॥

इति गान्तवर्गः[7]

[1] विशेषे K₆ [2] उदाहृत J2; प्रकीर्तित K4, K5 [3] J2 omits. [4] भूमिषु J2. [5] ज्ञानेच्छायत्त° J2 [6] J2, K5 omit. [7] K4 adds गान्तशब्दसख्या २४

(विव.) शृङ्गं प्राधान्यसान्वोश्च । प्रधानस्य भावः प्राधान्यम् । प्रभुत्वमिति यावत् । यथा—'शृङ्गं स दृप्तविनयाधिकृतः परेषामत्युच्छ्रितं न ममृषे न तु दीर्घमायुः' (रघु. ९. ६२) इति । सानु गिरिशिखरम्, प्रस्थश्च । [1]तथा च कात्यः—'शृङ्गं शिखरं सान्वपि' इति । शृङ्गशब्दः पुलिङ्गेऽप्यस्ति । तथा च वैजयन्त्याम् (पृ.२३७,श्लो.८७)—'क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः । पश्वङ्गे च' इति । कूर्चशीर्षे पुंलिङ्गः प्रागुक्तः (पृ. ३०२) । मद्गुरस्य प्रियायां (पृ. २७२) विषायां च (पृ. २७३) ङीबन्तः प्रागुक्तः[2] ॥ वराङ्गं मूर्धगुह्ययोः । गुह्यं योनिः । अवयवेषु श्रेष्ठ्यादुभयोर्वराङ्गत्वम् । 'गुडत्वचि वराङ्गं स्याद् योनौ मूर्ध्नि गजे तु ना' इति रभसः ॥ भगः—कीर्तिषु । श्रीः संपत्तिः कान्तिश्च । कामो योनिः इच्छा च । माहात्म्यशब्देन ज्ञानवैराग्यैश्वर्ययोगो विवक्षितः । वीर्यमकुण्ठिता शक्तिः । यत्न उत्साहः । अर्कः सूर्यः । कीर्तिः साधुवादः । रूपभेदात् पुंलिङ्ग इति सुभूतिः । रभसकोशे तु—'भगं श्रीयोनिवीर्येषु ज्ञानवैराग्यधर्मयोः' इत्यादि

नपुंसककाण्डेऽभिहितम् । रुद्रस्तु—'ज्ञानवैराग्ययोर्योनौ भगमस्त्री रवौ तु ना' इति । भज्यत इति भगः । 'भज सेवायाम्' । घप्रत्ययः[3] (३. ३. ११८) ॥ २६ ॥

इति गान्तवर्गः

[1] कात्यस्तु इति स्वामी (पृ. २७५). [2] वृ(ऋ)पभाख्यौपधिविशये च (पृ. २८३).
[3] 'पसि सज्ञाया घ प्रायेण', कुत्व च (७ ३ ५२).

(पा.) शृङ्गं—सान्वोश्च । प्राधान्यं प्रभुत्वम् । सानुः पर्वताग्रम् ।

'प्रभुत्वे पर्वतस्याग्रे पशोरवयवेऽपि च ।
क्रीडापानीययन्त्रे च शृङ्गं ना कूर्चशीर्षके ॥'

इति रभसः[1] । वराङ्ग—कीर्तिषु ।

'भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु ।
यशोवीर्यप्रयत्नेच्छाश्रीधर्मरविमुक्तिषु ॥'

इति विश्वः (पृ. २४, श्लो. ३) । 'भगं योन्या भगो यत्नयशोवीर्यार्कभूतिषु' इति वैजयन्ती (पृ. २३४, श्लो. ११५) । 'ज्ञानवैराग्ययोर्योनौ [2]भगमस्त्री तु भास्करे' इति रुद्र. । अनुक्तम्—

रागोऽनुरागे मात्सर्ये गानाङ्गे रोचनादिषु ।

अनुरागे—वीतरागो जनः। मात्सर्ये—सपत्न्यौ व्यतिरज्येते । गानाङ्गे—[3]गुर्जरीरागेण गायति । रोचनादिषु—रोचनिक वस्त्रम् । हारिद्रं वस्त्रम् ॥ रङ्गो रणाजिरे नृत्येऽपि । अवसरसगररङ्गे रङ्गत्वे तुरंगमास्तुङ्गाः ॥

अमुख्योपाययोरङ्गं कालिङ्गो राजसर्पयोः[4] ॥

छत्रभङ्गस्तु वैधव्येऽस्वातन्त्र्ये च नृपात्यये ।
कथाप्रसङ्गस्तु विपवैद्ये [5]वाताधिकेऽपि च ॥ २६ ॥

इति गान्तवर्गः

[1] रुद्र. B3. [2] भग न स्त्री A1. [3] गुर्जर्या A1. [4] सर्पगजयो A1.
[5] वार्तादिके A1.

अथ घान्तवर्गः—

**परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये ।**
**मूल्ये पूजाविधावर्घोऽंहोदुःखव्यसनेष्वघम् ।। २७ ।।**
**त्रिष्विष्टेऽल्पे लघुः**

(वि.) अर्गले काचकलशे योगे प्राकारगोपुरे ।
[1]अस्त्रे घट्टे मुद्गरे च परिघः परिकीर्त्यते[2] ।। 59 ।।

[3]परिहन्यत इति परिघ. । 'हन हिंसागत्योः' ।।[4]

ओघः परंपरावृन्दवावेगेषु लयान्तरे ।

उह्यत इति ओघ. । 'वह प्रापणे' ।।

अर्घः [5]पूज्योपहारे च मूल्ये द्रव्यस्य वर्तते ।। 60 ।।

अर्ह्यतेऽनेनेत्यर्घ. । 'अर्ह पूजायाम्' ।।

अघ दु.खे किल्विषे स्यादक्षादिव्यसनेऽपि च ।

[6]कारिणमङ्घत इत्यघम् । 'अघि गत्याक्षेपे' ।।

[7]इष्टाल्पासारशीघ्रेषु स्पृक्कायामगुरौ लघुः ।। 61 ।।

लङ्घ्यत इति लघु । 'लघि गतौ' ।। २७ ।।

इति घान्तवर्ग.[8]

[1] अस्त्री $K_6$. [2] परिकथ्यते $K_4$; परिपठ्यते $J_2$, $K_5$ [3] परितो हन्यते $K_3$, $K_4$ [4] $K_6$ omits [5] पूजोपहारे $K_2$, $K_3$, $K_5$; उपचारे $J_2$ [6] कारण $K_6$. [7] °अल्पाचार° $K_6$ [8] $K_4$ adds घान्तशब्दसख्या ५

(विव.) परिघः—अस्त्रेऽपि । परितो हननं परिघातः । परितो हन्यतेऽनेनेति व्युत्पत्त्या परिघशब्देन सर्वतो लोहवलयबद्धं लगुडाख्यमस्त्रमुच्यते । 'परौ घः' (३. ३. ८४) इति भावकर्मणोरर्थयोः हन्तेरप्प्रत्यये घत्वम्[1] ।

'परिघः काचकलशे घट्टे प्राकारगोपुरे ।
परिघाते योगभेदे मुद्गरार्गलयोरपि ॥'

इति नानार्थसंग्रहः। काचनिर्मितः कलशः काचकलशः। गिर्यरण्यादिप्राचुर्येण दुष्प्रवेशस्थलं घट्टम्। योगभेदो विष्कम्भादिष्वन्यतमः। अर्गलं द्वारपिधानस्य विष्कम्भः॥ ओघो—रये[2]। 'वह प्रापणे'। पचाद्यचि (३. १. १३४) न्यङ्क्वादित्वात् (७. ३. ५३) साधुः॥ मूल्ये पूजाविधावर्घः। महार्घः पट इति मूल्ये। 'तमर्घ्यमर्घादिकयादिपूरुषः' (शिशु. १. १४) इति पूजायाम्। विक्रेयः पटादिर्गुर्वादिर्वा अर्घः। 'अर्ह पूजायाम्'। 'पुंसि संज्ञायां घः प्रायेण' (३. ३. ११८) इति घः। न्यङ्क्वादिः (७. ३. ५३)॥ अंहो—अघम्। अंहः पापम्। व्यसनं मद्यपानद्यूतादि। 'अघि गतौ'[3] इति धातोः पचाद्यच् (३. १. १३४)॥ त्रिष्विष्टेऽल्पे लघुः। इष्टे यथा—'दर्शनेन लघुना यथा तयोः प्रीतिमापुरुभयोस्तपस्विनः' इति[4] (रघु. ११. १२)। अल्पे यथा—लघ्वाहार इति॥

'कृष्णागरुणि शीघ्रे च क्लीबे लघ्वगुरौ त्रिषु ।
निःसारे च मनोज्ञे च स्पृक्काया च लघुः स्त्रियाम् ॥'

इति[5]। शीघ्रत्वगुणयुक्ते तु त्रिलिङ्गः प्रागुक्तः (१, पृ. ४४)। अगुरौ गुरुत्वगुणरहिते तृणतूलादौ। नि.सारे साराशरहिते शिग्रुकाष्ठादौ॥ २७॥

इति घान्तवर्गः[6]

[1] घादेशश्च Tv [2] Tj1, Tj2 add व्यक्तयोगे च [3] 'अघि गत्याक्षेपे' B5, B6 [4] Tv adds रघुवशप्रयोग [5] इति रभस इति भा दी (पृ ४६३). [6] B5 adds शब्दा ५

(पा.) परिघ—अस्त्रेऽपि। परिघातो घात। 'परिघो मुद्गरे शस्त्र कथ्यतेऽर्गलघातयो.' इति जयकोश। ओघो—रये। परपरायामपि स्यात्। 'ओघ परपराया स्याज्जलस्रोतसि सचये' इति वैजयन्ती (पृ २१४, श्लो १०)॥ मूल्ये—अल्पे लघु। [1]अपराध्यर्थेऽपि त्रिलिङ्ग। 'लघु त्वसारगुरुणोरिष्टे क्षिप्रमनोज्ञयो' इति वैजयन्ती (पृ २२६, श्लो १५)॥ २७॥

इति घान्तवर्ग

[1] B3 omits the sentence

अथ चान्तवर्गः—

काचाः शिक्यमृद्भेददृग्रुजः ।
विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः ॥ २८ ॥
मास्यमात्ये चात्युपधे पुंसि मेध्ये सिते त्रिषु ।
अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ॥ २९ ॥

(वि) दृग्रोगमणिशिक्येषु मृद्भेदे काच इष्यते[1] ।

शिक्य रज्जुमन्त्रम् । [2]कच्यत इति काच । 'कच दीप्तिबन्धनयो '[3] ।

सचये च विपर्यासे प्रपञ्चो विस्तरे मत ॥ 62 ॥

विपर्यासो मायाप्रतरणम् । प्रपञ्च्यत इति प्रपञ्च । 'पचि [4]विस्तारवचने' ।

शृङ्गारधर्मयोर्वह्नावुपधौ शुद्धमन्त्रिणि ।
आषाढमासे[5] मेध्ये च शुभ्रे शुचिरुदाहृत ॥ 63 ॥

[6]शुच्यति शुद्धो भवतीति शुचि । 'शुचिर् पूतीभावे' ॥

रागेच्छारश्मिशोभासु ज्वालाया च रुचिर्मता ।

रोचत इति रुचि । 'रुच दीप्तौ'[7] ॥ २८–९ ॥

इति चान्तवर्ग [8]

[1] उच्यते J2　[2] K5 adds रज्जु　[3] बन्धने J2　[4] विस्तारे K2, K4
[5] °मासि K5　[6] शोचति 'शुच शोके' K4, K6　[7] अभिप्रीतौ च इति धातुपाठे
[8] K4 adds चान्तशब्दसंख्या ४

(विव.) काचा —दृग्रुज. । घटादिधारणार्थो रज्जुकृतो यन्त्रविशेष शिक्यम् । मृद्भेदस्तु दरिद्रयोषिदादिधारणीयाना वलयाङ्गुलीयकादीना प्रकृतिभूतो मृत्तिकाविशेषः । दृशः नेत्रस्य रुग् रोगः काचाख्य प्रसिद्धः । 'कच दीप्तिबन्धनयोः' इति धातोः कर्मण्यधिकरणे च यथायोग घञ् । 'न क्वादे.' (७. ३. ५९) इति कुत्वप्रतिषेधः ॥ विपर्यासे—प्रपञ्चः । अतस्मिन् तदिति प्रत्ययो विपर्यासः ।

यथा—'प्रपञ्चस्य लयो ज्ञानात्' इति। विस्तरः शब्दबाहुल्यम्। यथा—'अलमतिप्रपञ्चेन' इति। पदार्थप्रपञ्चः इत्यादौ शब्दव्यतिरिक्ते प्रपञ्चे शब्द औपचारिकः। 'पचि विस्तारवचने' इत्यस्मात् चौरादिकात् 'एरजण्यन्तानाम्' इति ण्यन्तपर्युदासस्य प्रायिकत्वाद् एरचि (३. ३. ५६) प्रपञ्चः॥ पावके—सिते त्रिपु। अत्र मासिशब्देनापाढमासो विवक्षितः। [1]'शौचाचारपरिज्ञानममात्यानामुपधा' इति कौटिल्यः (अर्थशास्त्रे १. १०)। परिज्ञानोपायश्च क्षत्रियवर्गे प्रपञ्चितः (पृ. ४६६)। तामतिक्रान्तोऽत्युपधः, उपधाशुद्ध इति यावत्। पावकाद्यर्थत्रये पुंलिङ्गः। पवित्रे धवलद्रव्ये च वाच्यलिङ्गः। शृङ्गाररसेऽपि शुचिशब्दः पुलिङ्ग-प्रागुक्तः (१, पृ. १३१)॥ [2]अभिपङ्गे—रुचिः स्त्रियाम्। अभिषङ्गः आसक्तिः। यथा—वेदाम्यासरुचिः इति। स्पृहा वाञ्छा। यथा—'भिन्नरुचिर्हि लोकः' इति (रघु. ६. ३०)। तिग्मरुचिरिति गभस्तौ। 'रुच दीप्तौ' इत्यस्माद् 'इगुपधात् कित्' (उ. ४. १२०) [3]इतीन्प्रत्यये रुचि॥ २८—९॥

इति चान्तवर्गः

[1] 'उपधाभि शौचाशौचपरिज्ञानममात्यानाम्' इति मु ग्र (पृ १०) [2] अभिष्वङ्गे Tv. [3] इति क्तिप्रत्यये B5, B6

(पा.) वाचा—दृग्रुज। मूढ्वेद। 'गाजु'॥ विपर्यासे—प्रपञ्च। [1]विस्तर शब्दविस्तृति॥ पावके—त्रिपु। अत्युपधशब्दोऽमात्यविशेषणम्।

'शुचि [2]शब्देऽनुपहते शृङ्गारापाढयो सिते।
ग्रीष्मे हुतवहेऽपि स्यादुपधाशुद्धमन्त्रिणि॥'

इति विश्व (पृ ३०, श्लो ६)॥ [3]अभिपङ्गे—रुचि स्त्रियाम्। अभिपङ्गोऽत्यासक्ति। स्पृहा बुभुक्षा॥ अनुक्तम्—

श्मश्रुण्यपि च कूर्चं स्यात् वच. शुष्कव्रणेऽपि च।
पिशाच स्याद् विडालेऽपि नागचोऽम्बुकरिण्यपि[4]॥
चञ्च. किरातभेदे स्याच्चञ्चा स्त्री तृणपूरुषे।

[5]कणीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च ॥
रतनारीचः शुनके सीत्कारे च नतभ्रुवाम् ।

इति चान्तवर्गः

परिधानाञ्चले कच्छः पार्श्वे पुष्पवनेऽपि च ।
पुच्छः पश्चात्प्रदेशेऽपि म्लेच्छः पापरतेऽपि च ॥ २८–९ ॥

इति छान्ताः

[1] प्रपञ्च शब्दविस्तृति B3 [2] शुद्धे इति मु ग्र [3] अभिष्वङ्गे B3, C1.
[4] अम्बुकरी जलगज [5] कणीची B3, C1.

अथ जान्तवर्गः—

**केकिताक्ष्यविहिभुजौ दन्तविप्राण्डजा द्विजाः ।**
**अजा विष्णुहरच्छागा गोष्ठाध्वनिवहा व्रजाः ॥ ३० ॥**

(वि) अहिभुङ्नकुलेऽपि स्याद् वैनतेयमयूरयो ॥ 64 ॥

अहिं भुङ्क्त इत्यहिभुक्[1] ॥

त्रैवर्णिकेषु दन्तेषु पक्षिसर्पादिषु द्विज ।
रेणुकाया च भार्या च द्विजाशब्द उदाहृत[2] ॥ 65 ॥

[3]द्विर्जायत इति द्विज । 'जनी प्रादुर्भावे' ॥

हरे हरौ विधौ कामे छागे रघुसुतेऽप्यज ।

विधिर्ब्रह्मा । न जायत इत्यज. ॥

गोस्थानाध्वसमूहेषु [4]व्रजशब्दोऽभिधीयते ॥ 66 ॥

व्रजतीति व्रज । 'व्रज गतौ' ॥ ३० ॥

[1] K4 adds 'भुज पालनाभ्यवहारयो' [2] प्रकीर्तित K2, K3 [3] J2 omits.
[4] *K3 omits 7 lines*

(विव) [1]अनन्तरमच्छकच्छतुच्छादीना सद्भावेऽपि तेषा प्रयोगप्राचुर्याभावात् तानुपेक्ष्य जान्तानाह—केकिताक्ष्यावहिभुजौ । निगदव्याख्यातम् । नकुलेऽप्यहिभुक्शब्द ॥ दन्तविप्राण्डजा द्विजा । विप्रग्रहण त्रैर्वाणकोपलक्षणम् । तथा च स्मृति —

[2]'मातुर्यदग्रे जायन्ते द्वितीय मौञ्जिबन्धनात् ।'
[3]'तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ।'
[4]'ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजा स्मृता ।'

इति । अत एव द्विर्जाता द्विजा । वृत्तिविषये सुच्प्रत्ययस्य लोप । अण्डजा पक्षिसर्पाद्या । [5]भार्या रेणुकाया च द्विजा स्त्रीलिङ्गा प्रागुक्ता (पृ २६८, २८६) ॥ अजा विष्णुहरच्छागा । न जायत इत्यज । अजति गच्छतीति वा अज । 'विधीशविष्णुकामेषु पुस्यज प्रकृतौ स्त्रियाम्' इति नानार्थसग्रह [6]। रघुपुत्रोऽप्यज प्रसिद्ध ॥ गोष्ठाध्वनिवहा व्रजा । गोष्ठ गोस्थानम् । निवह समूहे । व्रजन्त्यस्मिन्निति व्रज । 'गोचरसचरवहव्रजव्यजापणनिगमाश्च' (३ ३ ११९) इति घप्रत्ययान्तो निपातित ॥ ३० ॥

[1]पुच्छतुच्छ° Gm3 Tv [2]याज्ञ स्मृ १ २ ३९ [3]मनु २ १७०
[4]याज्ञ स्मृ १ २ ३९ [5]'हम्चिका ब्राह्मणी पत्रा भार्गी' इत्यव दृश्यत, हमच द्रत्व— द्विजा भार्गीरेणुकयो इत्याह (अ स पृ ८ श्लो ७१) [6]अजयपालकृतनानार्थसग्रह— 'अज पितामह छाग पशवे च महेश्वरे इति दृश्यत (पृ २ श्लो १७)

(पा) केकिताक्ष्य—मयरया । [1]अण्डज पक्षी ॥ अजा विष्ण—व्रजा । ब्रह्मपितामहानादयोऽपि । अज पितामहस्नादौ छाग विष्णौ हर [2]रवौ' इति वैजयन्ती (पृ २३०, श्लो ४) ॥ ३० ॥

[1]B3 omits [2]अब्जज A1 C1

**धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम् ।**
**बलजे क्षेत्रपूर्द्वारे बलजा वल्गुदर्शना ॥ ३१ ॥**

(वि) धर्मराजा जिनेऽपि स्याद् युधिष्ठिरकृतान्तयो ।

[1]धर्मस्य राजा धर्मराज ॥

गजदन्ते निकुञ्जे च सानौ कुञ्ज उदाहृत. ॥ 67 ॥

कुञ्जतीति कुञ्जः । 'कुञ्ज शब्दे'[2] ॥

सस्यक्षेत्रे पुरद्वारे समरे [3]वलज मतम् ।
वलजा वरकान्ताया मेदिन्यामपि समता ॥ 68 ॥

वलेन जायत इति वलजा । 'जनी प्रादुर्भावे' ॥ ३१ ॥

[1] J2, K5 omit derivation [2] 'कुञ्ज कौटिल्याल्पीभावयो ' इति बृहद्धातुरूपावल्याम् (पृ ३६६), 'कौ जायते । "सप्तम्या जनेर्डं" । पृषोदरादि ' इत्यादि भा. दी. (पृ ४६४). [3] वलज स्मृत K5.

(विव.) धर्मराजौ जिनयमौ। जिनः सुगतः। युधिष्ठिरेऽपि धर्मराजशब्दः॥ कुञ्जो दन्तेऽपि न स्त्रियाम्। कुजिः लौकिको धातुः आवरणार्थ इति सुबोधिनी। कुञ्जति आवृणोति स्वाधारस्थानमिति कुञ्जः। दन्ते गजदन्ते। यथा कुञ्जर इति। अपिशब्दात् 'लतादिपिहितोदरे' इति प्रागुक्तः (१, पृ. २१३)॥ वलजे—वल्गुदर्शना। क्षेत्रं च नगरद्वारं च प्रत्येकं नपुंसकलिङ्गेन वलजशब्देनोच्यते। वल्गुदर्शना वामलोचना। योषेति यावत्। सा स्त्रीलिङ्गस्य वलजाशब्दस्यार्थः। [1]वले जातं वलजम्[2]। बह्वयोरभेदः।

'वलजं गोपुरे[3] क्षेत्रे सस्यसङ्गरयोरपि ।
वलजा वारयोषायां वसुमत्यामपि स्मृता ॥'

इति विश्वप्रकाशिका (पृ. ३३, श्लो. १७)। [4]'वलजं धान्यराशौ स्यात्' इति वैजयन्ती (पृ. १२८, श्लो. ६५)। 'कर्षकेण [5]वलज पुपूपता' इति माघः (शिशु. १४. ७) ॥ ३१ ॥

[1] बलेन B5, B6 [2] 'सप्तम्या जनेर्डं' (३ २ ९७) [3] गोक्षुरे इति मुद्रितग्रन्थे [4] 'धान्यराशिस्तु वलजा' इति मु ग्र, 'वलजो धान्यराशि स्यात्' इति वैजयन्तीति माघव्याख्याने मल्लिनाथ (पृ ३३४) [5] वलजान् इति मु ग्र

(पा.) धर्मराजौ जिनयमौ। युधिष्ठिरोऽपि स्यात। 'धर्मराजो यमे बुद्धे धर्मराजो युधिष्टिरे' इति विश्व (पृ ३४, श्लो ३०)॥ कुञ्जो दन्तेऽपि न स्त्रियाम्। दन्तो गजदन्त। [1]'येनुगदवड'॥ [2]कुञ्जो निकुञ्जेऽपि हनौ भवेद्

दन्ते च दन्तिनाम्' इति विश्व (पृ ३३, श्लो १२) ॥ वलजे—वल्गुदर्शना । वलजेति तन्त्रेण स्त्रीनपुंसकयोरेव ग्रहणम् । 'वलजा वरनार्यां [3]स्त्री क्षेत्रे द्वारे च सा न ना' इति वैजयन्ती (पृ. २६३, श्लो ७८) ॥ ३१ ॥

[1] B3 omits [2] 'गञ्ज कुञ्जो निकुञ्जेऽपि हनौ दन्ते च दन्तिनाम्' इति मु ग्र. [3] चेति मु ग्र

**समे क्ष्मांशे रणेऽप्याजिः प्रजा स्यात् संततौ जने ।**
**अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु ॥ ३२ ॥**

(वि ) युद्धे च समभभागे क्षणेऽप्याजि प्रकीर्तित [1] ।

अजन्ति क्षिपन्ति शस्त्राण्यत्रेत्याजि । 'अज गतिक्षेपणयो.' ॥

जनेऽप्यभिजने चैव प्रजाशब्द प्रकीर्तित ॥ 69 ॥

प्रजायत इति प्रजा । [2]'जनी प्रादुर्भावे' ॥

अब्जो धन्वन्तरौ शङ्खे पद्मेन्दुनिचुलेषु च ।

अद्भ्यो [3]जातोऽब्ज ॥

सनातने स्वकीये च निजशब्द उदाहृत [4] ॥ 70 ॥

[5]नितरा जायत इति निज । 'जनी प्रादुर्भावे' ॥ ३२ ॥

इति जान्तवर्ग [6]

[1] प्रकीर्तिता K2, K4; उदाहृता J2 [2] K2, K5 omit. [3] जायत इति K6. [4] प्रकीर्तित K3, K4, K5 [5] K5, K6 omit derivation. [6] K2, K4 add जान्तशब्दसंख्या ११

(विव.) समे क्ष्मांशे रणेऽप्याजिः । समपदं भूभागस्य विशेषणम् । 'आजिः समभुवि स्त्रियाम्' इति भूवर्गे शेषकारेणोक्तत्वात् । रणः युद्धम् । अपिशब्दात् क्षणल्पकाल इति सुबोधिनी । 'युद्भूभागक्षणेष्वाजिः' इति दुर्गोक्तेश्च ॥ प्रजा स्यात् संततौ जने । संततिरपत्यपरंपरा । यथा—प्रजायान् भूयासमिति ।

जने यथा—'अथ प्रजानामधिपः प्रभाते' इति (रघु. २. १)॥ अब्जौ शङ्खशशाङ्कौ च। शेषे—'अब्जो निचुलवैद्ययोः' इति। निचुलो हिज्जलः[1]। वैद्यः धन्वन्तरिः। रूपभेदादेष्वर्थेषु पुंलिङ्गः। व्यवस्थायोगश्च। 'शङ्खे धन्वन्तरौ चन्द्रे पुंस्यब्जः क्लीबमम्बुजे' इति संग्रहः॥ स्वके नित्ये निजं त्रिषु। स्वकं निजसंबन्धि। यथा—निजगृहम्। निजं वस्त्रमिति। नित्यं यावद् द्रव्यभावि गुणादिकम्। यथा—निजो धर्मः। निजं गाम्भीर्यमिति। नितरां जायत इति निजम्[2]। त्रिषु वाच्यलिङ्ग इत्यर्थः॥ ३२॥

इति जान्तवर्गः[3]

[1] हिज्जुल B5　　[2] 'उपसर्गे च संज्ञायाम्' (३ २ ९९) इति ड इति भा दी (पृ ४६४)　　[3] Tj1 adds शब्दा दश; एकादश Tv

(पा) समे क्ष्माशे—जने। संततिरपत्यम्॥ अब्जौ शङ्खशशाङ्कौ च। 'अब्जो धन्वन्तरौ शङ्खे चन्द्रे क्लौ लवणेऽम्बुजे' इति वैजयन्ती (पृ २३०, श्लो ३)॥ स्वके नित्ये निज त्रिषु। स्वभावे नपुंसकम। 'सहज निजमाजान धर्मसर्गौ निसर्गवत्' इति वैजयन्ती (पृ १९२, श्लो १)॥ अनुक्तम—

जूराकाशे सरस्वत्या पिशाच्या ना तु राक्षसे।
अङ्गज रुधिरे क्लीव पुमान् पुत्रमनोजयो।
वारज करिपोते स्यात् स्वयजाततिलेऽपि च।
परञ्जस्तैलयन्त्रे स्याद् डिण्डिरे छुरिकाफले[1]।
पटहेऽपि च गुञ्जा स्यात् कस्तूर्यामपि चाण्डजा।

पक्षिसर्पादिषु पुलिङ्ग[2]।

राजराज शशाङ्केऽपि लाज स्याच्चार्द्रतण्डुल।

भृष्टधान्ये बहुवचनान्त॥ ३२॥

इति जान्तवर्ग

[1] छूलिकाफले A1　　[2] पुलिङ्गम A1

अथ ज्ञान्तवर्गः—

**पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः ।**
**संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना ॥ ३३ ॥**

(वि.) प्रवीणे [1]चात्मनि तथा क्षेत्रज्ञः समुदाहृतः ।

[2]क्षेत्र जानातीति क्षेत्रज्ञः । 'ज्ञा अवबोधने' ॥

संज्ञा स्याद् भानुभार्यायां गायत्र्यां चैव नामनि ॥ 71 ॥
चेतनाया च हस्ताद्यैः[3] सूचनाया च वस्तुनः ।

[4]सम्यक् ज्ञायत इति संज्ञा ॥ ३३ ॥

इति ज्ञान्तवर्गः[5]

[1] अप्यात्मनि K5. [2] J2 adds वर्म; K3 शरीरम्. [3] हस्तादे. J2.
[4] सज्ञायते J2. [5] K2 adds ज्ञान्तशब्दसख्या २; ज्ञान्तवर्ग° J2

(विव.) अनन्तरं ज्ञान्तानां क्लिष्टकल्प्यतया तानुपेक्ष्य ज्ञान्तानाह— पुंस्यात्मनि—वाच्यलिङ्गकः। क्षेत्रं शरीरं स्वभोगसाधनत्वेन जानातीति क्षेत्रज्ञो[1] जीवात्मा। क्षेत्रं स्थानविशेषं जानातीति क्षेत्रज्ञो निपुणः॥ संज्ञा स्यात्—अर्थसूचना। चेतना ज्ञानम्। नाम नामधेयम्। आद्यशब्देन भ्रूनिकोचादेर्ग्रहणम्। तैरर्थस्य प्रयोजनस्य वस्तुनो वा सूचना ज्ञापनमित्यर्थः। संपूर्वात् जानातेः 'आतश्चोपसर्गे' (३. ३. १०६) इति यथायोगमर्थत्रये भावे करणे च अङि संज्ञा।

'संज्ञा स्याद् भानुभार्यायां गायत्र्यां चैव नामनि।
चेतनायां च हस्ताद्यैः सूचनायां च वस्तुनः॥'

इति नानार्थसंग्रहः[2]। शेषे—'नामस्मृत्योरभिज्ञा स्यात् ज्ञस्तु सौम्ये विपश्चिति' इति ॥ ३३ ॥

इति ज्ञान्तवर्गः

[1] 'आतोऽनुपसर्गे कः'. [2] अजयपालकृतौ न दृश्यते । राघवकृतनानार्थमञ्जर्यां तु दृश्यते (पृ. २२, श्लो २१७–१८).

(पा ) पुंस्यात्मनि—अर्थसूचना । चेतना नाम मूर्च्छाविपर्यय ।

'मूर्च्छासु मूर्खासु तिरोभवन्ति क्पालमिन्दु करिचर्मनागा ।
काश्यामयो[1] कण्ठगतस्य जन्तो ॥'

अनुक्तम्—

दोषज्ञौ वैद्यविद्वासौ ज्ञो विद्वान् सोमजोऽपि च ।

सोमजो बुध ।

[2]सर्वज्ञौ सुगतेशानौ कालज्ञौ ज्ञानिकुक्कुटौ ॥ ३३ ॥

इति ज्ञान्तवर्ग

[1] मद A₁ [2] B₃, C₁ add the hemistich

**अथ टान्तवर्गः—**

**काकेभगण्डौ करटौ गजगण्डकटौ कटौ ।**
**शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे ॥ ३४ ॥**

(वि ) गजगण्डे वाद्यभदे कुसुम्भे निन्द्यजीवने ॥ 72 ॥
एकादशाहश्राद्धे च वायसे करटो मत ।

क रटतीति करट । 'रट [1]परिभाषण' ॥

अतिरेके शव प्रेतक्रियाकर्तृकिलिन्जयो ॥ 73 ॥
कट श्मशाने समये श्रोणिमातङ्गगण्डयो ।

कटचत इति कट । 'कटे वर्षावरणयो ' ॥

नारायणे महेशाने खर्वाटे दुष्टचर्मणि[2] ॥ 74 ॥
शिपिविष्टस्तु पिशुनवादिन्यपि च वर्तत ।

शिपौ [3]चर्मणि विष्ट दोषव्याप्तिरस्येति शिपिविष्ट । 'विष्लृ व्याप्तौ' ॥
हरिहरपक्षे यथा[4]—शिपिषु पशुषु[5] जनेषु विष्टो व्याप्त इति शिपिविष्ट ॥ ३४ ॥

[1] शब्दे $K_5$ [2] जल्पादेर्दुष्टकर्मणि $K_6$ [3] $J_2$, $K_6$ omit. [4] तु $K_5$
[5] $K_3$ omits पशुपु

(विव.) काकेभगण्डौ करटौ। के रटति शब्दं करोतीति करटः। 'रट परिभाषणे'। करोति मदमिति करटः गजकपोलः। 'शकादिभ्योऽटन्' (उ. ४. ८२) इति अटन्। अत्र प्रतापः—

'करटो वाद्यभेदे स्यात् कुसुम्भकरिगण्डयोः।
एकादशे च श्राद्धे च वायसे निन्द्यजीविनि॥'

इति॥ गजगण्डकटी कटौ। कटिः श्रोणिः। शेषे—

[1]'कटोऽतिरेकशवयोः क्रियाकारिश्मशानयोः।
किलिञ्जे समये स्त्री तु कटिः श्रोण्यां कटी च सा॥'

इति। अतिरेके यथा—प्रकटो विकटः। शवे यथा—वर्जयेत् कटधूममिति। क्रियाकारिणि प्रेतकर्मकारिणि यथा—'सकटान्नं च नाश्नीयात्' (या. स्मृ. ३. १. १५) इति। [2]किलिञ्जके यथा—कटे शेते। समये यथा—'वक्तव्यमिह बौद्धकटस्थैः' इति॥ शिपिविष्टस्तु—महेश्वरे। खलतिः केशोत्पत्तिरहितशिरोभागयुक्तः पुरुषः। निकृत्तमेहनावरणचर्मा[3] दुश्चर्मा। कुष्ठीत्येके। [4]'शिपिविष्टस्तु [5]दुश्चर्मखल्वाटहरिशंकराः' इति नानार्थसंग्रहे। दीप्तव्याप्तं शिपिरुच्यत इति स्वामी[6] (पृ. २७७)। तेन विष्टं व्याप्तं शरीरमस्येति शिपिविष्टः। महेश्वरे तु—'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुतौ दर्शनात् पशवः शिपिशब्देनोच्यन्ते। तैर्विष्टो व्याप्तः सेवितः, तत्पतिरिति यावत्। तदुक्तं स्कान्दपुराणे—

'आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः।
तेषां पतित्वाद् विश्वेशो भवः पशुपतिः स्मृतः॥'

इति। 'शिपयो रश्मयः, [7]तैर्विष्टो व्याप्त इति शिपिविष्टो विष्णुः' इति सहस्रनामभाष्ये (पृ. ७८) व्याख्यातम्। 'विष्णुः शिपिविष्टः' इति श्रुतिश्च (वाज. सं. ८. ५५)॥ ३४॥

[1] श्लोकोऽयं नानार्थसंग्रहे दृश्यते (पृ. २४, श्लो २३२–३). [2] किलिञ्जकट. [3] °अप्रावरण° Tv [4] ना. सं. (पृ. २५, श्लो २४१) [5] °चर्मदु° इति

मुद्रितनानार्थमञ्जर्याम्. [6] मुद्रितग्रन्थे—शिपिश्चर्म विष्ट दोपव्याप्तमस्य—इति दृश्यते. [7] तेषु निविष्ट इति वा इति मु. ग्र.

(पा.) काकेभगण्डी—महेश्वरे । खलतिः [1]इन्द्रलुप्तव्याधिमान् । [2]'वट्टतलवांडु' । 'खल्वाटः खलतिर्वभ्रुः' इति वैजयन्ती (पृ. १८५, श्लो. १४७) ॥ ३४ ॥

[1] इन्द्रलुप्ति° A1. [2] A1 adds 'वेंट्टिक्लतोगूडाजेपेत्तिन तलवाडु'.

देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः ।
रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः ॥ ३५ ॥

(वि.) अमराणा [1]वर्धकौ च सूर्ये त्वष्टा प्रकीर्तित' ॥ 75 ॥

[2]त्वक्षति तनूकरोतीति त्वष्टा । 'त्वक्षू तनूकरणे' ॥

दैवेऽतिसर्जने काले दिष्टशब्दोऽभिधीयते ।

दिश्यते निर्दिश्यत[3] इति दिष्टम् । 'दिश अतिसर्जने' ॥

रसे सुगन्धे पुंसि स्यादकार्ये न द्वयोः कटु' ॥ 76 ॥
स्त्री क्षवे रोहिणीकङ्ग्वोस्त्रिपु मत्सरतीक्ष्णयोः ।

क्षवोऽत्र [4]कृष्णसर्षप' । कटतीति कटु' । 'कटी गतौ'[5] ॥ ३५ ॥

[1] वर्धके K6 [2] त्वेपत इति त्वष्टा । 'त्विष दीप्तौ' K3, K4 [3] J2, K5 omit. [4] K3 omits कृष्ण°. [5] 'कटे वर्षावरणयो.' J2, K5.

(विव.) देवशिल्पिन्यपि त्वष्टा । देवशिल्पी विश्वकर्मा । अपिशब्दात् सूर्ये । वर्धकिमात्रे तु प्रागुक्तः (पृ. ६२५) ॥ दिष्टं दैवेऽपि न द्वयोः । दैवं पुराकृतं कर्म । न द्वयोरिति निषेधो नित्यानुवादः पादपूरणार्थः । अपिशब्दात् काले पुंलिङ्गः प्रागुक्तः (१, पृ. ७३) । दिश्यते निर्दिश्यत इति दिष्टः । अतिसृष्टे तु त्रिलिङ्गः ॥ रसे कटुः—तीक्ष्णयोः । रसे शुण्ठीमरीचादिसंबन्धिनि पुंलिङ्गः प्रागुक्तः (१, पृ. ८६) । अकार्ये कर्तुमनर्हे दण्डपारुष्यादौ तु रूपभेदान्नपुंसकलिङ्गः । यथा—कटु कर्म करोतीति । बोपालितस्तु—'अकार्याप्रिययोः कटुः' इति

वाच्यलिङ्गप्रकरणे प्राह। [1]संग्रहे तु—अन्यदीयशुभद्वेषो मत्सरः। तद्युक्ते तीक्ष्णे कृपाणादौ च वाच्यलिङ्गः। तीक्ष्णशब्देन कटुरसयुक्त सर्षपादिकमिति विवक्षितम्। तत्रापि वाच्यलिङ्गः। तीक्ष्णशब्देन निष्ठुरशब्दोऽपि विवक्षितः। यथा—कटु रटति काकः इति। कटति वर्षति दुःखमिति वा, कटत्यावृणोति परोत्कर्षमिति वा कटुः[2]। शेषे—'क्षवे प्रियङ्गुरोहिण्यां स्त्रियां गन्धे पुमान् कटुः' इति। [3]क्षवः सर्षपो राजिकाख्यः। प्रियङ्गुः फलिनी। रोहिणी कटुरोहिणी। गन्धे यथा—कटुगन्धा निर्गुण्डी इति ॥ ३५ ॥

[1] अजयपालकृतनानार्थसंग्रहे—'कटुस्तीक्ष्णे रसे गन्धे कट्वकार्ये तु मत्सरे' इति दृश्यते (पृ २४, श्लो १६) [2] 'कटे वर्षावरणयो'। 'मृगय्वादयश्च' (उ १ ३५) इति कु
[3] क्षव कृष्णसर्षप Tv.

(पा) देवशिल्पिन्यपि त्वष्टा। [1]अपिशब्दाद् वर्धकावपि स्यात्॥ दिष्ट दैवेऽपि न द्वयो। काले पुलिङ्ग॥ रसे कटु—तीक्ष्णयो। [2]रसे रसविशेषे॥ ३५॥

[1] A1 omits अपिशब्दात् [2] रसो नाम पिप्पल्यादिरसः A1

**रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे।**
**मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ॥ ३६ ॥**
**अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्।**

(वि) अशुभे कुशले रिष्टमभावे च प्रकीर्तितम् ॥ 77 ॥

रिष्यत इति रिष्टम्। 'रिष हिंसायाम्' ॥

तक्रे निम्बद्रुमे काके शुभे मरणलक्षणे।
अशुभे सूतिकागेहेऽप्यरिष्ट फेनिलद्रुमे ॥ 78 ॥

न रिष्यत इत्यरिष्ट[1] ॥

मायायामनृते यन्त्रे तुच्छे पुच्छे च कैतवे।
राशावयोधने दम्भे हलाङ्गे लोहमुद्गरे ॥ 79 ॥
शैलशृङ्गे गोपुरे च निश्चले कूट उच्यते।

कूटयत इति कूट 'कूट आप्रदाने'[2] ॥ ३६ ॥

[1] K4 adds 'रिष हिंसायाम्'. [2] कौटिल्ये K2, K3, K4

(विव.) रिष्टं क्षेमाशुभाभावेषु। क्षेमं कल्याणम्। अशुभममङ्गलम्। अभावो नाशः। रिष्यति दुःखमिति वा रिष्टम्। 'रिष हिंसायाम्'[1]॥ अरिष्टे तु शुभाशुभे। मिथोविरुद्धशुभाशुभवचनस्य रिष्टशब्दस्य नञ्समासे सति अरिष्टशब्दस्यापि शुभाशुभवचनत्वम्।

'क्लीबं शुभेऽशुभे तक्रे सूत्यागारान्तचिह्नयोः।
अरिष्टो लशुने काके निम्बफेनिलवृक्षयोः[2] ॥'

इति रभसः। अन्तचिह्नं मरणचिह्नम्। यथा—स्वस्यारिष्टमशिरस्कपुरुषच्छायादर्शनम् इति॥ माया—कूटमस्त्रियाम्। *मायादीनां सप्तानां द्वन्द्वः। [3]यन्त्रमन्त्रौषधादिप्रयोगेण परव्यामोहजननं माया। निश्चलं निर्विकारम्। यथा—'कूटस्थोऽक्षर उच्यते' (भ.गी. १५.१६) इति। यन्त्रं मृगपक्षिबन्धनसाधनम्, यत्संबन्धाद् वैतंसिकस्य कौटिक इति संज्ञा। इपुर्बाणः। वस्तुस्वरूपस्य कपटेनान्यथाकरणं कैतवम्। यथा— कूटलेख्यः कृतः इति। अनृतमसत्यवचनम्। यथा—[4]कूटसाक्षी इति। राशिः धान्यपुञ्जः। यत्र निधाय तप्तं लोहं हन्यते स अयोघनः। यथा—[5]'त्वष्टुः कूटे भविष्यति चन्द्रमाः' इति मुरारिः (अ. रा. २.८०)। शैलशृङ्गं गिरिशिखरम्। सीराङ्गं वक्रदारुरूपम्। फाल इत्येके। 'कुट कौटिल्ये' इति धातोः इगुपधलक्षणकप्रत्यये (३. १. १३५) कूटः कौटिल्यं कुसृतिबन्धश्च इति धातुवृत्तौ[6]। पृषोदरादित्वाद् उपधादीर्घः। केषुचिदर्थेषु 'कूट [7]दाहे' इति धातुः॥ ३६॥

[1] क्त (३ ३ ११४) [2] फेनिलयोरपि B5, Tj1. [3] तत्र मन्त्र° Tv. [4] कूटसाक्षिण पापे इति या स्मृ (२ ५ ७७) [5] त्वष्टु कुन्दे इति मु ग्र (२ ८०) [6] माधवीये न दृश्यते [7] परितापे Tv. * इपुरिति पृथक्पदमस्मिन् व्याख्याने। तस्मात् पदानि सप्त.

(पा) रिष्ट—शुभाशुभे।

'अरिष्टः फेनिले निम्बे लशुने वायसे तथा।
अरिष्ट सूतिकागारे तक्रे [1]वाप्यशुभे शुभे॥'

इति कथ्यमानेतरार्था.[2] पर्यायेष्वेव प्रकीर्तिता.॥ मायानिश्चल—कूटमस्त्रियाम्। निश्चलमविकारमाकाशादि। यन्त्र मृगग्रहणदारुपञ्जरम्[3]। 'योन्'। इषु शरव्यभेद.[4]॥ ३६॥

[1] चाप्यशुभे C1 [2] इतरार्थपर्यायेषु B3 [3] B3, C1 omit °दारु°
[4] °वेध. ; सीराङ्क 'मोलकप्रासेट्गुट्ग' A1.

सूक्ष्मैलायां त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा ॥ ३७ ॥
अत्र्युत्कर्षाश्रयः कोटयो मूले लग्नकचे जटा ।
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्षिण दर्शने ॥ ३८ ॥

(वि.) सूक्ष्मैलायामल्पकाले त्रुटिः [1]सदेहलेशयोः ॥ 80 ॥

त्रुटयत इति त्रुटिः । 'त्रुट छेदने' ॥

[2]अश्रौ च खड्गधाराया कोटिरुत्कर्पसख्ययोः ।

[3]अश्रिः धनुष्कोटिः । [4]कुटयत इति कोटिः । 'कुट कौटिल्ये' ॥

अत्यन्तश्लिष्टकेशेषु शिफाया च जटा मता ॥ 81 ॥

जटति संघीभवतीति जटा । 'जट सघाते' ॥

*व्युष्टिः प्रयोजने स्तोत्रे[5] समृद्धौ च प्रकीर्तिता ।*

[6]व्युच्छयते समाप्यत इति व्युष्टिः । 'उच्छी विवासे' ॥

ज्ञानलोचनयोश्चैव दर्शने दृष्टिरुच्यते ॥ 82 ॥

दृश्यतेऽनयेति दृष्टि । 'दृशिर् प्रेक्षणे' ॥ ३७–८ ॥

[1] सशय° J2, K2 [2] अर्तौ J2, K4 [3] अति J2, K4 [4] K2, K6 *omit* [5] *घातौ K6; सूतौ K4.* [6] *व्युच्छन व्युष्टि K5.*

(थिव.) सूक्ष्मैलायां—संशयेऽपि सा। सूक्ष्मैला नाम काचिदेलावान्तर-जातिभेदः। कालः कालविशेषः। स च सूच्यग्रेण सरोजदलाष्टकस्य व्यतिभेद-परिच्छिन्नः। लघ्वक्षरोच्चारणपरिच्छिन्नः कालस्त्रुटिरिति केचित्। अल्पे लेशे यथा—[1]'त्रुटिमात्रं सुवर्णस्य लिङ्गस्यादाय मूर्धनि' इति पुराणम् (भागवत. १०. १३. ४०)। संशयोऽत्र मरणविषय एवेति। यथा—'त्रुटिं प्राप्तो रोगी'

इति। स्वोपाधिना त्रुटयते परिच्छिद्यत इति त्रुटिः कालविशेषः। त्रुटयते तत्त्वज्ञानेन भिद्यत इति त्रुटिः संशयः। [2]'त्रुटिः स्त्री संशये लेशे सूक्ष्मैलाकालभेदयोः'[3] इति विश्वप्रकाशः (पृ. ३८, श्लो. २८)॥ अत्युत्कर्षाश्रयः कोटयः। अर्तिः चापाग्रम्। यथा—धनुःकोटिः इति। उत्कर्षोऽतिशयः। यथा—परां कोटिमारूढ इति। अश्रिः कोणः। यथा—शतकोटिर्वज्र इति। शतलक्षात्मकः संख्याविशेषश्च कोटिरुच्यते। कोटिशब्दः [4]क्षत्रवर्गे व्युत्पादितः[5] (पृ. ५३३, ५३६)। कोटिशब्दात् कृदिकारादिति ङीषि[6] (ग. सू.) कोटीशब्दस्यापि विद्यमानत्वाद् वृत्तानुरोधेन कोटीशब्दोऽपि ङीषन्तः प्रयुक्तः। एतेन ह्रस्वोपधकोटिशब्दस्य स्त्रीलिङ्गत्वं व्यक्तीकृतम्॥ मूले लग्नकचे जटा। वृक्षसंबन्धिनी शिफा मूलम्। लग्नाः परस्परं संश्लिष्टाः कचाः केशा यस्मिन् केशसमूहे स लग्नकचः। जटति संहतीभवतीति जटा। 'जट संघाते'॥ व्युष्टिः फले समृद्धौ च। फलं कर्मसाध्यं सुकृतादि। यथा (रामा. ६. ६५. २६)—

> 'तस्यैव तपसो व्युष्टया[7] प्रसादाच्च स्वयंभुवः।
> नासुरेभ्यो न देवेभ्यो भयं मम कदाचन॥'

इति सर्वानन्ददर्शितः प्रयोगः (टी. स. पृ. ८६)। 'एषा [8]व्युष्टिः समाख्याता' इति वामनवृत्तौ प्रयोगः। व्युच्छयते समाप्यते व्यापारोऽनेनेति व्युष्टिः। 'उच्छी विवासे'। विवासः समाप्तिरिति धातुवृत्तौ[9] (पृ. ६७)। विपूर्वः करणे स्त्रियां क्तिन् (३. ३. ९४), व्रश्च... इत्यादिना (८. २. ३६) षत्वं च। [10]चकारात् स्तोत्रेऽपीति स्वामी (पृ. २७८)॥ दृष्टिर्ज्ञानेऽक्ष्णि दर्शने। अक्षिणी नेत्रे। करणे क्तिन्प्रत्ययः (३. ३. ९४)। दर्शनं ज्ञानम्। भावे क्तिन्। यथा—न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते इति॥ ३७—८॥

[1] Mb 1 25 14, Apte's Dict p 793  [2] स्यात् त्रुटिरिति मु ग्र  [3] कालमानयोरिति मु ग्र  [4] क्षत्रियवर्गे Tv  [5] 'कूट परितापे'। 'अच इ' (उ ४ १३९)  [6] 'कृदिकारादक्तिन' सि कौ (पृ १२०)  [7] व्युष्टयाम् इति मु ग्र  [8] व्युष्टिसमाख्याता Tj1, Tj2  [9] समाप्तिविवास इति तरङ्गिण्याम्, 'विपूर्वश्चाय प्राय प्रयुज्यते' इति पुरुषकारे इति मुद्रित मा धा  [10] चशब्द स्तुतौ इति मु ग्र

(पा) सूक्ष्मैलाया—संशयेऽपि सा। कालो लघ्वक्षरचतुर्भागोच्चारणकाल.। अल्पो लेश.॥ आर्त्युत्कर्षाश्रय कोटय। आर्तिरटनि। [1]'निट्टुवोप्पु'। 'कोटि-

रश्मौ प्रकर्षेऽग्रे सख्यायामटनौ तथा' इति वैजयन्ती[2] (पृ २२०, श्लो ११) ॥ मूले लग्नकचे जटा। [3]लग्नकचस्तपस्विना जटा। 'जुड' ॥ व्युष्टि. फले—दर्शने। फलं हेतुकृतम्। 'तस्यैव तपसो व्युष्टि प्रसादो हि स्वयभुव.'[4] ॥ ३७–८ ॥

[1] B3 omits [2] 'कोटिस्त्वश्रौ प्रकर्षेऽग्रे दशोपायगमे गति' इति मु ग्र [3] A1 adds मूल नाम दारुधनु। 'आनुविल्लु' [4] टी स पृ ८६

**इष्टिर्यागेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु।**
**कष्टे तु कृच्छ्रगहने दक्षामन्दागदेषु तु ॥ ३९ ॥**
**पटुर्द्वौ वाच्यलिङ्गौ च**

## इति टान्तवर्गः

(वि) यज्ञे च सग्रहश्लोके काङक्षायामिष्टिरुच्यते[1]।

इष्यत इति इष्टि। 'इष इच्छायाम्' ॥

सृष्ट बहुनियुक्ते च निर्मिते निश्चिते [2]मतम् ॥ 83 ॥

सृज्यत इति सृष्टम्। 'सृज विसर्गे' ॥

कृच्छ्रे गहनसामादौ कष्टशब्दोऽभिधीयते।

कषिष्यति कृच्छ्र भविष्यतीति कष्टम्। 'कष हिसायाम्' ॥

[3]प्रवीणे रोगरहिते धृष्टे च पटुरुच्यते ॥ 84 ॥

पटतीति पटु। 'पट गतौ'। पटुकष्टशब्दौ वाच्यलिङ्गौ ॥ ३९ ॥

इति टान्तवर्ग [4]

[1] इष्यते K4, K5 [2] अपि च K5 [3] लवणे K6 [4] K2 adds टान्तशब्दसख्या १८

**(विव.) इष्टिर्यागेच्छयोः। [1]'श्रुयजिदृशिस्तुभ्यः करणे' (वा. ३. ३. ९४) इति यजतेर्धातोः क्तिन्प्रत्यये इष्टिः यागः। 'इषु इच्छायाम्'। भावे क्तिनि ष्टुत्वे**

च (८. ४. ४१) इष्टिरिच्छा। 'मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते' [2]इति वार्तिककारीयवचनविशेषेऽपि इष्टिशब्दः॥ सृष्टं निश्चिते बहुनि त्रिषु। निश्चितमसंदिग्धम्। यथा—घृतसृष्टं भोजनम् इति। घृतप्रचुरमित्यर्थः। 'सृष्टं तु निश्चिते प्राज्ये [3]मुक्तिनिर्मितयोस्त्रिषु' इति रुद्रः। सृज्यते स्म सृष्टम्। क्तः॥ कष्टे तु कृच्छ्रगहने। कृच्छ्रं दुःखम्। गहनं दुष्प्रवेशस्थानम्। कषिष्यति पीडयिष्यतीति कष्टम्। 'कष हिंसायाम्'। कष्टं भविष्यतीत्याहुरिति महाभाष्यकारेण भविष्यदर्थे क्तप्रत्ययान्तशब्दप्रयोगाद् भविष्यदर्थे क्तप्रत्ययः। 'कृच्छ्रगहनयोः कषः' (७. २. २२) इति [4]इडागमप्रतिषेधः॥ दक्षामन्दा—वाच्यलिङ्गौ च। पटुर्दक्षः क्षिप्रकारी। अमन्दः आलस्यरहितः। अगदो रोगरहितः। पाटयतीति पटुः। 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ. १. १८) इत्यौणादिकसूत्रेण 'पट गतौ' इति धातोः ण्यन्तादुप्रत्ययः। धातोः पटादेशश्च। द्वौ वाच्यलिङ्गौ पूर्वोक्तौ कष्टपटुशब्दावित्यर्थः॥ ३६॥

इति टान्तवर्गः

[1] *Kāśika* omits दृशि (p 221); *Kaumudi* adds इषि (p 549)
[2] *Kāśikā* (p 6) [3] मुक्त° Tv [4] Tv adds निष्ठायाम्

(पा) इष्टि—बहुनि त्रिषु। बहुनि प्राज्ये। 'मुक्तनिर्मितयो प्राज्य त्रिषु सृष्ट च निश्चिते' इति रुद्र॥ कष्टे तु—वाच्यलिङ्गौ च। कष्टमसत्त्वे त्रिलिङ्गम्। दुःखे नपुंसकम्॥ अनुक्तम्—

[1]घटा गोष्ठीघटनयो कृपीटमुदरे जले।
हृष्टो हृषितवद्रोमाञ्चितविस्मितयोस्त्रिषु॥
[2]स्याद् भृष्टि शून्यवाटचा[3] स्याददृष्टोऽतिशयेऽपि च।
चिपिट [4]पिच्छितेऽपि स्यादवट स्यात् प्रहावपि॥

प्रहि कप.।

कुक्कुटोऽग्निकणेऽपि स्यात् कुकुटि कपटेऽपि च।
वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने॥
कुण्डकीटस्तु [5]दार्या च मृषावादविचक्षणे।

कीकटौ नि स्वकृपणौ शैलाटौ सिहदेवलौ ।।
रेवट दक्षिणावर्तशङ्ख रेणुस्तु रेवट ।। ३९ ।।

इति टान्तवर्ग

[1] A1 adds घटा गोष्ठी घटना च. [2] सा भृष्टि B3, C1 [3] A1 adds 'शून्यवाटि' 'गोडलवाड'. [4] पिच्छिले A1, B3 [5] दानेऽपि A1.

अथ ठान्ताः—

नीलकण्ठः शिवेऽपि च ।
पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ।। ४० ।।

(वि) महेश्वरे मयूरे च दात्यूहे खञ्जने तथा ।
कलविङ्के चैव नीलकण्ठशब्दोऽभिधीयते[1] ।। 85 ।।

[2]नील: कण्ठो यस्य नीलकण्ठ ।

जठराभ्यन्तरे चैव भवनाभ्यन्तरे तथा ।
अश्मीये च कुसूले च कोष्ठशब्द प्रवर्तते[3] ।। 86 ।।

कुष्यतेऽस्मादिति कोष्ठ । 'कुष निष्कर्षे'[4] ।। ४० ।।

[1] उदाहृत J2 [2] नीलवर्ण कण्ठे K4, K6 [3] प्रकीर्तित J2, K5
[4] निष्कोपे J2, निकर्पे K2, K6

(विव.) नीलकण्ठः शिवेऽपि च। शिवे शंकरे। अपिशब्दाद् 'दात्यूहे ग्रामचटकखञ्जरीटमयूरेषु' इति सुभूतिचन्द्रः। पुंसि—अन्तर्गृहं तथा। अन्तर्जठरं कुक्षेरन्तःप्रदेशः। कुसूलो मृदादिनिर्मितो धान्यावपनस्थानम्। अन्तर्गृहं [1]गृहमध्यगतमपवरकाख्यम्। कुष्यते निष्कृष्यते मलादिकमस्मादिति कोष्ठः। 'कुष निष्कर्षे'। निष्कर्षणं नि.सारणमिति धातुवृत्तौ[2]। 'उषिकुषिगर्तिभ्यः[3] स्थन्' (उ. २. ४.) इति स्थन्प्रत्यये गुणः ष्टुत्वं[4] च ।। ४० ।।

[1] B5, B6 add गृहाभ्यन्तर. [2] 'निष्कर्षो बहिर्नि सारणम्' इति मुद्रित मा धा (पृ ५३१) [3] °कार्शिभ्य Tv [4] ट्टुत्व B5

(पा.) नीलकण्ठः शिवेऽपि च। [1]मयूरेऽपि स्यात्॥ पुंसि—अन्तर्गृह तथा। कुसूलो धान्यभाण्डारम्[2]। [3]'धान्यकोष्ठे कुसूलोऽस्त्री'[4] इति वैजयन्ती। (पृ. १६४, श्लो. ६४)॥ ४०॥

[1] A1 adds कामगेऽपि स्यात्। 'पिचुक'. [2] B3 omits; भण्डार. A1. [3] धान्यकोश. A1, C1. [4] अथ इति मु. ग्र

निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि।
त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्पयोः॥ ४१॥

इति ठान्तवर्गः

(वि.) निष्ठा कार्यस्य निष्पत्तौ [1]याच्ञाया प्रत्ययेऽपि च।
नाशान्तयोर्निर्वहणे निष्ठा स्यात् परमागतौ॥ 87॥

नियत तिष्ठतीति निष्ठा। 'ष्ठा गतिनिवृत्तौ'॥

मर्यादाया कालभेदे [2]स्थितौ दारुहरिद्रयो.।

*प्राच्यादिदिशि चोत्कर्षे काष्ठाशब्दः प्रकीर्त्यते*[3] *॥ 88॥*

काशत इति काष्ठा। 'काशृ दीप्तौ'॥

[4]ज्येष्ठोऽग्रजेऽतिविख्याते नक्षत्रे मासवृद्धयो.।

अतिशयेन वृद्धो[5] ज्येष्ट.॥

अतिस्वल्पेऽवयस्ये च कनिष्ठो वाच्यलिङ्गक:॥ 89॥

[6]अतिशयेनाल्पः कनिष्ठ.॥ ४१॥

इति ठान्तवर्गः[7]

[1] याच्ञाप्रत्यययोरपि K6. [2] स्याच्च K5; धातु° K4, K6. [3] प्रकीर्तित. K5; प्रचक्ष्यते J2. [4] लोकेऽपि J2 [5] K3 adds प्रसिद्ध शब्द [6] J2 omits derivation. [7] K2, K3 add ठान्तवर्गसंख्या ६; ठान्तशब्द° J2

(विव.) निष्ठा निष्पत्तिनाशान्ताः। निष्पत्तिः निर्वहणम्। नाशो दर्शनाभावः। अन्तो विनाशः। यथा—नैष्ठिक इति। [1]तिष्ठतेः सोपसर्गाद् 'आतश्चोपसर्गे' (३. ३. १०६) इत्यङि निष्ठा। 'क्तक्तवतू निष्ठा' (१. १. २६) इति परिभाषितप्रत्ययोऽपि निष्ठा॥ काष्ठोत्कर्षे स्थितौ दिशि। स्थितिः मर्यादा। काशत इति काष्ठा। 'हनिकुषिनिरमिकाशिभ्यः क्थन्' इति थन्प्रत्ययः (उ. २. २)। [2]षत्वष्टुत्वे (८.२.३६, ८.४.४१)। दारुणि नपुंसकलिङ्गः प्रागुक्तः (१, पृ. २२२)। अष्टादशनिमेषाः[3] काष्ठा इति प्रागुक्ता (१, पृ. ७६)॥ त्रिषु ज्येष्ठोऽतिशस्तेऽपि। 'ज्य च' (५. ३. ६१) इति सूत्रेण प्रशस्यशब्दस्य ज्यादेशे [4]इष्ठन्प्रत्यये (५. ३. ५५) च ज्येष्ठः। वृद्धशब्दादप्यतिशायनार्थे 'वृद्धस्य च' (५. ३. ६२) इति इष्ठन्प्रत्यये ज्यादेशे च ज्येष्ठशब्दोऽत्यन्तवृद्धवचनः। शेषे—'ज्येष्ठोऽग्रजे स्त्रियां ज्येष्ठा [5]देवीनक्षत्रभेदयोः' इति॥ कनिष्ठोऽतियुवाल्पयोः। यूनि अत्यल्पे चेत्यर्थः। 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४) इति युवाल्पशब्दाभ्यामतिशायनार्थे इष्ठन्प्रत्यये कनित्यादेशे[6] कनिष्ठः॥ ४१॥

इति ठान्तवर्गः[7]

[1] Tj1, Tj2 add 'ष्ठा गतिनिवृत्तौ'. [2] 'व्रश्चभ्रस्ज...छशां षः'. [3] निमेषास्तु इति मूलपाठः. [4] 'अतिशायने तमबिष्ठनौ'. [5] देवी गङ्गा लक्ष्म्याः ज्यायसी वा [6] कन्नादेशे B5, B6 [7] Tv adds शब्दसङ्ख्या षट्.

(पा.) निष्ठा निष्पत्तिनाशान्ताः। निष्पत्तिः परिसमाप्तिः। नाशोऽदर्शनम्। अन्तः प्रध्वंसः॥ काष्ठोत्कर्षे स्थितौ दिशि। स्थितिर्मर्यादा॥ त्रिषु ज्येष्ठो—युवाल्पयोः। 'ज्यायान् ज्येष्ठश्चाग्रजन्मन्यतिशस्तातिवृद्धयोः'[1] इति वैजयन्ती (पृ २२८, श्लो. ७)॥ अनुक्तम्—

भिक्षापात्रेऽपि कमठं जरठस्तु जरत्यपि।

कच्छपे पुंलिङ्ग. [कमठः]॥

पृष्ठं चरममात्रेऽपि षष्ठी गिरिसुतापि च॥
पाण्डपृष्ठ. कौनिसुते[2] गलेऽपि च कुलाहुनम्।
अजातपाणिप्रष्णे वण्ठ. स्याद् वामनेऽपि च॥ ४१॥

इति ठान्तवर्गः

[1] °अतिवृद्धातिशस्तयो इति मु प्र [2] कीर्तिसुत कृतकपुत्र

**अथ डान्ताः—**

**दण्डोऽस्त्री लगुडेऽपि स्याद् गुडो गोलेक्षुपाकयोः ।**
**सर्पमांसात्पशू व्याडौ गोभूवाचस्त्विडा इलाः ॥ ४२ ॥**

(वि) [1]उपाये दमने मन्थे व्रतिभिर्धार्यवेणुके ।
लगुडे [2]व्यूहभेदे च दण्डशब्दो विवक्षित [3] ॥ 90 ॥

[4]दाम्यत्यनेनेति दण्ड । 'दमु उपशमने' ॥

हस्तिसनहने गोले [5]गुलिकेक्षुविकारयो ।
गुड स्नुह्याख्यवृक्षे स्याद् व्याडो मासात्पशावहौ ॥ 91 ॥

गुडतीति गुड । 'गुड रक्षायाम्' ॥ [6]मासात्पशुर्व्याघ्रादि । व्यडति हन्तुमुद्युङ्क्त इति व्याड । 'अड उद्यमने' ॥

बुधपत्न्यामिडा चेला गवि वाचि क्षितौ तथा ।

इल्यत इति इला इडा च । 'इल स्वप्नक्षेपणयो' ॥ ४२ ॥

[1] उपायदमने K₄, K₆ [2] राजभेदे K₅, K₆ [3] अभिधीयते K₃.
[4] दम्यते K₅ [5] गुडिका° K₅ [6] K₅ adds मासमत्तीति मासात्

(विव.) दण्डोऽस्त्री लगुडेऽपि स्यात् । दम्यतेऽनेन पुरुष इति दण्डः । 'दमु उपशमे' । 'ञमन्ताड्डः' (उ. १. ११६) । शेषे—'दण्डस्तु मानभेदे स्यात् सैन्योपायदमेषु च' इति । मानभेदो जलसारसग्रहेऽभिहितः 'क्षेत्रज्ञैः कथितो दण्डः सविंशतिशताङ्गुलः' इति । 'सामदाने भेददण्डौ' इत्युपाय. प्रागुक्तः (पृ. ४६६) । दमो नाम दुष्टनिग्रहार्थं राजभिः क्रियमाणो धिग्दण्डादि· प्राणवियोजनान्तम् । यथा—'दण्ड दुष्टेषु[1] पातयेत्' (या. स्मृ १. ३. ३६८) । धरणिग्रन्थेऽपि—

'दण्डो लगुडमन्थानसैन्योपायदमेषु[2] च ।
[3]व्यूहभेदे मानभेदे चण्डांशोः पारिपार्श्वके ॥'

इति (पृ. ४५, श्लो. २८७) ।। गुडे गोलेक्षुपाकयोः । गोलो नाम मृत्पिण्डादिकृतो वृत्तावयवसनिवेशो गुलिकाख्यः । इक्षुपाकस्तु [4]फाणितादप्युत्कृष्टः शर्कराया अपकृष्टो घनीभूतो गुडाख्यया प्रसिद्धः । 'गुड रक्षायाम्'[5] इत्यस्माद् इगुपधलक्षणे कप्रत्यये (३. १. १३५) गुडः । गुडाशब्दष्टाबन्तः स्नुहीवचन. प्रागुक्तः (१, पृ. २७६) । 'गुडः स्याद् गोलके [6]हस्तिसंनाहेक्षुविकारयोः' इति विश्वप्रकाशः (पृ. ४३, श्लो. १) ।। सर्पमासात्पशू व्याडौ । मासभक्षक पशुः मासात्पशुः सिंहव्याघ्रादिः । सर्पश्च मासात्पशुश्चेति द्वन्द्व. । विशेषेणाभिमुख्येनाडति प्राणिवधार्थमुद्युङ्क्त इति व्याडः । 'अड उद्यमने' । अच्प्रत्यय. (३. १. १३४) ।। भूगोवाचस्त्विडा इलाः । अत्र गोशब्देन स्त्रीव्यक्तिरेव विवक्षिता । भूम्यादित्रयं प्रत्येक [7]शब्दद्वयेनोच्यते । लडयोरभेदाद् उभयोः शब्दयोरर्थसाम्याच्च लाघवार्थमन्तस्थोपधाशब्दस्यापि प्रकरणादुत्कृष्यात्रैवानुशासन कृतम् । इलन्ति स्वपन्त्यत्रेति भूः इला, इल्यते क्षिप्यत इति गौर्वाक् च । 'इल स्वप्नक्षेपणयोः' (३. १. १३५) । लडयोरभेदादेकस्मादेव धातोः शब्दद्वयम् । इलाशब्दो बुधभार्यायामपि, यस्या. पुत्रः पुरूरवाः ।। ४२ ।।

[1] दण्डचेपु इति मु ग्र [2] [3] यमसैन्येपु वाजिनि इति; दण्डो दमे इति च मु ग्र
[4] फाणित गोरसविकार, पक्वेक्षुरसो वा. [5] रक्षणे Gm1, Tj1 [6] हस्ते सनाहे Bs, B8
[7] इडा इलेति

(पा) दण्डोऽस्त्री लगुडेऽपि स्यात् । 'दण्डोऽस्त्री शासने राज्ञा हिंसाया लगुडे दमे' इति वैजयन्ती (पृ २३३, श्लो ३८) ।। गुडो गोलेक्षुपाकयो । गोलो मृच्छिलादिपिण्ड । इक्षुपाक इक्षुविकार । 'गुड स्याद् गोलके [1]हस्तिसनाहेक्षुविकारयो ' इति विश्व (पृ ४३, श्लो १) ।। सर्पमासात्पश व्याडौ । मासात्पशु व्याघ्र । 'व्याडो व्याघ्रे पले सर्पे' इति जयकोश [2] ।। भूगोवाचस्त्विडा इला । बुधयोपिदपि स्यात् ।। ४२ ।।

[1] हस्ते सनाहे इति मु ग्र [2] रभस इति भा दी (पृ ४६६)

क्ष्वेडा वंशशलाकापि नाडी कालेऽपि षट्क्षणे ।
काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।। ४३ ।।
स्याद् भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ।

इति डान्तवर्गः

(वि) कर्णरोगे विषे ध्वाने दुर्लभे कुटिले शणे ॥ 92 ॥
[1]लोहिताक्षे फले चैव भटाना सिंहनिस्वने ।
क्ष्वेडा वशशलाकाया भटे दन्तोष्ठवाद्यके ॥ 93 ॥

क्ष्वेडयतीति क्ष्वेडा । 'क्ष्विड अव्यक्ते शब्दे' ।

[2]दूर्वाप्रणाल्योर्नाडी स्यात् सिराङ्गान्ते[3] व्रणान्तरे ।
नाडी पट्क्षणकाले च चर्याया कुहनस्य[4] च ॥ 94 ॥

[5]नालयतीति नाडी । 'णल गन्धने वन्धने च' ॥

नाले बाणेऽर्वति जले वर्गावसरयोरपि ।
गजाना बन्धनस्तम्भे रहस्ये काण्ड उच्यते ॥ 95 ॥

अर्वात्र कुत्सित. । काम्यत इति काण्ड । 'कमु कान्तौ' ॥

नदीपाते भूषणे च तुरङ्गाणा च भूषणे ।
मूलद्रव्येऽपि वणिजो भाजने भाण्डमिष्यते[6] ॥ 96 ॥

भण्डयतीति भाण्डम् । 'भडि कल्याणे' ॥ ४३ ॥

इति डान्तवर्ग [7]

[1] रोहिताक्षे K4; °ताक्षफले J2, K5 [2] °प्रणाड्यो K5 [3] स्थिरगन्धे J2.
[4] कुहकस्य J2, K4 [5] नलति K4; 'नल गतौ' K3, K6 [6] उच्यते J2
[7] K2 adds डान्तशब्दसङ्ख्या ८

(विव.) क्ष्वेडा वशशलाकापि । छत्रपञ्जरादिनिर्माणार्थं पुनः पुनः विपाट्य तनूकृता वंशशलाका क्ष्वेडेति शब्दायते । 'क्ष्विड अव्यक्ते शब्दे'[1] । शेषे—'दन्तोष्ठवाद्ये क्ष्वेडा[2] स्त्री पुसि कर्णमले विषे' इति ॥ नाडी कालेऽपि पट्क्षणे । कालः घटिकारूपः । अपिशब्दात् शरीरगतशि[सि]राया च प्रागुक्ता (पृ. ४०२) ॥ काण्डोऽस्त्री—वारिषु । दण्डे यथा—कदलीकाण्डः सूरणकाण्ड इति । बाणे यथा—[3]अकाण्डवातजाना लोकप्रहाराणाम् इति । अर्वा कुत्सित इति सुबोधिनीकारादयो व्याकृतवन्तः । वर्गो महाप्रबन्धेषु वक्तव्यसमुदायैकदेशः । यथा—सप्तकाण्डं रामा-

यणम् । त्रिकाण्डोऽमरकोश इति । अवसरे यथा—अकाण्डे ताण्डवम् इति । वारिणि जले यथा—'रामायणकथेव विविक्तकाण्डा शरदः' इति नलचरिते श्लेषार्थे। काम्यत इति काण्डः। 'कमु कान्तौ'। 'ञमन्ताड्डः' (उ. १. ११६)। हस्तिबन्धनस्तम्भेऽपि ।। स्याद् भाण्डं—वणिग्धने। [4]सुवर्णादिकृतमश्वाभरणमात्रं चामरादिकं वा भाण्डशब्दार्थः। अमत्रं मृन्मयमन्यद्वा कांस्यादिपात्रमात्रम्। यथा—भाण्डशुद्धिरिति। वस्त्रधान्यादिपण्यक्रयणकाले वणिजा विक्रेत्रे दत्तं धनं मूलवणिग्धनम्। यद्वा—देशान्तरे कालान्तरे वा भाविलाभार्थं वणिजा स्थापितं विक्रेयं धान्यादिरूपं धनं मूलवणिग्धनम्। यथा—'तरीषु तत्रत्यमफल्गु भाण्डं सांयात्रिकानावपतोऽभ्यनन्दत्'[5] इति माघकाव्ये (शिशु. ३. ७६) ।। ४३ ।।

इति डान्तवर्गः

[1] पचाद्यच् (३. १. १३४). [2] क्ष्वेला B5, Gm3 [3] अकाण्डपातजातानां B6.
[4] Tv omits 3 lines [5] आपतत. B5, Tj1

(पा.) क्ष्वडा वंशशलाकापि। सिंहनादेऽपि[1] स्यात् ।। नाडी कालेऽपि षट्क्षणे। सिरायामपि स्यात् ।। काण्डोऽस्त्री—वारिषु। दण्डः पलाशादिः[2]। अर्वं निकृष्टम्। तच्च 'निकृष्टप्रतिकृष्टार्व°' इत्युक्तमेव (पृ. ७६) ।। स्याद् भाण्डम्—वणिग्धने। आभरणमात्रेऽपि स्यात्। 'वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः' इति वैजयन्ती (पृ. २२५, श्लो २३) ।। अनुक्तम्—

कुण्ड जलाग्न्योश्चाधारे मुण्डः स्याच्च विधुंतुदे ।
चण्डी प्रियतमायां च रण्डा वारस्त्रियामपि ।।
शिरस्रजि च पीडा स्याच्चूडा बाह्वोश्च भूषणे ।
मारुण्डोऽण्डे [3]भुजङ्गीनां गोमायूनां च मण्डले ।।
जलरण्डो जलावर्ते [4]जलरेणी जलोरगे ।। ४३ ।।

इति डान्तवर्गः

[1] °नादश्च B3, C1. [2] रम्भादिविटपः A1. [3] भुजङ्गानां A1.
[4] जलरेणुर्जलबिन्दुः; पयोरेणी भुजङ्गमे इति वि.प्र. (पृ. ४६, श्लो. ३६).

अथ ढान्ताः—

**भृशप्रतिज्ञयोर्बाढं प्रगाढं भृशकृच्छ्रयोः ॥ ४४ ॥**
**शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ ।**

(वि) अङ्गीकारे भृशार्थे च बाढशब्दोऽभिधीयते[1] ।

बाह्न इति बाढम् । 'बाहृ प्रयत्ने' ॥

[2]प्रगाढ स्याद् भृशार्थे च कृच्छ्रे [3]बलयुते दृढे ॥ 97 ॥

[4]कृच्छ्रं कष्टम् । प्रगाह्त इति प्रगाढम् । 'गाहृ विलोडने' ॥

भृशे स्थूले प्रगाढे च शक्ते त्रिपु दृढ स्मृत ।

दृहतीति दृढ. । 'दृहि वृद्धौ' ॥

सहते रचिते व्यूढ पृथुले वाच्यलिङ्गक ॥ 98 ॥

व्यूहत इति व्यूढ । 'ऊह वितर्के' ॥ ४४ ॥

इति ढान्तवर्ग [5]

[1] प्रयुज्यते J2 [2] प्रगढ K3, K5 [3] बलवति K4 [4] J2 omits.
[5] K2 adds ढान्तशब्दसख्या ४, ढान्तवर्ग° J2

(विव.) भृशप्रतिज्ञयोर्बाढम् । भृशमत्यर्थम् । प्रतिज्ञा अङ्गीकारः । 'क्षुब्धस्वान्त...' इत्यादिना (७. २. १८) भृशार्थे बाढशब्दो निपातितः ॥ प्रगाढं भृशकृच्छ्रयोः । कृच्छ्रं गहनम् । प्रयत्नेन गाह्यते प्रविश्यत इति प्रगाढम् । 'गाहू [1]विलोडने' । क्तः ॥ शक्तस्थूलौ—संहतौ । शक्तो बलवान् । स्थूलः पीनः । 'दृढस्थूलबलयोः' इति निपातितः (७. २. २०) । विन्यस्तं रचनाविशेषेण स्थापितं चतुरङ्गबलम् । यथा—व्यूढा सेना । संहतः मिलितः । यथा—[2]व्यूढा ब्राह्मणा इति । शेषे—'व्यूढस्तु पृथुले त्रिपु' इति । पृथुले यथा—'व्यूढोरस्कः' इति (रघु. १. १३) । प्रगाढादयश्चत्वारः शब्दा वाच्यलिङ्गाः ॥ ४४ ॥

इति ढान्तवर्ग.[3]

[1] प्रवेशने B5, Gm3 [2] व्यूढो ब्राह्मण Tj1, Tj2 [3] B5, B6 add अत्र शब्दा ४

(पा) भृशप्रतिज्ञयोर्बाढम् । बाढेन कृतम् । 'बाढ त्वनुमतौ भृशे' इत्यव्ययेषु जयकोश । बाढ कृतम् ॥ प्रगाढ—सहतौ ॥ ४४ ॥

इति ढान्तवर्ग

**अथ णान्ताः—**

**भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ॥ ४५ ॥**
**कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ।**

(वि) स्त्रीणा गर्भे च शिशुके भ्रूणशब्दोऽभिधीयते[1] ।

मात्रा ध्रियत[2] इति भ्रूण । 'डुभृञ् धारणपोषणयो' ॥

बाणो दैत्ये पृषत्के च शराङ्गे केवले भवेत् ॥ 99 ॥

बणतीति बाण । 'वण[3] शब्दे' ॥

कणोऽतिसूक्ष्मे धान्यांशे पिप्पल्या जीरके कणा ।

कणतीति कण । 'कण शब्दे' ॥

सख्याया प्रथमे स्तोमे सैन्याङ्गे गण उच्यते ॥ 100 ॥

गण्यत इति गण । 'गण सख्याने' ॥ ४५ ॥

[1] प्रयुज्यते J2 [2] भ्रूयते । 'भ्रूण आशायाम्' । घञ् इति मा दी (पृ ४६७)
[3] 'बण वयण शब्दे' K4, K5.

(विव) [1]भ्रूणोऽर्भके स्त्रैणगर्भे । अर्भको बाल । व्रीह्यादिगर्भनिवृत्त्यर्थं स्त्रैणग्रहणम् ॥ बाणो बलिसुते शरे । बलिसुतो बाणासुर. । क्लिष्टोवचन बाण-शब्द [2] स्त्रीपुसयो. प्रागुक्त (१,पृ २५६) ॥ [3]कणोऽतिसूक्ष्मे धान्यांशे । अति-सूक्ष्मेऽत्यल्पे यथा—'चिच्छेद कणश शरान्' इति । धान्यस्य व्रीहितण्डुलादे-

रेकदेशे यया—कणभुक् इति। पिप्पल्या जीरके च स्त्रीलिङ्गः प्रागुक्तः (१, पृ. २७१, ५७६)। संघाते प्रमथे गणः। संघातः समूहः। प्रमथा रुद्रानुचरा भृङ्गिरिटिप्रमुखाः। गण्यत इति गणः। 'गण संख्याने'। गुल्मत्रिगुणरूपे सेनाविशेषे गणः प्रागुक्तः (१, पृ. ५३०) ॥ ४५ ॥

[1] भ्रियते भ्रूण इति स्वामी (पृ २८१), भ्रूण्यते 'भ्रूण आशायाम्' घञ् इति भा दी (पृ ४६७)　[2] वाणयति। 'वण शब्दे'। स्वार्थण्यन्त। पचाद्यच् इति भा. दी. (पृ ४६७)　[3] वणति। 'वण निमीलने'। पचाद्यच् इति भा दी (पृ ४६७)

(पा) भ्रूणोऽर्भके स्त्रैणगर्भे। गर्भिणीश्रोत्रिययोरपि स्यात्। 'भ्रूणोऽर्भके स्त्रैणगर्भे गर्भिण्या [1]श्रोत्रियद्विजे' इति वैजयन्ती (पृ २१७, श्लो ४०)। कणोऽतिसूक्ष्मे—गण ॥ ४५ ॥

[1] श्रोत्रिये द्विजे B3, C1.

पणो द्यूतादिपूत्सृष्टे भृतौ मूल्ये धनेऽपि च ॥ ४६ ॥
मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः ।

(वि) द्यूताद्युत्सृष्टधनयोर्मूल्यवेतनयोरपि ।
कार्षिके व्यवहारे च पणशब्द प्रकीर्तित ॥ 101 ॥

पण्यत इति पण । 'पण व्यवहारे स्तुतौ च' ॥

मौर्व्यां सूदे भीमसेने कृपस्तम्भाप्रधानयो ।
सध्यादौ स्पर्शरूपादौ [1]शौर्यविद्यादिकेऽपि च ॥ 102 ॥
द्रव्याश्रिते [2]च शुक्लादौ गुण सत्त्वादिकेऽपि च ।

सध्यादि सधिविग्रहादि । गुण्यत इति गुण । 'गुण अभ्यासे'[3] ॥ ४६ ॥

[1] शौर्यवीर्य° K5, °विद्याधिके K6　[2] स्यात् K5　[3] आमन्त्रणे इति मुद्रितग्रन्थेषु.

(विव.) पणो द्यूत—धनेऽपि च। आदिशब्देन कुक्कुटयुद्धादिपरिग्रहः। द्यूतादीनामुपक्रमकाले जितवते पराजितेन देयतया संप्रतिपन्नरूपकादिक द्यूतादि-यूत्सृष्टमुच्यते। भृतिर्वेतनम्। वस्त्रादिक्रयणकाले विक्रेतुर्देय धन मूल्यम्। तद्व्यति-

रिक्तं धनमात्र च । 'तान्त्रिके कार्षिके पणः' इति प्रागुक्तः (पृ. ६०७) ॥ मौर्व्यां—गुणः । गुणाश्रयो द्रव्यमिति काणादाः । पृथिव्यादिद्रव्यसमवेतेषु चतुर्विंशतिसंख्याकेषु रूपरसादिषु । आदिशब्दः प्रत्येकं सत्त्वादित्रयेण संबध्यते । ततश्च सांख्यप्रसिद्धेषु सत्त्वरजस्तमोगुणेषु[1] सर्वप्रसिद्धेषु धैर्यशौर्यगाम्भीर्यादिषु, नीतिशास्त्रप्रसिद्धेषु क्षत्रियवर्गोक्तसध्यादिषु[2] षट्सु (पृ. ४९४) चेत्यर्थः । शेषे—'गुणोऽभ्यासाप्रधानयोः' इति । अभ्यास आवृत्तिः । यथा—द्विगुण', त्रिगुण इति । अप्रधाने यथा—वयमिह गुणभूताः; दधिलक्षणो गुणः इति । औदनिके (पृ. ५७०), रज्जौ (पृ. ६३६), [3]कूपके च (पृ. १६३) प्रागुक्तः[4] ॥ ४६ ॥

[1] गुणा सत्त्व रजस्तम (पृ ९०). [2] सधिर्ना विग्रहो . षड्गुणा [3] 'कूपको गुणवृक्षक ' इति वारिवर्गे [4] पण्यतेऽनेनेति पण । 'नित्य पण परिमाणे' (३ ३ ६६) इत्यप् ॥ गुण्यत इति गुण । 'गुण आमन्त्रणे'। घञ् (३ ३ १९) इति भा दी (पृ ४६७).

(पा ) पणो द्यूत—धनेऽपि च । अत्र चोत्सृष्टे द्यूतग्लहे । 'पणो विक्रेयशाकादिमुष्टौ द्यूतग्लहे भृतौ' इति जयकोशः। मौर्व्या—गुणः । द्रव्याश्रित रूपादि । द्रव्यशब्दस्य भव्यत्ववाचकत्वाद् विद्याशौर्यादिकं च द्रव्याश्रितम् ।

'गुणोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे ।
[1]शुल्वे सत्त्वादिसध्यादिविद्यादिहरितादिषु ॥'

इति विश्व.[2] । शुल्व रज्जु. । सत्त्वादिक सत्त्वरजस्तमासि । [3]सध्यादिक सधिविग्रहादि ॥ ४६ ॥

[1] शुक्ले B3. [2] मुद्रितविश्वप्रकाशिकायां न दृश्यते [3] A1 adds शुक्लादिक शक्लमृद्वादि.

निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ॥ ४७ ॥
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे ।

(वि.) निर्व्यापारासने [1]भृत्ये पूर्णिमादिकपर्वणि ॥ 103 ॥
उत्सवे कालभेदे च क्षणशब्दः प्रकीर्तितः ।

क्षण्यत इति क्षण. । 'क्षणु हिंसायाम्' ॥

विप्रक्षत्रियवैश्यादौ शुक्लादौ कीर्तिलेपयो. ॥ 104 ॥
स्तुतौ [2]कुथाया वर्ण. स्यादक्षरे वर्णमद्वयो ।

वर्ण्यत इति वर्ण । 'वर्ण [3]वर्णक्रियाविस्तारगुणवचनेषु' ॥ ४७ ॥

[1] नृत्ये K2, K4　　[2] कृपायाम् K6　　[3] स्तुतौ K2, K3, K6

(विव.) निर्व्यापार—क्षणः। व्यापारान्तरपरित्यागेन क्वचित्कर्मणि एकतानत्व निर्व्यापारस्थितिः। यथा—'श्राद्धे क्षणः क्रियताम्' इति। कालविशेषः त्रिंशत्कलात्मकः। अत्यल्पकालमात्रेऽपि क्षणशब्दः। यथा—[1]'क्षणं निमील्य चक्षुः' इति ॥ वर्णो—तु वाक्षरे। प्रथमेनादिशब्देन क्षत्रवैश्यशूद्रा विवक्षिता.। द्वितीयेन नीलपीतलोहितादयो वर्णविशेषाः। स्तुतिः प्रशंसा। अस्मिन्नर्थनये रूपभेदात् पुलिङ्गः। अकारककाराद्यक्षरेषु तु विकल्पेन। यथा—'दलेषु विलिखेद् वर्णान्' इति पुंलिङ्गे। 'ह्रस्वमवर्णं प्रयोगे' इति नपुंसके। शेषे—

'वर्णस्तालविशेषे स्याद् ब्रह्मचर्ये विशेषणे ।
विलेपने कुथाया च ॥'

इति। विलेपनमङ्गरागः। विशेषण व्यावर्तनम्। यथा—'ध्वजं वानरवर्णितम्' इति ॥ ४७ ॥

[1] 'उन्मील्य चक्षु क्षणम्' इति नागानन्दे (१ १), 'क्षण निमील्य नेत्रे' इति कु स (५ ५७)

(पा ) निर्व्यापार—क्षण । कालविशेषो मुहूर्तादि ।

'मुहूर्तद्वादशाशे च मुहूर्ते [1]पर्ववेलयो ।
अल्पकाले च विद्वास क्षणशब्द प्रयुञ्जत ॥'

वर्णो द्विजादौ—वर्णं तु [2]वाक्षरे ॥ ४७ ॥

[1] सव° B3, C1　　[2] चाक्षरे C1.

अरुणो भास्करेऽपि स्याद् वर्णभेदेऽपि च त्रिषु ॥ ४८ ॥
स्थाणुः शर्वेऽपि च द्रोणः काकेऽपि च रवे रणः ।

(वि.) अव्यक्तरागे कपिले संध्यारागे दिवाकरे ॥ 105 ॥
अनूरुकुष्ठनिःशब्देष्वरुणो गुणिनि त्रिषु ।

[1] इयर्तीत्यरुणः । 'ऋ गतौ' ॥

स्थिरे पिनाकपाणौ च शङ्कौ स्थाणुरुदाहृतः ॥ 106 ॥

चिरं तिष्ठतीति स्थाणुः । [2]'ष्ठा गतिनिवृत्तौ' ॥

आचार्याढकमानेषु काकोले द्रोण उच्यते ।
द्रोणी स्याद् देशभेदेऽम्बुवाहिन्यां गोस्तृणस्थले[3] ॥ 107 ॥

द्रवत्यत्र द्रोणः । 'द्रु गतौ' ॥

भेरीवादनकोणे च रवे युद्धे रणो मतः ।

रणतीति रणः । 'रण शब्दे' ॥ ४८ ॥

[1] ऋच्छति J2. [2] J2 omits. [3] गोत्रिणस्तटे K5.

(विव.) अरुणो—अपि च त्रिषु । 'अव्यक्तरागस्त्वरुणः' इति प्रागुक्ते (१, पृ. १००) वर्णविशेषे पुंलिङ्गः । वर्णस्य भेदो विशेषोऽस्येति समासे सति द्रव्यवचनत्वे वाच्यलिङ्गः । तथा च प्रतापः—

'अरुणः कपिले कुष्ठे संध्यारागेऽर्कसारथौ ।
अव्यक्तरागे निःशब्दे द्रव्ये त्रिषु निरूपितः ॥'

इति[1] ॥ स्थाणुः शर्वेऽपि । शर्वे महादेवे । अपिशब्दाद् ध्रुवे पुंलिङ्गः । नपुंसकलिङ्गः प्रागुक्तः[2] (१, पृ. २१९) ॥ अथ द्रोणः काकोलेऽपि । काकोलः काकशब्दः प्रागुक्तः[3] (पृ. ३४४) । अत्र विश्वप्रकाशः (पृ. ४८, श्लो. ७–८)—

'द्रोणः कृपीपतौ [4]कृष्णवायसे पर्वतेऽपि च ।
आढकानां चतुष्केऽपि द्रोणः स्यान्नीवृदन्तरे[5] ॥
द्रोणी काष्ठाम्बुवाहिन्यां गवां घासपरिस्थले ॥'

इति। कृपीपतिर्द्रोणाचार्यः। पर्वतविशेषो द्रोण इति प्रसिद्धः। नीवृदन्तरं देशविशेषः[6]॥ रवे रणः। 'रण शब्दे'। 'वशिरण्योरुपसंख्यानम्' (वा. ३. ३. ५८) इत्यप्। पूर्ववाक्यानुवर्तनेन अपिशब्देन युद्धे प्रागुक्तः (पृ. ५४५)। विश्वप्रकाशे[7]—'रण.[8] कोणक्वणादिषु' इति। कोणो वीणादिवादनदण्डः॥ ४८॥

[1] ऋच्छति। 'ऋ गतौ'। 'अर्तेश्च' (उ. ३ ६०) इत्युनन् इति भा दी. (पृ ४६७). [2] तिष्ठति। 'स्थो णु' (उ ३ ३७) इति भा. दी (पृ ४६७) [3] 'द्रोणकाकस्तु काकोल' इति (पृ ३४४) [4] कृष्णकाके स्यादाढकेऽपि च इति मु ग्र [5] घासभुजि स्थितौ इति मु ग्र [6] द्रवति। 'द्रु गतौ'। 'कृवृजृसि .' (उ ३ १०) इति न इति भा दी (पृ ४६७) [7] मु ग्र न दृश्यते [8] रणतीति रण। पचाद्यच्

(पा) अरुणो—स तु त्रिषु। आदिशब्देन भास्करसारथावपि॥ स्थाणु शर्वेऽपि च। [1]शाखाशून्यवृक्षविशेषेऽपि स्यात्॥ द्रोण काकेऽपि। 'परिमाणे दारुपात्रे द्रोणोऽस्त्री वायसे पुमान्' इति वैजयन्ती (पृ २३३, श्लो ४०)॥ अथ रवे रण। युद्धे नपुंसक च[2]॥ ४८॥

[1] °वृक्षस्कन्धे $B_3$, $C_1$ [2] $A_1$ omits च

**ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपे त्रिषु॥ ४९॥**
**ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ।**

(वि) ग्रामाधिपे श्रेष्ठपुंसि नापिते भोगिकेऽपि च॥ 108॥
पण्याङ्गनानीलिकयोर्ग्रामणीर्ग्रामकारिणि।

ग्राम स्ववश नयतीति ग्रामणी। 'णीञ् प्रापणे'॥

अजमेषादिलोम्न्यूर्णा भ्रूमध्यावर्तके तथा[1]॥ 109॥

[2]ऊर्णोत्याच्छादयतीत्यूर्णा। 'ऊर्णुञ् आच्छादने'॥ ४९॥

[1] $J_2$, $K_6$ add ऊर्ण स्वर्णे वृक्षभेदे चातुर्वर्ण्याध्वरेन्दुषु [2] ऊर्णूयते $J_2$, $K_6$

(विव.) ग्रामणी—ग्रामाधिपे त्रिषु। नापित· क्षुरकर्मोपजीवी। तत्र पुलिङ्गः। [1]अर्थान्तरे वाच्यलिङ्ग। श्रेष्ठो यूथपति·। यथा—अश्वग्रामणीः।

पुरुषग्रामणीः इति । ग्रामं नयति तत्तत्कार्यार्थं स्वस्थानं नयतीति ग्रामणीः । 'सत्सूद्विष...' इत्यादिना (३.२.६१) नयतेः क्विप् । 'अग्रग्रामाभ्यां नयतेर्णो वक्तव्यः'[2] (वा. ३.२.६१) इति णत्वम् ॥ ऊर्णा--चान्तरा भ्रुवौ । आदिशब्देन शशकमूषकादीनां ग्रहणम् । भ्रुवावित्यत्र 'अन्तरान्तरेण युक्ते' इति द्वितीया (२.३.४) । भ्रूद्वयमध्यवर्तिरोमावर्त इत्यर्थः । यथा नागानन्दे—'उष्णीषः स्फुट एष मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवोः'[3] इति (१.१७, ५.३२) । ऊर्णोति आच्छादयतीत्यूर्णा । 'ऊर्णुञ् आच्छादने' । ऊर्णोतेर्डप्रत्ययः[4] (३.२.१०१) ॥ ४६ ॥

[1] B5 omits the Sentence [2] वाच्य B5 [3] Tj1, Tj2 add 'नो विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यति'. [4] ऊर्णोतेर्ड इति° B5, Gm3

(पा.) ग्रामणीर्नापिते—चान्तरा भ्रुवौ ॥ ४६ ॥

**हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ॥ ५० ॥**
**त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः ।**

(वि) हरिणी सुरयोपाया [1]वृत्तभेदपिशङ्गयो ।
कनकप्रतिमाया च मृगीहरितयोरपि ॥ 110 ॥
हरिण कृष्णसारे स्यात् पीतपाण्डुरयोरपि[2] ।

मनो हरतीति हरिण । 'हृञ् हरणे' ॥

स्थूणा लोहप्रतिकृतौ गृहस्तम्भे गदान्तरे[3] ॥ 111 ॥

चिर तिष्ठतीति स्थूणा । [4]'ष्ठा गतिनिवृत्तौ' ॥ ५० ॥

[1] वृक्ष° J2 [2] °पाण्डुरवर्णयो J2, K2, K4. [3] व्याधिविशेषे [4] J2, K4 omit

(विव.) हरिणी—हरिता च या । हरिणशब्दाद् मृगपर्यायात् [1]'जातेरस्त्रीविषयात्...' इत्यादिना (४.१.६३) ङीषि हरिणी कुरङ्गी । हरति मन इति विग्रहे हरतेः औणादिके इनच्प्रत्यये (उ. २.४८) गौरादिङीषि[2] (४.१.४१) हरिणी स्वर्णप्रतिमा । हरितशब्दात् पलाशवर्णवचनाद् 'वर्णादनुदात्तात्तोपधात्तो नः' (४.१.३६) इति ङीपि प्रत्यये उपधातकारस्य नत्वे

च या काचन स्त्रीलिङ्गपदाभिधेया दूर्वालतिका हरिणीत्युच्यते। शेषे—'हरिणी वृत्तभेदेऽपि [3]यूथिकासुरयोषितोः' इति। 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी मता' इति वृत्तरत्नाकरोक्तलक्षणविशेषो (३.९६) वृत्तविशेषः। सुरयोषिति यथा—'प्रजिघाय समाधिभेदिनी हरिरस्मै हरिणीं सुराङ्गनाम्' (रघु. ८.७९) इति। हरिणशब्द. पाण्डुवर्णे द्रव्ये वाच्यलिङ्ग. (१, पृ. ६६)। वर्णमात्रे तु पुसीति[4] प्रागुक्तः (१, पृ. १०१)॥ स्थूणा स्तम्भेऽपि वेश्मनः। स्थूणा[5] गृहस्तम्भः। चकारात् लोहप्रतिमाया प्रागुक्ता (पृ ६४१)॥ ५०॥

[1] 'पुयोगादाख्यायाम्' ङीप् इति भा दी (पृ ४६८)　[2] 'पिद्गौरादिभ्यश्च'.
[3] पाण्डुरा° B5　[4] Tj1 omits पुसि　[5] तिष्ठति। 'रास्नासास्नास्थूणावीणा' (उ ३ १५) इति साधु इति भा दी (पृ ४६८)

(पा) हरिणी—हरिता च या। [1]हरितवर्णा काञ्चनमयीत्यर्थ॥ त्रिषु पाण्डौ च हरिण। कृष्णसारेऽपि स्यात्॥ स्थूणा स्तम्भेऽपि वेश्मन। लोहप्रतिमायामपि॥ ५०॥

[1] B3 omits the Sentence, हरितवर्णया A1

तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे॥ ५१॥
वणिक्पथे च विपणिः सुरा प्रत्यक् च वारुणी।

(वि) उदन्यातर्षयोस्तृष्णा निन्दाकारुण्ययोर्घृणा।

तृष्यत्यनयेति तृष्णा। 'ञितृष पिपासायाम्'॥ [1]घृण्यतेऽनयेति घृणा। 'घृणु दीप्तौ'॥

आपणे पण्यवीथ्या च पण्ये विपणिरुच्यते॥ 112॥

[2]विपणन्त्यत्रेति विपणि। 'पण व्यवहारे'॥

प्रतीचीमद्ययोर्गण्डदूर्वाया वारुणी मता।

वरुणस्येय वारुणी॥ ५१॥

[1] घृणति K6, घृणत्यनया K2　[2] विपण्यत इति K5

(विव.) तृष्णे—द्वे। अभिलाषमात्रं[1] स्पृहा। यथा—धनतृष्णा विद्यातृष्णेति, यद्विशेषः पिपासा। यथा—'अम्भोधिनापि किं तेन येन तृष्णा न शाम्यति' इति। 'ञितृष पिपासायाम्' इति धातोः [2]पिपासावृत्तित्वेऽपि तृष्णाशब्दस्य निरूढलक्षणतया मुख्यतुल्यत्वाद् नानार्थत्वं युक्तम्। एवमेव तर्षतृषातृट्शब्दाश्च नानार्थतया बोद्धव्याः ॥ जुगुप्साकरुणे घृणे[3]। अत्र जुगुप्साशब्देन बीभत्सरसस्थायिभावो गृह्यते। करुणा दया ॥ वणिक्पथे च विपणिः। वणिक्पथो हट्टः। 'आपणे पण्यवीथ्या च [4]पण्ये च विपणिः स्त्रियाम्' इति रुद्रः। 'नाडितन्त्रीद्याजिराजिभ्रुकुटिविपणयो दीधितिर्धूलिरालिः' इति स्त्रीलिङ्गप्रकरणे वाचस्पतिलिङ्गानुशासनं च ॥ सुरा प्रत्यक् च वारुणी। [5]प्रत्यगिति दिग्वाचकमव्ययम्। वरुणस्येयमिति [6]वारुणी। प्रतीची दिक्। 'सुरा च वरुणात्मजा' इत्यागमः। अत एव सुरापर्यायेषु वरुणात्मजा इत्युक्तम् (पृ. ६४३) ॥ ५१ ॥

[1] B5 omits मात्रम् [2] पिपासायति B5 [3] घ्रियते सिच्यते हृदयमनया। 'घृ सेचने'। बाहुलकाद् नक्। स्त्रियां टाप् इति म द्र (पृ ३६४). [4] पणे B5 [5] B5 adds प्रत्यगञ्चन्ति दिशा मध्ये [6] 'तस्येदम्' इत्यण् (४. ३ १२०)

(पा.) तृष्णे स्पृहा—विपणि.। 'आपणे पण्यवीथ्या च पण्ये च विपणिः स्त्रियाम्' इति रुद्र. ॥ सुरा प्रत्यक् च वारुणी ॥ ५१ ॥

करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ॥ ५२ ॥
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च।

(वि.) करेणु. कर्णिकारे स्याद्धस्तिनीगजयोरपि ॥ 113 ॥

[1]कं रेणुरस्येति करेणु. ॥

बले पराक्रमेऽपि[2] स्याद् द्रविणं काञ्चने धने।

द्रवतीति द्रविणम्। 'द्रु गतौ' ॥

शरणं वधरक्षित्रोर्गृहरक्षणयोरपि ॥ 114 ॥

शीर्यत इति शरणम्। 'शॄ हिंसायाम्' ॥

श्रीपर्णमग्निमन्थाब्जभद्रपर्णीषु[3] कथ्यते ।

श्रीयुतपर्णत्वात् श्रीपर्णम् ॥ ५२ ॥

[1] कर नयतीति करेणु $J_2$, $K_4$; $K_5$ omits　[2] च $K_5$　[3] °पर्णेषु $K_5$

(विव.) करेणुरिभ्या स्त्री नेभे । हस्तिन्यां [1]करेणुशब्दः स्त्रीलिङ्गः । [2]पुंगजे तु ना पुंलिङ्ग इत्यर्थः । मत्तावस्थायां के मूर्ध्नि विक्षिप्तो रेणुरस्येति करेणुः ॥ द्रविणं तु बलं धनम् । बलं शौर्यम् । धनं सुवर्णरजतादिवित्तमात्रम् । तद्विशेषे[3] काञ्चनेऽपीति केचित्[4] ॥ शरण गृहरक्षित्रोः । शृणाति विपदं हिनस्तीति शरणम् । 'शृ हिंसायाम्' । 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति कर्तरि ल्युट् । [5]'प्रतिशरणमशीर्णज्योतिरग्न्याहितानाम्' इति[6] प्रयोगः (शिशु. ११. ४१) । 'शरणं तरुणेन्दुशेखरः' इति रक्षके । [7]रूपभेदाद् नपुंसकत्वम् । 'शरणं रक्षणे वधे' इति विश्वप्रकाशः (पृ. ५०, श्लो. ३७) ॥ श्रीपर्णं कमलेऽपि च । श्री· शोभा पर्णेष्वस्येति श्रीपर्णम् । अपिशब्दाद् अग्निमन्थाख्यवृक्षे प्रागुक्तम् (१, पृ. २५४) । भद्रपर्ण्यां कट्फले च ङीबन्तोऽपि प्रागुक्तः (पृ. २३७, २३९) ॥ ५२ ॥

[1] $B_3$ adds कलेणु°　[2] $B_5$ omits पुम्　[3] तद्विशेषेण काञ्चनम् $B_5$
[4] द्रवतीति द्रविणम् । 'द्रु गतौ । 'द्रुदक्षिभ्यामिनन्' (उ २ ५३) इतीनन्प्रत्यय
[5] °अशीर्य° $T_{J1}$, $T_{J2}$　[6] $B_5$ adds गृहे　[7] रूपभेदावकल्पनम् $B_5$

(पा ) करेणुरिभ्या—बल धनम् । काञ्चनेऽपि स्यात् । 'द्रविण काञ्चने वित्ते द्रविण च पराक्रमे' इति विश्व (पृ ५१, श्लो ४४) ॥ शरण गृहरक्षित्रो । रक्षणवधयोरपि स्यात्[1] । 'शरण [2]वधरक्षित्रो शरण रक्षणे गृहे'[3] इति विश्व (पृ ५०, श्लो ३७) ॥ श्रीपर्णं कमलेऽपि च । [4]वृक्षविशेषेऽपि स्यात् ॥ ५२ ॥

[1] $B_3$, $C_1$ omit स्यात्　[2] गृह° $A_1$　[3] वधे $A_1$　[4] श्रीवृक्ष° $A_1$

**विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ॥ ५३ ॥**
**प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।**

(वि ) तीक्ष्ण तिग्मे विषे क्रूरे शस्त्राभिमरयोरपि ॥ 115 ॥
अभिमरो [1]मारक युद्धम् । [2]तेजयतीति तीक्ष्णम् । 'तिज [3]निशाने' ॥

मर्यादाहेतुशास्त्रेषु नित्येयत्ताप्रमातृषु ।
[4]सत्यवादिन्येकताया प्रमाण [5]हिंसके भवेत् ॥ 116 ॥

प्रमीयत इति प्रमाणम् । 'माङ माने'। [6]हिंसके तु 'मीञ् हिंसायाम्' इति धातुः ॥ ५३ ॥

[1] मारयुद्धम् J2 [2] तिज्यते K5 [3] निशातने K2, K4. [4] सत्त्व° K6.
[5] [6] हिंसने J2, K4

(विव.) विषाभिमर—खरे त्रिषु । विषं कालकूटादिकम्, सहजं कृत्रिमं च । अभिमरो युद्धम् । [1]लोहः शस्त्रकम् । [2]अर्थत्रयेऽपि रूपभेदाद् नपुंसकत्वम् । खरे दुःसहे सूरकिरणादौ विशेष्यनिघ्नः । 'ते तीक्ष्णा ये धनेच्छातो युध्यन्ति द्विरदादिभिः' इति नीतिपट्साहस्र्याम् ॥ प्रमाणं—प्रमातृषु । अत्र हेतुशब्देन [3]ज्ञप्तिकारणं विवक्षितम् । यथा—'सम्यगनुभवसाधनं प्रमाणम्' इति । मर्यादा अवधिः । यथा—ग्रामयोरनयोः पर्वतः प्रमाणमिति । शास्त्रे यथा—अस्मिन्नर्थे मनुवचनं प्रमाणमिति । ज्ञानसाधनत्वाकारेण शास्त्रस्यापि हेतुपदेनैव ग्रहणेऽप्यलौकिकाकारेण ततो वैलक्षण्यात् पृथगुपादानं कृतम् । अथवा शास्त्रशब्देन तद्विशेषो विवक्षितः यथा—'पदवाक्यप्रमाणज्ञः' इति (मा. माघ. ७) । इयत्ता अवच्छेदः । यथा—[4]'कियत्प्रमाणमुदकम्' इति । (भो. प्र. पृ.४०, श्लो. १८५) । प्रमातरि प्रमाश्रये यथार्थानुभवयुक्त इत्यर्थः । यथाहुर्नैयायिकाः—'प्रमासाधनप्रमाश्रययोरन्यतरत्वं [5]प्रमाणलक्षणम्' इति । 'तन्मे प्रमाणं शिवः' इति च । रभसोऽपि—

'इयत्ताहेतुशास्त्रेषु प्रमाणं सत्यवादिनि ।
मर्यादानित्ययोश्च स्यादेकतायां प्रमातरि ॥'

इति । प्रमातर्यभिधेये तद्गतबहुत्वे सत्यपि तद्विशेषणस्य प्रमाणशब्दस्य नित्यमेकवचनान्तमेवेत्यर्थः । यथा—मन्वादयः प्रमाणम् इति । सत्यवादिमात्रे यथा—प्रमाणभूतो देवदत्त इति । नित्ये यथा—'वाचा विरूप नित्यया' (ऋग्वेद ८. ७५. ६) इति । प्रमाणभूतयेत्यर्थः । 'माङ माने' इति धातोर्यथायोगं भावकरणादौ ल्युट् (३. ३. ११५, ११७, ११३) । क्वचिदर्थविशेषे तु—[6]'मीञ् हिंसायाम्' इति धातोः 'मीनातिमिनोति...' (६. १. ५०) इत्यात्वम् ॥ ५३ ॥

[1] लोह B5.　[2] अन्नार्थत्रये Tv.　[3] सञ्ज्ञप्ति° B5.　[4] 'क्रियमान जल विप्र' इति मु ग्र　[5] प्रमा° B5, B7　[6] B5 adds तुर्वी.

(पा.) विषाभिमर—खरे विष् । अभिमरो युद्धम् । खरमुष्णम् । 'तीक्ष्ण-मुष्णे क्षणुते युद्ध आत्मत्यजि[1] विषेऽप्सि' इति वैजयन्ती (पृ. २३३, श्लो. ३७) ॥ प्रमाण—प्रमातृषु । हेतौ—[2]अग्निज्ञाने धूम. प्रमाणम् । मर्यादायाम्—ग्रामयोर्नदी प्रमाणम् । शास्त्रे—वेदान्तः प्रमाणम् । इयत्तायाम् —स्तनयोः [3]कञ्चुक प्रमाणम् । प्रमातरि एकवचनमेव । 'प्रमाणमन्त.करणप्रवृत्तयः' (शाकु. १. २२) । [4]'इयत्ता-हेतुशास्त्रेषु प्रमाण सत्यवादिनि' इति रभसकोशः ॥ ५३ ॥

[1] आजीविषे A1.　[2] वह्नि° B3, C1　[3] कञ्चुकप्रमाणम् A1.　[4] 'मर्यादानिश्चयोरेकतायामेव प्रमातरि' B3, C1.

**करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ॥ ५४ ॥**
**प्राण्युत्पादे संसरणमसंबाधचमूगतौ ।**
**घण्टापथेऽथ वान्तान्ने समुद्धरणमुन्नये ॥ ५५ ॥**

(वि) अङ्गहारे क्रियाभेदे गीते कर्मेन्द्रियेष्वपि ।
सर्वेशे साधकतमे करण क्षेत्रगात्रयो. ॥ 117 ॥
शूद्राविशोरपत्येऽपि कायस्थे करणो[1] भवेत ।

किरन्त्यत्रेति करणम् । 'कॄ विक्षेपे' ॥

घण्टापथे रणारम्भे ससारे पुरनिर्गमे ॥ 118 ॥
पुरद्वारे ससरणमसकटचमूगतौ ।

ससरन्त्यस्मादिति ससरणम् । 'सृ गतौ' ॥

[2]समुद्धरणमुन्मूलवान्तान्नोन्नयनेष्वपि[3] ॥ 119 ॥

समुद्ध्रियत इति समुद्धरणम्[4] ॥ ५४–५ ॥

[1] करण K8.　[2] उन्मूलतृणाना J2　[3] च for अपि K2, K4　[4] K2, K5 add समुद्धरणशब्दोऽप्येतेष्वभिधेयेषु वर्तते

(विव.) करणं—इन्द्रियेष्वपि । क्रियाप्रसिद्धौ प्रकृष्टोपकारकः कारकविशेषः साधकतमः[1] । यथा—'करणाधिकरणयोश्च' (३. ३. ११७) । क्रियते संस्क्रियते कृषीवलैरिति कर्मणि ल्युटि (३. ३. ११५) करणं क्षेत्रम् । किरति बीजमत्रेति वा । अर्थान्तरेषु करणे ल्युट् (३. ३. ११७) । गात्रं शरीरम् । इन्द्रियं चक्षुरादिकं त्वगादिकं च । शेषे—'करणं रतिबन्धेषु नृत्तसंस्थानकर्मणोः' इति । रतिबन्धाः कामशास्त्रप्रसिद्धाः नागबन्धजृम्भितादयः । संगीतसारे—

[2]'नृत्तवादित्रगीतानां प्रयोगवशभेदिनाम् ।
संस्थानभेदान् नाट्यज्ञाः करणानि प्रचक्षते ॥'

इति । यथा कुमारसंभवे (६. ४०)—

[3]'शिखराबद्धमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥'

इति । कर्मणि यथा—नवीकरणम्, शिथिलीकरणम् इति । प्राण्युत्पादे—घण्टापथे । जीवानां स्वस्वकर्मवशेन नरतिर्यगादीनां योनिषु संभवः प्राण्युत्पादः । संसार इति यावत् । [4]मार्गे विपुलतया असंबाधेन परस्परानुपमर्देन सेनायाः प्रसरणमसंबाधचमूगतिः । सम्यगसंबाधेन सरन्त्यत्रेति संसरणम्[5] । घण्टापथः[6] रथ्या । शेषे—'रणारम्भे संसरणं गोपुरे पुरनिर्गमे' इति ॥ अथ वान्तान्ने—उन्नये । उद्ध्रियते कुक्षिकुहरादूर्ध्वं नीयत इति समुद्धरणं छर्दितान्नम् । भावसाधनत्वे तु उन्नय उत्तोलनम् । 'तत्रोद्धृतममत्रेभ्यः' (४. २. १४) इत्यत्र काशिका (पृ. ३०५) [7]'भुक्तोज्झितमुद्धृतमुच्यते, यस्योद्धरणमिति प्रसिद्धिः'[8] इति । केचित्तु—सम्यगुद्धरणं समुद्धरणमिति विगृह्य मूलग्रन्थं पठित्वा व्याचक्षते ॥ ५४–५ ॥

[1] साधकतमम् B5, Gm1; °तमे Tv. [2] नृत्य° B5. [3] शिखरासक्त° इति मु. ग्र. [4] मार्गविपुलतया B5. [5] ल्युट् (३. ३. ११७). [6] 'घण्टापथः ससरणम्' इति भूमिवर्गे (१, पृ. १९४). [7, 8] भुक्तोच्छिष्ट°, प्रसिद्धेः इति मु. ग्र.

(पा.) करणं—इन्द्रियेष्वपि ।

'करणं कारणे [1]काये साधनेन्द्रियकर्मसु ।
कायस्थे [2]व्रतबन्धे च नाट्यगीतप्रभेदयोः ॥'

इत्यजय.[3] ॥ प्राण्युत्पादे—घण्टापथे । प्राण्युत्पाद ससार ।

'ससरण रणारम्भे पुरनिर्गमगोपुरे ।
घण्टापथे च मसारेऽप्यमवाधचमूगतौ ॥'

इति विश्व (पृ ५४, श्लो ८७–८) ॥ अथ वान्तान्ने समुद्धरणमुन्नये । उन्नय उद्धार । 'उद्धरण समुद्धारवान्तान्नोन्मूलनेष्वपि' इति विश्व (पृ ५४, श्लो ८६) ॥ ५४–५ ॥

[1] कायसाधन° A1, [2] रति° A1 [3] जय A1, B3, अजय इति भा दी (पृ ४६८)

**अलस्त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयोः ।**
**प्रवणः क्रमनिम्नोर्व्या प्रह्वे ना तु चतुष्पथे ॥ ५६ ॥**
**संकीर्णो निचिताशुद्धावीरिण शून्यमूषरम् ।**

**इति णान्तवर्गः**

(वि) विषाण पशुशृङ्गेऽपि क्रोडदंष्ट्रेभदन्तयो ।
अजशृङ्ग्याख्यौषधेऽपि विषाणी परिकथ्यते[1] ॥ 120 ॥

विषाणशब्द [2]सत्त्ववति त्रिषु लिङ्गेषु वर्तते । स [3]विशेष्याश्रयात् । वेवेष्टीति विषाणम् । 'विष्लृ व्याप्तौ' ॥

क्रमनिम्नक्षितितले क्षान्तप्रगुणयोरपि ।
प्रह्वे चतुष्पथे चैव प्रवणो वाच्यलिङ्गक ॥ 121 ॥

[4]प्रवणतीति प्रवण । 'वण शब्दे' ॥

अपवित्रे च निचिते सकीर्ण समुदाहृत ।

सम्यक् कीर्णो व्याप्त सकीर्ण ॥

ईरिण शून्यदेशे स्यादूषरे चापि समतम्[5] ॥ 122 ॥

ईरयतीति ईरिणम् । 'ईर क्षेपे' ॥ ५६ ॥

इति णान्तवग[6]

[1] परिपठयत K4 [2] स्वत एव K4 [3] सविशप° K6 [4] प्रवनति, 'वन पण सभक्तौ K3, K4, K6 [5] सगतम K5 [6] K2 adds णान्तशब्दसख्या ३४

(विव ) अथ त्रिष—इभदन्तयो । [1]अथ णकारान्तसमाप्तिपर्यन्त चत्वार॰ शब्दा लिङ्गत्रये वर्तन्ते । त्रिलिङ्गत्वमात्रे साधर्म्यम् । न तु सर्वदा । ततश्च विषाण-शब्द तटमण्डलादिशब्दवत् स्वभावादेव त्रिलिङ्ग । इतरे तु विशेष्यनिघ्ना ॥ पशूना गोमहिष्यादीना शृङ्गे गजदन्ते [2]च विषाणम् । विशेषेण स्यति नाशयति विरोधिनमिति विषाणम् । 'षोऽन्तकर्मणि' । ल्यु (३ १ १३४) । 'उपसर्गात सुनोतिसुवतिस्यति ' (८ ३ ६५) इति षत्वम् । स्त्रीलिङ्गे तु शृङ्गवचनस्य अजादिपाठात् टाबन्तत्वे विषाणा । 'कृष्णविषाणया कण्डूयते' इति टाबन्तस्य प्रयोग । अशृङ्गिवचनत्वे तु पिप्पल्यादिपाठाद् विषाणीति ङीषन्त प्रागुक्त (१, पृ २८६) । विश्वप्रकाशे (पृ ५२, श्लो ६४–५)— [3]' विषाणा तु क्रोड-द्विरददष्ट्रयो ' इति ॥ प्रवण—चतुष्पथे । पुरोभागे किंचिदवनताया भूमौ वाच्यलिङ्ग । न तु विषाणशब्दवद् स्वभावत । यथा—प्राचीनप्रवणो देश , उदक्प्रवणा भूमि । इत्यादि । चतुष्पथे तु ना पुलिङ्ग इति त्रिलिङ्गत्वस्या-पवाद । विशेषेण क्लेशराहित्येन प्रवन्ते जना अत्रेति प्रवण । 'प्रुङ [4]गतौ' । प्रकर्षेण वनुते वा । 'प्रनिरन्त शर ' इत्यादिना (८ ४ ५) णत्वम । प्रह्वे यथा—भक्तिप्रवण इति । विद्याप्रवणो धर्मप्रवण इत्यादौ अनुकूलार्थे लक्षणया प्रयोग ॥ सकीर्णो निचिताशुद्धौ । निचितो व्याप्त । यथा—म्लेच्छसकीर्णो देश इति । अशुद्धे यथा—सकीर्णा जातिरिति ॥ इरिण शून्यमूषरम । शून्य [5]मानुष-पश्वादिसचाररहित गृहादिकम । क्षारमृत्तिकाप्राय स्थलमूषर च । इयर्ति सस्या-भावादनिरुद्धो गच्छत्यत्रेति इरिण । 'ऋ गतौ' । 'अर्ते किदिच्च' (उ २ ५५) इति इनन्प्रत्यय , धातोरिरित्यादेशश्च । कित्त्वाद् गुणाभाव । ह्रस्वादिरय शब्द । 'तत्स्वकृतमिरिणोऽभवत्' इति श्रुतौ दर्शनात्[6] । 'ईरिण शून्यमूषरम्' इति दीर्घादौ रभस पठितवान् इति सुभूतिचन्द्र ॥ ५६ ॥

इति णान्तवर्ग

[1] B5, B6 omit अथ　[2] अपि for च B5　[3] 'विषाण तु श्रोडद्विरददन्तयो । पशो शृङ्गे विषाणा तु मेषशृङ्ग्या प्रकीर्तिता' इति मु ग्र　[4] ल्युट् (३ ३ ११७)
[5] मनुष्य॰ B5　[6] 'तृष्यग्नेत्यवेरिणम्' *RV* VIII 4 3

(पा ) अथ लिपु—इभदन्तयो । स्त्रीलिङ्गे गौरादित्वाद् ङीप्[1] । प्रवण—चतुष्पथे । अथ त्रिष्वित्यधिकारात् चतुष्पथवर्जं त्रिलिङ्ग । प्रवणो देश । प्रवणा भार्या । तत्परेत्यर्थ । 'उच्यते प्रवण प्रह्वस्तत्परश्च परायण ' इति हलायुध (अ मा २ १६७) ॥ सकीर्णे—इरिण शून्यमूपरम् । 'इरिण तूपण शून्यमिष्वा-सोऽस्त्रमिपुक्षिपा' इति ह्रस्वादिषु जयकोश । 'ईक्षण दर्शने दृष्टावीरिण शून्य-मूपरम्' इति दीर्घादिषु रभसकोश [2] ॥

अनुक्तम्—

पार्ष्णि पाश्चात्यभागेऽपि वृष्णि पाषण्डकेऽपि च ।
[3]परश्वधेऽपि द्रुघणा निकषेऽपि च रोपण ।

मुद्गर द्रुघण पुलिङ्ग । [4]रोपण त्रिलिङ्ग ॥

ज्यारवेऽपि व्याकरण सुरतेऽपि च धर्षणम् ।
वय सधौ च नारीणा गर्भे [5]दोहृदलक्षणम् ।
वातरायण उन्मत्ते पुरुषे चाप्रयोजने ॥ ५६ ॥

इति णान्तवर्ग

[1] *B3 adds विषाणी*　[2] *जयकोश B3, C1*　[3] *परश्वधे A1*　[4] *रोपणी B3*
[5] दौहृद॰ B3

***देवसूर्यो विवस्वन्तौ सरस्वन्तौ नदार्णवौ ॥ ५७ ॥***
**पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ।**

(वि ) अमरे चापि मार्तण्डे विवस्वानभिधीयत ।

प्रभया विवस्त इति विवस्तजोऽस्यास्तीति वा विवस्वान् । *'वस आच्छादने'* ॥

नदे समुद्रे रसिके सरस्वान् [1]परिकीर्त्यत ॥ 123 ॥

गोवाङनदीभारतीषु स्त्रीरत्ने च सरस्वती ।

सर सर्वत सरणमम्यास्तीति सरस्वान् ॥

वैनतेये विहङ्गे च गरुत्मान् समुदाहृत. ॥ 124 ॥

गरुत पक्षा अस्य सन्तीति गरुत्मान् ॥

शकुन्त. कीटभेदे स्याद् [2]रक्तकाके विहङ्गमे ।

गन्तु शक्नोतीति शकुन्त । 'शक्लृ शक्तौ' ॥ ५७ ॥

[1] परिकथ्यते J2  [2] रक्तशाके K3.

(विव.) देवसूर्यौ विवस्वन्तौ । देवशब्देन देवतामात्रमुच्यते ॥ सरस्वन्तौ नदार्णवौ । सरस्वानित्येव प्रसिद्धो नदविशेष इति केचित् । शोणादिनदमात्रमित्यपरे । अत्र प्रताप:—

'सरस्वती नदीभेदे [1]गोवाग्देवतयोर्गिरि ।
स्त्रीरत्ने धनदे पुंसि सरस्वान् रसिके बुधौ ॥'

इति । नदीभेद: कुरुक्षेत्रे सरस्वत्याख्ययैव प्रसिद्धा । गवि यथा—'इडे रन्तेऽदिते सरस्वति'[2] इति (तै. सं. ७. १. ६. ८) । वाग्देवता शारदा । गिरि वचसि यथा—'व्याजहार सरस्वतीम्' इति । स्त्रीरत्नं श्रेष्ठा स्त्री । रसिक: सहृदय: । पक्षिताक्ष्यौं गरुत्मन्तौ । पक्षिजातीयो य: कश्चित् । ताक्ष्र्यो वैनतेय: ॥ शकुन्तौ भासपक्षिणौ । [3]भासो गृध्रसदृश: पक्षिविशेष: । पक्षी विहगमात्रम् ॥ ५७ ॥

[1] °वाग्देव्या° B5  [2] Tj1, Tj2 add प्रिये प्रेयसि  [3] 'भासो भासि समाख्यातो गोष्ठकुक्कुटगृध्रयो' इति विश्व । मुद्रितग्रन्थे तु 'घोष्ट°' इति दृश्यते (पृ १७४, श्लो २)

(पा) देवसूर्यौ—नदार्णवौ । नदी सरस्वती । 'सरस्वती स्यात् स्त्रीरत्ने नद्या नद्यन्तरे गवि' इति [1]जयकोश । पक्षिताक्ष्र्यौ—भासपक्षिणौ । भासो [2]नाम गोष्ठकुक्कुट । 'निगद्यते गोष्ठकुक्कुटो भास' इति [3]रत्नमाला ॥ ५७ ॥

[1] अजय इति टी स (पृ ६२)  [2] B3, C1 omit नाम  [3] 'गोष्ठकुक्कुटको भास' इति टी स (पृ ६२).

**अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ ॥ ५८ ॥**
**हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ।**

(वि.) उत्पाते धूमकेतुः स्यात् पावकग्रहभेदयोः[1] ॥ 125 ॥

धूमः [2]केतुर्यस्यासौ धूमकेतुः ॥

[3]वृत्तिकाराद्रिशक्रेषु जीमूतो गर्जदम्बुदे ।

[4]जीवो मूयतेऽत्रेति जीमूतः । 'मूङ् बन्धने' ॥

पाणौ केशकलापे स्याद्धस्तस्तारेभहस्तयोः ॥ 126 ॥

[5]हन्यतेऽंशुकादिरनेनेति हस्तः । 'हन हिंसागत्योः' ॥

समीरणे निर्जरेऽपि मरुच्छब्दः प्रकीर्तितः ।

[6]कुपितेनानेन म्रियत इति मरुत् । 'मृङ् प्राणत्यागे' ॥ ५८ ॥

[1] °ग्रहयोरपि K2; K5 omits 4 lines [2] केतौ J2, K6. [3] वृत्तिकारः पोषक. ; मृद्विकार° J2, K2, [4] जीवन J2, K6. [5] K6 omits अंशुकादिः. [6] कुतो नानेन K6

(विव.) अग्न्युत्पातौ धूमकेतू । धूमलिङ्गत्वेन धूमकेतुरग्निः । यस्यां तारकायां धूमसदृशो रश्मिरुत्पद्यते स तारकाविशेषो धूमचिह्नत्वाद् धूमकेतुः । जगदनिष्टकारित्वाद् उत्पातशब्देनोक्तः । 'उपप्लवाय लोकानां धूमकेतुरिवोत्थितः' इति कालिदासः (कु. सं. २. ३२) ॥ जीमूतौ मेघपर्वतौ । जीवनस्य जलस्य मूतो [1]बन्धकर्विशेषो जीमूतः । पृषोदरादित्वेन शेषलोपः (६. ३. १०९) । [2]देवताडे प्रागुक्तः (१, पृ. २५६) ॥ [3]हस्तौ तु पाणिनक्षत्रे । पाणिः पञ्चशाखः । हस्ताख्यं नक्षत्रं च । कचपर्यायोत्तरत्वे तु प्रशंसावचनः (पृ. ४२५) । यथा—केशहस्त इति ॥ मरुतौ पवनामरौ । अमरो देवतामात्रम् । यथा—'इन्द्रो मरुत्वान्' इति (१, पृ. ३०) । [4]स्पृक्कायां तु मरुच्छब्दः स्त्रीलिङ्गः प्रागुक्तः[5] (१, पृ. २६५) ॥ ५८ ॥

[1] बन्धन° Tv, वद्धक° B5 [2] देवतान्तरे B6 [3] हसति । 'हस हसने' । 'हासे मृग्रिण—' (उ ३ ८६) इति तन् इति भा दी (पृ ४६६). [4] 'स्पृक्का देवी लता लघु' इत्योषधिविशेषे [5] म्रियते प्राण्यनेन विनेति मरुत् । 'मृङ प्राणत्यागे' । 'मृग्रोरुति' (उ १ ९९) इति उतिप्रत्यय

(पा) अग्न्युत्पातौ—पवनामरौ । [1]पर्वतोऽपि मरुत् । 'शिखरी त्रिककुन्मरुत्' इति धनजय ॥ ५८ ॥

[1] B3, C1 omit the sentence

**यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ॥ ५९ ॥**
**यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते ।**

(वि) हस्त्यारोहे सारथौ च [1]यन्तृशब्दोऽभिधीयते ॥ 127 ॥

[2]यच्छतीति यन्ता । 'यम उपरमे' ॥

पोषके दानशीले [3]च भर्तृशब्दोऽभिधीयते[4] ।

[5]बिभर्तीति भर्ता । 'डुभृञ् धारणपोषणयो·' ॥

यानपात्रे बालके च पोत. समभिधीयते ॥ 128 ॥

पुनातीति पोत । 'पूञ् पवने' ॥

प्रेतस्तु प्राप्तपञ्चत्वे भवेन्नारकदेहिनि[6] ।

[7]प्रकृष्टमित प्रेत । 'इण् गतौ' ॥ ५९ ॥

[1] यन्ता° J2. [2] यमयति J2 [3] अपि J2 [4] विवक्षित J2 [5] K8 omits derivation [6] नरकदाहिनि J2 [7] प्रकर्षेण K4

(विव.) यन्ता हस्तिपके सूते । हस्तिपको हस्त्यारोह· । सूतः सारथिः ॥ भर्ता धातरि पोष्टरि । बिभर्ति । 'डुभृञ् धारणपोषणयो.' । [1]तृच् (३. १. १३३) । धारके यथा—वज्रस्य भर्ता । पोष्टा पोषकमात्रम् । पत्यौ प्रागुक्तः (पृ ३८२) ॥ यानपात्रे शिशौ पोत. । यानपात्रं [2]वहित्रम् । शेषे—'दशवर्षे गजे पोत.' इति ।

यथा—करिपोत.[3] ॥ प्रेतः प्राण्यन्तरे मृते। प्राण्यन्तर नरकलोकस्थः प्राणिविशेषः प्रागुक्तः (१, पृ. १५३)। अथवा मरणादूर्ध्वमकृतसपिण्डीकरणे [4]प्रेतशब्दः। यथा— 'सपिण्डीकरणादूर्ध्वं प्रेतत्व विनिवर्तते' इति। मृतमात्रेऽपि यथा— प्रेतसस्कार इति ॥ ५९ ॥

[1] तृचि Gm3, Tv [2] वहित्रे Gm3 [3] पुनाति। 'पूञ् पवने'। 'हसिमृग्रिण्...' (उ ३ ८६) इति तन् [4] प्रकृष्टा दशामित। 'इण् गतौ'। क्त ॥

(पा) यन्ता—प्राण्यन्तरे मृते ॥ ५९ ॥

**ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः ॥ ६० ॥**
**स्थपतिः कारुभेदेऽपि भूभृद् भूमिधरे नृपे।**

(वि) उत्पाते स्याद् ग्रहे केतु कान्तौ लक्ष्मणि केतने ॥ 129 ॥

[1]कित्यते ज्ञायत इति केतु। 'कित ज्ञाने' ॥

[2]पार्थिवे तनये चैव सुतशब्द प्रकीर्तित।

सूयत इति सुत। [3]'षु प्रसवैश्वर्ययो' ॥

स्थपतिर्यष्टृभेदे स्यात् सूतकञ्चुकितक्षसु ॥ 130 ॥

[4]यष्टा बृहस्पतिसवनयाजी। स्थापयतीति स्थपति। तिष्ठत्यस्मिन्निति स्थ[5]। स्थश्चासौ पतिश्चेति वा स्थपति ॥

पर्वते पार्थिवे चापि भूभृत् समभिधीयते।

भुव बिभर्तीति भूभृत् ॥ ६० ॥

[1] केत्यते J2, K5, K6 omits ज्ञायते [2] आत्मजे पार्थिवे J2 [3] 'षूङ् प्राणिप्रसवे' J2 [4] बृहस्पतियागयाजी K5, बृहस्पतियज्वा J2, °सवयाजी K2 [5] K2 adds 'ष्ठा गतिनिवृत्तौ'

(विव) ग्रहभेदे ध्वजे केतु। नवमो ग्रहविशेष केतुसञ्ज्ञक। ध्वजो लिङ्गम्[1]। धूमकेतुरग्नि। कित्यते ज्ञायतेऽनेनेति[2] केतुः। 'कित ज्ञाने'[3]। पता-

कायामपि। यथा—केतुदण्डः इति ॥ पार्थिवे तनये सुतः। सौति सर्वस्येश्वरो भवतीति सुतः। 'षु प्रसवैश्वर्ययोः'। क्तः। [4]अभिषुतोऽपि। यथा—सुतः सोम इति ॥ स्थपतिः कारुभेदेऽपि। कारुभेदः शिल्पिविशेषः तक्षा। अपिशब्देन 'स गीष्पतीष्टचा स्थपतिः' इति प्रागुक्तः (१, पृ. ४५५)। तिष्ठत्यत्र व्यापार इति स्थः। 'घञर्थे कविधानम्'[5] (वा. ३. ३. ५८) इति कः। स्थश्चासौ पतिश्च स्थपतिः। कञ्चुकिन्यपि। अन्त.पुररक्षणेऽधिकृतः कञ्चुकी॥ भूभृद् भूमिधरे नृपे। भूमिधरः पर्वतः। [6]व्यक्तयोगश्च ॥ ६० ॥

[1] चिह्नम् Tj1, Tj2 [2] अनेनापि B5, B6 [3] चाय्यते अनेन वा। 'चायृ पूजानिशामनयो'। 'चाय कि' (उ १. ७६) इति तु इति भा दी (पृ ४६६).
[4] 'षुञ् अभिषवे' इति धातु [5] Gm3, Tv add 'स्थास्नापाव्यधिहनियुध्यर्थम्'.
[6] भुव बिभर्तीति भूभृत्। 'डुभृञ् धारणपोषणयो'। क्विप् (३. २ ७६)। 'ह्रस्वस्य पिति कृति तुक्' इति तुक्

(पा) ग्रहभेदे ध्वजे केतु। ग्रहभेदे केषाचित् तस्यैव बहुवचनमिष्टम्। 'केतवो ब्रह्मपुत्रा स्यु गहुका शिखिनश्च ते'॥ पार्थिवे—कारुभेदेऽपि। 'स्थपतिः शिल्पिभेदेऽपि स्थपति कञ्चुकिन्यपि' इति विश्व. (पृ ६८, श्लो. १५४)॥ भूभृद् भूमिधरे नृपे ॥ ६० ॥

**मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्रीकुसुमेऽपि च ॥ ६१ ॥**
**विष्णावप्यजिताव्यक्तौ सूतस्त्वष्टरि सारथौ।**

(वि) ब्राह्मणात् क्षत्रियाजाते प्रधाने क्षत्रियेऽपि [1]च ॥ 131 ॥
मूर्धाभिषिक्तो राजन्ये सारथावपि वर्तते[2]।

[3]मूर्धनि अभिषिक्तो[4] मूर्धाभिषिक्त। 'षिच क्षरणे'॥

ऋतुर्धीरे मासि कालभेदे स्त्रीरजसि स्मृत.॥ 132 ॥

इयर्तीति ऋतु। 'ऋ गतौ'॥

अजितो वल्लभेऽपि स्यादपराजितबुद्धयो.।

न जितोऽजित.[5]।

प्रधाने शंकरे विष्णौ महदादिकमूर्खयोः ।। 133 ।।
परमात्मन्यस्फुटे स्यादव्यक्तस्त्वभिधेयवत्[6] ।

न व्यक्तोऽव्यक्तः ।।

जाते जातौ[7] सम्यगूते तक्षिण[8] सारथिनुन्नयोः ।। 134 ।।
ब्राह्मण्या क्षत्रियाज्जाते सूतो वन्दिनि पारदे ।

पारदः पादरसः। सूयत इति सूतः ।। ६१ ।।

[1] अपि वा J2.　[2] कथ्यते J2, K5.　[3] मूर्ध्नि J2.　[4] अभिषिच्यते J2, K2, K5　[5] K3 adds 'जि अभिभवे'.　[6] शात्रवेऽपि च J2, K5.　[7] जाते K6. [8] तीक्ष्णे K3

(विव.) मूर्धाभिषिक्तो भूपेऽपि। पट्टाभिषिक्ते राजनि क्षत्रियमात्रे प्रागुक्तः (पृ. ४८४)। मुख्यामात्येऽपि मूर्धाभिषिक्त[1] उच्यते। मूर्धावसिक्त इति पाठे ब्राह्मणेन क्षत्रियस्त्रियामुत्पादितः पुत्रोऽपिशब्दार्थः ।। ऋतुः स्त्रीकुसुमेऽपि च। इयर्ति नियतकालं प्राप्नोतीति ऋतुः। 'ऋ गतौ'[2]। स्त्रीणां प्रतिमासं जायमानं रजःपुष्पं स्त्रीकुसुमम्। अपिशब्दाद् वसन्तग्रीष्मादिरिति[3] ।। विष्णावप्यजिताव्यक्तौ। न जीयते केनापि नाभिभूयत इत्यजितो विष्णुः। अपिशब्दाद् अपराजितश्च। न व्यज्यत इत्यव्यक्तो[4] विष्णुः।

'अव्यक्तः शंकरे विष्णावव्यक्तं महदादिके।
आत्मन्यपि स्यादव्यक्तमस्फुटे त्वभिधेयवत् ।।'

इति [5]शाश्वतः। 'त्रिष्वस्फुटे स्यादव्यक्तं क्लीबं तु परमात्मनि' इति रुद्रश्च[6]। सूतस्त्वष्टरि सारथौ। सूते रथादिकं जनयतीति सूतः तक्षा। 'षूङ् प्राणिप्रसवे'। सुवति प्रेरयत्यश्वादिकमिति सूतः सारथिः। शेषे—'सूतो रसे जातिभेदे बन्दिसुष्टुतयोरपि' इति। रसः पारदः। जातिभेदस्तु—'ब्राह्मण्यां क्षत्रियात् सूतः' इति (या. स्मृ. १. ४. ९३)। सुष्ठु ऊयते शब्दं करोतीति सूतो बन्दी। सुष्ठु ऊतमुतं वेति विग्रहे 'ऊयी तन्तुसंताने' 'वेञ् तन्तुसंताने' इति धातुद्वयाद् निष्ठायां सूतशब्दो विशेष्यनिघ्नः ।। ६१ ।।

[1] अभिपूर्वात् 'षिच क्षरणे' इति धातो क्त [2] 'अर्तेश्च तु' (उ १ ७४)
[3] Tv adds प्रागुक्त (पृ ८१, ८४) [4] 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिपु'। क्त
[5] 'अव्यक्तशब्द जानीयादस्फुटे परमात्मनि' इत्येव मु ग्र (पृ ३३, श्लो ३८३), विश्वप्रकाशे तु श्लोकोऽस्य दृश्यते (पृ ६४–५, श्लो १०) [6] 'त्रिपु स्यादस्फुटोऽव्यक्त क्लीब तु परमात्मनि' इति टी स (पृ ६४)

(पा) मूर्धाभिषिक्तो भूपेऽपि। 'मूर्धाभिषिक्तो भूपाले प्रधाने क्षत्रियेऽपि च' इति विश्व (पृ ७५, श्लो २२८)॥ ऋतु—अजिताव्यक्तौ। अजितशब्दोऽनिर्जितेऽपि स्यात्। अव्यक्तशब्दोऽस्फुटेऽपि स्यात्॥ सूतस्त्वष्टरि सारथौ। 'क्षत्रियाद् ब्राह्मणीजाते[1] सूत पारदवन्दिनो' इति विश्व (पृ. ५७, श्लो. ११)॥ ६१॥

[1] ब्राह्मणीजेऽपि इति मु ग्र

**व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभे शास्त्रनिदर्शने॥ ६२॥**
**क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे।**

(वि) मनीषिणि स्फुटे चापि व्यक्तशब्दोऽभिधीयते॥ 135॥

व्यज्यत इति व्यक्त। 'अञ्जू [1]व्यक्तिम्रक्षणकान्तिगतिपु'॥

दृष्टान्तो वर्तते शास्त्रे शास्त्रोदाहरणेऽपि च।

दृष्टोऽन्त निश्चयोऽत्रेति दृष्टान्त॥

क्षत्रियाशूद्रजे [2]द्वा स्थे भुजिष्यातनये तथा॥ 136॥
क्षत्ता स्याद् देवरन्यायप्रजासृजि च सारथौ।

[3]क्षदतीति क्षत्ता। 'क्षदि गतिहिंसनयो'॥ ६२॥

[1] °म्नदण° for °म्रक्षण° $K_2$, $K_3$ [2] द्वास्थे $K_2$ [3] क्षदने $J_2$

(विव.) व्यक्त· प्राज्ञेऽपि। प्राज्ञः प्रतिभावान्[1]। स हि सर्वत्र प्रसिद्धत्वाद् व्यक्तः। [2]स्पष्टार्थे प्रागुक्तः (पृ. ११२)। 'व्यक्तः स्फुटमनीषिणोः' इति विश्वप्रकाशः (पृ. ५६, श्लो. ३५)॥ दृष्टान्तावुभे शास्त्रनिदर्शने। शास्त्रं व्याकरणादि।

निदर्शनं वादिनोः संप्रतिपत्तिस्थानम्[3]। यथा—धूमवत्त्वेनाग्निमत्त्वे साधने महानसादिकम्। दृष्टः संप्रतिपन्नोऽन्तो निश्चयोऽत्रेति दृष्टान्तः॥ क्षत्ता स्यात्—शूद्रजे। द्वाःस्थे द्वारपालके। वैश्यायामपि शूद्रजः इति केषांचित् पाठो भ्रान्तिमूलः। तथा च याज्ञवल्क्यः—'क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च' इति (या. स्मृ. १. ४. ६४)। 'क्षत्तार्याशूद्रयोः सुतः' इति शूद्रवर्गस्योक्तस्यापि (पृ. ६२१) यथा न विरोधः तथा तत्रैव व्याख्यातम्। क्षदतीति क्षत्ता। 'क्षदिर् गतिहिंसनयोः'[4]॥ ६२॥

[1] प्रतिभानवान् Tv　[2] B₆ adds प्रव्यक्त.　[3] उदाहरणमित्यर्थ.　[4] 'क्षदिः सौत्रो धातु शक्लीकरणे भक्षणे च' इति सि कौ (पृ. ५११)। 'तृन्तृचौ शसिक्षदादिभ्यः सज्ञाया चानिटौ' (उ २. ५३) इति तृच्.

(पा) व्यक्त प्राज्ञेऽपि। स्फुटेऽपि स्यात्॥ दृष्टान्त—शूद्रजे। [1]आर्याशूद्रजे पर्यायपठित (पृ ६२१[2])॥ ६२॥

[1] अर्या° B3, C1.　[2] 'क्षत्तार्याशूद्रयो सुत '.

**वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः॥ ६३॥**
**आनर्तः समरे नृत्यस्थाननीवृद्विशेषयोः।**

(वि) कार्त्स्न्ये विशेषवार्ताया भावे प्रकरणे तथा॥ 137॥

वृत्तान्त स्यादवसरे प्रवृत्त्येकान्तकर्मसु।

वृत्तोऽन्तो यस्येति वृत्तान्त[1]॥

आनर्तो देशभेदे स्याद् नृत्तस्थाने रणे जले[2]॥ 138॥

आनृत्यन्त्यत्रेत्यानर्त। 'नृती गात्रविक्षेपे'॥ ६३॥

[1] वृत्तस्यान्त J2　[2] जने रणे इति वि प्र (पृ ६२, श्लो ७८)

(विव.) वृत्तान्त—वार्तयोः। [1]वृत्तो निवृत्तोऽन्तः स्वरूपमत्रेति वृत्तान्तः। प्रकरणं प्रस्ताव इत्यर्थः। निष्पन्नः सदिग्धार्थविषयो निश्चयोऽनेनेति वृत्तान्तः[2]। प्रकारो विशेषो व्यावर्तकधर्म इति यावत्। निर्वृत्तोऽन्तो विच्छेदोऽत्रेति वृत्तान्तः

कृत्स्नम् । अलंकारवृत्तान्तो भोजराजपर्यवसित इति; साकल्यमित्यर्थः । वार्ता जनश्रुतिः । आख्यायिका च ।। आनर्तः—विशेषयोः । नृत्तस्थानं [3]रङ्गशालामण्डपादि । नीवृद्विशेषो देशभेदः पश्चिमाम्बुधिसमीपगतः[4] । समन्ताद् नृत्यन्त्यत्र यथार्हं कबन्धा नर्तका वा जना वात्रेत्यानर्तः । 'नृती [5]गात्रविनामे' । अधिकरणे घञ्[6] (३. ३. १२१) । आनर्तदेशवासी जनोऽप्यानर्तः ।। ६३ ।।

[1] B5 omits वृत्त. [2] Gm3 omits derivation [3] रङ्गशील° B6. [4] सौराष्ट्रः (Apte's Dict. p. 334). [5] °विक्षेपे Tv. [6] 'हलश्च'.

(पा.) वृत्तान्तः—वार्तयोः । प्रकरणं प्रक्रिया । प्रकारो विशेषः । 'वृत्तान्तः प्रक्रियाया स्यात्[1] कार्त्स्न्ये वार्ताविशेषयोः' इति रुद्रः ।। आनर्तः—विशेषयोः । नृत्तस्थानं नाट्यशाला ।। ६३ ।।

[1] च for स्यात् B3, C1.

**कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु ।। ६४ ।।**
**श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः ।**
**इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः ।। ६५ ।।**

(वि.) परेतनायके चापि शास्त्रसिद्धान्तयोरपि ।
[1]अक्षेमकर्मणि क्रूरे[2] कृतान्तः स्याच्छुभाशुभे ।। 139 ।।

कृतोऽन्तोऽनेनेति कृतान्तः ।।

शब्दादौ हरितालादौ [3]वातश्लेष्मादिकेऽपि च ।
*मनःशिलाहिरण्यादौ श्रोत्राद्ये भूतपञ्चके ।। 140 ।।*
[4]भूवादिशब्दयोनौ स्याद् धातु [5]रक्तरसादिके ।

धत्ते [6]मिथो [7]व्यावर्तनं रूपमिति धातुः । [8]'डुधाञ् धारणपोषणयोः' ।। ६४–५ ।।

[1] अन्ते कर्मणि J2. [2] क्रूरेऽपि J2. [3] °श्लेष्मातके K3, K6. [4] भूतादौ K6. [5] °वसादिके K5 [6] J2 omits मिथ. [7] व्यावर्तक J2 [8] K3, K6 omit.

(विव.) कृतान्तो—कर्मसु। यमो वैवस्वतः। कपिलकणादादिभिराचार्यैः स्वकृतग्रन्थेष्वभ्युपगतार्थः सिद्धान्तः। दैवं प्राग्भवीयं शुभाशुभकर्म। सांप्रतिकं तु प्राणिहिंसनादिकमकुशलकर्म। अलसमूर्खादिभिः कृतं कर्म अकुशलकर्मेति केचित्। कृतस्यान्तो नाशो निश्चयः स्वरूपं फलं वा यथायथमनेनेति कृतान्तः ॥ श्लेष्मादि—धातवः। श्लेष्मादीत्यनेन वातपित्तश्लेष्मणां ग्रहणम्। अशितपीताहारस्य सारो विकारो रसः। आदिशब्देन 'वसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः' इति वैद्यकोक्तानां ग्रहणम् (वाग्भट १.८)। रसशब्दस्यानेकार्थत्वात् तन्मात्रग्रहणे द्रवद्रव्याद्यर्थान्तरप्रतिशङ्कावारणाय[1] रसरक्तयोर्द्वयोरुपादानं कृतम्। महाभूतानि पृथिव्यादीनि पञ्च। तद्गुणाः पृथिव्यादिगुणा गन्धरसरूपस्पर्शशब्दाः। इन्द्रियाणि चक्षुःश्रोत्रादीनि। अश्मविकृतिर्गैरिकमनःशिलादिः। शब्दयोनिरिति जात्यभिप्रायमेकवचनम्। तेन धातुगणपठिताः क्रियावचना भूवादय उक्ताः। एतानि श्लेष्मादीनि धातुशब्दवाच्यानि। दधाति शरीरादिकमिति धातुः। 'डुधाञ् धारणपोषणयोः'। 'सितनिगमि...' इत्यादिना (उ. १. ७२) तुन्प्रत्ययः।

'सुवर्णं रजतं ताम्रमारकूटं तथैव च।
लोहं त्रपु तथा सीसं धातवः सप्त कीर्तिताः ॥'

इत्युक्ता धातवः चशब्देन सूचिताः ॥ ६४–५ ॥

[1] °शङ्का वारयितुं B5, B6, Gm3

(पा) कृतान्तो—कर्मसु। सिद्धान्त शास्त्रभेद.। दैव शुभाशुभप्रदातृ। अकुशलकर्म पापव्यापार ॥ श्लेष्मादि—धातव ॥ [1]महाभूतानि, तद्गुणा शब्दस्पर्शादय.। अश्मविकृति. [2]हेममन शिलादि । शब्दयोनिर्भूवादि ॥ ६४–५ ॥

[1] *C1 adds* पृथिव्यादीनि [2] *B3 reads* लोह° *for* हेम°

**कक्षान्तरेऽपि शुद्धान्तो नृपस्यासर्वगोचरे।**
**कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः ॥ ६६ ॥**

(वि) सर्वागम्यागारमध्ये शुद्धान्तोऽन्तःपुरो भवेत् ॥ 141 ॥

शुद्धो रक्षितोऽन्तोऽस्येति शुद्धान्त. ॥

प्रभुमन्त्रादिके [1]कास्वा सामर्थ्ये शक्तिरुच्यते ।

कासू [2]सर्वलाख्यमायुधम् । शक्यतेऽनया जेतुमिति शक्ति. । 'शक्ल शक्तौ' ॥

मूर्तिर्बन्धे मोहमित्यो [3] काठिन्योच्छ्रायवर्ष्मसु ॥ 142 ॥

[4]मूर्च्छयत इति मूर्ति । 'मुर्च्छा मोहसमुच्छ्राययो '। 'मुर्वी वन्धने' इति वा धातु ॥ ६६ ॥

[1] काण्डे $K_5$ [2] सबलाख्य° $K_6$, शर्वलाख्य° $J_2$ [3] लोहमिते $J_2$; मिति परिमितिरिति शेषकार [4] मूर्छति $K_6$.

(विव.) [1]कक्ष्यान्तरे—गोचरे। सप्तम्यन्तपदद्वयं समानाधिकरणं रहस्यभूते राजसंबन्धिनि प्रकोष्ठ इत्यर्थः। तथा च अजयः—'शुद्धान्तोऽन्त.पुरे गुह्यकक्ष्याभेदे च भूपतेः' इति। अन्तःपुरे प्रागुक्तः (१, पृ. २०२)। शुद्धान्त.करणे च ॥ कासूसामर्थ्ययोः शक्तिः। कासूः [2]सर्वलाख्य आयुधविशेषः। सामर्थ्यं नाम प्रभुत्वमन्त्रोत्साहजाः शास्त्रप्रसिद्धाः तिस्रः शक्तयः[3]। यथा—'षड्गुणाः शक्तयस्तिस्रः' इति माघः (शिशु. २. २६)। अथवा प्रतिवस्तुगतः कश्चिदतीन्द्रियो धर्मविशेषः सामर्थ्यम्। यथा—अग्नेर्दाहकत्वशक्तिरिति। शब्दस्य वाचकत्वं शक्तिरित्यादि। 'शक्ल शक्तौ'। करणे भावे क्तिन् (३. ३. ९४) ॥ मूर्तिः काठिन्यकाययोः। काठिन्यं दृढत्वम्। शेषे—'उच्छ्रायमोहबन्धेषु मूर्तिः परिमितावपि' इति। 'मुर्च्छा मोहसमुच्छ्राययोः'। 'मुर्वी बन्धने'। आभ्या क्तिन्[4]। परिच्छेदः परिमाण च ॥ ६६ ॥

[1] कक्षान्तरे $B_6$ [2] सबलाख्य° $Gm_3$, Tv. [3] शक्तयस्तिस्र (पृ ४६४)
[4] 'राल्लोप ' (६ ४ २१) इति छकारवकारयोर्लोप , 'उपधाया च '.

(पा ) कक्षान्तरे—गोचरे । अन्त पुरे ॥ कासूसामर्थ्ययोः शक्ति' । कासूरायुधविशेष. । 'तोमरेऽस्त्री [1]लोहहालदण्डे कासूश्च सर्वला' इति वैजयन्ती (पृ ११७, श्लो १६६) ॥ मूर्ति काठिन्यकाययो. ॥ ६६ ॥

[1] लोहहुलदण्डे इति मु ग्र [ हुल आयुधविशेष ]

विस्तारवल्ल्योर्व्रततिर्वसती रात्रिवेश्मनोः ।
क्षयार्चयोरपचितिः सातिर्दानावसानयोः ॥ ६७ ॥

(वि.)　लतायामपि विस्तारे व्रततिः परिकीर्त्यते ।

[1]प्रतनोतीति व्रततिः । 'तनु विस्तारे' । पकारस्य वकारः ॥

अवस्थाने मन्दिरे च यामिन्या वसतिर्भवेत् ॥ 143 ॥

वसन्त्यत्रेति वसतिः । 'वस निवासे' ॥

पूजाया स्यादपचितिः क्षये त्यागे च निष्कृतौ ।

[2]अपचायनमपचितिः । 'चायृ [3]पूजानिशामनयोः' ॥

अवसाने क्षये चापि सातिर्दानेऽपि कथ्यते ॥ 144 ॥

[4]स्यतीति सातिः । 'षोऽन्तकर्मणि' ॥ ६७ ॥

[1] प्रतन्यते J2; प्रतनुते K6　[2] अपचायत इति K6.　[3] पूजायाम् K2, K3.
[4] सनोति, 'षणु दाने' K2; 'क्षै क्षये' क्षाति. J2, K5.

(विव.) विस्तारवल्ल्योः प्रततिः । प्रकृष्टा ततिः प्रततिरिति विग्रहे 'विस्तारार्थत्वम् । बहुव्रीहिसमासेऽपि लतार्थत्वम् । 'विस्तारे प्रततिवल्ल्याम्' इति पवर्गप्रथमादिषु रभसः । केचित्तु व्रततिरिति दन्त्योष्ठ्यमन्तःस्थमाहुः । तथा च व्रतव्रातव्रतत्याद्यर्थं[1] व्रतिधातुरुन्नेय इति श्रीभोजराजः ॥ वसती रात्रिवेश्मनोः । वसन्त्यस्मिन्निति वसतिः । 'वस निवासे' । 'वहिवस्यर्तिभ्यश्चित्' (उ. ४. ६०) इत्यतिप्रत्ययः । शेषे—'वसतिः स्यादवस्थाने' इति । यथा—'वने वसतिरस्माकम्' इति ॥ क्षयार्चयोरपचितिः । क्षयः शरीरादेरवयवापगमः । 'चिञ् चयने' इत्यतः क्तिन्प्रत्यये (३. ३. ९४) अपचितिः । उपसर्गवशादर्थान्तरे वृत्तिः । अर्चा पूजा । तत्र तु 'चायृ पूजानिशामनयोः' इति धातोः प्राक् व्युत्पादिता (पृ. ४७०)॥ सातिर्दानावसानयोः । 'षणु दाने' इति धातोर्भावे क्तिनि 'जनसन...' इत्यादिना (६. ४. ४२) नकारस्याकारादेशे सातिर्दानम् । 'षोऽन्तकर्मणि' इत्यस्माद् 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३. ३. ९७) इति निपातनात्[2] सातिरव-

सानम् । [3]विराम इत्यर्थः । [4]'क्षै क्षये' इति धातोः 'आदेच उपदेशेऽशिति' (६. १. ४५) इत्यात्वे क्षातिशब्दः (३. ३. ६४) क्षये वर्तते ॥ ६७ ॥

[1] °व्रतत्यादिसिद्धयर्थमिति स्वामी (पृ २८५). [2] Tv adds साधु [3] यम इत्यर्थ Tj1, Tj2 [4] B6 adds क्षातिरिति पाठे

(पा) विस्तार—अवसानयो । वेश्मशब्देन जिनवेश्मनोऽपि ग्रहणम् । 'वसतिस्तु निशि स्थित्या जैनानामाश्रमे[1] गृहे' इति वैजयन्ती (पृ २४८, श्लो २३) ॥ ६७ ॥

[1] आश्रये A1, C1

**आर्तिः पीडाधनुष्कोटचोर्जातिः सामान्यजन्मनोः ।**
**प्रचारस्यन्दयो[1] रीतिरीतिर्डिम्बप्रवासयोः ॥ ६८ ॥**

(वि) धनुष्कोटौ च पीडायामार्तिशब्दोऽभिधीयते[2] ।

अर्द्यतेऽनयेत्यार्ति । 'अर्द तर्द पीडायाम्'[3] ॥

[4]चुल्लीकम्पिल्लगोत्रेषु छन्द सामान्यजन्मसु ॥ 145 ॥
मालतीजातिफलयोर्जातिर्धात्र्यामलक्तौ ।

धात्री आमलकी । जायन्ते नानारूपाण्यत्रेति जाति । 'जनी प्रादुर्भावे' ॥

आरकूटे प्रचारे च मर्यादाव्यवहारयो.[5] ॥ 146 ॥
स्यन्दे च लोहकिट्टे च रीतिशब्दोऽभिधीयते ।

रीयत इति रीति । 'रि गतौ' 'रीङ स्रवणे' वा ॥

ईति. स्यादतिवृष्टयादौ डिम्बे[6] प्रवसनेऽपि च ॥ 147 ॥

ईयत इतीति । 'ईङ गतौ' ॥ ६८ ॥

[1] °स्यन्दयोरित्यत्र 'री रि' इति टेप्पनीर.. [2] अर्तिरिति पाठान्तरम्. [3] हिंसायाम् J2, K4; धू धा (पृ ३८२, ४४२) [4] कम्पिल्ल वृक्षविशेष.. [5] °विषयान्ययो (?) K8 [6] डिम्ब उपद्रव.

(विव.) आर्तिः पीडाधनुष्कोटयोः। 'अर्द गतौ याचने च' इत्यत्र *याचने चेति एके पेठुरित्युक्तं धातुपारायणे। तस्माद् भाववचनाद् आर्तिः पीडा (३. ३. ६४)। अर्द्यतेऽनयेति व्युत्पत्त्या धनुःकोटिरर्थः। मौर्वीसंधानप्रदेश इति यावत्। ह्रस्वादिरयं शब्द इति [1]सुभूतिचन्द्रादयः। 'शिरोऽर्ति नाशयत्याशु रसोऽयं मुचुकुन्दकः' इत्यादिप्रयोगाश्च तैरेव दर्शिताः। अपरे तु धातोराङ्पूर्वत्व-माश्रित्य दीर्घादिमाहुः। तथा च—'यस्य सायं दुग्धं हविरार्तिमार्च्छति' इति प्रयोगः॥ जातिः सामान्यजन्मनोः। भिन्नेष्वभिन्नाभिधानप्रत्ययहेतुद्रव्यादिनिष्ठो धर्मः सामान्यम् इति प्रागभिहितम् (१. ४. ३१)। उत्पत्तिः जन्म। जनेर्धातोः क्रमेण भावे करणे च क्तिन्प्रत्यये 'जनसनखनाम्...' इत्यात्वे (६. ४. ४२) जातिः। शेषे—'जातिर्धात्र्यां च [2]कम्पिल्ले छन्दोऽलंकारभेदयोः' इति। धात्री आमलकी। छन्दोभेदो वृत्तविशेषेषु छन्दोविचित्यां प्रसिद्धः। [3]अलंकारविशेषश्च। मालत्यां तु प्रागुक्ता (१, पृ. २५८)॥ प्रचारस्यन्दयो रीतिः। प्रचारो व्यवहारः। यथा—'सतां रीतिमनुस्मरन्' इति। 'प्रकारस्यन्दयोः' इति केचित् पठन्ति। तत्र तु प्रकारः स्वभाव इत्यर्थः। यथा—चापलं योषितां रीतिरिति। नूतनघटादावति-सूक्ष्मजलकणानां बहिर्निःसरणं स्यन्दः। [4]'रि गतौ' इत्यस्मात् क्तिनि रीतिः। आरकूटे प्रागुक्तः (पृ. ६११)। [5]'प्रवाहस्यन्दयो रीतिर्लोहकिट्टारकूटयोः' इति रुद्रश्च॥ ईतिर्डिम्बप्रवासयोः। डयन्ते पलायन्तेऽनेनेति डिम्बः उपद्रवः। 'डीङ विहायसा गतौ'। डिम्बप्रत्ययः। स चोपद्रवो बहुविधः।

'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः शुकाः।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥'

इत्युक्तः[6]। स्वग्रामादन्यत्र वासः प्रवासः। ईयन्ते देशान्तरं गच्छन्त्यनयेति ईतिः। 'ईङ गतौ'। दिवादिः॥ ६८॥

[1] Tv adds सुबोधिनीकार° [2] मालत्याम् B6. [3] संस्कृतप्राकृतयो समा जाति (Apte' Dict p. 733) [4] 'री गतिरेषणयो' B6. [5] प्रचारे स्यन्दे च इति विश्व (भा दी पृ ४७१), प्रसारे इति मु ग्र (पृ ६१, श्लो ५५) [6] कामन्दक इति मल्लिनाथ (रघु १ ६३) * पीडने (?).

(पा) [1]अर्ति पीडाधनुष्कोटयो.। पीडाया दीर्घादिश्च स्यात्[2]। अर्ते-राङ्पूर्वत्वात् क्तिनि प्रादीनाम् [3]'ऋति धातौ' (६. १. ९१) इत्यात्वमिति

पिद्भिदादिसूत्रे (३ ३. १०४) जिनेन्द्र[4] ।। जाति सामान्यजन्मनो । सामान्य गोत्वादि । प्रचारस्यन्दयो रीति । प्रचार. कुलाचार ।। ईतिर्डिम्बप्रवासयोः । डिम्ब अतिवृष्ट्यादि ।। ६८ ।।

[1] आर्ति A1 [2] B3 omits स्यात् [3] 'उपसर्गादृति धातौ'. [4] 'अर्त्तेराङ्पूर्वस्य क्तिन्। "उपसर्गादृति धातौ" इत्येकादेश । रपरत्वम्' इति मुद्रितपञ्जिकायाम् (पृ ७१४)

**उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ।**
**वीणाभेदेऽपि महती भूतिर्भस्मनि संपदि ।। ६६ ।।**

(वि) महोदये व्यधिगमे प्राप्तिशब्दोऽभिधीयते[1] ।

प्राप्यत इति प्राप्ति । 'आप्लृ व्याप्तौ' ।।

अग्नीना त्रितये त्रेता युगेऽपि परिकथ्यते ।। 148 ।।

त्रीन् धर्मपादानग्नीन् इता प्राप्ता त्रेता ।।

विशाले च त्रिलिङ्ग्या स्याद्[2] महद् राज्य तु न द्वयो. ।
शततन्त्रीविपञ्च्या तु महती परिकीर्तिता ।। 149 ।।

महत इति महती । 'महि [3]वृहि वृद्धौ' ।।

प्राप्तौ [4]*मातङ्गशृङ्गारे सत्तायामवकल्कने ।*
सपत्तिभस्मजननेष्वपि भूतिरदाहृता ।। 150 ।।

*भवतीति भूति.* । *'भू सत्तायाम्'*[5] । *'भू अवकल्कने'*[6] ।। ६६ ।।

[1] विवक्षित J2, K2, K4 [2] च for स्यात् K6 [3] J2 omits वृहि. [4] गजालङ्करणे [5] J2, K2, K4 add 'भू प्राप्तौ'. [6] 'भुवोऽवकल्कने' K5, K6

(विव.) उदयेऽधिगमे प्राप्तिः। उदयो लाभः। अधिगमः संबन्धः। प्रपूर्वादाप्नोतेः क्तिनि प्राप्तिः (पा. ३. ३. ६४)[1]। शक्तिशब्दाद्या (श्लो. ६६) एतदन्ता एकादश[2] प्रत्ययवशेन स्त्रीलिङ्गाः।। त्रेता त्वग्नित्रये युगे। अग्नित्रयं

गार्हपत्यादिकम्। त्रेता [3]साध्ययज्ञानुष्ठानयोगाद् युगमपि त्रेताशब्देनोच्यते। तदुक्तम्—'ध्यायन् कृते यजन् यज्ञैस्त्रेतायाम्' इत्यादि। अथवा—त्रीन् धर्मस्य पादान् इता प्राप्ता त्रेता। तदुक्तम्[4]—'त्रेतायुगे समायाते[5] धर्मः पादोनतां गतः' इति। पृषोदरादित्वाद् वर्णव्यत्ययः॥ वीणाभेदेऽपि महती। नारदसंबन्धिनी वीणेत्यर्थः। तदुक्तं स्वरप्रकरणे—

'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती।
महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी॥'

इति[6]। मह्यत इति महती। 'मह पूजायाम्'। 'वर्तमाने पृषन्महद्बृहत्...' इत्यादिना (उ. २. ८४) शतृवद्भावे ङीप्[7]। अपिशब्दाद् महत्त्वगुणयुक्ता शालामालादिका या काचित्॥ *भूतिर्भस्मनि संपदि। भस्म भसितम्। भवत्यनया श्रीमा*निति भूतिः। [8]भवतादिति वा। 'क्तिच्क्तौ च संज्ञायाम्' (३. ३. १७४) इति कर्तरि क्तिच्। 'भूतिर्मातङ्गशृङ्गारे सत्तायामपि जन्मनि' इति[9]। 'भू सत्तायाम्' 'भू प्राप्तौ' 'भुवोऽवकल्कने' यथायोगं धातवः। ऐश्वर्ये प्रागुक्ता (१, पृ. २७)॥ ६९॥

[1]'आबादयः प्रयोगतोऽनुसर्तव्याः' (काशिका पृ २२१), 'क्तिन्नाबादिभ्य.' इति भा. दी (पृ ४७१). [2]एकादशशब्दाना लिङ्गसहोक्ति B5, *Gm3* [3]साध्यज्ञानयागात् (?) Tj1, Tj2. [4]पाद्मे क्रियायोगसार इति श. द्रु. (पृ. ६६४). [5]तु सप्राप्ते B5, Gm3, Tv. [6]श्लोकोऽय वैजयन्त्या दृश्यते (पृ १४५, श्लो ११६). [7]'उगितश्च' (४. १. ६). [8]भवतीति Gm1, Gm2. [9]'भूतिर्भस्मनि सपदि। मासपाकविशेषे च जनने गजमण्डने' इति अमरशेष (*Ak.* BSS 1886, p. 303).

(पा.) उदयेऽधिगमे प्राप्ति। अधिगमो लाभः। त्रेता—महती। 'महद् राज्ये विशाले च महती वल्लकीभिदि' इति विश्वः (पृ. ६७, श्लो. १३८)॥ भूतिर्भस्मनि सपदि। [1]*मातङ्गशृङ्गारेऽपि स्यात्। 'भूतिर्मातङ्गशृङ्गारे जातौ* भस्मनि सपदि' इति विश्वः (पृ. ६१, श्लो. ५७)॥ ६९॥

[1]गजशृङ्गारे B3, C1; शृङ्गारोऽलालकरणम्.

**नदीनगर्योर्नागानां भोगवत्यथ संगरे।**
**सङ्गे सभायां समितिः क्षयवासावपि क्षितिः॥ ७०॥**

(वि) नदीपुर्योर्भुजङ्गाना मानवशजयोपिति[1] ।
स्याद् भोगवती कौटिल्यभुक्तिरक्षावतीषु च ।। 151 ।।

भोगो भुक्ति कौटिल्य वास्यास्तीति भोगवती ।।

समिति स्यात् सभाया च समाने युधि सगमे ।

समानमिति युक्तम् । [2]सयच्छन्ते सगच्छन्तेऽत्रेति समिति । 'यम उपरमे' ।।

क्षय वास [3]गतौ भूम्या हिंसाया क्षितिरुच्यते ।। 152 ।।

[4]क्षीयत इति क्षिति । 'क्षि निवासगत्यो' । 'क्षि क्षये' । 'क्षिणु[5] हिंसायाम्' ।। ७० ।।

[1] मूलवशजयोरपि J2 [2] सयच्छत K6 [3] गते K5 [4] क्षय्यत J2
[5] 'क्षि हिंसायाम' K3

(विव) नदी—भोगवती । नागलोके तत्रस्थनदीविशेषे च सर्पशरीरयोगाद उपभोगयोगाद्वा प्रत्येक भोगवतीशब्द । भोगशब्दस्य कौटिल्याद्यनेकार्थवृत्तित्वाद् [1]मतुप्प्रत्यये भोगयोगिन्या स्त्रियामपि भोगवतीशब्दो वेदितव्य ।। अथ सगरे—समिति । सभूय यन्ति गच्छन्त्यत्रेति समिति युद्धम् । सभा च । सबन्धस्यार्थे तु भाववचन । 'इण् गतौ' । क्तिन् । युद्धपर्यायेषु समितिशब्दोक्तया प्रत्ययत स्त्रीलिङ्गत्वम्[2] ।। क्षयवासावपि क्षिति । क्षयो नाश । वासो गृहम् । 'क्षि क्षये' इति धातो भावे क्तिनि नाशार्थत्वम् । [3]क्षियन्ति निवसन्त्यत्रेति अधिकरणार्थे विवक्षाया क्षिति गृहम् । 'क्षिणु हिंसायाम्' इति धातो क्तिनि 'अनुदात्तोपदेश .' इत्यादिना (६ ४ ३७) अनुनासिकलोपे क्षितिशब्दो हिंसावचन । भूमिपर्यायेषु प्रागुक्त (पृ १८५) ।। ७० ।।

[1] Tv adds तदस्यास्त्यस्मिन्निति [2] स्त्रीलिङ्गत्वमित्यापरिच्छदन गर्हितं तु वाच्यलिङ्ग T1 [3] 'क्षि निवासगत्यो'

(पा) नदीनगर्यो—क्षिति ।। ७० ।।

रवेरर्चिश्च शस्त्र च वह्निज्वाला च हेतयः ।
जगती जगति च्छन्दोविशेषेऽपि क्षितावपि ।। ७१ ।।

(वि ) [1]वह्नौ तेजसि सूर्यांशौ शस्त्रे हेतिरदाहृत [2]।

[3]हिनोतीति हेति । 'हि गतौ वृद्धौ च' ॥

छन्दोभेदे क्षितौ चैव जने च जगती मता ॥ 153 ॥
विष्टपे जङ्गमे वाते [4]जगच्छन्द उदाहृत ।

[5]जङ्गम्यत इति जगती । 'गम्लृ सृप्लृ गतौ' ॥ ७१ ॥

[1] वह्नि° K5 [2] उदाहृता J2 [3] हन्यतेऽनया J2 [4] जगच्च समुदाहृतम् J2
[5] K5 adds भृश गच्छति

(विव.) रवेर्राचश्च—हेतय.। हन्यतेऽनया तमः शत्रुर्वेति हेतिः। 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३. ३. ९७) इति निपातितः। क्तिन्नन्तस्यापि शस्त्रवचनस्य [1]पुलिङ्गत्वमस्ति। तथा च—'हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम्' इति रघुवंशे (१०. १२)। 'निमार्ष्टचसौ नीतिमयेन हेतिना' इति कप्फणाभ्युदयेऽपि (२. ३८)॥ जगती—क्षितावपि। जगती भुवनमात्रे, [2]छन्दोविशेषे द्वादशाक्षरपादे च। क्षितिर्भूमिः (पृ. १८८) ॥ ७१ ॥

[1] 'न क्ली हेति शस्त्रमस्त्रम्' इति वैजयन्ती (पृ. ११७, श्लो. १५७) [2] 'जगत्या आदित्या' इति पिङ्गलीयच्छन्द शास्त्रे (३ ४).

(पा ) रवेर्राचश्च—क्षितावपि। 'जगती [1]भुवने क्ष्माया छन्दोभेदे जनेऽपि च' इति विश्व (पृ ६७, श्लो १३९) ॥ ७१ ॥

[1] छन्दसि B3

**पङ्क्तिश्छन्दोऽपि दशमं स्यात् प्रभावेऽपि चायतिः ।**
**पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ॥ ७२ ॥**

(वि ) पङ्क्ति स्याद् [1]दशमच्छन्दोदशसख्यावलीष्वपि[2] ॥ 154 ॥

पञ्चयत इति पङ्क्ति । 'पचि विस्तारे' ॥

आगामिकाले यमने प्रभावे दैर्घ्य आयति ।

यमन सयम । आयम्यत इत्यायति[3] ।।

गतौ वीरे सैन्यभेदे पदातौ पत्तिरुच्यते ।। 155 ।।

पद्यत इति पत्ति । 'पद गतौ' ।।

अर्धमासस्य मूले स्यात् [4]पक्षमूले च पक्षति ।

पक्षयोर्मूल पक्षति ।। ७२ ।।

[1] दशम $K_6$ [2] °सख्यावतिपु $K_6$, °वतीपु $K_4$ [3] $J_2$ adds 'यम उपरमे'.
[4] गरुत्° $K_4$, $K_5$

(विव.) <u>पङ्क्तिश्छन्दोऽपि दशमम्</u> ।

[1]'उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।।'

इति (छ. म. १. १६) पाठक्रमेण पङ्क्तिच्छन्दसो दशमत्वम् । [2]द्वे परिमाणेऽस्य छन्दस इति पङ्क्तिः । 'पङ्क्तिविंशतित्रिंशत्...' इत्यादि (५. १. ५९) निपातनात् साधुः । 'वीथ्यालिरावलिः पङ्क्तिः' इत्युक्तम् (पृ. २१६) । पङ्क्तिः शतसहस्रादित्यादिना दशत्वसंख्यायामप्युक्तः ।। <u>स्यात् प्रभावेऽपि चायतिः</u> । प्रभावः प्रभुत्वशक्तिः[3] । 'आयतिस्तूत्तरे काले स्याद् दीर्घत्वप्रभुत्वयोः' <u>इत्यजयः</u> । <u>पत्तिः गतौ च</u> । गतिर्गमनम् । 'पद गतौ' । 'पत्लृ गतौ' इति वा । क्तिन् । 'पत्तिः पदातौ पुंसि स्यात् सैन्यभेदे गतौ स्त्रियाम्' इति <u>नानार्थसंग्रहः</u>[4] । 'एकेभैकरथा' इति प्रागुक्तः (पृ. ५२६) ।। <u>मूले तु पक्षतिः पक्षभेदयोः</u> । इह पक्षशब्दस्य द्वावर्थौ । शुक्लः कृष्णो वा अर्धमासरूपकः[5] । अपरस्तु हंसमयूरादिपत्ररूपः । तयोरुभयोः पक्षयोर्मूलयोः प्रतिपदि गरुत्प्ररोहभङ्गे[6] च प्रत्येकं [7]पक्षतिशब्दो वर्तत इत्यर्थः ।। ७२ ।।

[1] उक्थात्युक्था इति मु प्र (पृ १२). [2] पञ्च परिमाणमस्य पङ्क्तिश्छन्द इति काशिका (पृ १४) [3] Tv adds अपिशब्दाद् आगामिनि काले दैर्घ्ये च [4] राघवकृतनानार्थमञ्जर्यां दृश्यते (पृ ३४, श्ला ३३५) [5] Tv adds एव [6] अग्रभागे Tv
[7] पक्षति । पक्ष्यतेऽनेन वा । 'पक्ष परिग्रहे' । अच् । घञ् वा ।। 'पक्षात्ति' (५ ? २५) इति भा दी (पृ ३३६, ४७२).

(पा ) पङ्क्तिश्छन्दोऽपि दशमम् । आवलिदशसख्ययोरपि[1] स्यात् ॥ स्यात् प्रभावेऽपि चायतिः । आयामागामिकालयोरपि स्यात् । पत्तिर्गतौ च । पदातावपि स्यात् ॥ मूले—पक्षभेदयो । पक्षभेदौ गरुत्तिथिसमुदायौ । तयोर्मूले ॥ ७२ ॥

[1] $A_1$ omits °सख्य°, राजिदशसख्ययोरपि पङ्क्ति इति टी स (पृ ६६)

**प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः ।**
**सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ॥ ७३ ॥**

(वि ) प्रजाया धातुलिङ्गादौ [1]सहजे परमात्मनि ॥ 156 ॥

अमात्ये च प्रधाने च योनौ प्रकृतिरुच्यते ।

योनिरुपादानकारणम् । प्रक्रियत इति प्रकृति [2] ॥

[3]कैशिकीभारतीत्यादौ [4]कृष्यादौ वर्तनेऽपि च ॥ 157 ॥
काशिकादौ विवरणे वृत्तिशब्दोऽभिधीयते[5] ।

वर्ततेऽनयेति वृत्ति । 'वृतु वर्तने' ॥

शर्कराया वालुकाया रोगभेदे तथैव च ॥ 158 ॥
[6]वालुकान्वितदेशेऽपि [7]सिकता परिकीर्तिता ।

सिकताशब्दव्युत्पत्तिरुन्नेया ॥

शास्त्रे स्वराङ्गे श्रवणे [8]वेदवृत्तान्तयोरपि ॥ 159 ॥
श्रोत्रे श्रोत्रक्रियायां च श्रुतिशब्दोऽभिधीयते ।

श्रूयत इति श्रुति । 'श्रु श्रवणे' ॥ ७३ ॥

[1] सहते $K_6$ [2] $J_2$ adds 'डुकृञ् करणे' [3] कैशिक्या $K_2$, $K_6$ [4] क्षित्यादौ $K_5$ [5] अभिकथ्यते $J_2$, $K_4$ [6] वालुकास्फीतदेशेषु $J_2$ [7] सिकता परिकीर्तिता $K_6$ [8] °सद्वृत्तयोरपि $K_6$

(विव.) प्रकृतिर्योनिलिङ्गे च । घटाद्युपादान मृदादिक योनि. । यथा भूतप्रकृतीनि शरीराणि । लिङ्ग स्त्रीपुनपुसकमिति । यथा—तृतीया प्रकृतिः ।

प्रक्रियतेऽनया कार्यमिति प्रकृति (३ ३ ६४)। प्रधाने (१,पृ ८६), राज्याङ्गेषु सप्तसु (पृ ४६३), स्वभावे च (पृ १४४) प्रागुक्ता[1]। कृत्तद्धितप्रत्ययाना प्रथमभागादौ तु प्रातिपदिकादिभागाश्च प्रकृतिशब्देनोच्यन्ते। यथा—'प्रकृति-प्रत्यययोरिवानुबन्ध ' इति भारवि " (किरा १३ १६)। 'दर्शपूर्णमासाविष्टीना प्रकृति ' इत्यादौ प्रकृतिशब्द स्वभाववचन । विकृतिभूतानामन्वारम्भणीयाना देवतायामितिकर्तव्यताया वा यत्किंचिद्वैरूप्याद् विकृतित्वम्।। कैशिक्याद्याश्च वृत्तय । आद्यशब्देन—

'कैशिकी सात्वती चैव भारत्यारभटी तथा ।
चतस्रो वृत्तयस्तेषा यासु नाट्य प्रतिष्ठितम् ।।'

इत्युक्ताना (ना शा ६ २५) ग्रहणम्। तल्लक्षणानि च सगीतसारे कथितानि—

'एव नाट्ये विधातव्यो नायक सपरिच्छद ।
तद्व्यापारात्मिका वृत्तिश्चतुर्धा तत्र कैशिकी ।।
गीतनृत्तविलासाद्यैर्मृदुशृङ्गारचेष्टितै ।
[4]सात्वती कार्यसरोपत्यागधैर्यदयोज्ज्वलै ।।
भारती सस्कृतप्रायो वाग्व्यापारो नटाश्रय ।
मायेन्द्रजालसग्रामक्रोधभ्रान्त्यादिचेष्टितै ।।
विज्ञेयारभटी तज्ज्ञै ।।'

इति। 'स्त्रिया[3] कृषि पाशुपाल्य वाणिज्य चेति वृत्तय ' इत्युक्ता (पृ ५५४) जीविकायामपि। स्वभावे यथा—साधुवृत्तिरिति। सूत्रव्याख्याने च यथा—काशिकावृत्ति, लघुवृत्तिरिति।। सिकता स्युर्वालुकापि। वालुकाशब्देन शुष्क-नदीमध्यगत सर्षपादप्यल्पपरिमाण पाषाणप्रायो मृद्विशेष उच्यते। सा बहु-वचनान्तेन स्त्रीलिङ्गेन सिकताशब्देनोच्यते। 'बह्वश्च समा सिकता ' इति वामनीयलिङ्गानुशासनोक्तेर्बहुवचननियम (पृ १६, श्लो २३)। अपि च 'षिच क्षरणे' इति सिच्यन्ते जलैरिति व्युत्पत्त्या सूत्रनिर्देशात् (५ २ १०४) सिकता-शब्द साधुरिति केचिदाहु। 'छन्दसि निष्टर्क्य ' इति सूत्रे (३ १ १२३) [5]कसे सिकताशब्द इति महाभाष्यकार (म भा पृ ८७)। अपिशब्देन सिकतावान् देशोऽपि सिकता। अत्र हि 'सिकताशर्कराभ्यां च' (५ २ १०४) इत्युत्पन्नस्य

मत्वर्थीयस्य 'देशे लुबिलचौ च' (५. २. १०५) इति लुपि सति व्यक्तिवचनयोः युक्तवद्भावेन स्त्रीत्वे बहुत्वे च सिकता इत्येव, एकवचनान्तेन पुण्ड्रेक्षुविकारः सिकता शर्करोच्यत[6] इत्याहुः ।। वेदे श्रवसि च श्रुतिः । श्रवसि कर्णे । चशब्देन षड्जादिस्वरांशे यथा—'पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः' इति (शिशु. १. १०) । श्रवणक्रियाया वार्तायां च ।। ७३ ।।

[1] प्रागुक्त B5, Gm3 [2] 'प्रकृतिर्धात्वादि । प्रत्यय सनादि । तयोर्मध्यमनुबन्ध इत्सञ्ज्ञको वर्ण । यथा भूत भूतिरित्यादौ ककार' इति मल्लिनाथव्याख्या (पृ २६०). [3] B5, B6 omit स्त्रिया [4] Gm3 omits the two verses [5] 'यथा— कृतेस्तर्क, वसे सिक्ता, हिंसे सिंह' (पृ ८७) [6] Tv adds व्यज्यत इति

(पा) प्रकृतिर्योनिलिङ्गे च । लिङ्ग तत्त्वविशेष । 'लिङ्ग चिह्नेऽनुमानेऽपि साख्योक्तप्रकृतावपि' इति विश्व (पृ २५, श्लो २०) । कैशिक्याद्याश्च वृत्तय । 'वृत्तिर्विवरणे [1]जीव्ये कैशिक्यादिपु चेष्यते' इति विश्व (पृ ६१, श्लो ५८) सिकता स्युर्वालुकापि । वालुकावत्प्रदेशेऽपि स्यात् । वहुत्व केषाचिदसमतम्[2] ।

'सिकता वालुकाया स्यु सिकताप्यामयान्तरे ।
सिकतान्वितदेशे च शर्करायां च कीर्तिता ।।'

इति विश्व (पृ ६८, श्लो १५०) ।। वेदे श्रवसि च श्रुति । श्रव [3]श्रवणकर्मण्यपि स्यात् ।। ७३ ।।

[1] जीवे A1 [2] अननुमतम A1 [3] A1 omits श्रवण°

**वनिता जनितात्यर्थानुरागाया च योषिति ।**
***गुप्तिः क्षितिव्युदासेऽपि धृतिर्धारणधैर्ययोः ।। ७४ ।।***

(वि) याचित सेविते प्राप्त वनित स्यात् त्रिलिङ्गकम् ।। 160 ।।
अत्यन्तजातानुरागयोषाया[1] वनिता भवेत् ।

वन्यत इति वनिता । [2]'वन षण सभक्तौ' । 'वनु याचने' ।।

कारागृह शैलदुर्गे [3]गुप्तिर्भूगर्तरक्षयो ।। 161 ।।

[4]गुप्यत इति गुप्ति । 'गुपू रक्षणे' ।।

योगान्तरे धारणे च [5]सप्ततन्तौ सुखेऽपि च ।
धैर्यसतोषयोश्चैव धृतिशब्द उदाहृत. ।। 162 ।।

ध्रियत इति धृति । 'धृञ् धारणे' । 'धृङ अवस्थाने' ।। ७४ ।।

[1] योषाणाम् J2 [2] K2 adds शब्दे च [3] °भूगर्भ° K2, K6 [4] गोप्यते K6
[5] सप्ततन्तुरध्वर

(विव.) वनिता—योषिति। स्वकीयपुरुषे जनित उत्पादितोऽतिशायितो ऽनुरागः प्रेमा[1]। तथाभूतायां स्त्रियां योषिन्मात्रे च वनिताशब्दः। 'वन संभक्तौ'। 'वनु याचने' इति धातुभ्यां क्तप्रत्यये वनिताशब्दो वाच्यलिङ्गोऽव-गन्तव्यः।। गुप्तिः क्षितिव्युदासेऽपि। क्षितिव्युदासो भूगर्तः। तथा च शाश्वतः[2]— 'गुप्तिः कारा च रक्षा च [3]दीर्णं च विवरं भुवः' इति। कारा बन्धनागारम्। [4]'गुप्तिस्फोटमर्कः करोति' इति प्रयोगः। रक्षणम्। 'गुपू रक्षणे' इत्यस्माद् अधिकरणे भावे च क्तिन् (३. ३. ९४) ।। धृतिर्धारणधैर्ययोः। [5]द्रव्यस्य [6]पतन-प्रतिबन्धकरण धारणम्। सत्यपि दु.खकारणे विषादराहित्यं धैर्यम्। ध्रियतेऽव-तिष्ठतेऽनेनेति धृतिर्धैर्यम्। शेषे—'धृतिः स्त्रियां योगभेदे छन्दोभेदे सुखेऽध्वरे' इति। योगभेदो विष्कम्भादिष्वष्टमः। छन्दोभेदो ऽष्टादशाक्षरपादः। सुखे यथा— 'कामिभिर्बहुरसा [7]धृतिरूहे' इति (किरा. ९. ४०) ।। ७४ ।।

[1] प्रेमाया Tv [2] बेर्लिन्नगरमुद्रितग्रन्थे न दृश्यते, शाश्वत इति स्वामी (पृ २८७) भा दी च (पृ ४७२). [3] जीर्णमिति स्वामी (पृ २८७) [4] गुप्ति B5, B6. [5] धैर्यस्य B6 [6] वर्तन° Gm3, Tv [7] धृति सतोप इति मल्लिनाथव्याख्या (पृ १९१).

(पा ) वनिता—योषिति। योषिन्मात्रेऽपि स्यात् ।। गुप्ति· क्षितिव्यु-दासेऽपि। क्षितिव्युदासो भूगर्त । [1]'पातर'। 'गुप्ति कारागृहे प्रोक्ता भूगर्ते रक्षणे यमे' इति विश्व (पृ ६१, श्लो ६१) ।। धृतिर्धारणधैर्ययो । सुखेऽपि स्यात्[2]। 'धृति मौख्येऽपि धारणे' इति वैजयन्ती (पृ २२१, श्लो २०) ।।७४।।

[1] B3 omits [2] B3, C1 omit स्यात्

**बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ।**
**वासिता स्त्रीकरिण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥ ७५ ॥**

(वि.)　कण्टकार्यां वारिधान्या छन्दोवसनवाक्षु च ।
वृहती क्षुद्रवार्ताक्या महत्यां त्रिपु कीर्तिता ॥ 163 ॥

वृहतीति वृहती । 'वृह [1]वृहि वृद्धौ' ॥

करिण्यामङ्गनाया च वाशिता वासिता मता ।

वाश्यत इति वाशिता[2] । 'वश कान्तौ' । 'वाशृ शब्दे' ॥

वृत्तावुदन्ते कृष्यादौ वार्ताशब्दः प्रकीर्तित. ॥ 164 ॥

कृष्यादिवृत्तिरत्रास्तीति वार्ता । 'वृतु वर्तने' ॥ ७५ ॥

[1] J2, K4 omit वृहि　[2] K2 adds वासिता वा

(विव.)　बृहती—महत्यपि । क्षुद्रवार्ताकी हिङगुली । छन्दोविशेषो नवाक्षरपादः । 'षट्त्रिंशदक्षरा बृहती' इति श्रुतेः[1] (जै. ब्रा. २. ३०) । सा हि अनुष्टुबपेक्षया बृहत्त्वात् बृहती । बृहत्त्वगुणयुक्ता या काचन स्त्रीलिङ्गाभिधेया रथ्याशालादिका । अपिशब्दात् कण्टकारी च[2] (पृ. १, २७०) ॥ वासिता स्त्रीकरिण्योश्च । स्त्री योषिन्मात्रम् । करिणी हस्तिनी । रक्षणार्थं गृहे वास्यत इति वासिता । 'वस निवासे' । दन्त्योष्मसध्यः । 'स्त्रियां स्त्रीमात्रवर्तिन्योर्वासिता भाविते त्रिषु' इति रुद्रोक्तत्वात् । अत्रैव शेषकारोऽप्याह—'वासितं कृतवासे स्याच्छादिते स्तम्भिते त्रिषु' इति । कृतवासे कर्पूरादिद्रव्यान्तरमिश्रणेन सुरभीकृत इत्यर्थः । 'तुल्ये भावितवासिते' (पृ. ५८१) इत्यत्र 'वासितं भावितं त्रिषु' (पृ. ४४५) इत्यन्यत्र वायं शब्दो दर्शितः । [3]छादिते तु 'वस आच्छादने' इति धातुः । स्तम्भितार्थे तु 'वसु स्तम्भे' इति धातुः । उभाभ्यां णिचि कर्मणि क्तप्रत्ययः । वाशितेति तालव्यमध्यं पठित्वा कश्चिदाचष्ट[4] । तत्र किं वा मूलमिति स एव प्रष्टव्यः । वार्ता वृत्तौ जनश्रुतौ । वृत्तिः जीवनोपायः । जनश्रुतिः किंवदन्ती । उभयत्र रूपभेदात् स्त्रीलिङ्गः । वृत्तिर्वर्तनमस्त्यत्रेति वार्ता । 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः' (५. २. १०१) इति णप्रत्ययः[5] ॥ ७५ ॥

[1]श्रुति Tv; मुद्रितजैमिनीयब्राह्मणे 'षट्त्रिंशिनी बृहती' इति दृश्यते (२ ३०, पृ १६७) [2]'बृहती कण्टकारिका' [3]'उत्तरीयेऽपि बृहती' इति टी स (पृ १००) [4]'वाश्यते काम्यते वशे स्थाप्यते वाशते वा वाशिता। वासितेति गौडा पेठु, 'कृतवासेति च व्याख्यन्' इति स्वामी (पृ २८७) [5]B5, B6 omit; 'वृत्तेश्च' इति वार्त्तिक सूत्रमध्ये काशिकाया प्रज्ञा. वृत्तिभ्य इति पठितम् (पृ ५०).

(पा) बृहती—महत्यपि। वासिता स्त्रीकरिण्योश्च। [1]दन्त्यमध्यः। 'वासिता करिणीनार्योर्वासित सुरभीकृते' इति विश्व (पृ. ६८, श्लो. १५१)॥ वार्ता वृत्तौ जनश्रुतौ॥ ७५॥

[1]दन्त्यसकार, C1 adds वासिता.

**वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते।**
**कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः॥ ७६॥**

(वि.) आरोग्यफल्गुनोर्वार्तं नपुसकमुदाहृतम्।
घृतमाज्ये प्रदीप्ते च सलिलेऽपि[1] त्रिलिङ्गकम्[2]॥ 165॥

जिघर्तीति घृतम्। 'घृ क्षरणदीप्त्यो'॥

अमृत यज्ञशेषे [3]च पीयूषे सलिले घृते।
अयाचिते च मोक्षे च षट्सु क्लीबमुदाहृतम्॥ 166॥
[4]पथ्या धात्री गुलूची स्त्री ना तु धन्वन्तरौ सुरे।

न म्रियतेऽनेनेत्यमृतम्[5]॥

कलधौत रूप्यहेम्नो कलधौत कलध्वनौ॥ 167॥

कल. कालिका धौतोऽस्येति कलधौतम्[6]। 'धावु गतिशुद्ध्योः'॥

हेतौ च लक्षणे चैव निमित्त परिकथ्यते[7]।

नितरा मीयत इति निमित्तम्[8]। 'माङ माने'॥ ७६॥

[1]च for अपि J2 [2]त्रिलिङ्गक K5, K6 [3]स्यात् J2, K3 [4]पथ्या हरीतकी, धात्री आमलकी [5]K3 adds 'मृङ प्राणत्यागे'. [6]कलया धावतीति

J2, K3.　　[7] परिपठ्यते J2　　[8] निमेद्यति इति स्वामी (पृ. २८७), 'ञिमिदा स्नेहने' इति भा दी. (पृ. ४७३).

(विव.) वार्तं—त्रिषु। फल्गुनि निःसारे रूपभेदाद् नपुंसकत्वम्। यथा—वार्तरहितमेतत् इति। रोगरहिते तु वाच्यलिङ्गः॥ अप्सु च घृतामृते। घृतममृतं चेति शब्दद्वयं जले। चशब्दाद् घृतशब्द आज्ये प्रदीप्ते च। यथा—घृतप्रतीकः इति (तै. ब्रा. १. २. १. ११)। अमृतशब्दः पीयूषादौ। तथा च व्याडिः—

'अमृतं [1]वारिसुरयोर्निर्वाणे चातिसुन्दरे।
अयाचिते यज्ञशेषे पुंसि धन्वन्तरौ भवेत्॥'

इति[2]। अभयागुडूच्यामलकीषु स्त्रीलिङ्गाः प्रागुक्ताः (पृ. २५०, २६४, २४८)॥ कलधौतं रूप्यहेम्नोः। रूप्यं रजतम्। हेम सुवर्णम्॥ निमित्तं हेतुलक्ष्मणोः। हेतुः कारणम्। यथा—विद्यानिमित्तो धनलाभः। लक्ष्म शुभाशुभावेदकं भुजनेत्रस्पन्दनादिकम्। 'निमित्तं सूचयित्वा' इति। 'निमित्तं कारणे चिह्नम्' इत्यजयश्च। हेतुलक्ष्ययोः इति पाठे लक्ष्यं शरव्यम्। यथा—

'निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम्।' (शिशु. 2. 27 b.)
'वेध्यं लक्ष्यं शरव्यं च निमित्तं च समं विदुः॥'

इति [3]रङ्गराजोदाहृतमभिधानं च। नितरां मेद्यति स्म निमित्तम्। 'ञिमिदा स्नेहने'[4]। 'स्नुक्रमोरनात्मनेपदनिमित्ते' (७. २. ३६) इति निर्देशाद् निष्ठानत्वस्याभावः॥ ७६॥

[1] वारिशुभयो Tv　　[2] 'अयाचिते यज्ञशेषे निर्वाणे चापि सुन्दरे। अमृत वारिणि प्रोक्तमतिहृद्ये च वस्तुनि॥' इति व्याडिरिति टी स (पृ १००)　　[3] वैजयन्तीति मल्लिनाथ। मुद्रितवैजयन्त्या तु 'वेध्य शरव्य न नरि' इत्यादि दृश्यते　　[4] 'श्रीत क्त' (३ २ १८७), सञ्ज्ञापूर्वकत्वान्न नत्वम् इति भा दी (पृ ४७३)

(पा) वार्तं—त्रिषु। अरोगे तु त्रिष्विति रोगरहिते त्रिलिङ्ग। [1]आरोग्ये नपुसकमेव। 'वृत्तिमन्नीरुजोर्वार्ता वार्तमारोग्यफल्गुनो' इति विश्व (पृ ६०, श्लो ४६)॥ अप्सु च घृतामृते। आज्यपीयूषयोरपि स्याताम्। कलधौत रूप्यहेम्नो। कलस्वने त्रिलिङ्ग। 'कलधौत रूप्यहेम्नो [2]षण्डे त्रिषु

कलध्वनौ' इति वैजयन्ती (पृ २७७, श्लो ५) ॥ निमित्त हेतुलक्ष्मणो । लक्ष्म शुभाशुभसूचकम् । 'शकुन च निमित्त च [3]सुखादे सूचकेऽपि च' इति वैजयन्ती (पृ २७४, श्लो १६) ॥ ७६ ॥

[1] रोगाभावे B3 [2] पण्डस्त्री तु इति म ग्र [3] शुभादे इति मु ग्र

**श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् ।**
**अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ ७७ ॥**

(वि) श्रुत शास्त्रे [1]चावधृते नपुसकमुदाहृतम् ॥ 168 ॥

श्रूयते विद्वद्भिरिति श्रुतम्[2] ॥

कृत युगेऽपि पर्याप्ते विहिते हिंसिते फले ।

क्रियतेऽनेनेति कृतम् । 'डुकृञ् करणे' ॥[3]

अत्याहित महाभीतौ जीवानाकाङ्क्षिकर्मणि[4] ॥ 169 ॥

आहितमतिक्रान्तमत्याहितम् ॥ ७७ ॥

[1] चावधृतौ J2 [2] J2, K2 add 'श्रु श्रवणे' [3] 'कृञ् हिंसाया' वा J2
[4] जीवनानिष्टकर्मणि J2

(विव.) श्रुतं शास्त्रावधृतयोः । शास्त्रं व्याकरणादि । यथा—बहुश्रुतो विप्रः । अवधृतमाकर्णितम् । यथा—बहुधाश्रुतोऽयमर्थ इति । 'श्रु श्रवणे' । कर्मणि क्तः (३. २. १०२) ॥ युगपर्याप्तयोः कृतम् । कृतं युगाख्यं प्रथमम् । पर्याप्तमिति भावे निष्ठा । पर्याप्तिः निवारणमित्यर्थः । शेषे—'कृत फले क्रियायां च वाच्यवद्विहिते हते' इति । फले यथा—[1]'तपसः कृतमेतद्धि यदीश तव दर्शनम्' इति । क्रियाया यथा—कृतस्य प्रतिकृतमासीदिति । विहिते यथा—कृतमाह्निकमिति । हते यथा—[2]उपाकृतः पशुरिति । 'कृते पशौ पुरोडाशं निर्वपति' इति ॥ अत्याहितं—जीवानपेक्षि च । पुत्रमरणाद्यनिष्टशङ्काजनितं भयमत्याहितम् । जीवानपेक्षि कर्म भृगुपतनव्याघ्रयोधनादिसाहसम् । दधातिरुपसर्गद्वयवशादर्थविशेषे वर्तते[3] । शेषे—

'अत्याहितमुपश्लिष्टे' इति। अत एव अत्याधानमुपश्लेषणम्[4] इति काशिका च (१. ४. ७५, पृ. ७८) ॥ ७७ ॥

[1] तपसा B₅, B₆ [2] १ पृ ४६५ [3] 'दधातेर्हि' (७ ४ ४२) इति हितम्
[4] उपश्लेष Tj₁, Tj₂

(पा) श्रुत—जीवानपेक्षि च ॥ ७७ ॥

**युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु।**
**वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ ७८ ॥**

(वि) भूत क्ष्मादौ पिशाचादौ न्याये [1]सत्यसमानयो ।
समेऽतीते देवलके[2] वृत्ते प्राप्तेऽभिधेयवत् ॥ 170 ॥

भवतीति भूतम्[3] ॥

वृत्तोऽतीते दृढे ख्याते वर्तुलेऽपि वृते मृते ।
वाच्यवद् वर्तते वृत्त [4]चारित्रच्छन्दसोरपि ॥ 171 ॥

[5]वृत्यत इति वृत्तम। 'वृतु वर्तन' ॥ ७८ ॥

[1] सत्यापमानयो J₂, K₄ [2] देवलोके K₅, K₆ [3] J₂, K₂ add 'भू सत्तायाम' [4] चरित्र° K₂, K₄ [5] वर्त्यते K₆

(विव) युक्ते—समे त्रिषु। युक्त न्यायम्। युक्ते यथा—'विद्वासो भूतकारिण' इति। क्ष्मादौ पृथिव्यादिपञ्चके यथा—'पञ्चानामपि भूतानाम्' इति (रघु ४ ११)। ऋते सत्ये यथा—'भूतमप्यनुपन्यस्त हीयते व्यवहारत' इति (या स्मृ २ २ १९)। अत्रार्थत्रयेऽपि रूपभेदाद् नपुसकलिङ्गो भूतशब्द । प्राण्यतीत इति द्वन्द्वैकवद्भाव । तत्र प्राणिशब्देन तद्विशेष । 'पिशाचो गुह्यक सिद्धो भूत' इत्युक्ता विवक्षिता (१, पृ १०)। तत्र स्वभावादेव भूतशब्द स्त्रीलिङ्ग । यथा—'ये भूता प्रचरन्ति दिवानक्त बलिमिच्छन्तो वितुदस्य प्रेष्या' (तै आ १० ६७ २) इति। 'भूतानि यानीह वसन्ति तानि' इति। अतीते निष्पन्ने यथा—भूतो घट, भूतमन्नम्, प्रभूता सपत्। समे सदृशे यथा—पितृभूतो ज्येष्ठ, मातृभूता भगिनी, गृहभूत तरुतलम् इत्यादि। भूतशब्दस्य समासोत्तरपदत्वे[1]

सत्येव तादृशार्थत्वम्। न तु विगृहीतस्य। 'स्युरुत्तरपदेत्वमी निभसंकाश' इत्यादिना[2] (पृ. ६४२) प्रागप्ययमर्थो दर्शितः। सुभूतिचन्द्रस्तु—प्राण्यतीत इत्यत्र प्राणीति प्रथमान्तं छित्वा सकलमपि शरीरमात्रं रूपभेदादेव नपुंसकलिङ्गभूतवाच्यमिति व्याचष्ट। यथा—'तं भूतान्यभ्यत्रोशन्' इति। 'यां सदा सर्वभूतानि' इति। शेषे—'भूतो देवलके पुंसि त्रिषु प्राप्तेऽवकल्किते' इति। प्राप्ते यथा—कंचित्प्रकारं प्राप्त इत्थंभूतः। 'भू प्राप्तौ' इति धातुश्च। 'भुवोऽवकल्कने' इत्यत्र अवकल्कनं चिन्तनमिति धातुवृत्तौ[3]। यथा—'त्वद्भूताः सुखमेधन्ते मम प्रकृतयः सदा' इति। त्वद्भूताः त्वया चिन्तिना इत्यर्थः। विकल्कन इति पाठे विकल्कनं विपापकरणम्। यथा—'तपोभूतात्मनो युष्मान्' इति। तपसा निष्पापीकृतात्मन इत्यर्थः। अनुकल्कन इति पाठेऽनुकल्कनं मिश्रीकरणम्। यथा—दध्ना भूत ओदन इति। विश्वप्रकाशेऽपि—

'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः।
भूतो देवलके प्राप्ते[4] तथा वृत्तेऽभिधेयवत्॥'

इति (पृ. ५७–८, श्लो. १७)॥ वृत्तं—दृढनिस्तले। पद्यं छन्दोवद्धपादम्, इन्द्रवज्रादि। चरित्रं शीलम्। उभयत्र रूपभेदाद् नपुंसकम्[5]। दृढे यथा—वृत्तावयवसंस्थाने इति। निस्तलं वर्तुलम्। अतीताद्यर्थत्रये वाच्यलिङ्गः॥ ७८॥

[1] °पदत्वेन इत्येव T₁ [2] आदिना भूतरूपकल्पादय [3] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते, बृहद्धातुरूपावल्या (पृ ४७८) अवकल्कन मिश्रीकरण चिन्तन वा इति दृश्यते [4] प्राप्तवृत्तयोरभिधेयवत् इति मु ग्र [5] नपुंसकत्वम् T₁.

(पा) युक्ते—समे त्रिपु। त्रिष्विति यथासभव विशेषणम्। 'क्ष्मादौ जन्तौ च भूत क्ली समातीतोचिते त्रिपु' इति वैजयन्ती (पृ २३४, श्लो. ५६)। [1]अथवा प्राणीति सप्तम्यन्तम्। क्ष्मादिपु पञ्चसु भूतन्यायसमीचीनजन्तुपु प्रथमेति क्लीबकाण्डेपु गोपालित.॥ वृत्त—दृढनिस्तले॥ ७८॥

[1] B₃ omits अथवा and has सप्तम्यन्त वा

महद्राज्यं चावगीतं जन्ये स्याद् गर्हिते त्रिपु।
श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिपु॥ ७९॥

(वि.)　वीणाभेदेऽपि महती महद् राज्यविशालयोः ।

मह्यत इति महती । 'मह पूजायाम्' ॥

[1]श्वेतं रूप्ये वाच्यलिङ्ग द्वीपभेदाद्रिभेदयो.[2] ॥ 172 ॥

श्वेतत इति श्वेतम् । 'श्विता वर्णे' । श्वयति मनोऽस्मिन्निति वा श्वेतम् । 'टुओश्वि गतिवृद्धयोः' ॥

सुवर्णे धवले रूप्ये रजत स्यात् त्रिलिङ्गकम् ।
नपुसक दन्तिदन्ते हारतारकयोरपि ॥ 173 ॥

रज्यते ताम्रादिकमनेनेति रजतम्[3] । 'रञ्ज रागे' ॥ ७६ ॥

[1] अवगीतपदस्य व्याख्या न दृश्यते　　[2] J2 adds श्वेता वराटिकाकाष्ठपाटला-शङ्खिनीपु च　　[3] K3 adds रज्यतेऽनेनेति रक्तम् । 'रञ्ज रागे' ॥

(विव.)　महद् राज्यं च । राज्ञः कर्म जनपदपरिपालनादिरूपं राज्यम् । यथा—[1]'सादिताखिलनृपं महन्महः संप्रति स्वनयसंपदैव ते' इति माघकाव्ये (शिशु. १४. १३) । राज्यं तेज इत्यर्थः । महामहदिति पाठे महाराज्यमित्यर्थः । यत्किंचिदपेक्षया बहुदेशव्यापकं गृहमहीधराकाशादिकमपि चशब्दार्थः । [2]बुद्धि-तत्त्ववचने तु पुंलिङ्गः । तथा हि—'प्रकृतेर्महान्' इति सांख्याः । महति मह्यते वा सर्वैरिति महत् । 'मह पूजायाम्'[3] ॥ अवगीतं—त्रिषु । जनस्य जल्पो जन्यम् । निन्देति यावत् । यथा—'आत्मव्यापादनं श्लाघ्यमवगीतेन जीवनात्' इति । तत्र रूपभेदात्[4] पुंलिङ्गः । गर्हिते निन्दिते निषिद्धभक्षणादौ वाच्यलिङ्गः । अव-गीयते कुत्सितं शब्द्यत इति अवगीतम् । 'गै शब्दे' । क्तप्रत्ययः (३. २. १०२) ॥ श्वेतं रूप्येऽपि । रूप्यं रजतम् । रूपभेदेन क्लीबम् । श्वेतत इति श्वेतम् । 'श्विता वर्णे' । शेषे—'द्वीपाद्रिकुष्ठनागेषु श्वेतो ना स्त्री वराटके' इति । द्वीपः श्वेतद्वीप इति प्रसिद्धः[5] । कुष्ठविशेषः श्वित्राख्यः । नागः सर्पविशेषः । यथा—'अप श्वेत पदा जहि' इति श्रुतौ (आपस्तम्बमन्त्रपाठः[6] २. १७. २६) । तथा—'श्वेताय वैदर्वाय नमः' इति (आ. पाठ. २. १७. २७) । नागो गजविशेषः ऐरावत इति केचित् । तदापस्तम्बीयमन्त्रपठनानुसंधानवैयर्थ्यनिबन्धनभ्रान्तिमूलमित्युपेक्षणीयम् ।

कपर्दिकाया तु स्त्रीलिङ्गः। ओषधिविशेषे प्रागुक्तः[7] (१, पृ. २७९)। धवलवर्णे तद्वति चोक्तः (१, पृ. ९९)॥ रजत—त्रिषु। सिते धवले वाच्यलिङ्गः। 'रजतां त्वा हरितगर्भाम्' इति श्रुतौ प्रयोग.। 'रजतं विशदे दन्तिदन्ते [8]हारतारकयोरपि' इति विश्वप्रकाशः (पृ. ६३, श्लो. ८६)। तारकं नक्षत्रम् ७९॥॥

[1] साधिता° TJ1, TJ2 [2] Tv omits two lines [3] 'वर्तमाने पृषत् ' (उ २ ८४) इति साधुरिति भा दी (पृ ४७३) [4] क्लीबम्। गर्हावचनत्वे तु पुलिङ्ग Tv [5] B6 adds अद्रि श्वेताद्रिरिति प्रसिद्ध [6] आश्व गृ सूत्रे च (२ ३ ३) [7] महाश्वेतर्क्षगन्धिकेति [8] दन्तिदन्तयोस्ताराहारयो इति मु ग्र

(पा) [1]श्वेत रूप्येऽपि। [2]अपिशब्दाद् धवलवर्णेऽपि स्यात्॥ रजत—त्रिषु। [3]हेमनामा द्रुम। 'रजत धवले रूप्ये शोणिते द्रुमहारयो' इति जयकोश॥ ७९॥

[1] महदवगीतशब्दयो व्याख्या न दृश्यते [2] A1 omits अपिशब्दात् [3] हेमनामद्रुम A1

**त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्यादिरागि च।**
**अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ॥ ८०॥**

(वि) [1]अवदात सिते पीते [2]शुद्धे च प्रचलेऽपि च।

अवदायत इत्यवदात। 'दैप् शोधने'॥

सित समाप्ते धवले निवद्धज्ञानयोरपि॥ 174॥

सिनोतीति सित। 'षिञ् बन्धने'॥ ८०॥

[1] श्वेतजगद्रक्तशब्दाना व्याख्या न दृश्यते, J2 ग्रन्थे एव 'रक्त स्यात् कुङ्कुमे ताम्रे प्राचीनामलके स्रजि। अनुरागिणि नील्यादिरञ्जिते लोहिते त्रिषु' इति, 'इङ्गे गतेऽपि सर्पे च जङ्गमे जगदुच्यते' इति च दृश्यते [2] विशुद्धो J2, K1

(विव.) त्रिष्वितः। इत.परं वक्ष्यमाणा जगदादयः समाहितान्तास्त-कारान्ताः वाच्यलिङ्गा इत्यर्थः॥ जगदिङ्गेऽपि। इङ्गं स्वाभाविकचलनयुक्तम्। 'वर्तमाने पृषत्...' इत्यादिना (उ. २. ८४) जगच्छब्दो निपातितः। 'स्याज्ज-

गद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु' इति रुद्रः। जगन्मृगकदम्बकम्। जगती हरिणीत्यादि ॥ रक्तं नीत्यादिरागि च। [1]शुक्लस्य वर्णान्तरकरणं रञ्जेरर्थ इति न्यासकारः[2] (पञ्जिका पृ. ६२७)। नीलीमञ्जिष्ठाहरिद्रादिरागयुक्तं नील्यादिरागि। शेषे—'असृक्कुङ्कुमयोः क्लीबं रक्तं त्रिष्वनुरागिणि' इति। रक्ताः प्रजाः, रक्तं भृत्यकुलमित्यादि। शोणवर्णे तु प्रागुक्तः (१, पृ. १००) ॥ अवदातः—शुद्धे। विजातीयसंसर्गाभावाद् अवदायते स्मेति अवदातः। 'दैप् शोधने'। शुद्धे निर्मले यथा—अवदातचरित इति। 'दाप् लवने' इति धातोरवदातः समूलभिन्नः॥ बद्धार्जुनौ सितौ। बद्धो रज्ज्वादिना संदानितः। अर्जुनो धवलः। 'षिञ् बन्धने'। 'षोऽन्तकर्मणि' इत्यतश्चेद् अवसितः समाप्तः। अवसितोऽयं इति ज्ञानेऽपि। शेषे—'श्वित्रे सितं भार्गवे ना [3]शर्करायां सिता स्त्रियाम्' इति ॥ ८० ॥

[1] Tv adds रक्त त्रिष्वनुरागिणि　　[2] 'शुक्लस्य वर्णान्तरापादन रञ्जेरिहार्थ' इति मु ग्र　　[3] शर्करायाम् Tv

(पा) त्रिष्वितो—इङ्गेऽपि। वायुभुवनयोरपि[1]। अधिकारस्य उक्तमात्रविषयत्वात् जगद् इङ्ग एव त्रिलिङ्गकम्[2]। रक्त नील्यादिरागि च। रुधिरकुङ्कुमे[3] रक्ते स्याताम्। पूर्वन्यायाद् नील्यादिरागवचनमेव त्रिलिङ्गम्। नील्या रक्त वस्त्रम्। लाक्षया रक्तोऽधर[4] ॥ अवदात —सितौ। अर्जुनो वर्ण ॥ ८० ॥

[1] A1 adds स्यात्　　[2] त्रिलिङ्गम् B3, C1　　[3] °कुङ्कुमादिरक्तेऽपि स्यात् B3　　[4] रथ B3, C1

युक्तेऽतिसंस्कृते मर्षिण्यभिनीतोऽथ संस्कृतम्।
कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि ॥ ८१ ॥

(वि) [1]युक्तेऽतिसस्कृते मर्षिण्यभिनीत उदाहृत।

अभिनीयत इति अभिनीत। 'णीञ् प्रापणे'॥

सस्कृत कृत्रिमे [2]शस्ते भूषिते लक्षणान्विते ॥ 175 ॥

सस्क्रियत इति सस्कृतम्[3]।

विष्णुशेषानवधिषु पुसि व्योम्नि नपुसकम् ।
[4]भूगुडूचीहैमवतीलाङ्गलीशारिबासु च ॥ 176 ॥
दूर्वाविशल्ययो स्त्री स्यादनन्त कथ्यते बुधै ।

न विद्यतेऽन्तो यस्यासावनन्त ॥ ८१ ॥

[1] तिरस्कृतेऽयुक्तेऽमर्पिण्यविनीत उदाहृत । न विनीयत इत्यविनीत K6. [2] शास्त्रे J2
[3] J2, K2 add 'डुकृञ् करणे' [4] भूगुलूची° K5, K6

(विव.) युक्ते तु संस्कृते मर्षिण्यभिनीतः । [1]शास्त्रोक्तानुकरणमभिनयं नीतः प्रापितोऽभिनीतः युक्तार्थः । लौकिकेन वैदिकेन वा कर्मणि प्रापितातिशयत्वाद् अभिनीतशब्दः संस्कृतवचनः । भिया भयेन रहितमिति विग्रहे तर्जनभर्त्सनादिकमभिशब्देनोच्यते । तत्कर्म नीतः प्रापितोऽभिनीत इति [2]रोमहर्षणार्थः ॥ अथ—लक्षणोपेतेऽपि । द्रव्यान्तरसंसर्गकरणादिलौकिकव्यापारेण वा प्रोक्षणादिवैदिकव्यापारेण वा निष्पादितगुणाधानं वस्तु कृत्रिमम् । यथा—मरीचजीरकादिभिर्व्यञ्जनानि संस्कृतानि । प्रोक्षणादिना व्रीह्यादयः संस्कृताः । पाणिन्याद्युक्तलक्षणयुक्तं सुशब्दादिकं लक्षणोपेतम् । यथा—संस्कृतं भाषा । संस्कृत काव्यमिति । संपूर्वात् करोतेः कर्मणि निष्ठायां 'संपर्युपेभ्यः करोतौ भूषणे' (६. १. १३७) इति 'संपूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते'[3] इति सुडागमः ॥ अनन्तोऽनवधावपि । अवधिः इयत्तावच्छेदः । तद्रहितो दिक्कालादिः अनवधिः । नास्त्यन्त उत्तरावधिरस्येत्यनन्तः । यथा—अनन्ता वै वेदाः इति । विश्वप्रकाशे (पृ. ६६–७, श्लो. १२९–३०)—

अनन्तः शेषविष्णोः स्यादनन्तं[4] सुरवर्त्मनि ।
अनन्ता शारिवादूर्वाविशल्यालाङ्गलीषु च ।
अनन्ता हैमवत्यां च गुडूच्यां चावनावपि[5] ॥

इति । हैमवती हरीतकी[6] ॥ ८१ ॥

[1] °करणरूपम् Tv [2] रोपणार्थं B5, B6. [3] वा ६ १. १३७ [4] अनन्तः इति मु प्र [5] निरूप्यते इति मु प्र [6] 'हरीतकी हैमवती' (पृ २५०).

(पा) युक्ते तु सस्कृतेऽमर्षिण्यभिनीत. । अमर्षी असहिष्णु. । अथ—लक्षणोपेते । कृत्रिम घटादिकार्यम् । [1]लक्षणोपेतो वृक्षः तिष्ठतीत्यादिशब्द ॥

अनन्तोऽनवधावपि । अनन्तो मार्ग । [2]अनन्ता सरणि । अनन्त वर्त्म । भूमौ स्त्रीलिङ्ग [3] । आकाशे नपुसक एव[4] ॥ ८१ ॥

[1] लक्ष्मणापेत A1　　[2] A1 omits the sentence　　[3] B3, C1 add एव
[4] A1 omits एव

ख्याते हृष्टे प्रतीतोऽभिजातस्तु कुलजे बुधे ।
विविक्तौ पूतविजनौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ ८२ ॥

(वि ) प्रसादख्यातहृष्टेपु प्रतीत परिकीर्तित ॥ 177 ॥

प्रख्यातिमित प्राप्त प्रतीत [1] ॥

विद्वत्कुलजयोर्जातो जात [2]जात्यौघजन्मसु ।

जायत इति जात [3] ॥

विविक्तमपसवृत्तपूतान्वितरह सु च ॥ 178 ॥

विविच्यत कार्याकायमत्रति विविक्तम् । ' विचिर् पृथग्भाव ' ॥

दृढसोच्छ्रायमूढपु मूर्च्छित परिकीर्तित ।

मूर्च्छास्य सजातति मूर्च्छित [4] । ' मुर्च्छा मोहसमुच्छ्राययो ' ॥ ८२ ॥

[1] K2 adds इण गतौ　　[2] जूत्यौघ° K6　　[3] K5, K4 add जनी प्रादुर्भाव
[4] मूच्छ्यतऽनन J2

(विव ) ख्याते हृष्टे प्रतीत । ख्यात प्रसिद्ध । हृष्ट सतुष्ट । ज्ञातार्थेऽपि प्रतीतशब्द [1] ॥ अभिजातस्तु कुलजे बुधे । कुलजो महाकुलप्रसूत । [2]बुध सकलस्तुत्यत्वेनाभिहित । सर्वत प्रादुर्भूतत्वाद् अभिजात ॥ विविक्तौ पूतविजनौ । अपाकृतहेयभाग धान्यादिक पूतम्, शुद्धमित्यन्ये । यथा—विविक्ता पदार्था इति । विगतो जनोऽस्मादिति विजनो रहस्यस्थानम् । विविच्यते निरसनीय-द्रव्यात् पृथक् क्रियत इति विविक्त [3] । मूर्च्छितौ मूढसोच्छ्रयौ । मोह उच्छ्रायश्च मूर्च्छितशब्दस्यार्थ । मूर्च्छास्य सजाता मूर्च्छित [4] ॥ ८२ ॥

[1] प्रतीयत इति प्रतीत । 'इण् गतौ'। क्त [2] Gm3 omits बुध [3] 'विचिर् पृथग्भावे'। क्त [4] 'तदस्य सजात ' (५ २ ३६) इतीतच्

(पा ) ख्याते [1]हृष्टे प्रतीत । [2]दृष्टे प्रतीत इति क्वचित् पाठ. । 'प्रथिते दृष्टे [3]हृष्टे च ज्ञाते मनीषिते' इति जयकोश ॥ अभिजातस्तु—मूढसोच्छ्रयौ । 'मूर्च्छितो मूढवृद्धयो ' इति जयकोश ॥ ८२ ॥

[1] दृष्टे $A_1$ [2] हृष्टे $A_1$ [3] $B_3$ omits हृष्टे

**द्वौ चाम्लपरुषौ शुक्तौ शिती धवलमेचकौ ।**
**सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ॥ ८३ ॥**

(वि ) आम्ले च परुषे पूते शुक्त स्याद् वाच्यलिङ्गक ॥ *179* ॥

[1]शुच्यत इति शुक्त । '(ई) शुचिर् पूतीभावे' ॥

मेचके धवले चैव शितिशब्द प्रकीर्तित ।

शीयत इति शिति । 'शिञ् [2]निशाने' ॥

सत् प्रशस्ते विद्यमाने सत्याभ्यर्हितसाधुपु ॥ 180 ॥

अस्तीति [3]सत् । 'अस भुवि' ॥ ८३ ॥

[1] शोच्यत इति शुक्त । 'शुच शोके' $K_2$, $K_4$. [2] निशातने $K_2$, $K_3$, $K_4$
[3] पाप स्यतीनि सत् । 'षोऽन्तकर्मणि' $K_2$, $K_3$, $K_4$.

(विव.) द्वौ चाम्लपरुषौ शुक्तौ । इहाम्लशब्देन चिरकालपरिवाससंजातरसान्तर ओदनषाडवादिरम्लविशेष उच्यते । निष्ठुरो वाग्विशेषः परुषः । परिहरणीयत्वेनाम्लसदृशत्वात् परुषवाक्ये शुक्तशब्दस्योपचारिकत्वेऽपि निरूढत्वेन मुख्यतुल्यत्वाद् नानार्थत्वेनाभिधानम् । अत एव स्वामी (पृ. २८६)—'परुषे शुक्तशब्द[1] उपचारात्' इति । शुच्यते क्लिन्नो भवतीति शुक्तः । (ई) शुचिर् पूतीभावे' । [2]ईदित्वादिडागमस्याभावः ॥ शिती धवलमेचकौ । शिनोति स्वबाहुल्येन वर्णान्तरं तनूकरोतीति शितिः । 'शिञ् [3]निशातने' । अथवा 'शो तनूकरणे' । [1]'शाछोरन्यतरस्याम्' (७ ४. ४१) इतीत्वम् ॥ सत्ये

साधौ—च सत्। सत्ये यथा—सद्ब्रह्म। साधौ-सत्पुत्र इति। सन् घटः, सदाकाशम् इति विद्यमाने। सत्कर्मेति प्रशस्ते। अभ्यर्हितः पूजितो यथा—सत्पुरुषः। शेषे—'भवान्यां तु सती, स्त्री स्यान्नक्षत्रे तु नपुंसकम्' इति। 'गगनमिव सत्पथोपशोभि'। [5]नगरमिति शेषः। अस्तीति सन्। 'अस भुवि'। शतृप्रत्ययः। 'श्नसोरल्लोपः' (६. ४. १११) इत्यकारलोपः॥ ८३॥

[1] 'परपे शुक्त उपचारात्' इति मु ग्र [2] 'श्वीदितो निष्ठायाम्' (७ २ १४) इति इडागमो न भवति [3] निशाने Tv [4] क्तिन (३ ३ ६४) [5] नक्षत्रम् Gm3, Tv omits

(पा) द्वौ चाम्लपरुषौ—अभ्यर्हिते च सत्। सत्ये इति धर्मवचनम्। धर्मे नपुसकमेव। 'सत् प्रशस्ते विद्यमाने त्रिषु क्ली सत्यतारयो' इति शाश्वत [1]॥ ८३॥

[1] मुद्रितग्रन्थे तु 'सत् सत्येऽभ्यर्हिते साधौ विद्यमानप्रशस्तयो' इति दृश्यते (अने स पृ २७, श्लो ३०४)

**पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते।**
**निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत्॥ ८४॥**

(वि) पुरस्कृत स्वीकृते चाप्यभियुक्तेऽग्रत कृते।
अभिग्रस्ते पूजिते च शक्ते चाप्यभिधीयते[1]॥ 181॥

पुरस्क्रियत इति पुरस्कृत [2]॥

निवातो दृढसनाहस्थानावातसुवर्मसु।

निर्गतो वातोऽत्रेति निवात॥ ८४॥

[1] अभिधेयवत् J2 [2] J2, K2 add 'डुकृञ् करणे'

(विव.) पुरस्कृतः—अग्रतः कृते। पुरस्कृते गौरवबुद्धिविषये, शत्रुणा अभिक्रान्ते, पुरोभागावस्थापितमात्रे च। 'पुरोऽव्ययम्' (१. ४. ६७) इति गतिसंज्ञायाम्, 'नमस्पुरसोर्गत्यो' (८. ३. ४०) इति विसर्जनीयस्य सकारः॥

निवातौ—वर्म यत् । नियत वायते गम्यत इति निवातः आश्रयः । यथा—'निवात एषामभये स्याम' इति श्रुतिः (तै. स. ५. ७. २. ४) । निषिद्धो वातोऽत्रेति व्युत्पत्त्या वातरहितो देशो निवातः। 'निवातपद्मस्तिमितेन चक्षुषा' इति कालिदासः (रघु. ३. १७) । अभेद्यकवचे यथा—निवातकवचा इति ॥ ८४ ॥

(पा ) पुरस्कृत —वर्म यत् । [1]आश्रयावातौ—निवातो देश । निवाता वसति । शस्त्राभेद्यवर्मणि—निवात तनुत्रम्, निवाता त्राति ॥ ८४ ॥

[1] $B_3$ omits अवात

**जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ।**
**वृद्धिमत्प्रोद्यतोत्पन्ना आदृतौ सादरार्चितौ ॥ ८५ ॥**

## इति तान्तवर्गः

(वि ) उच्छ्रितो वृद्धियुक्ते च [1]प्रोद्धृतोत्पन्नयोरपि ॥ 182 ॥

उच्छ्रीयत इति उच्छ्रित । 'श्रिञ् सेवायाम्'

[2]आदृत सादरेऽपि स्यादर्चिते वाच्यलिङ्गक ।

आद्रियत इत्यादृत । 'दृङ आदरे' ॥

उदास्थित प्रतीहारेऽप्यध्यक्षे प्रणिधौ चरे[3] ॥ 183 ॥

ऊर्ध्वमास्थीयत इति उदास्थित [4] ॥

समाहितो योगभेदे [5]समाधिस्थे यथात्मनि ।
वाच्यवन्निहिते सिद्धे समाधाने समाहितम् ॥ 184 ॥

समाहीयत इति समाहितम् । 'हि गतौ वृद्धौ च' ॥ ८५ ॥

इति तान्तवर्ग [6]

[1] प्रयता° $J_2$ [2] उत्थितशब्दव्याख्या न दृश्यते [3] चले $K_6$ [4] $K_2$, $K_4$ add 'ष्ठा गतिनिवृत्तौ'. [5] समाधिस्थयतात्मनि $J_2$ [6] $K_2$ adds तान्तशब्दसङ्ख्या ६४

(विव.) जातोन्नतप्रवृद्धा स्युरुच्छ्रिताः । जात उत्पन्नः । उन्नतश्च । [1]उद्धतमिति पाठे गर्वितः । प्रवृद्धो [2]बहुलत्वं गतः । यथा—प्रवृद्धो निदाघः इति । 'श्रिञ् सेवायाम्' इत्यतः उत्पूर्वात् क्तः ॥ उत्थितास्त्वमी—उत्पन्नाः । [3]वृद्धिमान समृद्धः । यथा—[4]उत्थितो राजा । प्रोद्यत उद्यतः, उपविष्टः उद्गतश्च । यथा—[5]शयनादुत्थित. । उत्पन्नो जातः । यथा—उत्थित. कोलाहलः । तिष्ठतेरुत्पूर्वात् क्तप्रत्ययः । 'उदः स्थास्तम्भोः'[6] (८. ४. ६१) इति सलोपः ॥ आदृतौ सादरार्चितौ । आदरेण सह वर्तते विषयत्वेनेति सादरशब्देनादरस्य कर्मकारकं विवक्षितम् । यथा—शिष्टैरादृतो मनुः इति । 'दृङ आदरे' । कर्मणि क्तः । अथवा सादरशब्देन कर्ता विवक्षितः । यथा—आदृतः करोति इति । तत्र कर्माविवक्षायां 'गत्यर्थाकर्मक ...' इत्यादिना (३. ४. ७२) कर्तरि क्तप्रत्यय· । तथा च पदमञ्जरी (पृ. ३३२)— 'सकर्मकेभ्यः कर्मविवक्षायामन्यत्रापि[7] क्तः ' इति । अर्चितः पूजितः । यथा—लोकादृतोऽयं देव[8] इति ॥ ८५ ॥

इति तान्तवर्गः [9]

[1] उन्नद्ध° Tj1, Tj2 [2] बहुत्व Tv [3] वृद्धि समृद्धि B6 [4] सूत्थित B5. [5] सहसा B6 [6] Tv adds पूर्वस्य [7] भावे क्त इति मु ग्र. [8] जीव Gm3 [9] B6 adds शब्दसंख्या ६४.

(पा) जातोन्नद्ध—सादरार्चितौ । अनुक्तम्—

सौहार्देऽपि प्रीतिभक्ती प्राणिद्यूत रणेऽपि च ।
पङ्केऽपि पलित कीर्ति पद्धतिश्चेति च त्रयम् ॥
श्वेते तिलेऽपि जामाता यमेऽपि पृथिवीपति ।
स्वैरिण्यामपि मुक्ता स्याद् रिक्त स्यात् काननेऽपि च ॥
तात स्यादनुकम्प्येऽपि मातापि गृहमातरि ।
कन्तु [1]कुसूलकेऽपि स्याद् वृत स्याच्चूचुकेऽपि च ॥
कामुक्या च त्रिगर्ता स्यादक्षत [2]पण्डकेऽपि च ।

[3]देशविशेषे पुलिङ्ग ।

उद्धूतोऽङ्घ्रेश्चालनेऽप्युषित व्युषितेऽपि च ॥

व्युषित नाम पर्युषितम् ।।

स्तिमित निश्चलेऽपि स्यात् सूनृत मङ्गलेऽपि च ।
द्वौ पृषत्पृषतौ स्याता वेदविन्दुयुतेऽपि च ।।
विनीतो वाणिजेऽपि स्यान्निऋतिर्निर्ऋतेऽपि च ।
कुट्टन्या च किराती स्यात् किरातोऽल्पतनावपि ।।

अल्पतनु पृश्नि । [4]' कालुचेयिमणिगिनवाडु ' ।।

विच्छित्तिरङ्गरागेऽप्यलक्ते पल्लवित तथा ।
चर्मण्वती च कदली लक्ष्मीपतिरगेऽपि च ।।

अगे सहकारे ।।

रतध्वनौ तु [5]हारीत कोकिलक्वणितेऽपि च ।
रङ्गमाता तु लाक्षाया कुट्टन्यामपि सा भवेत् ।।
वसन्तदूती वासन्त्या चूतकोकिलयोऽस्तु ना ।
अस्वन्त मरणे चुल्ल्या द्वास्येऽध्यक्षेऽप्युदास्थित ।
कच्छपे पञ्चगुप्त स्याच्चार्वाकाणा मतेऽपि च ।
[6]धान्यादिवन्धने मूत राज्ञा हस्तोपधानके ।।
उत्पात प्रतिवन्धे स्यादुत्खात विषमस्थले ।
दिवाभीतस्तु चोरे स्यादुलूके कुमुदाकरे ।। ८५ ।।

इति तान्तवर्ग

[1] कुशूलके $A_1$. [2] पण्डके $A_1$, $C_1$ [3] देशे $A_1$ [4] $B_3$, $C_1$ omit
[5] हरितम् $B_3$ [6] $A_1$ adds सुखेऽह्नि च करस्थितम्

**अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।**
**निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ।। ८६ ।।**

(वि) [1]अर्थं प्रकारे विषये वित्तकारणवस्तुषु ।
अभिधेये च शब्दाना निमित्ते च प्रयोजने ।। 185 ।।

अर्थ्यत इत्यर्थ । ' अर्थ [2]याच्ञायाम् ' ।।

तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भोनिपानस्त्रीरज सु[3] च ।। 186 ।।

जवेन पापानि तरन्त्यनेनेति तीर्थम्[1] । 'तॄ प्लवनतरणयो ' ।। ८६ ।।

[1] J2, K2, K4 add

अनीकस्थो रणखरे स्यानस्थे गजशिक्षके ।
राजरक्षिषु चिह्ने च वीरमदलकेऽपि च ।।

अनीके तिष्ठतीत्यनीकस्थ । 'ष्ठा गतिनिवृत्तौ'

[2] उपधाच्छायाम् इति धातुपाठग्रन्थेषु

[3] °अम्भोनिपा स्त्रीणा रजस्यपि K6, °रज सु च J2

[4] अनेनावतरति K4 K6

(विव ) अर्थो—निवृत्तिषु । अभिधेय शब्दप्रत्याय्य । यथा—शब्दार्थौ काव्यम् इति । रा धनम् । यथा—न्यायेनार्जनमर्थानाम् इति । वस्तु प्रमाणसिद्ध स्वरूपम् । यथा—षट् पदार्था, षोडश पदार्था इति । प्रयोजनमुद्देश्यम् । यथा—ओदनार्थास्तण्डुला । ओदनप्रयोजना इत्यर्थ । धर्मार्था पत्नी । किमर्थं [1]गमनम् । कोऽर्थोऽनेन साध्यते । [2]'एका क्रिया द्व्यर्थकरी प्रसिद्धा' (म भाष्य १ १. १ ) । निवृत्तिवचनस्यार्थसिद्धस्य नित्यसमासनियम । तथा च शब्दप्रकाशे भोजराज —'बहुव्रीहावुत्तर स्यादर्थशब्दो निवृत्तिवाक्' इति । निवृत्तिवचनस्यार्थशब्दस्य समस्तत्वमुत्तरपदत्व च नियतमित्यर्थ । यथा—मशकार्था धूम । तस्करार्थोऽर्गलबन्ध इत्यादि । अर्थ्यते प्रार्थ्यत इत्यर्थ[3] । अथवा 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' (उ २ ४) इति । इन्द्रियार्थे रूपादय । अर्थोल्लेखि[4] ज्ञानमित्यादौ विषयरूपार्थेऽप्यर्थशब्द । तत्र विषयप्राकट्यस्य प्रयोजनत्वात् कथचित् प्रयोजनपदेनैव सगृहीत ।। निपान—गुरौ । [5]'निपानमाहाव ' इति प्रागुक्तम् (पृ १७३)। यथा—' वेदतीर्थमिद शास्त्र सुलभ धर्ममिच्छताम्' इति । 'निदानागमयो ' इति केचित् पठन्ति । तत्र निदान मलकारणम् । यथा—ज्ञानतीर्थं गुरोर्वच इति । आगम शास्त्रम् । यथा—तीर्थकर इति । महर्षिसेवितजले[6]—तीर्थयात्राप्रसक्तोऽयमिति । गुरौ यथा—तीर्थात्तविद्य इति । तरत्यनेन पापमज्ञान वेति तीर्थम् । 'तॄ प्लवनतरणयो ' । थक्प्रत्यय[7] । 'ऋत इद्धातो ' (७ १ १००) इतीत्वम् । 'र्वोरुपधाया दीर्घ इक ' (८ २ ७६) इति दीर्घ । अन्यत्रापि—

'तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु ।
अवतारर्षिजुष्टाम्भ स्त्रीरज सु च शब्द्यते ॥'

इति । अध्वरे यज्ञे । यथा—तीर्थेष्वालभते पशून् इति । उपाध्याये यथा—'बलवान् प्रकृतिस्थोऽपि विना तीर्थं विनश्यति' । मन्त्रिणि यथा—सत्तीर्थस्त्यस्तभार इति । अत्र मन्त्रिग्रहण मन्त्रिसेनापतिपुरोहितादीना नीतिशास्त्रप्रसिद्धानामष्टादशानामप्युपलक्षणम् । तेषामुद्देशलक्षणविषये ग्रन्थगौरवभयादुपरम्यते । अवतारो जलावतरणमार्ग । यथा—'कृततीर्थं पयसामिवाशय' (किरा २ ३) इति । स्त्रीरजसि यथा—'चण्डालीसदृशी ज्ञेया सतीर्था प्रथमेऽहनि' इति । 'तीर्थं सत्रिणि पात्रे च' इति स्वामी (पृ २९०) । सत्रिणि दीक्षिते यथा—'नास्ति तीर्थस्य सूतकम्' इति । पात्रे यथा—'तीर्थगामि करवं विधानत' इति माघकाव्ये ॥ ८६ ॥

[1] धनम् Tj1, Tj2 [2] 'एका क्रिया द्वचयकरीह लोक' Vayu P (Apte's Dict p 847) [3] B6 adds अथ उपयाच्यायाम् [4] अर्थो वैचित्र्यज्ञानम् Tv [5] इद पाणिनीयसूत्रम् (३ ३ ७४), अमरपाठस्तु 'आहावस्तु निपान स्यात' इति (पृ १७३) [6] Gm3, Tv add भागीरथ्यादौ [7] 'पातृतुदि ' (उ २ ७) इति थक

(पा) अर्थो—निवृत्तिषु । अभिधेय शब्दवाच्यम् । रै [1]इति धनम । वस्त्विति पदार्थ । प्रयोजन कार्यं च कारण च [2]स्यात् । 'कार्ये हेतौ प्रयोजनम्' इति वैजयन्ती (प २७३ श्लो ८) । [3]धर्मार्थ धनम् । निवृत्ति प्रवृत्तिविपयय । गशकार्यो धूम ॥ [4]निदान—गुरौ[5] । निदानमुपाय । आगम शास्त्रम् । ऋषिजुष्टजल पावनोदकम् । गुरुरुपाध्याय ।

'तीर्थं मन्त्राद्युपाध्यायशास्त्रप्स्वम्भसि पावन ।
पात्रोपायावतारेषु स्त्रीपुष्प योनियज्ञयो ' ॥

इति वैजयन्ती (पृ २२५, श्लो १३) ॥ ८६ ॥

[1] B3 omits इति [2] B3 omits स्यात् [3] धमय A1 [4] निपा॰ C1
[5] B3 adds यथा जलावतरणमार्गे मन्त्र न सस्पृते'

समर्थस्त्रिषु शक्तिस्थे सबद्धार्थे हितेऽपि च ।
दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥ ८७ ॥

(वि )　समर्थस्त्रिषु शक्तिस्थे संबन्धार्थे हितेऽपि च ।

[1]समर्थ्यत इति समर्थ.[2] ॥

दशमीस्थो नष्टबीजे स्थविरेऽपि प्रचक्षते ॥ 187 ॥

दशम्या तिष्ठतीति दशमीस्थ ॥

[3]वीथी गृहाङ्के पङक्तौ च [4]रूपकान्तरवर्त्मनो. ।

वियन्ति गच्छन्त्यनयेति वीथी[5] । 'वी गत्यादौ' ॥ ८७ ॥

[1] समर्थयते J2　[2] J2, K4 add 'अर्थ याच्ञायाम्'.　[3] K3 omits 6 lines　[4] कार्ये रूपकवर्त्मनो K6　[5] वीथि K2, K4

(विव.)　समर्थस्त्रिषु शक्तिष्ठे संबन्धार्थे हितेऽपि च । इष्ठन्प्रत्ययान्तेन शक्तिष्ठशब्देन शक्तयतिशयसंपन्न उच्यते । यथा—समर्थः कार्यनिर्णय इति । संबन्धार्थोऽन्वितार्थः । यथा—'समर्थः पदविधिः' (२. १. १) । हिते यथा—एतत् समर्थं तव यन्मयोदितम् इति । समर्थयते उपकारं संपादयतीति समर्थः । 'अर्थ उपयाच्ञायाम्'[1] ॥ दशमीस्थौ क्षीणरागवृद्धौ । दशम्यां वयोऽवस्थायां नवतिवयस उपरितन्यां तिष्ठतीति दशमीस्थः वृद्धः । चक्षुःप्रीत्यादिकामुकावस्थानां दशानां मध्ये दशम्यामवस्थायां मूर्च्छावस्थाया उत्तरस्यां मरणोद्योगलक्षणायां तिष्ठतीति दशमीस्थः । स च प्राप्त्याशाविच्छेदेन मरणोद्युक्ततया प्रक्षीणगौरवत्वेन क्षीणरागशब्देनोक्तः । 'क्षीणरागो नष्टबीजः' इति [2]सुभूतिचन्द्रः । सोऽपि वृद्धसादृश्यात् लक्षणया वृद्धशब्देनोक्तः ॥ वीथी पदव्यपि । पदवी मार्गः । वियन्ति गच्छन्त्यनयेति वीथी । 'वी गतिप्रजनकान्त्यसनखादनेषु' । 'वियः किथः'[3] । यथा—राजवीथी इति । शेषे—'वीथी पङक्तावश्वगतौ नाट्यभेदे गृहाङ्गणे' इति । पङक्तौ यथा—'रसालवीथ्यामिह [4]संचरामः' इति । अश्वगतौ यथा—'सिद्धं मुखे नवसु वीथिषु कश्चिदश्वम्' इति माघे (शिशु. ५. ६०) । नाट्यभेदः 'नाटकं सप्रकरणम्...' (दशरू. १. ८) इत्यादिनोक्तोऽष्टमो रूपकभेदः ॥ ८७ ॥

[1] पचाद्यच् (३ १ १३४)　[2] B5, B6 omit सुभूति　[3] विथ्यतेऽनया । 'विथृ याचने'। इगुपधात् किदितीन्। बाहुलकाद्दीर्घः [वा ङीप्] इति श द्रु. (पृ ४७०)
[4] वीथ्यामित्यत्र तृतीयाभावादात्मनेपद न भवति (१ ३ ५४)

(पा.) समर्थस्त्रिषु—रागवृद्धौ । क्षीणरागो नष्टवीज इति सुभूतिटीका ॥ [1]वीथि पदव्यपि । 'वोथि'[2] गृहालौ[3] पङ्क्तौ च नाटयरूपकवर्त्मनोः इति विश्वः[4] (पृ. ७६, श्लो. ११) ॥ ८७ ॥

[1] वीथी $C_1$. [2] वीथी इति मु ग्र. [3] गृहाङ्गे इति मु ग्र [4] विश्वकोश. $B_3$.

**आस्थानीयत्नयोरास्था प्रस्थोऽस्त्री सानुमानयोः ।**

**इति थान्तवर्गः**

**अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ ॥ ८८ ॥**

(वि.) आस्था चालम्बनास्थानयत्नापेक्षासु कथ्यते ॥ 188 ॥

आस्थीयत इत्यास्था[1] ॥

प्रस्थोऽस्त्री शिखरे माने सानौ च परिकीर्तितः ।

प्रस्थीयत इति प्रस्थ ॥

इति थान्तवर्गः[2]

छन्दो वशेऽभिप्राये हृदाख्याचित्तवृत्तयोः ॥ 189 ॥

[3]छन्द्यत इति छन्दः । 'छदि सवरणे' ॥

अब्दः सवत्सरे मेघे गिरिभेदे च मुस्तके ।

अपो ददातोति अब्द.[4] ॥ ८८ ॥

[1] $K_2$, $K_4$ add 'ष्ठा गतिनिवृत्तौ'. [2] $J_2$, $K_2$ add थान्तशब्दसख्या ७.
[3] छन्दयतीति, 'छदि आच्छादने' $K_2$, $K_4$ [4] $J_2$, $K_2$ add 'दा दाने'.

(विव.) आस्थानीयत्नयोरास्था । आतिष्ठन्त्यस्यां सभायामित्यास्था । [1]'व्यवस्थायामसंज्ञायामिति ज्ञापकात्' (३. ३. ९५, काशिका पृ. २२१) तिष्ठतेः 'आतश्चोपसर्गे' (३. ३. १०६) इत्यधिकरणे भावे चाङ प्रत्ययः । प्रतिज्ञायां

तात्पर्ये च ॥ प्रस्थोऽस्त्री सानुमानयोः । सानुः पर्वतोपरितनः समदेशः । मानमिति आढकचतुर्थांशो मानविशेषः ॥

इति थान्तवर्गः

अभिप्रायवशौ छन्दौ । अभिप्राय आशयः । यथा—[2]'मूर्खं छन्दानुवृत्तितः' (चाणक्य. १५१) । वशे यथा—स्वच्छन्दहृदयः ॥ अब्दौ जीमूतवत्सरौ । जीमूतः मेघः । शेषे—'गिरिदर्पणयोरब्दः' इति 'साधुरब्द इव भूतिसङ्गमान्निर्मलो ननु सुवृत्ततां वहन्' इति [3]धर्माभ्युदये दर्पणे प्रयोगः ॥ ८८ ॥

[1] पूर्वपरावर इति सूत्रे (१ १ ३४) (पृ १२६). [2] मूर्खं छन्दोऽनुवृत्तेन इति मु प्र [3] धर्माभ्युदयदर्पणे B₅, B6

(पा) आस्थानी—सानुमानयो । मान परिमाणविशेष । अनुक्तम्—

शास्त्रद्रविणयोर्ग्रन्थ. सस्था चारे स्थितौ मृतौ ।

द्रविण द्रव्यम् । 'ग्रन्थो द्रव्य वच शास्त्र द्वात्रिशद्वर्णसचय ' इति वैजयन्ती (पृ २१५, श्लो २१) ॥ स्थितिर्मर्यादा ॥

अश्वत्थ पूर्णिमाया च ब्राह्मणे च चतुष्पथ ।
[1]ग्रन्थि कुटिलताया च रथ स्याच्चरणेऽपि च ।
निशीथो रात्रिमात्रे च स्यादमर्षेऽपि चातिथि ।
अनीकस्थो रणखले [2]स्फीतमर्दलकेऽपि च ।
अपार्थवाच्यपि कथा स्यादश्रद्धेयवाचि च ।
पीथ तु वक्त्रनीते स्यात् पाथस्यपि पयस्यपि ॥ ८८ ॥

इति थान्तवर्ग

[1] B₂ omits 4 lines [2] गजशिक्षाविचक्षणे C1

अपवादौ तु निन्दाज्ञे दायादौ सुतबान्धवौ ।
पादा रश्म्यङ्घ्रितुर्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः ॥ ८९ ॥

(वि ) अपवादस्तु निन्दायामाज्ञाविस्रम्भयोरपि ॥ 190 ॥

अपवदतीत्यपवाद । 'वद व्यक्ताया वाचि' ॥

दायादो बान्धवेऽपि स्यात् [1]सुतेऽपि परिकीर्तित ।

दायमत्तीति दायाद । 'अद भक्षणे' ॥

पादो बुध्ने तुरीयाशे शैले प्रत्यन्तपर्वते ॥ 191 ॥
चरणे च [2]मयूखे च क्षोदो रजसि पेषणे ।

पद्यत इति पाद । [3]'पद गतौ' ॥ क्षुद्यत इति क्षोद ॥

चन्द्रेऽपि सूर्ये वह्नौ च तमोनुत् परिकीर्तित ॥ 192 ॥

तमो नुदतीति तमोनुत् । 'णुद[4] प्रेरणे' ॥ ८६ ॥

[1] शुभेऽपि $J_2$ [2] चमूभेदे $K_5$, $K_6$ [3] 'पद्ल सेवायाम्' $K_3$, $K_6$
[4] नुद $K_2$, $K_4$

(विव.) अपवादौ तु निन्दाज्ञे । निन्दायां प्रागुक्तः (१, पृ· १११)। अवनतान् प्रति वादो[1] वदनं कार्ये नियोजनमाज्ञा। शासनमित्यर्थः ॥ दायादौ सुतबान्धवौ । दीयत इति दायो[2] धनम् । तथाभूतं रिक्थमप्रतिबन्धमादत्त इति दायादः पुत्रः । स्वामिनाशे सति दायमादत्त इति दायादो[3] बान्धवः पत्नीभ्रात्रादिसपिण्डः ॥ पादा रश्म्यङ्घ्रितुर्यांशाः । रश्मिः किरणः । तुर्यांशः चतुर्थभागः । कर्तरि 'पदरुजविशस्पृशो घञ्' (३· ३· १६) कर्मकरणादौ च भवति ॥ [4]शेषे—'पाद' स्याद् बुध्नपूज्ययोः' इति। बुध्नो वृक्षमूलम्[5]। पूज्ये यथा—तातपादा इति। 'पादा· प्रत्यन्तपर्वताः' इति गतम् (१, पृ· २१३) ॥ चन्द्राग्न्यर्कास्तमोनुदः । अर्कः सूर्यः । 'णुद प्रेरणे' इत्यस्मात् क्विपि तमोनुत् ॥ ८६ ॥

[1] 'वद व्यक्ताया वाचि'। घञ्. [2] 'आतो युक्चिण्कृतो' (७ ३ ३३) इति युक् [3] 'डुदाञ् दाने'। 'आतश्चोपसर्गे' (३ १ १३६) इति क [4] Gm3, Tv add 'पादो बुध्नाङ्घ्रितुर्यांशरश्मिप्रत्यन्तपर्वता' इति नानार्थसग्रह [5] Gm3 adds अत एव तस्य पादप इति नाम

(पा ) अभिप्राय—सुतबान्धवौ । बान्धव सपिण्ड । पादा—तमोनुद । रश्मि किरण ॥ ८६ ॥

**निर्वादो जनवादेऽपि शादो जम्बालशष्पयो. ।**
**सारावे रुदिते त्रातर्याक्रन्दो दारुणे रणे ॥ ६० ॥**

(वि ) निर्वाद स्यात् परीवादे परिनिष्ठितवादयो ।

नितरा वदतीति निर्वाद [1] ॥

शादो बालतृणेऽपि स्याज्जम्बाल च प्रकीर्तित ॥ 193 ॥

शद्येते पादावत्रेति शाद । 'शद्लृ शातने' ॥

आक्रन्दो दारुणे शब्दे मित्त्र त्रातरि रोदन ।
आरावेऽपि समाख्यातस्तन्त्रान्तरविशारदै ॥ 194 ॥

[2]आक्रन्दयतीत्याक्रन्द । [3]'क्रदि आह्वाने रोदने च' ॥ ६० ॥

[1] K2, K4 add वद व्यक्ताया वाचि [2] आक्रन्दति J2 [3] 'क्रन्दि क्रोशे' K2 K3 K4

(विव ) निर्वादो जनवादेऽपि । जनवादो निन्दा । निषिद्धो वाद निर्वाद । शेषे—'निर्वादो निश्चिते वादे वादाभावे नवव्ययम्' इति । वादस्याभावो निर्वाद [1]। 'अव्यय विभक्ति . ' इत्यादिना (२ १ ६) भावार्थेऽव्ययीभावे सति नपुसकम् । 'अव्ययीभावश्च' (२ ४ १८) इति नपुसकाव्ययोभयरूपत्वमित्यर्थ ॥ शादो जम्बालशष्पयो । जम्बाल पङ्क । शष्प [2]नवतृणम् । [3]शद्यते छिद्यत इति शाद । 'शद्लृ शातने'[4] ॥ सारावे—रणे । रुदितमिति [5]भावे निष्ठा । आराव आक्रोश । तत्सहिते रोदने इत्यर्थ । सुबोधिनीकारस्तु—आराव इत्यजादि पठित्वा पक्ष्यादिशब्द आराव इति व्याचष्ट । [6]पार्ष्णिग्राहकृताद् भयाद् विजिगीषु यो रक्षति स त्राता । तदुक्तम्—[7]'पार्ष्णिग्राहस्तत पश्चादाक्रन्दस्तदनन्तर' इति केचित् । त्रातृशब्देन रक्षकमात्रमुच्यत इति केचित् । यथा—'निराक्रान्दमिद जगत्' इति (टी स पृ १०५) । दारुण इति युद्धविशेषणम् । 'क्रदि आह्वाने रोदने च' इत्यस्माद् यथायोग भावे कर्मण्यधिकरणे च घञ् ॥ ६० ॥

[1] 'वद व्यक्ताया वाचि'। घञ् [2] 'शष्प बालतृणम्' इति वनौषधिवर्गे (पृ ३१६) [3] शीयते B5, B6 [4] 'हलश्च' इति घञ् [5] भाववचनम् Gm3, Tv [6] Tv adds विजिगीषोर्नायकस्य [7] 'पार्ष्णिग्राह च सम्प्रेक्ष्य तथाक्रन्द च मण्डले' इति मनु (७ २०७), 'पश्चात् पार्ष्णिग्राह आक्रन्द' इति कौ अर्थ (६ २)

(पा) निर्वादो जनवादेऽपि। [1]निन्दायामपि स्यात्॥ शादो—दारुणे रणे। रुदिते इति विषयसप्तमी। रुदितस्यारावे इत्यर्थ·। दारुणे इति विशेषणम्[2] ॥ ९० ॥

[1] B3, C1 add अपिशब्दात् [2] A1 adds दारुणभूते रणे इत्यर्थ

**स्यात् प्रसादोऽनुरोधेऽपि सूदः स्याद् व्यञ्जने त्रिषु ।**
**गोष्ठाध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन्मदः ॥ ९१ ॥**

(वि) प्रसादोऽनुग्रहे कार्ये प्रसक्तौ चानुवर्तते ।

[1]प्रसीदत्यनेनेति प्रसाद । 'षद्लृ विशरणगत्यवसादनेषु'[2]

सूदस्तु सूपकारे च सूपे च व्यञ्जनेऽपि च ॥ 195 ॥

सूदयति [3]हिङगुमरीचादिगताल्पप्राणिन इति सूद । 'षूद क्षरणे'[4] ॥

गोविन्दो वासुदेवे स्याद् गवाध्यक्षे बृहस्पतौ ।

गा विन्दतीति गोविन्द । 'विद्लृ लाभे' ॥

मदो [5]रेतसि कस्तूर्यां गर्वे हर्षेभदानयो ॥ 196 ॥
आमोदमद्ययोश्चैव मदनीये च वस्तुनि ।

मदयतीति मद । 'मदी [6]हर्षग्लपनयो' ॥ ९१ ॥

[1] K8 omits अनेन [2] विशरणादौ K3, K6 [3] °मरिच° K4 [4] J2 adds हिंसाया च [5] मदेऽपि K2, K6 [6] हर्षे J2

(विव.) स्यात् प्रसादोऽनुरोधेऽपि। अनुरोधोऽनुग्रहः। यथा—'प्रसादाभिमुखो वेधाः' इति (कु स. २. १६)। शेषे—'स्वास्थ्ये प्रसादः काव्यस्य प्राणे

नैर्मल्यहर्षयोः' इति। स्वस्थत्वे यथा—प्रसन्नं हृदयम्। काव्यस्य प्राणो नाम 'श्लेषः प्रसादः समता' (काव्यादर्शे १. ४१) इत्याद्यनुक्रम्य 'प्रसादो व्यासमार्दवम्' [1]इत्यालंकारिकोक्तलक्षणः। निर्मलत्वे यथा—सप्रसादं जलमिति[2]। प्रसीदत्यनेनेति प्रसादः[3]। करणे घञ्॥ सूदः स्याद् व्यञ्जनेऽपि च। व्यञ्जनं निष्ठानादि। सूद्यते पच्यत इति सूदः। 'षूद क्षरणे हिंसायां च'। अपिशब्दाद् औदनिके प्रागुक्तः (पृ. ५७०)॥ गोष्ठाध्यक्षेऽपि गोविन्दः। [4]अपिशब्दाद् विष्णौ बृहस्पतौ च। गा विन्दते लभत इति गोविन्दः। 'विद्लृ लाभे'। 'गवादिषु विन्देः संज्ञायाम्'[5] (वा. ३. १. १३८) इति शप्रत्ययः॥ हर्षेऽप्यामोदवन्मदः। आमोदशब्दो यथा हर्षे वर्तते तथा मदशब्दोऽपीत्यर्थः। अपिशब्दाद् 'आमोदः सोऽतिनिर्हारी' इत्युक्तम् (पृ. ६७)। आ समन्ताद् मोदन्तेऽनेनेति आमोदः। 'मुद हर्षे'। घञ्॥ माद्यन्त्यनेनेति मदः। 'मदी हर्षे'[6]। 'मदोऽनुपसर्गे' (३. ३. ६७) इत्यप्। शेषे— 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति॥ ९१॥

[1] आलकारिकैरुक्तम् Tv.　　[2] Tv adds हर्षकार्यो भावो विवक्षित। यथा—'मुखप्रसादेनानुमित प्रमोद' इति। 'प्रसादो यश्च पैतृक' इत्यादावपि पितृप्रसादलब्धधने लक्षणया प्रसाद प्रयुक्त　　[3] $T_{J1}$ adds 'षद्लृ विशरणादौ'　　[4] $Gm_1$, Tv add गोष्ठाध्यक्ष पशुष्वधिकृत　　[5] $Gm_1$ adds उपसंख्यानम्　　[6] $B_5$, $B_6$ add ग्लपनयो.

(पा) स्यात् प्रसादोऽनुरोधेऽपि[1]। 'प्रसादोऽनुग्रहे [2]काव्यप्राणस्वास्थ्य[3]-प्रसक्तिषु[4]' इति विश्व (पृ. ७६, श्लो २०)॥ सूद. स्याद् व्यञ्जनेऽपि च। 'सूदस्तु सूपवत् सूपकारे च व्यञ्जनेऽपि च' इति विश्व (पृ ७८, श्लो ७)॥ गोष्ठाध्यक्षेऽपि गोविन्द। विष्णावपि स्यात्॥ हर्षेऽप्यामोदवन्मद। आमोद-परिमलेऽपि स्यात्। मदो गजदानेऽपि स्यात्॥ ९१॥

[1] अनुरागेऽपि $C_1$.　　[2] काव्यगुण° इति मु ग्र　　[3] स्वाच्छय° $A_1$, $B_3$. [4] °प्रसत्तिषु $A_1$

**प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्।**
**स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु॥ ९२॥**

(वि) प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्॥ 197॥

क शिर इव तिष्ठतीति ककुत् । ककुदश्च । 'ष्ठा गतिनिवृत्तौ' ।।

स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ।

[1]सम्यग् विद्यतऽनयेति संवित् । विद ज्ञाने'[2] ।। ६२ ।।

[1] सम्यग्वेत्तीति K1 K6 [2] J2 adds तोषणे च प्रतिज्ञाया सकेताकारयोरपि

(विव) प्राधान्ये—अस्त्रियाम् । प्रधानमेव प्राधान्यम् । स्वार्थिक [1]ष्यञ् । यथा—'इक्ष्वाकुवंश्य ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत्' इति कालिदास[2] (रघु ६ ७१) । राजलिङ्ग कनकच्छत्रचामरादि[3] । यथा— 'नृपतिककुदं दत्त्वा यूने सितातपवारणम्' इति (रघु ३ ७०) । वृषभस्य पृष्ठभागे [4]ग्रीवामूलस्थोऽवयवविशेषो वृषाङ्गम् । यथा—'ककुदे वृषस्य कृतबाहुम्' इति (किरा १२ २०) । क सुख कु भूमि च ददातीति ककुदम् । ककुच्छब्दो दकारान्तोऽप्येष्वर्थेषु वर्तते । तथा च[5] रुद्र —'स्त्री ककुत् ककुदोऽस्त्री राट्चिह्ने श्रेष्ठवृषाङ्गयो' इति । के शिरसि कुदतीति (?) ककुत् ।। स्त्री संवित्— आजिनामसु । सम्यग् भाषण संभाषा । सकेत इति केचित् । क्रियाकारो निश्चय । यथा—'धर्मतत्त्वस्य संदेहे वर्तयेद् वृद्धसंविदा' इति[6] । अत्र प्रताप —

'संविज् ज्ञाने प्रतिज्ञायां सकेताचारनामसु ।
संभाषणे तोषणे च क्रियाकारे च संगरे ।।'

इति । ज्ञाने यथा—'एकसंविदि विभाति भेदधी' इति । सकेते यथा—संविद्व्यतिक्रम इति । संभाषणे यथा—'प्रौढ संविदि गोष्ठिषु' इति ।। ६२ ।।

[1] चातुर्वर्ण्यादीनां स्वार्थ उपसंख्यानम् (वा ५ १ १२४) [2] Gm1, Tv add रघुवंशे [3] Tv adds चिह्नम [4] °मूलवर्त्यवयव° Gm1 [5] Tj1, Tj2 add दकारान्तेषु [6] Gm3 Tv add आजि युद्धम नाम संज्ञा

(पा) प्राधान्य—अस्त्रियाम् । प्राधान्य प्रधानम् । 'श्रेष्ठे वृषाङ्गे राजाङ्के[1] ककुदोऽस्त्री ककुन्न [2]पण्' इति वैजयन्ती (पृ २७९, श्लो २८) ।। स्त्री संवित—आजिनामसु । [3]संभाषा संभाषणम् । क्रियाकार क्रियानियम ।

आजिर्युद्धम्। 'सविद् युद्धे प्रतिज्ञाया सकेताचारनामसु' इति वैजयन्ती (पृ. २२३, श्लो. ४१) ॥ ६२ ॥

[1] A1 omits राजाङ्के　[2] न पण् स्त्रीपुंसयोरित्यर्थ　[3] B3 omits the sentence.

**धर्मे रहस्युपनिषत् स्यादृतौ वत्सरे शरत् ।**
**पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ॥ ६३ ॥**

(वि.)　भवेदुपनिषद् धर्मे वेदान्तेऽपि[1] रहस्यपि ॥ 198 ॥

सर्वमत्र निषीदतीत्युपनिषत् । 'षद्लृ विशरणादौ'[2] ॥

ऋतौ सवत्सरे चैव शरच्छब्द. प्रकीर्तित. ।

पङ्क जल च शृणातीति शरत् । 'शॄ हिंसायाम्' ॥

पद शब्दे च वाक्ये च व्यवसायापदेशयो. ॥ 199 ॥
[3]पादान्तचिह्नयोस्त्राणस्थानयोरङ्कवस्तुनो. ।

पद्यत इति पदम् । 'पद गतौ' ॥ ६३ ॥

[1] च *for* अपि J2　[2] J2, K2 add *°गत्यवसादनेषु*　[3] *°चिह्नयो स्थान°* J2

(विव.)　धर्मे रहस्युपनिषत् । रह इति [1]निगूढार्थवचनम् । अप्रकाशमाने यस्मिन् कस्मिंश्चिदर्थ इत्यर्थः । यथा—'मन्मथोपनिषदं मधुव्रताः' इति । वेदान्तानां रहस्यभूते ब्रह्मप्रतिपादकभागेऽपि उपनिषच्छब्दः । यथा—'एषा वेदोपनिषत्' इति (तै. उप. १. ११. ४) । तत्त्वेऽपि । यथा—'धर्मस्योपनिषत् परा' । [2]उपनिषच्छब्दः स्त्रीलिङ्गः । स्यादृतौ वत्सरे शरत् । ऋतुः आश्वयुज-कार्त्तिकमासात्मकः । वत्सरे—'शरदामयुतं ययौ' (रघु. १०. १) ॥ पदं—वस्तुषु । [3]व्यवसितं व्यवसायः । उद्योग इत्यर्थः । यथा—[4]'कृत्याकृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम्' इति माघः (शिशु. २. १११) । त्राणं रक्षणम् । यथा—'पदं यदा पतिमृतिः' इति । स्थानम् आश्रयः । यथा—[5]'शिरसि लब्धपदं कुसुमम्' । लक्ष्म चिह्नम् । यथा—'नवनखपदमङ्गं गोपयस्यंशुकेन' इति (शिशु. ११. ३४) ।

अङ्घ्रौ पादे यथा—[6]न्यस्त पद शिरसि विद्विषाम् इति। वस्तुमात्रे यथा—विवादपद द्रव्यम् इति। [7]शाश्वतकोशेऽपि (पृ. ५, श्लो. ३७)—

'व्यवसाये परित्राणे पादतच्चिह्नयोरपि ।
वस्तुस्थानापदेशेषु पद स्याद्वाक्यशब्दयो' ॥'

इति। अपदेशे व्याजे यथा—'क्षितिपदेन निवृत्तिमुपेयिवान्' इति। शब्दः सुबन्ततिडन्तात्मकः। यथा—'सुप्तिडन्त पदम्' इति (१. ४. १४)। वाक्ये यथा—'वाक्य वेदोपमम्' इति। पदचिह्ने यथा—'क्षितिषु ददृशिरे पदानि जिष्णोररहितकेतुरथाङ्गलाञ्छनानि' इति ॥ ९३ ॥

[1] सप्तम्यर्थेऽव्ययम् B8 [2] उपनिपीदति श्रेयोऽस्या वा। 'पदल विशरणादौ। सपदादि [°दिभ्य क्विप्] (वा ३ ३ ९४) इति भा दी (पृ ४७६) [3] व्यवसिति B5, B6 [4] कृत्वा इति मु ग्र (पृ ६२) [5] सूर्याशिव शिरसि (शशिनि Gm1) लब्धपदा यथैव Tv [6] कुरु घनोरु पदानि शनै शनै (वेणी २ २१) Gm3 [7] Gm1 adds 'पद स्थाने परित्राणे व्यवसायापदेशयो' इति [अजय टी स पृ १०६]

(पा) धर्मे रहस्युपनिषत्। रहो[1] रहस्यार्थं। 'रहस्यार्थे तूपनिषद् धर्मवेदान्तयोरपि' इति वैजयन्ती (पृ २७१, श्लो ३) ॥ स्यादृतौ वत्सरे शरत्। स्त्रीति [2]एतावदधिकार ॥ पद—वस्तुषु। लक्ष्म सिकतादिप्रदेशे दृश्यमान [3]पादचिह्नम्।

पद स्थाने परित्राणे व्यवसायापदेशयो ।
वाक्ये वस्तुनि शब्दे च पादतच्चिह्नयोरपि ॥

इति जयकोश [4] ॥ ९३ ॥

[1] A1 adds नाम [2] तदेतदधिकार A1 [3] °मानपाद° B3 [4] इत्यजय A1, टीकासवस्वे च (पृ १०६)

**गोष्पदं सेविते माने प्रतिष्ठा कृत्यमास्पदम् ।**
**त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ ९४ ॥**

(वि) सेविते चैव माने च गोष्पद परिकीर्तितम् ॥ 200 ॥

[1]गो पद गोष्पदम् ॥

आस्पद तु पदे कृत्ये प्रतिष्ठाया प्रकीर्तितम् ।

आ समन्तात् [2]पद्यत इत्यास्पदम्[3] ॥

स्वादुर्मनोज्ञे हृष्टे च मधुरे च त्रिलिङ्गकः ॥ 201 ॥

स्वाद्यते आस्वाद्यत इति स्वादुः । [4]'ष्वद आस्वादने' ॥

[5]अतीक्ष्णेऽपि मृदुः प्रोक्त. कोमले विशिखेऽपि च ।

[6]मृद्यत इति मृदु. । 'मृद क्षोदे' ॥ ६४ ॥

[1] K3 omits [2] प्रपद्यते J2 [3] J2, K2 add 'पद गतौ'. [4] 'अद भक्षणे' K2, K3. [5] अतिशेपे J2, K4 [6] मर्द्यते J2

(विव.) गोष्पदं सेविते माने । गावः पद्यन्ते यस्मिन् देशे,[1] स हि सेवितशब्देनोच्यते। यथा—गोष्पदान्यरण्यानीति। मीयतेऽनेनेति मानं गोखुरश्वभ्रम्। यथा—'गोष्पदपूरं वृष्टो देवः' इति (काशिका पृ. १४७)। गोष्पदमात्रं [2]क्षेत्रमिति। 'गोष्पदं सेवितासेवितप्रमाणेषु' (६. १. १४५) इति साधुः[3]। अत्र काशिकाकारः (पृ. १४७)—'नात्र गोष्पदं [4]स्वार्थमुपादीयते। किं तर्हि। क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम्' इति॥ प्रतिष्ठा कृत्यमास्पदम्। आत्मयापनाय [5]स्थापनं प्रतिष्ठेति काशिका (पृ. १४७)। आस्पदमनेन लब्धम्। प्रतिष्ठा अनेन लब्धेत्यर्थः। [6]'आस्पदं प्रतिष्ठायाम्' (६. १. १४६) इति साधुः॥ कृत्यं कार्यम्। तत्र तूपचाराद् वृत्तिः॥ त्रिष्विष्टमधुरौ स्वादू। त्रिषु। इत ऊर्ध्वं वक्ष्यमाणाः स्वादुशब्दप्रभृतयः[7] दान्तवर्गसमाप्तिपर्यन्ता विशेष्यनिघ्ना इत्यर्थः। इष्टो मृष्टः। यथा—स्वादु भुङ्क्ते। मधुरो रसविशेषवान्, कदलीफलादिः। मधुरशब्देन मनोज्ञश्च विवक्षितः। अत एव 'स्वादुर्मृष्टमनोज्ञयोः' इत्यजयः। [8]रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः इत्यादौ धर्ममात्रवचनः स्वादुशब्दः केवलपुंलिङ्गः। स्वदते स्वादुः। 'ष्वद आस्वादने'। 'कृवापाजिमिस्वदि...' (उ. १. १.) इत्यादिना उण्प्रत्ययः॥ मृदू चातीक्ष्णकोमलौ। अतीक्ष्णः कृपावान्। यथा—मृदुप्रकृतिरिति। कोमलः सुखस्पर्शः। यथा—मृदूनि कुसुमानीति॥ ६४ ॥

[1] Gm1 adds गोष्पदम् [2] देश Tj1, Tj2. [3] Tv adds इति सुट् निपात्यते [4] स्वार्थप्रतिपादनार्थमिति मु ग्र [5] स्थानमिति मु ग्र [6] आपद्यत इत्यास्पदम् Tv

[7] Gm₁ adds त्रिपु लिङ्गेपु [8] रसोऽपि मधुरतिक्तकटुकषायाम्ललवणचित्रभेदात् सप्तविध —सप्तपदार्थी T P H Edn p 23

(पा) गोष्पद सेवितॆ मानॆ । [1]सेवितो गोसचारप्रदेश । [2]मान गोखुरश्वभ्रम् ।। प्रतिष्ठा कृत्यमास्पदम् । प्रतिष्ठेति स्थानम् । कृत्य नाम कार्यम् ।। त्रिष्विष्टमधुरौ स्वादू । त्रिष्विति विशारदशब्दान्तमधिकार ।। मृदू—कोमलौ ।। ६४ ।।

[1] सेवित B₃, C₁ [2] A₁ adds नाम

**मूढाल्पापटुनिर्भाग्या मन्दाः स्युर्द्वौ तु शारदौ ।**
**प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ।। ६५ ।।**

## इति दान्तवर्गः

(वि) मन्द खले च मूर्खे च स्वैरे चाभाग्यरोगिणो. ।। 202 ।।
[1]अथाल्पेऽपि च मातङ्गगजजातिप्रभेदयो. ।
मूढे पङ्गौ समाख्यातस्तन्त्वान्तरविशारदे ।। 203 ।।

आलस्येन मन्दते स्वपितीति मन्द । 'मदि[2] स्वप्ने' ।।

शारद पीतमुद्गे स्याच्छालीनेऽप्रतिभे[3] नवे ।
वर्षे च जलपिप्पल्या सप्तपर्णे प्रकीर्तित ।। 204 ।।

[4]शरदि भव शारदः ।।

विशारदो बुधे हृष्टे सुप्रगल्भे प्रकीर्तित. ।

विगत. शारद प्रतिभाहीनत्वदोषोऽस्येति विशारद [5] ।। ६५ ।।

इति दान्तवर्ग.[6]

[1] अभाग्ये J₂. [2] 'मदि स्तुत्यादो' K₃ [3] प्रतिभान्विते J₂ [4] शरत्सवन्धी शारद K₂, K₃ [5] अनेन सशयो विशीर्यत इति विशारद । 'शृ विशरणे' K₂, K₃, K₄. [6] K₂, K₄ add दान्तशब्दसख्या २५

(विव.) मूढाल्प—मन्दा स्युः। मूढः [1]प्रज्ञाहीनः। यथा—'मन्दः कवियशःप्रार्थी' इति (रघु. १. ३)। [2]अग्निमान्द्यमिति अल्पे। अपटुः [3]व्याधितः। यथा—मन्दं चिकित्सति भिषक् इति। निर्भाग्यो भाग्यहीनः। यथा—नास्ति मन्दस्य काङ्क्षितम् इति[4]। शेषे—'मन्दो [5]मन्दे मन्दकार्ये स्वैरकारीभभेदयोः' इति। इभभेदः, 'भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः' इत्युक्तलक्षणः[6]। शनैश्चरग्रहोऽपि मन्द उच्यते[7]॥ द्वौ तु—अप्रतिभौ। शरदि भवः शारदः[8]। लक्षणया अन्यत्रापि। अप्रतिभः प्रज्ञारहितः। शेषे—

'शारदः सप्तपर्णे स्यात् सरस्वत्या तु शारदा।
शारदी गजपिप्पल्यामृतुवर्षभवे[9] त्रिषु॥'

इति। ऋतुभवे वर्षभवे च वाच्यलिङ्ग इत्यर्थः॥ विद्वत्सुप्रगल्भौ विशारदौ। विशिष्टा शारदा अस्येति विद्वान्। विगतः शारदः प्रतिभाराहित्यलक्षणो दोषोऽस्येति विशारदः सुप्रगल्भः॥ ९५॥

इति दान्तवर्गः[10]

[1] प्रतिज्ञा Gm1 [2] Tv adds अल्पोऽनुत्कट [3] सरोग Tj1 [4] B6 adds इति निर्भाग्ये [5] मन्द्रे Gm3 [6] इत्यादिसूक्तलक्षण Gm1 [7] मन्द शनैश्चरोऽपि Gm1 [8] 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्' इत्यण् [9] शरदृतुभवे Gm1
[10] B6 adds दान्तशब्दसङ्ख्या २६

(पा) मूढाल्प—मन्दा स्य। अपटुशब्देन क्षुद्रवचस्करोगिणोरेव ग्रहणम्। 'मन्द[1] मूढक्षुद्रवाग्रोगिषु' इति सज्जन॥ द्वौ तु—अप्रतिभौ। अप्रतिभोऽधृष्ट। विद्वत्सुप्रगल्भौ विशारदौ। सुप्रगल्भ सुधृष्ट॥ अनुक्तम्—

कुरुविन्द पुमान् पद्मरागदर्पणयोरपि।
अन्दूस्तु पादाभरणपादबन्धनयो स्त्रियाम्।
अष्टापदस्तु शरभे भवेच्छाखामृगेऽपि च।
अर्धेन्दुर्गलहस्ते[2] स्यान्नखाङ्केऽङ्गुलिमैथुने।
जने च स्याज्जनपदो कुमुद[3] चारुणाम्बुजे॥ ९५॥

इति दान्तवर्ग

[1] B3 adds क्ली [2] गलहस्तोऽर्धचन्द्राकृतिशरविशेष [3] मुकुन्द A1

**व्यामो वटश्च न्यग्रोधावुत्सेधः काय उन्नतिः ।**
**पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥ ९६ ॥**

(वि ) न्यग्रोधो व्यामवटयोर्न्यग्रोधश्च शमीतरौ ॥ 205 ॥
न्यग्रोधी [1]वृषपर्ण्यां च मोहनाख्यौपधेऽपि[2] च ।

न्यक् तिर्यग् रुणद्धीति न्यग्रोध । 'रुधिर् आवरणे' ॥

उत्सेध स्यादुच्छ्रयेऽपि काये च परिकीर्तित ॥ 206 ॥

उत्साधयतीति उत्सेध । 'पिधु[3] गत्याम्' ॥

विवधो वर्तते मार्गे पर्याहारे च वीवध ।

[4]पर्याहार तण्डुलादिवध[5] । विविधो वधो गतिर्जीवन वात्रास्तीति विवध. वीवधश्च । 'हन हिंसागत्यो' ॥ ९६॥

[1] वृषपर्ण K4, K6 [2] ओपधावपि J2, K4 [3] पिधू K2, K3. [4] पर्याहारा तण्डुला K5 [5] J2 omits वध

(विव.) व्यामो वटश्च न्यग्रोधौ। व्यामः प्रागुक्तलक्षणः (१, पृ. ४१७) तिर्यक्प्रसारितभुजयोर्मध्यम्। वटः तरुविशेषः। न्यक् तिर्यक् रोहतीति न्यग्रोधः[1]। [2]'रुह बीजजन्मनि प्रादुर्भावे च'॥ उत्सेधः काय उन्नतिः। कायो देहः। उन्नतिः उच्छ्रायः। ऊर्ध्वं सेधनम् उत्सेधः। 'पिधु गत्याम्'॥ पर्याहारश्च—वीवधौ च तौ। विक्रेतृभिः देशान्तरादाहृतं विक्रयस्थानस्थं तण्डुलादिद्रव्यं पर्याहारः[3]। मार्गः पन्थाः। तावुभौ प्रत्येकं विवधवीवधशब्दाभ्यामुच्येते। विविधो वधो गमनमत्रेति विवधः। 'विभाषा विवधवीवधात्' (४. ४. १७) इति निर्देशाद् वैकल्पिके दीर्घे वीवधश्च। अत्र सूत्रे काशिकाकारः—विवधवीवधशब्दौ[4] पथि पर्याहारे च वर्तेते इति (पृ. ३६६)। अत्र न्यासकारः—परित आह्रियत इति पर्याहारः [5]तण्डुलादिरयं इति (भाग १, पृ. १०३३)। अपरस्त्वाह—परित आह्रियतेऽनेनेति पर्याहारशब्देन कोटिद्वयप्रथितशिक्यद्वययुक्तं तण्डुलाद्याहरणसाधनं काचोटिकाख्य काष्ठयेण्वादिकमुच्यत इति। विविधो वधो [6]वहनदुःखमत्रेति विवधः। निर्देशवशादेव दीर्घे वीवधश्च ॥ ९६ ॥

[1] न्यक् रुणद्धि । 'रुधिर् आवरणे' । 'कर्मण्यण्' इति भा दी (पृ ४७७). [2] न्यक्पूर्वस्य रुहे पचाद्यचि धकारो विधीयते, न्यग्रोहयतीति न्यग्रोध इति 'न्यङ्क्वादीना च' इति सूत्रे काशिका (पृ ३४१)　[3] Gm3, Tv add अथवा—उभयतोलब्धशिक्ययुक्त . [4] समानार्थी इत्यपि मु ग्र　[5] मण्डलादिकमुच्यते इति मु ग्र　[6] आहरणक्लेश Gm3, Tv.

(पा) व्यामो—उन्नति । [1]उन्नतिरिति ऊर्ध्वमानम् ।। पर्याहारश्च—वीवधौ च तौ । पर्याहार [2] [3]क्षीरदधिकावटिका । धान्यानामाधान[4] च ।। ६६ ।।

[1] A1 adds व्याम. 'वार'　[2] A1 adds नाम　[3] क्षीरादि° B3 [4] °आधिक्यम् B3, C1

**परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।**
**बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ।। ६७ ।।**

(वि) [1]चक्रे प्रान्ते च परिधि प्रतिसूर्यक एव च ।। 207 ।।
[2]यज्ञार्हवृक्षशाखाया परिवेपे च वर्तते ।

परिधीयत इति परिधि । 'डुधाञ् धारणपोषणयो' ।।

[3]बन्धकेऽप्याधिराधारे [4]चेत पीडातिदु खयो ।। 208 ।।

आधीयत इत्याधि ।। ६७ ।।

[1] चक्रप्रान्तेऽपि K5　[2] यज्ञाङ्ग° K5.　[3] बन्धने K4, K6　[4] K3 omits seven lines

(विव.) परिधिः—उपसूर्यके । यज्ञार्हस्य तरोः शाखायां 'त्रयः परिधयः[1]—पलाशकाश्मर्यखदिरोदुम्बरबिल्वरोहितकविकङ्कतानाम्' (आप. श्रौ. ५. ६) इत्यापस्तम्बाद्युक्तलक्षणाः शाखाः । सूर्यमण्डलसमीपस्थं प्रतिसूर्याख्यं मण्डलम् उपसूर्यकमण्डल परिधिः । अग्ने. सूर्यस्य वा परितो धीयत इति परिधिः[2] ([3]३. ३. ९२) ।। बन्धकं—आधयः । ऋणग्रहणसमये विश्वासार्थमधमर्णेन[4] धनिकहस्ते स्थाप्यमानं सुवर्णभूषणादिकं बन्धकमुच्यते । अधमर्णेन आधीयत इति आधिः । सर्वस्वहरणपुरनिर्वासनादिक व्यसनं[5] चेतस· पीडा । दीर्घकालानुयक्तम् अधिष्ठानमाधारः । अधिकरणे किप्रत्ययः (३. ३. ९२) ।। ६७ ।।

[1] 'सप्तास्यासन् परिधय त्रि सप्त समिध कृता *Rgveda* X 90 15 (Apte's Dict. p 979) [2] Tv adds चक्रप्रान्तेऽपि परिधि [3] 'उपसर्गे घो कि' [4] उत्कर्षाधीनतया भूम्यादिभूषणादिकम Gm3, Tv [5] आदिरूपक व्यसन Gm1

(पा) परिधि—उपसूर्यके । यज्ञियतरुशाखेति पशुवन्धनार्थं निखातत्वक्सहितकाष्ठम् । त्वग्रहितकाष्ठ यूप ॥ [1]वन्धक—आधय । वन्धक नाम प्रतिशीर्षकम् । [2]'कुदव' । 'प्रत्याशाप्याधिरुच्यते' इति त्रिकाण्डशेष (पृ २८, श्लो ७३७) । प्रत्याशेत्यागमाशा[3] ॥ ९७ ॥

[1] बन्धन B3 [2] 'कुदुव A1 [3] आगमे आशा A1

स्युः समर्थननीवाकनियमाश्च समाधयः ।
दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे ॥ ९८ ॥
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने ।

(वि) अङ्गीकारे वैश्यभेदे[1] चित्तैकाग्र्यसमर्थने ।
नियमे वचनाभावे समाधि परिकथ्यते ॥ 209 ॥

समाधीयत इति समाधि ॥

दोषोत्पादे स्यात् प्रकृतिप्रत्ययादिविनश्वरे[2] ।
प्रवृतस्यानुवृत्तौ च शिशौ मुख्यानुयायिनि ॥ 210 ॥
अनुबन्धस्तु हिक्कायामनुबन्धी[3] च तर्पणे ।

तर्पण तृष्णा । अनुवध्यत इत्यनुबन्ध । 'वध सयमने' ॥ ९८ ॥

[1] समाधिर्नाम वैश्याऽहम् इति देवीमाहात्म्य I 20 [2] प्रकृत्यादिषु नश्वरे K6 [3] अनुबन्धे K2, K3

(विव) स्यु समर्थन—समाधय । [1]परेणाक्षिप्तस्यार्थस्य प्रतिविधान समर्थनम् । यथा—अत्राप समाधिरिति । नीवाको वचनाभाव । नियमो व्रतोपवासादि । अथवा नियमोऽङ्गीकार । 'नियमाश्रयसश्रया' इत्यादिना (१, पृ ६४) नियमसमाधिशब्दयो पर्यायत्वाभिधानात् । समाधान समाधि. ([2]३. ३ ६२) । सम्यगाधीयते मनोऽत्रेति वा । शेषे—'समाधिर्ह्दयैकाग्र्ये वैश्यभेदप्रकारयो' इति ।

[3]मार्कण्डेयपुराणे 'समाधिर्नाम वैश्योऽहम्' (दे. माहा. १. २५) इत्युक्तो वैश्यविशेषः। 'तं वेधा विदधे नूनं महाभूतसमाधिना' (रघु. १. २६) इति प्रकारे[4]॥ दोषोत्पादे—प्रकृतस्यानुवर्तने। दोषाणां रागद्वेषादीनामुत्पादे प्रादुर्भावे। यथा—[5]सानुबन्धावच्छिन्नपापानां विनिवृत्तये। प्रकृतिप्रत्ययागमादिषु विनश्वरे लोप्यावयवे इत्संज्ञके। यथा—[6]इकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति। शिशाविति मुख्यं प्रधानमनुसरतो गुणीभूतमात्रस्योपलक्षणम्। यथा—धनमौदार्यमनुबध्नाति। केचित् तमनुवर्तमाने यत्र क्वचन शिशौ बाले चेति अर्थद्वयपरत्वेन व्याचक्षते। प्रकृतस्य प्रारब्धस्यानुवर्तने पुनरप्यनुक्रमणे यथा—वैरानुबन्धः इति। अनिवर्तने इति क्वचित् पाठः। निवर्तनस्य समापनस्याभाव इत्यर्थः। 'बधि संयमने' इत्यस्मादनुपूर्वाद् यथायोगं कर्मणि कर्तरि च घञ्प्रत्ययः (३. ३. १९) ॥ ९८ ॥

[1] दुर्घटप्रतिविधान समर्थनम् Gm3 [2] 'उपसर्गे घो कि' [3] Gm3, Tv add वैश्यभेदे यथा— [4] Tv adds इति कालिदासः [5] यथा—'अनुबन्धमवस्या च ज्ञात्वा दण्ड प्रकल्पयेत्' इति। अपराधस्य अज्ञानकृतत्वे दण्डस्याल्पत्व रागद्वेषादिदोषपूर्वकत्वे दण्डातिशय च कल्पयेदित्यर्थ Tv [6] यथा तिप पकारोऽनुबन्धक Gm3, Tv.

(पा) स्यु समर्थन—समाधय। समर्थन[1] दुर्घटप्रतिघटनम्। नीवाक अर्थोत्कृष्टहेतुषु जनादर। चशब्दसगृहीत ध्यानम् आत्मन सधानम्। 'समाधि ध्याननीवाकनियमेषु समर्थने' इति रभस[2]॥ दोषोत्पादे—प्रकृतस्यानुवर्तने। दोषोत्पादो[3] दोषप्रकटनम्। मुख्यानुयायी शिशु। मातापितृप्रभृतीना पृष्ठमनुसृत्य [4]गच्छत्सुत। [5]प्रकृतानुवर्तन प्रस्तुतानुरोध ॥ ९८ ॥

[1] A1 adds नाम [2] रभसकोश B3, C1 [3] दोषोत्पादन A1
[4] गच्छन् B3 [5] A1 adds प्रकृतानुवर्तन दोषोत्पादन प्रश्नान्तापरित्यागो वा

**विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः ॥ ९९ ॥**
**विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे।**
**बुधवृद्धौ पण्डितेऽपि स्कन्धः समुदयेऽपि च ॥ १०० ॥**

(वि) *विष्णौ चन्द्रे च कर्पूरे राक्षसे विधुरुच्यते ॥ 211 ॥*

विध्यतीति विधु। 'व्यध ताडने'॥

[1]कालावधानसीमासु परिच्छेदे बिलेऽवधि ।

अवधीयत इत्यवधि [2] ।

कल्पे विधाने दैवेऽपि प्रकारे चतुरानने ॥ 212 ॥
विधिर्विधायकवच कालयो परिकीर्त्यते ।

विधीयत [3]इति विधि ।

प्रार्थने गूढचारे चाप्यवधाने च वीरुधि ॥ 213 ॥
वर्तते स्कन्धशाखाया प्रणिधि. स्थापने तथा ।

प्रणिधीयत इति प्रणिधि ॥

बुध सौम्ये च विबुधे [4]जिनपण्डितयोरपि[5] ॥ 214 ॥

बुध्यत इति बुध । 'बुध अवगमने'[6] ॥

वृद्ध स्याच्छैलजे जीर्णे प्रख्याते च मनीषिणि ।

वर्धत इति वृद्ध । 'वृधु वृद्धौ' ॥

तनुप्रकाण्डयोरसे सैन्यभागसमूहयो. ॥ 215 ॥
समीहानृपयो स्कन्धो [7]बौद्धसज्ञादिपञ्चके ।

स्कन्द्यत इति स्कन्ध । 'स्कन्दिर् गतिशोषणयो' ॥ ९९–१०० ॥

[1] कालावधाने K2, K5 [2] K3 adds 'डुधाञ् धारणपोषणयो' [3] J2 adds अनेन [4] जीव° K2 [5] भवेत् for अपि J2, K5. [6] K2, K6 add 'बुध बोधने' [7] बुद्धो K4, K6

(विव.) विधुर्विष्णौ चन्द्रमसि। [1]विधति लोकानिति विधुः विष्णुः। 'विध विधाने'[2]। विशेषेण धीयते पीयते देवैरिति विधुः[3] चन्द्रमाः। 'धेट् पाने'। औणादिक उप्रत्ययः॥ परिच्छेदे बिलेऽवधिः। परिच्छेदो मर्यादा। बिलं छिद्रम्। अवधीयतेऽनेन स्वल्पस्येयत्तेत्यवधिः। 'उपसर्गे घोः किः' (३.३.९२)। 'अवधिस्त्ववधाने स्यात् सीम्नि काले बिलेऽपि च' इति नानार्थसंग्रहः। अवधानमैकाग्र्यम्।

काले यथा—'दर्शावधि चान्द्रमुशन्ति मासम्' इति । ऐकारयमप्यवधिरुच्यते ॥ विधिर्विधाने दैवेऽपि । 'उपसर्गे घोः किः' (३.३.९२) इति भावार्थे किप्रत्यये विधिः । विधानं यागाद्यनुष्ठानम् । पुराकृतं कर्म दैवम् । शेषे—'विधिः प्रकारे कल्पे च लिङाद्यर्थे प्रजापतौ' इति । यथा—'तुल्य एव विधिस्तयोः' इति । [4]'एष दानविधिः प्रोक्तः' इति कल्पे । लिङाद्यर्थे यथा—'विधिर्विहितोऽयं प्रत्ययः' इति[5] ॥ प्रणिधिः प्रार्थने चरे । प्रार्थनं याच्ञा । चरोऽपसर्पः[6] । प्रणिधानमपि प्रणिधिः ॥ बुद्धवृद्धौ पण्डितेऽपि । 'बुध अवबोधने' इति दैवादिको बुध्यतिरनिट् । बुध्यते । क्तः । अपिशब्दात् सुगते (१, पृ. १२), बुधिते च (२, पृ. १५०) बुद्धः प्रागुक्तः । वृद्धशब्दस्तु स्थविरे त्रिलिङ्गः । शैलेये तु नपुंसकलिङ्गः (१, पृ. २८८) ॥ स्कन्धः समुदयेऽपि च । अध्यायादिसमूहः समुदयः । यथा—त्रिस्कन्धं ज्योतिःशास्त्रम् । द्वादशस्कन्ध[7] भागवतम् इति । शेषे—'समीहावृपयोः स्कन्धः सैन्यरूपादिपञ्चके' इति । समीहा इच्छा । सैन्ये यथा—'स्कन्धावारे धन्यसेनास्य राज्ञः' इति । रूपवेदनाविज्ञानसंज्ञासंस्काराः पञ्चस्कन्धा इति बौद्धाः । भुजशिरसि (१, पृ. ४११) प्रकाण्डे च (१, पृ. २२०) प्रागुक्तः । स्कन्दति गच्छतीति स्कन्धः[8] । 'स्कन्दिर् गतिशोषणयोः' । पृषोदरादिः ॥९९–१०० ॥

[1] Tv adds विदधाति [2] विपूर्वाद् दधाते करोत्यर्थाद्वा विधु Tj1, Tj2 [3] विध्यति विरहिणम् । 'व्यध ताडने' । पृभिदि (उ १ २३) इति कु इति भा दी (पृ ४७७) [4] कल्पे यथा Gm1, Tv [5] E6 adds प्रजापति ब्रह्मा [6] अवसर्प Tv [7] °स्कन्धसमित Gm3 Tv [8] क शिरो दधाति । 'आतोऽनुपसर्गे क' । पारस्करादित्वात सुट् इति भा दी (पृ ४७७).

(पा) विधु—अवधि । परिच्छेद सीमा । विल गर्त ॥ विधिर्विधाने दैवेऽपि । 'विधिर्विधाने नियतौ विधि काले विधातरि' इति विश्व [1] ॥ प्रणिधि—पण्डितेऽपि । [2]बुद्धशब्द सुगतेऽपि स्यात् । वृद्धशब्द [3] स्थविरेऽपि स्यात् ॥ स्कन्ध समुदयेऽपि च । 'स्कन्ध प्रकाण्डे [4]काये च बाहुमूलसमूहयो' इति विश्व (पृ ८२, श्लो ८) ॥ ९९–१०० ॥

[1] मुद्रितग्रन्थे न दृश्यते [2] B3 adds अपिशब्दात् पारिजाते बुद्ध इति पाठ [3] B3 C1 omit शब्द [4] सैन्याशे इति मु ग्र

**देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।**
**विधा विधौ प्रकारे च साधु रम्येऽपि च त्रिषु ॥ १०१ ॥**

(वि) अब्धौ देशे[1] गजमदे नद्या सिन्धुर्नदे भवेत् ॥ 216 ॥

सिमिति धयन्त्यत्रेति सिन्धु[2]। 'धेट् पाने' ॥

[3]ऋद्धौ प्रकारे च विधा गजाद्यन्ने विधौ भृतौ ।

विधीयत इति विधा[4] ॥

योग्ये प्रवीणे रम्येऽपि साधुर्वार्धुषिके भवेत् ॥ 217 ॥

[5]साध्नोति धर्ममिति साधु । [6]'साध ससिद्धौ' ॥ १०१ ॥

[1] देशविशेषे स्यात् J2 [2] सधीयत इति J2 [3] बुद्धौ K6 [4] K2, K4 add 'डुधाञ् धारणपोषणयो ' [5] साधयति K5, K6 [6] K2, K3, K6 add राध

(विव.) देशे—सरिति स्त्रियाम् । सैन्धवोऽश्वः[1] इति देशे[2]। नदविशेषे यथा—'विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः' (रघु. ४. ६७) इति । अब्धौ प्रागुक्तः (१, पृ. १५६) । 'समुद्रमिव सिन्धवः' इति सरित्सामान्ये । स्यन्दत इति सिन्धुः[3]। 'स्यन्दू प्रस्रवणे' (उ. १. ११) । शेषे—'सिन्धुर्गजमदेऽपि स्यात्' इति ॥ विधा विधौ प्रकारे च । विधिः विधानम् । प्रकारे यथा—द्विविधः, त्रिविधः इति । शेषे—'गजान्ने वर्तने[1] विधा' इति । गजान्ने यथा—'उत्क्षिप्तहस्ततलदत्तविधान्न*-पिण्डः' इति माघकाव्ये (शिशु. ५. ५१) प्रयोगः । विधासंज्ञकान्नपिण्ड इत्यर्थः । वर्तनं जीवनोपायः । यथा—'तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात्' इति (तै. उ. ३. १०) । 'विधार्द्धिप्रकारेषु गजान्ने वेतने विधा' इति रुद्रः । ऋद्धिः समृद्धिः । विपूर्वाद् दधातेः 'आतश्चोपसर्गे' (३. ३. १०६) इति [5]भावार्थे अङ्-प्रत्ययः ॥ साधु रम्येऽपि च त्रिषु । साधयति साध्नोति वा [6]प्रियमिति साधु । 'राध साध संसिद्धौ' । 'कृवापाजि . . .' इत्यादिना (उ. १. १) उण् । शेषे—'साधु-र्वार्धुषिके सति' इति[7] । [8]सज्जने इत्यर्थः । विश्वप्रकाशेऽपि—'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति (पृ. ८२, श्लो. १२) ॥ १०१ ॥

[1] B6 omits अश्व . [2] देशविशेषे Gm1, Tv [3] Tv adds 'सिन्धु समुद्रे नद्या च नदे देशेभदानयो ' इति विश्व [4] वेतने Tj1, Tj2 [5] समुचितार्थेषु Tv [6] प्रीतिम् Gm1, Gm3 [7] Tj1, Tj2 add वार्धुषिको वृद्धयाजीवो [8] B6 adds सति. * °विधान° इति मु ग्र

(पा ) देशे—विधौ प्रकारे च । 'विधा विधानहस्त्यन्नप्रकारार्थेषु[1] वेतने' इति जयकोश. ।। साध रम्येऽपि च त्रिपु । [2]'त्रिपु साधूचिते सौम्ये सज्जने वार्धुषौ पुमान्' इति[3] वैजयन्ती (पृ २३८, श्लो ६६) ।। १०१ ।।

[1] °प्रकारर्द्धिपु A1 [2] साधुस्त्रिपूचिते इति मु ग्र [3] A1 adds पुलिङ्गे

**वधूर्जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही ।**
**संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ।। १०२ ।।**

(वि.) नवोढाया स्नुषाया च जायाया युवतौ वधू ।
[1]शटचा प्रियङ्गौ स्पृक्काया शारिवायामपि स्मृता ।। 218 ।।

उह्यत इति वधू । 'वह प्रापणे' ।।

लेपे क्षीरे च पीयूषे मूर्वास्नुह्योर्भवेत् सुधा ।

सुष्ठु धीयत[2] इति सुधा । 'धेट् पाने' ।।

सधाने धारणे सधा प्रतिज्ञासीमयोर्भवेत् ।। 219 ।।

सधीयत इति सधा[3] ।।

स्पृहाया भक्त्यतिशये श्रद्धाशब्द प्रकीर्तित [4] ।

[5]श्रद्धत्त इति श्रद्धा । 'डुधाञ् धारणपोषणयो ' ।। १०२ ।।

[1] कल्या K6 [2] धयन्त्येनाम् K5 [3] K5 adds 'डुधाञ् धारणपोषणयो ' [4] प्रकीर्त्यते J2, K4, K6 [5] श्रद्दधाति J2

(विव.) वधूर्जाया स्नुषा स्त्री च । स्त्रीशब्देन स्त्रीमात्रमुच्यते[1] । उह्यत इति वधूः । 'वहो धश्च' (उ १.८६) इत्यूकारप्रत्ययः, धश्चान्तादेश. । शेषे—

'नवोढाया प्रियङ्गौ च [2]शटीशारिबयोर्वधू ' इति । प्रियडगु फलिनी । [3]शटी पड्ग्रन्था । वधू प्रागुक्ता (१, पृ ३६२, ३६७) ।। सुधा लेपोऽमृत स्नुही । [4]लेपशब्देन हर्म्यादिलेपसाधन घृतगुडसिकतादिसाहित्येन मृदितस्निग्धचूर्णाविद्रव्य-मुच्यते । अमृत पीयूषम् । स्नुही वज्रद्रु । सुष्ठु धीयते पीयते निधीयत इति वा सुधा । 'धेट् पाने' । 'डुधाञ् धारणपोषणयो.' । शेषे—'सुधा पयसि मूर्वायाम्' इति । मूर्वा मोरटा (१, पृ २६४) ।। सधा प्रतिज्ञा मर्यादा । सत्यसध इति प्रतिज्ञायाम् । मर्यादा स्थिति. । यथा—

'उपकारिणि विस्रब्धे शुद्धमतौ य समाचरति पापम् ।
त जनमसत्यसध भगवति वसुधे कथ वहसि ।।'

इति । शेषे—'सधा सधानसीमयो ' इति । सधान सश्लेष. । सधीयेते क्षेत्रद्वय-प्रान्तावनयेति सधा[5] सीमा । यथा—गोदावरीसधो विन्ध्य इति ।। श्रद्धा सप्रत्यय स्पृहा । सप्रत्ययो विश्वास [6] । यथा—श्रद्धा धर्मस्य साधनम् इति । इच्छाया यथा—[7]'श्रद्धालुर्दोहदवती' इति (१, पृ. ३७४) । 'श्रदन्तरोरुपसर्गवद् वृत्तिर्वक्तव्या' (काशिका पृ २२३) इति उपसर्गवद्भावात् 'आतश्चोपसर्गे' (३ ३. १०६) इत्यङ्प्रत्यये श्रद्धा ।। १०२ ।।

[1] गम्यते Tv [2] सुक्काशारिबयारिति क्वचित्पाठ Gm1, Tv [3] सुक्का दविलता, शारिवा गोपी Tj1, Tj2 [4] Tv adds निप्यतेऽनेनेति लेप [5] 'डुधाञ् धारणपोषणयो '। 'आतश्चापसर्गे' इत्यङ [6] श्रत्पूर्वो दधातिर्विश्वास वर्तते । यथा—'बृहस्पतिरकामयत श्रन्मे देवा दधीरन्' इति श्रुति Tv [7] 'श्रद्धानुर्दोहदियपि' इति धरणिकोशे (पृ १८६ श्लो ११५८).

(पा ) वधूर्जाया—स्नुही । लेप [1]इति चूर्णम् । 'गुन्नमु' ।। मधा—स्पृहा । सप्रत्यय[2] आस्तिक्यम् ।। १०२ ।।

[1] B3, C1 omit इति [2] A1 adds नाम

मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि ।
अतस्त्रिषु समुन्नद्धौ पण्डितमन्यगर्वितौ ।। १०३ ।।

(वि ) जीवाशोके वसन्ते स्याच्चैत्रे दैत्ये द्रुमे मधु ।। 220 ।।
क्षीरे मद्ये[1] पुष्परसे जने क्षौद्र नपुंसकम् ।

[1]माद्यन्त्यनेनेति मधुः । [3]'मदि हर्षग्लेपनयोः' ॥

अन्ध [4]जले तमसि च दृष्टिहीने पुमान् स्मृत. ॥ 221 ॥

अन्धयतीत्यन्ध । 'अन्ध [5]दृष्ट्युपघाते' ॥ अथ त्रिपु । [6]अत.परं धान्तशब्दाः[7] त्रिपु लिङ्गेपु वर्तन्ते ।

[8]गर्विते पण्डितंमन्ये दुष्टवर्तनवर्तके ।
ऊर्ध्ववद्धे समुद्भूते समुन्नद्धोऽभिधीयते ॥ 222 ॥

समुन्नह्यत इति समुन्नद्धः । 'णह् वन्धने' ॥ १०३ ॥

[1] मधौ J2. [2] माद्यते J2,माद्यन्ते K5. [3] 'मदी हर्षे' K3, K6. [4] जडे K6. [5] दृष्ट्युपसहारे K2, K6. [6] K5 omits 4 lines [7] धान्तवर्गा K6. [8] गर्हिते J2

(विव.) मधु मद्ये—क्षौद्रेऽपि । माध्वीकरूपे मधुविशेषे, पुष्परसे मकरन्दे, क्षुद्राभिर्मक्षिकाविशेषैः कृते सारघे । मन्यत इति मधु । 'मन ज्ञाने' । 'फलिपाटिनमिमनिजनाम्...' इत्यादिना (उ. १. १८) उप्रत्ययो [1]धकारागमश्च । शेषे—

'मधुर्ना क्षत्रिये चैत्रे वसन्ते दानवे द्रुमे ।
अस्त्रियां मद्यभेदे स्यात् क्लीबं सलिलदुग्धयोः ॥'

इति । 'पतिषु निर्विविशुर्मधुमङ्गनाः'[2] इति मधुनः[3] रघुवंशे पुंलिङ्गप्रयोगः* (रघु. ६. ३६) ॥ अन्धं तमस्यपि । [4]अन्ध्यते चक्षुर्वृत्तिरुपसंह्रियतेऽनेनेति अन्धम् । 'अन्ध [5]दृष्ट्युपसंहारे' (३. १. १३४) । अपिशब्दात् चक्षुरिन्द्रियविकले वाच्यलिङ्गः[6] ॥ अतस्त्रिषु । इत [7]ऊर्ध्वं वक्ष्यमाणधकारान्ताश्चत्वारः शब्दा वाच्यलिङ्गा इत्यर्थः । समुन्नद्धौ पण्डितंमन्यगर्वितौ । पण्डितमात्मानं मन्यत इति पण्डितंमन्यः ([8]३. २. ८३) । पाण्डित्याभिमानयुक्त इत्यर्थः । गर्वातिशयवान् गर्वितः । आत्माभिमानेन गर्वेण च सम्यगूर्ध्वं नह्यत इति समुन्नद्धः । 'णह् बन्धने' । क्तः ॥ १०३ ॥

[1] धकारादेशश्च B6 [2] Gm3, Tv add स्मरसख रसखण्डनवर्जितम् [3] मधुशब्दस्य Tv. [4] रूपभेदाद् अन्धकारे अन्धशब्दो नपुसकलिङ्ग Gm1, Tv [5] दृष्ट्युपघाते Tv. [6] Tj1 adds प्रागुक्त (पृ ३६६) [7] अनन्तर B5, B6 [8] 'आत्ममाने खश्च'. * 'मकरन्दस्य ..। अर्धर्चादिगणे पाठात् पुनपुसकयोर्मधु ' इति मल्लिनाथ .

(पा ) मधु मद्ये—क्षौद्रेऽपि । क्षौद्रे केषाचिद् नपुसकम् । 'क्षौद्रादौ [1]तद्रसेऽप्यस्त्री ना वसन्ते रसे सुरे' इति वैजयन्ती (पृ २३५, श्लो ६१) ।। अन्ध तमस्यपि । चक्षुर्विकले [2]त्रिलिङ्गम् ।। अतस्त्रिपु—गर्वितौ ।। १०३ ।।

[1] तत्सुते A1 [2] त्रिलिङ्ग B3, C1

**ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बितः ।**
**अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ ।। १०४ ।।**

## इति धान्तवर्गः

(वि ) [1]अधिक्षिप्ते ब्रह्मबन्धुर्निर्देशे च द्विजन्मनाम् ।

[2]ब्रह्मणो बन्धु. ब्रह्मबन्धुः ।।

आश्रान्ते चाविदूरे स्यादवष्टब्धोऽवलम्बने[3] ।। 223 ।।

अवष्टभ्यत इत्यवष्टब्ध. । 'स्तभि ष्टभि प्रतिबन्धे'[4] ।।

ख्यातभूपितयोश्चैव प्रसिद्ध परिकथ्यते ।

प्रकर्षेण सिद्धः प्रसिद्ध' ।। १०४ ।।

इति धान्तवर्ग [5]

[1] अधिक्षेपे K4, K5. [2] J2 adds ब्राह्मणस्य [3] अवलम्बिने J2. [4] प्रति-बन्धने J2, K4 [5] K2 adds धान्तवर्गसङ्ख्या २८

(विव.) ब्रह्मबन्धुरधिक्षेपे निर्देशे । ब्राह्मणोऽप्ययं ब्राह्मणकर्मणि न प्रवर्तते, केवलं जातिमात्रयुक्त एवेति । एवमाद्यधिक्षेपे तिरस्कारे प्रकाशनीये ब्रह्मबन्धुशब्द. प्रयोक्तव्यः । यथा—ब्रह्मबन्धो किमेवमात्थ इति । निर्दिश्यत इति निर्देशः । यस्य [1]द्वेषान्नाम न गृह्यते, न त्वधिक्षेपार्थम्, तस्मिन्निर्देष्टव्ये ब्रह्मबन्धुशब्दः । यथा—किं करोति ब्रह्मबन्धुः इति । अत्र केचिदाहुः—ब्राह्मणजातियुक्तोऽयमित्ये-तावत्येव निर्देष्टव्ये ब्रह्मबन्धुरिति वाच्य इति । अपरे आहुः—कस्मिंश्चिद् देशान्त-रोपत्येन प्रागभाते[2] शुश्रूषादिना परिज्ञातब्राह्मणसंबन्धे भृत्यशिष्यादौ निर्देष्टव्ये

ब्रह्मबन्धुरिति निर्देश इति । ब्रह्मबन्धुरित्यत्र [3]बहुव्रीहौ तत्पुरुषे वा समासे [4]ब्रह्म-प्रतियोगिकबन्धुत्वमेव प्रकाश्यते, न तु ब्रह्मत्वमिति अधिक्षेपावगतिः। यथा—मैत्रभार्यापुत्र इत्युक्ते मैत्रजन्योऽयं न भवतीति [5]प्रतीतिः ।। अथ—अवष्टब्धः । अवलम्बितः आलम्बितः, गृहीत इति यावत्[6] । यथा—हस्तावष्टब्धयष्टिः इति । अविदूरे यथा—अवष्टब्धा सेना (काशिका पृ. ४३८) इति । आसन्ना इत्यर्थः । अवष्टम्यत इत्यवष्टब्धः । [7]स्तम्भिः सौत्रो धातुः प्रतिबन्धार्थः । कर्मणि क्त. (३.४.७२) । 'अवाच्चालम्बनाविदूर्ययोः' (८.३.६८) इति षत्वम् । शेषे—'आक्रान्ते चावरुद्धे स्यादवष्टब्धस्तिरस्कृते' इति । आक्रान्ते यथा—'रथान्तरमवष्टब्ध तदा तेन तरस्विना' इति । गले [8]वटिनावष्टब्ध इति निरुद्धे । तिरस्कारे यथा—निग्रहावष्टब्धो वावदूकं मन्यते इति ।। प्रसिद्धौ ख्यातभूषितौ । ख्यातः प्रख्यातः । भूषितोऽलंकृतः । प्रसिध्यति सर्वत्र प्रख्यातो भवतीति प्रसिद्धः[9] ।। १०४ ।।

इति धान्तवर्गः[10]

[1] Gm3, Tv add अज्ञानाद्वा　[2] अज्ञातवर्णविशेषे Gm1, Tv　[3] ब्रह्मबन्धुरस्य Tj1, Tj2　[4] ब्रह्मप्रातिपदिक Tv　[5] अधिक्षेपप्रतीति Gm3, Tv　[6] इति केचित् Tv　[7] 'स्तम्भु रोधने' इति सौत्रो धातु Tj1　[8] परेण for वटिना (रज्जुना) Tv　[9] B6 adds 'षिधु सराद्धौ' क्त　[10] B6 adds धान्तवर्गशब्दा २८

(पा) ब्रह्मबन्धुरधिक्षेपे निर्देशे । किं कृत ब्रह्मबन्धोर्दासि । अत्र दासी अधिक्षेप्या ब्रह्मबन्धोरिति तदधिक्षेप । [1]अत त्रिष्वित्यधिकाराद् अधिक्षेप्यलिङ्ग । ब्रह्मबन्धो माणवक तिष्ठ । अत्र माणवको निर्देश्य । ब्रह्मबन्धो इति तन्निर्देश । अतस्त्रिष्वित्यधिकाराद् निर्देश्यलिङ्ग ।। अथावलम्बित —भूषितौ ।। अनुक्तम्—

कबन्ध सैंहिकेयेऽपि गन्धोऽहकरणेऽपि च ।
शुद्ध तु केवलेऽपि स्यादब्धि पद्माकरेऽपि च ।
[2]निषेधोऽपि च बाधे स्यान्मग्ध स्यान्नूतनेऽपि च ।
दोग्धा गोपालके वत्से निन्दावार्तोपजीविनि[3] ।
योजनगन्धा कस्तूर्यां तन्मृगे व्यासमातरि ।। १०४ ।।

इति धान्तवर्ग

[1] तत A1　[2] निषिद्धोऽपि च A1　[3] °वर्तोपजीविनि A1

अथ नान्तशब्दाः—

**सूर्यवह्नी चित्रभानू भानू रश्मिदिवाकरौ ।**
**भूतात्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥ १०५ ॥**

(वि) अग्नौ सूर्ये चित्रभानुर्भानुरर्यम्णि दीधितौ ॥ 224 ॥

चित्रा [1]भानवो यस्यासौ चित्रभानु । भातीति भानु. ।

देहे विरिञ्चौ भूतात्मा नीचे मूर्खे पृथग्जनः ।

'भा दीप्तौ' ॥ भूतानामात्मा भूतात्मा । यद्वा भूतान्यात्मा यस्येति वा भूतात्मा ॥ [2]पृथक्कार्यो जन पृथग्जन ॥ १०५ ॥

[1] $J_2$ adds किरणा [2] $K_4$, $K_5$ omit the derivation; पृथक् कृत $K_2$

(विव.) सूर्यवह्नी चित्रभानू । [1]संयोगिद्रव्योपाधिवशात् चित्रा नानावर्णा भानवो रश्मयो यस्य सः चित्रभानुः ॥ भानू रश्मिदिवाकरौ । रश्मिः किरणः[2] ॥ भूतात्मानौ धातृदेहौ । भूतानां सर्वप्राणिनाम् अन्तर्यामिरूपेणावस्थितः आत्मा भूतात्मा ब्रह्मा । पृथिव्यादीनि पञ्च भूतानि आत्मा स्वरूपमस्येति भूतात्मा देहः ॥ मूर्खनीचौ पृथग्जनौ । मूर्खः विवेकरहितः । नीचो हीनजातिः । सम्यजनापेक्षया पृथक्कृतो जनः पृथग्जनः । ([3]वा. २. १. ६०) ॥ १०५ ॥

[1] सयोगे $B_6$ [2] भानीति भानु । 'भा दीप्तौ'। 'दाभाभ्या नु' (उ ३ ३२) इति नु—भा दी (पृ ४७८). [3] 'शाकपार्थिवादीनामुपसङ्ख्यानमुत्तरपदलोपश्च'.

(पा) सूर्यवह्नी—दिवाकरौ । भानु [1]दिवसेऽपि स्यात् । 'दिवस चास्त्रियो भानुर्घृणिर्घस्रो रविध्वज '[2] इति वैजयन्ती (पृ २१, श्लो ५५) ॥ भूतात्मानौ—पृथग्जनौ ॥ १०५ ॥

[1] दिवसोऽपि $B_3$, $C_1$ [2] घृणिघृष्टिरविध्वजा. $A_1$.

**ग्रावाणौ शैलपाषाणौ पत्त्रिणौ शरपक्षिणौ ।**
**तरुशैलौ शिखरिणौ शिखिनौ वह्निबर्हिणौ ॥ १०६ ॥**

(वि) शिलोच्चये च पाषाणे ग्रावा समभिधीयते ॥ 225 ॥

गिरतीति ग्रावा । 'गॄ निगरणे' ॥

विहङ्गमे सायके च श्येनपर्वतयोरपि ।
[1]महीरुहे वाहनेऽपि[2] पत्रिशब्दोऽभिधीयते ॥ 226 ॥

पत्रमस्यास्तीति पत्री ॥

अपामार्गे वृक्षशैलकोटीषु[3] शिखरी मतः ।

शिखरमस्यास्तीति शिखरी ॥

वह्नौ मयूरे चूडाले सारङ्गे शैलवृक्षयोः ॥ 227 ॥
बलीवर्दे कुक्कुटे च केतौ विप्रे शिखी मतः ।

शिखा अस्यास्तीति शिखी ॥ १०६ ॥

[1] महारवे $J_2$　[2] च for अपि $J_2$, $K_4$　[3] °कूटेषु $K_5$

(विव.) ग्रावाणौ शैलपाषाणौ । व्यक्तार्थमेतत् । [1]उक्तयोगश्च । पत्रिणौ शरपक्षिणौ । इह पक्षिशब्देन पक्षिसामान्यम्, तद्विशेषः श्येनश्च गृह्यते । पत्रशब्दो येषु पलाशवहनादिष्वर्थेषु वर्तते, ते सर्वे द्रुमरथादयः पत्रिशब्दस्यार्थ इति विज्ञेयम्[2] ॥ तरुशैलौ शिखरिणौ । वृक्षाग्रं पर्वताग्रं च शिखरमिति प्रागुक्तम् (१, पृ. २२१, २११) । तद्योगात् तरुशैलौ । अपामार्गोऽपि शिखरिशब्दः (१, पृ. २६७) ॥ शिखिनौ वह्निबर्हिणौ । ज्वाला चूडा च शिखा (१, पृ. ३६, ३५३) । तद्योगाद् उभावपि शिखिनौ । शेषे—'ओषधौ[3] पर्वते विप्रे कुक्कुटध्वजयोः शिखी' इति । ओषधिः मयूरशिखेति[4] प्रसिद्धा चित्रकश्च[5] (१, पृ. २६२) ॥ १०६ ॥

[1] व्यक्त° Tv, 'गॄ निगरणे', 'शब्दे' वा, 'अन्येभ्योऽपि दृश्यते' (३ २ ७५) इति वनिप् । पृषोदरादि —भा दी (पृ १४२)　[2] पत्राणि सन्त्यस्येति पत्री । 'अत इनिठनौ' (५. २ ११५) इतीनि　[3] औषधे Tj1, Tj2.　[4] °शिखाख्यया Tv　[5] P6 adds वृक्षविशेषेऽपि

(पा.) ग्रावाणौ शैलपाषाणौ—वह्निबर्हिणौ ॥ १०६ ॥

**प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ।**
**द्वौ सारथिहयारोहौ वाजिनोऽश्वेषुपक्षिणः ।। १०७ ।।**

(वि) प्रतियत्नस्तु सस्कारे[1] लिप्सोपग्रहयोरपि ।। 228 ।।

[2]प्रतियत्यत इति प्रतियत्न । 'यती प्रयत्ने' ।।

सादी तुरङ्गमारोहे रथारोहे निषादिनि[3] ।

[4]आलस्य सादयतीति सादी । 'षद्लृ [5]विशरणगत्यवसादनेषु' ।।

तुरङ्गमे सायके च वाजी तु विहगे भवेत् ।। 229 ।।

वाज पक्षोऽस्यास्तीति वाजी ।। १०७ ।।

[1] सभारे K2, K6. [2] प्रतियतते K2 [3] गजारोहे इत्यर्थ . [4] अवश्य सीदति K5 [5] विशरणादौ K5

(विव.) प्रतियत्नावुभौ लिप्सोपग्रहौ । लब्धुमिच्छा लिप्सा[1]। उपग्रहो बन्दिग्रहः[2]। प्रतियत्यते प्राप्यं प्रति यत्नः क्रियतेऽनेनेति प्रतियत्नः । 'यती प्रयत्ने' । 'यजयाच ...' इत्यादिना (३. ३. ९०) नङ् प्रत्ययः । शेषे—'प्रतियत्नः प्रतीकारे गुणाधाने च वस्तुनः' इति । [3]अपकर्तुः [4]प्रातिकूल्याचरणं प्रतीकारः । पानीयादेर्वस्तुनः कर्पूरादिना गुणविशेषाधानं प्रतियत्नः ।। अथ सादिनौ—हयारोहौ । सीदति निषीदति अवश्यमिति सादी[5] सारथिः । सादयति [6]तुरगमिति सादी हयारोहः । [7]प्रतापोऽपि—'सादी स्यात् तुरगारोहे रथेभारोहयोरपि' इति । इभारोहे गजारोहे इत्यर्थः ।। वाजिनोऽश्वेषुपक्षिणः । इषुः बाणः । वाजाः पक्षाः सन्त्येषामिति वाजिनः[8] । अश्वानामपि पुराकल्पे पक्षाः आसन्निति पौराणिकी प्रसिद्धिः । तेन भूतपूर्वगत्या [9]संप्रत्यपि वाजिन इत्युच्यन्ते । अथवा 'वज गतौ' इति धातोः णिनिप्रत्यये वाजी ।। १०७ ।।

[1] Gm3, Tv add यथा—ग्रामविषयप्रतिपन्न इति [2] बन्दिग्राह Gm1, Tv. [3] अपकारिण Tv [4] प्रातिकूल्येनोद्योग Tv [5] 'षद्लृ विशरणादौ'। 'आवश्यकाधमर्ण्ययोर्णिनि' इति णिनि [6] तुरङ्गम् B6. [7] तथा च प्रताप. Gm3, Tv. [8] 'अत इनिठनौ' इतीनि [9] साम्प्रतिका अपि Tj1, Tj2

(पा ) प्रतियत्नावुभौ लिप्सोपग्रहौ । लब्धुमिच्छा लिप्सा । अनुकूलमुपग्रह । सस्कारोऽपि स्यात्[1] । सतो गुणस्य गुणान्तराधान सस्कार । 'प्रतियत्नस्तु सस्कारे लिप्सोपग्रहयोरपि' इति रुद्र ॥ अथ सादिनौ—पक्षिण ॥ १०७ ॥

[1] B3, C1 omit स्यात्

**कुलेऽप्यभिजनो जन्मभूम्यामप्यथ हायनाः ।**
**वर्षार्चिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः ॥ १०८ ॥**

(वि ) [1]कुलेऽप्यभिजनो जन्मभूम्या कीर्तौ कुलध्वजे ।

अभिजन्यत इत्यभिजन.[2] ॥

वर्षे वर्गे व्रीहिभेदे हायनोऽर्चिपि च स्मृत ॥ 230 ॥

[3]जहाति [4]विभवानिति हायन । 'ओहाक् त्यागे' । अर्चि पक्षे हयति [5]दीपयतीति हायन । 'हय गतिदीप्त्यो' ॥

विरोचनश्चन्द्रवह्न्योर्बलिताते दिवाकरे ।

विरोचत इति विरोचन । 'रुच दीप्तौ' ॥ १०८ ॥

[1] जने K6 [2] K2, K4 add 'जनी प्रादुर्भावे' [3] जिहीते, 'ओहाङ गतौ' K5
[4] भावान् K4, K5 [5] K5 adds प्रकाशयति

(विव.) कुले—जन्मभूम्यामपि । कुलं वश । यथा—महाभिजनप्रभवोऽयमिति । जन्मस्थाने यथा—कन्याकुब्जाभिजनस्त्रिविक्रमसेन इति । अभिजायतेऽस्मिन्नित्यभिजन । 'जनी प्रादुर्भावे' । अधिकरणे घञ् (३. ३ १२१) । 'जनिवध्योश्च' (७ ३. ३५) इति वृद्धिप्रतिषेध ॥ अथ हायनाः—भेदा. स्यु. । [1]वर्षः वत्सरः। अर्चिः ज्वाला। व्रीहिभेद. षष्टिकाख्य. । जहातीति हायन । 'ओहाक् त्यागे'। 'हश्च व्रीहिकालयो·' (३. १. १४८) इति ण्युट्प्रत्यय. । 'आतो युक्चिण्कृतोः' इति [2]युक् (७. ३. ३३) । जिहीते ऊर्ध्वं गच्छतीति हायनोऽर्चि.[3] । यद्यपि वर्षार्चिर्वाचकस्य हायनशब्दस्य नपुसकलिङ्गत्वमप्यस्ति तथापि पुलिङ्गस्यापि सद्भावेन हायनशब्दस्य [4]भिन्नलिङ्गत्वाभावादेकशेषोपपत्तिरिति ॥ चन्द्राग्न्यर्का

विरोचनाः। विशेषेण [5]रोचते दीप्यत इति विरोचनः। 'रुच [6]दीप्तौ'। 'अनुदात्तेतश्च हलादेः' (३. २. १४६) इति युच्। शेषे—'विरोचनो बलेस्ताते' इति। बलिचक्रवर्तिनः पिता विरोचनः पुराणेषु प्रसिद्धः ॥ १०८ ॥

[1] वर्पं B6, Tj2 [2] आतो युगागम Gm1, Tv [3] Tv adds 'ओहाङ् गतौ'
[4] एकदेश° Gm3, Tv [5] B5, B6 omit रोचते [6] Tj1, Tj2 add अभिप्रीतौ च

(पा) कुले—व्रीहिभेदा स्यु। वर्षार्चिपोर्नपुसकमपि[1]। वर्षो वत्सर। अर्चि मयूख। अनयो क्लीवत्व चेति सुभूतिटीका[2] ॥ चन्द्राग्न्यर्का विरोचना ॥ १०८ ॥

[1] A1 omits अपि [2] B3, C1 add व्रीहिभेद पष्टिकाख्य

**केशेऽपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः।**
**आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ॥ १०९ ॥**

(वि) वृजिन कुटिले केशे किल्विषे[1] वृजिन भवेत् ॥ 231 ॥

[2]वृज्यत इति वृजिन [3]। 'वृजी वर्जने' ॥

विश्वकर्मा देवशिल्पिसूर्ययोस्तापसान्तरे।

विश्वस्य [4]कर्मास्यास्तीति विश्वकर्मा ॥

यत्नस्वभावदेहेषु धैर्यक्षेत्रज्ञयोरपि ॥ 232 ॥
मनीषाया च हृदये ब्रह्मण्यात्माभिधीयते।

अततीत्यात्मा। 'अत सातत्यगमने' ॥ १०९ ॥

[1] किल्बिष K4 [2] वर्ज्यते K5 [3] वृजिनम् K3 [4] कर्माण्यस्मिन् J2

(विव.) क्लेशेऽपि वृजिनः। क्लेशो दु:खम्। [1]वृज्यते त्यज्यत इति वृजिन.[2]। रूपभेदात् पुलिङ्गः। शेषे—'क्लीबे वृजिनमेनसि' इति पापे नपुंसकम्[3]। 'वृजिन कल्मषे क्लीब क्लेशे ना कुटिले त्रिषु' इति रभसः॥ विश्वकर्मार्कसुरशिल्पिनोः। विश्वस्य लोकस्य कर्माणि व्यापारा यस्मादिति विश्वकर्मा सूर्यः।

विश्वानि कर्माणि देवसभानिर्माणादीनि यस्येति देवशिल्पी[1] ।। आत्मा—वर्ष्म च । यत्नः प्रयत्नः । यथा—[5]आत्मानुरूपं फलमिति । यत्नानुरूपमित्यर्थः । [6]धृतौ धैर्ये यथा—आत्मवान् नैव मुह्यतीति । बुद्धौ यथा—स्वात्मवेद्योऽयमर्थः । [7]स्वबुद्धिवेद्योऽयमिति यावत् । स्वभावः सहजो धर्मः । यथा—दुष्टात्मा क्रोधात्मा । ब्रह्मणि परमात्मनि यथा—'आत्मैवेदं सर्वम्' (छा. उ. ७. २५. २) इति । वर्ष्मणि शरीरे यथा—स्थूलात्मा, कृशात्मा इति । शेषे—'आत्मेन्द्रियेऽनिले जीवे' इति । इन्द्रिये यथा—नियतात्मा, संयतात्मा इति । अनिलः प्राणाख्यो वायुभेदः । यथा—नेदं निरात्मकं जीवच्छरीरम् । जीवात्मनि यथा—'नानात्मानो व्यवस्थातः' (वैशे. सू. ३. २. २०) इति । वैजयन्त्यामपि—'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि । [8]इन्द्रिये वायुभेदे च' इति (पृ. २१४, श्लो. ६) । अतति सर्वगतो भवतीति आत्मा । 'अत सातत्यगमने'[9] ।। १०६ ।।

[1] वर्ज्यते B8 [2] Tv adds 'वृजी वर्जने' [3] Gm3, Tv add इत्यर्थं
[4] Tj1 adds त्वष्टा [5] स्वात्मानुरूप फलम् (Bhartrhari, v 350) [6] धृति धैर्यम् Tv [7] स्वप्रत्ययवेद्य इत्यर्थं Tv [8] यत्नेऽर्केऽग्नौ मतौ वाते इति मु ग्र
[9] 'सातिभ्यां मनिन्मनिणौ' (उ ४ १५३) [इति मनिण्] इति भा दी (पृ ४७६).

(पा) केशेऽपि वृजिन । 'वृजिन कल्मषे क्लीब केशे ना कुटिले त्रिषु' इति रभस[1] ।। विश्वकर्मा—वर्ष्म च । यत्ने—'सर्वात्मना चक्षुरिव प्रविष्टा' इति रघुवश (७ १२) । धृतौ—महात्मानस्तपस्विन । बुद्धौ—आत्मा ह्यनुभवति सुखदु खे । स्वभावे—'अजानन् दाहात्म्य [2]पततु शलभस्तीव्रदहने'[3] (वैरा श. १८) । ब्रह्मणि—'प्राक्सृष्टे केवलात्मने' (कु स २ ४) । वर्ष्मणि—'अस्त्युत्तरस्या दिशि देवतात्मा'[4] (कु स १ १) । जीवमनसी अपि स्याताम् । ब्रह्मात्मनोरभेदज्ञ । 'आत्मा येन जितस्तेन जित हि भुवनत्रयम्' ।। १०६ ।।

[1] B3 adds विश्वप्रकाशिका च, मुद्रितग्रन्थे तु 'वृजिन कल्मषे केशे वृजिन कुटिलेऽन्यवत्' इति दृश्यते (पृ ६२, श्लो ८६) [2] A1 omits the 3 words [3] शलभस्त्री प्रदहने B3 [4] A1 adds इति कुमारसभव

शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ।
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ।। ११० ।।

(वि) श्लक्ष्णे शक्रे घातुकेभे [1]वर्षुकाब्दे घनाघन [2] ॥ 233 ॥
अतिशयेन घनो निरन्तरो घनाघन ।

अभिमानो [3]वधे ज्ञाने प्रणयार्थादिदर्पयो ।

अभिमन्यत इत्यभिमान । 'मन ज्ञाने'। [4]'मीञ् हिंसायाम्' ॥ ११० ॥

[1] वार्षिकाब्दे $J_2$, $K_6$. [2] $J_2$, $K_4$ add घातुक मत्तेभ इति पदद्वय वा
[3] विधिज्ञाने $K_6$ [4] $K_5$ omits

(विव.) शक्रो—घनाघनः। घातुको हिंस्रः। मत्तेभो मत्तगजः। वर्षुकाब्दो वर्षणशीलो मेघः। इन्द्राद्यर्थचतुष्टयेषु घनाघनशब्दः। *तथा च* हलायुध.[1] (अ. मा. ५. ४०)—'घनाघनो घातुकमत्तदन्तिनोर्निरन्तरे वासववर्षुकाब्दयोः' इति। यथा—घनाघने नभसि भान्ति नार्कत्विषः इति। [2]स्वामी तु—घातुकश्चासौ मत्तेभश्चेति कर्मधारयमुक्त्वा व्याख्यत्। हन्तीति घनाघनः[3]। 'चरिचलिपतिवदीनां द्वित्वमच्याक् चाभ्यासस्य' (वा. ६. १. १२) इत्यनुवृत्तौ 'हन्तेर्घत्वं च' (वा. ६. १. १२) इति धातोर्द्विर्वचनमभ्यासस्यागागमश्च, हकारस्य च घत्व च[4] ॥ अभिमानो—हिंसयोः। धनेन कुलेन विद्यया वा मत्सदृशः कोऽपि नास्तीति बुद्धिरर्थादिदर्पः। अत्र ज्ञानशब्देन अतस्मिंस्तदिति [5]ज्ञानविशेषो विवक्षितः। यथा—शुक्तिकाशकले रजताभिमानः इति। प्रणयः प्रार्थना। परोपद्रवकरणं हिंसा। 'मन ज्ञाने' 'मन अवबोधने' 'मान पूजायाम्'। एभ्यो धातुभ्यो यथातथं भावे घञ् (३. ३. १८) अभिमानः। 'मीञ् हिंसायाम्' इत्यस्माद्धातोः ल्युटि (३. ३. ११५) 'मीनाति मिनोति ...' (६. १. ५०) इत्यात्वे मानशब्दो हिंसावचनः[6]। को मान इति महाभाष्यप्रयोगदर्शनात्[7] ल्युडन्तस्यापि पुंलिङ्गत्वोपपत्तिः ॥ ११० ॥

[1] मुद्रितग्रन्थे तु 'घनाघन शक्रवर्षुकाम्बुदयो' इत्येव दृश्यते। विश्वप्रकाशिकाया दृश्यत एव (पृ ६६, श्लो १७४) [2] स्वामिसुबोधिनीकारौ Tv [3] $T_{J1}$ adds 'हन हिंसागत्यो' [4] $G_{m1}$ adds 'घनाघन' इति श्रुतौ (*Rv* 10 103 1) [5] प्रत्यय Tv [6] न तत्र रुद्र पशूनभिमन्यते (तै ब्रा ३ ६. ११). [7] प्रयोगवसात् Tv.

(पा) शक्रो—घनाघन। घातुकश्चासौ मत्तेभश्चेति विशेषणसमास इति सुभूतिटीका। 'घनाघनो घातुकमत्तदन्तिनो'[1] इति विश्व (पृ. ६६, श्लो १७४)। अभिमानो—प्रणयहिंसयो ॥ ११० ॥

[1] B3, C1 add 'निरन्तरे वासववर्पुकाब्दयो '

**घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे ।**
**इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे ।। १११ ।।**

(वि) मेघे मूर्तिगुणे मूर्ते सान्द्रे विस्तारदार्ढ्ययो ।। 234 ।।
लोहमुद्गरबाहुल्यमुस्तकेपु[1] दृढे तथा ।
[2]कास्यतालादिवाद्ये स्याद् घनो मध्यमनृत्यके[3] ।। 235 ।।

मूर्तिगुण काठिन्यम् । हन्यत इति घन [4] ।।

इनो दिवाकरे पत्यौ पार्थिवे चाभिधीयते ।

[5]एतीति इन । 'इण् गतौ' ।।

राजा चन्द्रे नृपे श्रेष्ठे[6] प्रभौ शक्रे क्षयामय ।। 236 ।।

[7]रञ्जयतीति राजा[8] ।। १११ ।।

[1] मुक्तकेपु K4, K5 [2] कास्येतरादिवाद्ये K6 [3] °नृत्तके K2 [4] J2, K2, K4 add 'हन हिंसागत्यो ' [5] K2 adds नयति [6] क्षत्रे K2, K5 [7] K2, K4 add 'रञ्ज रागे' [8] राजति इति सुवचम

(विव.) घनो मेघे—निरन्तरे । [1]मूर्तिगुणे काठिन्यगुणे । रूपभेदात् पुलिङ्गः। मूर्ते काठिन्ययुक्ते निबिडावयवद्रव्यादौ[2] वाच्यलिङ्गः। हन्यतेऽनेनेति घनः । 'मूर्तौ घनः' (३. ३. ७७) इति निपातनात् साधु. । अत्र सूत्रे 'मूर्तिः काठिन्यम्' इति यद्यपि वृत्तिकारेणोक्त[3] (काशिका, पृ. २१६) तथापि मेघादावपि घनशब्दस्य प्रायिकप्रयोगदर्शनाद् उपमानेन [4]साधुत्व समर्थनीयम् । घन इति योगविभागाश्रयणेन साधुत्वमपीत्यपरे । अत एव घर्मशब्देन घर्मो च सूचित इति वृत्तावुक्तम्[5] (काशिका पृ. २१६) । शेषे—'घनं स्यात् कास्यतालादौ पुसि मुद्गरमुस्तयोः' इति ।। इनः सूर्ये प्रभौ । प्रभुशब्देन राजा, पतिश्च विवक्षित· । तथा च विश्वप्रकाशे (पृ. ८५, श्लो. १)—'इन· सूर्ये नृपे पत्यौ' इति । एति गच्छतीति इनः । 'इण् गतौ' । औणादिको नक्प्रत्यय.[6] ।। राजा—नृपे । क्षत्रिये तद्वर्णमात्रे[7] । शेषे—'राजा क्षयामये शक्रे पतिमात्रद्रुभेदयोः' इति ।

द्रुभेदः[8] आरग्वधाख्यः (१, पृ. २३०)। रभसोऽपि—'प्रभौ भूमिपतौ राजा क्षत्रिये रजनीपतौ' इति ॥ १११ ॥

[1] 'मूर्ति काठिन्यकाययो' इत्युक्तत्वात् (श्लो ६६) अत्र मूर्तिगुणशब्देन काठिन्यरूपो गुण उच्यते Tv [2] पाषाणादौ Tj2 [3] व्याख्यात Gm1, Tv [4] अर्थान्तरेष्वपि साधुत्वमिति केचित् Tv [5] इति व्याचक्षाणेन वृत्तिकारेणाप्ययमर्थ सूचित Gm3, Tv [6] 'इण्सिञ्जिदीङुष्यविभ्यो नक्' (उ ३ २) [7] नृपे महीपतिमात्रे Tv [8] द्रुभेदो राजवृक्ष । शक्र इन्द्र । पूर्ववाक्यगत प्रभुपद काकाक्षिवदुभयत्रापि सबध्यते Tv

(पा) घनो मेघे—निरन्तरे। [1]मूर्तिगुणे—घृतघन, घृतकाठिन्यमित्यर्थ । मूर्ते—घन दधि । कठिनमित्यर्थ ॥ इन सूर्ये—नृपे । [2]प्रभुशब्दस्यात्रापि समन्वय । 'यक्षे चन्द्रे च राजा स्यात् क्षत्रिये नृपतौ प्रभौ' इति [3]त्रिकाण्डशेष (पृ ३०, श्लो ८०६) ॥ १११ ॥

[1] A1 omits [2] प्रभाविति B3, C1 [3] 'यक्षे चन्द्रे च राजा स्यात्' इत्येव मु ग्र, 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो' इति वि प्र (पृ ६४, श्लो ११४)

**वाणिन्यौ नर्तकीदूत्यौ स्रवन्त्यामपि वाहिनी ।**
**ह्लादिन्यौ वज्रतडितौ वन्दायामपि कामिनी ॥ ११२ ॥**

(वि) मत्ताविदग्धादूतीषु नर्तक्या वाणिनी मता ।

वानिनीति वा पाठ । वनुते वणतीति वा वानिनी वाणिनी [1]च । 'वनु याचने', 'वण शब्दे' ॥

नद्या मेनाविशेषे च मेनाया वाहिनी भवेत् ॥ 237 ॥

वहते वाहयतीति वा वाहिनी । 'वह प्रापणे', 'वाहृ[2] प्रयत्ने' ॥

सौदामिन्या च कुलिशे ह्लादिनी परिकीर्तिता ।

ह्लादोऽस्या अस्तीति ह्लादिनी ॥

यामुक्यामङ्गनाया[1] च वृक्षादिन्या च यामिनी ॥ 238 ॥
यामुकाया चक्रवाक्या पारावत्यामपि स्मृता ।

कामोऽस्या अस्तीति कामिनी ॥ ५१२ ॥

[1] वा for च K5 [2] J2 omits 6 lines [3] वनिताया K5

(विव.) वाणिन्यौ नर्तकीदूत्यौ। वणति शब्दायत इति वाणिनी[1]। केचिदत्र द्वितीयाक्षरं दन्त्यवर्गपञ्चमं पठन्ति। तथा च शेषे—'मत्ताविदग्धे वाणिन्यौ वाणिनी वानिनी समे' इति। वानिनीशब्दोऽपि वाणिनीशब्देनार्थतो लिङ्गतश्च समान इत्यर्थः॥ स्रवन्त्यामपि वाहिनी। स्रवन्ती नदी। शेषे—'वाहिन्यौ सैन्यतद्भेदे' इति। वहते वाहयतीति वा वाहिनी[2]। सैन्यमात्रे (१, पृ. ५२८) तद्विशेषे च (पृ. ५३०) प्रागुक्तः॥ ह्लादिन्यौ वज्रतडितौ। वज्रं कुलिशम्। ह्लाद आरावोऽस्या अस्तीति ह्लादिनी॥ वन्दायामपि कामिनी। वृक्षप्ररूढो विजातीयप्ररोहो वन्दा। काम्यत इति कामः आरोग्यादिजनितसौख्यम्। [3]सोऽस्या अस्तीति कामिनी। अपिशब्देन स्त्रीविशेषः प्रागुक्तः (१, पृ. ३६३)॥ अत्र प्रतापः—'श्यामा पारावती स्त्रीषु चक्रवाक्यां च कामिनी' इति। श्यामा प्रियङ्गुः॥ ११२॥

[1] 'वण शब्दे'। 'आवश्यकाधमर्ण्ययोर्णिनि' (३ ३ १७०) इति, ग्रह्यादित्वात् (३ १ १३४) वा णिनि इति भा दी (पृ ४७९-८०) [2] णिनि (३ १ १३४)
[3] तदस्या Gm3

(पा) वाणिन्यौ नर्तकीदूत्यौ। मौग्ध्यवैदग्ध्यदशापन्नापि स्यात्। 'स्त्री विदग्धा च मुग्धा[1] च वाणिनीत्यभिधीयते' इति हलायुध (अ मा २ ३३४)॥ स्रवन्त्यामपि वाहिनी। सेनायामपि स्यात्[2]॥ ह्लादिन्यौ वज्रतडितौ। अशनिरपि। 'अशनि पविविद्युतो'[3] इति विश्व (पृ ६५, श्लो १२३)॥ वन्दायामपि कामिनी। स्त्रियामपि स्यात्॥ ११२॥

[1] मत्ता इति मु ग्र (पृ ५३) [2] B3 omits स्यात् [3] °विद्युतौ A1

त्वग्देहयोरपि तनुः सूनाधोजिह्विकापि च।
ऋतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके॥ ११३॥
मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रणे।

(वि.) अल्पे कृशे च विरले त्वचि देहे तनुर्भवेत् ॥ 239 ॥

तन्यत इति तनुः[1] ॥

गलशुक्त्या वधस्थाने पुत्रिकाप्रतिजिह्वयोः ।
सूना स्यात् प्रसवे पुष्पे सून तु परिकीर्तितम् ॥ 240 ॥

सूयत इति सूना । 'षूङ्[2]प्राणिप्रसवे' ॥

ऋतुकर्मणि विस्तारे तुच्छमन्दाध्वरेषु च ।
वितानमुल्लोचावसरवृत्तभेदेषु कथ्यते ॥ 241 ॥

वितन्यत इति वितानम् । 'तनु विस्तारे' ॥

गृहे कार्ये ध्वजे चिह्ने केतनं स्यान्निमन्त्रणे ।

कित्यतेऽनेनेति केतनम् । 'कित ज्ञाने' ॥ ११३ ॥

[1] $K_2$, $K_4$ add 'तनु विस्तारे'  [2] प्राणिगर्भविमोचने $J_2$

(विव.) त्वग्देहयोरपि तनुः । अस्मिन्नर्थद्वये स्त्रीलिङ्गः[1] । शेषे—'तनुस्तु वाच्यलिङ्गः स्यात् स्वल्पेऽपि विरले कृशे' इति ॥ सूनाधोजिह्विकापि च । सुवति प्रेरयति श्लेष्मादिकमिति सूना उपजिह्वा । 'षू प्रेरणे'[2] । सूयन्ते प्रेर्यन्ते वधार्थं प्राणिनोऽत्रेति सूना प्राणिवधस्थानम् । शेषे—

'सूना पुंस्यां वधस्थानगलशुण्डिकयोरपि ।
सूनं तु वाच्यवच्छूने क्लीबे[3] प्रसवपुष्पयोः ॥'

इति । वधस्थानं भक्ष्यप्राणिहननप्रदेशः । गलशुण्डिका गलस्थानगतो ग्रन्थिविशेषः । शूनम् उच्छूनम्[4] ॥ ऋतुविस्तारयोः—मन्दे । तुच्छकं शून्यम् । मन्दोऽलसः । वितन्यत इति वितानम् । घञ् । विविधो विगतो वा तानस्तननमत्रेति वितानम् । विश्वप्रकाशे (पृ. ८६, श्लो. ५४)—

'वितानो यज्ञविस्तारोल्लोचेषु ऋतुकर्मणि ।
वृत्तभेदावसरयोर्वितानं तुच्छमन्दयोः ॥'

इति। सयूपाः ऋतवः। तद्रहिता दर्शपूर्णमासादयोऽपि यज्ञशब्दवाच्या इति भेदः॥ अथ केतनं—उपनिमन्त्रणे। कृत्येऽवश्यकर्तव्ये। यथा—'निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः' इति (वेणी. ३. १६)। केतौ ध्वज (१, पृ. ५४३)। यथा—मीनकेतन इति। निमन्त्रणमेवोपनिमन्त्रणम्। यथा—'कृतकेतनं ब्राह्मणं नातिक्रमेत्' इति। [5]कित्यते ज्ञायतेऽनेनेति केतनम्। 'कित ज्ञाने'[6]। वेश्मनि प्रागुक्तम् (१, पृ. १६७)॥ ११३॥

[1] तनोतीति तनु। 'तनु विस्तारे'। 'भृमृशीतृचरित्सरितनि ' (उ १ ७) इति उ. [2] 'षूङ प्राणिगर्भविमोचने'। भावे, कर्मणि क्त। स्वादय ओदित। 'ओदितश्च' इति निष्ठानत्वम् इति भा दी (पृ ४८०) [3] सूनम् Tv [4] Tv adds प्रसव फलम्। सततिरित्येके [5] केत्यते Gm3, Tv [6] ल्युट् (३ ३ ११५)

(पा) त्वग्देहयोरपि तनु। 'त्वचि काये तनु स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति रुद्र[1]॥ सूनाधोजिह्विकापि च। वधस्थानमपि स्यात्। 'सूना स्त्री घातनास्पदम्' इति रत्नकोश[2]॥ ऋतुविस्तार—उपनिमन्त्रणे॥ ११३॥

[1] विश्व B3, मुद्रितविश्वप्रकाशिकाया तु 'विरलेऽपि च वाच्यवत्' इति दृश्यते (पृ ८६, श्लो १८) [2] जयकोश B3, $C_1$

वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः॥ ११४॥
उत्साहने च हिंसायं सूचने चापि गन्धनम्।
आतञ्चनं प्रतीवापजवनाप्यायनार्थकम्॥ ११५॥

(वि) ज्ञाने तत्त्वे तपोऽध्यात्मवेदेषु ब्रह्म चोच्यते॥ 242॥
[1]चन्द्रार्कयोगे योगे च ब्राह्मणे च प्रजापतौ।
ऋत्विग्भेदे [2]धर्ममाने ब्रह्मा तु परिकीर्तित॥ 243॥

[3]बृहतीति ब्रह्मा। [4]'बृहि वृद्धौ'॥

हिंसार्थोत्साहने हिंसासूचने[5] च प्रकाशन।
हिंसाया गन्धकरणे गन्धन परिकीर्तितम्॥ 244॥

गन्ध्यतेऽनेनेति गन्धनम्। 'गन्ध अर्दने'॥

आतञ्चनं प्रतीवापे[6] जवनाप्यायनार्थयो: ।

[7]आतच्यते पयोऽनेनेति आतञ्चनम् । 'तञ्चु गतौ' ॥ ११४-५ ॥

[1] चन्द्रार्कयोश्च योगे $K_5$ [2] वर्तमाने $K_6$. [3] बृहति $J_2$ [4] $K_2$, $K_3$ add बृह [5] °सूदनेषु प्रकीर्तित $J_2$ [6] प्रतीवापो दुग्धादौ दध्यादिभावार्थं तक्रादिक्षेप इति भा दी (पृ ४८०) [7] आतञ्च्यते $K_2$, $K_4$

(विव.) वेदस्तत्त्वं—प्रजापतिः । वेदे यथा—ब्रह्मयज्ञ इति । तत्त्वं परमात्मा । यथा—'सर्वं खल्विदं ब्रह्म' (छा. उ. ३. १४. १)। तपसि यथा—'तपो ब्रह्मेति' (तै. उ. ३. २. १०)। अस्मिन्नर्थत्रये[1] रूपभेदाद् नपुंसकलिङ्गः । विप्रे वेधसि च पुंलिङ्गः । बृहति वर्धते[2] इति ब्रह्म । 'बृहि वृद्धौ' । 'बृंहेर्नोऽच्च' (उ. ४. १४८) इति मनिन्, नकारस्याकारश्च । शेषे— 'ब्रह्मा चन्द्रार्कयोर्योगे पुंसि स्यादृत्विगन्तरे' इति । चन्द्रसूर्ययोर्योगो विष्कम्भादिषु पञ्चविंशः । 'ब्रह्मा होताध्वर्युरग्नीत्' (तै. ब्रा. ३. ३. ८८) इत्युक्तऋत्विग्विशेषः ॥ उत्साहने—गन्धनम् । उत्साहनमुत्साहोत्पादनम् । हिंसायै इति चतुर्थ्यन्तं पदं पूर्वोत्तराभ्यां संबध्यते । अतश्च हिंसार्थमर्थदानेन वचसा[3] प्रोत्साहनेन, हिंसार्थं हस्तचेष्टनादिसूचनेऽपीत्युक्तं भवति । तथा च शेषे—'हिंसार्थसूचने हिंसोत्साहने[4] चापि गन्धनम्' इति[5] । गन्धयतेऽर्द्यतेऽनेनेति गन्धनम् । 'गन्ध अर्दने' । अर्दनं हिंसेति धातुवृत्तौ[6] । करणे ल्युट् (३. ३. ११७) । अथवा गन्धवन्तं करोतीति णिच् । मतुपो लुकि ल्युटि गन्धनम् । युच्प्रत्यये स्त्रीलिङ्गो गन्धनाशब्द एश्वर्येषु वर्तत इत्यनुसंधेयम् । केचित्तु हिंसायामिति सप्तम्यन्तं पठित्वा गन्धनशब्दस्य हिंसारूपमप्यर्थमाहुः ॥ आतञ्चनं—आप्यायनार्थकम् । शृतशीते पयसि दधिनिष्पादनाय[7] स्वल्पमाताप्य[8]तक्रादेरवसेचनं प्रतीवापः । यथा—'अग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति' इति प्रयोगः (आप. श्रौ. १. ११. १)। द्रुतस्य स्वर्णादेर्द्रव्यान्तरेणावचूर्णनं प्रतीवाप इति केचित्[9] । अवचूर्णनं रूपान्तरापादनम् । जवनं वेगः । क्षीणस्य पूरणमाप्यायनम् । आतञ्च्यते संकुच्यते पयोऽनेनेत्यातञ्चनम् । 'तञ्चु गतौ' इति धातुः[10] ॥ ११४-५ ॥

[1] Tv adds ब्रह्मविदिति वेदाद्यर्थत्रये. [2] वर्धति $B_6$ [3] 'मम शत्रुममुं जहि' इत्यादिवचसा Tv [4] °उपोद्धनने $B_6$. [5] कस्यचिदर्थमारोप्य प्रकटीकरण प्रतापनम् Gm1, Tv. [6] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते [7] °करणाय Tv. [8] तक्रादिव $B_5$, $B_8$ [9] स्वामी (पृ २६७). [10] ल्युट्.

(पा) वेदस्तत्त्व—हिंसायै सूचने[1] चापि गन्धनम् । हिंसायै इति सूचन-विशेषणम् । 'प्रकाशोत्साहयोर्हिंसासूचने चापि गन्धनम्' इति रभसकोश । हिंसायाम् इति पाठे पर्यायपदम् । 'गन्धन सूचनोत्साहहिंसनेपु प्रकाशने' इति विश्व (पृ ६१, श्लो ७४) ।। आतञ्चन—आप्यायनार्थकम् । प्रतीवापो निक्षेपणम् । जवन वेग । आप्यायन प्राणनम्[2] ।। ११४–५ ।।

[1] सूचन A1 [2] पीवनम् B3, तर्पणम् C1

**व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि ।**
**स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम् ।। ११६ ।।**

(वि) कादिवर्णे लाञ्छने च पुमुखस्थितरोमणि[1] ।। 245 ।।
अङ्गतेमनयोश्चापि व्यञ्जन परिकीर्तितम् ।

[2]व्यज्यतेऽनेनेति व्यञ्जनम् । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' ।।

[3]सर्वेपा च विहङ्गाना युद्धे गर्हणगुह्ययो ।। 246 ।।
कुलीनत्वे लोकवादे कौलीन परिकीर्त्यते[4] ।

[5]कोलतीति कुलम् । 'कुल सस्त्याने' । कुलस्येद कौलीनम् ।। ११६ ।।

[1] लोमनि K5 [2] व्यञ्जयतीति K5 [3] पशुसर्पविहङ्गाना J2 [4] परिकथ्यते J2, K4 [5] कुलयत इति K6

(विव) व्यञ्जन—अवयवेष्वपि । लाञ्छन कपिध्वजादिकम् । पुरुष-मुखप्रभव रोमवृन्द श्मश्रु । निष्ठान तेमनम्[1] । अवयवः शिश्नोपस्थगुदादिः । व्यज्यतेऽनेनेति व्यञ्जनम् । 'अञ्जू [2]व्यक्तिम्रक्षणकान्तिगतिषु' । करणे कर्मणि च ल्युट् । अपिशब्दात् ककारादिहकारान्ताना हला च ग्रहणम् । तथा च शेषे—'व्यञ्जन कादिहान्ते स्यात्' इति ।[3] स्यात् कौलीन—पक्षिणाम् । निन्दितः पुरुषो नमितमुखत्वेन कौ भूमौ लीन इव [4]भवतीति कुलीन उच्यते । तस्येदम् इति कृत्वा कौलीनम्[5] (५. १ १३०) । लोकवाद जनवाद[6] । मेषवृषादिपशूना सर्पाणा लवकादिपक्षिणा यद् युद्ध तदपि कौलीनमुच्यते । तथा च प्रताप.—

'कौलीनं स्यात् कुलीनत्वे गुह्ये जन्ये कुकर्मणि ।
कौलेयकविहङ्गाहिपशूना सङ्गरेऽपि च ॥'

इति। सुभूतिचन्द्रस्तु व्याचष्ट—पशूनामहीना पक्षिणा वा नागरिकैः क्रियमाणं द्यूतरूपं युद्धं कुलीनशब्दार्थ इति। तथा च शेषे[7]—'कुलीनत्वे व्यहिपशुयुद्धद्यूते महीक्षिताम्' इति। विः पक्षी। अहिः सर्पः। पक्षिभिः सर्पैः पशुभिश्च प्रवर्तितं राज्ञा [8]द्यूतरूपं युद्ध कौलीनमित्यर्थः। कुले भवं कौलीनम् ॥ ११६ ॥

[1] B5 adds मरीचादि, भक्ताद्युपसेचन दध्यादि Tv [2] व्यक्तिश्लक्ष्ण° B6
[3] ककारादयो हकारान्ता इत्यर्थं B6 [4] भाति Tv [5] अण् प्रत्यय [6] जनापवाद B5.
[7] Gm3, Tv add कौलीन गुह्यकुत्सयो [8] न पश्वादिमात्रमिति मूलग्रन्थस्य सोपस्कार-मर्थकथनमिति शेषपर्यायव्याख्यायामुक्तम् Gm3, Tv

(पा) व्यञ्जन—अवयवेष्वपि। तैलघृतादावपि स्यात्। 'निष्ठान तेमन तच्च व्यञ्जन स्याद् घृतादि च' इति वैजयन्ती (पृ १६५, श्लो ८५) ॥ स्यात् कौलीन—पक्षिणाम्। युद्धे पश्वहिपक्षिणामिति प्राणिद्यूतमुक्तम्। 'कौलीन स्यात् कुलीनत्वे प्राणिद्यूते जनोदिते' इति जयकोश ॥ ११६ ॥

**स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।**
**अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम् ॥ ११७ ॥**

(वि) वनभेदे नि सरणे स्यादुद्यान प्रयोजने ॥ 247 ॥

[1]उद्यान्ति उद्योग कुर्वन्त्यस्मिन्निति उद्यानम् ॥

अवकाशे सनिवेशे स्थितौ स्थान प्रचक्षते[2] ।

तिष्ठत्यस्मिन्निति स्थानम्। 'ष्ठा गतिनिवृत्तौ' ॥

क्रीडाया विजिगीषाया व्यवहारे द्युतौ स्तुतौ ॥ 248 ॥
मोदे मदे स्वप्नकान्त्योर्गतौ च परिदेवने ।
अक्षेषु द्युतये चैव देवन परिगद्यते[3] ॥ 249 ॥

दीव्यन्त्यनेनेति देवनम्। 'दिवु क्रीडादौ' ॥ ११७ ॥

[1] K6 omits उद्यान्ति.   [2] प्रवक्ष्यते K2   [3] परिचक्ष्यते K5, K6; परिचक्षते J2

(विच.) स्यादुद्यानं—प्रयोजने। गृहादिप्रदेशाद् निर्गमनं नि.सरणम्। वनभेद आक्रीडः। प्रयोजनमुद्देश्यम्। उत्पूर्वाद् 'या प्रापणे' इत्यस्माद् भावेऽधिकरणे करणे वा ल्युट्॥ अवकाशे स्थितौ स्थानम्। मूर्तद्रव्यान्तरानवरुद्धः प्रदेशोऽवकाशः। यथा—[1]प्रतिश्रये पान्थानामस्ति स्थानम्। [2]तिष्ठतेः अधिकरणे भावे च ल्युट्। शेषे—'स्थानं स्याद् युद्धनृत्तार्थे सादृश्ये संनिवेशने' इति। युद्धार्थे प्रत्यालीढादौ। नृत्तार्थे संहतसमपादादौ चेत्यर्थः[3]॥ क्रीडादावपि देवनम्। आदिशब्देन [4]विजिगीषाव्यवहारादयो दीव्यतिधातोरर्था भावरूपाः सर्वेऽपि विवक्षिताः। देवनाः पाशकाः इति पुंलिङ्गः[5] प्रागुक्तः[6] (१, पृ. ६४७)॥ ११७॥

[1] परिश्रये, स्थिति अवस्थानम् Gm1, Gm3   [2] स्थीयतेऽत्रेति स्थानम्। 'ष्ठा गतिनिवृत्तौ' B5.   [3] Gm3, Tv add सादृश्ये यथा—यवस्थाने गोधूम इति   [4] क्रीडाव्यवहार B6.   [5] पुंलिङ्गप्रयोग Gm1, Tv   [6] दीव्यतेऽनेनेति देवनम्। 'दिवु क्रीडादौ'। भावे करणे च ल्युट्

(पा) स्यादुद्यान—क्रीडादावपि देवनम्। क्रीडादीना [1]करणाधिकरणयोश्चापि स्यात्॥ ११७॥

[1] कारककरणाधिकरणेषु A1

उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च।
व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च॥ ११८॥

(वि) उद्यमे पौरुषे तन्त्रे [1]मलवेगे रणे मृधि।
उपविष्टोर्ध्वभागे स्यादुत्थान पुस्तकेऽङ्गने[2]॥ 250॥

उत्तिष्ठन्त्यत्रेत्युत्थानम्। 'ष्ठा गतिनिवृत्तौ'॥

[3]स्वैरस्य करणे चैव विरोधाचरणे तथा[4]।
[5]समाधेस्तु निवृत्तौ च व्युत्थान परिकीर्तितम्॥ 251॥

व्युत्तिष्ठन्त्यत्रेति व्युत्थानम्॥ ११८॥

[1] हलवेगे K6.   [2] K4 adds अङ्गन यानम्   [3] व्युत्थान प्रतिरोधे च K5.   [4] अपि च J2   [5] समाप्ते K6

(विव.) उत्थानं—उद्गमेऽपि च । ऊर्ध्वविस्तृतदोःपाणिपुरुषप्रमाणमत्र पौरुषशब्देन विवक्षितम् । यथा—'सप्तोत्थानमिदं रम्यमाप्तरक्षिशतावृतम्' इति क्षेमेन्द्रः । तन्त्रं सैन्यम् । यथा—उत्थानसंपन्नो राजा इति । संनिविष्टस्योपविष्टस्य शयितस्य वा उद्गमनमूर्ध्वीभावः[1] । शेषे—'मलोत्सर्जन[2]उत्थानं हर्षोद्योगसमाप्तिषु' इति । हर्षे यथा—सूत्थानं ते मुखम् । उद्योगे यथा—अनुत्थाने विनश्यति[3] । समाप्तौ यथा—'यदा शतं सहस्रं कुर्वन्त्यथैकमुत्थानम्' (तै. सं. ७. २. १. ४) इति । उत्पूर्वात् तिष्ठतेः करणे भावे च ल्युटि (३. ३. ११७, ११५) 'उदः स्थास्तम्भोः पूर्वस्य' (८. ४. ६१) इति सकारलोपे[4] उत्थानम् ॥ व्युत्थानं—आचरणेऽपि च । प्रतिरोधः आस्कन्दनम् । विरोधाचरणं प्रतिकूलाचरणम् । विगतमुत्थानं प्रचारोऽत्रेति व्युत्थानम् । अपिशब्दात् समाधिनिवृत्तावपि । यथा—व्युत्थानदशेति ॥ ११८ ॥

[1] ऊर्ध्वभाव. B5, B6. [2] °सर्जनमुत्थान Tv. [3] 'अनुत्थाने ध्रुवो नाशः' कौ. अर्थशास्त्रे (Apte's Dict. p. 94). [4] पूर्वसवर्णादेशो भवति Tv.

(पा.) उत्थानं—उद्गमेऽपि च । उद्यमे समरे [1]हर्षेऽङ्गणेऽप्युत्थानमिति सुभूतिटीका । तन्त्रं सैन्यम्[2] ॥ व्युत्थानं—आचरणेऽपि च । स्वतन्त्रतायामपि स्यात् । 'स्वतन्त्रता च व्युत्थानम्' इति त्रिकाण्डशेषः (पृ. ३०, श्लो. ८१२) । 'स्वातन्त्र्यानुष्ठानं व्युत्थान विलसितं ललितम्' इति रत्नकोशः ॥ ११८ ॥

[1] अङ्गने B3, C1. [2] A1 adds सनिविष्टोद्गम सनिविष्टेन उद्गमः उद्यम..

मारणे मृतसंस्कारे गतौ द्रव्योपपादने ।
निर्वर्तनोपकरणानुव्रज्यासु च साधनम् ॥ ११९ ॥

(वि.) सिद्धौ लिङ्गे सैन्यगत्योर्वधे द्रव्योपपादने ।
निर्वर्तने च गमने [1]कारके मृतसंस्कृतेः[2] ॥ 252 ॥
[3]शिश्नोपायोपहरणेपूपकारे च साधनम्[4] ।

उपचार उपकरणम् । साध्यतेऽनेनेति[5] साधनम् । 'साध संसिद्धौ' ॥ ११९ ॥

[1] करणे J2. [2] °संस्कृतौ J2, K4, K5. [3] उपकरणे K6 [4] प्रसाधनम् K2, K4 [5] K3, K4 omit अनेन.

(विव.) मारणे—अर्थदापने—साधनम् । मारणे यथा—कृष्णेन साधितः कंसः इति। मृतसंस्कारोऽग्निप्रदानादिः। यथा—कृतसाधनाः पितरः इति। कश्चित् अमृतसंस्कार इत्यकारप्रश्लेषेण छेदनं कृत्वा अमृतस्य वत्सनाभादेर्विषस्य निर्विषीकरणरूपसस्कार इति व्याचष्ट। यथा—साधितं विषमिति। गतौ यथा—'साधयाम्यहमविघ्नमस्तु ते'[1] इति (रघु. ११. ९१)। द्रव्ये धनधान्यादौ यथा—साधनं संपत्तिरिति। अर्थस्याधमर्णेन गृहीतस्य दापनं [2]पुनरादापनम्। यथा—'प्रपन्नं [3]साधयन्नर्थम्' इति (या. स्मृ. २. ३. ४०)। [4]निर्वर्तनं कार्यस्य निष्पादनम्। यथा—पटं साधयति कुविन्द इति। घटं साधयति कुलाल इत्यादि। सुबोधिनीकारस्तु निवर्तनमिति रेफरहितं पठित्वा कार्यान्निवर्तनमिति व्याचष्ट। उपकरणमुपायः। यथा—[5]किं साधनं धनप्राप्तौ इति। [6]गुर्वादीननुसृत्य गमनम् अनुव्रज्या। यथा—शिष्यसाधनयुक्त इति। साध्यतेऽनेनेति साधनम्। करणे भावे ल्युट् (३. ३. ११७, ११५)। शेषे—'साधनं करणे लिङ्गसैन्ययोर्मेहनेऽपि च' इति। करणं कारकविशेषः। 'साधकतमं करणम्' (१. ४. ४२) इत्युक्तरूपः। लिङ्गमनुमापकम्[7]। यथा—अनित्यत्वसाधनं कृतकत्वमिति। सैन्ये यथा—प्रभूतसाधनो यायात् इति। मेहने यथा काव्यप्रकाशिकायाम् (७. १५१) अश्लीलोदाहरणे—'साधनं सुमहद् यस्य' इति[8]॥ ११९॥

[1] व for ते B6 [2] प्रत्याहरणम् Gm3, Tv [3] साधयेत् B5, B6 [4] अन्ये तु निर्वर्तनमिति Gm1, Tv. [5] धनार्जने साधन चिन्तयाम Tv [6] गुर्वादि पृष्ठतो गमनम् Tv [7] Tj1, Tj2 add धूमादि [8] Gm3, Tv add 'साधन स्यादसाध्यार्थस्ववशीकरणेऽपि च' इति *नानार्थसग्रहे*

(पा.) मारणे—साधनम्। मृतसस्कारोऽग्निदानम्। द्रव्य धनम्। [1]अर्थदापन भूमिहिरण्यादीना न्यास । उपकरणमुपाय ।

'साधन निर्वृतौ [2]मेढ्रे सैन्ये सिद्धौ [3]पदे गतौ ।
उपाये मृतसस्कारे दापने [4]सुगमे धने ॥'

इति विश्व (पृ ६३, श्लो ९५) ॥ ११९ ॥

[1] अर्थदापने इति पारिजातपाठ [2] मेण्ढ्रे इति मु ग्र [3] गते वधे इति मु ग्र [4] अनुगमे इति मु ग्र

**निर्यातन वैरशुद्धौ दाने न्यासार्पणेऽपि च ।**
**व्यसन विपदि भ्रशे दोषे कामजकोपजे ।। १२० ।।**

(वि ) निर्यातन वितरण न्यासप्रत्यर्पण तथा ।। 253 ।।
ऋणवैरमलादीना शोधन चापि [1]कथ्यत ।

नि शेषेण यातन निर्यातनम् ।।

भ्रशे कामजकोपोत्थदोषे विपदि किल्विष ।। 254 ।।
अशुभे निष्फलोद्योग दैवानिष्टफले[2] तथा ।
व्यसन स्यादसामर्थ्ये पवनव्यक्तचशक्तिपु[3] ।। 255 ।।

व्यस्यत इति व्यसनम । असु क्षपण ' ।। १२० ।।

[1] च प्रचक्षते J2 [2] दैवारिष्ट° K4 K5, दैवऽरिष्टफल J2 दैवादिष्ट° K6
[3] °शक्तिपु J2, K5, °शुक्तिपु K6

(विव ) निर्यातन—अर्पणेऽपि च । वैरशुद्धि प्रतीकार । इह दानशब्देन प्रतिश्रुतार्थस्य प्रदान विवक्षितम् । उपनिधिद्रव्यस्यानुद्घाटितमुद्रस्य स्वामिहस्ते दान न्यासार्पणम् । निर्यात्यते निष्कास्यते वैर स्वहस्तगत वा धनमनेनेति निर्यातनम् । 'यत निकारोपस्कारयो '[1], णिचि' करणे ल्युट् (३ ३ ११७) ।। व्यसन —कामजकोपजे । विपद् दु खम् । यथा—'चिराय[3] मित्रव्यसनी सुदमो दमघोपज ' इति माघ [4] (शिशु २ ६०) । भ्रश स्खालित्यम् । यथा—आम्नाये व्यसन प्राप्त इति । कामजाना कोपजाना च दोषाणां स्वरूप मनुना प्रपञ्चितम् । यथा— (म स्मृ ७ ४७-८)

'मृगयाक्षो दिवा स्वाप [5] परीवाद स्त्रियो मद ।
तौर्यत्रिक वृथा[6] त्याग कामजो दशको गण ।।
पैशुन्य साहस द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डज च पारुष्य क्रोधजोऽपि गणोऽष्टक ।।'

इति । एपामष्टादशाना मध्ये कष्टे सप्त कष्टतमानि ।

'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ।।
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत् त्रिकं सदा ।।'(म.स्मृ.७.५०-१)

इति । व्यस्यते श्रेयोमार्गात् प्रच्याव्यते पुरुष इति व्यसनम् । 'असु क्षेपणे'[7] । शेषे—'व्यसनं किल्बिषे सक्तावशुभे निष्फलोद्यमे' इति । सक्तिः आसक्तिः । यथा—'विद्यायां व्यसनम्' इति (नी. श. ५१) । अशुभम् अमङ्गलं वाक्ताडनादि ।। १२० ।।

[1] °सस्कारयो B5, B6   [2] Tv adds स्वार्थे   [3] चिरस्य इति मु ग्र
[4] माघप्रयोग Tj1, Tj2   [5] स्वप्न इति मु ग्र   [6] वृथाद्या च इति मु ग्र
[7] भावे करणे च ल्युट्

(पा) निर्यातन—कामजकोपजे । भ्रशोऽपाय । 'दैवानिष्टफलेऽपाये विपत्तौ निष्फलोद्यमे' इति [1]विश्व (पृ. ९२, श्लो ९२) । कामजदोप. पानस्त्रीमृगयाद्यूतानि । कोपजदोषो वाक्पारुष्यदण्डपारुष्यार्थदूषणानि ।। १२० ।।

[1] B3, C1 add 'व्यसन त्वशुभे सक्तौ पानस्त्रीमृगयादिषु'.

**पक्ष्माक्षिलोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि ।
तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि ।। १२१ ।।**

(वि) तन्त्वादिसूक्ष्मावयवे लोचनस्य च लोमनि ।
किञ्जल्के पक्षिगरुति पक्ष्मशब्दोऽभिधीयते ।। 256 ।।

पक्ष्यते परिगृह्यत[1] इति पक्ष्म । 'पक्ष परिग्रहे' ।।

उत्सवेऽवसरे[2] ग्रन्थौ विषुवत्प्रभृतावपि ।
दर्शप्रतिपदो [3]सधौ पर्व शल्यसभादिके[4] ।। 257 ।।

पर्वतीति पर्व । 'पर्व पूरणे' ।।

पदव्या लोचनपुटे वर्त्मशब्द प्रकीर्तित ।

वर्तन्तेऽनेनेति वर्त्म । 'वृतु वर्तने' ।। १२१ ।।

[1] K6 omits [2] वत्सरे J2 [3] मध्ये K2, K4 [4] °सभादिषु J2

(विव.) पक्ष्माक्षि--अणीयसि। नयनपुटप्रान्तप्ररूढं लोम अक्षिलोम। किञ्जल्कः प्रसिद्धः (१, पृ. १८२)। अणीयसीति पदं तन्तुतूलादिभागस्य[1] विशेषणम्। पक्ष्यते परिगृह्यत इति पक्ष्म। 'पक्ष परिग्रहे'। औणादिको [2]मनिन्प्रत्ययः (उ. ४. १४५)। अपिशब्दाद् 'गरुति च' इति स्वामी (पृ. २९८)॥ तिथिभेदे क्षणे पर्व। [3]तिथिभेदः तिथिविशेषः। यथा--

'चतुर्दश्यष्टमी चैव पूर्णिमा च कुहूस्तथा।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च॥'

इति प्रसिद्धः[4]। क्षणः उत्सवः। यथा--वैवाहिकं पर्व इति। पर्वति [5]पूरणो भवत्यस्मिन्निति पर्व। 'पर्व पूरणे'। अत्र प्रतापः--

'दर्शप्रतिपदोः संधौ विषुवत्प्रभृतावपि।
पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे॥'

इति। प्रस्तावोऽवसरः। लक्ष्यते ज्ञायते प्रतिपाद्यार्थोऽनेनेति लक्षणम् अध्यायाद्येकदेशः। यथा--द्वादशलक्षणी मीमांसा इति[6]। लक्षणान्तरे लक्षणविशेषे पर्वशब्दः। यथा--आदिपर्व, सभापर्व इत्यादि॥ वर्त्म नेत्रच्छदेऽध्वनि। अक्षितिरोधानचर्मपुटो नेत्रच्छदः। अक्षिप्रान्ते वर्तत इति वर्त्म। 'वृतु वर्तने'। औणादिको मनिन्प्रत्ययः (उ. ४. १४५)। अध्वनि मार्गे प्रागुक्तः (पृ. १६२)॥ १२१॥

[1] तन्त्वाद्यंशस्य Tv [2] 'सर्वधातुभ्यो मनिन्' [3] तिथिभेद पूर्णिमा। यथा--'न शारद पार्विकशर्वरीश्वर' इति नैषधकाव्ये (१ २०)। अन्येऽपि तिथिभेदा पुराणेषु परिभाषिता Tv [4] विष्णुपुराणे (श द्रु p 74) [5] पूर्ण B5, B6 [6] धर्मो द्वादशलक्षण्या व्युत्पाद्य (शा भा Apte's Dict p 848)

(पा) पक्ष्माक्षि--क्षणे पर्व। पञ्चदशी च तिथिमात्र च तिथिभेद.। उत्सवश्च प्रस्तावश्च क्षण। वर्त्म--अध्वनि॥ १२१॥

अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते।
प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिह्नयोः॥ १२२॥

(वि.) चीरखण्डे कुकार्ये च गुह्ये कौपीनमुच्यते ॥ 258 ॥

कौपीनशब्दव्युत्पत्तिरूह्या[1] ॥

सगमे ग्राम्यधर्मे च मैथुन परिकीर्तितम् ।

मिथुनस्येद मैथुनम्[2] । 'मिथृ मेथृ सगमे' ॥

प्रकृतावजहल्लिङ्गे प्रज्ञायामुत्तमेऽपि च ॥ 259 ॥
एकत्वे च [3]महामात्ये प्रधान परमात्मनि ।

प्रधत्त इति प्रधानम् । 'डुधाञ् धारणपोषणयो.' ॥

[4]लान्छने च मनीषाया प्रज्ञानमभिधीयते ॥ 260 ॥

प्रज्ञायत इति प्रज्ञानम् । 'ज्ञा अवबोधने' ॥ १२२ ॥

[1] उन्नेया J2, K6 [2] K3, K4 add मेथति मिथ. सगच्छत इति मिथुनम्.
[3] महामात्रे J2 [4] Gap of 8 pages in K5

(विव.) अकार्यगुह्ये कौपीनं । कर्तुमयोग्यम् अकार्यम् । प्रच्छादनार्हत्वेन कूपप्रवेशमर्हतीति कौपीनम् । 'शालीनकौपीने अधृष्टाकार्ययोः' (५. २. २०) इति कूपशब्दात् खञ्प्रत्ययः उत्तरपदलोपश्च निपात्यते । पापवदेव[1] गुह्यं रहस्यस्थानम् उपस्थोऽपि कौपीनमुच्यते । गौणोऽपि[2] निरूढत्वेन मुख्यतुल्यत्वात् कौपीनशब्दोऽपि नानार्थत्वेनोक्तः[3] । शेषे—'कौपीन चीरखण्डे स्यात्' इति । इह चीरखण्डमपि तादर्थ्यलक्षणया गुह्याच्छादनमेव [4]गृह्णाति । 'कक्षापटेऽपि कौपीनम्' इति दुर्गः ॥ मैथुनं संगतौ रते । संगतिर्नाम सुरतव्यतिरिक्तप्रयोजनवशेन स्त्रीपुंसयोर्विवाहादिकाले प्रत्यासत्तिविशेषः । मिथुनस्य स्त्रीपुंसयोरिदं मैथुनम् (४. ३. १२०[5]) । प्रधानं परमात्मा धीः । परमात्मशब्देन क्षेत्रज्ञो विवक्षित इति चन्द्रः । धीर्बुद्धिः । तत्कारणं प्रकृतिश्च प्रधानशब्दार्थः । शेषे—'प्रधानं मुख्यमन्त्रिणोः' इति । मुख्ये श्रेष्ठे मन्त्रिणि अमात्ये चेत्यर्थः । अत्रार्थद्वये प्रधानशब्दो नपुंसकलिङ्ग एव । यथा चैतत् तथा प्रागुक्तम्[6] (२. ८. ५) ॥ प्रज्ञानं बुद्धिचिह्नयोः । चिह्नं लक्षणं ज्ञापकमित्यर्थः । भावे करणे च ल्युट् (३. ३. ११५, ११७) ॥ १२२ ॥

[1] Gm3, Tv add गोप्यत्वात् [2] शब्द Tv [3] इत्यवधेयम् Tj1, Tj2, Tv
[4] गुह्यते B5, B6 [5] 'तस्येदम्' [6] प्रधत्ते, प्रधीयतेऽनेन वा प्रधानम्। 'डुधाञ् धारणपोषणया'। ल्युट् (३ ३ ११५, ११७)

(पा) अकार्यगुह्ये कौपीनम्। अकार्य[1] गर्ह्यत्वात् [2]प्रच्छादनार्हं कार्यम्। गुह्य[1] प्रच्छादनार्हावयव ॥ मैथुन—परमात्मा च। [3]चात् प्रकृत्यादि ॥ प्रज्ञान बुद्धिचिह्नयो ॥ १२२ ॥

[1] A1 adds नाम [2] °अर्हभूत A1 [3] प्रकृतिरपि स्यात् A1

**प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः।**
**क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥ १२३ ॥**

(वि) कुसुमे च फले चापि प्रसून परिकथ्यते।

प्रसूयत इति प्रसूनम्। 'पूङ प्राणिप्रसवे'॥

नाशे कुले च निधन निवृत्तौ स्याद् धनस्य च ॥ 261 ॥

निवृत्त धनमस्मादिति निधनम् ॥

आह्वाने रोदने चापि न्न्दन परिकीर्तितम्।

क्रन्द्यतेऽनेनेति क्रन्दनम्[1]। 'क्रदि आह्वाने रोदने च'॥

शरीरे च प्रमाणे च वर्ष्म स्यात् सुन्दराकृतौ ॥ 262 ॥

[2]वर्षतीति वर्ष्म। 'वृषु सेचने'॥ १२३ ॥

[1] क्रन्दत्यनेनेति J2 [2] वृष्यते K3, K4

(विय.) प्रसूनं पुष्पफलयोः। फलं फलमात्रम्। प्रसूयते वृक्षादिनेति प्रसूनम्[1]॥ निधनं कुलनाशयोः। नियतं निश्चितं धनं दायोऽत्रेति निधनं वंशः। निवृत्तं धनं स्वामिनाशादत्रेति निधनं नाशः। शेषे—'सामभक्ते तु निधनम्' इति। साम्नः [2]पञ्चमभक्तावित्यर्थः। यथाहुश्छन्दोगा.—'सर्वे निधनं ब्रूमः

साम्नो निधनमुपयन्ति ' इति । यज्ञे बर्हिर्मुष्टिरपि निधनमुच्यते ॥ क्रन्दने रोदनाह्वाने । 'क्रदि आह्वाने रोदने च ' इति रेफसहिताद् धातोः भावे ल्युटि क्रन्दनम् ॥ वर्ष्म देहप्रमाणयोः । अत्र प्रमाणशब्देनोर्ध्वमानं विवक्षितम् । 'गजवर्ष्म किरातेभ्यः शशसुर्देवदारवः' इति कालिदासः (रघु. ४. ७६) । वर्षति वृष्यते चेति वर्ष्म । 'वृषु सेचने' । मनिन्प्रत्ययः[3] (उ. ४. १४५) ॥ १२३ ॥

[1] 'षूङ् प्राणिप्रसवे'। 'ओदितश्च' (८ २ ४५) इति निष्ठानत्वम्, 'स्वादय ओदित ' [2] 'लोकेषु पञ्चविधꣳ सामोपासीत' (छा उ २ २ १) [3] 'सर्वधातुभ्यो मनिन्'

(पा ) प्रसून पुष्पफलयो । सूनशब्दोऽपि एवप्रकार । 'सून प्रसवपुष्पयो ' इति विश्व (पृ ८६, श्लो. ६) ॥ निधन—प्रमाणयो । [वर्ष्म] सुन्दराकारेऽपि स्यात् । 'प्रमाणदेहयोर्वर्ष्म स्यादाकारेऽपि सुन्दरे' इति रभस ॥ १२३ ॥

**गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे ।**
**संनिवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः ॥ १२४ ॥**

(वि ) गृहे देहे स्थितौ रश्मौ धाम जन्मप्रभावयो ।

धीयते ध्रियत इति धाम[1] ॥

सस्थानमाकृतौ मृत्यौ रचनाया चतुष्पथे ॥ 263 ॥

[2]सम्यक् तिष्टन्त्यत्रेति सस्थानम् । 'ष्ठा गतिनिवृत्तौ ' ॥

लाञ्छने च प्रधाने च लक्ष्मशब्द प्रकीर्त्यते[3] ।

लक्ष्यत इति लक्ष्म । ' लक्ष दर्शनाङ्कनयो ' ॥ १२४ ॥

[1] K₂ adds ' डुधाञ् धारणपोषणयो ' [2] सतिष्ठन्ते J₂, K₄ [3] प्रकीर्तित J₂

(विव.) गृह—धामानि । त्विट् किरणः । प्रभाव· प्रताप· । धत्ते धीयत इति वा धाम । दधातेरौणादिको मनिन् (उ. ४. १४५) । शेषे—'धाम स्थाने च जन्मनि' इति[1] । अथ चतुष्पथे—सस्थानम् । चतुर्णां पथा समावेशस्थान चतुष्पथम् ।

संगतास्तिष्ठन्त्यत्र पन्थान इति संस्थानम्[2]। सम्यक् तिष्ठन्त्यत्रावयवा इति संनिवेशोऽवयवरचनाविशेषः। शेषे—'संस्थानमाकृतौ मृत्यौ' इति। अवयवसंनिवेशोऽभिव्यङ्ग्यस्वरूपम् आकृतिः[3]॥ लक्ष्म चिह्नप्रधानयोः। चिह्नं लक्षणम्। प्रधानं मुख्यम्। यथा—यादवलक्ष्मा कृष्णः इति॥ १२४॥

[1] B5 adds अत्र विश्व—'धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः' इति (पृ. ६५, श्लो. १२१) [2] सस्थीयतेऽत्रेति सस्थानम्। ल्युट्. [3] Tv adds 'सस्थानमाकृतौ मृत्यौ सनिवेशे चतुष्पथे' इति रुद्र.

(पा.) गृहदेह—सनिवेशे च सस्थानम्। सनिवेशोऽवयवविभागः। 'व्यूढोरस्को वृषस्कन्ध मालप्राशुर्महाभुज (रघु. १.१३)॥ लक्ष्म चिह्नप्रधानयोः॥ १२४॥

**आच्छादनं संपिधानमपवारणमित्युभे।**
**आराधनं साधने स्यादवाप्तौ तोषणेऽपि च॥ १२५॥**

(वि.) आच्छादन स्याद् वसने सविधानेऽपवारणे॥ 264॥

[1]आच्छाद्यतेऽनेनेत्याच्छादनम्। 'छद अपवारणे'।

आराधन साधने स्यादवाप्तौ तोपणेऽपि च।

आराध्यत[2] इत्याराधनम्। 'राध[3] ससिद्धौ'॥ १२५॥

[1] K5, K8 omit अनेन [2] J2, K4 add अनेन [3] J2, K4 add साध.

(विव.) आच्छादनं—इत्युभे। घटादेः पिधायकं [1]शरावादिकं पिधानम्। तिरोधायकवस्त्रादिकम् अपवारणम्। अन्ये तु—सम्यक् पिधायकं संपिधानम्। ईषत्तिरोधायकम् अपवारणमित्याहुः। आच्छाद्यतेऽनेनेत्याच्छादनम्[2]। 'छद अपवारणे'। अभिविधावीषदर्थे च आङित्युपसर्गः। [3]वस्त्रे च प्रागुक्तम् (१, पृ. ४३५)॥ आराधनं—तोषणेऽपि च। आराध्यते साध्यते फलमनेनेत्याराधनम्। 'राध साध संसिद्धौ'। करणे ल्युट् (३.३.११७)। यथा—विष्णोराराधनं श्रेयःसाधनम् इति। अवाप्तिः फलसंपत्तिः। यथा—'जनाः सदाराधनमीहमानाः' इति

देवीशतककाव्ये प्रयोगः (श्लो. २६)। तोषणं संतोषोत्पादनम्। यथा—जनचित्ताराधनं राज्ञो धर्म इति। भावे ल्युट् (३. ३. ११५)॥ १२५॥

[1] शरावादि। सपिधान तिरोधायकम् Gm1, Tv　[2] करणे भावे च ल्युट् (३. ३. ११७, ११५).　[3] Gm1, Tv add शेषे—वस्त्रेष्वाच्छादन मतम्.

(पा.) आच्छादनं—इत्युभे। अपवारणमावरणमात्र दोषावरण च। 'आच्छादन सपिधाने[1] वस्त्रे दोषावृतावपि' इति व्याडि:॥ आराधन—तोषणेऽपि च [2]साधनमन्त्रादिपचनम्॥ १२५॥

[1] सनिधाने A1.　[2] A1 omits the sentence

अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि।
रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने॥ १२६॥

(वि) रथाङ्गनगरे चापि प्रभावेऽध्यासने तथा॥ 265॥
आरोपणेऽप्यवस्थानेऽप्यधिष्ठानमुदाहृतम्।

[1]अधिष्ठीयतेऽत्रेत्यधिष्ठानम्[2]॥

रत्न [3]स्वजातावुत्कृष्टे मणौ च परिकीर्तितम्॥ 266॥

[4]रमन्तेऽत्रेति रत्नम्। 'रमु क्रीडायाम्'॥

पानीये कानने [5]चापि वन हि समुदाहृतम्।

वन्यत इति वनम्। 'वन षण सभक्तौ'[6]॥ १२६॥

[1] अधितिष्ठन्ति K2, K4　[2] J2 adds 'ष्ठा गतिनिवृत्तौ'　[3] स्वजातितोत्कृष्टे K6　[4] रमयति K2, K3　[5] चैव J2, K4　[6] J2 adds शब्दे च, 'वनु याचने' K2

(विव.) अधिष्ठानं—अध्यासनेष्वपि। चक्रं राष्ट्रम्। रथाङ्गमिति [1]केचित्। पुरं नगरम्। अध्यासनं पीठादेरुपर्याक्रमणम्। अधिपूर्वात् तिष्ठतेरधिकरणे भावे च ल्युट् (३. ३. ११७, ११५)॥ रत्नं स्वजातिश्रेष्ठेऽपि। जातौ जातौ यदुत्कृष्टं तद् रत्नम्। यथा—अश्वरत्नं स्त्रीरत्नम् इत्यादि। रमन्तेऽत्रेति[2] रत्नम्। 'रमु क्रीडायाम्'। 'रमेस्त च' (उ. ३. १४) इति नप्रत्ययः। तकार-

श्चान्तादेशः । अपिशब्दात् पद्मरागादौ, मुक्ताप्रवालयोश्च[3] ॥ वने सलिलकानने । निगदव्याख्यातमेतत् । निवासस्थानेऽपि वनशब्दः ॥ १२६ ॥

[1] अधिष्ठान रथस्याङ्गे इत्यजय (भा दी पृ ४८२), रथाङ्गमिति स्वामी (पृ २९६)
[2] रमयतीति वा B5 [3] 'रत्न मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इति वैश्यवर्गे (१, पृ ६०६)

(पा) अधिष्ठान—अध्यासनेष्वपि । चक्र रथपदम् [1] 'गालि' ॥ रत्न स्वजातिश्रेष्ठेऽपि । मुक्तापद्मरागादावपि स्यात् । वने सलिलकानने । [2]प्रवासिनिलयश्च स्यात्[3] । [2] 'प्रवासिनिलये चापि वनम्[4]' इति विश्व (पृ ८५, श्लो ४) ॥ १२६ ॥

[1] B3, C1 omit [2] प्रवास° B3 [3] B3 omits स्यात् [4] प्रवासे निलये चापि इति मु ग्र

**तलिनं विरले स्तोके वाच्यलिङ्गास्तथोत्तरे ।**
**समानाः सत्समैके स्युः पिशुनौ खलसूचकौ ॥ १२७ ॥**

(वि) तलिन विरले स्तोके निर्मलेऽप्यघनेऽपि च ॥ 267 ॥

तल्यत इति तलिनम्[1] । 'तल प्रतिष्ठायाम्' ॥ वाच्यलिङ्गास्तथोत्तरे । उत्तरे वक्ष्यमाणा शब्दा नान्ता वाच्यलिङ्गा भवन्ति[2] ॥

एकस्मिन्निति युक्ते च नाभिसस्थितमारुते ।
समे सति समान स्यात् ॥

समतीति समान । 'षम वैक्लव्ये'[3] ॥

[4]स्पृक्कराकुङ्कुमयोरपि ॥ 268 ॥
[5]कपिवक्त्वे सूचक च खले पिशुन उच्यते ।

अपिश्यति तनूकरोति परगुणानिति पिशुन । 'शो तनूकरणे' ॥ १२७ ॥

[1] 'तल गतौ' K2, K1 [2] K3 omits भवन्ति [3] अवैक्लव्ये K3. [4] पृक्का J2
[5] नारद इत्यर्थ ; विवक्ते वचने चापि K3

(विव.) तलिनं विरले स्तोके। स्तोकम् अल्पम्। तलति प्रतितिष्ठति द्रव्यान्तरमत्रेति तलिनम्। 'तल प्रतिष्ठायाम्'। बाहुलकाद् इनन्प्रत्ययः (उ. २. ५६[1]) ॥ वाच्यलिङ्गास्तथोत्तरे। अत्र तथाशब्दस्यायमर्थः। यथा पूर्ववाक्यस्थः [2]तलिनशब्दो वाच्यलिङ्ग तथा नान्तवर्गसमाप्तिपर्यन्ता वक्ष्यमाणा अपि वाच्यलिङ्गा इति। तथा च मुरारिनाटके—'कस्य खलु तलिना तादृशी जिह्वा यस्त्वामधरोत्तरेणाभिसंधत्ते' (अनर्घ. १. ४०-) इति प्रयोगः॥ समानाः सत्समैके स्युः। [3]सच्छब्देन सज्जन उक्तः। संश्च समश्च एकश्चेति द्वन्द्वसमासे 'विभाषा जसि' (१. १. ३२) इति सर्वनामसंज्ञाप्रतिषेधस्य वैकल्पिकत्वात् जसः शीभावः (७. १. १७)। सममनिति प्राणितीति व्युत्पत्त्या पुंलिङ्गः समानशब्दः शरीरगते वायुविशेषे वर्तते (१, पृ. ४४)॥ पिशुनौ खलसूचकौ। खलो दुर्जनः। सूचकः कर्णेजपः। अपिश्यति मर्मोद्घाटनादिजनितदुःखेन परं तनूकरोतीति पिशुनः[4]। 'वष्टि भागुरिरल्लोपम्' (वा. २. ४ ८२) इत्यादिना अपेरकारस्य लोपः। 'पिश अवयवे' इत्यस्माद् धातोः औणादिक उनन्प्रत्ययो वा (उ. ३. ५५[5])। 'मरुन्माला तु पिशुना' इति स्त्रीलिङ्गः प्रागुक्तः (१, पृ. २६५)। कुङ्कुमे तु नपुंसक मनुष्यवर्गे कथितम् (पृ. ४४०)॥ १२७॥

[1] 'तलिपुलिभ्या च' [2] Gm3, Tv add उत्तरवाक्यगत वाच्यलिङ्ग पद विभक्तिविपरिणामेन तलिनशब्देनापि सवन्धनीयम्। केचित्तु वाच्यलिङ्गमित्येकवचनान्त पठित्वा तलिनशब्देन सवघ्नन्ति [3] सन् सज्जन, सम सदृश, एक केवल। यथा—समानोदरे शयित Tv [4] Tj1, Tj2 add 'शो तनूकरणे' [5] 'क्षुधिपिशिमिथिभ्य कित्'

(पा) तलिन—तथोत्तरे। [1]उत्तरे तथाशब्दग्रहणाद् वाच्यलिङ्गा॥ समाना—खलसूचकौ॥ १२७॥

[1] स्तोके वाच्यलिङ्गम् इति पारिजाते पाठ

हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ।
अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि॥ १२८॥

इति नान्तवर्गः

(वि) ऊने च कुत्सिते हीनो न्यून ऊनश्च कथ्यते ।। 269 ।।

हीयत इति हीन । [1]'ओहाक् त्यागे' । नियतमूनयतीति न्यून [2] । ऊनयतीत्यून [3] । 'ऊन परिहाणे' ।

वगयुक्त च शूर च तरस्वी परिकथ्यते ।

तरो वेग , वल वा अस्यास्तीति तरस्वी ।।

अभिपन्नो भवेद् ग्रस्तसूर्यादौ सापराधक ।। 270 ।।
[4]आपत्प्राप्ते शरव्या च च्युतसायक एव च ।

अभिपद्यत इत्यभिपन्न । 'पद गतौ' ।। १२८ ।।

इति नान्तवर्ग [5]

[1] J2, K2 omit. [2] नियतमूयते K2, K4 [3] ऊयते K2, K4 [4] व्यापत्° K2, K4 [5] K3, K4 add नान्तशब्दसख्या ७०

(विव.) हीनन्यूनावूनगर्ह्यौ । हीनो न्यूनश्च इति शब्दद्वयमिह प्रतिपाद्यम् । ऊनः स्वल्पः । गर्ह्यः निन्दाविषयः । हीयते त्यज्यत इति हीनः । 'ओहाक् त्यागे' । कर्मणि क्तप्रत्ययः (३. ४. ७२) । 'घुमास्था . . .' इत्यादिना (६. ४. ६६) ईकारादेशः । 'ओदितश्च' (८. २. ४५) इति निष्ठानत्वम् । नियतम् ऊनयति न्यूनः । 'ऊन परिहाणे' । परिहाणं परित्यागः । चुरादिः । पचाद्यच् (३. १. १३४) ।। वेगिशूरौ तरस्विनौ । तरो जवो बल च, तद्योगात् तरस्वी ।'अस्मायामेधास्रजो विनिः' (५. २. १२१) इति[1] विनिः ।। अभिपन्नो—व्यापद्गतावपि । अपराद्धः कृतापराधः । अभिग्रस्तः शत्रुभिराक्रान्तः । विविधाभिरापद्भिः प्राप्तो व्यापद्गतः । अभिपद्यते स्मेत्यभिपन्नः । 'पद गतौ' । क्तः । 'रदाभ्या . . .' (८. २. ४२) इति निष्ठानत्वम् ।। १२८ ।।

इति नान्तवर्गः[2]

[1] B5, B6 add मत्वर्थे [2] TJ1, TJ2 add शब्दसख्या सप्तति

(पा ) हीनन्यून—व्यापद्गतावपि । दक्षिणस्वीकृतावपि स्याताम् । 'अभिपन्न वदन्त्यार्या दक्षिणे स्वीकृतेऽपि च' इति व्याडि[1] । शरणार्थी च स्यात् । 'अभिपन्न शरणार्थी' इति त्रिकाण्डशेष ।। अनुक्तम्—

वन्दिन्यपि च नग्न स्यात् सूनु स्यादनुजेऽपि च ।
विदग्धेऽपि च धन्वी स्याद् धमनी स्याद् गलेऽपि च ।
पन्नगेऽपि विपन्न स्याद् भृङ्गेऽपि मधुसूदन ।
रसज्ञाया च ललना द्विजपत्न्या च भट्टिनी ।
जननी स्यात् कृपाया च नौरनर्हसि च स्त्रियाम् ।
स्यात् प्रार्थनाभियानेऽपि स्याद् [2]विषेऽपि रसायनम् ।
स्यात् तपस्वी कृपार्हेऽपि स्यान्नलिन्यम्बुजेऽपि च ।
निभर्त्सनमलक्तेऽपि दमन [3]सारथावपि ।
क्लीरसे भवत् प्रेम केसरी घोटकेऽपि च ।
नन्दिनी हस्तिनीति द्व द्वयोश्च पुरभेदयो ।

नन्दिनी अयोध्यापुरम् । 'साकेत स्यादयोध्याया कोसलानन्दिनीति च' इति वैजयन्ती (पृ १५६, श्लो ५) । 'हस्तिनी [4]हस्तिनापुरम्' इति वैजयन्ती (पृ १५६, श्लो ८) । 'नागाह्व हस्तिनापुरम्' इति रत्नकोश ।।

कदन कलह युद्ध बन्धन कवचे युधि ।
ब्रह्मामण्डलकुण्डलीकृतरणत्कोदण्डकाण्डच्छटा-
[5]हेलानिर्जितवैरिबन्धनपरक्ष्मामण्डलाखण्डल ।
सध्याताण्डवचण्डखण्डपरशुत्वङ्गज्जटावाहिनी-
[6]डिण्डीराधिविडम्बिडम्बरविधिप्रोद्दण्डपाण्डित्यभू ।।

इति साहित्यकल्पवल्ली ।।

जन प्रजाया जाल्मे च जनि पत्न्या च योषिति ।
सदादान सुरगजे गजास्ये गन्धहस्तिनि ।। १२८ ।।

इति नान्तवर्ग

[1] व्यालि A1 [2] बिलेऽपि B3, C1 [3] सिद्धके B3; सक्तके A1 [4] हास्तिनपुरमिति मु ग्र [5] भञ्जन° for बन्धन° A1 [6] दिण्डीर° A1

### अथ पान्तवर्गः—

**कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ।**
**परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ ॥ १२६ ॥**

(वि.) कलापो भूषणे वर्हे तूणीरेऽपि च सहते[1] ॥ 271 ॥

[2]कला आप्नोतीति कलाप । 'आप्लृ व्याप्तौ' ॥

परिचारे जलाधारबीजारोपणयोरपि ।
अचलत्वे च सलिले [3]परीवाप प्रकीर्तित ॥ 272 ॥

पर्युप्यत इति [3]परीवाप । 'डुवप् [4]बीजसताने' ॥ १२६ ॥

[1] सहतौ K2, K3, K4' [2] कल्यते । 'कल शब्दसघातयो' K2, K3, K4
[3] परिवाप J2, K4 [4] K2, K4 add °तन्तु°

(विव.) कलापो—संहतेऽपि च । भूषण काञ्च्यादि । यथा—[1]मुक्ताकलापः (कु. सं. १. ४२) । बर्हं पिच्छम्[2] । यथा—'निजकलापभरेण' इति । तूणीरम् इषुधिः । 'कलापी कवची धन्वी' इति तूणीरे । सहतं समूहः । यथा—[3]केशकलापः । कलाः कान्तिविशेषानाप्नोति पाति वा कलापः । 'आप्लृ व्याप्तौ' । 'पा रक्षणे'[4] ॥ परिच्छदे—सलिलस्थितौ । परित उप्यते राजपुरुषैरिति परीवापः । परिच्छदः [5]पटमण्डपसज्जनादिः । 'डुवप् [6]बीजसंताने' । कर्मणि घञ्[7] (३. ३. १२१) परीवापः । पर्युप्तिः कृष्टक्षेत्रे परितो बीजवपनमित्यर्थः । अधिकरणे घञ् (३. ३. १२१)। परिवापो जलस्थितिः । सलिलस्य स्थितिरत्रेति व्युत्पत्त्या जलाशय इत्यर्थः । जलस्य निश्चलत्वमात्रंस्थितिरित्येके । 'उपसर्गस्य घञि ...' इत्यादिना (६. ३. १२२) दीर्घः ॥ १२६ ॥

[1] रशनामुक्ताकलाप इति भूषणे Gm3, Tv [2] पिञ्छम् B5, B6 [3] गुणकलाप Tv [4] 'कर्मण्यण्'। कला आप्यतेऽनेन वा । 'हलश्च' इति घञ् इति भा दी (पृ ४८२) [5] पटमण्डपे जनादि° Tv [6] Tj2 adds °तन्तु° [7] Gm1 adds भावे घञि वा

(पा) कलापो—संहतेऽपि च । भूषणशब्देन भूषणसामान्यविशेषौ[1] कथितौ । 'कलापो भूषणे काञ्च्या सघाते बर्हतूणयो' इति वैजयन्ती (पृ २४०, श्लो १५) ॥ परिच्छदे—सलिलस्थितौ । सलिलस्थितिशब्देन आलवालमुक्तम् । 'पर्युप्तौ च परीवाप आलवाले परिच्छद' इति वैजयन्ती (पृ २६७, श्लो २६)[2] ॥ १२६ ॥

[1] A1 adds एव　　[2] $C_1$ adds परिच्छद वस्त्रादि

**गोधुग् गोष्ठपतिर्गोपौ हरौ विष्णुर्वृषाकपिः ।**
**बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम् ॥ १३० ॥**

(वि.) बहुग्रामनियुक्ते च गोपो गोष्टपतौ नये ।
गोपाले रक्षिकाभीरीशारिबासु स्त्रिया भवेत् ॥ 273 ॥

गा पाति[1] गोपायतीति वा गोप । 'पा रक्षणे' । [2]'गुपू रक्षणे' ॥

ईशाने च हरौ चेन्द्रे ज्वलने च वृषाकपि ।

वर्षति कम्पते चेति वृषाकपि । 'वृष सेचने' । 'कपि चलने' ॥

ऊष्मण्यश्रुणि वाष्प स्यात् कशिपु त्वन्नवस्त्रयो ॥ 274 ॥

बाष्पतीति बाष्प । [3]'बाष्प अश्रुविमोचने' ॥ कशति[4] तनूकरोति क्लेशानिति कशिपु । 'कश गतिशातनयो'[5] ॥ १३० ॥

[1] $K_4$ adds इति　　[2] $K_3$, $K_4$ omit　　[3] The root बाष्प् is assumed from the *sutra* 'बाष्पोष्मभ्यामुद्वमने' (६ १ १६)　　[4] $K_4$ adds कश्यते वा　　[5] °शासनयो $J_2$

(विव) गोधुग् गोष्ठपतिर्गोपौ । [1]गोबन्धनदोहनादिकर्ता गोधुक् । गवोपयुक्तकर्मण्यधिकृतो गोष्ठपति [2] । अत्र प्रताप —

'गोपो ग्रामौघगोष्ठाधिकृतयोर्वल्लवे नृपे ।
गोपयोपाशारिवयोर्गोपी गोपा तु रक्षिका ॥'

इति। गां भूमिं पातीति विग्रहे 'आतोऽनुपसर्गे कः (३. २. ३) इति कप्रत्यये 'आतो लोप इटि च' (६. ४. ६४) इत्याकारलोपे च गोपो नृपः। गोपालवचनाद् गोपशब्दात् 'पुंयोगादाख्यायाम्' (४. १. ४८) इति ङीपि गोपी गोपालयोषा। शारिबायां तु प्रागुक्ता (१, पृ. २८१)। 'गुपू रक्षणे' इत्यस्मात् पचाद्यचि (३. १. १३४) टापि (४. १. ४) गोपा रक्षिका॥ हरविष्णू वृषाकपी। वृषेण धर्मेण अकन्ति वर्तन्त इति वृषाकाः धर्मशीलाः। तान् पाति रक्षतीति वृषाकपिः[3]। 'वृषाकप्यग्निकुसित . . .' इत्यादिनिर्देशात् (४. १. ३७) साधुः। शेषे—'वृषाकपिः स्याज्ज्वलने सहस्राक्षे च कीर्तितः' इति। 'नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते' (तै.सं. १.७.१३.२) इति सहस्राक्षे प्रयोगः॥ बाष्पमूष्माश्रु। [4] चित्रभानुप्रतप्ताद् भूतलघटकपालादेः उद्गच्छन् धूमादिविजातीयावयवसंभिन्नस्तेजोभाग[5] ऊष्मा[6]। अश्रु नेत्राम्बु। वायति शुष्यति शोषयति वा, पाति रक्षति शीतार्तमिति वा बाष्पः। 'ओवै शोषणे', 'पा रक्षणे' इति धातुद्वयम्। 'बाष्पोष्मभ्यामुद्वमने' (३. १. १६) इति निर्देशात् साधुः॥ कशिपु—द्वयम्। अन्नम् [7]ओदनमोदकादिकम्। आच्छादनं वस्त्रम्। तदुभयं [8]समुदितं प्रत्येकं वा नपुंसकलिङ्गेन कशिपुशब्देनोच्यते। कशति शातयति दुःखमिति कशिपु। 'कश गतिशातनयोः'[9]। 'एकोक्तचा कशिपुर्भक्ताच्छादने द्वे पृथक् कृते' इति पुंनपुंसककाण्डे रभसाभिधानात् पुंनपुंसकलिङ्गः। 'पृथक् च वा' इति पक्षान्तरम्॥ १३०॥

[1] °गोदोहन° Tv [2] Tj1 adds गा पातीति गोप। 'पा रक्षणे'। 'आतोऽनुपसर्गे क.'. [3] Tj2, Tv add 'अक गतौ' 'पा रक्षणे', B5 adds वृषाकपि. मूर्धन्यप. [4] अग्निज्वालादिना प्रतप्ताद् भूप्रदेशात् Gm3, Tv [5] सहित° for सभिन्न° Tv. [6] Tj2, Tv add यथा—बाष्पायते स्थाली [7] अशित for ओदनम् Tv. [8] मिलित Tv. [9] मृगय्वादित्वाद् (उ १ ३६) निपातनात् साधु. इति श द्रु (पृ. ६६).

(पा.) गोधुग्—[1]बाष्पमूष्माश्रु। ऊष्मणि—बाष्पायते स्थाली। अश्रुणि—बाष्पाम्भसा विन्दवः॥ कशिपु—द्वयम्। अन्नमाच्छादनमित्यनेन पृथक् पृथक् च, द्वयमित्यनेन मिलित्वापि कशिपुशब्दो वाच्य.। 'एकोक्तचा [2]कशिपुर्भक्ताच्छादने च द्वयो पृथक्' इति विश्व[3] (पृ १०५, श्लो १८)॥ १३०॥

[1] हरविष्णू वृषाकपी इति पारिजातानुसारी पाठ [2] भक्तया इति मु ग्र. [3] रभसः A1; B3 adds दर्शितहिरण्यकशिपुक्षेत्रदानविस्मय इति वासवदत्ता.

**तल्पं शय्याट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम् ।**
**प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः ।। १३१ ।।**
**भेद्यलिङ्गा अमी कूर्मो वीणाभेदश्च कच्छपी ।**

## इति पान्तवर्गः

(वि.) शय्यापत्न्योर्दुर्गसारे तल्प स्याद् रणमण्डपे ।

तलन्ति [1]प्रतितिष्ठन्त्यत्रेति तल्पम् । 'तल[2] प्रतिष्ठायाम्' ।।

स्कन्धादूर्ध्वतरो शाखास्तम्बयोर्वृक्षविस्ततौ ।। 275 ।।
पल्लवे विटपाले च विटप परिकीर्तित ।

[3]वेटतीति विटप. । 'विट शब्दे' ।।

प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयो ।। 276 ।।

प्राप्त रूपमस्येति प्राप्तरूप । शोभन रूपमस्येति सुरूप । अभिमत रूपमस्येत्यभिरूप । अमी त्रय. शब्दा विशेष्यनिघ्ना ।।

कच्छपी वल्लकीभेदे कमठीक्षुद्ररोगयो ।

कच्छपस्येय कच्छपी ।। १३१ ।।

इति पान्तवर्ग [4]

[1] K2, K4 *omit* प्रतितिष्ठन्ति [2] 'तल गतौ' K3, K6 [3] विटति, 'विट शब्दे' J2, K4 [4] K2, K3 add पान्तशब्दसख्या १२

(विव.) <u>तल्प शय्याट्टदारेषु</u> । अट्टः दुर्गप्राकारस्थो[1] युद्धमण्डपः । तलन्ति प्रतितिष्ठन्त्यत्र भटा इति तल्पम् । 'तल प्रतिष्ठायाम्' । (उ. ३. २८[2]) । रूपभेदाद् नपुसकलिङ्गम् । उत्तरवाक्यस्थमस्त्रियामिति पदमत्राप्यनुसंधेयमिति <u>चन्द्रः</u> । तथा च—'ययुः सुषुप्सवस्तल्पान्[3] भीमैर्वचनकर्मभिः' इति <u>भट्टिकाव्ये</u> (८. १०१) पुंलिङ्गप्रयोगः ।। <u>स्तम्बेऽपि विटपोऽस्त्रियाम्</u> । स्तम्ब· तृणादिगुत्सः[4] । अत्र <u>प्रताप</u>·—

'वृक्षस्कन्धोर्ध्वशाखायां तृणगुत्से[5] द्रुविस्तृतौ ।
पल्लवे विटमुख्ये च विटपः पुंनपुंसकम् ॥' इति ।

विटान् पाति छायासंवरणदानादिना रक्षतीति विटपः[6] ॥ प्राप्तरूप—अमी । रूप-शब्देन उत्कर्षो विवक्षितः, तद्योगात् प्राप्तरूपः सुरूपः अभिरूपश्च[7] । अमी त्रयोऽपि शब्दा वाच्यलिङ्गा इत्यर्थः ॥ कूर्मी वीणाभेदश्च कच्छपी । कूर्मी कमठजातीया स्त्री । 'जातेरस्त्रीविषयात् ...' इत्यादिना (४. १. ६३) ङीषि कच्छपी । तदा-कारसाम्याद् वीणाभेदः । सरस्वत्या वीणा च ॥ १३१ ॥

इति पान्तवर्गः

[1] °र्वतिरणमण्डप Tv. [2] 'खष्पशिल्पशष्पबाष्परूपपर्पतल्पा.'. [3] तल्पमिति मु. ग्र. [4] Tj1, Tv add 'स्तम्बो गुच्छतृणादिन.' इत्युक्तम् (पृ. ५६५). [5] °गुच्छे Gm3, Tv. [6] वेटति । विट्यते वा । 'विट आक्रोशे शब्दे' । 'विटपपिष्टपविशिपोलपा.' (उ. ३. १४५) इति भा दी (पृ ४८३). [7] Tv adds अत्र रूपशब्दो व्याकरण-निष्पन्नशब्दवचन । तथा च निघण्टु —रूप स्वभावे सौन्दर्ये नामके नाटकादिषु । आकृतौ सस्कृते शब्दे इति.

(पा.) तल्प—अस्त्रियाम् । 'शाखाया पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रियाम्' इति रभसः ॥ प्राप्तरूप—मनोज्ञयो । अभिरूपमपत्यम् । अभिरूपा कन्या ॥ कूर्मी—कच्छपी । वीणाभेद. सरस्वतीकरवीणा[1] । 'महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी' इति वैजयन्ती (पृ. १४५, श्लो ११६) ॥ अनुक्तम्—

[2]कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेऽशके ।

मृगरोमोत्थपटो नाम[3] छागकम्वल. ॥ 'कुतप. स्यात् कुले वाद्ये [4]तपने छागकम्वले' इति विश्वः (पृ. १०४, श्लो. १२) ॥

रूप तु शब्दशुक्लादिसौन्दर्याकारनाणके ।
आम्रे चामरपुष्प. स्यात् काशकेतकयोरपि ।
गर्तायामपि कूप. स्यात् पादपीठेऽपि पादपः ॥ १३१ ॥

इति पान्तवर्गः

[1] B3 omits °कर°. [2] कुतुप A1 [3] B3, C1 omit नाम [4] तापके A1.

अथ फान्तवर्गः—

**रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः ।। १३२ ।।**

(पा.) रेफः पुमान् रवर्णे स्याद् द्विरेफः स्यान्मदेऽपि च ।। १३२ ।।

इति फान्तवर्गः

लिङ्गयसूरिकृतविवृतौ, अप्पयार्यकृतविवरणे च फान्तशब्दा न दृश्यन्ते । क्षीरस्वामि-ग्रन्थे तु एवं दृश्यते—

शिफा शिखायां सरिति मासिकायां च मातरि ।
शफं मूले तरूणां स्याद् गवादीनां खुरेऽपि च ।।
गुल्फः स्याद् गुम्फने बाहोरलकारे च कीर्तितः ।
रवर्णे पुंसि रेफः स्यात् कुत्सिते वाच्यलिङ्गकः ।। इति

अथ बान्तवर्गः—

**अन्तराभवसत्त्वेऽश्वे गन्धर्वो दिव्यगायने ।**
**कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ।। १३३ ।।**
**पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वेऽपि पूर्वजान् ।**

(वि.) अन्तराभवसत्त्वे स्याद् गन्धर्वो दिव्यगायके ।। 277 ।।

गां धारयतीति गन्धर्वः ।।

कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ ।

काम्यत इति कम्बुः[1] । 'कमु कान्तौ' । द्वे जिह्वे यस्येति द्विजिह्वः ।।

पूर्वः स्यात् प्राग्दिशोः पूर्वः पूर्वजेऽपि[2] च कथ्यते ।। 278 ।।

पूर्वतीति पूर्वः । [3]'पूर्व पूरणे' । वबयोरैक्यम् ।। १३३ ।।

इति बान्तवर्गः[4]

[1] कम्बु $K_2$, $K_3$ [2] पूर्वजेपु $J_2$, $K_4$ [3] 'पुर्वमर्वपर्व पूरणे' $K_4$, $K_6$
[4] $K_2$, $K_4$ add बान्तवर्गसख्या ४

(विव.) अनेकार्थफकारान्तशब्दाना प्राचुर्येण प्रयोगाभावात् तदतिक्रमेण बान्तानाह—

अन्तराभव—दिव्यगायने । अत्र सुबोधिनीकारः—द्यावापृथिव्योरन्तराभवसत्त्वेन महापर्वतशिखरप्रदेशेषु वर्तमाने देवयोनिविशेषे घोटकमात्रे त्रिदिवौकसां गायने च [1]गन्धर्वशब्दो वर्तत इति ।। कम्बुर्ना वलये शङ्खे । वलये करभूषणे । शङ्खे तु नपुंसकत्वमपि प्रागुक्तम् (१, पृ. १७०[2]) । द्विजिह्वौ सर्पसूचकौ । सूचकः कर्णेजपः । जिह्वाशब्दोऽत्र लक्षणया वचने वर्तते । अत्र वचनस्य च द्वैविध्यं समक्षपरोक्षयोरेकरूपत्वाभावादवसेयम् ।। पूर्वो—पूर्वजान् । अत्र प्राक्च्छब्दः पूर्वेषु दिग्देशकालेषु तत्रत्यसंबन्धिपदार्थेषु च [3]वर्तते विशेष्यनिघ्नश्च । यथा—पूर्वा दिक् । पूर्वं दिक्चक्रम् । पूर्वा संध्या । [4]पूर्वो देशः । पूर्वा भूमिः । पूर्वमुपवर्तनम् । पूर्वः समुद्रः । पूर्वं दिनम् । पूर्वा रात्रिः । पूर्वा [5]धनसंपत्तिः । पूर्वं धनम् इत्यादि यथासंभवमुदाहार्यम् । यदा तु पूर्वजान् [6]पितृपितामहादीन् पुरातनान् वा अभिधत्ते, तदा पूर्वशब्दस्य पुंलिङ्गत्वबहुवचनान्तत्वयोर्नियमः । यथा—मत्पूर्वैः पालितो देश इति । पुरातनेषु यथा—'पूर्वे पूर्वेभ्यो वच एतदूचुः' (तै. ब्रा. ३. १२. ९. २) इति । वबयोरभेदाद् गन्धर्वादिशब्दानामत्र पाठः कृतः । कैश्चिद् व्याख्यातृभिः 'अन्तराभव' इत्यादिकः सार्धश्लोकोऽपि न व्याख्यातः ।। १३३ ।।

इति बान्तवर्गः[7]

[1] गन्धमर्वति । अर्व गतौ । 'कर्मण्यण्' । शकन्ध्वादि इति भा दी (पृ ४८४).
[2] 'कम्बुरस्त्रियाम्' [3] ततश्चायमर्थं । पूर्वशब्दो वाच्यलिङ्ग $Gm_1$, Tv. [4] Tv adds पूर्वं चन्द्रप्रकाश [5] दिनसपत्ति Tv [6] Tv omits [7] $Tj_2$ adds शब्दसख्या ४

(पा.) अन्तराभव—दिव्यगायने । अन्तराभवसत्त्व [1]मरणजन्मनोर्मध्यावस्थापन्नजन्तु । अश्व हय । दिव्यगायन तुम्बुरुप्रभृति. । गायनमात्रे च स्यात् । 'अन्तराभवसत्त्वे स्याद् गन्धर्वो गायने हये' इति वैजयन्ती (पृ २४१, श्लो २४) ।। कम्बुर्ना वलये शङ्खे । शङ्खे पुनपुंसक ।। द्विजिह्वौ—पूर्वजान् । प्राक्छब्दो दिग्देश-

कालवचन [2]। [3]पूर्वा दिक्। पूर्व स्थानम्। पूर्वो दिवस । पूर्वजशब्दो वश्यवचन । 'पूर्वैः किलाय परिवर्धितो न ' इति रघुवश (१३ ३) ।। अनुक्तम्—

बिम्ब विम्बीफले तुल्ये प्रतिमाप्रतिविम्वयो ।

विम्वफले—विम्बाधरा । तुल्ये—स्मरम्य विंम्वमनिरुद्ध । प्रतिमायाम्—शिलाविम्वम् । प्रतिविम्बे—मुखस्य विम्वम् । मण्डलेऽस्त्री—शशिविम्ब शशिविम्व ।। १३३ ।।

इति बान्तवर्ग

[1] जननमरणयो $B_3$, $C_1$　　[2] $A_1$ adds कथ्यते　　[3] पूर्वो विधि $A_1$

**अथ भान्तवर्ग.—**

**कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ ।। १३४ ।।**
**स्तम्भौ स्थूणाजडीभावौ शंभू ब्रह्मत्रिलोचनौ ।**
**कुक्षिभ्रूणार्भका गर्भा विस्रम्भः प्रणयेऽपि च ।। १३५ ।।**

(वि ) घट गजशिर पिण्ड राशौ वाराङ्गनापती ।
कुम्भकर्णश्रुतौ[1] कुम्भ कुम्भ त्रिवृति गुग्गुले[2] ।। 279 ।।
कुम्भी भवेच्च पिठरे वारिपर्ण्या च कट्फले ।

कुम्भयतीति कुम्भ । कुभि आच्छादन ।।

वालिशे वालक[3] चापि डिम्भशब्दोऽभिधीयते ।। 280 ।।

डयत गमनायेति डिम्भ [4]। 'डीङ विहायसा गतौ' ।।

स्थूणाया च जडीभाव स्तम्भस्तु परिकीर्तित ।

स्तम्नातीति स्तम्भ [5]। 'स्तन्भु रोधनस्तम्भनयो ' ।।

शभु पूज्ये महेशान परमेष्ठिनि कथ्यत ।। 281 ।।

श सुखमस्माद् भवतीति शभु [6]।

कुक्षौ भ्रूणे बालके च सधौ [7]पनसकण्टके ।
अन्तर्भावे च गर्भ स्यादसवादे च हिंसने ।। 282 ।।
विश्वासे केलिकलहे विस्रम्भ प्रणये भवेत् ।

गिरतीति गर्भ । 'गृ निगरणे'।। [8]विस्रभ्यत इति विस्रम्भ । 'स्रम्भु विश्वासे'[9] ।। १३४-५ ।।

[1] °सुते K4, °श्रुते J2 [2] गुग्गुलौ K2, K4 [3] बालिके J2 [4] डिम्भयति, 'डिभि क्षेपे' K4 [5] स्तभ्यते, 'स्तभि ष्टभि प्रतिबन्धे' K3, K4 [6] K2, K3 add 'भू सत्तायाम्'. [7] पवनसक्टे K6 [8] विस्रम्भते K2, K6 [9] J2 adds प्रमादे च

(विव.) कुम्भौ घटेभमूर्धांशौ । [1]गजशिरःस्थितः पिण्डरूपोऽवयव इत्यर्थः। शेषे—

'कुम्भः स्यात् कुम्भकर्णस्य पुत्रे याराङ्गनापतौ ।
राशिभेदे मानभेदे गुग्गुलुत्रिवृतोर्नपुम् ।।
कुम्भी तु पाटलावारिपर्णीपिठरकट्फले ।।'

मानभेदः पलसहस्रपरिमितः। कुम्भः द्रोणचतुष्टयमित्येके । यथा—'धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः' इति (म. स्मृ. ८. ३२०) । गुग्गुलौ त्रिदण्ड्यां च नपुम्, नपुंसकलिङ्गमित्यथः । पाटलादिषु [2]कुम्भशब्दो ङीबन्तः कुम्भीति । डिम्भौ तु शिशुबालिशौ । शिशुरष्टमवर्षादर्वाचीनः । बालिशो मूर्खः । डिम्भयतीति डिम्भः । 'डिभि क्षेपे'। पचाद्यच् (३. १. १३४) ।। स्तम्भौ स्थूणाजडीभावौ । स्तभ्यन्ते स्वोपरिस्थितानि दारूणि अनेनेति स्तम्भः स्थूणा । पटकाद्याधारत्वेन ऊर्ध्वाग्रतया स्थापितो दारुविशेष इत्यर्थः। 'ष्टभि स्तभि प्रतिबन्धे'। करणे घञ् (३. ३. १२१) । स्तभ्यते प्रतिरुध्यते शरीरव्यापारोऽनेनेति स्तम्भः जडीभावः निष्पन्दता, सात्त्विको भावविशेषश्च ।। शंभू ब्रह्मत्रिलोचनौ । ब्रह्मा चतुराननः । विष्णावपि [3]शंभुशब्द इति चन्द्रः ।। कुक्षिभ्रूणार्भका गर्भाः । भ्रूणः कुक्षिस्थः प्राणिविशेषः । कुक्षौ यथा—उच्छूनगर्भ इति । गर्भे—'गर्भहा च यथावर्णम्' (या. स्मृ. ३. ५. २५१) इति । अर्भके शिशौ यथा—'यद् गर्भरूपमिव मामनुशास्ति' इति मुरारिनाटके (अ. रा. १. १५) । शेषे—'अन्तर्भावे च गर्भः स्यात् संधौ

[4]'पनसकण्टके' इति । अन्तर्भावे यथा—कदलीगर्भपत्रम् । संधौ यथा—प्रतिमुखानन्तरस्तृतीयो गर्भसंधिः प्रसिद्धः (द. रू. १. २४) ॥ विस्रम्भः प्रणयेऽपि च । प्रणयोऽभिलाषविशेषः । शेषे—'विस्रम्भः केलिकलहे विश्वासेऽपि च हिंसने' इति ॥ १३४–५ ॥

[1] Tj1, Tv add इभमूर्धांश , मूर्धैकदेश शिरोदेशस्थपिण्ड इत्यर्थ $B_5$ [2] कु भूमिं कुत्सित वा उम्भति । 'उम्भ पूरणे' । कर्मण्यण् । पचाद्यच् वा । शकन्ध्वादि इति भा दी (पृ ४८४) [3] श भवत्यस्मादिति शभु । 'भू सत्तायाम्' । डुप्रकरणे 'मितद्र्वादिभ्य उपसङ्ख्यानम्' (वा ३ २ १८०) इति डु [4] वचनसकटे $B_5$, $B_6$

(पा.) कुम्भौ घटेभ—गर्भा । भ्रूण कुक्षिस्थशिशु । विस्रम्भ प्रणयेऽपि च । 'विस्रम्भ केलिकलहे विश्वासे प्रणये वधे' इति विश्व (पृ. १०६, श्लो. २८) ॥ १३४-५ ॥

स्याद् भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम् ।
स्यान्महारजने क्लीबं कुसुम्भं करके पुमान् ॥ १३६ ॥

(वि ) दुन्दुभी राक्षसे भेर्यामक्षे विन्दुत्रिकद्वये ॥ 283 ॥

[1]दुन्दुमिति भापत इति दुन्दुभि ॥

पद्मके हेमनि पटे कुसुम्भ स्यात् कमण्डलौ ।

कुसुम्भ्यत इति कुसुम्भ. । [2]'कुसुम्भ अर्दने' ॥ १३६ ॥

[1] द्यतीति दुन्दुभि । 'दो अवखण्डने' $K_2$, $K_3$ [2] 'कुसुभ क्षेपे' $J_2$

(विव.) स्याद् भेर्या—स्त्रियाम् । अक्षोऽत्र पाशकाख्यं द्यूतसाधनम् । यथा—'दुन्दुभ्या किल तत्कृतं पतितया यद् द्रौपदी हारिता' इति । भेर्यां यथा—'दुन्दुभिस्ताडितोऽयम्' (वेणी. १. २२) । दुन्दुमिति शब्द भापत इति दुन्दुभिः । 'भाष व्यक्तायां वाचि' । औणादिकः [1]किप्रत्ययः । 'दैत्ये ना दुन्दुभिर्भेर्यां स्त्र्यक्षे विन्दुत्रिकद्वये' इति रभसः । दैत्यो वालिशत्रुः । विन्दुत्रिकद्वय इति अक्षस्वरूपकथनम् ॥ स्यान्महारजने—पुमान् । महारजनं वह्निशिखम्[2] (१, पृ. ६१६) ।

पद्मकमिति स्वामी (पृ. ३०२)। स्वप्रच्युतेन जवेन कुं भूमिं सुम्भति नाशयतीति कुसुम्भः। [3]'सुम्भ शुम्भ हिंसायाम्'। करकः कमण्डलुरित्यर्थः। शेषे—'कुसुम्भं हेमनि क्लीबे' इति ॥ १३६ ॥

[1]'इगुपधात् कित्' (उ ४. १२०) इतीन् इति भा. दी. (पृ. ४८४). [2]'स्यात् कुसुम्भ वह्निशिख महारजनमित्यपि' (१, पृ. ६१६). [3]सुम्भ भाषणे हिंसाया च Tv.

(पा.) स्याद् भेर्या—स्त्रियाम्। अक्षो नाम अक्षविन्दुत्रिकद्वयम्। 'इत्तिगलु'। 'दुन्दुभिर्दितिजे भेर्यामक्षविन्दुत्रिकद्वये' इति विश्वः (पृ. १०६, श्लो. ३३) ॥ १३६ ॥

क्षत्रियेऽपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम्।
सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः ॥ १३७ ॥

(वि.) [1]जिगीषुक्षत्रिये मुख्ये चक्रान्तश्चक्रवर्तिनोः ॥ 284 ॥
प्राण्यङ्गे चैव कस्तूरीमदे नाभिः प्रकीर्त्यते।

नभते नभ्यते च नाभिः। 'णभ हिंसायाम्' ॥

चम्पके स्त्रीगवि [2]स्वर्णे सल्लकीमातृभेदयोः ॥ 285 ॥
मनोज्ञे च [3]सुगन्धौ च सुरभिर्वाच्यलिङ्गकः।

सुष्ठु रभ्यत इति सुरभिः। 'रभ राभस्ये' ॥

संसच्छालादेवनेषु गोष्ठ्या द्यूते च मन्दिरे ॥ 86 ॥
समूहसभ्ययोश्चैव सभाशब्द उदाहृतः।

सह भान्त्यत्रेति सभा। 'भा दीप्तौ' ॥

गवाध्यक्षे कुलीनाख्ये दयिते वल्लभः स्मृतः ॥ 287 ॥

वल्लत इति वल्लभः। 'वल्ल प्रीतौ'[4] ॥ १३७ ॥

इति भान्तवर्गः[5]

[1] जिगीषौ K4　　[2] स्वर्गे J2, K4　　[3] सुगन्धे J2.　　[4] सचरणे K6.
[5] K2, K4 add भान्तशब्दसख्या १२.

(विव.) क्षत्रियेऽपि च नाभिर्ना । ना पुंलिङ्ग इत्यर्थः । नभते हिनस्तीति नाभिः । 'णभ हिंसायाम्' । शेषे प्रतापे च—

'चक्रान्तश्चक्रवर्तिनोः ।
नाभिः प्रधाने कस्तूरीमदे प्राण्यङ्गकेऽपि च ॥'

चक्रान्तः चक्रयोर्मध्यं पिण्डिकाख्यम् । रभसोऽपि—

[1]'मुख्यराट् क्षत्रियो नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
चक्रमध्ये प्रधाने [2]च स्त्रियां कस्तूरिकामदे ॥'

इति । 'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्रीण्युपनीवि नाभिभिः' इति भारविकाव्ये पुंलिङ्गप्रयोगः[3] (किरा. ८. २४) ॥ सुरभिर्गवि च स्त्रियाम् । गवि कामधेन्वामित्यर्थः । 'सुतां तदीयां सुरभेः' इति रघुवंशे (२. ८२) । गोमात्रे इति केचित् । सुष्ठु रभत इति सुरभिः[4] । 'रभ राभस्ये' । राभस्यं कार्योपक्रम इति धातुवृत्तौ[5] । शेषे—

'सुरभिर्ना जातिफले वसन्ते चम्पकद्रुमे ।
शल्लक्यां स्त्री मातृभेदे मनोज्ञे तु विशेष्यवत् ॥'

इति । 'सुरभिर्घ्राणतर्पणः' इति गतम् (१, पृ. ६८) ॥ सभा संसदि सभ्येषु । सह भान्त्यत्रेति व्युत्पत्त्या सभा[6] संसत् ब्राह्मणसमावेशनमित्यर्थः । तद्वर्तित्वाद् उपचारेण सामाजिकेष्वपि सभाशब्दः । एकस्मिन्नेव पुरुषे सभाशब्दो न प्रवर्तत इति ज्ञापयितुं [7]सभ्येष्विति बहुवचनमुपात्तम् । शेषे—'सभा दुरोदरेऽपि स्यात् समूहे भाविते त्रिषु' इति । भया कान्त्या नक्षत्रैर्वा युक्ते वाच्यलिङ्गः । त्रिष्वध्यक्षेऽपि वल्लभः । अध्यक्षोऽत्र [8]गोष्ठाध्यक्ष एवेति सुबोधिनीकारः । 'वल्ल प्रीतौ [9]संचरणे च' । वल्लत इति वल्लभः । वल्लतिः सौत्रो धातुः । 'रासिवल्लिभ्यां च' इत्यभच् प्रत्ययः (उ. ३. १२५) । शेषे—'वल्लभस्तु प्रधानाश्वे कुलीनश्चापि वल्लभः' इति । यथा—'स्तोकेन नाक्रमत वल्लभपालमुच्चैः' (शिशु. ५. ५६)

इति, 'नीतो वल्लभपालकेन च निजामुच्चैःश्रवो मन्दुराम्' इति च माघकाव्ये। 'दयितं वल्लभ प्रियम्' इति प्रागुक्तम् (२, पृ. ७५) ॥ १३७ ॥

इति भान्तवर्ग.

[1] सुराट्क्षत्रिययो Tv [2] अपि T₁ [3] पुलिङ्गताया तु कविरेव प्रमाणम् इति मल्लिनाथ (पृ १६१) [4] 'सर्वधातुभ्य इन्' (उ ४ ११८) इति इन्प्रत्यय [5] रामस्यमुपन्नम इति मु प्र (पृ २७२), B₆ adds चाल् वसन्ते [6] 'भा दीप्तौ'। 'सुपि स्थ' इति कप्रत्यय। 'अन्येभ्योऽपि—' (वा ३ २ १०२) इति डो वा इति भा दी (पृ ४८५) [7] सभ्ये च इति पाठ स्वामिभानुज्यादिग्रन्थेषु [8] गोत्रा° B₅, B₆ [9] सवरणे T₁

(पा) क्षत्रियेऽपि—स्त्रियाम्। वसन्तादावपि स्यात् ॥ सभा ससदि सभ्ये च।[1] 'स्त्रिया सामाजिके गोष्ठया द्यूतमन्दिरयो सभा' इति रभस. ॥ त्रिष्वध्यक्षेऽपि वल्लभ। 'वल्लभो दयितेऽध्यक्षे कुलीनाश्वे च[2] वल्लभ.' इति विश्व (पृ. १०६, श्लो २६) ॥ अनुक्तम्—

दन्तेऽपि जम्भ ऋषभो नरानारस्त्रियामपि।
दुर्लभो दयितेऽपि स्याद् विभु' सर्वगतेऽपि च।
अवष्टम्भ सुवर्णेऽपि स्यानमालेऽपि भूरिति ॥ १३७ ॥

इति भान्तवर्ग

[1] B₃, C₁ add गम्येऽपि स्त्रीलिङ्ग. [2] अपि A₁

अथ मान्तवर्गः—

किरणप्रग्रहो रश्मी कपिभेकौ प्लवङ्गमौ।
इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ ॥ १३८ ॥

(वि) किरणप्रग्रहो रश्मी कपी भेके प्लवङ्गम।

[1] अश्नुते इति रश्मि। 'अशू व्याप्तौ'। प्लवंगच्छतीति प्लवङ्गम ॥

काम स्मराभिलाषो स्यादिच्छायां मैथुनेऽपि च ॥ २०१ ॥

[2]काम्यत इति काम । 'कमु कान्तौ' ॥

पराक्रम स्यादुद्योगे शक्तिविक्रमयोरपि ।

पराक्रमन्त्यनेनेति पराक्रम 'क्रमु पादविक्षेपे' ॥ १३८ ॥

[1] रश्यते 'रश कान्तौ' $K_4$, $K_6$, रशि सौत्र इति स्वामी (पृ ३०२). [2] कम्यते $K_2$, $K_4$

(विव.) किरणप्रग्रहौ रश्मी । [1]अश्वादिनियमनार्थो रज्जुविशेषः प्रग्रहः । अश्नुत इति रश्मिः । 'अशू व्याप्तौ' । 'अश्नोते रश् च' (उ. ४. ४६) इति मिप्रत्ययः, धातो रशादेशश्च ॥ कपिभेकौ प्लवङ्गमौ । प्लवैर्गच्छतीति प्लवङ्गमः[2] । 'गमश्च' (३. २. ४७) इति खच् ॥ इच्छामनोभवौ कामौ । शेषे—'रेतोनिकामयोः क्लीबं काम. काम्ये त्रिषु स्मृतः' इति । निकामं प्रकामम् ॥ शौर्योद्योगौ [3]पराक्रमौ । सत्यपि भयकारणे भयराहित्य शौर्यम् । स्वशक्त्यनुसारेण कर्तव्यार्थप्रारम्भ उद्योगः ॥ १३८ ॥

[1] °सयमनी रज्जु $B_6$ [2] प्रवङ्गमोऽप्यत्रेति टी स (पृ ११६) [3] पराक्रमणम् । अनेन वा । 'क्रमु पादविक्षेपे' । घञ् । 'नोदात्तोपदेशस्य—' इति न वृद्धि इति भा दी. (पृ ४८५)

(पा ) किरणप्रग्रहो रश्मी । प्रग्रह इति रज्जु । 'पग्गमु' । कपिभेकौ प्लवङ्गमौ । प्लवगप्लवङ्गावपि [1]स्याताम् । 'प्लवङ्गम कपौ भेके प्लवङ्गप्लवगावपि'[2] इति वैजयन्ती (पृ २६७, श्लो ३२) ॥ इच्छामनोभवौ कामौ । इच्छाविषयोऽपि स्यात् । 'काम्यस्पृहास्मरा कामा' इति वैजयन्ती (पृ २१५, श्लो १७) ॥ शौर्योद्योगौ पराक्रमौ ॥ १३८ ॥

[1] $B_3$, $C_1$ omit स्याताम् [2] इव इति मु ग्र

**धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः ।**
**उपायपूर्व आरम्भ उपधा चाप्युपक्रमः ॥ १३९ ॥**

(वि ) पुण्ये कृतान्ते न्याये च स्वभावोपमयोरपि ॥ 289 ॥
[1]आचारे चाप्यहिंसाया चापोपनिपदोरपि ।

सोमपे चैव धर्म स्याद् [2]धर्मं स्याद् धर्मसाधने ॥ 290 ॥

[3]सोमप क्रतुविशेष । ध्रियत इति धर्म । 'धृञ् धारणे' ॥

उपायपूर्व [4]आरम्भे प्रारम्भे विक्रमे तथा ।
उपधाया चिकित्सायामागमे स्यादुपक्रम ॥ 291 ॥

उपक्रम्यत इत्युपक्रम ॥ १३६ ॥

[1] आचार्ये K6 [2] धर्मं K6 [3] सोम क्रतु J2 [4] प्रारम्भे K6

(विव.) धर्मा:—सोमपाः । पुण्यम् इष्टापूर्तजन्यः पुरुषगुणः । तत्र धर्मशब्दः पुंनपुंसकलिङ्गः प्रागुक्तः (१, पृ. ८६) । यमो धर्मराजः । तत्र नामैकदेश-न्यायेन धर्मशब्दः । न्यायो व्यवहारनिर्णयस्तर्कः । यथा—धर्माधिकरणं प्राप्त इति । स्वभावः पदार्थस्य सहजो धर्मः । यथा—वह्नेरुष्णत्वम्, जलस्य शैत्यमिति । आचारो देशकुलाद्याचारः । यथा—देशधर्मः, कुलधर्म इति । सोमपः सोमपीथी । यथा—धर्मोऽयं कुलभूषणमिति । ध्रियत इति धर्मः । 'धृञ् धारणे' । मन्प्रत्ययः[1] (उ. १. १४५) । शेषे—'अहिंसायां राजभेदे धर्मश्चापोपमानयोः' इति । राजभेदे—इक्ष्वाकुवश्यो राजविशेषः । यथा—'प्राज्यं धर्मः पालयामास राज्यम्' इति । चापे यथा—'अयं रामो नैवं स हि जनकधर्मं दलितवान्' इति । उपमाने यथा—क्षत्रधर्मोऽयं ब्राह्मण इति । केचित्तु—सोमः पीयतेऽत्रेति व्युत्पत्त्या सोमप-शब्देन क्रतुरुच्यत इत्याहुः । तथा च विश्वप्रकाशिका—(पृ. १११, श्लो. १७)

'धर्मः पुण्ये यमे न्याये [2]स्वभावाचारयोः क्रतौ ।
उपमायामहिंसायां [3]धार्मिके च निगद्यते ॥'

इति । तथा हि—यो धर्ममनुतिष्ठति तं धार्मिकमाहुर्जनाः । सोमपः सोमपीथीति कथ्यत[4] इति ॥ उपाय—उपक्रमः । आरम्यत इत्यारम्भः । आरम्भमाणं कार्य-मित्यर्थः । उपायज्ञानपूर्वको य आरम्भः स पुंलिङ्गेनोपक्रमशब्देनोच्यते । यथा—ब्रह्मण उपक्रमो जगदिति । यत्र हि उपक्रमशब्दान्तः तत्पुरुषो भवति, तत्र तस्य नपुंसकत्वं वक्ष्यते[5] । मन्त्रिपुरोहितादीनां [6]परीक्षणमुपधेति क्षत्रियवर्गेऽभिहितम् (१, पृ. ४८६) । तत्राप्युपक्रमशब्दः । उपक्रम्यत इत्युपक्रमः । शेषे—'उपक्रमस्तु

प्रारम्भे चिकित्साया च विक्रमे' इति। प्रारम्भे यथा—भोजनस्योपक्रमः। चिकित्सायां यथा—अनुपक्रमो रोगः। विक्रमे यथा—अहो कण्ठीरवस्योपरि जम्बुकस्योपक्रम इति ॥ १३६ ॥

[1] 'अतिस्तुसुहुधृ .　' इति मन्　[2] स्वभावोदारयो Gm1, Tj1　[3] कार्मुके Gm1, Tj1　[4] Tv adds अत्र क्रतुग्रहणमन्येपामन्नदानादीनामप्युपलक्षणम्　[5] 'उपज्ञोपक्रम तदाद्याचिख्यासायाम् (२ ४ २१)　[6] धर्मादिभि शुद्धि° Gm1

(पा)　धर्मा—सोमपा। उपायपूर्व—उपक्रम ॥ १३६ ॥

**वणिक्पथः पुरं वेदो निगमा नागरो वणिक्।**
**नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु ॥ १४० ॥**

(वि)　वणिक्पथे पुरे वेदे वाणिज्ये निगम स्मृत ।

नियत गम्यतेऽनेनेति निगम [1] ॥

नैगम. स्यादुपनिपत्पौरयो[2]र्वणिजेऽपि च ॥ 292 ॥

निगमे भवो नैगम ॥

वलभद्रे दाशरथौ जामदग्न्ये पशौ पुमान् ।
नीलवर्णे मनोज्ञे च सिते रामस्त्रिपु स्मृत ॥ 293 ॥
अङ्गनाहिङ्गुलिन्यो स्त्री राम वास्तुककुष्ठयो ।

[3]रमन्तेऽस्मिन्निति राम । 'रमु क्रीडायाम्' ॥ १४० ॥

[1] K2, K4 add 'गम्लृ गतौ'　[2] नापिते विशि K4　[3] रमयतीति राम. J2, K2, K4

(विव.)　वणिक्पथः—निगमः। वणिक्पथो वाणिज्यम्। हट्टमार्गो वा। पुरं नगरम्। वेद आम्नायः। नियतं गम्यतेऽभीप्सितार्थोऽनेनेति[1] वा निगमः। नियतं गच्छन्त्यत्रेति वा निगमः। 'गोचरसंचरवहव्रजव्यजापणनिगमाश्च' (३. ३. ११९) इत्यधिकरणे[2] घबन्तो निपातितः। नागरो—नैगमौ द्वौ। [3]निगम-

शब्दस्य नगरं वणिक्पथश्च इत्यर्थद्वयं प्रागुक्तम् (१, पृ. १६५, पूर्वार्धे च)। तदुभयसंबन्धाद् नैगमशब्दस्य नगरसंबन्धी वणिक् चेत्यर्थद्वयमपि। अत्र सुबोधिनीकारः—'नैगमशब्दः [1]केवलयोगमात्रप्रवृत्तो न भवति। किंतु नागरे वणिक्पथे च रूढः'। 'रूढिर्योगमपहरति' इति न्यायाद् ब्राह्मणस्याम्नायरूपनिगमसंबन्धे सत्यपि नैगमशब्दाभिधेयत्वनिवृत्त्यर्थं द्वावित्युक्तम्' इति। स्वामी चाह (पृ. ३०३)—'ब्राह्मणस्य नैगमत्वनिषेधार्थं द्वावित्युक्तम्'[5] इति। विज्ञानेश्वरस्तु—[6]'श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः' इति [7]याज्ञवल्क्यव्याख्यानावसरे, 'ये वेदस्याप्तप्रणीतत्वेन प्रामाण्यमिच्छन्ति पाशुपतादयस्ते नैगमाः' इति व्याचष्ट (या. स्मृ. २.१५.१९२)॥

बले रामो—त्रिषु। रमते क्रीडतीति रामः। [8]बलभद्र इत्यर्थः। 'रमु क्रीडायाम्'। 'ज्वलितिकसन्तेभ्यो णः' (३.१.१४०)। अत्र रूपभेदात् पुंलिङ्गः। रमन्तेऽस्मिन् इत्यधिकरणार्थे घञि रामः (३.३.१२)। कृष्णवर्णे सुन्दरे धवलवर्णे चायं वाच्यलिङ्गः। तथाच—

'रामः पशुविशेषे [9]च जामदग्न्ये हलायुधे।
राघवे चासितश्वेतमनोज्ञेषु तु वाच्यवत्॥
रामाङ्गनाहिङ्गुलिन्यो रामं वास्तुककुष्ठयोः॥'

इति (वि. प्र. पृ. १११, श्लो. २१-२)। पशुविशेषे 'गन्धर्वः शरभो रामः' इति प्रागुक्तः (१, पृ. ३३४)। हिङ्गुलिनि 'दुर्लभो हिङ्गुली राष्ट्री नाकुली च महौषधिः' इति। द्रव्यवति कुष्ठं सारिभाख्यो गन्धद्रव्यविशेषः॥ १४०॥

[1] प्रेप्सितार्थ. Gm1. [2] Gm1 adds करणे च. [3] निगमे भवः नैगमः। 'तत्र भव' (४.३.५३) इत्यण् [4] सयोग° B6 [5] 'द्वाविति ब्राह्मणस्य नैगमत्वे निषेध.' इति मु. प्र. [6] पाखण्डि° इति मु. प्र. [7] याज्ञवल्क्यवचन° Gm1. [8] बलरामः Gm1. [9] स्यात् B5, Gm1

(पा.) वणिक्पथः—नैगमौ द्वौ। [1]द्वाविति नियमोऽनर्थकः। 'नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि[2] च' इति विश्वः (पृ. ११३, श्लो. ५२)॥ बले—त्रिषु। बलो बलभद्रः। जैनमते दाशरथिश्च बलः स्यात्॥ १४०॥

[1] C1 omits the sentence [2] नागिनेऽपि च A1, B3

**शब्दादिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः ।**
***स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्मस्तु कुटिलेऽलसे ।। १४१ ।।**

(वि ) वृन्दे स्वरपदे ग्राम. शब्दादौ [1]परिकीर्त्यते ।। 294 ।।

[2]शब्दादि. स्वरः । गीर्यत इति ग्राम । 'गॄ निगरणे' ।।

पादस्याक्रमणे [3]शक्तिसपत्त्या विक्रमः स्मृतः ।

विशेषेण क्रम्यतेऽनेनेति विक्रम ।। १४१ ।।

* श्लोकार्धमिद दाक्षिणात्यग्रन्थेपु न दृश्यते [1] परिकथ्यते J2, K4. [2] K4 omits [3] शक्तिसपदो J2

(विव.) शब्दादिपूर्वो वृन्देऽपि ग्रामः । अयमर्थः—शब्देन्द्रियगुणभूतादिपदपूर्वको ग्रामशब्दः समूहे वर्तते । यथा—शब्दग्रामः, इन्द्रियग्रामः, [1]गुणग्रामः, भूतग्रामः[1] इत्यादि । अस्मिन्नर्थे ग्रामशब्दस्य[2] उत्तरपदनैयत्यविधानात्[3] शब्दादीनां समूहः शब्दग्रामः इत्यस्वपदरूपेण विग्रहः कार्यः । अपिशब्दात् 'समौ संवसथग्रामौ' (१, पृ. २०७) इति निरुपपद एव प्रागुक्तः । शेषे—'ग्रामः स्वरे संवसथे' इति । [4]ग्रामे स्वरे यथा—'सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः' इति षड्जग्रामः, मध्यमग्रामः, गान्धारग्राम इति ग्रामास्त्रयसंगीतशास्त्रे प्रसिद्धाः ।। क्रान्तौ च विक्रमः । क्रान्तिः पादेनाक्रमणम् । विक्रामन्त्यनेनेति विक्रमः । 'क्रमु [5]पादविक्षेपे' । शेषे—'विक्रमः शक्तिसंपदि' इति । 'विक्रमस्त्वतिशक्तिता' इति प्रागुक्तः (१, पृ. ५४४) ।। १४१ ।।

[1] Gm1 omits the two words [2] °पदस्य Gm3, Tv. [3] °पदत्वनियमात् Gm1 [4] निरुपपदशेषे स्वरे स्वराणा स्थाने इत्यर्थ Tj1, Tj2, Tv [5] 'हलश्च' (३ ३ १२१) इति घञ्

(पा.) शब्दादि—ग्राम । [1]ग्रामेऽपि स्यात् ।। क्रान्तौ च विक्रमः । शक्तावपि स्यात्[2] । [3]उष्णेऽपि घर्म । 'निदाघ ऊष्मणि ग्रीष्मे स्वेदे [4]घर्मस्तु तेपु च । आतपे च दिने चाथ' इति वैजयन्ती (पृ २६६, श्लो. ५७) ।। चेष्टालकारे भ्रान्तौ च विभ्रम । चेष्टालकारो वचनविभूषणविपर्यास । भ्रान्ति-

ज्ञानविशेष । शोभायामपि स्यात् । 'शोभार्थेऽपि प्रयुज्यन्ते [5]लक्ष्मीश्रीकान्तिविभ्रमा ' इति हलायुध (अ मा. ५ २७) । शोभा नाम वस्त्रभूषणादिप्रयुक्तविशेष ।। १४१ ।।

[1] B3, C1 omit the sentence [2] B3 omits [3] उष्णेऽपि—विभ्रम इत्यधिक पाठ पारिजाते, स्वामिग्रन्थे च [4] धर्मस्तुतेपु A1, B3 [5] लक्ष्मी A1, B3

गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः ।
क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु ।। १४२ ।।

(वि) सेनाभेदे रोगभेदे [1]स्तम्बे च बलसज्जने ।। 295 ।।
दुर्गादिरक्षणस्थाने सैन्यरक्षणघट्टयो. ।
विटपाना च सघाते गुल्म पुंसि विवक्षित ।। 296 ।।
आमलक्या वस्त्रवेश्मवनिकैलासु[2] तु स्त्रियाम् ।

[3]गुल्यत इति गुल्म । 'गुड [4]रक्षणे' ।।

जामिर्यज्ञीयमूल स्याज्जानि स्वसृकुलस्त्रियो [5] ।। 297 ।।

जमति भक्षयतीति जामि । 'जमु अदने' ।।

क्षितिक्षान्त्यो क्षमा न्याय्ये क्षम शक्ते हिते त्रिपु ।

क्षम्यत इति क्षमा । 'क्षमूप् सहने' ।। १४२ ।।

[1] स्कन्धे K4, K6 [2] °व्रततयैलासु J2 [3] गुड्यते, डलयोरभेद K2
[4] रक्षायाम् K2, K3, K4 [5] °स्त्रियाम् K2, K3.

(विव.) गुल्मा रुक्स्तम्बसेनाश्च । गुड्यते रोगयानस्मादिति गुल्मः जठररोग. । गुड्यते रक्ष्यते पुरुषोऽनेनेति गुल्मः स्तम्ब', एकमूलस्तृणकाण्डसमूह । 'गुड रक्षणे'। मक्प्रत्ययः। लडयोरभेदः। अत्र सेनाशब्देन क्षत्रवर्गोक्तात् सेनामुखात् (१, पृ. ५३०) त्रिगुणचतुरङ्गबलसमूहो विवक्षितः। शेषे—'गुल्मस्तु रक्षणस्थान दुर्गादौ बलरक्षणम्' इति।। जामि. स्वसृकुलस्त्रियोः। कुलस्त्री कुलपालिका। जमति भ्रातृभर्त्रादिदत्तमिति[1] जामि'। 'जमु [2]अदने'। शेषे—'स्याज्जाम्यम्य-

यमालस्ये' इति। यथा—'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ' इत्यादि। 'जिह्मस्तु कुटिले मन्दे जामिः स्वसृकुलस्त्रियोः' इति चवर्गतृतीयादिष्वजयः। रभसस्तु—'प्रहरे सयमे यामे यामिः स्वसृकुलस्त्रियोः' इति अन्तस्थयकारादावुक्तवान्॥ क्षितिक्षान्त्योः—त्रिषु। क्षितिः भूमिः। क्षान्तिः सहनम्। 'क्षमूष् सहने' 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४)। उभयत्र रूपभेदात् स्त्रीलिङ्गः। युक्ते न्याये, शक्ते समर्थे, हितेऽनुकूले; युक्ताद्यर्थत्रये तु वाच्यलिङ्गः। 'क्षम शक्ते सहे युक्ते हिते च त्रिषु कीर्तितः' इति रत्नकोशे शक्ताद्यर्थचतुष्टये क्षमं क्षमः क्षमा इति लिङ्गत्रयरूपोच्चारणेन त्रिलिङ्गत्वाभिधानात्। अतश्च युक्तार्थे क्षममिति रूपभेदाद् नपुंसकत्वमिति व्याख्यानमुपेक्षणीयम्। सुभूतिचन्द्रस्तु 'युक्तार्थे क्षमम्' इति मकारान्तमव्ययमाह॥ १४२॥

[1] °भर्त्रादिभिर्दत्तम् Gm3, Tv.　[2] बाहुलकादिण् दीर्घश्च। कर्मणि 'इञजादिभ्य' (वा ३ ३ १०८) इतीञ् वा—इति स्वामी इति भा दी (पृ ४८६).

(पा) गुल्मा रुक्स्तम्बसेनाश्च। [1]रुग् रोग। स्तम्बोऽप्रकाण्ड शाखी। सेना सैन्यभेद। जामि. स्वसृकुलस्त्रियो। 'जिह्मस्तु कुटिले मन्दे जामि स्वसृकुलस्त्रियो' इति जकारादिपु [2]जयकोश। प्रहारे सयमे यामो यामि स्वसृकुलस्त्रियो' इति यकारादिपु रभस॥ क्षितिक्षान्त्यो—त्रिपु। युक्ते क्षममिति युक्तार्थे नपुसकमव्यय च स्यात्। युक्ते उचिते क्लीवमव्यय च मान्तमिति सुभूतिटीका॥ १४२॥

[1] रुक्स्तम्बसेना रोगवनस्पतिसैन्यभेदा A1.　[2] चवर्गादावजय इति भा दी (पृ ४८६)

**त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा।**
**ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु॥ १४३॥**

(वि) हरिते कृष्णवर्णे च प्रयागवटवृक्षयो॥ 298॥
वारिवाहे दारके च श्याम पुसि प्रकीर्तितः।
शारिवागुन्द्रयो रात्रावप्रसूतस्त्रिया तथा॥ 299॥
कृष्णाप्रियङ्ग्वोर्नील्या च तथा सोमलतौषधौ।
[1]त्रिवृताया सोमराज्या श्यामा त्वष्टाब्दयोषिति॥ 300॥
[2]मरिचे लवणे श्यामम्॥

श्यायत इति श्याम । [3]'श्यङ गतौ' ।।

[4]ललाम पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु ।
त्रिषु लिङ्गेषु रम्ये स्याद् मुख्यसामर्थ्यलक्ष्मसु ।। 301 ।।

ललतीति [5]ललामम् । 'लल विलासे' ।। १४३ ।।

[1] विवृत्तायाम् J2 [2] मरीचे K4 [3] 'शो तनूकरणे' K3, K4. [4] पुच्छे पुण्ड्रे हये भूषा पुरुषे शृङ्गकेषु च । ललाम त्रिषु रम्ये स्यात् J2 [5] ललाम J2, K4.

(विव.) त्रिषु श्यामौ—निशा । हरित् पलाशवर्णः । दूर्वादलश्याममिति कृष्णवर्णे । यथा—'स्निग्धाञ्जनश्यामतनूभिरुन्नतैः' इति माघः (शिशु. १२. ६२) । उभयत्र वाच्यलिङ्गः । गुणमात्रे धीवर्गे पुंलिङ्ग उक्तः (पृ. १००) । शारिवा गोपी[1] । निशा रात्रिः । उभयत्र रूपभेदात् स्त्रीलिङ्गः । शेषे—

'श्यामः प्रयागन्यग्रोधे घने वृद्धे च दारके ।
अप्रसूताङ्गनायां स्त्री तथा सोमलतौषधौ ।।
कृष्णाप्रियङ्ग्वोर्गुन्द्रायां गोपीत्रिवृतयोरपि ।
श्यामं मरीचे [2]लवणे ।।'

इति । गङ्गायमुनासंगमप्रदेशस्थो न्यग्रोधः प्रयागन्यग्रोधः । यथा—'सोऽयं वटः श्याम इति प्रतीतः' इति रघुवंशे (१३. ५३) । घनो मेघः । दारको बालकः । अप्रसूताङ्गना यौवनमध्यस्था । गुन्द्रा [3]गोवन्दनी । त्रिवृता त्रिपुटा । मरीचे च लवणविशेषे च रूपभेदान्नपुंसकम् ।। ललामं—केतुषु । पुच्छं गवादीनां लाङ्गूलम् । पुण्ड्रं गवाश्वादीनां शरीरवर्णाद् [4]वर्णान्तरगतं ललाटगतं चिह्नम् । अश्वः घोटकः । भूषा आभरणम् । प्रधानमेव प्राधान्यम् । अत्र रभसः—

'ललाम च ललामं च भूषायालधिवाजिषु ।
चिह्नप्रभावपुण्ड्रेषु प्रधाने ध्वजशृङ्गयोः ।।'

इति । यादवप्रकाशोऽपि—

'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे ।
श्रेष्ठे भूषापुच्छशृङ्गपुण्ड्रचिह्नहयेष्वपि[5] ।।'

इति (वैज. पृ. २६२, श्लो. ७२-३)। अश्वस्य भूषा इति षष्ठीसमासाश्रयणेन सुबोधिनीकारव्याख्याने मूलं न पश्यामः। ललन्तीति ललाः विलासशीलाः, तानमति गच्छतीति ललाम्। पचाद्यचि [6]कनिन्प्रत्यये [7]ललाम। 'कन्याललाम कमनीयमजस्य लिप्सोः' इति नकारान्तस्य प्रधानरूपार्थे रघुवंशे प्रयोगः (५. ६४)। 'क्षणात् कपिललामेन द्रावितं कौरवं बलम्' इति ध्वजार्थे द्रोणपर्वणि रात्रियुद्धे प्रयोगः ॥ १४३ ॥

[1] श्यामलता इत्यर्थं [2] मरीचिलवणे Tv [3] गोस्तनी Gm1, गोवन्दिनीति वैजयन्ती (पृ. ५०, श्लो ६६) [4] वर्णान्तरकृत B5, B6 [5] °चिह्नाश्वलिङ्गिषु इति मु प्र. [6] अनुप्रत्यये B6. [7] Tj1, Tj2 add नान्तोऽपि

(पा) त्रिषु श्यामौ—प्राधान्यकेतुषु। पुण्ड्र भालाङ्कम्। प्राधान्य प्रधानम्। केतु चिह्नम्।

'ललाम च ललाम च भूषावालधिवाजिषु।
चिह्नप्रधानपुण्ड्रेषु प्रभावे [1]ध्वजशृङ्गयो ॥'

[2]इति जयकोश ॥ १४३ ॥

[1] द्रुम° A1, B3 [2] अजय इति टी स (पृ १२१).

सूक्ष्ममध्यात्ममप्यादौ प्रधाने प्रथमस्त्रिषु।
वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ ॥ १४४ ॥
जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्।

इति मान्तशब्दाः

(वि) [1]सूक्ष्म त्वणौ कैतवे स्यादध्यात्माल्पकयोरपि।

सूच्यत इति सूक्ष्मम्। [2]'सूच पैशुन्ये'॥

आदौ प्रधानके चैव प्रथम परिकीर्तितम् ॥ 302 ॥

प्रथतेऽस्मादिति प्रथमम्। 'प्रथ [3]प्रख्याने'॥

प्रतीपे सुन्दरे सव्ये मेघे [4]रिक्थे हरे स्मरे ।
वाम स्यादङ्गनाया तु सृगाल्या करभस्त्रियाम् ।। 303 ।।
रासभ्या वडवाया च वामा [5]तु परिकीर्त्यते ।

वमतीति वाम । 'टुवमु उद्गिरणे' ।

अध्माने [6]कुत्सिते न्यूनेऽप्यधमोऽध स्थितेऽपि च ।। 304 ।।

अधमत्वात् अधम. । न विद्यते धमो ध्मानमत्रेति वाधम

जीर्णे च परिभुक्ते च पूतिपर्युषिते तथा ।
गतस्वाभाविकरसे यातयाम प्रकीर्तितम् ।। 305 ।।

अतिशयेन याम्यत इति यातयामम् । 'यम अपरिवेषणे' [7] ।। १४४ ।।

इति मान्तवर्ग.[8]

[1] सूक्ष्मेऽप्यणौ $J_2$ [2] $K_3$, $K_4$ omit [3] ख्यातौ $K_4$, $K_6$ [4] तीर्थे $K_6$ [5] वामेति $J_2$ [6] कुत्सितन्यासे $K_5$ [7] जुगुप्सायाम् $K_4$, $K_6$ [8] $K_3$ adds मान्तसङ्ख्या २३

(विव.) सूक्ष्ममध्यात्ममपि । अध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः । परमात्मनि सूक्ष्मशब्दो नपुंसकलिङ्गो वर्तत इत्यर्थः । दुर्ज्ञानत्वेनाणुपरिमाणद्रव्य-सादृश्यात् सूक्ष्मम्[1] । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः (कठ. २. २०) । अपिशब्देन स्वल्पेऽपि सूक्ष्मशब्दो वाच्यलिङ्गः । [2]आद्ये प्रधाने प्रथमस्त्रिषु । आद्ये यथा—'अग्निष्टोमः [3]प्रथमो यज्ञः' इति । प्रधाने श्रेष्ठे यथा—दातॄणां प्रथम इति । प्रथते तस्मादन्यदितरद् द्वितीयादिकं स्वगुणभूत वेति प्रथमः । 'प्रथ [4]प्रख्याने' । प्रथमशब्दप्रभृतयो वक्ष्यमाणा मकारान्तास्त्रिषु वाच्यलिङ्गा इत्यर्थः । वामौ वल्गुप्रतीपौ द्वौ । वल्गुः मनोहरः । यथा—वामलोचना । प्रतीपः प्रतिकूलः । यथा—'विधौ वामारम्भे वहति विफलधियः पौरुषभराः' इति । वमति प्रकटयति स्वगुणमिति वामः । 'टुवमु उद्गिरणे' । 'ज्वलितिकसन्तेभ्यो णः' (३. १. १४०) इति णप्रत्यये 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (७. ३. ३४) 'अनाचमिकमिवमीनामिति वक्तव्यम्' इति वृद्धिः । सव्ये—

'वामः सव्ये त्रिषु स्मृतः।
पुंसि कामे हरे क्लीबे द्रविणे स्त्री तु योषिति।
वामी सृगालीबडवारासभीकरभीषु च ॥'

इति। हरे यथा—'वामदेवो महादेवः' (१, पृ. २३)। द्रविणे यथा—[5] 'वाममस्मभ्यं सा वीः, वामभाजः स्याम' इति। योषिन्मात्रे टाबन्तः प्रागुक्तः (१, पृ. ३६२)। सृगाल्यादिषु ङीबन्तः यथा—'अथोष्ट्रवामीशतवाहितार्थम्' (रघु. ५. ३२) इति ॥ अधमौ न्यूनकुत्सितौ। न्यूनोऽसमग्रः। यथा—अधमपक्षः। कुत्सितः गर्हितः। यथा—ब्राह्मणाधमः, राजाधमः इति। ['अधोऽवसोर्लोपश्च' (सर. कण्ठा. ४. ३. १२०)] 'अवोऽधसोर्लोपश्च इति वक्तव्यम्' (वा. ४. ३. ८)। अध.-शब्दाद् मप्रत्ययः सकारलोपश्च। शेषे—अधःस्थोऽप्यधमोऽध्माने' इति। अधोभागस्थितोऽप्यधमः। धमतीति धमः। 'पाघ्राध्माधेट्दृशः शः' (३. १. १३७)। ततोऽन्योऽधमः। अध्मानो ध्मानरहित इत्यर्थः॥ जीर्णं च—द्वयम्। उपभोगेन कालवशेन वा गतसारं जीर्णम्। यथा—यातयामानि माल्यानि इति। तथा—'वयमपि शिथिलाङ्गा यातयामं कलत्रम्' इति। दर्भाः कृष्णाजिनं मन्त्रः इत्यादि कर्मान्तरेषु विनियुक्तानामपि दर्भादीनामन्यत्रापि कर्मणि विनियोगोऽस्तीत्यर्थः। यागादौ विनियुक्त परिभुक्तम्[6]। यथा—'यातयामान्यन्यानि हवींष्ययातयाममाज्यम्' इति यामशब्देन प्रहरवाचिना कालमात्रं लक्ष्यते। कर्मान्तरेषूपयुक्तस्याप्याज्यस्य पुरोडाशादिवद् यातयामत्वोपाधिकनिषेधो नास्तीत्यर्थः। अत्र परिभुक्तं भुक्तोज्झितमिति सर्वानन्दः (टी. स. पृ. १२१)। यातो यामः कालोऽस्येति यातयामम्[7] ॥ १४४ ॥

इति मान्तवर्गः[8]

[1] सूच्यते। 'सूच पैशुन्ये'। 'सूचे स्मन्' (उ ४ १७७) इति भा दी (पृ ४८६)
[2] आद्ये इति विवरणसमत पाठ　[3] प्रथमयज्ञ Bs, Bs　[4] 'प्रथेरमच्' (उ ५ ६८)
[5] 'वाममस्मभ्य धातु शर्म तुभ्यम्' इति ऋग्वेदे (१० ५६ २)　[6] Tv adds च
[7] यातयाम गतरसमिति गीतायाम् (१७ १०)　[8] Tv adds मान्तशब्दसख्या २३

(पा.) सूक्ष्ममध्यात्ममपि। 'सूक्ष्म स्यात् कैतवेऽध्यात्मेऽप्यणौ सूक्ष्मोऽल्पकेऽन्यवत्' इति विश्व (पृ १११, श्लो १६)॥ [1]आदौ प्रधाने—

प्रतीपौ द्वौ। द्वाविति नियमेन सव्याद्यर्थे त्रिष्वित्यधिकृतलिङ्ग न भवति ।। अधमौ —यातयाममिद द्वयम् । परिभुक्तमिति [2]भुक्तोज्झितम् । 'परिभुक्तोज्झिते जीर्णे यातयाम त्रिलिङ्गकम्' इति रभस । अनुक्तम्—

दण्डयामस्तु दिवसे कृतान्ते कुम्भसभवे ।
तलिम वद्धभूमौ स्यात् तल्पे चैव वितानके ।।
कच्छपे जलगुल्म स्यादावर्ते सलिलस्य च ।
ध्यामश्च ध्यामलश्च द्वौ श्यामले च मलीमसे ।।
तोक्म कर्णमले क्लीब हरिते स्यात् त्रिलिङ्गकम् ।
विद्रुम पल्लवेऽपि स्याद् हिम स्याच्चन्दनेऽपि च ।
गर्दभ्यामपि वामी स्यात् [3]सौम्येऽप्यनुपमो भवेत् ।
नियमो यन्त्रणाश्लिष्टनिश्चयप्रभृतिष्वपि ।
पञ्चमौ भेकहृद्यौ च [4]सभ्रमौ विभ्रमावपि ।। १४४ ।।

इति मान्तवर्ग

[1] आद्ये A1, C1 [2] परिभुक्ताज्झितम् A1 [3] साम्येऽपि A1 [4] सभ्रमो विभ्रमेऽपि च C1

*अथ यान्तवर्गः—*

**तुरंगगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ ।। १४५ ।।**
**श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ ।**
**पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः ।। १४६ ।।**

(वि) तार्क्ष्योऽश्वकर्णे गरुडे रथवाहे रसाञ्जने ।

[1]तरन्ति येनेति तार्क्ष्य । [2]गरुडपक्षे [3]तृक्षस्यापत्य पुमान् तार्क्ष्य ।।

क्षयो गृहे गतौ हानौ हिमावल्यान्तयक्ष्मसु ।। 306 ।।

क्षीयत इति क्षय । 'क्षि क्षये'। 'क्षि निवासगत्यो '[4] ।।

दम्पत्योर्देवर श्याले श्वशुर्य परिकीर्तित ।

श्वशुरस्यापत्य श्वशुर्य ॥

भ्रातृव्यो भ्रातृपुत्रेऽपि व्यसनापन्नवैरिणो ॥ 307 ॥

भ्रातुरपत्य भ्रातृव्य ॥

पर्जन्यो मेघशब्दे च गर्जन्मेघे दिवस्पतौ ।

पिपर्ति [5]जनमिति पर्जन्य । पॄ पालनपूरणयो ' ।

चक्रसवन्धिशीघ्रे च पत्यौ वैश्यप्रवीणयो ॥ 308 ॥

अर्यो योग्येऽपि च भवेत् ॥

अरणीयस्त्वादभिगम्यत्वाद् अर्य । 'ऋ गतौ' ॥ १४५-६ ॥

[1] तरति J2 [2] गरुडस्य K4 [3] तर्क्षस्य K4 [4] K3, K4 add 'क्षिणु हिंसायाम्' and 'क्षै क्षये' [5] K2, K4 omit जनम्

(विव.) तुरगगरुडौ ताक्ष्यौं । तृक्षस्यापत्य पुमान् ताक्ष्यं: गरुड: । वेगेन ताक्ष्यंसादृश्याद् अश्वोऽपि ताक्ष्यं: । शेषे—'ताक्ष्योंऽनूरावश्वकर्णे रथे [1]नप्तु रसाञ्जने' इति । अनूरुः सूर्यसारथि· । अश्वकर्णो वृक्षविशेष: । रथे च पुलिङ्ग: । तथा च—[2]'आरुह्य ताक्ष्यं नभसीव भूतले' इति माघकाव्ये रथे प्रयोग· (शिशु. १२. २) । रसाञ्जने तु नप् नपुसकलिङ्ग इत्यर्थः ॥ निलयापचयौ क्षयौ । निलयो गृहम् । अपचयो हानि:[3] । 'क्षि निवासगत्यो·' । 'क्षि क्षये' । आभ्या धातुभ्या क्रमेणाधिकरणे भावे च एरच् (३. ३. ५६) । शेषे—'क्षयो गतौ च हिंसायाम्' इति । यक्ष्मरोगे कल्पान्ते च प्रागुक्तः (१, पृ. ३९२, ८६) ॥ श्वशुर्यौ देवरस्यालौ । पत्युर्भ्राता पत्न्या श्वशुर्यं इति व्यवहर्तव्य·, भार्याया भ्राता भर्तुश्च श्वशुर्यं इति व्यवहर्तव्य इत्यर्थः । श्वशुरस्यापत्य श्वशुर्य: । 'राजश्वशुराद्यत्' (४ १. १३७) इति यत्प्रत्यय: ॥ भ्रातृव्यौ भ्रातृजद्विषौ । भ्रातुरपत्यमिति विग्रहे 'भ्रातुर्व्यच्च' (४. १. १४४) इति व्यत्प्रत्यये भ्रातृव्य· । 'व्यन् सपत्ने' (४. १. १४५) इति सूत्रेण भ्रातृशब्दात् प्रकृतिप्रत्ययसमुदायानपेक्षया शत्रावभिधेये व्यन्प्रत्यये भ्रातृव्य: । अत्र कश्चिदाह—भ्रातृपुत्रः कदाचिद् दायहरत्वेन[1] पितृव्यमभिभवति ।

एवमभिभावकत्वसाधर्म्यात् शत्रुरपि भ्रातृव्य इत्युच्यते। रूढेरभिधातुल्यत्वाद् नानार्थत्वेनाभिधानमिति[5]। तदनुपपन्नम्। मुख्यलाक्षणिकयोः स्वरवैलक्षण्यानुपपत्तेः। [6]लक्षणसिद्धेऽर्थे सूत्रारम्भवैषम्याच्च ॥ पर्जन्यौ रसदब्देन्द्रौ। रसदब्दो गर्जन्मेघः। सुबोधिनीकारस्तु—शरदब्देन्द्रौ इति पठित्वा शारदमेघस्य गर्जितप्रायत्वात् शरदब्दशब्देन गर्जन्मेघ उच्यते इत्याह। पर्जन्य इत्यौणादिकनिपातनसामर्थ्यात् 'पृषु सेचने'[7] इत्यस्माद् न्यप्रत्यये पकारस्य च तालव्यवर्गतृतीये जकारे च सति पर्जन्यशब्दः (उ. ३. १०३)। अर्जेर्वा अन्यप्रत्यये धातोः पुगागमश्च। क्वचिन्नि.शब्देऽपि मेघे [8]गर्जनयोग्यत्वात् पर्जन्यशब्दः औपचारिकः॥ स्यादर्यः स्वामिवैश्ययोः। स्वामी प्रभुः। 'अर्यः स्वामिवैश्ययोः' (३. १. १०३) इति निपातनात् साधुः[9] ॥ १४५–६ ॥

[1] ना न Tv [2] Tv adds जवेन नागाद् जितवन्तमुच्चकैं [3] ह्रास Gm3, Tv [4] °साधकत्वेन Tj1, Tj2 [5] Tv adds केचित्, तदपि [6] लक्षणाश्रयणे B6. [7] 'पृषु सेचनहिंसाक्लेशनेषु' Tj2 [8] मेघे पर्जन्यशब्दप्रयोग Tv [9] अर्यते। 'ऋ गतौ'। 'अर्य स्वामिवैश्ययो' इति साधु इति भा दी (पृ ४८७).

(पा) तुरगगरडौ—रसदब्देन्द्रौ। [1]अब्दरसन च स्यात्। 'पर्जन्यो मेघशब्देऽपि[2] ध्वनदम्बुदशक्रयो' इति विश्व (पृ १२१, श्लो ८३)॥ स्यादर्य स्वामिवैश्ययो ॥ १४५–६ ॥

[1] अम्बुद° A1, C1 [2] स्यादिति मुद्रितग्रन्थे

तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे।
प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ॥ १४७ ॥
रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषानुतापयोः।

(वि) तिष्यस्तु स्यात् कलौ युगे।
आमलक्या[1] भवेत् तिष्या पुमान् पुष्याख्यतारके ॥ 309 ॥

[1]त्विषतीति तिष्य। 'त्विष दीप्तौ'॥

पर्याय स्याच्च निर्याणे प्रकारेऽवसरे क्रमे।

पर्ययण पर्याय । [3]'अय गतौ' ॥

प्रत्यय [4]प्रथितत्वेऽपि हेतुविश्वासयोरपि ॥ 310 ॥
[5]आचाररन्ध्रशपथज्ञानसन्नादिनिघ्नयो ।

प्रत्येतीति प्रत्यय । 'इण गतौ' ॥

अनुतापेऽप्यनुशयो दीर्घद्वेषेऽपि कथ्यत ॥ 311 ॥

अनुशतऽन्नेत्यनुशय । 'शीङ स्वप्न' ॥ १४७ ॥

[1] धात्या चापि J2 [2] त्विपते K3, K4 [3] इण गतौ' K3 [4] प्रथिते शब्दे J2 [5] आचार्ये J2

(विव) तिष्य पुष्ये कलियुगे। पुष्य नक्षत्रविशेष । कृतादिषु चतुर्थं कलियुगम्। त्वेषते तिष्य । 'त्विष[1] दीप्तौ'। [2]निपातनात् साधु (उ ४ ११३[3])। शेषे—'तिष्या त्वामलकी स्त्रियाम्' इति ॥ पर्यायोऽवसरे क्रमे । विचिकीर्षितार्थकरणाय समुचित कालोऽवसर । बह्वीना क्रियाणा भिन्नकालतानियम क्रम । 'इण् गतौ' इत्यस्मात् 'परावनुपात्यय इण' (३ ३ ३८) इति घञि पर्याय । शेषे—'निर्वाणे च प्रकारे च पर्याय' इति। यथा—अयमपि तत्पर्याय । तत्प्रकार इत्यर्थ ॥ प्रत्ययो—शब्दे। अधीन आयत्त । यथा—राजप्रत्यया प्रकृतय । शपथे यथा—'गूढद्रव्याभिशङ्काया प्रत्ययस्तत्र कीर्तित' इति स्मृति । ज्ञाने यथा—प्रत्यक्ष प्रत्यय इति। विश्वासे यथा—'मूढ परप्रत्ययनेयबुद्धि' इति (मालविका १ २)। हेतौ यथा—'अपेक्षते प्रत्ययमुत्तम त्वा बीजाङ्कुर प्रागुदयादिवाम्भ' इति कालिदास (कु स ३ १८)। परकीयापराधस्थान रन्ध्रम्। यथा—'पापाद्विरतोऽपि शठ प्रत्ययमासाद्य विकुरुतेऽवश्यम्' इति। शब्दोऽत्र कृत्तद्धितादिरूप पदैकदेशो विवक्षित । 'इण् गतौ' इत्यस्माद् अधीनार्थे पचाद्यच् (३ १ १३४)। अन्यत्र भावे करणे च एरच् (३ ३ ५६)। शेषे—'प्रत्यय पुनराचारे प्रथने' इति। आचारे यथा—'श्रुतिस्मृत्यविरुद्धाना प्रत्ययाना प्रमाणता' इति। प्रथन प्रसिद्धत्वम्। यथा—'प्रतीते प्रथित' इति प्रागुक्तम् (२, ५ १३) अथ—अनुतापयो। दीर्घद्वेष चिरवैरम्। यथा—[4]'तत सपत्नापनयस्मरणानुशयस्फुरा' इति माघ (शिशु २ १४)। कृतस्य [5]दानभोगादे

पश्चादनुशोचनमनुताप । यथा—'दत्तमिष्टमपि नान्वशेत स ' इति माघकाव्ये (शिशु १४ ४५) । अनुशेते सुप्त इतीव मूढो भवत्यत्र पुरुष इत्यनुशयः ॥ १४७ ॥

[1] त्विषी Tv [2] Tj1, Tj2 add औणादिक° [3] 'अघ्न्यादयश्च' [4] अनुशयस्मरणस्फुरिताधर Gm3, Tv [5] यागादे Gm1, Tv

(पा) तिष्य —क्रमे । [1]प्रकारेऽपि स्यात् । 'पर्याय स्यात् प्रकारेऽपि' इति त्रिकाण्डशेष (पृ ३२, श्लो ८६६) ॥ प्रत्ययो—शब्दे । अधीने—तृष्णा-प्रत्ययोऽम्बुपानम् । शपथे—विवादे प्रत्ययाच्छुद्धि । ज्ञाने—प्रत्यक्ष. प्रत्यय । हेतौ—बीजप्रत्ययोऽङ्कुर । रन्ध्रे—प्रत्ययमासाद्य विकुरुते हि खल । शब्दे—शब्देन प्रधानसनाद्योरेव[2] ग्रहणम् । 'प्रत्यय प्रथितत्वे स्यात् सनादिज्ञानयोरपि' इति रभस । प्रथायाम्—अहो अमरसिंहस्य प्रत्यय ॥ अथ—अनुतापयो [3] ॥ १४७ ॥

[1] B3 omits the sentence [2] B3, C1 add सनादी सन्प्रत्यय कृत्प्रत्यय इत्यादि [3] C1 adds 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयो ' इति विश्व

स्थूलोच्चयस्त्वसाकल्ये गजाना मध्यमे गते ॥ १४८ ॥
समयाः शपथाचारकालसिद्धान्तसंविदः ।
व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः ॥ १४९ ॥

(वि) स्थूलोच्चयो गण्डशैलन्यूनयो करिणीगतौ ।

स्थूलश्चासावुच्चयश्च स्थूलोच्चय ॥

सिद्धान्तशपथाचारकालेष्ववसरेऽपि च ॥ 312 ॥

प्रतिज्ञाया च सङ्केते नियमे समयो भवेत् ।

समेत्यत्रेति समय [1] ॥

अनयोऽशुभदैवे[2] स्यादापदि [3]व्यसनेऽपि च ॥ 313 ॥

विरुद्धो नयोऽनय । अयादन्यो [4]वा । न विद्यतेऽयो [5]गतिरत्रेत्यनय [6] ॥ १४८–९ ॥

[1] K2, K3 add 'इण् गतौ' [2] °देवे K3, K6 [3] व्यसनेषु J2, K2 [4] K2 adds अनय [5] अत्रेति वा J2 [6] K2 adds 'णीञ् प्रापणे'.

(विव.) स्थूलोच्चय—[1]नागानां मध्यमे गते। स्थूलानामेव कणिशादीनामुच्चयनम्। न तु सूक्ष्माणामिति स्थितौ सत्यां[2] स्थूलोच्चयकृत इति शब्दप्रयोगे सति वस्तुरसाकल्यप्रतिपादनमात्रे तात्पर्यात् श्रोतुरपि तथैव प्रतिपत्तेः स्थूलोच्चयशब्दस्य साकल्याभाव एवार्थः। यथा—स्थूलोच्चयेन ब्राह्मणा आहूताः। केषांचित् प्रसिद्धानां नाम गृहीत्वा आहूताः, न सर्वे इत्यर्थः[3]। स्थूलं मुखमुच्चीयते उन्नम्यतेऽत्रेति स्थूलोच्चयशब्देन गजानामनतिशीघ्रमनतिमन्दं मध्यमगतम्। यथाह पालकाप्यः—'नीचैर्गतिः स्थूलोच्चयो वीथिमार्ग इति गजानां तिस्रो गतयः' इति। शेषे—'स्थूलोच्चयो गण्डोपलो मतः' इति। गण्डोपलो गण्डशैलः॥ समयाः—संविदः। शपथे यथा—कृतसमयः। आचारे यथा—देशसमयः, कालसमयः इति। काले यथा—संध्यासमयः। सिद्धान्ते यथा—बौद्धसमयः। संवित् प्रतिज्ञा यथा—'निस्तीर्णसमयो भीमसेनः' इति। संयन्ति संगच्छन्ते जना अनेन अत्रेति वा समयः। 'इण् गतौ'। करणेऽधिकरणे च यथायोगम् एरच्प्रत्ययः (३. ३. ५६)। शेषे—'संकेते समयः प्रोक्तो नियमेऽवसरेऽपि च' इति। संकेते यथा—अन्योन्यं समयं चक्रुरिति। नियमे यथा—'अस्मिन्नग्रहारे सर्वैरपि वेदद्वयमध्येतव्यमिति समयः'। अवसरे यथा—संप्रति गन्तुमसमयः इति॥ व्यसनानि—अनयास्त्रयः। [4]नयो नीतिशास्त्रम्। तत्र तेषां निरोधाद् नीतिशास्त्रविरुद्धत्वेन मृगयाक्षादीनि व्यसनान्यनयशब्देनोच्यन्ते। अयः शुभावहो विधिः (१, पृ. ८८), तमारूढत्वाद् दुःखहेतुः पुराकृतकर्मरूपमशुभ दैवमनय उच्यते। विपद् दुःखं तदपि कार्यकारणयोरभेदोपचाराद् अनय इत्युक्तम्॥ १४८–९॥

[1] नागानामिति विवरणसमत पाठ　　[2] Gm3 adds आनुकूल्योपादान प्रतीयते
[3] B6 adds स्थूलोच्चयेन ग्रन्थार्थ उक्त इति। आपतत प्रतीतार्थो व्याख्यात इत्यर्थं　　[4] अत्र व्यसनशब्देन सध्यादिपाड्गुण्यप्रयोगाद् भ्रशो विवक्षित। नयो नीति, तद्विरुद्धत्वादनय इत्युच्यते Gm3, Tv.

(पा.) स्थूलोच्चय—मध्यमे गते। [1]गण्डोपले तृणसचयेऽपि। 'स्थूलोच्चयस्त्वसाकल्ये गण्डोपलकरण्डयो.' इति विश्व[2] (पृ १२४, श्लो. ११६)॥ समयाः—सविदः। सवित् क्रियाकार। 'समयस्तु क्रियाकारे सकेते चरिते सताम्' इति वैजयन्ती (पृ. २४५, श्लो ८२)॥ व्यसनानि—त्रय॥१४८–९॥

[1] A1 omits the sentence [2] C1 adds गजाना मध्यमगतौ स्थूलोच्चय उदाहृत

अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि ।
युद्धायत्यो सपराय पूज्यस्तु श्वशुरेऽपि च ॥ १५० ॥

(वि) अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डविनाशयो ।

[1]अयस्यातिक्रमोऽत्यय ॥

आयतौ युद्धविपदो [2]सपराय प्रकीर्तित ॥ 314 ॥

समन्तात् परायन्ति म्रियन्तऽत्रेति [2]सपराय । [3] 'अय गतौ' ॥

श्वशुर मानयोग्य च पूज्यस्तु परिकीर्तित [4] ।

[5]पूजामर्हतीति पूज्य । 'पूज पूजायाम्' ॥ १५० ॥

[1] अयस K° K6 [2] सापराय K3, K4 [3] इण गतौ' J° [4] परिकीर्त्यते K2, परिकथ्यत K4 [5] पूजयितुमह J2

(विव) अत्ययो—दण्डेऽपि । अतिक्रम्यायन गमनम् अत्यय । यथा—पर्वात्यये पार्थिकृतिर्विधीयते[1] । कृच्छ्रे कष्टावस्थाया यथा—'प्राणात्यये तथा श्राद्धे [2]खादन् मास न दोषभाक्' इति (या स्मृ १ ८ १७९) । दोषे यथा—'महत्सु नात्यय ब्रूयात्' इति । महापुरुषे दोष न कीर्तयेदित्यर्थ । दण्डे यथा—वाक्पारुष्येऽत्यय प्रोक्त इति । शेषे—'विनाशेऽप्यत्यय प्रोक्त' इति[3] ॥ अथापदि—सपराय । आयतिरुत्तरकाल । सम्यक् समन्तात् परायन्ति म्रियन्तेऽत्र-जना इति सपराय । 'इण् गतौ' । अच्प्रत्यय[4] । हृस्वादि । 'सपराय स्मृतो युद्धे विपदुत्तरकालयो' इत्यजय । युद्धे यथा—'सापरायिक दुर्ग कुर्यात्' इति कौटिल्य (अ शा २ २) । 'न सापरायिक तस्य दुर्मतेर्विद्यते फलम्' इति आयतौ[5] (म स्मृ ११ ३०) ॥ पूज्यस्तु श्वशुरेऽपि च । पत्यु पिता श्वशुर । अपिशब्दाद् मान्योऽपि[6] ॥ १५० ॥

[1] Tv adds पवरामर्मातिक्रमस्त्यय [2] Padas II and III are omitted

[3] Tj1, Tj2 add यथा—सपिण्डाना सवर्णानामत्यये दशरात्रकमिति [4] 'एरच्' (३ ३ ५६) [5] B6 adds प्रयोग [6] पूज्य प्रतीक्ष्य (२, पृ ८)

(पा) अत्ययो—सापराय[1]। आयतिरुत्तरकाल[2]। 'सापराय स्मृतो युद्धे व्यापदुत्तरकालयो' इति जयकोश.। पूज्यस्तु श्वशुरेऽपि च। पूजार्होऽपि स्यात् ॥ १५० ॥

[1] सापराय इति पारिजाताभिमत पाठ [2] आगामिकाल C1

**पश्चादवस्थायिबलं समवायश्च संनयौ ।**
**संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी ॥ १५१ ॥**
**विश्रम्भयाच्ञाप्रेमाणो विरोधेऽपि समुच्छ्रयः ।**

(वि) पश्चादवस्थायिबले समवाये च सनय[1] ॥ 315 ॥

सन्नमध्यवसन्न यातीति सनय । सता नय सन्नय । [2]सन् अयोऽस्येति वा सनय ॥

सभूते सनिवेशे च सस्त्यायो विस्तृतौ गृहे ।

सस्त्यायत इति सस्त्याय । 'स्त्यै ष्टचै शब्दसघातयो'।

विस्रम्भे प्रेम्णि याच्ञाया प्रणय प्रसरे चये ॥ 316 ॥

चय परिचय । प्रकर्षेण नय [3]नयन प्रणय ॥

समुल्लङ्घ्य स्थितावूर्ध्वश्रयणे[4]ऽप्युन्नतावपि ।
वैरिणामपि वैरे च समुच्छ्रय उदाहृत ॥ 317 ॥

[5]समुच्छ्रयण समुच्छ्रय । 'श्रिञ् सेवायाम्' ॥ १५१ ॥

[1] K5, K6 add सनिवेशे समुन्नय. [2] K1 *omits the sentence* [3] K3, K5 omit नयन [4] °श्रवणे J2 [5] समुच्छ्रयत इति J2, K2

(विव) पश्चादवस्थायि—सनयौ। युद्धोद्युक्त बल स्वसमीप नयतीति सनयः। 'पचाद्यच्' (३. १. १३४)। अस्य कर्तरि विहितत्वाद् [1]एरच्प्रत्ययेन बाधो नास्ति। युध्यमानबलस्यावष्टम्भकत्वेन तत्पश्चाद्भागावस्थित बलमित्यर्थ ।

समवाय समूह । मेलनमिति केचित् । सश्चासौ नयश्च सनय । सन्न यातीति सन्नय इत्यादीनामर्थाना विलष्टसमासगम्याना प्रायेण वक्तु शक्यत्वाद् न तेषा नानार्थकाण्डेऽभिधानमित्यवधेयम् ॥ सघाते—सस्त्याय । सघात समूह । 'सनिवेशो निकर्षणम्' इति प्रागुक्तम् (१, पृ २०७)। सनिवेशोऽवयवसस्थानमिति केचित्। सम्यक् स्त्यायन्ते सहुला भवन्त्यत्रेति सस्त्याय । 'स्त्यै शब्दसघातयो'। घञ्[2] ॥ प्रणया—प्रेमाण । विस्रम्भ परिचय । यथा—'प्रेमार्द्रा प्रणयस्पृश परिचयात' इति भवभूति (मालती ५ ७)। याच्ञा प्रार्थना। यथा—'तद्-भूतनाथानुग नार्हसि त्व सबन्धिनो मे प्रणय विहन्तुम्' इति रघुवशे (२ ५८)। यद्यपि 'प्रेमनीत प्रकर्षं चेत् स एव प्रणयो मत' इति [3]भारतीयवचनेन प्रेमप्रणययोरवस्थाभेदोऽस्ति, तथापि अवान्तरविशेषमनादृत्य[4] प्रेमप्रणयशब्दा-वेकार्थत्वेनोक्तावित्यवधेयम्[5]। प्रपूर्वस्य नयते[6]रजन्तस्योपसर्गवशाद् अनेकार्थत्वम् ॥ विरोधेऽपि समुच्छ्य । 'उदि श्रयति ' इत्यादिना (३ ३ ४९) प्राप्तस्य घञि बाहुलकाद् अभावे सति एरचि (३ ३ ५६) समुच्छ्रय । शेषे—'समुच्छ्रय स्यादुन्नत्यामूर्ध्वाश्रयण एव च' इति ॥ १५१ ॥

[1] सनीयत एरच्च वा इति भा दी (पृ ४८७) [2] भाव (३ ३ १८), 'आतो युक्चिण्कृता (७ ३ ३३) इति [युगागम] इति भा दी (पृ ४८७) [3] भारती योक्तेंयद्यपि Gm3 Tv [4] Gm3 Tv add उपचारेण [5] इति शयम् Gm3 Tv [6] एरजन्तस्य Gm3 Tv

(पा) पश्चादवस्थायि—सनयौ। समुन्नयावपि स्याताम्। 'समुन्नय समवाय पृष्ठ स्थायिबलऽपि च' इति जयकोश ॥ [1]सस्थान सनिवश च सम्स्याय [2]। गृहेऽपि स्यात्। 'सस्थान सनिवश च सस्त्यायो वसतावपि' इति रभस ॥ प्रणया-स्त्वमी—प्रमाण । विस्रम्भ परिचय । 'विस्रम्भ स्यात् परिचय [3]विश्वासविस्र-म्भया' इति [4]जयकोश । 'परिचयप्रार्थनया प्रणय परिकीर्तित' इत्यमरमाला ॥ विरोधेऽपि समुच्छ्य । उन्नतावपि स्यात् ॥ १५१ ॥

[1] सस्थान इति पारिजाताभिमत पाठ. [2] A1 adds सस्त्याय 'सघातवृद्धि' सनिवश 'हाम्मानाम' [3] विश्वासे A1 [4] अजय इति भा दी (पृ ४८८)

**विषयो यस्य यो ज्ञातस्तत्र शब्दादिकेष्वपि ॥ १५२ ॥**
**निर्यासेऽपि कषायोऽस्त्री सभायां च प्रतिश्रयः ।**
**प्रायो भून्म्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि ॥ १५३ ॥**

(वि) विषयो देशशब्दादिभ[1]वेष्वन्यत्र गोचरे ।
प्रबन्धादौ जनपदे यज्ज्ञात[2] यस्य[3] तत्र च ॥ 318 ॥

गोचरो गवा चरणप्रदेश । विसिनोति विशेषेण प्रीतिं बध्नातीति विषय । 'षिञ् बन्धने' ॥

तुवरे सुरभौ रक्ते पीते रागे विलेपने ।
अङ्गरागे च निर्यासे कषाय परिकीर्त्यते[4] ॥ 319 ॥

कषति [5]गलमिति कषाय । 'कष हिंसायाम्' ॥

प्रतिश्रय सभाया स्यादास्पदाश्रययोरपि ।

प्रतिश्रयतेऽनेकैरिति प्रतिश्रय । 'श्रिञ् सेवायाम्' ॥

प्रायो बहुत्वे मृत्यौ च तुल्यानशनयोरपि ॥ 320 ॥

प्रैतीति प्राय । 'इण् गतौ' ॥

दीनभावे [6]सप्ततन्तौ कोपे मन्युरुदाहृत ।

मन्यत इति मन्यु । 'मन ज्ञाने'[7] ॥ १५२–३ ॥

[1] °भावेषु K2, K4  [2] ज्ञान K6  [3] यत्र J2.  [4] परिकीर्तित K3
[5] कण्ठ K4, K3 omits  [6] सप्ततन्तुर्याग  [7] अवबोधने K3, K4

(विव.) विषयो—शब्दादिकेष्वपि । यस्य देवदत्तादेर्विद्याविशेषो[1] ज्ञातोऽत्यन्तपरिशीलित स तस्य देवदत्तादेर्विषय इत्यर्थः । यथा[2]—देवदत्तस्यानुवाको विषयः इति । अथवा येन ज्ञानसाधनेन सता योऽर्थो ज्ञायमानो भवति स तस्य विषयः । यथा[3]—वेदस्य यागादिर्विषय. । उपनिषदामद्वैत विषय· इत्यादि । शब्दस्पर्शरूपरसगन्धास्तु पञ्चापि केवलस्यैव विषयशब्दस्यार्थः । यथा—

विषयाभिलाषः, विषयनिवृत्तिरित्यादि। 'देशविषयौ तूपवर्तनम्' इति प्रागुक्तम् (१, पृ. १८९)। विश्वप्रकाशेऽपि (पृ. १२०, श्लो. ६३)—

'विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च।
गोचरे च [4]प्रबन्धादेर्यस्य ज्ञातस्तु तत्र च ॥'

इति ॥ निर्यासेऽपि कषायोऽस्त्री। निर्यासः क्वाथः। यथा—धात्रीकषायः। त्रिफलाकषायः इति। केशवस्वामी (नाना. सं. २. पृ. ७६)—

[5]कषायस्तुवरे न स्त्री निर्यासे रञ्जकाश्मनि।
सुरभावपटौ रागे भावनायां च विप्लवे ॥'

इति। तुवरो रसविशेषः। यथा—कषायरसो हरीतकीति। रञ्जकाश्मनि यथा—कषायवासा इति। सुरभौ यथा—'वकुलामोदकषायः प्रसरति मलयानिलः' इति। अपटौ यथा—कषायमानसः इति। रागे यथा—परिपक्वकषाय इति। भावनायां यथा—'अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना' इति कुमारसंभवे (४. ३४)। विप्लवे यथा—'सुदती ,जनिमज्जनार्पितैर्घुसृणैर्यत्र कषायिताशया' इति। रभसोऽपि—

'रसभेदेऽङ्गरागे च निर्यासे च विलेपने।
कषायोऽस्त्री त्रिलिङ्गस्तु सुरभौ रूषितेऽपि च ॥'

इति ॥ सभायां च प्रतिश्रयः। बहूनां मेलनार्थं निर्मिता शाला सभा। प्रतिश्रयते बहुभिः सेव्यत इति प्रतिश्रयः[6]। शेषे—'प्रतिश्रयस्त्वाश्रयणे प्रोक्तः साधारणास्पदे' इति। कालव्यतिरिक्तेऽपि स्थानमात्र इत्यर्थः ॥ प्रायो भूम्न्यन्तगमने। भूम्नि बाहुल्ये यथा—प्रायेण धर्मशीलः। अन्तगमनं मरणसंकल्पः। यथा—'प्रायोपवेशनमतिर्नृपतिर्बभूव' इति (रघु. ८. ९४)। वैजयन्त्यामपि—'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु' इति (पृ. २१७, श्लो. ३६)। अत्र वयःशब्देन यौवनं विवक्षितम्। तथा च राजाभिषेके—'प्रकाममेषा प्रचलैः प्रसन्नैः प्रायःप्रवेशं प्रथयत्यपाङ्गैः' इति। तुल्ये यथा—मूर्खप्रायः प्रायपाठः इति। 'प्रायः स्याद् भोजनत्यागः' इति हलायुधः (अ. मा. ४. ७५)। 'इण् गतौ' इत्यस्योपसर्गवशाद् अनेकार्थत्वम् ॥

मन्युर्दैन्ये क्रतौ क्रुधि । दीनस्य भाव कर्म वा दैन्यम् । क्रतुरश्वमेधादि । क्रुत् क्रोध. । मन्यत इति मन्यु· । 'मन ज्ञाने'[7] । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरमालाया पुस्काण्डेऽभिहितम् ॥ १५२–३ ॥

[1] शास्त्रादि Gm3, Tv　[2] Tj1, Tj2 add तथा च 'विषयो देशे' इति सूत्रे काशिका (१, पृ ३१२) क्वचिदत्यन्तशीलिते ज्ञेये देवदत्तस्य विषयोऽनुवाक इति　[3] B6 adds मीमासाशास्त्रस्य वेदार्थो विषय , मनस सुख विषय Gm1, Tv　[4] प्रबन्धाद्ये इति मु ग्र　[5] मुद्रितग्रन्थे तु—कपायस्तुवराभिख्यरसे क्वाथरसे इत्यादि, कषति कण्ठम् । 'कष हिंसायाम्'। बाहुलकादाय । 'कष-आय-अर्धर्चादि' इति वाचस्पत्यम (पृ १८३८)　[6] 'एरच्', ध (३ ३ ११८) वा इति भा दी (पृ ४८८)　[7] 'यजिमनि ' (उ ३ २०) इति युच्। 'मृगय्वादि' (उ १ ३६) इति भा दी (पृ ४८८)

(पा) विषयो—शब्दादिकेष्वपि । [1]प्रथमोदाहरणम्—देवदत्तस्य विषयो व्याकरणम् । [1]द्वितीयोदाहरणम्—नेत्रस्य विषयो रूपम्[2] ॥ निर्यासेऽपि कपायोऽस्त्री । [3]'निर्यासे [4]च कपायोऽथ सुरभौ लोहितेऽन्यवत्' इति विश्व (पृ १२०, श्लो ७३) । निर्यास [5]औषधिरस । सुरभि सुगन्धि, लोहितो वर्ण ॥ सभाया च प्रतिश्रय । सत्रशालायामपि स्यात्[6]। 'सत्रशाला प्रतिश्रय' इति हलायुध (अ मा २ १४२) ॥ प्रायो भून्यन्तगमने । अन्तगमन मरणम् । 'प्रायो वयसि [7]बाहुल्ये तुल्यानशनमृत्युपु' इति वैजयन्ती (पृ २१७, श्लो ३६)॥ मन्युर्दैन्ये क्रतौ क्रुधि ॥ १५२–३ ॥

[1] B3, C1 omit　[2] B3 adds श्रोत्रस्य शब्द　[3] C1 adds कपायो रसभेदे स्यादङ्गरागे विलेपने　[4] अपि इति मु ग्र　[5] औषध° A1　[6] B3 omits　[7] बाहुले A1

रहस्योपस्थयोर्गुह्यं सत्यं शपथतथ्ययोः ।
वीर्यं बले प्रभावे च द्रव्य भव्ये गुणाश्रये ॥ १५४ ॥

(वि) रहस्योपस्थयोर्गुह्य गुह्य कमठदम्भयो ॥ 321 ॥

गुह्यते सव्रियत[1] इति गुह्यम् । 'गुहू सवरणे ॥

सत्य स्याच्छपथे [2]तथ्ये लोके साधौ तु वाच्यवत् ।

[3]सति साधु सत्यम् ॥

वीर्यं बले प्रभावे च शुक्ले तेजसि कर्मणि ॥ 322 ॥

वीरस्य भावः [4]कर्म वा वीर्यम् ॥

[5]भव्ये गुणाश्रये द्युम्ने जतुद्रुमविकारयोः ।
भेषजे पित्तले द्रव्य [6]विनये वसुधादिके ॥ 323 ॥

द्रवणीयत्वाद् अभिगम्यत्वाद् द्रव्यम् । 'द्रु गतौ' ॥ १५४ ॥

[1] K2, K4 omit. [2] पथ्ये J2. [3] K3, K6 add सज्जने. [4] K2 omits
[5] द्रव्ये J2 [6] विलेपे K3; नियमे च सुधादिके J2

(विव.) रहस्योपस्थयोर्गुह्यम् । रहस्यं गोपनीयम् । यथा—गुह्यभाषणम् इति । उपस्थो योन्यादिः । यथा—गुह्यशुद्धिरिति । गुह्यते संव्रियत इति गुह्यम् । 'गुहू संवरणे' । 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' (वा. ३. १. १०९) इति क्यप् प्रत्ययः । शेषे—'गुह्यो ना कमठे दम्भे' इति । कमठः कूर्मः ॥ सत्यं शपथतथ्ययोः । शास्त्रैकसमधिगम्यो विश्वासहेतुः शपथः, देवतास्पर्शनादिक्रियारूपः । यथा—सत्येन शुध्यत इति । तथ्ये यथा—सत्यवादी इति । सति सत्पुरुषे साधु सत्यम्[1] । शेषे—'सत्यस्तु सप्तमे लोके सत्सु साधुनि वाच्यवत्' इति ॥ वीर्यं बले प्रभावे च । बलं शरीरशक्तिः । यथा—[2]वीर्यवान् पुरुषः । प्रभावो वस्तुसामर्थ्यम् । यथा—'रसवीर्यविपाकाः' इति । वीरस्य भावः कर्म वा वीर्यम् । 'वीरवीर्यौ च' (६. २. १२०) इति निर्देशात् साधुः[3] । रेतसि प्रागुक्तम् (१, पृ. ३९९) ॥ द्रव्यं भव्ये गुणाश्रये । भव्यशब्देनाभिप्रेतानामर्थानां पात्रभूतो भाग्यसंपन्न[4] उच्यते । 'द्रव्यं च भव्ये' (५. ३. १०४) इति सूत्रेण द्रुशब्दादिवार्थे यत्प्रत्ययः । द्रुमसादृश्यं च फलप्रदत्वादित्यवधेयम् । यथा—'न शास्त्रमद्रव्येष्वर्थवत्' इति वामनसूत्रम् (काव्या. सू. १. २. ४) । यथा—'तत् तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः' इति भवभूतिः (उत्तर. २. १९) । गुणाश्रयत्वं च 'गुणात्यन्ताभावसमुदायानधिकरणभावत्वं च द्रव्यलक्षणम्' इति तार्किकाः । यथा—पृथिव्यादीनि [5]नव द्रव्याणीति । प्रयोजनापेक्षिभिः द्रवणीयत्वाद् द्रव्यम् । 'द्रु गतौ' । 'अचो यत्' (३. १. ९७) इति यत् यान्तादेशश्च । शेषे—'भव्ये द्रव्यं त्रिषु वलीयं द्युम्ने जतुनि भेषजे'

इति। [6]अत्र द्रव्यशब्दस्य भव्यरूपार्थे प्रागुक्तवाच्यलिङ्गत्व शेषकारेणोच्यते। अत एव 'द्रव्योऽय माणवकः, द्रव्योऽय राजपुत्र.' इति वृत्तावुदाहृतम् (काशिका २, पृ. ७३)। द्युम्नं धनमात्रम्। जतु लाक्षा। भेषजे यथा—द्रव्य वैशेषिकम् इति। आरकूटेऽपि द्रव्यशब्दः ॥ १५४ ॥

[1] 'तत्र साधु ' इति यत्प्रत्यय　　[2] कश्च वीर्यवान् [इति रामायणे] Gm3, Tv
[3] वीर्यतेऽनेन। 'वीर विक्रान्तौ'। 'अचो यत्'। वीरे साधुर्वा। 'तत्र साधु ' इति यत् इति भा दी (पृ ४८८)　　[4] भाग्यवान् Gm3, Tv　　[5] पृथिव्यप्तेजोवाय्वाकाशकाल दिगात्ममनांसि नवैव द्रव्याणि Gm3, Tv　　[6] अत्र प्रागुक्त एव भव्यरूपार्थे Gm3, Tv

(पा) रहस्य—प्रभावे च। बलशब्देन रेत शक्तयोरेव ग्रहणम्। 'वल रूपेऽस्यनि स्थौल्ये शक्तिरेतश्चमूपु च' इति वैजयन्ती (पृ २३४, श्लो ५४)॥ द्रव्य भव्ये गुणाश्रये। भव्योऽभिप्रेताना पात्रम्। गुणाश्रय पृथिव्यादिरिति सुभूतिटीका ॥ १५४ ॥

**धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाशुभम्।**
**कशेरुहेम्नोर्गाङ्गेयं विशल्या दन्तिकापि च ॥ १५५ ॥**

(वि) धिष्ण्य स्थाने गृहे शक्तौ नक्षत्रे ज्वलने पुमान्।

[1]धृष्णोत्यत्रेति धिष्ण्यम। 'ञिधृषा प्रागल्भ्ये' ॥

शुभाशुभक्रियाया च भाग्यशब्दो विवक्षित ॥ 324 ॥

भज्यते सेव्यत इति भाग्यम्[2]। 'भज सेवायाम्'॥

कशेरुहेममुक्तासु गाङ्गेय [3] स्कन्दभीष्मयो।

गङ्गाया भव गाङ्गेयम्॥

लाङ्गल्या च गुडूच्या च दन्तिकागतशल्ययो ॥ 325 ॥
[4]महौषधौ त्रिभण्ड्या च विशल्या परिकथ्यते।

विगत शल्य यस्या सा विशल्या[5] ॥ १५५ ॥

[1] धिष्यत इति J2 [2] भाग अत्रेति K4, भग एव J2 [3] गाङ्गेयम् J2, K4
[4] महौषधे K5 [5] विगतशल्यत्वात् K5, K6

(विव.) धिष्ण्यं स्थानं गृहे भेऽग्नौ । अत्र स्थानाद्यर्थविशेषेण लिङ्ग-वैलक्षण्यस्य विद्यमानत्वेऽपि धिष्ण्यश्च धिष्ण्यं चेति भिन्नलिङ्गयोर्द्वन्द्वैकशेषे सति नपुंसकस्यैव परिशेषाभिप्रायेण धिष्ण्यमिति नपुंसकनिर्देशः कृतः इति व्याख्येयम् । तच्च लिङ्गवैलक्षण्यं शेषकारेण व्यक्तीकृतम्[1] । यथा—'स्थानाग्न्योः पुंसि धिष्ण्यः स्याद् धिष्ण्यं शक्तौ' इति । अत्र स्थानशब्देन सौमिकवेद्यामाग्नीध्रीयहोत्रिय-मार्जालीयाख्यान्यायतनानि विवक्षितानि । यथा—'चात्वालाद्धिष्णियानुपवपति' (तै. सं. ६. ३. १. १) 'अष्टावष्टावन्येषु धिष्णियेषूपदधाति' (तै. सं. ५. ४. ११. ४) इति । अग्निशब्देनापि प्रागुक्तस्थानेष्वेव स्थापनीयोऽग्निर्विवक्षितः । यथा—'यदाग्नीध्राद् धिष्णियान् विहरति' (तै. सं. ६. ३. १. १) । ततश्च यथा सभाशब्दः स्थानविशेषे तत्रस्थजनसमाजे च वर्तते इति न मुख्यलाक्षणिकत्व-चिन्तावकाशः, तथा धिष्ण्यशब्दोऽपि उभयत्रापि वर्तत इति नानार्थत्वेनाभिधान-मित्यवधातव्यम् । गृहनक्षत्रयोः शक्तरूपार्थे च धिष्ण्यशब्दो नपुंसकलिङ्गः । धीयत इति धिष्ण्यम् । [2]उणादौ धिष्ण्यमिति निपातनात् साधुः ।। भाग्यं कर्म शुभाशुभम् । केवलसुखजनकं शुभम् । केवलदुःखजनकमशुभम् । सुखदुःखयोर्जनकं शुभाशुभम् । एतत् [3]त्रितयमपि कर्म भाग्यमित्युच्यते । भागः कर्मफलं दीयतेऽत्रेति भाग्यम् । 'भागाद्यच्च' (५. १. ४६) इति यत्प्रत्ययः । यथा—'मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः' (रत्ना. १. ६) इति शुभकर्मणि प्रयोगः ।। कशेरुहेम्नोर्गाङ्गेयम् । कशेरुः जलकन्दम् । गङ्गाया उत्पन्नत्वेन तदपत्यतुल्यत्वाद् गाङ्गेयम् । शेषे—'गाङ्गेयः पुंसि भीष्मे च गाङ्गेयं मुस्तके भवेत्' इति । विशल्या दन्तिकापि च । दन्तिका वृक्षविशेषः । शेषे—

'विशल्या गतशल्या स्याल्लाङ्गली त्रिपुटामृता ।
महौषधिविशेषोऽपि ।।'

इति[1] । विविधानि शल्यतुल्यानि कण्टकान्यस्या इति विशल्या । विगतं शल्यं दुःखमस्या इति वा विशल्या ।। १५५ ।।

[1] उक्तम् Gms, Tv [2] शानसिवर्णसि . . . धिष्ण्यमल्या (उ. ४ १०६).

[3] त्रिविधमपि Tj1, Tj2 [4] Gm3, Tv add तत्स्वरूपं स्वच्छन्दभैरवे महौषधिप्रकरणे दर्शितम्—'विशल्या नामतः ख्याता पुष्पैः श्वेतैः सकण्टका। एकपत्रा भवेत् सा तु लता कन्दवती भवेत्' इति

(पा) धिष्ण्य—भेऽग्नौ। भशब्देन [1]शुक्रतारकयोर्ग्रहणम्। 'भं स्यान्म-यूखे शुक्रे भं नक्षत्रे च प्रकीर्तितम्' इति विश्वः (पृ १०८, श्लो १६)। [2]धिष्ण्यं सर्वत्र नपुंसकम्। शुक्राग्न्योः केषांचित् पुंलिङ्गं। 'धिष्ण्यः शुक्रे च पावके' इति [3]पुस्काण्डेऽमरदत्तः ॥ भाग्य—गाङ्गेयम्। कशेरुः कन्दविशेषः। [4]'शुक्लकारं तु कूसरं वृष्यकन्दं कशेरु च' इति वैजयन्ती (पृ १५७, श्लो ४७)॥ विशल्या दन्तिकापि च। त्रिवृतायामपि स्यात्। 'तिगुड अदुत्तु' ॥ १५५ ॥

[1] A1 adds एव [2] A1 omits [3] B3 omits [4] शुक्राकारस्तु A1, C1

**वृषाकपायी श्रीगौर्योरभिख्या नामशोभयोः ।**
**आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ॥ १५६ ॥**
**उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः ।**

(वि) वृषाकपायी श्रीगौर्यो [1]शचीजीवावरीषु च ॥ 326 ॥

वृषाकपेरियं वृषाकपायी ॥

अभिख्या नामयशसो [2]शिखाकीर्त्योश्च[3] वर्तते ।

अभिख्यायत इत्यभिख्या। 'ख्या प्रकथने' ॥

शिक्षार्थयोश्चिकित्सायां निष्कृतौ संस्कृतौ तथा ॥ 327 ॥
धात्वर्थे करणे चेष्टाकर्मणोः संप्रधारणे ।
आरम्भोपाययोश्चैव क्रिया समभिकथ्यते ॥ 328 ॥

क्रियत इति क्रिया। [4]'डुकृञ् करणे' ॥ १५६ ॥

[1] °वरीजीवन्तिकासु च J2, K5, वरी सूर्यपत्नीत्ययं [2] शोभा° K2, K4, K5
[3] °कान्त्योश्च K5. [4] K3, K6 omit

(विव.) वृषाकपायी श्रीगौर्योः । [1]वृषाकपेः विष्णोर्हरस्य वा स्त्री इति विग्रहे 'पूतक्रतोरै च' (४. १. ३६) इत्यादि [2]सूत्रत्रयं पुंयोगप्रकरणे द्रष्टव्यमिति वृत्तिकारेणोक्तत्वाद् (काशिका १, पृ. २७०) 'वृषाकप्यग्निकुसितकुसीदानामुदात्तः (४. १. ३७) इति ङीप् प्रत्ययः ऐकारश्चान्तादेशः । अग्निभार्यायामिन्द्राण्यां च वृषाकपायीशब्दः ।। अभिख्या नामशोभयोः । अभिख्यायते कथ्यतेऽनयेति अभिख्या [3]नामसंज्ञेत्यर्थः । [4]'आतश्चोपसर्गे' (३. ३. १०६) इत्यङ् । यथा—चैत्राभिख्यो मैत्राभिख्य इति । शोभायां यथा—'काप्यभिख्या तयोरासीत्' इति रघुवंशे (१. ४६) । 'अभिख्या कीर्तियशसोरभिख्या नामशोभयोः' इति विश्वप्रकाशः (पृ. १२३, श्लो. १०४) ।। आरम्भो निष्कृतिः—नव क्रियाः । [5]अत्र [6]क्रियाशब्दस्यार्थनिरूपकत्वेनापात्रस्य उपायशब्दस्यापि यकारान्तनिमित्तविधेयत्वभ्रान्तिनिवारणार्थं[7] नवेत्युक्तम् । ततश्च आरम्भादयः क्रियाशब्दस्यैवार्था इत्युक्तं भवति । आरम्भ उपक्रमः । यथा—क्रियावान् कर्मसूद्यतः (२, पृ. २६) इति प्रागुक्तम् । निष्कृतिः प्रायश्चित्तम् । यथा—'महापातकिनां पुंसां भवेत् प्राणान्तिका क्रिया' इति । शिक्षा अभ्यासः । यथा—'धनुर्वेदे कृतक्रियाः' इति । [8]'शिक्षा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता' इति कालिदासश्च (मालविका. १. २६) । पूजने यथा—[9]'कृता पित्रतिथिक्रिया' इति । संप्रधार्यते निश्चीयते संदिग्धार्थोऽनेनेति संप्रधारणं लिखितसाक्ष्यादिकम् । यथा—'प्राङ्न्यायकारणोक्तौ तु प्रवृत्त्यर्थे च निष्क्रियाम्' इत्यादि । चिकीर्षितार्थे सिद्धिहेतुरुपायः । यथा—सप्त सामादिकाः क्रियाः इति । सप्तोपाया इत्यर्थः । उभयोः साधनत्वाविशेषेऽपि कारकरूपस्योपायस्य पूर्वस्माद् ज्ञापकरूपात् संप्रधारणाद् भेदः । कर्मशब्देनात्र वेदोदितमनुष्ठानं विवक्षितम् । यथा—'तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः' इति । (या. स्मृ. १. ९. १९९) । 'क्रियामुद्दिश्य याचकः' इति च । यद्यपि प्रयत्नवदात्मसंयोगसमवायिक्रिया चेष्टेति प्रसिद्धा, [10]तथाप्यत्र चेष्टाशब्देन [11]पूर्वप्रदेशविभागहेतुरुत्तरसंयोगहेतुश्चलनरूपो धर्मो विवक्षितः । यथा—हस्तक्रिया, परमाणुक्रिया इति । चिकित्सायां यथा—'पुनर्ज्वरे समुत्पन्ने क्रिया पूर्वज्वरानुगा' इति । 'कृञः श च' (३. ३. १००) इति करोतेर्धातोर्यथायथं भावे [12]कर्मणि च शप्रत्यये, 'रिङ्शयग्लिङक्षु' (७. ४. २८) इति रिङादेशे च क्रिया । शेषे—'संस्काराख्यातधात्वर्थरचनासु क्रिया भवेत्' इति । संस्कारे यथा—'स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति' इति (या. स्मृ. १. २. ३४) । आख्याते

यथा—क्रियापद, क्रियागोपकम् इति । धात्वर्थे यथा—क्रियावचना हि धातवः इति । रचनाया यथा—'शृणुत मनोभिरवहितैः क्रियामिमा कालिदासस्य' इति (विक्रम. १. २) ॥ १५६ ॥

[1] Tv adds 'हरो विष्णुर्वृषाकपि' इति प्रागुक्तम। ततश्च (२, पृ ४०१). [2] सूत्रद्वय Tv [3] °शब्देत्यर्थं Tv [4] $B_5$, $B_6$ add ख्या प्रकथने [5] $T_{J2}$ adds आरम्भादयश्चिकित्सान्ता नवाप्यर्था क्रियाशब्देनोच्यन्त इत्यर्थं [6] क्रियाशब्द $Gm_3$, Tv [7] °निरासार्थं $B_5$, $B_6$ [8] शिष्टा, श्लिष्टा इति मु ग्र [9] कृतपित्ततिथिक्रिय Tv [10] तथेह $T_{J2}$ [11] $T_{J2}$ adds आन्तरहेतुसयोगश्च [12] $T_{J2}$ adds करणे

(पा) वृपाकपायी—चिकित्सा च नव क्रिया ॥ १५६ ॥

**छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ॥ १५७ ॥**
**कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्या मध्येभबन्धने ।**
**कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः ॥ १५८ ॥**

(वि) पालनोत्कोचयो [1]कान्तौ काव्यनीतावनातपे ।
छाया पङ्क्तौ सूर्यपत्न्या सच्छोभाप्रतिविम्वयो ॥ 329 ॥

[2]छ्यत्यातपादिकमिति छाया । 'छो छेदने' ॥

हर्म्यादिकोष्ठके काञ्च्यामुद्योगेऽप्युत्तरीयके ।
करिणा मध्यवन्धे च कक्ष्या समभिधीयते ॥ 330 ॥

[3]कक्षाया गजमध्यभागादौ भवा कक्ष्या ॥

क्रियाया देवताया च कार्यविद्वेषयोरपि ।
तव्यादिप्रत्यये हिंस्ये[4] [5]ग्रन्थे भेद्ये धनादिना ॥ 331 ॥
छेद्ये च वेष्टनीये च कृत्या तु परिकीर्त्यते ।

कृत्यत इति कृत्या । [6]'कृती छेदने' 'कृती वेष्टने' । क्रियापक्षे 'डुकृञ् करणे' ॥ १५७–८ ॥

[1] कलान्तौ $J_2$, उत्कोच = A bribe [2] छ्यतीति $K_2$, $K_4$ [3] कक्षात् $K_3$, कक्षे $K_4$. [4] हिंस्रे $J_2$ [5] ग्रन्थभेदे $K_6$ [6] $K_3$, $K_6$ add 'कृती हिंसाग्रथनयो'

(विव) छाया—अनातप । सूर्यप्रिया सूर्यपत्नी। कान्ति दीप्ति । प्रतिबिम्बम् आदर्शादिस्वच्छद्रव्यगत[1] स्वमुखम्, दारुशिलादिनिर्मिता [2]प्रतिमा, चित्रलिखित च । अनातपो गृहवृक्षाद्यावरणकृत प्रकाशाभाव । छ्यति सतापादिकमिति छाया। 'छो छेदने'। यप्रत्यय [3] (उ ४ १११)। शेषे—'छाया स्यात् पालनोत्कोचसच्छोभाकाव्यरीतिषु' इति। पालने—'अवधान [4] कृतच्छाय कर ताम्य समाहरेत्' इति। तव छायाया वसाम इति च। उत्कोचे यथा—'वृत्ते तु कार्ये छायाया ग्रहण दुर्लभ भवेत्' इति। सच्छब्दो नक्षत्रवचन इति प्रागुक्तम्। सच्छोभा नक्षत्रकान्ति । यथा—[5] 'छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्' इति (रघु १३ २)। काव्यरीतौ यथा—[6]छायामपहरति कवि इति ॥ कक्ष्या—बन्धने। हर्म्यादिर्महागृहस्य प्रकोष्ठेऽन्तर्गृहे स्वल्पगृहे यथा—बहुकक्ष्य प्रासाद इति। स्त्रीनितम्बगता काञ्ची मेखला। पल्ययनबन्धनार्थं गजस्य कुक्षिमध्यनिहिता रज्जु मध्येभबन्धनम्। यथा—'सिन्दूरं कृतरुचय सहेमकक्ष्या' इति भारवि (किरा ७ ८)। कक्षशब्देन बाहुमूलवाचिना सामीप्याद् मध्यभाग तिरोहितसादृश्याद् गृहमध्यस्थान च लक्ष्यते। तत्र भवा कक्ष्या। 'शरीरावयवाद्यत्' (५ १ ६) इति यत्प्रत्यय । शेषे—'कक्ष्या बृहतिकाया स्यात्' इति। यथा—'नीलया कक्ष्यया छन्ना तमस्यन्धेऽभिसारिका' इति ॥ कृत्या—धनादिभि । 'कृञ श च' (३ ३ १००) इति चकाराद् भावे यद्यपि कृत्याशब्देन क्रियोच्यते। यथा—[7]का कृत्यामकार्षी इति। कृतौ परमारणे साधु कृत्या। 'तत्र साधु' (४ ४ ९८) इति यत्। परमारिका देवता यथा—'क्षिप्र कृत्ये निवर्तस्व कर्तुरेव गृहान् प्रति' इति। सामदानादिभिरुपायै परस्मिन् वैरमुत्पाद्य स्ववशत्वेन क्रियत इति कृत्यो भेद्य । 'विभाषा कृवृषो' (३ १ १२०) इति करोते कर्मणि क्यप् प्रत्यय । ह्रस्वस्य तुगागम [8] (६ १ ७१)। अत्र कौटिल्य [9]—'क्रुद्धलुब्धभीतावमानिता परेषा कृत्या' इति (अ शा १ १३)। यथा—[10] 'कृत्याकृत्यविदस्तीर्थेष्वन्त प्रणिधय पदम्' इति माघकाव्ये (शिशु २ १११)। कृत्य परसेनापति, कृत्या परसामन्तसहति, कृत्य परबलम्, इत्यादिरूपेण वाच्यलिङ्ग इत्यर्थ । शेषे—

'कृत्य कार्ये नपुसकम्।
हिंस्ये प्रम्ये [11]छेदनीये त्रिषु तव्यादिके पुमान ॥'

**इति। कार्ये यथा—कृतकृत्य इति। 'कृती हिंसाग्रथनयो', 'कृती छेदने'। आभ्या धातुभ्या 'ऋदुपधाच्चावलृपिचृते' (३. १. ११०) इति क्यप्प्रत्यय। प्राङ्ण्वुल इत्यनुक्रान्ता तव्यादिप्रत्यया· कृत्यसज्ञा.[12] ।। १५७–८ ।।**

[1] स्वच्छद्रव्यम् Tj2 [2] Tj2 adds कृत्रिम° [3] 'माछाशसिभ्यो य'
[4] आददान B6 [5] छायापदेशेन B6, Tj2 [6] छायामपहरतु B5, B6 [7] काल° Tj2
[8] 'ह्रस्वस्य पिति कृति तुक्' [9] कौटल्य K6, Tj1 [10] कृत्वा कृत्य° इति मु प्र
[11] भेदनीये Tv [12] 'कृत्या प्राङ ण्वुल' (३ १ ९५)

(पा) छाया—अनातप। कान्तिशब्देन प्रभाशोभयोरेव ग्रहणम्। प्रभायाम्—'रत्नच्छायाव्यतिकर इव' (मेघ १ १५)। शोभायाम्—'तनुच्छायाभिस्ते [1]तरुणतरणिश्रीसरणिभि' इति [2]सौन्दर्यलहरी (श्लो १८)। ईषदर्थेऽपि स्यात्—'छायामात्रप्रकृतिरभवद्रोमराजीविकार'।। कक्ष्या—बन्धने।

'कक्षा[3] ग्राहृणिकाकाञ्चीप्रकोष्ठगजरज्जुषु।
सार्द्धे पदे परीधानपश्चादञ्चलपल्लवे।।
[4]रथभागेऽपि कक्षा स्यात्।।'

इति मूर्धन्यान्तेषु विश्व (पृ १८३, श्लो १०-११)।। कृत्या—धनादिभि। धनादिभेद्य शत्रुगुह्यम्।। १५७–८ ।।

[1] तरणिकिरण° A1 [2] आनन्दलहरी B3, C1 [3] कक्ष्य क्षुद्राहिका° B3.
[4] B3, C1 *omit the pada*

**जन्यः स्याज्जनवादेऽपि जघन्योऽन्तेऽधमेऽपि च।
गर्ह्याधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ।। १५९ ।।**

(वि) सग्रामे [1]जनितव्ये च साधौ जनितृपूज्ययो[2] ।। 332 ।।
अस्त्री [3]वधूवरज्ञातिप्रियतुल्यहितेषु च।
उत्पादनीये [4]जनके जन्य स्याज्जनजल्पने[5] ।। 333 ।।

जननीयो जन्य। [6]जायत इति वा। 'जनी प्रादुर्भावे'।।

अन्त्येऽधर्मे मेहने च जघन्य जघनोद्भवे।

जघने भव जघन्यम् ॥

गर्ह्योऽधीने[7] च वाच्ये च वक्तव्यः शब्दवाचके[8] ॥ 334 ॥

वक्तु योग्यो वक्तव्य ॥

कल्यो निरामये सज्जे प्रभाते कल्यमुच्यते ।

कल्यत इति कल्यम् । 'कल[9] सख्याने' ॥ १५६ ॥

[1] जनकृत्ये $K_5$ [2] °भट्टयो $J_2$, $K_5$ [3] नववधू° $J_2$, $K_4$, $K_5$ [4] जनने $J_2$, $K_5$ [5] जनवादने $J_2$, °वादके $K_6$ [6] $K_2$, $K_3$ omit; 'जनिवध्योश्च' इति न वृद्धि [7] दीने $K_5$, $K_6$ [8] °वाच्यके $K_5$ [9] $J_2$ adds गतौ

(विव.) जन्यं स्याज्जनवादेऽपि । जनस्य जल्पो जन्यम् । 'मतजनहलात् करणजल्पकर्षेषु' (४. ४. ९७) इति यत्[1] । अपिशब्दार्थः शेषकारेण दर्शितः । यथा—

'जनितव्ये रणे क्लीबेऽपवादजनजल्पयोः ।
अस्त्री वरवधूज्ञातिप्रियतुल्यहितेषु च ॥
जन्यस्त्रिषु जने साधौ जनिश्नुत्पादनीययोः ॥'

इति । जनितव्यमवश्यं जन्यार्हत्वम् । 'जनी प्रादुर्भावे' । 'ऋहलोर्ण्यत्'[2] (३. १. १२४) । रणो युद्धम् । ततो मात्सर्यादिभिर्जायत इति जन्यम् । अत्र 'भव्यगेय ...' इत्यादिना[3] (३. ४. ६८) कर्तरि यत् । अत्रोभयत्र जन्यशब्दः केवलनपुंसकलिङ्गः । अपवादो[4] निन्दा । निन्दायां जनवादे च अस्त्री पुंनपुंसकलिङ्ग इत्यर्थः । अत्र च 'जन्यः स्याज्जनवादेऽपि' इत्यमरसिंहीयः पुंलिङ्गपाठोऽपि साधुरेव । अत एव सुभूतिचन्द्रोऽप्याह—'जनवादे तु पुंस्येनं सिंहः क्लीबेऽजयोऽब्रवीत्' इति । [5]वरस्य वध्वाश्च ये ज्ञातयः प्रिया हितास्तुल्याश्च ते जन्याः । जनीं वधूं वरसमीपं प्रापयन्तीति जन्याः[6] । 'संज्ञायां जन्याः' (४. ४. ८२) इति तद्वतीत्यर्थे यत्प्रत्ययो निपातितः । जने लोके, जन्तौ जन्मनि वा साधुः जन्यः । 'तत्र साधुः' (४. ४. ९८) इति यत् । जायत इति कर्तर्यर्थे 'भव्यगेय ...' इत्यादिना (३. ४. ६८) यत्प्रत्यये जन्यो जनिता जनेः कर्ता [7]यजमान इत्यर्थः । जनेर्ण्यन्तात् कर्मणि यत्प्रत्यये जन्य [8]उत्पादनीयः । एवं वरवधूसंबन्धिज्ञात्यादिषु

उत्पाद्यान्तेषु अर्थेषु जन्यशब्दो वाच्यवशेन त्रिलिङ्गः। अनेन पूर्ववाक्यस्थस्य त्रिष्विति पदस्य यान्तवर्गसमाप्तिपर्यन्तमनुवर्तमानस्य, अस्मिन्नपि वाक्ये जन्यशब्दविषये प्रतिनियतार्थत्वं शेषकारेणोक्तमिति वेदितव्यम्। 'जन्यं हट्टे परीवादे' इति प्रतापश्च[9] ॥ जघन्योऽन्त्येऽधमेऽपि च। क्रमनिविष्टानामर्थानामन्ते भवोऽन्त्यः। अधमो गुणहीनः। पश्चात्प्रतीयमानसादृश्यात् जघनशब्देन चरमः कालो देशो वा विवक्षितः। तत्र भवो जघन्यः। शेषे—'जघन्यं शेफसि क्लीबे' इति। शेफसि शिश्ने। चशब्दात् जघनभवोऽपि[10] जघन्यम्। 'शरीरावयवाच्च' (४. ३. ५५) इति यत्॥ गर्ह्याधीनौ च वक्तव्यौ। गर्ह्यः कुत्सितः। अधीनो वचनग्राही। वचनार्हो वक्तव्यः। 'अर्हे कृत्यतृचश्च' (३. ३. १६९) इति तव्यप्रत्ययः। चशब्दाद् वचनीयमात्रेऽपि वक्तव्यशब्दः। वक्तव्यो देवदत्तः। वक्तव्या नटिका। वक्तव्यं काव्यमिति[11]। वचनीयवाच्यशब्दावपि वक्तव्यपदसमानार्थतया प्रसिद्धत्वादिह नोक्तौ। अतस्तावप्यत्र विज्ञेयौ। शेषे—'वक्तव्य शब्दवार्त्तिके' इति। [12]व्याकरणसबन्धिनि [13]वररुचिवार्त्तिके वक्तव्यशब्दो रूपभेदाद् नपुंसकलिङ्गः॥ कल्यौ सज्जनिरामयौ। सज्जः सनद्धः। शेषे—'कलासु साधौ दक्षे च कल्यः' इति। प्रभातरूपार्थे तु कल्यशब्दः केवलनपुंसकलिङ्गः प्रागुक्तः[14] (१, पृ. ७४)॥ १५६॥

[1] Tj2 adds प्रत्यय   [2] इति ण्यत्प्रत्यय Tj2   [3] 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा'। भव्यादय शब्दा कर्तरि वा निपात्यन्ते (काशिका १, पृ २५२)   [4] गर्हा कौलीनमित्यर्थं Tv   [5] वधूवरयो Tj2   [6] प्रागुक्तमेतत् (१, पृ ४८३)   [7] जायमान B6   [8] उत्पादित Tv   [9] प्रतापविश्वप्रकाशौ Tj2, Tv   [10] जघनशब्दोऽपि B5, B6   [11] इत्यादि Tj2   [12] Tj2, Tv add इह शेषकारीयपूर्ववाक्यात् क्लीबपदानुवृत्ते   [13] वाररुच° B6, Tj2   [14] 'प्रत्यूषोऽहर्मुख कल्यम्' इति प्रागुक्तत्वाद् वाच्यलिङ्गप्रस्तावे तदसङ्गतेश्च अत्राकथनमिति वि(Tj2 omits) ज्ञेयम् Tj1, Tj2, Tv

(पा) [1]जन्य स्याज्जननीयेऽपि। जननीये जनितरि। 'जन्य [2]कौलीनयुद्धयो' इति जयकोश। त्रिष्वित्यधिकारात्। जनवादेऽपि इति [3]पाठ॥ जघन्यो—गर्ह्याधीनौ[4] च वक्तव्यौ। वचनीयवाच्यावपि स्याताम्॥ कल्यौ सज्जनिरामयौ। 'सज्ज सभृत' इति सुभूतिटीका॥ १५६॥

[1] जन्य A1   [2] कालीन° A1   [3] अपपाठ B3   [4] °दीनौ A1

**आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि ।**
**रूप्यं प्रशस्ते रूपेऽपि वदान्यो वल्गुवागपि ॥ १६० ॥**
**न्याय्येऽपि मध्यं सौम्यं तु सुन्दरे सोमदैवते ।**

**इति यान्तवर्गः**

(वि) अर्थ्योऽर्थादनपेतेऽपि [1]बुधे न्याय्यात्मयुक्तयोः ॥ 335 ॥
[2]शिलाजतुन्यर्थनीये त्रिषु लिङ्गेषु वर्तते ।

अर्थे साधुरर्थ्यः ॥

पुण्यं चारुणि धर्मे च सुकृते पुण्यवाचि च ॥ 336 ॥

पुणतीति पुण्यम् । 'पुण [3]कर्मणि शुभे' ॥

[4]आहतस्वर्णरजते रूप्य स्याद् रजतेऽपि च ।
[5]लोके प्रशस्तरूपेऽपि वाच्यवत् समुदीरितम् ॥ 337 ॥

प्रशस्तं रूपमस्यास्तीति रूप्यम् ॥

वदन्यश्च वदान्यश्च वल्गुभाषिणि दातरि ।

[6]वदतीति वदान्यः । वदन्यश्च । 'वद व्यक्तायां वाचि' ॥

अवकाशे समे न्याय्ये हीने मध्योऽवलग्नके ॥ 338 ॥

[7]मध्यत्वाद् मध्य. ॥

सुन्दरे सोमदैवेऽपि बुधे सौम्य उदाहृतः ।

[8]सोमो देवता अस्येति सौम्यः ॥ १६० ॥

इति यान्तवर्ग.[9]

[1] गुरौ $K_6$; सुरे $J_2$, $K_4$ [2] शिलाञ्जने $J_2$ [3] शुभकर्मणि $K_2$, $K_3$, $K_4$
[4] अहत° $K_3$, $K_4$ [5] रूप्य $K_5$ [6] $K_6$ adds मदीय धनमर्थिभ्यो दीयताम्.
[7] मध्ये भव $K_3$, $K_6$ [8] सोमस्याय $J_2$, $K_4$; सोमस्यापत्यं $K_6$ [9] $K_2$, $K_3$ add यान्तशब्दसङ्ख्या ४६

(विव.) आत्मवाननपेतोऽर्थादर्थ्यौ। अर्थार्जने साधुरर्थ्यः[1]। आत्मवान् बुद्धिमानित्यर्थः। अर्थादनपेत इति विग्रहे 'धर्मपथ्यर्थन्यायादनपेते' (४. ४. ९२) इति यत्प्रत्ययेऽर्थ्यः, सर्वदा [2]सुधनवानिति। शेषे—'अर्थ्यो बुधे पुमान् क्लीबः शिलाजत्वर्थ्ये त्रिषु'। अर्थमर्हतीत्यर्थ्यो विद्वान्। 'विद्वानशेषमादद्यात् स सर्वस्य[3] प्रभुर्यतः' इति स्मृतेः (या. स्मृ. २. २. ३४)। अर्थ्ये प्रार्थनीये वस्तुनि वाच्यलिङ्गः॥ पुण्यं तु चार्वपि। चारु मनोहरम्। पुण्यं वनम्। पुण्या नदी इत्यादि। पुणतीति पुण्यम्। 'पुण कर्मणि शुभे'[4]। अपिशब्दात् पुण्यवति त्रिलिङ्गः प्रागुक्तः (२, पृ. ५)। [5]सुकृते नपुंसकलिङ्गः॥ रूप्यं प्रशस्तरूपेऽपि। प्रशस्तं रूपमस्यास्तीति रूप्यम्। आहतं रूपमस्यास्तीति रूप्यो मुद्राङ्कितसुवर्णादिः। 'रूपादाहतप्रशंसयोर्यप्' (५. २. १२०) इति यप्। अस्मिन्नर्थे वाच्यलिङ्गः। रजतमात्रे तु नपुंसकं प्रागुक्तम् (१, पृ. ६१०)॥ वदान्यो वल्गुवागपि। वल्गुवागिति वाग्मीत्यर्थः। अपिशब्दाद् बहुप्रदोऽपि[6]॥ न्याय्येऽपि मध्यं। न्यायादनपेतो न्याय्यः। तत्र मध्यशब्दः। यथा मध्यस्थ इति। अपिशब्दाद् अवलग्ने पुंनपुंसकलिङ्गः प्रागुक्त. (१, पृ. ४१२)। मन्यत इति मध्यम्। 'मनु अवबोधने'। 'अघ्न्यादयश्च' (उ. ४. ११३) इति औणादिकनिपातनात् साधुः। यथा—शरीरस्य मध्यम्। यथा पूर्वोत्तरभागौ[7] विहाय वर्तते,[8] तथाय मध्यार्येऽपि रागद्वेषौ परित्यज्य वर्तत इति सादृश्याद् मध्य उच्यते॥ सौम्यं तु सुन्दरे सोमदैवते। सोमो देवता अस्येति सौम्यम्। 'सोमाट्ट्यण्' (४. २. ३०)। सौम्यं हवि.[9]। सुन्दरे तूपचाराद् वृत्तिः। रौहिणेये पुंलिङ्गः प्रागुक्तः (१, पृ. ६७)॥ १६०॥

इति यान्तवर्गः[10]

[1] साधुरित्यर्थं Tv [2] Gm3, Tv omit सु [3] सर्वत्र Tj2 [4] 'इगुपध ' (३ २ १३५) इति क। पुणे साधु। 'तत्र साधु' इति यत् इति भा दी (पृ ४८९). [5] Tj2, Tv add शेषे—'पुण्य सुकर्मणि' इति, सुकृते रूपभेदात् [6] स्यु वदान्य .. बहुप्रदे (२, पृ ९) [7] °विभागौ Tv [8] तिष्ठति Gm3, Tv [9] Tj2, Tv add सौम्य चरु [10] B6, Tj2 add शब्दसख्या एकोनपञ्चाशत्

(पा) आत्मवाननपेतोऽर्थादर्थ्यौ। [1]आत्मा बुद्धि, [2]तद्वानात्मवानिति सुभूतिटीका॥ पुण्य तु चार्वपि। सुकृते नपुसकम्॥ रूप्य प्रशस्तरूपेऽपि। रजते नपुसकम्॥ वदान्यो वल्गुवागपि। दानशौण्डोऽपि स्यात्॥ न्याय्येऽपि मध्य.[3]।

अन्तरर्थे नपुसकम् ।। सौम्यं तु सुन्दरे सोमदैवते । [4]सुन्दरार्थे—सौम्या स्त्री । सोमदेवताके—सौमी ऋक् । 'सोमाट्ट्यण्' (४. २. ३०) इति टित्वात् ङीप् । 'हलस्तद्धितस्य' (६. ४. १५०) इति टिलोपः । अनुक्तम्—

सर्वज्ञभिषजौ वैद्यो कुल्या कुलवधूः सरित् ।
फलकल्याणयोर्भव्यं योग्यं सांप्रतिके त्रिपु ।।
द्युः पुमानह्नि गगने चोद्यं प्रश्ने च विस्मये ।
क्षेत्रियं क्षेत्रजतृणे परदाररते त्रिपु ।।

उभयत्र त्रिलिङ्गः । क्षेत्रियो दर्भः । क्षेत्रिया प्रजा ।।

[5]कौकृत्यमनुतापे स्यादयुक्तकरणेऽपि च ।
दुग्धाग्रे दुग्धतालीयं दुग्धफेनेऽपि तन्मतम् ।।
अन्तशय्या तु मरणे भवेच्च पितृकानने ।
भय प्रतिभयेऽपि स्यादहृताया च विस्मयः ।।
जनयित्र्यामपि ज्या स्यात् पुरंध्र्यामपि च त्रयी ।
उमायामपि माया स्याद् व्यवायोऽप्यवधावपि ।।
पिचिण्डके राजकन्या दक्षकन्या तु दिश्यपि ।
अतिथावपि चातिथ्यं नेपथ्य रङ्गभूम्यपि ।।
मृत्युः स्याद्देवताया च जात्य स्यात् सुन्दरेऽपि च ।
मलयः पर्वतांशे च माल्य तु कुसुमेऽपि च ।। १६० ।।

इति यान्तवर्ग.

[1] आत्मबुद्धिः A1. [2] B3 omits. [3] मध्यम् B3, C1. [4] सौन्दर्ये B3.
[5] भय शय्या A1.

अथ रान्तवर्गः—

नियहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ ।। १६१ ।।
गुरु गीर्पतिपित्राद्यौ द्वापरौ युगसंशयौ ।
प्रकारौ भेदसादृश्य आकारावङ्गिताकृती ।। १६२ ।।

(वि ) सूर्यादिदिवसे[1] वृन्दे [2]कुब्जवृक्षे हरे क्रमे ॥ 339 ॥
मद्यपात्रेऽप्यवसरे वारो वरणसेवयो[3] ।

व्रियत इति वार । 'वृञ् वरणे' ॥

शयनीये सप्ततन्तौ सस्तर परिकथ्यते ॥ 340 ॥

सस्तीर्यत इति सस्तर । 'स्तृञ् आच्छादने' ॥

बृहस्पतावुपाध्याये पितृराज्ञो पितामहे ।
वर्णज्येष्ठे पितृव्ये च [4]दातृश्वशुरयोरपि ॥ 341 ॥
मातामहे मातुले च ज्येष्ठे सोदर्य एव च ।
एतत्पत्नीषु महति दीर्घसयुक्तशीर्षके ॥ 342 ॥
[5]दुर्वहायामलघुनि गुरु स्याद् वाच्यलिङ्गक ।

गृणाति हितमुच्चारयतीति गुरु । 'गृ शब्दे' ॥

युगसदेहयोश्चैव द्वापर परिकथ्यते ॥ 343 ॥

द्वौ परौ पक्षौ यस्यासौ द्वापर ॥

सादृश्यभेदयोश्चैव प्रकार परिकथ्यते ।

प्रक्रियत इति प्रकार[6] ।

आकृताविङ्गिते चापि ह्याकार परिगीयते[7] ॥ 344 ॥

आक्रियतेऽनेनेत्याकार[8] ॥ १६१–२ ॥

[1] °वासरे K6 [2] कूप° K5. [3] °सेवयो J2, K6 [4] व्रातृ° K3, K5.
[5] दुर्वाहायाम् K6 [6] K4 adds 'डुकृञ् करणे' [7] परिकथ्यते K5, K6
[8] आकृतिराकार K2, K6

(विव.) नियहावसरौ वारौ । नियहः समूहः । अवसरः प्रकृतकार्योचित. कालः । यथा—'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्यसुः' इति (१, पृ. ६४) । शेषे—

'वारः सूर्यादिदिवसे क्रमे कूपकवृक्षके ।
संभोगे वरणे शीघ्रे हरे मद्यस्य भाजने ॥'

इति । क्रमः पर्यायः । यथा—वारस्त्री इति । कूपको गुणवृक्षकः । संभोगः [1]संभुक्तिः सेवा । प्रतापोऽपि—

'वारः सूर्यादिदिवसेऽवसरे मूर्धजे हरे ।
वृन्दे कूपकवृक्षे च वृते स्याद् मद्यभाजने ॥'

इति । रलयोरभेदाद् वारशब्दस्य मूर्धजः केशोऽप्यर्थः । 'वृञ् वरणे', 'वृङ संभक्तौ' । अर्थानुरोधात् कर्मणि भावेऽधिकरणे च घञ् ॥ संस्तरौ प्रस्तराध्वरौ । सम्यक् स्तीर्यते वस्त्रादिकमत्रेति संस्तरः प्रस्तरः शय्येत्यर्थः । सम्यक् स्तीर्यन्ते दर्भा अत्रेति संस्तरो यज्ञः । 'स्तृञ् आच्छादने' इत्यस्माद् धातोः 'ऋदोरप्' (३. ३. ५७) इत्यधिकरणे अप्प्रत्ययः ॥ गुरू गीष्पतिपित्राद्यौ । आद्यशब्दार्थः कूर्मपुराणे प्रपञ्चितः (२. १२. २६-७)—

'उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।
मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुमांसो गुरवः स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥
श्वश्रूः पितामही ज्येष्ठा भगिनी गुरवः स्त्रियः ॥'

इति । महाभारतेऽपि[2]—

'निषेकादीनि कर्माणि यः करोति यथाविधि ।
संभावयति चान्नेन स पिता गुरुरुच्यते ॥'

इति । शिवधर्मे च—

'संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः[3] स्मृतः ॥
अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह[4] गुरुं विद्याद् प्रतोपक्रियया तया[5] ॥'

इति। शेषे—'दुर्जरालघुनोर्दीर्घसंयुक्तपरयोर्गुरू' इति। दुर्जरे यथा—'माहिषं दधिपिष्टं हि वृहणं मधुरं गुरु' इति। लघुत्वं नाम पतनप्रतिबन्धकः कश्चिद् भावः। तदभाववति पाषाणादौ यथा—द्वयोर्गुरुत्वं रसवत्त्वं च इति। द्विमात्रो दीर्घः। संयुक्तमक्षरं परं यस्येति संयुक्तपरम्। उभयत्र यथा—'संयोगे गुरु। दीर्घं च' इति पाणिनिः (१. ४. ११, १२)॥ द्वापरौ युगसंशयौ। द्वाभ्यां कृतत्रेतायुगाभ्यां परो द्वापरो युगः। संशयस्य कोटिद्वयावलम्बित्वेन द्वौ परौ निरूप्यावत्रेति संशयो द्वापरः। पृषोदरादिः॥ प्रकारौ भेदसादृश्ये। भेदो विशेषः। यथा—षट्प्रकारा भावाः इति। सादृश्ये यथा—पितृप्रकारः पुत्र इति॥ आकाराविङ्गिताकृती। इङ्गितम् अभिप्रायसूचकचेष्टाविशेषः। आकृतिरवयवसस्थानम्। आक्रियते मनोगतोऽर्थोऽनेनेति आकारः[6]॥ १६१–२॥

[1] समक्ति $B_5$, $B_6$ [2] मनुस्मृतौ च दृश्यते ऽय श्लोक (२ १४२)
[3] गृणाति। 'गृ शब्दे'। 'कृग्रोरुच्च' (उ १ २४) इत्यु इति भा दी (पृ ४६०)
[4] महीप च $B_6$ [5] तथा Tv [6] 'डुकृञ् करणे', 'भावे' (३ ३ १८) इति घञ्

(पा) निवहावसरौ—प्रस्तराध्वरौ। प्रस्तर[1] पल्लवादिशय्या। 'प्रस्तर सस्तरः शय्या रचिता पल्लवादिभि' इति वैजयन्ती (पृ. १७२, श्लो १६५)॥ गुरू गीष्पतिपित्राद्यौ। मात्रादौ स्त्रीलिङ्ग। 'मात्रादौ स्त्री बृहत्ख्यातदुर्भरालघुपु[2] त्रिपु' इति वैजयन्ती (पृ २३२, श्लो. २८)॥ द्वापरौ—भेदसादृश्ये। भेदे—नानाप्रकार। सादृश्ये—पितृप्रकार॥ आकाराविङ्गिताकृती। 'इङ्गित हृद्गतो भावो बहि स्य लिङ्गमाकृति' इति वैजयन्ती (पृ १६३, श्लो २२)[3]॥ १६१–२॥

[1] A1 adds नाम [2] दुर्जरा° A1 [3] मुद्रितग्रन्थे तु 'आकारस्त्विङ्ग इङ्गितम्' इति दृश्यते, 'इङ्गित हृद्गतो भावो बहिराकार आकृति'। सज्जन (Apte's Dict p 380)

**किशारू धान्यशूकेषू मरू धन्वधराधरौ।**
**अद्रयो द्रुमशैलार्काः स्त्रीस्तनाब्दौ पयोधरौ॥ १६३॥**

(वि.) किशारु [1]स्याद् [2]धान्यशूके कङ्कपत्रे[3] गरुत्मति।

कुत्सित शृणातीति किशारु। 'शॄ हिंसायाम्'॥

मरुर्धन्वाख्यदेशेऽपि [4]भूधरे चापि कथ्यते ॥ 345 ॥

म्रियन्तेऽत्रेति मरु । 'मृङ[5] प्राणत्यागे' ॥

महीधरे तीक्ष्णरश्मावद्रिर्भूमिरुहे भवेत् ।

अद्यते कालेनेत्यद्रि । 'अद भक्षणे' ॥

[6]नारिकेले कोशफले कशेर्वाख्यजलौषधौ ॥ 346 ॥
स्त्रीस्तने वारिवाहे च पयोधर उदाहृत. ।

पयो [7]धारयतीति पयोधर ॥ १६३ ॥

[1] सायके J2, K5 [2] सस्य° K6 [3] J2, K5 omit पत्ने [4] खादिरे K2, K8 [5] K3, K8 omit the Sūtra [6] नालिकेरे J2, K4 [7] धरति K5

(विव.) किशारू धान्यशूकेषू। सस्यशूके प्रागुक्तः (१, पृ. ५६५)। इषुवर्णिमात्रम्। किं कुत्सितं शृणातीति किशारुः। 'शृ हिंसायाम्'। 'किजरयोः श्रिणः' (उ. १. ४) इति उण्प्रत्ययः। शेषे—'किशारुः कङ्कपक्षिणि' इति। लोहपृष्ठाख्यः पक्षिविशेष इत्यर्थः॥ मरू धन्वधराधरौ। धन्वा निर्जलप्रदेशः। धराधरः पर्वतः[1]॥ अद्रयो द्रुमशैलार्काः। द्रुमो वृक्षमात्रम्। [2]अद्यते कालवशेन नश्यत इत्यद्रिः। 'अद[3] भक्षणे'। 'निद्रामुद्रां द्रावयत्यम्बुजानामद्रौ तन्द्री [4]शोणयत्यद्रिजातम्' इति रामाभ्युदये॥ स्त्रीस्तनाब्दौ पयोधरौ। स्त्रीस्तनो नारीकुचः। अब्दो मेघः। शेषे—'इक्षुभेदे नारिकेले कशेरौ च पयोधरः'[5] इति॥ १६३॥

[1] 'मृङ प्राणत्यागे'। 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उ' (उ. १ ७) इति उ [2] कालेन वातेन वा Tv; वातेनाद्यते, अत्ति वा Gm1, Gm3 [3] 'अदिशदिभूशुभिभ्य क्रिन्' (उ ४ ६६) [4] शोषयति B6 [5] धरति। 'धृञ् धारणे'। पचाद्यच्। पयसो धर इति भा. दी (पृ ४६०).

(पा) किशारू—धराधरौ। धन्वा निर्जलप्रदेशः। अद्रयो—पयोधरौ॥ १६३॥

**ध्वान्तारिदानवा वृत्रा बलिहस्तांशवः कराः ।**
**प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि ॥ १६४ ॥**

(वि.) वृत्रो ध्वान्ते रिपौ रक्षःशैलयोर्घनचक्रयोः ॥ 347 ॥

वृणोतीति वृत्रः । 'वृञ् वरणे' ॥

मतङ्गजस्य शुण्डाया बलौ किरणहस्तयोः ।
वर्षोपले कर्तरि च करशब्दो विवक्षितः ॥ 348 ॥

[1]कीर्यते इति करः । 'कॄ विक्षेपे' । करोति । 'डुकृञ् करणे' ॥

स्वय [2]दीर्णेऽवटे भङ्गे नारीरोगे भये[3] तथा ।
विदारणेऽपि[4] रहसि प्रदरः परिकथ्यते ॥ 349 ॥

प्रदीर्यत इति प्रदर । 'दॄ विदारणे' । 'दॄ भये'[5] ॥

अस्रः कोणे कचेऽप्यश्रुरक्तयोरस्रमुच्यते ।

अस्यत इत्यस्र.[6] । 'असु क्षेपणे' ॥ १६४ ॥

[1] K3, K4 omit [2] दीर्णविटे K5; कचे J2 [3] शरे J2, K4, K5
[4] अतिरहसि J2, K4, K5 [5] K3, K4 add 'दॄ गतिहिंसाकौटिल्येषु'. [6] अस्रम् K3

(विव.) ध्वान्तारिदानवा वृत्राः । ध्वान्तमन्धकारः । अरिः शत्रुमात्रम् । यथा—'वृत्रान् ध्वंश्चरेत्' (तै. सं. २. ४. १३. १) इति । दानवो वृत्रासुराख्यः तद्विशेषः । यथा—'यदिमानलोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्' इति श्रुतिः* । वृणोतीति वृत्रः । 'वृञ् वरणे'[1] । शेषे—'शैले चक्रे घने वृत्रः' इति । चक्राकारो मेघः [2]चक्रघनः ॥ बलिहस्तांशवः कराः । प्रजाभ्यो राजग्राह्यो भागो बलिः । चतुर्विंशत्यङ्गुलो हस्तः । शेषे—'शुण्डाकरककर्तृषु । करः' इति । करको वर्षोपलः ॥ प्रदरा भङ्गनारीरुग्बाणाः । भङ्गः पराजयः । नारीणां स्त्रीणां निरन्तर-रजःस्रवजनको रोगविशेषो नारीरुक् । [3]बाणः शरः । 'दॄ विदारणे' । 'दॄ भये' । 'ॠदोरप्'[4] (३. ३. ५७) । शेषे—'विदारणं च भीर्दीर्णः स्वयं च प्रदरोऽवटः' इति । विदारणं भेदनम् । भीर्भयम् । स्वयं दीर्णः इत्यवटविशेषणम् । स्वयमेव निष्पन्नो गर्तः प्रदर इत्यर्थः । 'तस्मात् प्रदरादुदकं नाचामेत्' इति श्रुतिः (तै. ब्रा. १. ५. १०. ७) ॥ अस्राः कचा अपि । कचाः केशाः । अस्यन्त इत्यस्राः । 'असु

क्षेपणे'[5]। शेषे—'अस्रः कोणे कुम्भभागे' इति। अस्रशब्दः कोणप्रदेशे पुंलिङ्ग इत्यर्थः। यथा—चतुरस्रमष्टास्रमित्यादि। अपिशब्दाद् रुधिरे नेत्राम्बुनि च नपुंसकलिङ्गं गतम् (१, पृ. ४०१, ४२१)। 'अस्रः कोणे मूर्धजे चाप्यश्रुणि[6] क्षतजेऽपि च' इत्यजयः ॥ १६४ ॥

[1] बाहुलकात् वत्र इति भा दी (पृ. ४६०). [2] चक्रधन इति विवरणसमत. पाठ. [3] बाणा शरा $B_6$ [4] $B_6$ adds इत्यप्. [5] बाहुलकात् र इति भा दी (पृ. ४६१). [6] श्मश्रुणि $B_5$, $B_6$ * तै स २ ४. १२ २.

(पा) ध्वान्तारिदानवा वृत्रा.। दानवो दानवविशेषः॥ वलिहस्ताशवः करा। [1]वली राजभागः॥ प्रदरा भङ्गनारीरुग्बाणा.। नारीरुगिति रजोरोग.॥ अस्रा. कचा अपि। 'अस्र. कोणे मूर्धजेऽस्रमश्रुणि क्षतजेऽपि च' इति जयकोशः[2] ॥ १६४ ॥

[1] बलिर्नाम A1. [2] A1 omits कोश

**अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ।**
**स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः ॥ १६५ ॥**

(वि) [1]अप्रोढशृङ्गवृषभेऽप्यश्मश्रुपुरुषे तथा ॥ 350 ॥
तूवरस्तुवरश्चापि वर्तते वाच्यलिङ्गक।

तन्यते गोत्वादि यया सा[2] तु, तूश्च। तू लक्ष्म वृणोतीति[3] तूवर.। 'वृञ् वरणे' ॥

स्वर्णे वित्ते वारिवाहे रैशब्दः परिकथ्यते ॥ 351 ॥

[4]राति प्रीतिमिति रा। 'रा दाने'

[5]वृन्दप्रगाढयोश्चैव पर्यङ्कपरिवारयोः।
आरम्भे च परिष्कारे भवेत् परिकरस्तथा ॥ 352 ॥

परिकीर्यते परिक्रियते वा परिकर·। 'कॄ विक्षेपे'[6] ॥ १६५ ॥

[1] अप्रोढ° $K_4$ [2] $K_3$, $K_4$ omit सा. [3] वरयति $K_4$ [4] रीयत इति रा.। 'री गतिरेषणयो' $K_2$, $K_3$, $K_4$ [5] वन्ध° $J_2$, $K_4$ [6] $J_2$ adds 'दृञ् वरणे'.

(विव.) अजातशृङ्गो—तूबरौ। शृङ्गोद्गमनयोग्यकालेऽपि गवादेरनुत्पन्नशृङ्गः, यश्च पुरुषः श्मश्रुप्रादुर्भावकालेऽपि अदृष्टश्मश्रुः, तावुभौ प्रत्येकं तूबरशब्दवाच्यौ। यथा—'प्राजापत्यमजं तूबरमालभेत' (तै. सं २. १. ६. १५) इत्यादीनि। तनोति पशुत्वं पुरुषत्वं च प्रकाशयतीति तूबरः। 'तनु विस्तारे' इत्यस्माद् [1]बाहुलकाद् 'भ्रमेश्च डूः' (उ. २. ७१) इति डूप्रत्ययः। तूः[2] शृङ्गश्मश्र्वादिकं वृणोति छादितवदनुपलब्धिं करोतीति तूबरः। 'जपादीनां वो वा' इति वत्वविकल्पे तूवरं च॥ स्वर्णेऽपि राः। अपिशब्दाद् धनमात्रेऽपि रैशब्दः पुंलिङ्गः। राति ददाति प्रीतिमिति राः। 'रा दाने'। 'रातेर्डैः' (उ. २. ६६) इति [3]डैप्रत्ययः। 'रायो हलि' (७. २. ८५) इत्यात्वम्। 'मुसलोपलरैकीलाः' इति पुंस्त्वाधिकारे शाकटायनः (लिङ्गानु. पृ. १०६)। धर्मकीर्तिस्तु—'धने त्वक्लीबे राः' इति पुंनपुंसकोभयलिङ्गत्वमाह(?)॥ परिकरः पर्यङ्कपरिवारयोः। परितः सर्वतो दार्वादिभिः क्रियत इति परिकरः। पर्यङ्कः मञ्च इत्यर्थः। [4]'पुंसि संज्ञायां घः' (३. ३. ११८)। [5]कीर्यतेर्वा। 'ऋदोरप्' (३. ३. ५७)। परिवारः परिजनः। शेषे—'परिकरः, स्यादारम्भसमूहयोः' इति। आरम्भे यथा—कृतपरिकरः। समूहे यथा—भृत्यपरिकर इति॥ १६५॥

[1] बहुलग्रहणात् Gm3, Tv [2] Tv omits two lines [3] डप्रत्यय B5, B6
[4] B6 adds 'डुकृञ् करणे' [5] 'कृ विक्षेपे' Tj1, Tj2

(पा.) अजातशृङ्गो—स्वर्णेऽपि रा। धनेऽपि [1]स्यात्। [2]एकदेशविकृतस्यानन्यत्वाद् 'रायो हलि' (७ २ ८५) इति कृतह्रस्वस्याप्यात्वम्। 'सुराभिर्मित्रं'॥ परिकर पर्यङ्कपरिवारयो। पर्यङ्क इति पर्यस्तिका। 'विवेके स्यात् परिकर पर्यस्तिपरिवारयो' इति वैजयन्ती (पृ २६७, श्लो ३३)॥ १६५॥

[1] B3, C1 omit स्यात् [2] °विकृतमनन्यवदिति A1 (प ७ २ ७८)

मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु।
कर्बुरेऽथ प्रतिज्ञाजिसंविदापत्सु संगरः॥ १६६॥

(वि.) [1][गुरुपत्न्या] [2]बुद्धदेव्या नक्षत्रे रूप्यवर्णयो।
[3]सुग्रीवपत्न्या [4]मुक्तादिशुद्धौ शुद्धमणौ तथा॥ 353॥
तरलेतरसबन्धे तारकात्युच्चनादयो।

कनीनिकाया महति तारस्त्रिषु विवक्षितः ॥ 354 ॥

तरत्यनेनेति तारः । 'तॄ प्लवनतरणयो' ॥

शारो वायौ [5]निवृत्तौ च नानावर्णे त्रिषु स्मृतः ।

शृणातीति शार. । 'शॄ हिंसायाम्' ॥

प्रतिज्ञाया संप्रहारे क्रियाकारे विपेऽपि च ॥ 355 ॥
शमीफले विपत्तौ च सगरः संविदि स्मृतः ।

सम्यग् गीर्यत इति संगर.[6] ॥ १६६ ॥

[1] बृहस्पतौ K5, K6. [2] बौद्ध° J2, K2, K5. [3] K5 omits 4 lines
[4] मुक्तादियुक्तौ J2 [5] निवृत्ते K6. [6] K2 adds 'गॄ शब्दे'.

(विव.) मुक्ताशुद्धौ च तारः स्यात् । मौक्तिकानां श्लाघ्यत्वहेतुः शुद्धिशब्दाभिलप्यो गुणस्तार इत्यर्थः । तारयति अपकर्षपरिहाणेनोत्कर्षं प्रापयत्यात्मानमिति तारः । 'तॄ प्लवनतरणयोः' । घञ् (३. ३. १६) । शेषे—

'तारो ना मौक्तिके शुद्धे गुरुसुग्रीवभार्ययोः ।
बौद्धदेव्यां तारकयोस्ताराथो रूप्यवर्णयोः ।
तारमत्युच्चनिध्वानतरीसंबन्धयोस्त्रिषु[1] ॥'

इति । शुद्धे मौक्तिके च पुंलिङ्गस्तारशब्देनोच्यते । गुरुः बृहस्पतिः । तद्भार्यायां सुग्रीवभार्यायां चेत्यर्थः । तथा च पुराणम्—'यथा बृहस्पतेर्भार्यां तारां जग्राह शीतगुः' इति । बौद्धानां कुलदेवता तारादेवीति प्रसिद्धा । तारकयोरिति कनीनिकायां नक्षत्रे चेत्यर्थः । एवं गुरुभार्याद्यर्थपञ्चके स्त्रीलिङ्गः । रूप्यं रजतम् । वर्णः प्रणवाख्यः । स च मन्त्रशास्त्रे तारसंज्ञया[2] प्रसिद्धः । रजताद्यर्थद्वये नपुंसकलिङ्गः । [3]तरी नौः । अत्युच्चध्वनौ नौकासंबन्धे च विशेष्यनिघ्न इत्यर्थः ॥ शारो—कर्बुरे । [4]शृणाति संतापमिति शारः । 'शॄ हिंसायाम्' । 'शॄ वायुवर्णनिवृत्तेष्विति वक्तव्यम्' (वा. ३. ३. २१) इति घञ् । वायौ नरि[4] पुंलिङ्गे । कर्बुरे चित्रवर्णे वाच्यलिङ्गः । 'कृष्णरक्तः[5] सितः शारः' इति वैजयन्ती

(पृ. १९८, श्लो. २५) ।। अथ प्रतिज्ञा—संगरः। इममर्थमवश्यमित्थं करिष्यामीति निश्चयः प्रतिज्ञा। यथा—सत्यसंगरः। आजिः संग्रामः। यथा—संगरे मरणं पुण्यमिति। एककार्याणां द्वयोर्बहूनां वा कार्यनिर्वाहपर्यन्तं सर्वैरस्माभिरशिथिलोद्योगैः दृढयत्नैरस्मिन्नर्थे भवितव्यमिति शपथपूर्विका प्रवृत्तिः संवित्। यथा—अन्योन्यं कृतसंगरा इति। आपदि यथा—संगरे शरणं सुहृदिति। [6]'गॄ शब्दे' इत्यस्माद् धातोः सपूर्वाद् अधिकरणे भावे च 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्ययः। विश्वप्रकाशेऽपि—'विपापदोः क्रियाकारे सगरे तु शमीफले' इति। शेषे—'शम्याः फले संगरः स्यात्' इति ।। १६६ ।।

[1] °तरि° Tv [2] °सज्ञा Tv, °सज्ञाया प्रसिद्ध Gm3 [3] तरि Tv [4] वायो नरि इति विवरणे पाठ [5] °रक्तसित इति मु म [6] 'गॄ निगरणे' B5, B6

(पा) मुक्ताशुद्धौ च तार स्यात्। 'तारो मुक्तादिसशुद्धौ तरले शुद्धमौक्तिके' इति विश्व (पृ १२६, श्लो १८) ।। शारो—कर्बुरे। [1]द्यूतगुलिकेऽपि स्यात्। 'काल [2]कल्यो भुवनफलके क्रीडति प्राणिशारै' (वै. श ३ ३९[3]) ।। अथ प्रतिज्ञा—सगर। सविच्छब्द [4]क्रियाकारवचन। 'सगरो ना क्रियाकारे प्रतिज्ञाविपदोर्युधि' इति वैजयन्ती (पृ २९४, श्लो ६२) ।। १६६ ।।

[1] °गुडेऽपि A1 [2] काल्या A1 [3] Apte's Dict p 1545 [4] क्रियाकारक° A1, C1

वेदभेदे गुप्तिवादे मन्त्रो मित्रो रवावपि ।
मखेषुयूपखण्डेऽपि स्वरुर्गुह्योऽप्यवस्करः ।। १६७ ।।

(वि) वेदभेदे गुप्तिवादे मन्त्र समभिधीयते ।। 356 ।।

[1]मन्त्र्यत इति मन्त्र । 'मत्रि गुप्तभाषणे' ।।

तीक्ष्णरश्मौ च सुहृदि मित्र [2] स्याच्छत्रुशातवे ।

° मद्यतीति मित्र [2]। 'ञिमिदा स्नेहने'। सुहृदि नपुसक ।।

मखे [3]च यूपखण्डे [3]च [4]शस्त्रशस्त्रे स्वरु पुमान् ।। 357 ।।

स्वरति शत्रूनुपतापयतीति स्वरु । 'स्वृ [5]शब्दोपतापयो' ॥

अवस्करो रथाङ्गे च गुह्येऽप्यधमवर्तने ।

[6]अवकीर्यत इत्यवस्कर । 'कॄ विक्षेपे' ॥ १६७ ॥

[1] मन्यत इति। 'मन ज्ञाने' K2; 'मनु अवबोधने' J2 [2] मितम् J2 [3] अपि for च J2, K5 [4] शस्त्रेऽपि स्वररुच्यते K5 [5] उपतापे J2 [6] अव अध क्रियते K3.

(विव.) वेदभेदे गुप्तिवादे मन्त्रः। अर्थवादसहितब्राह्मणव्यतिरिक्तवेदभागः 'इषे [1]त्वा' इत्यादिको मन्त्रः। [2]गुप्तिवादो नाम राजामात्यप्रभृतीनां रहसि कर्तव्यार्थावधारणम्। मन्त्र्यते गुप्तिं भाष्यते कर्तव्यार्थमत्रेति मन्त्रः। 'मत्रि गुप्तभाषणे'[3]। चुरादिः। 'एरच्' (३. ३. ५६) इत्यधिकरणे अच्प्रत्ययः। 'मन ज्ञाने' इत्यस्माद्वा औणादिकप्रत्ययः। शेषे—'मन्त्रो देवादिसाधने' इति। श्रीरामादिदेवताप्रीतिसाधनभूतः षडक्षरादिर्मन्त्रः ॥ मित्रो रवावपि। सूर्ये रूपभेदात् पुंलिङ्गः। अपिशब्दात् सुहृदि नपुंसकलिङ्गः प्रागुक्तः (१, पृ. ४६०) ॥ मखेषुयूपखण्डेऽपि स्वरुः। मखो यज्ञः। इषुर्बाणः[4]। पशवञ्जनार्थो यूपावतक्षणशकलो यूपखण्डः स्वरुः। तयोक्तमापस्तम्बेन—'अवतक्षणानां स्वरुरधिमन्यनश्च शकलः' (आ. श्री. सू. ७. ३. ३) इति। स्वरति शब्दायत इति स्वरुः। स्वर्यते उपतप्यते दह्यते पाशुकेनाग्निना इति वा स्वरुः। तथा चापस्तम्बः—'प्रत्याक्रम्य जुह्वां स्वरमवधाय अनूयाजान्ते जुहोति' (आ. श्री. सू. ७. २७. ४) इति। 'स्वृ शब्दोपतापयोः'। औणादिक उकारप्रत्ययः[5] (उ. १. १०)। शोभनान्यरंष्यस्येति स्वरुरिति केनचिदनधीताश्रुतश्रौतग्रन्थेन रेफान्तप्रकरणानुसंधाने शून्यधिया कृता निरुक्तिरुपेक्षणीया। प्रतापोऽपि—'यूपखण्डे सायके च स्वरुरप्यरवज्रयोः' इति। स्वरुशब्द उकारान्तः पुंलिङ्गश्च, 'शतकोटिः स्वरुः' इत्यत्र प्रागुक्तः (१, पृ. ३२) ॥ गुह्येऽप्यवस्करः। अवकीर्यते छाद्यत इत्यवस्करः। गुह्यं गुदप्रदेशः। अपिशब्दाद् विष्ठायां प्रागुक्तः (१, पृ. ४०४)। यद्यपि 'वर्चस्केऽवस्करः' (६. १. १४८) इति विष्ठायां निपातितः,[6] तथापि वर्चस्कसंबन्धाद्[7] गुदप्रदेशेऽपीति वृत्तिः (काशिका[8] २, पृ. १४८)। निरूढलक्षणानां मुख्यतुल्यत्वाद् नानार्थत्वेनानुशासनं कृतम् ॥ १६७ ॥

[1] यजुर्वेद १ १ [2] गुप्तवाद इति स्वामी (पृ ३११), गुह्यवाद इति भा दी (पृ ४६१) [3] °परिभाषणे Tj1, Tv [4] Tv adds यूपखण्डो यूपस्तम्भ [5] 'शुस्वृस्निहि मनिभ्यश्च' [6] निपात्यते Tv [7] Tv adds लक्षणया [8] अवपूर्वस्य किरते कर्मणि ॠदोरप् इत्यप्, निपातनात् सुट्। तत्सबन्धाद् देशोऽपि तथोच्यते इति मु ग्र

(पा ) वेदभेदे गुप्तिवादे मन्त्र । वेदभेदोऽथर्वा (?) ॥ मित्रो रवावपि। सख्यौ नपुसक [1] ॥ मखेषुयूपखण्डेऽपि[2] स्वरु । मखश्च इषुश्च यूपखण्डश्च मखेषुयूपखण्डमिति समास । 'स्वरुर्वज्रेऽध्वरे बाणे यूपखण्डेऽपि च स्वरु ' इति विश्व (पृ १३१, श्लो ७२) ॥ गुह्योऽप्यवस्कर । विष्ठायामपि [3]स्यात् ॥ १६७ ॥

[1] नपसकम् B3 [2] °खण्डेषु C1 [3] B3, C1 omit स्यात्

**आडम्बरस्तूर्यरवे गजेन्द्राणां च गर्जिते ।**
**अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च ॥ १६८ ॥**

(वि.) आडम्बरस्तूर्यरवे गजेन्द्राणा च गर्जिते ॥ 358 ॥

[1]आडम्बयति चित्त विक्षिपतीत्याडम्बर । [2]'डबि क्षेपे' ।

अभिहारोऽभियोगे च चौर्ये सनहनेऽपि च ।

अभिह्रियत इत्यभिहार [3] ॥ १६८ ॥

[1] आडम्व्यते K5 [2] K2, K3 add डब [3] K4 adds 'हृञ् हरणे'

(विव.) आडम्बरः—गर्जिते। आदम्यन्ते भीरुजना अनेनेत्याडम्बर। 'दमु उपशमे'। बरप्रत्यय । पृषोदरादिश्च। 'डब डिब क्षेपे' इति चान्द्रो धातुरिति सुबोधिनीकारः[1]। शेषे—'आडम्बरोऽस्त्री सरम्भे' इति। सरम्भ सभ्रम ॥ अभिहारो—सनहनेऽपि च। महाराजसभादौ परकीयदोषोद्भावनम् अभियोगः। सेनादेः सज्जीभावः सनहनम्। सम्यग्बन्धनं सनहनमिति केचित्। 'हृञ् हरणे' इति धातोरुपसर्गवशादनेकार्थत्वम्[2] ॥ १६८ ॥

[1] आडम्व्यते। 'डबि क्षेपे चुरादि । घञ्। भावे वा। आडम्ब राति। 'आताऽनुपसर्गे क '। आडम्बयति वा। बाहुलकादरन् इति भा दी (पृ ४६१) [2] घञ् (३ ३ १८)

(पा) आडम्बर—गर्जिते । सरम्भेऽपि [1]स्यात् । 'आडम्बरोऽस्त्री सरम्भे पटहे गजगर्जिते' इति वैजयन्ती (पृ २७७, श्लो ४) ॥ अभिहारो—सनहनेऽपि च । अभियोगो वैरस्याभिगम । 'परकुर्येदिरिचुट'[2] ॥ १६८ ॥

[1] $B_3$ omits स्यात् [2] $A_1$ adds चौर्यं परधनहरणम् । सनहन कवचहर । 'जोडुदोडु क्काट'.

**स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ।**
**विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम् ॥ १६९ ॥**

(वि) स्याज्जङ्गमे परीवार खड्गकोशे परिच्छदे ॥ 359 ॥

[1]परिव्रियतेऽनेनेति परीवार [2] ॥

वृक्षे पीठाद्यासने च मुष्टौ दर्भस्य विष्टर ।

विस्तीर्यत इति विष्टर [3] । 'स्तृञ् आच्छादने' ॥ १६९ ॥

[1] परिवार्यते $J_2$, $K_5$ [2] $J_2$ adds 'वृञ् वरणे' [3] वेवेष्टीति विष्टर । 'विष्लृ व्याप्तौ' $K_2$, $K_3$

(विव.) स्याज्जङ्गमे—परिच्छदे । चरिष्णुः गोमहिष्यादिः जङ्गमः । खड्गकोशः खड्गस्य पिधानम् । परिच्छदः परिजनः । परितो व्रियते वार्यते वा अनेनेति परीवारः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्'[1] (६. ३. १२२) इति दीर्घः ॥ विष्टरो—पीठाद्यमासनम् । विटपी वृक्षः । दर्भमुष्टिः मधुपर्कादावासनत्वेन परिकल्पितः पञ्चविंशतिसंख्यकः[2] कुशात्मकः । पीठं कम्बलादिकं चेति द्विविधमासनम् । वृक्षश्च विष्टर इत्युच्यते । विस्तीर्यत इति विष्टरः । 'स्तृञ् आच्छादने' । [3]'वृक्षासनयोर्विष्टरः' (८. ३. ९३) इति साधुः । 'विष्टरः पादपे पीठे कुशमुष्टौ च दृश्यते' इत्यजयः ॥ १६९ ॥

[1] 'उपसर्गस्य घञ्' $B_5$, $B_6$ [2] °सङ्ख्याक $T_{J2}$ [3] 'दर्भासनयोर्विष्टरे' $Gm_3$, $T_1$

(पा.) स्याज्जङ्गमे—पीठाद्यमासनम् ॥ १६९ ॥

द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे ।
विपुले नकुले विष्णौ बभ्रुः स्यात् पिङ्गले त्रिषु ॥ १७० ॥

(वि) द्वारि द्वा स्थे [1]प्रतीहारो द्वारपाल्या स्त्रिया भवेत् ॥ 360 ॥

प्रतिह्रियतेऽनेनेति प्रतीहार.[2] ।

वह्नौ [3]शूलिनि विष्णौ च विधातृमुनिभेदयो ।
विलासे नकुले बभ्रु पिङ्गले विपुले भवेत ॥ 361 ॥

[4]विभर्तीति बभ्रु ॥ १७० ॥

[1] वेत्रपाणौ $K_3$, $K_6$ [2] प्रतिहार $K_3$, $K_6$ [3] शुचिनि $K_6$ [4] भ्रियत इति $J_2$, $K_5$; $K_3$, $K_4$ add 'भृञ् भरणे'

(विव.) द्वारि—प्रतीहार्यप्यनन्तरे । प्रतिहार्यते निवार्यते वैदेशिकजनप्रवेशोऽत्रेति प्रतिहारो द्वारम् । करणार्थे तु प्रतिहारो द्वारपाल. । अनन्तरे पूर्वोक्तार्थद्वयापेक्षया सनिहिते द्वा·स्थरूपार्थे स्त्रीविशिष्टे सति तत्र [1]प्रतिहारशब्दो ङीबन्ते वर्तत इत्यर्थः । रेफान्तमध्ये नकारान्तमनाशङ्कनीयमेव । अपिशब्दाद् राजपरिचारिकायामपि प्रतिहारीशब्दः । तथा च वैजयन्त्याम्—'प्रतीहारी तु राजान संभावयति या सदा' इति (पृ. १०७, श्लो. ३८) । या स्त्री राजानमनुलेपनकेशप्रसाधनादिभिरलंकरोति सा स्त्री प्रतिहारीत्यर्थः ॥ विपुले—पिङ्गले त्रिषु । विपुलो विशालः । पर्वतादि बिभर्तीति बभ्रुः । 'भृञ् भरणे' । 'कुर्भ्रश्च' (उ. १. २२) इति कुप्रत्ययो धातोर्द्वित्वं[2] च । शेषे—

बभ्रुर्वह्नौ विधातरि ।
विलासे मुनिभेदे च भवेत् पार्वतिवल्लभे ॥

इति । [3]ङ्यापोरिति पार्वतीशब्दस्य ह्रस्वः ॥ १७० ॥

[1] प्रतीहारशब्दोऽजन्ते वर्तते Tv, 'हृञ् हरणे' घञ् (३ ३ १८) [2] द्विर्वचन $B_5$, $B_6$. [3] 'ङ्यापो सञ्ज्ञाछन्दसोर्बहुलम्' (६ ३ ६३)

(पा ) द्वारि—प्रतीहार्यप्यनन्तरे। अनन्तरे प्रतिहार्यपि स्यात्। द्वास्थे [1]प्रतिहारप्रतीहारशब्दौ द्वौ च वर्तेते ॥ विपुले—पिङ्गले त्रिषु। [2]विपुल इति नकुलविशेषणम् ॥ १७० ॥

[1] प्रतीहारी $B_3$ [2] $A_1$ omits the sentence

**सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु ।**
**दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥ १७१ ॥**

(वि ) सार स्थिरांशे न्याय्ये स्यादुत्कर्षबलयोर्भवेत्[1]।

सरतीति सार[2] ॥

दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम् ॥ 362 ॥

दुष्टमासमन्ताद् [3]उदर्यत इति दुरोदरम् ॥ १७१ ॥

[1] उत्कर्षवरयोर्बले $K_5$ [2] $K_2$ adds 'सृ गतौ' [3] उदीर्यते $K_5$

(विव.) सारो—वरे त्रिषु। सरति शरीरं व्याप्नोतीति सारः। यथा—गोग्रहे दृष्टसारो धनंजयः इति। स्थायित्वेन [1]कालान्तरं व्याप्नोतीति सारः। स्थिरांशे यथा—चन्दनसारः, खदिरसारः इति। 'सृ स्थिरे' (३. ३. १७) इत्यत्र 'व्याधिमत्स्यबलेष्विति वक्तव्यम्' इति कर्तरि घञ्। अत्रार्थद्वये बलस्थिरांशयोः रूपभेदात् पुंलिङ्गः। सरति मनीषिणां हृदयमिति सारं न्याय्यम्। यथा—नैतत्सारमिति। न्याय्ये न्यायादनपेतमित्यर्थे नपुंसकलिङ्गः। वरे श्रेष्ठे वाच्यलिङ्गः। सारो देशः। सारा वाराणसी। सारो देवेषु शंकरः। सारं कुरुक्षेत्रमिति। नन्वस्य वाच्यलिङ्गत्वे, 'सारं सारङ्गलोचना' 'राज्यं सारं वसुंधरा' इत्यादौ कथं विशेष्यलिङ्गत्वाभाव इति चेत् सत्यम्। 'सामान्यविशेषभावत्वेन पृथग्वाक्यत्वेन योजनायां न पूर्वदोषावकाशः' इति गणरत्नमहोदधावुक्तम् (२. श्लो. ७२) ॥ दुरोदरो—दुरोदरम्। [2]दुष्टमा समन्तादुदरमस्येति दुरोदरो द्यूतकरः। तत्संबन्धात् पणभूतं धनम्। द्यूतकर्म च नपुंसकेन दुरोदरशब्देनोच्यते। 'दुरोदरोऽस्त्रियां द्यूतः' इत्यजयः। 'आश्रित्य दुर्गं गिरिकन्दरोदरं [3]क्रीडन्ति तस्मिन् सततं

दरोदरम्' इति [4]यमककाव्ये निरुकारं गोवर्धनः पठतीति सर्वानन्दः (टी. स. ३. पृ. १३०) ॥ १७१ ॥

[1] सारान्तर Tv [2] Tv omits the sentence [3] क्रीडन्त्यमुष्मिन् Tv, श्रीडन्नमुष्मिन् इति मु ग्र [4] Omitted in *Tikāsarvasva*

(पा) सारो—वरे त्रिपु। बल सामर्थ्यम्। [1]तत्र च स्थिरांशे पुलिङ्ग। न्याय्यमुचितापरित्याग। तत्र नपुसकम्। वर श्रेष्ठम्। [2]अत्र त्रिलिङ्ग। केषाचिन्नपुसकमेव।

> राज्ञ सार वसुधा [3]वसुधायामपि पुरम् पुरे सौधम्।
> [4]सौधे तल्प तल्पे वराङ्गना सर्वस्वम्[5] ॥

इति ॥ दुरोदरो—दुरोदरम्। 'आश्रित्य दुर्ग गिरिकन्दरोदरे क्रीडन्त्यमुष्मिन् सतत दरोदरम्' इति हरिप्रबोधयमकाद् दरोदरो निरुकार इति गोवर्धनवचनात्। क्वचिद् दुरोदरमिति सोकारम् ॥ १७१ ॥

[1] A1 omits [2] तत्र B3, C1 [3] वसुधरायाम् A1 [4] तत्र C1 [5] सारम B3

**महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम्।**
**मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ॥ १७२ ॥**

(वि) महारण्ये दुर्गपथेऽप्युपसर्गादिकेऽपि च।
इक्षुभेदे च कान्तार पुनपुसकमिष्यते ॥ 363 ॥

कस्य [1]सुखस्यान्तरयते प्राप्यत इति कान्तारम्[2] ॥

> [3]कृपणेऽन्यसुखद्वेपे त्रोधेऽन्यशुभवैरिणि।
> मक्षिकाया च मात्सर्ये मत्सर परिकीर्तित[4] ॥ 364 ॥

माद्यति मदात् सरतीति [5]वा मत्सर[6] ॥ १७२ ॥

[1] अन्तर for अन्त K3, K6 [2] कान्तार K2, K4 [3] अन्यशुभद्वेषे K4 [4] परिकथ्यते K2, K4 [5] J2, K2 omit [6] J2, K2 add 'मदी हर्षे'

(विव.) महारण्ये—पुंनपुंसकम्। चोरपाषाणकण्टकादिबाहुल्येन दुःसंचारो मार्गो दुर्गपथः। कस्य जलस्य सुखस्य वा अन्तं नाशम् ऋच्छतीति कान्तारम्। इक्षु-भेदे तु केवलपुंलिङ्गः प्रागुक्तः (१, पृ. ३१७)।। मत्सरो—कृपणयोस्त्रिषु। [1]विद्या-धनाद्यतिशयनिमित्तमन्यस्य यच्छुभाधिक्यं तद्विषयो द्वेषोऽसहत्वम्, तत्र मत्सरशब्दः पुंलिङ्गः। तथाविधमत्सरयुक्ते दीने च विशेष्यनिघ्नः। माद्यति परक्लेशेन हृष्य-तीति मत्सरः। 'मदी [2]हर्षे'। 'कृधूमदिभ्यः कित्' (उ. ३.७३) इति सरप्रत्ययः। 'खरि च' (८.४.५५) इति चर्त्वं च। तद्धर्मत्वाद् द्वेषमात्रमपि मत्सर उच्यते। शेषे—'मत्सरो मक्षिकाक्रोधौ' इति। क्रोधोऽमर्षः ।। १७२ ।।

[1] अन्यस्य यच्छुभ विद्याधनादिनिमित्तमधिकम् Tv. [2] B5, B6 add ग्लपनयो.

(पा.) महारण्ये—कृपणयोस्त्रिषु। मक्षिकायां स्त्री। 'मत्सरा मक्षिकाया स्त्री[1]' इति विश्वः (पृ. १३४, श्लो. ११८) ।। १७२ ।।

[1] मक्षिकाया च इति मु. ग्र

देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये ।
वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना ।। १७३ ।।

(वि.) अभीष्टदेवाच्च[1] वृते श्रेष्ठे जामातृपिङ्गयो.[2] ।
त्रिफलाया शतावर्यां वृतौ काश्मीरदेशजे ।। 365 ।।
मनाक्प्रियेऽप्यव्यय स्याद्वरस्त्रिषु [3]च कीर्तितः ।

व्रियत इति वरः[4] ।।

करीरस्तरुभेदे [5]च घटे वंशाङ्कुरेऽपि च ।। 366 ।।
चीरिकाया[6] करीरः स्याद् दन्तमूले च दन्तिनः ।

[7]करिण· ईरयतीति करीर. । 'ईर [8]प्रेरणे' ।। १७३ ।।

[1] °देवा° J2. [2] पिङ्गो विट.. [3] हि K4 [4] K2, K4 add 'वृञ् वरणे'.
[5] स्यात् J2. [6] चीरयायां K5 [7] करिण J2. [8] गतौ K3; क्षेपे K6

(विव.) देवाद्वृते—मनाक्प्रिये। मन्त्रपुरश्चरणादिभिः प्रसन्नमहेश्वरादेर्देवाल्लब्धे पुत्रधनादौ रूपभेदात् पुंलिङ्गः। यथा—'वरं वृणीष्वेति। सोऽब्रवीत् वरं वृणे। एष एव मे वरोऽलं यद्भगवन्तौ प्रत्यक्षं पश्यामि' इत्यादि। श्रेष्ठे तु वाच्यलिङ्गः। यथा—राजवरः, ग्रामवरः[1]। मनाक् ईषत् प्रिये तु नपुंसकलिङ्गः। यथा—'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' इति (मेघ. १. ६)। ईषत्प्रिये तु वरमित्यव्ययमप्यस्तीति [2]स्वामी (पृ. ३१२)। व्रियत इति वरः। 'वृञ् वरणे' 'वृञ् संभक्तौ'। 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इति, कर्मण्यप्प्रत्ययः। शेषे—

'वरो जामातृषिड्गयोः।
शतावर्यां वरी पाठा वरा तु त्रिफला भवेत्।'

इति। 'काश्मीरजन्माग्निशिखं वरम्' इति गतम् (१, पृ. ४४०)॥ वंशाङ्कुरे—घटे च ना। वंशाङ्कुरो वेणुप्ररोहः। तरुभेदः ग्रन्थिलाख्यः प्रागुक्तः (१, पृ. २६०)। घटः कलशः। उभयत्र पुंलिङ्गः। किरतेः करोतेर्वा औणादिक ईरन्प्रत्ययः[3] (उ. ४. ३०)। शेषे—'[4]करीरी चीरिकायां[5] च दन्तभेदे च दन्तिनाम्' इति। चीरिका झिल्ली॥ १७३॥

[1] वरो वर्ण, वरकुलमित्यादि $B_3$, $B_6$ [2] अव्ययमित्येके इति मु. ग्र (पृ २१३)
[3] 'कृशॄपृकटिपटिशौटिभ्य ईरन्' [4] करीरा $Tj_2$ [5] चिरिकाया $B_3$

(पा) [1]देवाद्वृते—मनाक्प्रिये। देवतासकाशादीप्सिते पुलिङ्ग। जामातर्यपि पुलिङ्ग[2] स्यात्। श्रेष्ठे त्रिलिङ्ग। अधिपतावपि त्रिलिङ्गः स्यात्। ईषत्प्रिये नपुसकलिङ्ग[3]॥ वंशाङ्कुरे—घटे च ना॥ १७३॥

[1] दैवात् $A_1$ [2] $B_3$, $C_1$ omit [3] नपुसकल $C_1$

ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्।
यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु॥ १७४॥
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु।

(वि) सेनाया जघने माल्ये हस्तसूत्रविभूषयोः।
व्रणशुद्धौ प्रतिसरो मन्त्ररक्षावृतौ भटे॥ 369॥

[1]प्रतिसरतीति प्रतिसर [2] ॥

> [3]यमे वायौ सूर्यविष्ण्वोस्तुरङ्गशुकयोरपि ।
> [4]सर्पे कपौ हिमांशौ च शक्रे सिंहे च तापसे[5] ॥ 370 ॥
> रश्मौ लोकान्तरे भेके कपिले हरिते तथा ।
> राजभेदे दैत्यभेदे हरिस्तु समुदाहृत ॥ 371 ॥

हरतीति हरि [6] ॥ १७४ ॥

[1] K2 omits 4 lines [2] J2, K4 add 'सृ गतौ' [3] मेघे K5 [4] सप्तौ K6
[5] दानवे K6 [6] K3 adds 'हृञ् हरणे'

(विव.) ना चमूजघने—अस्त्रियाम् । व्यूढसेनायाः पश्चाद्भागः चमूजघनम् । तत्र प्रतिसरशब्दः पुलिङ्गः[1] । [2]विवाहादौ वधूवरयोर्मणिबन्धस्थाने बन्धनीयमूर्णामय सूत्रं हस्तसूत्रम् । प्रतिसरत्यत्रेति प्रतिसरः । 'पुंसि सञ्ज्ञाया घः प्रायेण' (३. ३. ११८) इत्यधिकरणे घप्रत्ययः । शेषे—

> 'रक्षाकृतौ नियोज्ये च माल्यमन्त्रविशेषयोः ।
> विभूषणेर्मशुद्धयोश्च ज्ञेयः प्रतिसरो मतः ॥'

इति । अभिमन्त्रितेन भस्मना रक्षाकरणम्[3] । नियोज्यः परिजनः । मन्त्रविशेषे यथा—'प्रतिसर प्रतिधाव' इत्यादिराथर्वणः प्रसिद्धः । ईर्मशुद्धिः व्रणशुद्धिः ॥ यमानिलेन्द्र—कपिले त्रिषु । अनिलो वायुः । अंशुः किरणः । वाजी घोटकः । अहिः सर्पः । हरति पापादिक [4]स्वनिर्वर्त्यमिति हरिः । हरतेरौणादिक इप्रत्ययः[5] (उ. ४. १४०) । सर्वत्र पुलिङ्गः[6] । पलाशवर्णेऽपि हरिशब्दः ॥ १७४ ॥

[1] Tv adds तद्युक्ते वाच्यलिङ्ग [2] Gm3 omits the sentence [3] रक्षाकृति B6, Tj2 [4] स्वनिवृत्त्यर्थं Tj1, Tj2 [5] 'अच इ' [6] B5, B6 add कपिल वर्णगुणे च पुलिङ्ग । तद्वति वाच्यलिङ्ग

(पा) ना चमूजघने—अस्त्रियाम् । मालाया स्त्रीलिङ्ग [1] । यमानिल—भेकेषु । भेदेष्विति वा पाठ [2] । हरिर्ना कपिले त्रिषु । कपिलवर्णे त्रिलिङ्ग ॥ १७४ ॥

[1] त्रिलिङ्ग A1 [2] C1 omits

**शर्करा कर्पराशेऽपि यात्रा स्याद्यापने गतौ ॥ १७५ ॥**
**इरा भूवाक्सुराप्सु स्यात् तन्द्री निद्राप्रमीलयोः ।**
**धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि ॥ १७६ ॥**

(वि) [1]कर्पराशे रोगभेदे पाषाणे शकले तथा ।
[2]शर्करान्वितदेशे च शर्करा परिकीर्तिता ॥ 372 ॥

शृणातीति शर्करा । 'शॄ हिंसायाम्' ॥

देवार्चनोत्सवे गत्या यात्रा भोगादिवर्तने ।

[3]यात्यनयेति यात्रा । 'या प्रापणे' ॥

इरा भुवि जले वाचि सुरास्वर्वश्ययोरपि ॥ 373 ॥

[4]एत्यनयेति इरा । 'इण् गतौ' ॥

तन्द्रा तु तन्द्री तन्द्रश्च निद्रायां च प्रमीलने ।

[5]तननमिन्द्रियाणां विस्तारं द्रातीति तन्द्रा[6] ॥

वसुमत्यामामलक्यामुपमातरि मातरि ॥ 374 ॥
पोष्ट्र्या च धारयित्र्या च धात्री समभिकथ्यते ।[7]

[8]धापयतीति धात्री । 'धेट् पाने' ॥ १७५–६ ॥

[1] शर्करायां $K_6$ [2] कर्परा° $K_4$ [3] यान याति $K_2$, $K_3$; यान्त्यनेति $J_2$
[4] ईरयति, 'ईर प्रेरणे', $K_2$, $K_3$, $K_4$ [5] तत $K_2$ [6] $K_2$, $K_4$ add 'द्रा कुत्सायां गतौ' [7] सपरिकथ्यते $K_5$ [8] धारयति $J_2$, $K_4$

(विव.) शर्करा कर्पराशेऽपि । शीर्यत इति शर्करा । शृणातीति वा । शं करोतीति वा । 'शर्करादिभ्योऽण्' (५. ३. १०७) इति निर्देशात् साधुः । शीर्यतेरौणादिकः करन्प्रत्ययो वा (उ. ४. ३) । विश्वप्रकाशेऽपि—

'शर्करा खण्डविकृतावुपलाकर्पराशयोः ।
शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च ॥'

इति। कर्परो भिन्नघटादेः कपालम्। तथा च प्रतापः—'कर्परस्तु कपाले स्याच्छस्त्रभेदकटाहयोः' इति। तस्याश्च एकदेशः। रुग्भेदो रोगविशेषः शर्कराख्यः [1]अश्मरीसंज्ञकश्च ।। यात्रा स्याद् यापने गतौ। स्नानभोजनादिकया दिनचर्यया वर्तनं यात्रा। यथा—शरीरयात्रा, प्राणयात्रा इति। गतिर्गमनम्। गते यथा—[2]काशियात्रा, पर्वतयात्रा। यात्यनयेति यात्रा। 'हुयामाश्रुभसिम्यस्त्रन्' (उ. ४. १६६) इति त्रन्प्रत्ययः। शेषे—'यात्रा देवार्चनोत्सवे' इति। देवतामहोत्सवे यथा—'भगवतः कालप्रियनाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि' इति (उत्तर. १) ।। इरा—प्रमीलयोः। एतीति इरा। 'इण् गतौ'। औणादिको रन्प्रत्ययः (उ. २. ३१[3]) । शेषे—'इरा अप्सर.सु' इति। इरा नाम काचिदप्सरःस्त्री ।। तन्द्री निद्राप्रमीलयोः। निरिन्द्रियात्मप्रदेशे मनसोऽवस्थानं निद्रा। शरीरखेदजनितो मोहप्रायः प्रमादः प्रमीला, निद्रातः पूर्वावस्था। [4]'अवितॄस्तृतन्त्रिभ्यः ईः' (उ. ३. १५६) इति तन्द्रीः सौत्राद् धातोः ईःप्रत्ययः। ङचन्तत्वाभावात् सुलोपाभावः। शेषे—'तन्द्रिश्च तन्द्री समार्थकौ' इति। तस्मादेव सौत्राद्धातोः 'गुरोश्च हल·' (३. ३. १०३) इत्यकारप्रत्यये तन्द्रा। तत्रैव 'प्रज्ञादिभ्यश्च' (५. ४. ३८) इति ङीपि तन्द्री। 'संज्ञापूर्वको विधिरनित्यः' (प. २. ४. ७६) इति वृद्धयभावः ।। धात्री—आमलक्यपि। उपमाता स्वस्तन्यप्रदानेन पोषणकारिणी। धयन्त्येनामिति धात्री। 'धेट् पाने'। 'धः कर्मणि ष्ट्रन्' (३. २.१८१)। षित्त्वे च ङीष् प्रत्ययः[5] (४. १. ४१)। धत्ते धारयतीति वा धात्री भूमिः। पोषयित्री भूतधात्री। आमलक्यामुक्ता ।। १७५–६ ।।

[1] कश्मली Tv  [2] काशी° Gm3  [3] 'ऋज्रेन्द्राग्र वज्रेरामाला' [4] मुद्रितकौमुद्या तु 'अवितॄस्तृतन्त्रिभ्य ई' इत्येव दृश्यते, 'द्रा कुत्सायां गतौ'। '—निद्रा-तन्द्रा—' (३ २ १५८) इति तदो नान्तत्व निपात्यते इति भा दी (पृ ४६३)  [5] 'षिद्-गौरादिभ्यश्च'

(पा) शर्करा कर्पराशेऽपि। खण्डशर्कराखण्डेऽपि स्यात् ।। यात्रा स्याद् यापने गतौ। यापन कालक्षेप ।। इरा—प्रमीलयो। प्रमीला[1] 'कूरिपाटु'[2] ।। धात्री—आमलक्यपि। उपमाता [2]'दादि' ।। १७५–६ ।।

[1] C1 adds आलस्यम्  [2] B3 omits

**क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।**
**त्रिषु क्रूरेऽधनेऽल्पेऽपि क्षुद्रो मात्रा परिच्छदे ॥ १७७ ॥**
**अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे ।**

(वि) वेश्याया कण्टकार्यां च [1]नटीशीलविहीनयो. ।
क्षुद्रा स्यादङ्गहीनाया सरघाधूर्तयोरपि ॥ 374 ॥
[2]अधने कृपणे क्रूरेऽप्यल्पे क्षुद्रस्त्रिपु स्मृत ।

[3]क्षुद रातीति क्षुद्र । 'रा दाने' ॥

परिच्छदे धने वृत्ते कर्णभूपाक्षराशयो [4] ॥ 375 ॥
मात्रा भवेत् परीमाणे कार्त्स्न्येऽल्पेऽप्यवधारणे ।
स्वार्थसंशययोश्चैव मात्र तु परिकीर्तितम् ॥ 376 ॥

[5]मीयत इति मात्रा । 'माङ माने' ॥ १७७ ॥

[1] धन for शील $K_5$　[2] अधमे $J_2$　[3] क्षुद्यत इति, 'क्षुदिर् संचूर्णने' $K_6$
[4] °अङ्गरागयो $K_5$　[5] $J_2$ adds अनया

(विव.) क्षुद्रा—अल्पेऽपि क्षुद्रः । व्यङ्गा अङ्गहीना । नटी [1]नर्तकस्त्री । [2]वेश्येत्याचारहीनोपलक्षणम् । सरघा मधुमक्षिका । कण्टकारिका निदिग्धिका । व्यङ्गादिपञ्चके स्त्रीलिङ्गः । क्रूरनिकृष्टस्वल्पेषु [3] विशेष्यनिघ्नः । क्षुणत्ति क्षुद्यते वा क्षुद्रः । 'क्षुदिर् [4]सपेषणे' । औणादिको रक्प्रत्ययः[5] (उ. २. १३)। क्षुदं रातीति वा क्षुद्र । अपिशब्दात् कृपणे प्रागुक्तः (२, पृ. ६८६) ॥ मात्रा—अवधारणे । परिच्छदः परिकर । यथा—कापालिकस्य मात्रा महामात्राः प्रधानानि । अल्पे यथा—'सुप्प्रतिना मात्रार्थे' (२. १. ६) इति सूत्रे काशिका—मात्रा[6] स्तोकमल्पमिति पर्याया इति (१, पृ. ८६) । परिमाणे यथा—मात्रासि सर्वकालम्,[7] हस्तमात्रोऽङ्कुश इति । अस्मिन्नर्थत्रये रूपभेदात् स्त्रीलिङ्गः । कार्त्स्न्ये यथा—प्राणिमात्रं न हिंस्यात् इति । सर्वानपि प्राणिनो न हिंस्यात् इत्यर्थः । अस्य परिहारेणैकस्यैव वस्तुनो निष्कर्षणमवधारणम् । यथा—शाकमात्रं भुङ्क्ते इति । अत्रोभयत्र रूपविशेषादेव [8]नपुंसकत्वम् । 'माङ माने' इत्यस्माद् धातोः 'हुयामाश्रुभसिभ्यस्त्रन्' (उ. ४. १७०) इति औणादिकः त्रन्प्रत्ययः । शेषे—'स्त्रियां मात्रा

भूषणे स्याद् वर्णवृत्तांशयोर्धने' इति। भूषणे यथा—हस्तमात्रा, कर्णमात्रा इति। वर्णस्याप्यक्षरैकदेशे यथा—एकमात्रो ह्रस्वः। द्विमात्रो दीर्घ इति। वृत्ते यथा—मात्रावृत्तम् इति। धने यथा—को जीवेन्मात्रया विना इति ॥ १७७ ॥

[1] नर्तकस्य Tj1, Tj2 [2] B6 omits आचार [3] स्वल्पे तु Gm1. [4] सचूर्णने B6 [5] स्फायितञ्चि . . शुभिम्यो रक् [6] इत्यत्र Gm1; मात्रा विन्दु. इति मु प्र [7] Gm1 adds स्यात् [8] नपुसकलिङ्ग Gm1

(पा.) क्षुद्रा—कण्टकारिका। व्यङ्गेत्यङ्गहीना। त्रिपु—परिमाणे स्यात्। परिच्छदे—कर्णमात्रा, हस्तमात्रा। अल्पे—सूपस्य मात्रा। परिमाणे—हस्तमात्रोऽङ्कुश.। मात्र कार्त्स्न्येऽवधारणे। कार्त्स्न्यार्थे—प्राणिमात्र न हिंस्यात्। अवधारणे—पयोमात्र भुङ्क्ते ॥ १७७ ॥

**आलेख्याश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः ॥ १७८ ॥**
**योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः।**
**निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ॥ १७९ ॥**

(वि) आश्चर्ये व्योम्नि [1]किर्मीर आलेख्ये चित्रमुच्यते[2]।
तिलके दन्तिकाया च [3]ताराभेदसुभद्रयोः ॥ 377 ॥
[4]गोदुम्व्यायामाखुपर्ण्यां चित्रा सर्पे सुरस्त्रियाम्।

चित्रीयत इति चित्रम्। 'चित्र[5] चित्रकरणे' ॥

दुर्गस्थाने नृपादीना कलत्र श्रोणिभार्ययो. ॥ 378 ॥

कल्यत इति कलत्रम्। 'कल शब्दसख्यानयो.' ॥

स्रुवादौ तीरमध्ये च राजमन्त्रिणि भाजने।
योग्ये वित्ते च याद्ये च प्रवेश्ये रूपकेऽपि[6] च ॥ 379 ॥
पर्णे पात्र भवेत् पात्र्या शुद्धयन्त्र्यो. स्त्रिया स्मृता।

पीयतेऽनेनेति पात्रम्। पायत इति वा। 'पा पाने' 'पा रक्षणे' ॥

पत्र भवेद् वाहने च पलाशगरुतोरपि ॥ 380 ॥

पतत्यनेनेति पत्त्रम् । 'पत्लृ गतौ' ॥

ग्रन्थनिर्दिष्टयो शास्त्र शस्त्रोत्पन्नेऽपि कथ्यते ।

[8]शास्यतेऽनेनेति शास्त्रम् । 'शासु अनुशिष्टौ' ॥

छुरिकाया भवेच्छत्री शस्त्र त्वायुधलोहयो ॥ 381 ॥

शस्यतेऽनेनेति शस्त्रम् । 'शसु हिंसायाम्' ॥ १७८–९ ॥

[1] किम्मीरे J2, K3 [2] इष्यते K4 [3] तार° J2 K4 [4] गोडुम्बाया K2
[5] चित्रिज आश्चर्ये K2, K4 [6] रूपकेषु K5 [7] शस्तोत्पन्न K5 [8] शिष्यते J2

(विव) आलेख्याश्चर्ययोश्चित्रम् । चीयते कुड्यपटादौ हरितालादिवर्णैरिति चित्रम् आलेख्यम्, सुरनरतुरगादिप्रकृति । 'चिञ् चयने'। 'अमिचिमिदिशसिभ्य क्त्र' (उ ४ १६५) इति क्त्रप्रत्यय. । चित्रयति कदाचिद् भवतीति चित्रम् आश्चर्यम्, आकस्मिकाकालकुसुमफलादि । चौरादि [1] । शेषे—

अथ चित्रके
[2]खे चित्र भाह्यप्सर सु स्त्र्याखुपर्णीसुभद्रयो ।
गोतुम्बौ दन्तिकाया च पुंसि स्याद् वह्निसंज्ञके ॥'

इति । चित्रक तिलकम् । खमाकाशम् । उभयत्र रूपभेदाद् नपुसकलिङ्ग । भ हस्तनक्षत्रानन्तरनक्षत्रम् । अहि सर्प [3] । चित्रा नामाप्सरोविशेष । [4]नक्षत्रादिदन्तिकान्तेषु स्त्रीलिङ्ग । चित्रमूलाद्यौषधिविशेषे पुलिङ्ग । कर्बुरवर्णे त्रिलिङ्ग प्रागुक्त (१, पृ १०१) ॥ कलत्र श्रोणिभार्ययो । श्रोणि कटिभाग । कल त्रायत इति कलत्रम्[5] । शेषे—'नृपतिप्रभृतीना तु दुर्गस्थान कलत्रकम्' इति । स्वार्थे कप्रत्यय पादपूरणार्थे । यथा—'पत्युस्त्विषामिह महौषधय कलत्रस्थान परैरनभिभूतममूर्वहन्ति' इति माघकाव्ये (शिशु ४ ३४) ॥ योग्यभाजनयो पात्रम् । दातार नरकपातनात् पाति रक्षतीति पात्रम् । योग्य कुलशीलविद्यासपन्न सप्रदानमित्यर्थ । [6]कृपापात्रमित्यादावुपचाराद् अर्हमात्रे प्रयोग । भाजनममत्रम् । शेषे—'रूपकेषु [7]प्रवेशार्हे पात्र स्याद् राजमन्त्रिणि' इति । रूपके नाटकादौ, प्रवेशार्हे नायकादौ । यथा—पात्रप्रवेश इति । मन्त्रिणि यथा—महापात्रमिति । 'पात्र

तदन्तरम्' इति गतम् (१, पृ. १५६)। 'पात्र स्रुवादिकम्' इति गतम् (१, पृ. ४६४)। अमत्रवचनः [8]पात्रशब्दो लिङ्गत्रयवानिति वक्ष्यते (३. ५. ४२)। तत्र स्त्रीलिङ्गे— 'पा पाने' 'पा रक्षणे' 'पै शोषणे' एभ्यो धातुभ्यः कर्तरि तृचि (३. १. १३३) स्त्रियां ङीप्प्रत्यये पात्री पानकर्त्री रक्षिका शोषिका च इति ॥ पत्र वाहनपक्षयोः। वाहनं बलीवर्दादिकम्। 'पत्रं पलाशं छदनम्' इति गतम् (१, पृ. २२३) ॥ निदेश-ग्रन्थयोः शास्त्रम्। [9]निदेशः आज्ञा। ग्रन्थः शाकरभाष्यमहाभाष्यादिः। 'शासु अनुशिष्टौ'। भावे करणे च औणादिकः [10]ष्ट्रन्। [11]शास्त्रशब्दाद् भवाद्यर्थे तद्धितोत्पत्तौ वाच्यलिङ्गः ॥ शस्त्रमायुधलोहयोः। आयुधं खड्गच्छुरिकादि। [12]लोह कालायसम्। 'स्याच्छस्त्री चासिपुत्री च' इति गतम्[13] (१, पृ. ५३६) ॥ १७८–९ ॥

[1] चौरादिक Gm1 [2] भे Gm1 [3] सर्पविशेष Gm1 [4] नक्षत्रादिपु Tj1, Tj2 [5] B6 adds 'तॅङ पालने' [6] Gm1 omits the sentence [7] प्रवेश्ये च Gm1 [8] पात्रीशब्द स्त्रीलिङ्गोऽप्यस्तीति लिङ्गसग्रहे वक्ष्यते Gm3, T1 [9] निर्देश T1 [10] 'सर्वधातुभ्य ष्ट्रन्' (उ ४ १६०) [11] शस्त्रे भव शास्त्रमिति शास्त्र वाच्यलिङ्गम् Gm1, Gm3 [12] कालायस लोहशब्देनोच्यते Gm1 [13] शस्यतेऽनेन। 'शसु हिंसायाम्'। 'दाम्नीशस ' (३ २ १८२) इति ष्ट्रन् इति भा दी (पृ ४६३)

(पा) आलेख्याश्चर्ययोश्चित्रम्। क्लीबे स्यात्। तिलके स्त्रियाम्। [1]'आलेख्याश्चर्ययोश्चित्र क्लीबे स्यात् तिलके स्त्रियाम्' इति रभस। कलत्र श्रोणिभार्ययो। दुर्गस्थानेऽपि स्यात्। 'दुर्गस्थाने नृपादीना कलत्र श्रोणिभार्ययो' इति [2]रुद्र ॥ योग्यभाजनयो—[3]पर्णयो। गरच्छुरिकयोरपि स्यात्। 'पत्र तु वाहने पर्णे छुरिकागरतोरपि' इति वैजयन्ती (पृ २२५, श्लो २०) ॥ निदेश—आयधलोहयो ॥ १७८–९ ॥

[1] A1 omits [2] रभस इति भा दी (पृ ४६३) [3] पक्षया C1

स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः।
मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं च नाम्नि च ॥ १८० ॥

(वि) जटाया [1]तरुमूल च नद्या स्यन्दनवन्त्रयो [2]।
दृष्टया गधिगुणे नेत्र [3]नेवम्निपु तु नेतरि ॥ 382

[4]नीयत इति नत्रम । णीञ प्रापण ॥

क्षत्र वप्र तीर्थतन्वोर्भार्यागणितशास्त्रयो ।

क्षीयत इति क्षत्रम । क्षि निवासगत्यो [5] ॥

सूकरस्य हलस्यापि [6]मुखाग्र पोत्रमच्यत ॥ 383 ॥

पूयत भरननति पोत्रम । पूञ पवन ॥

गोत्रा भुवि गवा वृन्द कुल नाम्नि नपुसकम[8] ।
गिरिगोपालभूपपु गोत्रस्तु परिकीत्यत[9] ॥ 384 ॥

गवा समूहो गोत्रा । गूयत शब्द्यतऽननति गोत्रम । गुङ अव्यक्त शब्द । गास्त्रायत इति गोत्रम[10] ॥ १८० ॥

[1] पादपमूल J2　[2] °अस्त्रयो K5　[3] नव तु K6　[4] नीयतऽनन K4 नयनि K2 K5　[5] K6 adds क्षि क्षय　[6] मख्याग्र J°　[7] पूङ K6 पूयी अपसारण J° K2　[8] नपुसक K3 K6　[9] °वच्यत J°　[10] K4 K5 add त्रङ पालन

(विव) स्याज्जटांशुकयोर्नेत्रम । जटा वृक्षमूलम् । अशुक नत्राख्यपट्ट निर्मित[1] वस्त्रम । वस्त्रमात्रमिति केचित । 'नत्रक्रमेणोपरुरोध सूयम' इति कालिदास (रघु ७ ३९) । नीयतेऽनेनेति वा नयतीति वा नत्रम । 'दाम्नी शसयुयुज ' इत्यादिना (३ २ १८२) ष्ट्रन[2] । अत्र प्रताप —

'नत्र पादपमूले स्यात स्यन्दने लेपनेऽपि च ।
वस्त्रे मथिगुणे नाडया नेत्र नतरि तु त्रिपु ॥'

इति । स्यन्दनो रथ । मथिगुणे मन्थानस्याकर्षणरज्जौ । 'मन्थान मन्दर कृत्वा[3] नत्र कृत्वा च वासुकिम' इति पुराणम् । नाडी सिरा । नेतरि नायक । यथा— 'ये दवा पुर सदोऽग्निनेत्रा ' इति श्रुते (काठकसहिता १५ २) ॥ क्षत्र पत्नी शरीरयो । क्षिणोति क्षीयते वा क्षेत्रम । 'क्षिणु हिंसायाम' । क्षि क्षये' । ष्टनप्रत्यय[4] (उ ४ १६०) । अत्र प्रताप —

'क्षेत्र कलत्रे केदारे सिद्धस्थानशरीरयोः ।
क्षेत्र गणितशास्त्रे च ॥'

इति । केदारो वप्र. । सिद्धस्थान श्रीपर्वतादि ॥ मुखाग्रे—पोत्रम् । क्रोडो वराहः । हल लाङ्गलम् । तस्य मुखाग्र फालाञ्जलप्रदेशः । पुनात्यनेन भूमि शोधयतीति पोत्रम् । 'हलसूकरयोः पुव' (३. २. १८३) इति ष्ट्रन् ॥ गोत्रं तु नाम्नि च । गूयते शब्द्यतेऽनेन [5]देवदत्तादिरिति गोत्र नामधेयम् । शेषे—'गोत्रस्त्राता गवा त्रिषु' इति । गास्त्रायत इति गोत्रम ।

'गोत्र कुले बले नाम्नि गोत्रस्तु धरणीधरे ।
गोत्रा भुवि गवां वृन्दे' ॥

इत्यजयः ॥ १८० ॥

[1] Gm1 omits निर्मित [2] ष्ट्रन्प्रत्यय Gm1 [3] प्रथमपाद रामायणे दृश्यते (१ ४५ १८) [4] मर्वधातुभ्य ष्ट्रन्' [5] Gm1 omits [6] Gm1, Tv add 'आताऽनुपसर्गे क'

(पा) स्याज्जटाशुकयोर्नेत्रम् । जटा नाम [1]तरुमूलम् । 'नेत्र नाड्या तरोर्मूले वस्त्रे दृशि मथो गुणे' इति वैजयन्ती (पृ २२५, श्लो १७) ॥ क्षेत्र पत्नीशरीरयो । सिद्धस्थानकेदारयोरपि स्यात् । 'क्षेत्र शरीरे केदारे सिद्धस्थान-कलत्रयो' इति विश्व (पृ १२८, श्लो ४४) ॥ मुखाग्रे—गोत्र तु नाम्नि च । कुलेऽपि स्यात्[2] ॥ १८० ॥

[1] दाग्धनु A1 [2] C1 adds गवा गमूहऽपि

**सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।**
**अजिरं विषये कायेऽप्यम्बरं व्योम्नि वाससि ॥ १८१ ॥**

(वि) आच्छादने सदादाने यज्ञे [1]सादनदम्भयो ।
वने सता त्रातरि च द्विरावादौ गुरालये ॥ 385 ॥
[2]गहेत्यर्थे च पाथेये सत्र गद्देयपापयो ।

[3]सीदत्यनेनेति सत्रम् । षद्‌लृ विशरणादौ' ॥

रूपादिविषय शीघ्र[4] मातरिश्वनि दर्दुरे ॥ 386 ॥
अजिर [5]दुर्जय चैव शरीराङ्गणयोरपि ।

[6]अजन्ति गच्छन्तीन्द्रियाण्यत्रेति अजिरम । अज गतिक्षपणयो ॥

अम्बर च भवद् व्योम्नि वसन च सुगन्धिनि ॥ 387 ॥

अम्बते शब्दयतीत्यम्बरम् । अबि शब्द ॥ १८१ ॥

[1] साधन? K6　[2] सहत्यर्थे K5　[3] अत for अनन K3　[4] नभ्रे K6, गात्रे K5　[5] दुधरे K4 K6　[6] अज्यत J2 K5

(विव ) सत्रमाच्छादने—वनेऽपि च । आच्छादनशब्देन गृह विवक्षितम्, न तु वस्त्रमिति सुबोधिनीकार । 'आसीरन्नुपयन्ति' [1]इत्यादिब्राह्मणविहित-बहुकर्तृको यज्ञविशेषोऽत्र यज्ञशब्देन विवक्षित । सदादानमप्यन्नस्यैव । न तु गवादीनामपि । ज्ञानसत्रम्, विद्यासत्रमित्यादौ तु प्रयोग औपचारिक । वनमरण्यम् । 'अरण्य विपिन सत्रम्' इति प्रताप । 'अयमेव मृगव्यसत्रकाम ' इति भारवि (किरा १३ ६) । सीदन्त्यत्रेति सत्रम् । 'षद्लृ विशरणादौ' । अधिकरणे ष्ट्रन्प्रत्यय (उ ४ १६०) । शेषे—

'सत्र दम्भे सादने च सता [4]त्रातरि च त्रिषु ।
क्वचित् पापेऽथ सह्ये सत्राव्ययमधीनवत् ॥'

इति । सीदन्ति नश्यन्ति अनेनेति सत्रम् । दम्भ कपट । सीदतेर्ण्यन्तात् त्रन्प्रत्यये 'बहुलमन्यत्रापि'[5] (उ २ २५) इति णिलुकि सत्रम् । सादनमित्यर्थ । सत त्रायत इति सत्र, सत्पुरुषाणा रक्षक । तत्र विशेष्यनिघ्न । क्वचिदेव वृत्तिविषये सत्रशब्द पापवचन । यथा—'कण्व पाप चिकीर्षति' इत्यस्वपदविग्रहे 'सत्र-कष्टकक्षकृच्छ्रगहनेभ्य कण्वचिकीर्षायाम्'[6] (वा ३ १ १४) इति क्यङ्प्रत्यये सत्रायते पाप कर्तुमिच्छतीत्यर्थ । सह्यो देये सदधीने इत्यर्थद्वये 'तदधीनवचने' (५ ४ ५४) 'देये त्रा च' (५ ४ ५५) इति त्राप्रत्यये सत्राकरोति । 'त्र्यय इति वाच्यम्' (वा १ ४ ७४) इति सत्राशब्दोऽव्ययम । 'किंस्वित् प्रत्युत यच्च कच्चन न च सत्र सम साकम ' इति गणरत्नमहोदधौ (१ ५) उक्तत्वात

[8]सत्रमिति मकारान्तमव्ययमप्यस्ति ॥ अजिरं विषये कायेऽपि । विषयो रूपादिः । कायः शरीरम् । अजन्ति क्षरन्ति चक्षुरादीन्यत्रेति अजिरम् । 'अज गतिक्षेपणयोः' । 'अजिरशिशिर ...' इत्यौणादिकनिपातनात् (उ. १. ५६) साधुः । अपिशब्दादङ्गणे प्रागुक्तम् (१, पृ. २०३) ॥ अम्बरं व्योम्नि वाससि । अम्बते शब्दं करोतीति अम्ब्यते वा अम्बरम् । 'अबि शब्दे'[9] । सुगन्धिद्रव्यभेदेऽप्यम्बरशब्दः । तथा च विश्वप्रकाशे—'अम्बर [10]वसने व्योम्नि कार्पासे च [11]सुगन्धिनि' इति (पृ. १३३, श्लो. १०२) ॥ १८१ ॥

[1] विधायकश्रुत्या बिहितो बहुयजमान' Gm1 [2] °शब्देनोच्यते Gm1, T1 [3] त्वन्प्रत्यय Tj1, Tj2 [4] सनामवितरि B5, Gm3 [5] B6 adds सज्ञाछन्दसो [6] Gm1 adds इति वक्तव्यम् [7] 'साक्षात्प्रभृतिषु च्व्यर्थवचनम्' इति काशिकायाम् (१, पृ ७८) [8] सत्रा इत्येव मु ग्र (पृ ६) [9] बाहुलकादर इति भा दी (पृ ४६८) [10] वाससि इति मु ग्र [11] सुगन्धके इति मु ग्र

(पा.) सत्रमाच्छादने—अम्बर व्योम्नि वाससि ॥ १८१ ॥

**चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च ।**
**स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रे तु गोपुरम् ॥ १८२ ॥**

(वि) [1]चक्रवाके जलावर्ते सेनायामायुधान्तरे ।
कौम्भकारे तैलिकीये साधने रणराष्ट्रयो. ॥ 388 ॥
[2]ग्रामजाले रथाङ्गे च चक्र समभिधीयते ।

चकतीति चक्रम् । 'चक तृप्तौ प्रतिघाते च' ॥

मोक्षे [3]परब्रह्मणि च वर्णेऽप्यक्षरमुच्यते ॥ 389 ॥

[4]न क्षरतीत्यक्षरम । 'क्षर सञ्चलने' ॥

सलिले चैव पयसि क्षीरशब्दोऽभिधीयते ।

घस्यतेऽद्यत इति क्षीरम् । 'घस्लृ अदने' ॥

भूरि स्वर्णे शक्रविष्णुविधातृवहृषु स्मृत ॥ 390 ॥

[5]भवतीति भूरि ॥

[6]काम्पिल्ले [7]वारिणि स्वर्णे चन्द्र कर्पूरसोमयो ।

चन्दत्याह्लादयतीति चन्द्र । 'चदि आह्लादने दीप्तो च' ॥

द्वारमात्रे पुरद्वारे मुस्तके गोपुर स्मृतम् ॥ 391 ॥

गोप्यते पौरैरिति गोपुरम् । 'गुपू [8]रक्षणे' ॥ १८७ ॥

[1] चत्रवाते J2 [2] ग्रामजाते K6 [3] परे ब्रह्मणि K5 [4] न क्षरमक्षरम् K2, K4 [5] K5 adds भू सत्तायाम', अतिशयेन बहु K3, K4 [6] काम्पिल्ये K6 [7] वारणे K6 [8] सरक्षणे J2

(विव.) चक्र राष्ट्रेऽपि । चकतीति चक्रम् । 'चक तृप्तौ प्रतिघाते च' । शेषे—

'चक्र सैन्ये ग्रामजाले सग्रामे साधनान्तरे ।
तैलिकीये कौम्भकारे चावर्ते चायुधान्तरे ॥'

इति । तैलिकसबन्धिनि कुम्भकारसबन्धिनि च साधनविशेषे इत्यन्वय' ।

'चक्र कोके व्रजे पुसि क्लीबे सैन्यरथाङ्गयो ।
ग्रामजाले कुम्भकारभाण्डे [1]चावर्तराष्ट्रयो ॥'

इति त्रिकाण्डशेषश्च (पृ ३३, श्लो ६०४) ॥ अक्षर तु मोक्षेऽपि । मोक्षो नि.श्रेयसम् । न क्षरति न नश्यतीत्यक्षरम् । 'क्षर सचलने' (३ १. १३४) । शेषे— 'वर्णे ब्रह्मण्यक्षर स्यात्' इति । अश्नुते श्रोत्र व्याप्नोतीत्यक्षरम् । 'अशू व्याप्तौ' । 'अशेः सर' (उ ३ ७०) इति [2]सरप्रत्यय । 'अक्षर ब्रह्मवर्णयोः' इति रुद्रश्च ॥ क्षीरमप्सु च । घस्यते आस्वाद्यत इति क्षीरम् । 'घस्लृ अदने' । 'घसेः किच्च' (उ. ४. ३४) इति ईरन् । 'गमहन . ' इत्यादिना (६ ४ ९८) उपधालोप । 'शासिवसिघसि ' इत्यादिना (८ ३. ६०) षत्वम् । चशब्दाद् दुग्धे प्रागुक्तम् (१, पृ. ५८५) ॥ स्वर्णेऽपि भूरिचन्द्रे द्वे । भूरि च चन्द्रमिति च नामद्वय स्वर्णेऽपि वर्तते । भवतीति भूरि । 'अदिशदिभूशुभिभ्य' क्रिन्' (उ ४ ६६) इति क्रिन्-

प्रत्ययः। अपिशब्दार्थ· शेषे—'प्राज्याच्युतविधातृषु'[4] इति। विश्वप्रकाशेऽपि—'भूरिर्ब्रह्माच्युतेन्द्रेषु[5] भूरि प्राज्यसुवर्णयोः' इति (पृ. १३१, श्लो. ७६)। चन्दतीति चन्द्रः। 'चदि आह्लादने'। रक्प्रत्ययः[6] (उ. २. १३)। शेषे—'चन्द्रः शुभ्रांशुकर्पूरकम्पिलेषु पुमान् भवेत्' इति॥ द्वारमात्रेऽपि गोपुरम्। गृहादेः यस्य कस्यचिद् द्वारमात्रे। अपिशब्दात् 'पुरद्वार तु गोपुरम्' इति गतम् (१, पृ. २०५)। 'प्लवगोपुरगोनर्द...' इत्यपि गतम्[7] (१, पृ. २९४)॥ १८२॥

[1] राष्ट्रे च दृश्यते Gm1, Tv, मु ग्र च [2] सरन्प्रत्यय B6, 'अशे सरन्' इत्युज्ज्वलदत्तादिपाठस्तु प्रामादिक निस्स्वरापत्ते' इति कौमुदीव्याख्यायाम् (पृ ५१७) [3] °चन्द्रे द्वे इति विवरणाभिमत पाठ [4] Gm1, Tj2 add इन्द्रे च भूरि [5] °अच्युतेशेषु इति मु ग्र [6] स्फायितञ्चि मन्दिचन्दि शुभिभ्यो रक् [7] इत्यप्युक्तम् Tj2

(पा) चक्र राष्ट्रेऽपि। [1]सैन्येऽपि स्यात्॥ अक्षर तु मोक्षेऽपि। वर्णेऽपि स्यात्॥ क्षीरमप्सु च। दुग्धेऽपि स्यात्॥ स्वर्णेऽपि भूरिचन्द्रौ द्वौ। प्राज्यशशाङ्कयोरपि स्याताम्॥ द्वारमात्रेऽपि गोपुरम्। [2]पुरद्वारेऽपि स्यात्॥ १८२॥

[1] B3 omits the sentence [2] A1, C1 add मुस्तके

गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे।
पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम्॥ १८३॥
मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे।

(वि) गुहाया दम्भगहननिकुञ्जेषु च गह्वरम्।

गाह्यत इति गह्वरम्। 'गाहू विलोडने'॥

उपह्वर तु विजने समीपे चापि कथ्यते॥ 392॥

[1]उपह्वयतेऽत्रेत्युपह्वरम्। 'ह्वेञ् स्पर्धायां शब्दे च'॥

पुर प्रथमयो [2]प्रान्ते प्रधानाधिक्ययोरपि।
उपर्यालम्बनेऽप्यग्रमाने[3] चाग्रमुदीर्यते॥ 393॥

अगत्यतेऽत्यग्रम्। 'अग[4] कुटिलायां गतौ'॥

अगार नगर काय गुग्गुलौ मकरालय ।
पुर पाटलिपुत्र च मन्दिर चापि कथ्यते ।। 394 ।।

अगार गृहोपरि गृहम । पुरति पूर्यते वति पुरम । पुर अग्रगमने'[5] ।।

उपद्रवे जनपद राष्ट्रशब्दोऽभिधीयते ।

राजतीति राष्ट्रम । राजृ[6] दीप्तौ' ।। १८३ ।।

[1] उपह्वयन्ति J2 K5, K3, K4 omit six lines　　[2] अग्र J2
[3] आलम्बिते K6　　[4] K5, K6 omit अग उध्वगमन J2 K2　　[5] K3, K4 add पूरी आप्यायन　　[6] K3 K5 omit

(विव) गहादम्भौ गह्वरे द्वे। पर्वतादिगलमकृत्रिमविवर गुहा। दम्भ कपट। गाह्यत इति गह्वरम्। उणादौ 'छित्वरछत्वर　　नीवरगह्वर　　' (उ ३ १) इति निपातनात् साधु। [1]'गह्वर तु गुहादम्भौ निकुञ्जे गहनेऽपि च' इति विश्वप्रकाश (पृ १३७, श्लो १५५) ।। रहोऽन्तिकमुपह्वरे। रहो निर्जनस्थानम्। अन्तिक समीपम्। उपह्वयतेऽत्रेत्युपह्वरम्। छित्वरादावुपह्वरमिति धातुवृत्तावुक्तत्वाद् उणादौ [2]'छित्वर　　सयद्वरा' (उ ३ १) इत्यादिना निपातनात् साधु ।। पुरोऽधिकमुपर्यग्राणि। पुर पूर्वो देश। यथा—अग्रेसरैर्वाजिभिरिति। अधिकमुचितादतिरिक्तम्। यथा—जीवेत् साग्र वर्षशत मिति। [3]वृक्षाग्रमित्युपरिभागे। [4]अगत्यत्रेत्यग्रम्। 'अगि गतौ'। 'ऋज्रेन्द्राग्रवज्र माला' इति रन्नन्तो निपात्यते (उ २ ३१)। शेषे—'अग्रमालम्बने प्रान्ते प्रथमे [5]प्रमिताशने' इति। त्वदग्रमस्मज्जीवनमित्यालम्बने। 'स्वल्प वापि शिवस्याग्रे [6]दत्तमक्षय्यता व्रजेत्' इति प्रान्ते। अग्रगण्य इति प्रथमे। अग्र ग्रासचतुष्टयम् इत्यशनपरिमाणे। पराध्यग्रेति गतम् (२, पृ ८१) ।। अगारे नगरे पुर मन्दिर च। पुर मन्दिर चेति शब्दद्वयमत्र विधेयम्। शेषे—

'गृहोपरि गृहे पुरम ।
देहे पाटलिपुत्रे च गुग्गुलौ कथित पुर ।
पुराव्यय पूर्वकाले ।।'

इति। गुहोपरिगृह इत्यनेन अमरसिंहोक्तमगारपदं शेषकारेण सविशेष व्याख्यातम्,[7] न तु मूलग्रन्थानभिहितमर्थान्तरमुच्यत इति ज्ञेयम्। यथा—देवस्य मल्लारेः पुरमिति। मन्दिरशब्दोऽप्यर्थद्वये स्यात्। शेषे—'मन्दिरो मकरालये' इति। अथ राष्ट्रो—उपद्रवे। विषयो जनपदः। यथा—'राष्ट्रदुर्गबलानि' इति (१, पृ. ४६३)। उपद्रवः पीडाहेतुः। यथा—परराष्ट्रे कृता[8] बाधा इति। राजत इति राष्ट्रम्। 'राजृ दीप्तौ'। ष्ट्रन्प्रत्ययः (उ. ४. १६०)। 'व्रश्च...' इत्यादिना (८ २. ३६) षत्वम्॥ १८३॥

[1] गह्वरस्तु गृहादम्भनिकुञ्जगहनेष्वपि इति मु ग्र [2] बाहुलकाद् उपपूर्वय 'हु दानादानयो' इत्यस्मात् ष्वरच्युकारलोप इति कौमुदीव्याख्यायाम् (पृ ५१३) [3] साग्रम Tj2 [4] अङ्गत्यनेनेत्यग्रम्। 'अगि गतौ'। 'अङ्गेर्नलोपश्च' इति रक्प्रत्यय B5, B8 [5] परिमाणेऽशनस्य च Tj2 [6] दत्त भवति चाक्षयम् Tj2 [7] °तमिति ज्ञेयम Gm1, T\ [8] कृत भयमिति Tj2

(पा) गुहादम्भो गह्वरे द्वे। निकुञ्जोऽपि स्यात्। 'क्लीब दम्भे गुहाया च निकुञ्जे पुसि गह्वर' इति रभस। रहोऽन्तिकम्—विषये स्यादुपद्रवे॥ १८३॥

दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ॥ १८४॥
तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे।
औशीरं चामरे दण्डेऽप्यौशीरं शयनासने॥ १८५॥

(वि) [1]दरोऽस्त्रिया भये श्वभ्र ईषदर्थे दरोऽव्ययम्॥ 395॥

दीर्यंत इति दरम्। 'दृ भये', 'दृ विदारणे'॥

[2]मणिवेधकरत्ने च[3] पवावपि महौषधौ।
[4]बालकामनकीयोगे [5]गुडूच्या वज्रमुच्यते॥ 396॥

वजत्यनापायेन[6] गच्छतीति वज्रम्। 'वज व्रज गतौ'॥

प्रधाने तन्तुवाये च सिद्धान्ते च परिच्छदे।
इतिकर्तव्यताया च श्रुतिशाखान्तरेऽपि च॥ 397॥
निम्ने व्याकरणे [7]हेतौ स्यात् कुटुम्बार्थकर्मणि।
तन्त्र शास्त्रे प्रक्रियाया व्यापौ साधारणे तथा॥ 398॥

वीणागुणे सिराया च तन्त्री वपुषि चोच्यते ।

तन्त्र्यत इति तन्त्रम् । 'तत्रि कुटुम्बधारणे' ।।

चामरे चैव शयने स्याद् दण्डासनयोरपि ।। 399 ।।
उशीरसंबन्धिनि च त्रिष्वौशीरमुदाहृतम् ।

[8]उशीरस्येदमौशीरम् ।। १८४–५ ।।

[1] दर गुहा भयविले $K_5$ [2] °भेदक° $J_2$ [3] चपलेऽपि $K_5$ [4] वालिका° $K_2$, $K_3$ [5] गुलूच्या $K_6$ [6] $J_2$, $K_4$ omit [7] भेदे $K_5$ [8] उश्यत इत्यौशीरम् $K_3$

(विव.) दरोऽस्त्रियां भये श्वभ्रे । दरति बिभेत्यस्मादिति दरो भयम् । 'दृ भये' । [1]भयादित्वादच्प्रत्ययः (वा. ३. ३. ५६) । तत्रैव पुंनपुंसकलिङ्गः । दीर्यत इति दरः । श्वभ्रं गर्तः । श्वभ्रे तु दरी इति ङीबन्तोऽप्यस्ति । शेषे—'ईषदर्थे दराव्ययम्' इति । दरेति ह्रस्वान्तमव्ययम् । यथा—'दरदलितहरिद्रापिञ्जराण्यङ्गकानि' इति प्रयोगः ।। वज्रोऽस्त्री हीरके पवौ । हीरको मणिवेधकरं रत्नम् । पविः कुलिशम् । 'वज्रं कुलिशशस्त्रयोः । मणिभेदे रत्नभेदे' इति केशवस्वामी[2] (नाना. सं. पृ. १४२, श्लो. ११५८–९) । वजति प्रतिबन्धराहित्येन गच्छतीति वज्रम् । 'वज व्रज गतौ' । 'ऋज्रेन्द्राग्रवज्र ...' इत्यादिना (उ. २. ३१) रन्प्रत्ययः । शेषे—

'वज्रस्त्वामलके योगे त्रिलिङ्गः स्यान्महौषधौ ।
गुडूच्याम् ।।'

इति । योगो विष्कम्भादिषु पञ्चदशो वज्राख्यः । महौषधिलक्षणं तु स्वच्छन्दभैरवे उक्तम् । यथा—

'वज्रवल्ली समाख्याता सपुष्पा क्षीरिणी भवेत् ।
स्नुहिपत्रोपमैः पत्रैस्तत्क्षणात् सूतबन्धिनी[3] ।।'

इति ।। तन्त्रं—परिच्छदे । प्रधाने यथा—स्वतन्त्रः, स्वप्रधान इत्यर्थः । अत्र सिद्धान्तशब्देन [4]तद्व्युत्पादको ग्रन्थो विवक्षितः । यथा—कणादतन्त्रम्, भाट्टतन्त्रमिति ।

ऊयत इति वायः। सूत्रं चासौ वायश्चेति सूत्रवायः।,स च तन्त्रमित्युच्यते। तथा च न्यासकारः—'दैर्घ्येण प्रसारितास्तन्तवः तन्त्रमित्युच्यते' इति। अन्ये तु—येन दण्डादिना कुविन्दास्तन्तुवयन[5] कुर्वन्ति स तन्तुवायः। स सूत्रवायशब्दनोच्यत इत्याहुः। शलाकारूप इति केचित्। परिच्छदः परिकरः। यथा—बहुतन्त्रोऽल्पतन्त्र इति। तनोति तन्यते वा तन्त्रम्। 'तनु विस्तारे'। ष्ट्रन् (उ. ४. १६०)। 'तत्रि कुटुम्बधारणे' इत्यस्माद्वा तन्त्रम्। शेषे—

'...अथ तन्त्रं स्यात् कुटुम्बार्थे च कर्मणि।
इतिकर्तव्यतायां च साधारणविधौ तथा।
सिरायाममृतायां च तन्त्री वीणागुणे तनौ॥'

इति। कुटुम्बार्थे व्यापारे यथा—कृषितन्त्रम्, सेवातन्त्रम् इति। इतिकर्तव्यताया यथा—आग्नेयविकाराणां पौर्णमासतन्त्रम्,ऐन्द्राग्नविकाराणाममावास्यातन्त्रम् इति। साधारणविधिर्नाम 'एकस्यैवानेकयोस्तुल्यव्यापारः। तथा च [6]सकृत्प्रयुक्तस्यानेककर्तृतुल्योपकारकस्तन्त्रम् इति मीमांसकाः। यथा—'मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्' इति (या. स्मृ. १. १०. २२८)। सिरा धमनिः। अमृता गुडूची। तनुः कायः। सिराद्यर्थचतुष्टये रूपभेदेन स्त्रीलिङ्गः। 'अवितॄस्तृतन्त्रिभ्य ईः' (उ. ३. १५६) इति ईप्रत्यये ङचन्तत्वाभावात् सुलोपस्याभावे तन्त्रीरिति विसर्गान्तं रूपं भवति। 'भैषज्य भेषज जायुरगदस्तन्त्रमौषधम्' इत्यायुर्वेदनिघण्टुदर्शनाद्* औषधेऽपि तन्त्रशब्दः। वैजयन्त्यामपि—'तन्त्रं स्वराष्ट्रचिन्ता[7] स्यात्' इति (पृ. २२४, श्लो. ११)। यथा 'तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता' इति माघकाव्ये (शिशु. २. ८८)॥ औशीरं—शयनासने। चामरं प्रकीर्णकं, दण्डो यष्टिः, इत्यर्थद्वयमिति सुबोधिनीकारः। चमरस्यायं चामर इति दण्डविशेषणमिति सुभूतिचन्द्रः। शयनं मञ्चः। आसनं पीठम्। शयनं [8]स्वप्नः, आसनमुपवेशनमिति केचित्। पुनरौशीरग्रहणादेकयोक्त्या शयनासनयोरौशीरशब्दो वर्तत इति कैश्चिद् व्याख्यातम्। उश्यते काम्यत इति औशीरम्। 'वश कान्तौ'। 'वशेः कित्' (उ. ४. ३१) इति ईरन्प्रत्ययः। कित्वात् संप्रसारणम् (६. १. १६)। प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः (५. ४. ३८)। उशीरस्येदमिति विवक्षायाम् औशीरशब्दो वाच्यलिङ्गः॥ १८४–५॥

[1] 'दृ हिंसायाम्' इति चेद् 'अज्विधौ भयादीनामुपसंख्यानम्' (वा ३ ३ ५६) इति अच्। 'ग्रहवृदृनिश्चिगमश्च' (३ ३ ५८) इत्यप् वा। 'दृ भये' इति चेत् 'ऋदोरप्' इत्येव

सुवचम्　[2] 'वज्र त्वस्त्री कुलिशशस्त्रयो । मणिवेधे रत्नभेदे' इति मु ग्र
[3] सूरज फले Tj2　[4] सिद्धान्तव्युत्पादक Tj2　[5] तन्तून् वाय कुर्वन्ति Tj2.
[6] यत् सकृत्कृत बहूनामुपकरोति तत तन्त्रमित्युच्यते इति शाबरभाष्यम् (११ १ १)
[7] तन्त्र स्वराष्ट्रव्यापारे इति मु ग्र　[8] स्वाप Tj2　* धन्वन्तरीयनिघण्टौ 'भेषज्य भेषज जैत्रमगदो जायुरौषधम्' इत्येव दृश्यते (पृ ३१०)

(पा ) दरोऽस्त्रिया भये श्वभ्रे। ईषदर्थेऽव्ययम्। 'ईषदर्थेऽव्यय[1] दरम्' इति विश्व (पृ १२६, श्लो ११) ।। वज्रोऽस्त्री हीरके पवौ। हीरको रत्नभेद । 'वज्रोऽस्त्री हीरक पुमान्' इति रत्नपर्यायेषु वैजयन्ती (पृ ४४, श्लो ३६) ।। तन्त्र—परिच्छदे। 'एकस्यैवोभयार्थत्वे कुटुम्बव्यापृतावपि'। प्रधान मुख्यम्। स्वतन्त्र परतन्त्र । सिद्धान्त शास्त्रम्। सूत्रवाय [2] कुविन्दोपकरणम् ।। औशीर—शयनासने। पुनर्वचन शयनासनयो [3]समुच्चयनार्थम्। 'औशीर शय्यासनयो ' इति गुणाध्याये वैजयन्ती (पृ १८७, श्लो १७) ।। १८४–५ ।।

[1] दरोऽव्ययम B3, C1, दराव्ययमिति मु ग्र　[2] सूत्रवाप इति परिजाताभिमत पाठ　[3] समुच्चयाभिधानार्थम A1

**पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले ।**
**व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः ।। १८६ ।।**

(वि ) करिहस्ताग्रजलयो पद्मे व्योम्नि च पञ्जरे ।। 400 ।।
खड्ग तीर्थे भेषजे च द्वीपे रोगे विहङ्गमे ।
वाद्यभाण्डमुखे [1]सर्पे कारण्डे पुष्कर स्मृतम् ।। 401 ।।

पुष्णातीति पुष्करम्[2] ।। १८६ ।।

[1] सर्प सर्पविशेष J2　[2] पुष्कर K6, K2, K4 add 'पुष पुष्टौ'

**(विव ) पुष्कर—तीर्थौषधिविशेषयो । मृदङ्गादिवाद्याना ताडनस्थान[1] वाद्यभाण्डमुखम्। खड्गफल नाम त्सरोरुपरि[2] धाराद्वययुक्तो भाग । तीर्थविशेषो हिमवत्पार्श्वे प्रसिद्ध.। 'कार्तिक्या पुष्कर श्रेष्ठम्' इति पुराणे। ओषधिविशेषे यथा—पुष्करमूलमिति । पुष्णातीति पुष्करम् । 'पुष पुष्टौ' । 'पुष क्ति'**

(उ. ४. ४) इति[3] करन्प्रत्ययः । शेषे—'द्वीपे सर्पे पुष्करः स्यात्' इति । पुष्कराख्यमन्तरीपं[4] द्वीपः स्यात् । पुष्कराख्यः सर्पविशेषश्च ॥ १८६ ॥

[1] वादन° Tj1, Tv ; ताडनादि° Tj2 [2] खड्गमुष्टेरपरि Tj2 [3] B5, B6 add कर्तरि [4] Tj2 omits अन्तरीपम्

(पा) पुष्कर करिहस्ताग्रे—औषधविशेषयोः ॥ १८६ ॥

**अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।**
**छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ १८७ ॥**

(वि.) अवधाववकाशे चाप्यन्तर्धौ[1] भेदमध्ययोः ।
परिधाने च तादर्थ्ये विनार्थबहिरर्थयोः ॥ 402 ॥
आत्मीयान्यार्थयोश्छिद्रे प्रस्तावेऽन्तरमात्मनि ।

अन्त गतीत्यन्तरम् । [2]' रा दाने ' ॥ ॥ १८७ ॥

[1] अन्तर्धानिभमध्ययो K5, K6 [2] J2, K5 omit.

(विव.) अन्तरं—अन्तरात्मनि च । अथार्यावृत्तम् । अवकाशो [1]द्रव्यान्तरानवरुद्धःप्रदेशः। यथा—अस्माकमन्तरं देहि, अत्रान्तरे गृहाः कार्याःइति। क्रियान्तरानवरुद्धः कालोऽप्यवकाश उच्यते । यथा—दत्तप्रतिदानमनतिरमणीयम्[2] । अस्माकमिदमन्तरम् । अनतिक्रमणीयो देशः कालो वा अवधिः । यथा—अनयोर्ग्रामयोः[3] सेतुरन्तरम् । [4]मासान्तरादिदं देयमिति । परिधाने यथा—अन्तरे शाटकाः । उपसंव्यानमित्यर्थः । उपसंव्यानबहिर्योगयोरर्थयोः सर्वनामसु [5]पाठात् पुंलिङ्गत्वम् । अन्तर्धौ व्यवधाने यथा—जवनिकान्तरस्तिष्ठति इति । पर्वतान्तरितो देश इति । भेदविशेषे यथा—' नान्तरज्ञाः श्रियो जातु ' (किरा. ११. २४) । महदन्तरं मेरुसर्षपयोः इति । तादर्थ्ये यथा—ओदनान्तरस्तण्डुलः[6] इति । छिद्रं सुषिरम् । यथा—कुड्यान्तरे प्रविष्टश्चोर इति । अथवा छिद्रं रन्ध्रम् । परावस्कन्दनानुकूलमित्यर्थः । यथा—प्रहरेदन्तरे शत्रुमिति । त्रिभुवनच्छिद्रपिधानव्रतमित्यादौ छिद्रशब्दो व्यसनवचनः । तदप्यन्तरमुच्यते । आत्मीये यथा—अयमभ्यन्तरो मम इति । विनार्थे यथा—अन्तरे भवमन्तरीयं विनाभूतम्, ततो नञ्समासे नान्तरीयकम्, अविनाभूतमित्यर्थः । बहिरर्थे यथा—अन्तरे चण्डालगृहा इति । 'अन्तरं बहिर्योगोपसंव्यानयोः'

(१. १. ३६)। बाह्याश्चण्डालगृहा इत्यर्थः। अवसरे यथा—'अत्रान्तरे किमपि ... मान्मथमाविरासीत्' इति (माल. मा. १. २६)। मध्ये यथा—[7]इदानीमन्तरे जाताः सरित्सागरपर्वताः इति। अन्तरात्मनि यथा—अन्तरात्मा, अन्तं रातीत्यन्तरम् इति। शेषे—'अन्तरः सदृशान्ययोः' इति। सदृशे यथा—'स्थानेऽन्तरतमः' इति (१. १. ५०)। अन्यस्मिन् यथा—स्थलान्तरं गच्छाम इति। यद्यप्यत्राविशेषेणान्तरमिति नपुंसकलिङ्गमुक्तम्, तथापि केषुचिदर्थविशेषेषु नपुंसकत्वम्, न सर्वत्र। [8]तथा च वैजयन्त्याम् (पृ. २५७, श्लो. २)—

'अन्तरः परिधानीये बाह्ये स्वीयेऽन्तरात्मनि।
[9]क्लीबं मध्ये चावकाशे तादर्थ्येऽवसरेऽवधौ।
[10]विशेषविवरान्तर्धिष्ववस्थानविनार्थयोः॥'

इति। मध्यादिष्वर्थेषु क्लीबमित्यर्थः॥ १८७॥

[1] अनन्यानवरुद्ध Tv [2] दत्तप्रतिदानादावनतिक्रमणीयम् Tv [3] क्षेत्रयो Gm3, Tj1 [4] मासान्तर देयम् Tv [5] 'अन्तर बहिर्योगोपसव्यानयो' (१. १ ३६) [6] ओदनान्तर तण्डुलान्तर B6 [7] 'आवयोरन्तरे जाता पर्वता सरितो द्रुमा' (महानाटक ५ २५) इति स्वामी (पृ ३१५) [8] तदुक्तम् Tv [9] क्ली तु इति मु ग्र [10] °अवसानविनार्थयो इति मु ग्र

(पा) अन्तर—अन्तरात्मनि च। [1]सादृश्यान्यार्थयोरपि स्यात्। गकारस्य घकारोऽन्तरतम। जन्मान्तरागत शीलम्[2]॥ १८७॥

[1] सदृश° B3 [2] B3, C1 omit

मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम्।
शार्वरं त्वन्धतमसे घातुके मेद्यलिङ्गकम्॥ १८८॥

(वि) मुस्तेऽपि पिठर कुम्भे भवेन्मन्थानदण्डके॥ 403॥

पिठ्यते क्लिश्यतेऽनेनेति पिठरम्। 'पिठ [1]हिंसासंक्लेशनयो'॥

जलचन्दविशेषेऽपि शुण्ठीसुरतबन्धयो।
असजाया प्रजाया च प्रवीणे कुत्सिते तथा॥ 404॥

नागर तु त्रिषु भवेल्लिप्या नगरसंभवे ।

नगरे जात नागरम् ।।

घातुके शर्वरीजात हिंस्रे[2] दन्तावलेऽपि च ।। 405 ।।
अन्धतामिस्रके [3]चापि शार्वर: [4]परिकथ्यते ।

शर्वर्या जात शार्वरम् । श्रृणातीति वा शार्वरम्[5] ।। ।। १८८ ।।

[1] हिंसायाम् K2, K4 [2] हिंस्र° J2 [3] चैव J2 [4] त्रिषु for परि J2, K2
[5] K2, K4 add 'श्रृ हिंसायाम्'

(विव.) मुस्तेऽपि पिठरम् । पेठतीति पिठरम् । 'पिठ हिंसासंक्लेशनयोः'। 'शीकरादयश्च' [1]इत्यरप्रत्ययः। 'पिठरः स्थाल्युखा कुण्डम्' इति पुंलिङ्गो गतः (१, पृ. ५७२) । गौरादिषु पाठात् स्त्रियां ङीषि पिठरी इत्यपि । मन्थदण्डेऽपि पिठरशब्दः । शेषे—[2]'वैशाखदण्डे पिठरमुखायां पिठरीत्यपि' इति[3] ।। राजकशेरुण्यपि नागरम् । राजकशेरु भद्रमुस्ताख्यम् । राजीवकन्द इत्यपरे । अपिशब्दात् शुण्ठ्यां नागरमुक्तम् (१, पृ. ५७६) । नगराख्यदेशे प्रायेण भवं नागरम् । शेषे—

'प्रवीणं कुत्सितं विना ।
असंज्ञानगरे जातं नागरं नागरायते ।
त्रिष्वथो सौरते बन्धे नागरम् ।।

इति । अस्यार्थः—अयोध्यापाटलीपुत्रादिके नगरे जातं नागरं विशेष्यनिघ्नः । तत्र जातोऽपि यदि कुत्सितः प्रवीणो वा स्यात्, तत्र 'नगरात् कुत्सनप्रावीण्ययोः' (४. २. १२८) इति वुञ्प्रत्यये नागरक इत्येव भवति । ननु नगरमिति विशेषसंज्ञयैव [4]गुर्जरदेशे प्रसिद्धं किंचिन्नगरमस्ति । तत्र जात इत्यण्प्रत्यये सति नागरमित्येव स्यादित्यत्राह—असंज्ञानगर इति । कर्त्र्यादिषु नगरं पठ्यत इति [5]वृत्तिकारवचनात् तत्र जाते कर्त्र्यादिभ्यो ढकञ्प्रत्यये (४. २. ९५) नागरेयकमित्येव भवति । न तु नागरमिति स्यात् । यश्च नगरस्य रायको धायकः याजकादिसमासः, तत्र न अगं रातीति व्युत्पत्त्या नागरशब्दो वाच्यलिङ्गः । सुरतकाले स्त्रीपुंसयोरवयवसंनिवेशविशेषे सुरतबन्धे नागरं नपुंसकम् । नागरलक्षणमुक्तं ग्रन्थान्तरे ।। शार्वरं—भेद्यलिङ्गकम् । शर्वर्यां भवं शार्वरम् । गाढमन्धं तमः शृणातीति शार्वरम् ।

घातुको हिंस्रः । 'शृ हिंसायाम्' । वरन्प्रत्ययः । पृषोदरादित्वाद् दीर्घः । शार्वरो व्याधः । शार्वरं शाबरकुलम् इत्यादौ वाच्यलिङ्गः । 'घातुकेभेऽन्यलिङ्गकम्' इति पाठे घातुकश्चासौ इभश्चेति समासः । तत्र घातुकः कुञ्जरः, कुञ्जरघटा, कुञ्जरयूथमित्यादि विशेष्यानुरोधेनान्यलिङ्गत्वमित्यर्थः ॥ १८८ ॥

[1] बाहुलकादरो गुणाभावश्च इति भा दी (पृ ४६५)　　[2] मन्थनदण्डे इत्यर्थ
[3] Tv adds 'अधरपिठरसूर्मापिप्पलो वैजयन्त' इति　　[4] गूर्जर° B6　　[5] 'कर्त्र्यादिषु तु सन्नाशब्देन साहचर्यात् सन्नानगर पठ्यते, तस्मिन् नागरेयकमिति प्रत्युदाहार्यम् (काशिका १, पृ ३२९-३०)

(पा) मुस्तेऽपि पिठरम् । [1]स्थाल्यामपि स्यात् ॥ राजकशेरुण्यपि नागरम् । राजकशेरु [2]तृणमूलविशेष । शुण्ठ्यामपि स्यात् । शार्वर—भेद्यलिङ्गकम् ॥ १८८ ॥

[1] B3 omits the sentence　　[2] भद्रमुस्ताख्य , जलजकन्दविशेष इति स्वामी (पृ ३१६)

**गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः ।**
**जठरः कठिनेऽपि स्यादधस्तादपि चाधरः ॥ १८९ ॥**

(वि) अरुण धवल पीते पद्मकेसरचन्द्रयो ॥ 406 ॥
विशदे पुसि गौर स्यान्नद्या शकरयोषिति ।
रोचनाया हरिद्राया कामिन्या वरुणस्य च ॥ 407 ॥
सहस्रवेधिनि तथा फलिन्या च स्त्रिया भवेत् ।

गुरत इति गौर । 'गुरी उद्यमने'[1] ॥

[2]भल्लातकयाख्यवृक्षे स्याद् [3]व्रणकारेऽप्यरुष्कर ॥ 408 ॥

अरूषि व्रणान् करोतीत्यरुष्कर [4] ॥

उदरे कठिने चापि जठर परिकीर्तित ।

[5]जायतेऽस्मिन्निति जठर । 'जनी प्रादुर्भावे' ॥

अधस्तादोष्ठयोर्हीनेऽप्यधर परिकथ्यते ॥ 409 ॥

[6]अधोभवत्वाद् अधर ॥ १८६ ॥

[1] उद्यमे $K_6$  [2] भल्लातकाख्य° $K_5$  [3] व्रणकार्य° $K_2$, $K_3$  [4] $J_2$ adds 'डुकृञ् करणे'  [5] जायन्ते $J_2$  [6] अधस्त्वात् $K_2$, $K_3$

(विव.) गौरोऽरुणे सिते पीते । गुरते पुरुष उद्युङ्क्तेऽस्मिन्निति गौरः। 'गुरी उद्यमने'। 'ऋज्रेन्द्र . . . गौरवप्रेरामालाः' (उ. २. ३१) इति निपातनात् साधुः। पूर्ववाक्यस्थं भेद्यलिङ्गकमिति पद रेफान्तवर्गसमाप्तिपर्यन्तमनुवर्तनीयम्। शेषे—

'पद्मकेसरे ।
गौरं ना तु मृगे चन्द्रे नदीवरुणयोषितोः ।
रोचनारजनीहिङ्गुप्रियङ्गुक्ष्मासु च स्त्रियाम् ॥'

इति। 'शार्दूलाय राज्ञे गौरः' (तै. सं. ५. ५. ११. १) इत्युक्ते मृगविशेषे चन्द्रे च पुंलिङ्गः। नदी गौरीसंज्ञयैव प्रसिद्धा। रोचना गोरोचना। 'प्रियङ्गुः प्रियवल्ली च गौरी पुष्करपर्णिका' इति द्रव्यावल्याम्।

'पिण्डा गौरी च रजनी हरिद्रा वर्णवत्यपि ।
नद्यादिपु च स्त्रीलिङ्गो ङीबन्तश्च . . . ॥'

इति ॥ व्रणकार्यप्यरुष्करः। व्रणहेतुः शस्त्रादिः। व्रणकारिभल्लातके प्रागुक्तः[1] (१, पृ. २४१)। [2]अरुंपि करोतीत्यरुष्करः। 'दिवाविभा . . . तद्धनुररुःषु' (३. २. २१) इति टप्रत्ययः॥ जठरः कठिनेऽपि स्यात्। जायत इति जठरः[3]। 'जनेररष्ठ च' (उ. ५. ३४) इत्यरप्रत्ययः, धातोर्नकारस्य ठकारः। 'कुक्षौ तु जठरो न स्त्री त्रिपु वृद्धकठोरयोः' इति रुद्रः॥ अधस्तादपि चाधरः। अधस्तात्, अधोदेशस्थ इत्यर्थः। अपकृष्टेष्वधरस्त्रिपु। ओष्ठेऽपि[4] पुंलिङ्गः प्रागुक्तः (१, पृ. ४१६) ॥ १८६ ॥

[1] $B_6$ adds व्रणकारीव घातुके इति प्रागुक्त  [2] $T_{J2}$ adds व्रणान्  [3] 'जनी प्रादुर्भावे' $B_6$.  [4] तु for अपि Tv

(पा) गौरोऽरुण सिते पीते । भेद्यलिङ्गकमित्यधिकार । [1]कन्याद्यर्थेषु निरवकाश ॥ व्रणकार्येऽप्यरुष्कर । भल्लातक्यामपि स्यात् । [2]'जडियटुन्नु' ॥ जठर. कठिनेऽपि स्यात् । उदरेऽपि [3]स्यात् ॥ अधस्तादपि चाधर । ओष्ठेऽपि स्यात्[3] ॥ १८६ ॥

[1] कन्याद्यर्थे° B3, C1   [2] B3 omits   [3] B3 omits स्यात

**अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले ।**
**उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः ॥ १६० ॥**
**एषां विपर्यये श्रेष्ठे दूरानात्मोत्तमाः पराः ।**

(वि.) एकायनगतेऽपि स्यादेकाग्रश्चाप्यनाकुल ।

एकमग्रमस्यत्येकाग्र ॥

व्यासक्त व्याकुले चापि व्यग्रशब्द प्रकीर्तित ॥ 410 ॥

[1]विविधमग्रमस्येति व्यग्र ॥

उदीच्यश्रेष्ठयोरूर्ध्वे प्रतिवाक्ये तथोत्तरम् ।
विराटपुत्रे पुंसि स्यादुत्तरा ककुभि स्मृता ॥ 411 ॥

उत्तरतीत्युत्तरम् । 'तॄ प्लवनतरणयो ' ॥

श्रेष्ठदक्षिणयोश्च स्यादुदीच्यादिविपर्यये ।
प्रतिवाक्यविहीने चाप्यनुत्तर उदाहृत ॥ 412 ॥

न विद्यते उत्तरमस्यत्यनुत्तर ॥

— दूरेऽप्यनात्मोत्तमयो [2]परशब्दोऽभिधीयते ।

पिपर्तीति पर । 'पॄ पालनपूरणयो ' ॥ १६० ॥

[1] विशेषेणागतीति व्यग्र । अगि गतौ ' K3 K4   [2] द्वितीये केवने पर J2 चपले पर K4

(विव.) अनाकुलेऽपि चैकाग्रः। अनाकुलः स्वस्थः। एकमग्रं बुद्धिस्थमस्येत्येकाग्रः। 'एकाग्रमेकताने स्यादेकाग्रं चाप्यनाकुलम्[1]' इति विश्वप्रकाशः (पृ. १४१, श्लो. २०४) ।। व्यग्रोऽप्यासक्त आकुले। व्यग्रः कार्यान्तरव्यापृतः। आकुलो दुःखाभिभूतः। विविधमग्रमस्येति व्यग्रः।। उपर्युदीच्यश्रेष्ठेऽप्युत्तरः। उत् ऊर्ध्वं तरति प्लवत इत्युत्तरशब्दः उपरिस्थितः [2]उत्तरदेशवचनः। तद्देशभवे लक्षणया वर्तत इति उत्तर उदीच्यः। [3]उत्कृष्टवचनाद् अव्ययात् तरप्रत्यये सति उत्तरशब्दः श्रेष्ठेऽपि। शेषे—

'दिश्युत्तरा स्त्रियां पुंसि विराटतनयेऽपि च।
उत्तरं प्रतिवाक्ये स्यात् ।।'

इति ।। स्यादनुत्तरः—श्रेष्ठे। एषामुपरिस्थितानां वैपरीत्ये अधःस्थितानुदीच्यनिकृष्टेष्वित्यर्थः। अविद्यमान उत्तरो यस्मादिति विग्रहे श्रेष्ठेषु अनुत्तरशब्दः। दूरानात्मोत्तमाः पराः। प्रमातारमवधीकृत्य संनिकृष्टापेक्षया भूप्रदेशसंयुक्तसंयोगभूयस्त्ववान् दूरः। तार्किकाणां प्रसिद्धपरत्वगुणाधिकरणमित्यर्थः। यथा—श्रीपर्वतस्यस्य गोदावर्यपेक्षया वाराणसी परा इति प्रयोगः। अनात्मनि यथा—इदं परेषां मतमिति। [4]परब्रह्मेत्युत्तमे। पिपर्तीति परः। 'पॄ पालनपूरणयोः'। पचाद्यच् (३. १. १३४)[5]। शेषे—'परः शत्राववलिङ्गं स्यात् केवले लिङ्गमव्ययम्' इति। 'पर दूरान्यमुख्येषु केवले त्वव्ययं मतम्' इति [6]विश्वप्रकाशश्च (पृ. १२५, श्लो. ६) ।। १६० ।।

[1] अनाकुले इति मु ग्र [2] उदग्देश° Gm3, Fv [3] Tj1, Tj2 add अतिशयेन
[4] परात्मेत्युत्तमेऽपि Gm1, Gm3 [5] Bhānuji adds 'ऋदोरप्' (पृ. ४६६)
[6] पर दूरान्यमुख्येषु इति वैजयन्त्यां दृश्यते (पृ २३४, श्लो ४६), केवले, परमव्ययमिच्छन्ति इति मुद्रितविश्वप्रकाशे

(पा.) अनाकुलेऽपि चैकाग्र.। एकतानेऽपि स्यात्[1] ।। व्यग्रो—अनात्मोत्तमा परा। अनात्मत्यन्य[2]। 'पर दूरान्यमुख्येषु परोऽरिपरमात्मनो·' इति वैजयन्ती (पृ २३४, श्लो ४६) ।। १६० ।।

[1] B3, C1 omit स्यात् [2] B3 adds 'अनात्मोत्तरा इत्यपि पाठ

**स्वादुप्रियौ च मधुरौ क्रूरौ कठिननिर्दयौ ॥ १६१ ॥**
**उदारो दातृमहतोरितरस्त्वन्यनीचयोः ।**
**मन्दस्वच्छन्दयोः स्वैरं शुभ्रमुद्दीप्तशुक्लयोः ॥ १६२ ॥**

(वि ) स्वादुद्रव्ये प्रिये चापि मधुर परिकथ्यते ॥ 413 ॥

मधु [1]माधुर्यमत्रास्तीति मधुर ॥

निर्दये कठिने घोरे क्रूरस्त्रिपु विवक्षित ।

[2]कृन्ततीति क्रूर । 'कृती छेदने' ॥

उदारो दक्षिणे दातृमहतोरनुकूलके ॥ 414 ॥

उदियर्तीत्युदार । 'ऋ गतौ' ॥

इतरो नीचके चैव परे च परिकथ्यते ।

एतीति इतर [3] ॥

स्वेच्छावर्तिन्यलसके स्वैर समभिधीयत ॥ 415 ॥

स्वेन [4]ईर्ते गच्छतीति स्वैर । 'ईर [5]गतौ' ॥

उद्दीप्तशुक्लयो [6] शुभ्रमभ्रके चापि कथ्यते ।

[7]शोभत इति शुभ्र । 'शुभ दीप्तौ' ॥ १६१–२ ॥

इति रेफान्तवर्ग [8]

[1] अस्य for अत्र $K_4$ [2] कृणाति, 'कृ हिंसायाम्' $K_2$, $K_3$ [3] $J_2$, $K_2$ add 'इण् गतौ' [4] इयर्ति $K_2$ $K_4$, ईरयति $J_2$ [5] $K_4$ adds कम्पने च [6] °शुक्रयो $K_3$, $K_6$ [7] शोभयति $J_2$ [8] $K_2$, $K_4$ add रेफान्तशब्दसख्या ६२

(विव.) स्वादुप्रियौ च मधुरौ । [1]मधु. माधुर्यरसविशेषोऽस्यास्तीति मधुरः । 'ऊपशुपिमुष्कमधो रः' (५. २ १०७) इति रप्रत्यय । मधुर कदलीफलमिति स्वादुनि । मधुरभार्येति प्रिये । रसमात्रे पुंलिङ्गः प्रागुक्तः (१, पृ. १६) ।

तद्वति वाच्यलिङ्गः ॥ क्रूरौ कठिननिर्दयौ । क्रूरो वृथाभ्यन्तरकोपः । निर्दयः कृपारहितः । [2]कृन्ततीति क्रूरः । 'कृती छेदने' ॥ उदारो दातृमहतोः । उदाराति उच्चैरर्थिभ्यो सर्वतो ददातीति उदारः । 'रा दाने' । 'आतश्चोपसर्गे' (३. १. १३६) इति कर्तरि कप्रत्ययः । शेषे—'दक्षिणेऽपि च । स्यादुदारोऽनुकूलेऽपि' इति । इतरस्त्वन्यनीचयोः । अन्यस्मिन् यथा—सव्येतरकरः शरः[3] इति । नीचे यथा—[4]पक्वान्नमितरे जनाः इति । इतं प्राप्तं रातीति इतरः ॥ मन्दस्वच्छन्दयोः स्वैरम् । स्वेन स्वबुद्ध्यनुसारेण ईर्ते गच्छतीति स्वैरः । 'ईर गतौ' । पचाद्यच् (३. १. १३४) । 'स्वादीरेरिणोः' (वा. ६. १. ८९) इति वृद्धिः ॥ शुभ्रमुद्दीप्तशुक्लयोः । उद्दीप्तं प्रकाशितं, शुक्लं श्वेतगुणयुक्तम् । शोभत इति शुभ्रम् । 'शुभ शुम्भ शोभार्थे' । 'स्फायितञ्चि . . . शुभिभ्यो रक्' (उ. २. १३) इति रक्प्रत्ययः । शेषे—[5]'जानीयाच्छुभ्रमभ्रके' इति ॥ १९१–२ ॥

इति रेफान्तवर्गः[6]

[1] स्वादु मध्वादिगतो मधुरविशेष । प्रिय हृद्यम् B5, Tv [2] कृणाति, 'कृञ् हिंसायाम्' B6, कृणोति, 'कृञ् हिंसायाम्' Tj1, Tj2, 'कृतेश्छ क्रू च' (उ २ २३) इति रक् इति भा दी (पृ ४९६) [3] 'शर सव्येतरे भुजे' इति रघुवशे (१२ ९०) [4] कन्या वरयते रूप मिष्टान्नमितरे जना —Subhās (Apte's Dict p 1271) [5] विज्ञेय शुभ्रमभ्रके B6 [6] Gm3 adds शब्दसख्या ९२

(पा) स्वादुप्रियौ च मधुरौ—शुभ्रमुद्दीप्तशुक्लयो । अनुक्तम्—

शिखर शोणरत्नेऽपि गिरि क्रीडागुडेऽपि[1] च ।

'अच्चनगड्लु' ॥

गृध्र स्यादर्धलुप्तेऽपि घस्र. स्याद् घातुकेऽपि[2] च ।
मकुर स्याद् मुकुरवद् मल्लिकाकुसुमेऽपि च ॥
[3]मधुद्रो भ्रमरश्चेति द्वाविमौ कामुकेऽपि च ।
दिगम्बरोऽन्धकारेऽपि जगत्यपि चराचरम् ॥
लम्बोदरस्तुलाया[4] च लक्ष्मीपुत्रो हयेऽपि च ।
पीताम्बरो नटेऽपि स्याद् महामात्रो धनिन्यपि ॥

तुपार शीकरेऽपि स्याच्छर स्यादुदकेऽपि च ।
वारस्त्रिया च कावेरी स्वैरिण्या च निशाचरी ।।
खर्जूरो वृश्चिकेऽपि स्यात् [5]कर्वूर काञ्चनेऽपि च ।
विष्किर कुक्कुटेऽपि स्याद् वल्लचामपि च वल्लरी ।।
प्रखरोऽश्वतनुत्रेऽपि हर स्याद् गर्दभेऽपि च ।
असुर कुञ्जरेऽपि स्याद् मिहिरो वारिदेऽपि च ।।
स्याद् विल्वयशसोश्च[6] श्री स्यादग्रभरयोश्च धू ।
कादम्बरी परभृता शारिका भारतीति[7] च ।
धाराम्बुतानसेनाग्रस्कन्धशस्त्रमुखेपु च ।।
विहार सुगतावासक्रीडनोपवनपु च ।
कुमार स्यादश्ववारे शुकबालकयोरपि ।।
भङ्गुर नश्वरे वक्रे कटीर कन्दर कटौ ।
हीरा पिपीलिकालक्ष्म्योर्वेर [8]काश्मीर्यदेहयो ।।
वास्रस्तु दिवसे वास्र मन्दिरे च चतुष्पथे ।
प्रकर कीर्णपुष्पादौ प्रकरी चत्वरावनौ ।।
सुवर्णपुत्रिकाया स्याद् वम्री कम्रस्तु सुन्दरे ।
जर्जरस्त्रिपु जीर्णे स्यात् परपुष्टे तु जर्जरः ।।
टट्टरी स्याद् मृषावादे भेरीनादे तु टट्टर ।
वन्धुर सुन्दरे नम्रे वन्धुरा वारयोपिति ।।
टङ्कारो ज्यारवे ख्यातौ [9]कुटार केवले रतौ ।
नरेन्द्रो विपवैद्ये स्यादार्थिके वसुधापतौ ।।
कटिसूत्र सारसन कटिवस्त्रे च चार्मणे ।
गिरिसारोऽश्मसारे स्याद् गिरौ च मलयाह्वये ।।
पीतसारो मलयजे गोमेदकमणावपि ।
दण्डधारो यमे भूपे व्यवहार पणे स्थितौ ।।
दण्डयात्रा दिग्विजये यात्राया चाध्वरस्य च ।। १६१-२ ।।

इति रेफान्तवर्ग

[1] गेन्दुकेऽपि $B_3$  [2] धातुके $C_1$  [3] मूधूद्र $A_1$  [4] उद्ध्माते इति वि प्र (पृ १४४, श्लो २४१)  [5] कर्चूर $C_1$  [6] °विपयोश्च $A_1$  [7] तथा $B_3$ $C_1$

[8] काश्मीर॰ $C_1$. [9] कुटीर कम्बले रतौ $B_3$

अथ लान्तवर्गः—

चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।
द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ॥ १६३ ॥

(वि.) *कङ्केऽपि वृक्षे धम्मिल्ले मौलिश्चूडाकिरीटयो ॥ 416 ॥*

[1]मूल्यत इति मौलि । 'मूल प्रतिष्ठायाम्' ॥

[2]वृक्षे काण्डे गजे पुष्पे पीलुः स्यात् परमाणुके ।

[3]पीलतीति पीलु । 'पील प्रतिष्टम्भे' ॥ १६३ ॥

[1] मत्यत इति मौलि । 'मल मल्ल धारणे' $K_2$, $K_3$ [2] वृक्षकाण्डे $K_6$ [3] पीयत इति पीलु । 'पा पाने' $K_2$, $K_4$; पीड्यत इति $K_5$, $K_6$

(विव.) चुडा—मौलयस्त्रयः। चुडा शिखा। अत्र त्रय इत्युक्त्या संयतशब्दस्य केशविशेषणत्वं मौलिशब्दस्य पुंलिङ्गत्वं च [1]गम्यते। बद्धाः केशा इत्यर्थः। [2]मूलति प्रतितिष्ठतीति मौलिः। 'मूल प्रतिष्ठायाम्'। शेषे—'कङ्केलिपादपे मौलिः' इति। कङ्केलिरशोकः॥ द्रुमप्रभेद—पीलवः। द्रुमप्रभेदो गुडफलः। मातङ्गः कुञ्जरः। काण्डो बाणः। पीलयतीति पीलुः[3]। 'पीड अवगाहने'। लडयोरभेदः। शेषे—'पीलवः परमाणवः' इति। यथा—पीलुपाक इति॥ १६३ ॥

[1] अवगम्यते Tv [2] मूलस्यादूरे भव.। 'गुतङ्गमादित्वात्' (४. २. ८०) इञ्. यद्वा मूलस्यापत्यम्। 'अत इञ्' इति भा. दी (पृ ४६६). [3] पीलति गच्छतीति पीलु'। 'पील गतौ' Tv; मृगय्वादित्वात् (उ. १ ३७) उः इति भा. दी. (पृ. ४६६).

(पा.) चुडा—मौलयस्त्रयः। शिरोऽपि स्यात्। 'मुण्डोत्तमाङ्गमस्तक-मौलिशिरःशीर्षमूर्धकानि स्युः' इति हलायुधः (अ. मा. २. ३६३)। [1]अन्यतर-लिङ्गाभिधानात् स्त्रीपुंसलिङ्गः। 'किरीटे मौलिरालीवे चूडाकयतकेशयोः' इति रभस. ॥ द्रुमप्रभेद—पीलव.। परमाणुरपि [2]स्यात्। 'पीलुर्द्रुमे गजे काण्डे परमाणुप्रसूनयो' इति विश्वः (पृ. १५१, श्लो. ३४) ॥ १६३ ॥

[1] B3, C1 omit °तर°  [2] B3 omits स्यात्

**कृतान्तानेहसोः कालश्चतुर्थेऽपि युगे कलिः ।**
**स्यात् कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः ।। १६४ ।।**

(वि) मृत्यौ यमे महाकाले काल समयनीलयो ।। 417 ।।
गौर्या नील्या मेघपङ्क्तौ मञ्जिष्ठक्षीरकीटयो ।
कृष्णत्रिवृति निन्दाया काली स्याद् मातृभेदके ।। 418 ।।

कल्यते सख्यायत इति काल । 'कल शब्दसख्यानयो ' ।।

कलहेऽन्त्ययुगे [1]शूरे निष्क्रियाया कलिर्युधि ।

निष्क्रिया निरर्थकरणम् । कल्यन्तेऽस्मिन्निति कलि । 'कल किल क्षेपे ' ।।

[2]पद्मे जले [3]क्लोम्नि ताम्रे पद्मके कमल भवेत् ।। 419 ।।
कुरङ्गे कमलो लक्ष्म्या कमला वरयोषिति ।

काम्यत इति कमलम्[4] । 'कमु कान्तौ ' ।।

[5]सास्नायामुत्तरासङ्गे नागराजे च रल्लके ।। 420 ।।
क्रिमिभेदे जले क्लीव कम्बल परिकथ्यते ।

काम्यत इति कम्बल [6] ।। १६४ ।।

[1] घोरे K6  [2] जडे K5  [3] व्योम्नि K5, लोम्नि K6  [4] कमला K2, K4  [5] K5 omits 3 lines  [6] J2, K2 add 'कमु कान्तौ'

(विव.) कृतान्तानेहसोः कालः । कृतान्तो यमः । शेषे—

'काला कृष्णा त्रिवृत् कालो गौरीजलदमालयोः ।
नीलीमाञ्जिष्ठयोः क्षीरकीटमातृकयोरपि ।। '

इति । कृष्णा त्रिवृदिति टावन्तः । मातृका महाकालीति प्रसिद्धा । विश्वप्रकाशे—

[1]'कृष्णत्रिवृति काला स्यान्नीलीमाञ्जिष्ठयोरपि ।
काली गौर्यां क्षीरकीटे कालिकामातृभेदयोः । '

इति[2] (पृ. १४६, श्लो. १२) ॥ चतुर्थेऽपि युगे कलिः। कल्यन्ते क्षिप्यन्ते जना अत्रेति कलिः। 'कल किल क्षेपे'। अपिशब्दात् कलहे प्रागुक्तम् (१, पृ. ५४५) ॥ स्यात् कुरङ्गेऽपि कमलः। कुरङ्गो हरिणभेदः। कं नीरं मलते उच्चैर्धत्त इति कमलम्। 'मल धारणे'। विश्वप्रकाशे—

'कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे।
मृगप्रभेदे कमलः कमला श्रीवरस्त्रियोः ॥'

इति (पृ. १५३, श्लो. ५३)। क्लोम तिलकम्। भेषजं पद्मकम् ॥ प्रावारेऽपि च कम्बलः। प्रावार उत्तरासङ्गः। कं सुखं बलतीति कम्बलः। 'बल प्राणने'। शेषे—'सास्नायां नागराजे च कम्बलोदक्रिमावपि' इति। 'समौ रल्लककम्बलौ' इति गतम् (१, पृ. ४३६)। नागराजः कम्बलाख्यः सर्पः। कृमिर्वस्त्रयूका। 'कम्बलो नागराजे स्याद् [3]गजप्रावरणेऽपि च' इति विश्वप्रकाशः (पृ. १५५, श्लो. ७५) ॥ १६४ ॥

[1] 'कृष्णत्रिवृत्तौ काला तु' इति मु प्र [2] कालयति। 'कल शब्दसङ्ख्यानयो'। 'कल प्रेरणे' वा ण्यन्त। पचाद्यच्। यद्वा कल्यते सङ्ख्यायते। कर्मणि घञ्। यद्वा कल्यते। 'कल उपदेशे'। घञ् इति भा दी (पृ ४६७) [3] गजेत्यादि मुद्रितग्रन्थे न दृश्यते

(पा) कृतान्त—युगे कलि.। 'कलि स्यात् कलहे शूरे कलिरन्त्ययुगे युधि' इति विश्व॰ (पृ १५२, लो. ४८) ॥ स्यात् कुरङ्गेऽपि कमल.।

'कमल सलिले ताम्रे [1]क्लोम्नि रक्ताम्बुजेऽम्बुजे।
मृगप्रभेदे कमल. कमला श्रीवरस्त्रियो॰ ॥'

इति विश्व. (पृ. १५३, श्लो. ५३) ॥ प्रावारेऽपि कम्बल.।

'कम्बलो नागराजे स्यात् सास्नाप्रावारयो. कृमौ।
कम्बलश्चोत्तरासङ्गे कम्बल सलिले मतम् ॥'

इति विश्व (पृ १५५, श्लो ७५) ॥ प्रावारो रोमशाटी। [2]'कम्बलि, कम्बलि॰पुष्पुम्' ॥ १६४ ॥

[1] जलजे लोम्नि भेषजे इति मु ग्र　　[2] $B_3$ omits

**करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् ।**
**स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः ॥ १६५ ॥**

(वि)　राजग्राह्यकरे दैत्ये गृहदारुणि [1]गन्धके ॥ 421 ॥
उदरावयवे चैव बलिश्चामरदण्डके ।
पूजोपहारे [2]जरया श्लथचर्मणि वर्तते ॥ 422 ॥

[3]वलत्यनेनेति बलि । 'बल[4] प्राणने' ॥

स्थौल्ये सैन्ये रसे रूपे गन्धसामर्थ्ययोर्बलम् ।
काके सीरिणि दैत्ये [5]ना बल सत्त्ववति त्रिपु ॥ 423 ॥
वाट्यालके च विद्याया बला समभिधीयते[6] ।

बलत्यनेनेति बलम् । 'बल प्राणने' ॥ १६५ ॥

[1] गण्डके $K_5$　[2] जराया $K_5$　[3] बल्यतेऽनेनेति बलि $J_2$　[4] $K_6$ adds 'बल सचरणे'　[5] च for ना $K_2$, $K_3$　[6] °थ्यते $K_3$, $K_5$

(विव.)　करोपहारयोः—स्त्रियाम् । करः प्रजाभ्यो राजग्राह्यो भागः । उपहारो देवतोद्देशेन प्रदेय ओदनादिः । तत्रोभयत्र बलिशब्दः पुलिङ्गः । [1]प्रवृद्धत्वादिना शरीरे जायमाना त्वक्सकोचकृता रेखा वलिः । तत्र स्त्रीलिङ्गः । यद्यपि बलिशब्दः करोपहारवचन. केवलमौष्ठ्यादिः तथाप्येकदेशविकृतस्याप्यनन्यत्वाद् (प. ७. २. ७८) नानार्थत्वेनाभिधानम् । बलति जीवत्यनेनेति बलिः । 'बल प्राणने' । वलते संवृणोति शरीरमिति वा[2] । शेषे—

'बलिश्चामरदण्डके ।
गृहदारविशेषे च घ्राणताते च गन्धके ॥'

इति । गृहदारुविशेष इति [3]स्तम्भचूडासु तिर्यङनिधीयमान[4] सरन्ध्र दारु । तथा चोक्तं पाञ्चरात्रे मण्डपनिर्माणे—

'सारदारुभवास्तम्भान् कुर्याच्चूडासमन्वितान् ।'

इत्युक्त्वा,

'बलिकां मूर्धतस्तेषां कुर्यात् ॥'

इत्युक्तत्वादिति । तत्रापि स्त्रीलिङ्ग एव । बाणतातो विरोचनसुतो बलिनामा दैत्यः । गन्धको गन्धकद्रव्यविशेषः । तत्रोभयत्र पुंलिङ्गः ॥ स्थौल्य—काकसीरिणोः । स्थौल्य [5]पीनत्वम् । सामर्थ्यं शक्तिः । स्थौल्यादित्रये रूपविशेषाद् नपुंसकलिङ्गः । बलति चिरं जीवतीति बलः काकः । 'बल प्राणने' । बलसंबन्धाद् अर्शआद्यचि (५. २. १२७) बलः । सीरी बलभद्रः । शेषे— 'बलं गन्धे रसे रूपे दैत्ये ना बलिनि त्रिषु' इति । दैत्ये यथा—इन्द्राहितः, यतो बलारातिरिति संज्ञाविशेषोऽपि, कश्चिदिन्द्रेण हत इत्यर्थः । बलवति वाच्यलिङ्गः । यथा—'दुर्बलस्य बलं राजा' (चाणक्य. ४०) इति[6] ॥ १९५ ॥

[1] B6 omits प्र [2] वलते । वल्यते वा, 'वल प्राणने'। 'वल संवरणे'। 'सर्वधातुभ्य इन्' (उ ४ ११८) इति भा दी (पृ. ४९७). [3] स्ताम्ब° Tj1, Tj2 [4] °विधीयमान B5, B6 [5] पीवरत्वम् B6, Gm1 [6] बलते । बलति । बल्यते वा । अनेन वा । 'बल संचरणे'। 'बल प्राणने' वा । पचाद्यच् । कर्मणि घञ् वा । संज्ञापूर्वकत्वाद् वृद्ध्यभाव । 'पुंसि—' इति घो वा इति भा दी (पृ ४९७).

(पा ) करोपहारयो.—स्त्रियाम् । [1]प्राण्यङ्गकमुदररेखा. । अथवा प्राण्यङ्गज श्लथचर्म ॥ स्थौल्य—काकसीरिणोः ॥ १९५ ॥

[1] °अङ्गजमुदररेखा B3

वातूलः पुंसि वात्यायामपि वातासहे त्रिषु ।
मेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः ॥ १९६ ॥

(वि.) वात्याया पुंसि वातूलो वातस्यासहने त्रिषु ॥ 421 ॥

वात न महते, वातस्य समूहो वा वातूल ॥

त्रिलिङ्गया [1]र्वैतवति द्वयो. श्वापदसर्पयोः ।
दुःशिक्षितगजे पुंसि व्यालः समभिवर्ण्यते[2] ॥ 425 ॥

[1]व्याल्यते निवार्यते इति व्याल । 'अल[1] भूषणपर्याप्तिवारणेषु' ॥ १९६ ॥

[1] वैतवे वाणे $K_4$ [2] °अभिकथ्यते $K_2$, $K_4$, °कीर्त्यते $K_5$ [3] व्यलतीति $K_5$, विशेषेणाल्यते $J_2$ [4] 'अल निवारणे' $K_2$, $K_3$, $K_4$

(विव.) वातूलः—वात्यासहे त्रिषु । समानजवयोः विरुद्धक्रिययोः वाय्वोर्बहूनां[1] वा समूहो वात्या । 'वातात् समूहे च' (वा ५. २. १२२) । तत्र सहत इत्यर्थे समूहार्थे च ऊलच्प्रत्ययः । वातूलः । उन्मत्तेऽप्याहुरिति स्वामी (पृ. ३१८) ॥ भेद्यलिङ्गः—श्वापदसर्पयोः । गूढविप्रियकारी शठः । तत्र व्यालशब्दो वाच्यलिङ्गः । व्याघ्रादयो वनचरा मृगाः श्वापदाः । सर्पाः प्रसिद्धाः । तत्र पुंलिङ्गत्वविधानं नपुंसकनिषेधार्थम्[2] । [3]स्त्रीलिङ्गविवक्षाया तु 'द्विचतुःषट्पदोरगाः' (३. ५. ३७) इति स्त्रीलिङ्गत्वस्यापि[4] वक्ष्यमाणत्वात् । अत एव 'व्यालीव मलयद्रुमम्' इति कालिदासः (रघु. १२. ३२) । विशेषेणाल्यते वार्यत इति व्यालः । 'अल भूषणपर्याप्तिवारणेषु'[5] । शेषे—'व्यालो दुःशिक्षिते गजे[6] ।' इति ॥ १६६ ॥

[1] $B_6$ adds वाताना [2] °विशेषार्थम् $B_6$ [3] $B_5$ omits लिङ्ग. [4] °लिङ्गत्वमपि $B_5$ [5] विरुद्धमासमन्तादलति । अडति वा । 'अल भूषणादौ' । 'अड उद्यमे' । डलयोरेकत्वम् । पचाद्यच् इति भा दी (पृ ४६७) [6] खले Tv

(पा) वातूल—वातासहे त्रिषु । [1]वात्यासहे इति उदयादित्यमतानुसारी पाठ । वातासह इति शाकटायनमतानुसारी पाठ ॥ भेद्यलिङ्ग—श्वापदसर्पयो । अर्थव्ययसहे[2] भेद्यलिङ्ग । 'अर्थव्ययसहो[3] व्याल' इति हलायुध (अ मा ५. ४६) । दुष्टगजेऽपि पुलिङ्ग । 'व्यालो [4]दुष्टमतङ्गजे' इति हलायुध (अ. मा २. ७०) ॥ १६६ ॥

[1] वातासहे $A_1$ [2] $A_1$ adds पुरपे [3] °सहे इति मु ग्र [4] व्यालो दुष्टगज प्रोक्त इति म ग्र

**मलोऽस्त्री पापविट्किट्टान्यस्त्री शूलं रुगायुधम् ।**
**शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु ॥ १६७ ॥**

(वि) श्लेष्मण्यश्रुणि मूत्रे च दूषिकाकर्णविष्ठयो ।
विष्ठाया [1]शुन्वसयोर्मज्जालोहितयोर्नखे ॥ 426 ॥

स्वेदे पापे मलोऽस्त्री स्यात् कृपणे[2] च त्रिपु स्मृत ।

मल्यत इति मल । 'मल मल्ल धारणे' ॥

आयुधे रोगभेदे च मृत्यौ शूलमुदाहृतम् ॥ 427 ॥
योगभेदे ध्वजे शूल शूला पण्यस्त्रियामपि ।

[3]शूलतीति शूल । 'शूल रुजायाम्' ॥

ज्वालाया हव्यवाहस्य शङ्कौ कील उदाहृत ॥ 428 ॥
कीला कफोणिनिर्घाते [4]रतिसभवताडने ।

कील्यत इति कील । 'कील[5] वन्धने' ॥

धाराङ्कयोर्यूकपत्न्या सजातश्मश्रुयोपिति ॥ 429 ॥
[6]प्रस्थे च कर्णतालाग्रे पालिरस्राङ्कभेदयो ।

पाल्यत इति पालि । 'पाल रक्षणे' ॥ १६७ ॥

[1] शुक्र॰ K5 [2] कृपणेपु J2, K3, K4 [3] शायतेऽनेनेति शूलम् । 'शो तनूकरणे' K2, K3 [4] रतिसंरम्भ॰ K5 [5] 'कील क्षेपे' J2 [6] प्रासे K6

(विव.) मलोऽस्त्री पापविट्किट्टानि । किट्ट सिंहाणादिकम् । विड्ग्रहण मूत्रादीनामप्युपलक्षणम् ।

'वसाशुक्लमसृड्मज्जामूत्रविट्कर्णविण्णखा:[1] ।
श्लेष्माश्रुदूषिकास्वेदा द्वादशैते मला नृणाम् ॥'

इति स्मृतेः (म. स्मृ. ५. १३५) । पापे यथा—'निर्मला स्वर्गमायान्ति' (म स्मृ. ८. ३१८) इति । किट्टे यथा—अयोमलमिति । मल्यते धार्यत इति मलम्[2] । शेषे—'मलस्तु कृपणे त्रिपु' इति । अस्त्री शूलं रुगायुधम् । रुग् रोग वातकृतस्तोदः । शूलमायुधविशेषः त्रिशिखरः । [3]शूलति व्यथयतीति शूलम् । 'शूल रुजायाम्' । पचाद्यच् (३. १. १३४) । 'शूलो योग इत्यपि । अत्र प्रतापः—

'रोगभेदे भवेच्छूलं मृत्योः प्रहरणान्तरे ।
योगभेदे [5]भवेच्छूलः शूला पण्यस्त्रियां मता ।
शूलं विक्रयणेऽपि स्यात् ॥'

इति । योगभेदो विष्कम्भादिषु नवमः शूलाख्यः ॥ शङ्कावपि द्वयोः कीलः । कील्यते बध्यतेऽस्मिन्निति कीलः शङ्कुः, गोमहिष्यादिबन्धनस्तम्भः । अपिशब्दाद् [6]वह्निज्वालाविशेषे । शेषे—'अथ कीला स्यात् प्रहारे रतिसङ्गरे'[7] इति । [8]अन्यत्राप्युक्तम्—'कीला उरसि [9]धर्तव्या वक्षस्यपि न फूत्कृतम्' इति । जिह्वाग्रजनितो ध्वनिः फूत्कृतम् । 'कीलः [10]कफोणीनिर्घाते' इति विश्वः (पृ. १५१, श्लो. ३८) ॥ पालिः स्त्र्यश्रचङ्कपङ्क्तिषु । अश्रिर्धारा[11] । अङ्क उत्सङ्गः[12] । पङ्क्तिरावलिः[13] । 'पाल रक्षणे' । 'अच इः' (उ. ४. १४०) । 'अङ्कपालीत्यत्राङ्को वक्षः' इति स्वामी (पृ. ३१८) । शेषे—

'पालिः प्रस्थाशभेदयोः ।
जातश्मश्रुस्त्रियां कर्णतालाग्रे यूकया समम् ॥'

इति । यूकया सहितेषु पूर्वोक्तार्थेषु पालिशब्दो वर्तत इत्यर्थः । प्रतापोऽपि—

'पालिः पङ्क्तिचङ्कभेदयोः ।
[14]अस्त्रे च कर्णतालाग्रे पालिः स्यात् प्रस्थयूकयोः ।
संजातश्मश्रुयोषायाम् ॥'

इति ॥ १९७ ॥

[1] घ्राणकर्णविट् इति मु ग्र [2] पचाद्यच् [3] शूलयति B6 [4] B5 adds शेषे [5] ध्वजे Gm1, Tv [6] अग्नेरर्चि Gm1, Tv, B6 adds प्रागुक्त (पृ ३९) [7] रतिसभवे B5, Gm3 [8] 'यद्वात्स्यायन—कीला उरसि कर्तरी शिरसि विद्धा कपोलयो' इति स्वामी (पृ ३१८) [9] कर्तव्या B5 [10] कफोणी इति मु ग्र [11] कोण Gm3 [12] वक्ष Gm3 [13] B5, Gm3 add अर्थत्रयेऽपि स्त्री स्त्रीलिङ्ग इत्यर्थ [14] स्त्री च B5, Tv

(पा) मलोऽस्त्री—रुगायुधम् । निशिताग्रस्तम्भे लञ्जिकाया च स्त्रीलिङ्ग । 'कोरयदुःनु'[1] । 'शूला दुष्टवधार्थाय कीलके पण्ययोषिति' इति विश्व (पृ १५१, श्लो २७) ॥ शङ्कावपि द्वयो कील । ज्वालायामपि[2] ॥

पालि स्त्र्यश्र्यङ्कपङ्क्तिषु । स्त्री इति स्त्रीविशेष । 'सश्मश्रुयुवति[3] पालि प्रस्थ कर्णलतापि च' इति त्रिकाण्डशेष (पृ ३४, श्लो ६५३) ।। अङ्को नाम चिह्नम् । 'पालि कर्णलताया स्यात् प्रदेशे पङ्क्तिचिह्नयो ' इत्यजय[4] ।। १६७ ।।

[1] B3, C1 omit [2] A1 adds स्यात् [3] 'युवती इति मु ग्र [4] विजय B3, जय A1

**कला शिल्पे कालभेदेऽप्याली सख्यावली अपि ।**
**अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।। १६८ ।।**

(वि ) कलनाविषयो[1] शिल्पे कालभेदाशमान्नयो ।। 430 ।।
चन्द्रस्य षोडशे भागे मूलवृद्धौ [2]वृतौ स्त्रियाम् ।
कला च तालगुरुणि कल शुक्ले[3] तु न द्वयो ।। 431 ।।
मधुरास्फुटनिस्वाने[4] जीर्णे कल उदाहृत ।

कल्यत इति कला । 'कल शब्दसख्यानयो ' ।।

आलिर्वयस्यापङ्क्तयोश्च सेतौ च परिकथ्यते ।। 432 ।।

अल्यत इत्यालि ।[5] 'अल भूषणपर्याप्तिवारणेषु' ।।

अब्धितीरे जले काले [6]रागमर्यादयोरपि ।
अक्लिष्टमरणे राजभोजने [7]देवयोपिति ।। 433 ।।
समुद्राम्भोविकारे च वेला समभिधीयते ।

वेलतीति वेला । 'वेलृ चलन' ।। १६८ ।।

[1] 'विषया J2 [2] वृता K6 [3] शुभ्रे J2 [4] 'निश्वास J2 [5] 'अल निवारणे' K3, K4 [6] राग° J2 K2 [7] राज° K6

(विय ) कला शिल्पे कालभेदेऽपि । शिल्प चतुःषष्टिप्रकारम् । [1]कालभद त्रिंशत्काष्ठात्मक' । कल्यत इति कला । 'कल शब्दसख्यानयो' । पचाद्यच् । दोषे—

'अशमात्रे मूलवृद्धौ [2]सुषमाविद्ययो कला ।
[3]अष्टात्रिंशन्निवृत्त्याद्ये गुरुणि स्त्रीरजस्यपि ॥
कल शुक्रे [4]वाच्यलिङ्गमव्यक्तमधुरस्वनौ' ॥

इति । *अशमात्रे एकदेशमात्रे । यथा—त्रिकल, सकल इति ।* '*कला तु षोडशो भाग* ' इति तु गतम् (१, पृ ६०) । मूलस्योत्तमर्णप्रयुक्तस्य[6] अधमर्णेन नियतकाले दीयमानाया वृद्धौ कलना सख्यान मलवृद्धि । यथा— 'प्रतिकल कलादाने द्विगुणादधिक धनम्' इति । सुषमाया यथा—मुखे कलातिशय इति । विद्यामात्रे यथा—न्यायकलानिधिरिति । निवृत्ति प्रतिष्ठा इत्यद्या पञ्च कला, शिवादि-क्षित्यन्ता अष्टात्रिंशत्कला, अमृता मानदा[7] इत्याद्या चतुर्नवतिकला [8]आगम-शास्त्रप्रसिद्धा । यथा—अष्टात्रिंशत्कलान्यास, चतुर्नवतिकलान्यास इति । गुरुणि यथा—अक्षरपाठेषु चच्चत्पुटादिषु आवापनिक्षेपनिष्क्रामप्रवेशनि शब्दा क्रिया अपि सगीतशास्त्रे प्रसिद्धा । एता कलाशब्देन व्यवह्रियन्ते[9] । यथा—चच्चत्पुटादिषु यथाक्षरतालेषु द्विमात्रमेक गुरुकला इत्यादि[10] । स्त्रीसबन्धिनि रजस्यार्तवे यथा—'निष्कला विगतार्तवा' इति (१, पृ ३७४) । शुक्रे यथा—शुक्र कल गर्भाशयगत ग्रेत । तत्र रूपभेदाद् नपुसकलिङ्ग । अजीर्णे अपक्वे, अव्यक्त-मधुरध्वनौ च वाच्यलिङ्ग । अव्यक्तमधुरध्वनौ च गतम् (१, पृ १२१) ॥ आलि सख्यावली अपि । सखी वयस्या । आवलि पङ्क्ति । 'सेतुरालौ' इति गतम् (१, पृ १९२) । अनर्थेऽप्यालिरिति स्वामी[11] (पृ ३१८) ॥ अब्ध्यम्बु—मर्याद-योरपि । [12]चन्द्रोदयादिनिमित्तकृत [13]समुद्रसलिलोच्छ्वासोऽब्ध्यम्बुविकृति । कालोऽवसर । मर्यादा सीमा । वेलत्यत्र जल चलति वेल्यते वा । 'वेलृ चलने' । 'गुरोश्च हल' (३ ३ १०३) इत्यकारप्रत्यय । शेषे—

'वेला त्वीश्वरभोजने ।
बुधस्त्रिया सीम्नि चापि रागे सुखमृतावपि ॥'

इति । समुद्रतीर बुधाख्यग्रहस्य स्त्री च वेला । [14]नानार्थसग्रहेऽपि—

'वेला काले च[15] जलधेस्तीरनीरविकारयो ।
अक्लिष्टमरणे रागे सीम्नि वारि बुधस्त्रियाम् ॥'

इति ॥ १९८ ॥

[1] कालशब्द Gm3 [2] कलनाविद्ययोस्तथा B5, Gm3 [3] तत्तदागमसिद्धासु Gm3, Tj2 [4] कलाजीर्णे B3 [5] °ध्वनौ Gm3 [6] Gm3 adds घनस्य [7] °पूपा इत्याद्या Gm3 [8] मन्त्रागम° Gm3 [9] कामशास्त्रेऽपि अन्या कला प्रसिद्धा Gm3 [10] कलाशब्देन व्यवह्रियत Gm3 [11] अपिशब्दादालिरनर्थ इति मु ग्र [12] चन्द्रोदयालकृत B8 [13] °सलिलोल्लास Gm3 [14] प्रतापोऽपि Gm3 [15] जलनिधे Gm3

(पा) कला शिल्पे कालभेदेऽपि। चन्द्रांशेऽपि स्यात्॥ [1]आलि —काल-मर्यादयोरपि। अब्ध्यम्बुविकृति अब्धिवृद्धि [2]। कालो घटिकादि । मरणविशेषेऽपि स्यात्। 'ईश्वराणां भोजनेऽक्लिष्टमरणेऽब्धिकूले च वेला' इति सुभूतिटीका। मर्यादा सीमा ॥ १९८ ॥

[1] आली B3 [2] A1 adds तरङ्ग°

**बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु ।**
**लीला विलासक्रिययोरुपला शर्करापि च ॥ १९९ ॥**

(वि) अग्नौ [1]सिते कृष्णपक्षेऽर्जुने बहुलो भवेत् ॥ 434 ॥
हृदये बहुल नील्यामेलाया कृत्तिकासु[2] च ।
सौरभेयीषु च तथा बहुला [3] परिकीर्तिता [3] ॥ 435 ॥

[4]बहु लातीति बहुला ॥

लीला विलासक्रियायोर्भवेदिप्टजनाकृतौ ।

[5]ललन लीला। 'लीड श्लेपणे' ॥

उपला शर्कराया च [6]मणौ ग्राव्ण्युपलो भवेत् ॥ 436 ॥

[7]उपलायतेऽस्मिन्नित्युपला। 'ला आदाने' ॥ १९९ ॥

[1] सितौ J2 [2] मृत्तिकासु K2 [3] K4 omits the visarga. [4] बहुत्वाद् बहुला K2 [5] विलास एव लीला K2 K4 [6] वन्ये J2 [7] उपानायते K2, K5, पनायते J2

(विव) बहुला —शितौ त्रिषु। बह्वीरधिष्ठानतारे लात्यादत्त इति बहुला कृत्तिकानक्षत्रविशेषा । तत्र स्त्रीलिङ्गो बहुवचनान्तश्च । [1]गोवाचकेऽपि

स्त्रीलिङ्ग एव। बहु हव्यं लातीति बहुलोऽग्निः। शितौ कृष्णवर्णे वाच्यलिङ्गः। शेषे—'बहुलौ कृष्णपक्षधनंजयौ। क्लीबं हृन्नभसोः' इति। धनंजयोऽर्जुनः। एलायामपि स्त्रीलिङ्गो बहुलाशब्द उक्तः (१, पृ. २८६)। 'अदभ्रं बहुलम्' इति विशेष्यनिघ्ने उक्तः (श्लो. ६३)। 'बहुलं छन्दसि' (२. ४. ३९) इत्यादि-पाणिनीयव्यवहारे बहुलशब्दो नपुंसकलिङ्गो विकल्पविशेषः प्रसिद्धः॥ लीला विलासक्रिययोः। स्त्रीणां विलासः। [2]शृङ्गारभावचेष्टाविशेषो विलासः। क्रिया कायिकः परिस्पन्दः। यथा—'मलयपवनलीलाविलुलितबकुलोद्भवामोदाः' इति॥ उपला शर्करापि च। [3]सर्षपमरीचादिप्रायकठिनावयवमिश्रा मृत्तिका शर्करा। उप्यते[4] क्षिप्यते गृहादिष्विति उपला। 'डुवप् [5]बीजसंताने'। 'वृषादिभ्यश्चित्' (उ. १. १११) इति कलप्रत्ययः। यजादित्वात् (६. १. १५) संप्रसारणम्। शेषे—

[6]'अश्मपिण्डोऽश्मरूपा च मृद्विकारश्चैक्षवोऽपि यः।<br>तत्रोपला स्त्रियां पुंसि शिलारत्नविशेषयोः॥'

इति। रत्ने यथा—'नीलोपलस्यूतविचित्रधातुम्' इति माघः (शिशु. ४. १)॥ १९९॥

[1] गोवाचक Tj1 [2] °भावज° Tj1 [3] °मरीच्यादि° Tv [4] शुप्यते Tv
[5] B5, B6 add °तन्तु° [6] अश्मखण्ड Tv

(पा) बहुला—शितौ त्रिषु। बहुला. इति कृत्तिकासु नित्यबहुवचनम्। 'कृत्तिकासु स्त्रिया भूम्नि बहुला बहुला गवि'[1] इति रभस[2]॥ लीला—शर्करापि च। 'उपलौ रत्नपाषाणावुपला शर्करापि च' इति रुद्र॥ १९९॥

[1] C1 adds 'एलाया च पुमानग्नौ कृष्णपक्षे शितौ त्रिषु' [2] रभसकोश B3

**शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः।**
**जालं समूह आनायो गवाक्षक्षारकावपि॥ २००॥**

(वि.) सलिले शोणितं चापि कीलालं परिकथ्यते।

[1]कीलान् ज्वालानलति निवारयतीति कीलालम्। 'अल निवारणे'॥

आद्ये शिफाया नक्षत्रे मूल कुञ्जसमीपयो ॥ 437 ॥

मूल्यतेऽनेनेति मूलम् । 'मूल[2] प्रतिष्ठायाम्' ॥

गवाक्षव्यूहयोर्दम्भे [3]क्षारकानाययोरपि[4] ।
नीपेन्द्रजालयोर्जाल कोशातक्या स्त्रिया भवेत् ॥ 438 ॥

[5]जालवत् गवाक्षवत् तिष्ठतीति जालम् । जले क्षिप्यत इति वा ॥ २०० ॥

[1] कील्यते K5 [2] 'मूल रोहणे' K3, K4 [3] क्षीरिका° K8 [4] J2 adds आनायो वागुरा [5] जालाकारत्वात् K4, K5

(विव.) शोणितेऽम्भसि कीलालम् । [1]कील्यते मांसेन बध्यते, कीलेन अल्यते त्वचा वार्यत इति वा कीलालं शोणितम् । 'कील बन्धने' । 'अल भूषणादौ' । अम्भसि व्युत्पादितम् (१, पृ. १५७) ॥ मूलमाद्यं शिफाभयोः । शिफा वृक्षमूलम् । भं नक्षत्रं, ज्येष्ठानक्षत्रानन्तरम् । मूलति प्रतितिष्ठतीति मूलम् । 'मूल प्रतिष्ठायाम्' । [2]कप्रत्ययः (३. १. १३५) । शेषे—'मूलमन्तिककुञ्जयोः' । अन्तिके समीपे यथा—वृक्षमूलमुपसर्पति ॥ जालं—क्षारकावपि । आनायो [3]मत्स्यादिनिरोधनभूतरज्जुवितानविशेषः[4] । अप्राप्तमुकुलावस्थः कुसुमाङ्कुरः क्षारकः । शेषे—

'पुमान् नीपद्रुमे जालो जाली कोशातकी भवेत् ।
दम्भेन्द्रजालयोः क्लीबम्' ॥

इति । दम्भः कुहना । इन्द्रजालं[5] नाम असदर्थप्रकाशनसमर्थो [6]मन्त्रौषधादिप्रयोगः । विश्वप्रकाशेऽपि—'जालं गवाक्ष आनाये [7]कोरके दम्भवृन्दयोः' इति (पृ. १५०, श्लो. १८) । वृन्दे यथा—मेघजालं शब्दजालमिति[8] ॥ २०० ॥

[1] कीलिते मांसं Tj1 [2] 'इगुपधज्ञाप्रीकिरः कः' [3] °निरोधसाधनभूत° Tj1 [4] °विधान° Tj1 [5] इन्द्रजाल Tj1 [6] मन्त्रौषध° B5, B6. [7] क्षारके दन्तवृन्दयो इति मु प्र [8] जलति । 'जल घातने' । 'ज्वलादिभ्यः' (३ १ १४०) । जालयति वा । 'जल संवरणे' चुरादि । पचाद्यच् (३ १ १३४) इति भा दी (पृ ४६८)

(पा ) शोणिते—शिफाभयो । आद्यार्थे—अधिरा वृक्षमूले तिष्ठति पथिक । शिफार्थे—वृक्षमूलमुत्खनति । समीपार्थेऽपि स्यात् । [1]वृक्षमूले गच्छति

सेना ॥ जाल—क्षारकावपि । [2]कपटेऽपि स्यात् । [3]'जाल तु कपटेऽप्युक्तम्' इति हलायुध. (अ मा. ५ १८) ॥ २०० ॥

[1] B3 omits [2] कपटोऽपि A1 [3] जाल कपटे इति मु ग्र

**शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम् ।**
**छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना ॥ २०१ ॥**

(वि.) सद्वर्तने स्वभावे च शीलशब्द प्रकीर्तित ।

[1]शील्यतेऽनेनेति शीलम् । 'शील समाधौ' ॥

[2]तक्कोले फलके मुष्टौ लाभमुक्ताप्रियङ्गुषु ॥ 439 ॥
जातीफले धान्यकणे वार्क्षवाणाग्रयोरपि ।
त्रिफलाया [3]हेतुकृते सस्ये च फलमुच्यते ॥ 440 ॥

फलतीति फलम् । 'फल निष्पत्तौ'[4] ॥

समूहे नेत्ररोगे च तिलके च परिच्छदे ।
आच्छादने गृहस्यापि पटल परिकीर्तितम् ॥ 441 ।

पट विस्तार लातीति पटलम् । 'ला आदाने' ॥ २०१ ॥

[1] शीलयति K6 शीलति J2 [2] कक्कोले च फले J2 [3] हेतुकृतौ K6
[4] K5 adds 'जिफ्ला विशरणे'

(विव.) शीलं स्वभावे सद्वृत्ते । शील्यते समाधीयत इति शीलम्[1] । 'शील समाधौ'[2] । यावद्द्रव्यभावी धर्म इत्यर्थः । यथा—निद्राशीलः, दूषणशीलः इति । सद्वृत्ते यथा—शीलवान् पुत्र इति ॥ सस्ये हेतुकृते फलम् । सस्ये यथा—'ओषध्यः फलपाकान्ताः' (१, पृ. २१८, म. स्मृ. १. ४६) । हेतुना कारणेन कृते प्राप्ते यथा[3]—यागस्य स्वर्गः फलम् । [4]दुष्कृतस्य नरकः फलम् इति । शेषे—

'फलं जातीफले मुष्टौ मुक्ताधान्यकणेषु च ।
बाणाग्रवार्क्षत्रिफले तक्कोले तिलकेऽपि च ॥'

इति। मुष्टिः सग्राहः। मुक्ता मौक्तिकम्। [5]धान्यकणाः तण्डुलशकलाः। यथा—'सुफलीकृतान् जुहोति' इति। बाणाग्रादीना त्रयाणा द्वन्द्वैकवद्भावः। वृक्षस्य सबन्धि वार्क्षम्, सहकारदाडिमफलादि। फलक चर्मदारुपट्टिकादि। 'प्रियङ्गुः फलिनी फली' इति गतम् (१, पृ. २४७)। 'फलं फाले धने बीजे निष्पत्तौ भोगलाभयोः'[6] इति केशवस्वामी (ना. स पृ. ११३, श्लो. ८२५)। फलति निष्पद्यत इति फलम्। 'फल निष्पत्तौ'[7]॥ छदिर्नेत्ररुजोः—पटलं न ना। पटं विस्तार[8] लातीति पटलम्। छदिः तृणादिनिर्मितं गृहाच्छादनम्। नेत्ररोगः पटलाख्यः [9]नेत्रगोलकयोस्तिरोधायकः सूक्ष्मः श्लेष्मादिधातुविकारः। [10]पटसादृश्यात् पट इत्युच्यते। तं लातीति पटलम्। यथा—'तिमिरं काचतां याति पटले तदुपेक्षया' इति। समूहवचनत्वे तु स्त्रीनपुंसकोभयलिङ्गः। स्त्रियां तु गौरादिङीषि (४. १. ४१) पटली। शेषे—'तिलके च परिच्छदे। पटलः।' इति। परिच्छदे यथा—भूषापटलिकाहस्त इति ॥ २०१ ॥

[1] Tj1 adds स्वभाव [2] पद् (३ ३ १८), पा धा (३ ३ ११८) इति भा दी (पृ ४६८) [3] Tj1 adds यत्र कुत्रापि [4] भोजनस्य तृप्ति फलम् Tj1 [5] धान्य बीजादि Tj1 [6] °लाभया Tj1 [7] पराद्यत् (३ १ १२४) [8] विस्तार Tj1 [9] नेत्रमार्ग° 1s [10] पट° Tj1

(पा) शील—फलम्। ऋतुहेत[1] शाम्ब्रफल विनय इत्यादिस्वरूपहेतु-दर्शनमन्यथम्।

'फल हेतुमृत्य स्यात् फला व्युष्टिसामया।
जातिपत्रेऽपि [2]राशौ गन्धबाणाप्रयोगेऽपि ॥'

इति विश्व (पृ १८१, श्लो २-३)॥ छदिर्नेत्ररुजोः—पटल न ना। पटल पटली वा ॥ २०१ ॥

[1] Ls C1 add ऋतुफलादि [2] °कफाले इति मु ८

अधःस्वरूपयोरस्त्री तल स्याच्चामिषे पलम्।
औशीनसेऽपि पानान्न घोलं यस्त्वेऽधमे त्रिषु ॥ २०२ ॥

(वि) [1]स्वस्मादधादधोऽशीत पृष्ठ तनपाय्यत।

तल चपेटे तालादौ [2]वितस्तौ खड्गमुष्टिके ॥ 442 ॥

तलति प्रतितिष्ठतीति तलम् । 'तल प्रतिष्ठायाम्' ॥

मासे कर्षचतुष्के च पल तु परिकीर्तितम् ।

पलतीति पलम् । 'पल गतौ' ॥

अधोलोके[3] [4]वाडवाग्नौ पाताल परिकीर्तितम् ॥ 443 ॥

पतन्त्यस्मिन् पापादिति पातालम्[5] ॥

चेल वस्त्रे न ना प्रोक्त गर्हित नीचतुच्छयो ।

चिलत्येतद् वस्त्र इति चेलम् । 'चिल वसने' ॥ २०२ ॥

[1] °आधारयो J2, K5 [2] विस्तारे J2 [3] °भुखे J2 [4] वडवाग्नौ K3, K4 [5] J2, K2 add पल्ल गतौ'

(विव) अधःस्वरूपयोरस्त्री तलम् । तलति प्रतितिष्ठतीति तलम् । 'तल प्रतिष्ठायाम्'। अधोदेशे[1]—पादतलम्। स्वरूपे यथा—करतलम्। 'तले ज्याघातवारणे' इति गतम् (१, पृ ५३३)[2]। शेषे—

'खड्गमुष्टिचपेटयो ।
[3]पृष्ठे क्लीबं तालतरौ वितस्तौ च पुमान् भवेत् ॥'

इति। चपेटे—तलप्रहार । पृष्ठे यथा—'सकोचिताङ्गनिचयोऽपि पराङ्मुखोऽपि धत्ते तलेन धरणीं कमठ पुराण' इति ॥ स्याच्चामिषे पलम् । आमिषे मांसे । पलति रक्षतीति पलम्। 'पल रक्षणे'। [4]'पल कर्षचतुष्टयम्' इति गतम् (१, पृ. ६०५)। 'पलमुन्मानमांसयो' इति रुद्रश्च ॥ और्वानलेऽपि पातालम्। उदकस्य पात पतनमालातीति पातालम्। और्वानलो बडबाग्नि । अपिशब्दाद् अधोभुवने॥ चेल वस्त्रेऽधमे त्रिषु। अधमो नीचो गर्हितश्च। तथा च विश्वप्रकाशे—'चेलो नीचेऽन्यवच्चेलमशुके गर्हितेऽन्यवत्' इति (पृ १५०, श्लो २२)। 'न पुंसि वसने चेल गर्हिताधमयोस्त्रिषु' इति रुद्रश्च। स्त्रियां तु ङीपि चेली ॥ २०२ ॥

[1] Tj1 adds यथा [2] Tv adds तलेऽधस्तले [3] Tj1 adds ज्याघातवृद्वितस्त्योश्च तलस्ताले प्रकीर्तित । ज्याघातवृत् ज्याघातवारणम्। तले तालवृक्षे इत्यर्थ तथा विश्व-प्रकाश —' तल स्वरूपाधरयो तलस्तालतरावपि ' इत्यादि (पृ १४६, श्लो ७) [4] B6 adds चशब्दात्

(पा.) अध स्वरूपयोरस्त्री तलम् । अधोऽर्थे—वृक्षस्य तलम् । स्वरूपार्थे—नभस्तलम् । स्याच्चामिषे पलम् । उन्मानविशेषेऽपि स्यात्[1] ॥ और्वानलेऽपि पातालम । रसातलेऽपि स्यात् । चेल वस्त्रेऽधम त्रिषु । अधमे—चेलोऽयम् , [2]चेलीयम् ॥ २०२ ॥

[1] C1 omits स्यात् [2] B3 adds गौरादित्वात् ङीष्

**कुकूलं शङकुभिः कीर्णे श्वभ्रे ना तु तुषानले ।**
**निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ॥ २०३ ॥**

(वि) कुकूल [1]शङकुभि कीर्णे श्वभ्रे ना तु तुषानले ॥ 444 ॥

कुत्सित कूल कुकूलम् ॥

केवल निश्चिते [2]कृत्स्नेऽप्यसहायेऽपि च त्रिषु ।

केवलमिति मान्तमव्ययम्[3] ॥ २०३ ॥

[1] शङकुसकीर्णे J2, K2 [2] अपार्थे J2 [3] K6 adds केवत इति केवलम् । 'केवृ सेवने'

(विव.) कुकूलं—तुषानले। दुर्गसमीपे प्रतिपक्षसेनासंचारपरिहारार्थं कृतैः तीक्ष्णलोहादिशङकुभिर्व्याप्तमहागर्ते नपुंसकलिङ्गः कुकूलशब्दो वर्तते । तुषाग्नौ तु पुंलिङ्गः। दुष्प्रवेशत्वेन कुत्सितकूलसादृश्यात् कुकूलम् ॥ निर्णीते—त्वेककृत्स्नयोः । निर्णीते प्रमाणेनावधारिते केवलं नपुंसकलिङ्गमिति सुभूतिचन्द्रः । सुबोधिनीकारस्त्वाह—इतिशब्देन रूपान्तरनिराकरणादव्ययत्वम् । यथा—केवलमयं [1]मूर्ख इति। दक्षिणावर्तनाथस्तु—' ददृशे पुरुषाकृति क्षितौ हरकोपान-लभस्म केवलम्' इति श्लोकव्याख्याने (कु. सं. ४. ३) केवलं शुद्धमिति व्याख्याय तत्संवादत्वेन 'निर्णिक्ते केवलम्' इत्यमरसिंहाभिधानदर्शिते निर्णिक्तं शोधितं

वचनमुदाजहार। एकस्मिन् अद्वितीये यथा—'ख्यातः साहित्यविद्यायां केवलः शिङ्गभूपतिः' इति। यथा वा—'पार्थेन केवलेनैते गोग्रहे शत्रवो जिताः' इति। कृत्स्ने समस्ते यथा—इह ग्रामे केवला भिक्षवः इति। [2]केवतिः सेवार्थो धातुः। 'वृषादिभ्यश्चित्' (उ. १. १११) इति औणादिकः कलप्रत्ययः ॥ २०३ ॥

[1] Tj1, Tj2 add देवदत्त　　[2] केवते इति केवलम्। 'केवृ सेवने' Tv; 'केवृ शब्दे' B6

(पा) कुकूल—स्वेककृत्स्नयोः। केवलमिति निर्णीतार्थे नपुसकम्। 'मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम्' (वै. श ७) इति ॥ २०३ ॥

**पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु।**
**प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च ॥ २०४ ॥**

(वि) पर्याप्तौ शिक्षिते पुण्ये क्षेमे कुशलमुच्यते ॥ 445 ॥

कुत्सितममङ्गल्य श्यतीति कुशलम्। 'शो तनूकरणे'[1] ॥

अङ्कुरे विद्रुमे वीणादण्डे मूर्खतरेऽपि च।
सुकेशे च प्रवाल तु पुनपुसकमुच्यते ॥ 446 ॥

[2]प्रकृष्ट वलत इति प्रवालम्[3]। 'वल सवरणे सचरणे[4] च' ॥

पीवरे च जडे चैव स्थूल त्रिष्वभिधीयत।

स्थूलयत इति स्थूलम्। 'स्थूल परिबृहणे' ॥ २०४ ॥

[1] K8 adds कुशान् लातीति वा। 'ला आदाने'　　[2] प्रवलन्ते स्वरा अत्रेति K2, K3　　[3] प्रवाल K5, K6　　[4] सचलने K6

(विव.) पर्याप्तिक्षेम—शिक्षिते त्रिषु। पर्याप्तिः सामर्थ्यम्। कुशलो भारवाहने समर्थ इत्यर्थः। क्षेमे यथा—कुशलं ते ब्रूयात्। पुण्ये यथा—कुशलाचारशील इति। शिक्षिते यथा—कुशलस्तर्कविद्यायामिति। कुशान् लातीति कुशलः। कुशग्रहणस्येव दुष्करस्यापि कर्मणः करणे शक्त इत्यर्थः। कुं श्यति तनूकरोतीति कुशलः। 'शो तनूकरणे'। कलप्रत्ययः[1] (उ. १. १११) ॥ प्रवाल-

मङ्कुरेऽप्यस्त्री । अङ्कुरोऽत्र नवकिसलयः । वीणादण्डे विद्रुमे च प्रागुक्तम् (१, पृ. १२५, ६०८) । प्रकृष्टा वालाः केशा अस्येति प्रवालः सुकेशः । वबयोरभेदात् प्रकर्षेण बालोऽपि प्रवालः ॥ त्रिपु स्थूल जडेऽपि च । जडो मन्दबुद्धिः । स्थूल ज्ञानमित्येव । यथा—'बहुस्पृशापि स्थूलेन स्थीयते बहिरश्मवत्' (शिशु २. ७८) इति वाच्यलिङ्गः । अपिशब्दात् पीवरे[2] । स्थूलयत इति स्थूलम् । 'स्थूल परिबृहणे'[3] (३. १. १३४) ॥ २०४ ॥

[1] 'वृपादिभ्यश्चित्' [2] Tv adds अपि [3] पचाद्यच्

(पा) पर्याप्तिक्षेम—शिक्षिते त्रिपु । [1]कुशलमिति सामर्थ्यमङ्गलमिति नपुसकम् ॥ प्रवालमङ्कुरेऽप्यस्त्री । [2]अङ्कुरे नवपल्लवे । वीणादण्डविद्रुमयोरपि स्यात् ॥ त्रिपु स्थूल जडेऽपि च । जडे निर्बुद्धौ[3] । पीवरेऽपि स्यात् ॥ २०४ ॥

[1] $B_3$ omits the sentence [2] $C_1$ omits [3] मन्दबुद्धौ A1

**करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः ।**
**मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः ॥ २०५ ॥**

## इति लान्तवर्गः

(वि) करालो दन्तुरे जिह्मे तुङ्गभीषणयोरपि ॥ 447 ॥

करोति भयमिति कराल[1] ॥

[2]रुचिरे कोकिले दक्षे मृदौ शीताशुशेखरे ।
मुसले चापि कथित पेशल पूर्वसूरिभि ॥ 448 ॥

पिशतीति पेशल । 'पिश अवयवे' ॥

मूर्खे केशेऽर्भके [3]पुच्छे ह्रीबरे बाल उच्यते ।

[4]वलत्यनेनेति बाल । 'वल प्राणने' ॥

तृष्णायुक्ते चञ्चले च लोलस्तु परिकथ्यते[5] ॥ 449 ॥

[6]लोडतीति लोल । 'लुड विलोडने' ॥ २०५ ॥

इति लान्तवर्ग [7]

[1] भयकरत्वात् कराल K2, K4 [2] चिकुरे J2, K6 [3] तुच्छे K6
[4] वल्यतेऽनेन K4, K2, K3 add स्वल्पायासेनापि श्वसिति [5] परिकीर्तित J2
[6] लुलति, 'लुल सश्लेषणे' J2, K4 [7] K2, K5 add लान्तवर्गसख्या ३६

(विव.) करालो दन्तुरे तुङ्गे । अत्रापि त्रिष्वित्यनुवर्तते । दन्तुरः उन्नतदन्तः । करोति भयमिति करालम् । कृणोतीति वा । 'कृञ् हिंसायाम्'[1] । शेषे—'कशेरुणि करालं नप् भीषणे वाच्यलिङ्गकः' इति ॥ चारौ दक्षे च पेशलः । पिशति अवयवव्यापारं करोतीति पेशलः । 'पिश अवयवक्रियायाम्' इति निष्कृष्टो धातुः[2] । शेषे—'पेशलो मृदुले प्रोक्तो[3] मुसले कोकिले हरे' इति ॥ मूर्खेऽर्भकेऽपि बालः स्यात् । मूर्खो दुराग्रहयुक्तः । वल्यतेऽज्ञानेन संव्रियत इति बालः । 'वल संवरणे' । अत्र सर्वधरः[4]—

बालोऽज्ञेऽश्वेभपुच्छयोः ।
शिशौ ह्रीबेरकचयोर्बाला तु त्रुटियोषितोः ।
बाली भूपान्तरे मेधौ ॥

इति । अश्वपुच्छमिभपुच्छं चेति[5] द्वन्द्वसमासार्थः । त्रुटिः सूक्ष्मेला । मेधिः खले दारु ॥ लोलश्चलसतृष्णयोः । चलः चञ्चलः । सतृष्णः साभिलाषः । लोलतीति लोलः । 'लुल विलोडने'[6] । त्रिष्विति पदस्यानुवृत्तेः वाच्यलिङ्गः ॥ २०५ ॥

इति लान्तवर्गः[7]

[1] करेणालाति । 'आतश्चोपसर्गे' इति, 'सुपि' (३ २ ४) इति योगविभागाद्वा क । यद्वा करमलति । 'अल भूषणादौ' । 'कर्मण्यण्' इति भा दी (पृ ४६६) [2] भावे घञ् । पेश लाति । बाहुलकात् पिशेरलज्वा । इति भा दी (पृ ४ ६६) [3] प्रोक्तौ B6 [4] विश्व Tv [5] Tv adds द्वयो [6] पचाद्यच् (३ १ १३४) [7] TJ1, TJ2 add लान्तवर्गसख्या ३६

(पा) करालो—लोलश्चलसतृष्णयो । त्रिष्वित्यधिकारनियमात् जिह्वालक्ष्म्योर्नोक्तम् । 'लोला जिह्वाकमलयोर्लोलश्चलसतृष्णयो' इति विश्व (पृ १५२, श्लो ४४) ॥ अनुक्तम्—

धूमेऽपि कन्दराल स्याद् गण्डशैलोऽलिकेऽपि च ।
जम्वाल शैवलेऽपि स्यात् पञ्चाल स्याज्जनेऽपि च ।।
[1]हालाहलोऽश्वलालायामप्यरालो[2] गजेऽपि च ।
सिनीवाली भवान्यामप्याभीली दारुणेऽपि च ।।
वृपली कन्यका वन्धया म्रियमाणसुतापि च ।
पल्ली कुटीग्रामटयोर्वल्ल सूरण आर्द्रके ।।
हस्तिमल्लो गणपतौ महेन्द्रस्य च कुञ्जरे ।
ध्वनिनाला[3] तु वीणाया वेणुकाहलयोरपि ।।
स्यात्तु वायफल शक्रकार्मुके करकोपले ।
यज्वाल (?) कल्यपालश्च द्वाविमावासुतीवलौ[4] ।।
*भस्मतूलमवश्याय पासुवर्पमिति द्वयम् ।। २०५ ।।*

इति लान्तवर्ग

[1] अश्वलाला सपविशेप [2] आराल A1 [3] °नाली A1, B3 [4] आसुतीवल शौण्डिक

**अथ वान्तशब्दाः—**

**दवदावौ वनारण्यवह्नी जन्महरौ भवौ ।**
**मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः ।। २०६ ।।**

(वि) वने [1]वनोत्थदहने दवो दावश्च कीर्तितौ ।

दुनोति दूयतेऽनेन वा दव दावश्च । 'टुदु[2] उपतापे' ।।

हरे जन्मनि ससारे सत्ताया प्राप्तिभावयो ।। 450 ।।
उपादानश्रेयसोश्चाप्यवकल्कनभस्मयो ।
अनुकल्के विकल्के च भवशब्द उदाहृत ।। 451 ।।

[3]भवत्यस्मादिति भव । 'भू [4]सत्तायाम्' । 'भुव अवकल्कने' ।।

सहाये च प्रधाने च सचिव परिकीर्तित ।

[5]सचते समवैतीति सचिव.। 'षच समवाये'॥

धूर्ते प्रेतनरे वृक्षे धव पत्यौ नरे भवेत्॥ 452॥

[6]धूयत इति धवः। 'धूञ् कम्पने'॥ २०६॥

[1] वनोत्थवह्नौ K2, K4; दवोत्थ° J2	[2] 'दूञ् परितापे' K2, K3
[3] भवत्यनेन K3, K5	[4] प्राप्तौ K2, K3	[5] सचति K2, K3	[6] धूनोति K4

(विव.) दवदावौ वनारण्यवह्नी। [1]शब्दद्वयमत्र प्रतिपाद्यम्। वनं विपिनम्,[2] अरण्यस्य वह्निश्च दवशब्दस्य दावशब्दस्य च प्रत्येकं द्वावर्थौ। दूयतेऽनेन दवः। 'ऋदोरप्' (३. ३. ५७)। दुनोतीति दावः। 'दुन्योरनुपसर्गे' (३. १. १४२) इति णः॥ जन्महरौ—भवौ। [3]ऋदोरबिति (३. ३. ५७) भावार्थे भवतेरप्प्रत्यये भव उत्पत्तिः। भवत्यस्मात् सर्वमित्यपादाने भवो हरः ईश्वरः। शेषे—'सत्तासंसारकल्याणप्राप्त्युपादानभस्मसु। भवः' इति॥ मन्त्री सहायसचिवौ। बुद्धिकुशलोऽमात्यो मन्त्री। कृष्यादिकर्मस्वनुग्राहकः सहायः। [4]सचते समवैतीति[5] सचिवः। 'षच समवाये'॥ पतिशाखिनरा धवाः। पतिर्भर्ता। शाखी वृक्षविशेषः। 'धूञ् कम्पने'। कर्तरि पचाद्यच् (३. १. १३४)। धवः कर्मणि वा। 'ऋदोरप्' (३. ३. ५७)। शेषे—'धवस्तु धूर्तौ स्याद् धूतिर्धुननम्' इति॥ २०६॥

[1] दवौ दावौ इति Tv	[2] Tv adds 'अधिज्यधन्वा विचचार दावम्' इति (रघु २ ८).	[3] भव सभव। जन्म उत्पत्ति। ऋदोरबिति भावे अपादाने च अप्रत्यय Tv.	[4] सचति B5, B6	[5] समुपैति Gm3

(पा) दवदावौ वनारण्यवह्नी। दवौ च तौ दावौ च दवदावौ इति विशेषणसमास·॥ जन्महरौ भवौ। जन्ममात्र च जन्मबन्धश्च जन्म[1]। 'भव· ससारसप्राप्तिश्रेय·शकरजन्मसु' इति विश्व· (पृ. १६२, श्लो २)॥ मन्त्री—धवा:॥ २०६॥

[1] जन्मनि A1

अवयः शैलमेषार्का आज्ञाह्वानाध्वरा हवाः।
भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु॥ २०७॥

(वि ) पर्वते तीक्ष्णरश्मौ चाप्याग्नेय्यामाखुकम्बले ।
मेषाख्यपशुभेदे चाप्यविस्तु समुदाहृत ॥ 453 ॥

[1]अवतीत्यवि । 'अव[2] रक्षणे' ॥

शासनाह्वानयोश्चापि सप्ततन्तौ हवो भवेत् ।

हूयतेऽस्मिन्निति हव । [3]'हु दानादानयो' ॥

सत्तास्वभावयोर्योनावभिप्रायात्मजन्तुषु ॥ 454 ॥
चेष्टाक्रियापदार्थेषु [4]लीलाविभवभूतिषु ।
विकल्पनादौ सामर्थ्ये कान्तिनक्षत्रपालयो. ॥ 455 ॥
सात्त्विकादौ रतौ वेश्मे भावो जन्मनि च स्मृत. ।

[5]भवतीति भाव । भा[6] अवतीति वा भाव । 'अव रक्षणे' ॥ २०७ ॥

[1] K2 adds रक्षति [2] J2 omits [3] 'ह्वेञ् स्पर्धाया शब्दे च' K5
[4] °बुधविभूतिषु K6 [5] भावयति K4 [6] भम् K2, K3

(विव.) अवयः शैलमेषार्काः। अर्कः सूर्यः। अवति रक्षतीत्यविः। 'अव रक्षणे' (उ. ४. ११६)। शेषे—'अविर्मूषिककम्बले' इति। आखौ कम्बले [1]चेत्यर्थः। पुष्पवत्यां तु [2]सविसर्जनीय ईकारान्तः प्रागुक्तः (१, पृ. ३७३)॥ आज्ञाह्वानाध्वरा हवाः। 'ह्वेञ् स्पर्धायाम् शब्दे च' इति धातोः 'भावेऽनुपसर्गस्य' (३. ३. ७५) इति ह्वः संप्रसारणे अप्प्रत्यये च हवः, आह्वानं च। हूयन्तेऽस्मिन्नाज्यादीनीति हवोऽध्वरो यागः। 'हु दानादानयोः'। 'ऋदोरप्' (३. ३. ५७)॥ भावः—चेष्टात्मजन्तुषु। शेषे—

'भावो बुधे विभूतौ च योनौ लीलापदार्थयोः ।
रतिवेगे शब्दवृत्तिनिमित्ते रसबन्धिनि ॥
विकल्पनादिषु प्राप्तौ जन्मन्यपि पुमान् भवेत् ।
भावं स्याद् भवसबन्धे भ भामवति च त्रिषु ॥'

इति। द्रव्यादीनामस्तित्वं सत्ता। यथा—'सर्वत्र सर्वदा भावः कालाकाशदिगात्मनाम्'। [3]सत्ताख्या परजातिर्भाव इति तार्किकाणां व्यवहारः। स्वभावो यावद्-

द्रव्यभावी धर्मः। यथा—[4]'भावानुरक्तवनितासुरतैः शपेयम्' इति (घटकर्पर २२)। अभिप्रायः तात्पर्यम्। यथा—अस्य श्लोकस्यायं भाव इति। चेष्टा नाम धात्वर्थरूपा क्रिया। यथा—'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते' इति। आत्मनि यथा—'स्वं भावं भावयेद् योगी' इति। आत्मानं भावयेदित्यर्थः। जन्तुषु यथा वनधर्मे—'शक्त्या कालभवैर्द्रव्यैः सर्वभावानुपालनम्' इति। बुधे यथा—'भावो विद्वान्' इति प्रागुक्तम् (१, पृ. १२८)। 'सौगतजरत्प्रव्राजिकायाः कामं प्रथमां भूमिकां भाव एकोऽधीते' इति। विभूतौ यथा—'अनित्या हि यतो भावास्ततो धर्मे मतिं कुरु' इति। योनौ यथा—[5]'स्त्रीभावे व्रणवत्क्लिन्ने यस्येच्छा कृमिरेव सः' इति। लीलायां यथा—भावावेदितमान्मथेति। पदार्थमात्रे यथा—द्रव्यादयः षडेव भावा इति। 'भावत्वाधिष्ठिताः सर्वाः प्रत्येकं व्यक्तयो मताः' इति च। रतिवेगे यथा—'भावसाध्यं द्वयोः कुर्यात् क्रोधहर्षकथान्तरैः' इति नैषधकाव्ये। शब्दप्रवृत्तिनिमित्ते यथा—'तस्य भावस्त्वतलौ' (५. १. ११९)। रसबन्धिनि रसनिष्पादके यथा—स्थायिभावाः, सात्त्विकभावाः, व्यभिचारिभावाः इत्यादि। जन्मनि यथा—'नासतो विद्यते भावः' इति (भ. गी. २. १६)। भवस्येदमित्यर्थे भवशब्दाद् अण्प्रत्यये भावम्। भं नक्षत्रम् अवतीति वा भां कान्तिमवतीति वा विवक्षायां भावशब्दस्य विशेष्यानुरोधात् त्रिलिङ्गत्वम्। सत्तादौ क्वचिदर्थविशेषे भवतेर्धातोर्भावार्थे घञि[6] भावः। अन्यत्र 'विभाषा ग्रहः' (३. १. १४३) इत्यत्र 'भवतेश्चेति [7]वक्तव्यम्' (वा. ३. १. १४३) इति कर्तरि णप्रत्यये भावः॥ २०७॥

[1] मूषिकचर्मनिर्मितकम्बले वा [2] अवीरिति Tv [3] द्रव्यादिलयवर्तिनि सत्ता जातिरपि Tv [4] भावानुपक्त° B6 [5] Tv adds 'उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे' [6] घञ्प्रत्यये Tj1, Tj2 [7] B6 omits.

(पा) अवय.—हवा। भाव सत्त्वस्वभाव—आत्मजन्मसु। [1]सत्त्वशब्देन सत्ताजन्तू कथितौ। तथा च विश्वप्रकाशे—

'भाव. [2]स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु।
क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु॥'

इति (पृ १६३, श्लो १४)॥ २०७॥

[1] सत्त्व° इति पारिजाताभिमत पाठ [2] स्वभावाभिप्राय° B3

**स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने ।**
**अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः ।। २०८ ।।**

(वि.) स्यात् फलोत्पादयो पुष्पे प्रसवो गर्भमोचने ।। 456 ।।

प्रसूयत इति प्रसव । [1]'षूङ प्राणिप्रसवे' ।।

निह्नवोऽपह्नवेऽपि स्यादविश्वासे च कैतवे ।

[2]निह्नूयत इति निह्नव । 'ह्नुङ [3]अपनयने' ।। २०८ ।।

[1] K3, K4 omit; 'षूङ प्राणिगर्भविमोचने' K5 [2] J2 adds अपनीयते [3] अपनये K2, K3

(विव.) स्यादुत्पादे––गर्भमोचने । गर्भमोचने उत्पद्यत इति उत्पादोऽपत्यम्[1] । 'पदरुजविशस्पृशो घञ्' (३. ३. १६) इति घञ् । यथा––'अहो पशूनामपि प्रसववात्सल्यम्' इति मुरारिः (अ. रा. २. २२-) । गर्भमोचनं नाम दशममासादौ गर्भनिर्गमनव्यापारः[2] । यथा––प्रसवकाल इति । 'षूङ प्राणिप्रसवे' इति धातोः कर्मणि भावे च 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्ययः । अनुज्ञायामपि प्रसवशब्दः । यथा––'देवस्य त्वा सवितुः प्रसवे' (तै. सं. १. ८. ७. २) इति ।। अविश्वासे––निह्नवः । [3]अविश्वासे यथा––'शपथं कृतवत्यपि देशे मम चित्तं मुहुरेति निह्नवम्' इति । अपह्नवोऽपलापः । यथा––'निह्नवे भावितो दद्यात्' इति (या. स्मृ. २. २. ११) । निकृतिः तिरस्कारः । यथा––

'स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः' ।

इति माघकाव्ये (शिशु. ३. ४३) । निकृतिः शाठ्यमिति चन्द्रः । 'ह्नुङ अपनये' इत्यस्माद् धातोर्भावे अप्प्रत्ययः[4] । अपनयोऽपलाप इति [5]धातुवृत्तिः । यत्र क्वचन कृतापह्नवे जायमानत्वाद् अविश्वासोऽपि निह्नव उच्यते ।। २०८ ।।

[1] उत्पाद उत्पत्तिरिति केचित् TJ1, Tv. [2] °निर्गमनोपायभूत° Tv. [3] Gm3 adds अविश्वसो विश्वासाभाव [4] 'ऋदोरप्' [5] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते.

(पा) स्यादुत्पादे—गर्भमोचने । उत्पाद उत्पत्ति. । फलपुष्पे वृक्षविकारौ । गर्भमोचन प्रसूति. ।। अविश्वासे—निह्नव. । 'विश्वासेऽपह्नवे चैव निकृतावपि निह्नव' इत्यमरमाला । 'निह्नवस्त्वपलापे स्याद् विश्वासे[1] [2]निकृतावपि' इति जयकोश[3] ।। २०८ ।।

[1] विश्वासो रहस्यमित्यर्थ　　[2] विकृतौ A1　　[3] जय A1

**उत्सेकामर्षयोरिच्छाप्रसवे मह उत्सवः ।**
**अनुभावः प्रभावे च सतां च मतिनिश्चये ।। २०९ ।।**

(वि) [1]उद्रेकेच्छाप्रसवयोरुत्सवो महकोपयो ।। 457 ।।

उत्सूयतेऽस्मिन्नित्युत्सव । [2]'पू प्रेरणे' ।।

अनुभावस्तु विदुषा मतिनिश्चयनेऽपि [3]च ।
भावबोधकसामर्थ्यभावनेष्वपि कथ्यते ।। 458 ।।

[4]अनुभावयतीत्यनुभाव । 'भुव अवकल्कने' ।। २०९ ।।

[1] उत्सेक° J2, K5　　[2] K4, K5 add 'पु प्रसवैश्वर्ययो'　　[3] वा K6
[4] अनुभवतीत्यनुभव । अनुभव एव अनुभाव J2

(विव.) उत्सेकामर्ष—मह उत्सवः । उत्सेक उद्रेकः । इच्छाप्रसव इच्छाया उत्पत्तिः । मह इति सप्तमी, उद्धर्षे इत्यर्थः । 'पू प्रेरणे', 'पु प्रसवैश्वर्ययोः' इति धातुभ्यां कर्मणि 'ऋदोरप्' (३. ३. ५७) इत्यप्प्रत्यये उत्सवः । पचाद्यच् (३. १. १३४) वा ।। अनुभावः—मतिनिश्चये । प्रभावे सामर्थ्ये यथा—महानुभावः । महापुरुषनिश्चये यथा—अनुभावविदितोऽयमर्थः । 'अनुभावो भावबोधकः' इति गतम् (१, पृ. १३३) । 'भवतेश्चेति वक्तव्यम्' (वा. ३. १. १४३) इति कर्तरि णप्रत्ययः । [1]'श्रिणीभुवोऽनुपसर्गे' (३. ३. २४) इत्यनुपसर्गादेव घञ्प्रत्ययो विहितः । तथापि 'कृत्यल्युटो बहुलम्' (३. ३. ११३) इति बहुलग्रहणात् सोपसर्गादपि [2]घञ्प्रत्ययः ।। २०९ ।।

[1] Tv adds अथवा यद्यपि　　[2] Tj2 adds करणाद्यर्थेषु

(पा.) उत्सेक—मह उत्सव । उत्सेको [1]गर्व । अमर्षोऽक्षमा । इच्छाप्रसर इच्छाप्रवृत्ति । महो विवाहादि । अनुभाव —मतिनिश्चये । मतिनिश्चयोऽभिप्रायनिर्णय [2] ।। २०९ ।।

[1] उन्नति A1 [2] °निश्चयनम् A1

**स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये ।**
**शूद्रायां विप्रतनये शस्त्रे पारशवो मतः ।। २१० ।।**

(वि ) प्रभवो जन्महेतौ च स्थाने चाद्योपलब्धये ।

प्रभवतीति प्रभव । 'भू सत्तायाम् ।। २१० ।।

[1] शूद्रायामित्यादिश्लोकार्धं विवृत्यभिमतपाठे न दृश्यते

(विव.) स्याज्जन्महेतु.—आद्योपलब्धये । [1]जन्मकारणे यथा—'क्व सूर्यप्रभवो वशः' इति (रघु. १. २) । [2]अन्यत्रोत्पन्नस्य प्रथमाविर्भावप्रदेशे यथा—प्रभवो हिमवान् गङ्गाया इति । प्रभवति जायतेऽस्मादिति प्रभव । अपादाने अप्प्रत्ययः[3] ।। २१० ।।

[1] जन्मनो हेतु पित्रादि Tv [2] देशान्तरोत्पन्नस्य गङ्गादे यथाविर्भाव
[3] 'ॠदोरप्', शूद्रायामित्यादिश्लोकार्धं विवरणे न दृश्यते

(पा ) स्याज्जन्महतु —आद्योपलब्धये । प्रथमोदाहरणम्[1]—अय हि गङ्गाप्रभवो नगेन्द्र ।। शूद्राया—पारशवो मत । परस्त्रीतनयेऽपि स्यात् । 'भवेत् पारशव पारस्त्रैणे शूद्रासुतेऽपि[2] च' इति विश्व (पृ १९६, श्लो ५६) ।। २१० ।।

[1] B3 adds कौसल्याप्रभवा राम [2] द्विजात् इति मु ग्र

**ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु ।**
**स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने ।। २११ ।।**

(वि ) नक्षत्रे [1]निश्चिते योगे शाश्वते शिवतर्कयो ।। 459 ।।
वने [2]वटे मुनौ गङ्गावटौ [1]निश्चिते ध्रुव ।

[3]मूर्वागीत्यो. [4]शालपर्ण्या स्रुग्भेदे च ध्रुवा मताः ॥ 460 ॥

ध्रुवति [5]स्थिरीभवतीति ध्रुव । 'ध्रुव [6]गतिस्थैर्ययो' ॥

जातावात्मनि वित्ते च स्वकीये स्वस्त्रिपु स्मृत ।

स्वकीयत्वात् स्व ॥ २११ ॥

[1] निश्चये J2　[2] तटे K6　[3] दूर्वा° K5　[4] साल°　[5] K2 omits.
[6] 'ध्रुव स्थैर्ये' K2, K6

(विव.) ध्रुवो भभेदे—शाश्वते त्रिषु। भभेदस्तारकाविशेषः, उत्तानपादस्य पुत्रः। तत्र रूपभेदात् पुंलिङ्ग.। निश्चिते तु नपुंसकलिङ्गः। यथा—'ध्रुवं प्रणाशः प्रहितस्य पत्रिणः' इति भारविः (किरा. १४. ६)। शाश्वत[1] वाच्यलिङ्गः। यथा—'ध्रुवा द्यौः ध्रुवा पृथिवी' (ऋग्वेद १०. १७३. ४), ध्रुवं विश्वमिदं जगत् इति। ध्रुवतीति ध्रुवः। 'ध्रुव स्थैर्ये'। 'पचाद्यच्' (३. १. १३४)। कुटादित्वात्[2] (१. २. १) गुणाभावः। शेषे—

'शिवे वसौ वटे योगे ध्रुवः स्त्री गीतिमूर्वयोः।
ध्रुवं तु निश्चये तर्केऽवधौ ॥'

इति। शिवः कीलः। वसौ यथा—

'धरो ध्रुवश्च [3]सोमश्चाप्यहश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः ॥'

इत्यादिमत्स्यपुराणोक्तानाम् (५. २१) अष्टानां वसूना मध्ये द्वितीयो वसुः। वटो न्यग्रोधतरुः। योगो विष्कम्भादिषु द्वादशः। गीतौ स्वरतालाश्रयविशेषे यथा—'विश्वामित्रस्य प्रावेशिको ध्रुवा' इति मुरारिः (अ. रा १. १३-)। तर्क उत्प्रेक्षा। यथा—'मन्ये शङ्के ध्रुवं प्रायः' इति दण्डी (का. आ. २. २३४)। अवधौ यथा—'ध्रुवमपायेऽपादानम्' (१. ४. २४) इति। स्रुग्भेदे तु स्त्रीलिङ्गे प्रागुक्त· (१, पृ. ४६५)। यथा—ध्रुवायामाज्यम् इति प्रयोगः। विश्वप्रकाशेऽपि—

'ध्रुवः कीले शिवे शङ्कौ वसौ योगे वटे मुनौ।
ध्रुवा मूर्वाशालपर्ण्योर्गीतिस्रुग्भेदयोरपि ॥'

इति (पृ. १६२, श्लो. ८)। स्वो ज्ञाता—अस्त्रियां धने। स्वशब्दो ज्ञातिवचनः, रूपभेदात् पुंलिङ्गः। आत्मनि तु तत एव नपुंसकलिङ्गः। आत्मीये वाच्यलिङ्गः। धनवचनः पुंनपुंसकलिङ्गवचन इत्यर्थः। सुबोधिनीकारस्तु—पदस्यैकवाक्ये सत्यपि ज्ञात्यात्मनोर्द्वयोः पुंलिङ्गत्वमभिधाय तत्संवादित्वेन नानार्थरत्नकोशाभिधानमुदाजहार। यथा—'ज्ञात्यात्मनोः स्वः स्वं स्वोऽर्थः स्वं स्वः स्वात्मीयमात्रकः'[4] इति। तथा च—[5]'लक्ष्मीभृतोऽम्भोधितटाधिवासान् . . . बहूकृतान् स्वानिव पश्यति स्म' इति स्वशब्दस्यात्मवचनत्वेऽपि पुंलिङ्गप्रयोगो माघकाव्ये दृश्यते (शिशु. ३. ७१)। सुभूतिचन्द्रस्तु—रूपभेदाद् आत्मनि क्लीबमभिधाय तत्र 'स्वो ज्ञातावात्मनि क्लीबे' इति रभसवचनमुदाहृत्य, बोपालितस्तु 'आत्मन्यपि पुलिङ्गत्वमाह' इति मतान्तरत्वमप्याह। स्यति नाशयति दुःखमिति स्वम्, सिनोति बध्नाति वा। 'षोऽन्तकर्मणि', 'षिञ् बन्धने'। 'स्वमज्ञातिधनाख्यायाम्' (१. १. ३५) इति निर्देशात् साधुः[6]। अत एव ज्ञातिधनयोर्वृक्षशब्दवद् रूपमुन्नेयम्। अन्यत्र पूर्वशब्दवदिति ॥ २११ ॥

[1] Tv adds अपि [2] 'गाङ्कुटादिभ्योऽञ्णिन्ङित्'. [3] सोमश्च अहश्च Gm3, Tv [4] °मातृक B5, B6 [5] लक्ष्मीवृताम्भोधि° Tj1, Tj2 [6] स्वनति। स्वन्यते वा। 'स्वन शब्दे'। 'अन्येभ्योऽपि' (वा ३ २. १०१) इति ड इति भा दी (पृ ५००)

(पा) ध्रुवो भभेदे—शाश्वते त्रिषु। भभेद औत्तानपादि। अगभेदे इति पाठे अगभेदे स्थाणुवटौ ॥ स्वो ज्ञातौ—स्वोऽस्त्रिया धने। स्वो ज्ञातौ पुलिङ्ग। आत्मनि स्वमिति नपुसकम्[1]। 'स्वो ज्ञातावात्मनि क्लीबे' इति रभस.। अथवा स्वो ज्ञातावात्मनीति उभयत्र पुलिङ्ग.। 'स्वोऽस्त्री धने त्रिषु स्वीय आत्मनि स्वजने च[2] ना' इति वैजयन्ती। (पृ २८०, श्लो ३८) ॥ २११ ॥

[1] नपुसक A1 [2] तु इति मु ग्र

स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च।
शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः ॥ २१२ ॥

(वि) नीवी स्त्रीकटीवस्त्रबन्धे परिपणेऽपि च ॥ 161 ॥

[1]नितरां वीयतेऽनयेति नीवी । 'व्येञ् संवरणे' ॥

गौरीफेरवयोर्भद्रे मोक्षे वेदे सुखे हरे ।
योगे [2]जले च शम्या च रेचक्या [3]गुग्गुलौ तथा ॥ 462 ॥
आमलक्या वालुके च पुण्डरीके शिवस्त्रिषु ।

[4]शेरतेऽस्मिन्निति शिवं । 'शीङ् स्वप्ने' ॥

कलहे व्युत्क्रमे युग्मशिवयोर्विजनेऽपि[5] च ॥ 463 ॥
यज्ञपात्रप्रयोगे च समासे [6]द्वन्द्वमुच्यते ।

[7]मिथुनत्वाद् द्वन्द्वम् ॥ २१२ ॥

[1] नियत J2, K5　[2] कीले K5, जिते K6　[3] गुग्गुले K3　[4] K5 adds सज्जनमनांसि　[5] विरले J2　[6] द्वन्द्व J2, K5　[7] द्वौ सह वर्तेते इति J2, K2

(विव.) स्त्रीकटी—परिपणेऽपि च । स्त्रीणां नितम्बदेशस्थस्य वाससः शैथिल्यपरिहारार्थं कृतो ग्रन्थिविशेष इत्यर्थः । नीयते वस्त्रादिदार्ढ्यमनयेति नीविः । 'नियो विच्' । वा ङीपि नीवी[1] स्त्रीकटीवस्त्रबन्धः । परिपणं नाम वणिजामायव्ययशुद्धं मूलधनम् । शेषे—'नीवी स्याद् बन्धनागारे' इति । अत्र स्त्रीग्रहणं नीवीशब्दस्य स्त्रीलिङ्गत्वप्रतिपादनपरमिति केनचित् कृतं व्याख्यानमनादरणीयम् । 'नीविराग्रथनं नार्या जघनस्थस्य वाससः' इति कात्योक्तेः ॥ शिवा गौरीफेरवयोः । सृगालः फेरवः । शेषे—

'मोक्षे भद्रे सुखे शिवम् ।
हरे योगान्तरे वेदे वालुके गुग्गुलौ शिवः ॥
पुण्डरीकद्रुमे चाथ शिवा झण्टामलौषधे ।
अभयामलकीगौरीक्रोष्ट्रीसक्तुफलासु च ॥'

इति । हरादावर्थपट्के शिवशब्दः पुंलिङ्गः । योगविशेषो विष्कम्भादिषु विंशः । वालुकं हरिवालुकम् । हरीतक्यां सक्तुफलायां च स्त्रीलिङ्गतोक्ता (१, पृ. २५०, २४६) । विश्वप्रकाशेऽपि—

'शिवं मोक्षे [2]शुभे भद्रे सलिलेऽथ शिवो हरे ।
वेदे योगान्तरे कीले वालुके गुग्गुलेऽपि च ॥
पुण्डरीकद्रुमे [3]चापि शिवा झण्टामलौषधौ ।
अभयामलकीगौरीक्रोष्ट्रीसक्तुफलासु च ॥'

इति (पृ. १६३, श्लो. १०-११) । द्वन्द्व कलहयुग्मयोः । द्वयोरिदमिति द्वन्द्वम् । कलहे यथा—'बाहुद्वन्द्वप्रवृत्तयोः' इति । द्वौ द्वौ इति द्वन्द्वं युग्मं मिथुनम् । यथा—'द्वन्द्वानि भावं क्रियया विवव्रुः' इति (कु. स. ३. ३५) । 'द्वन्द्वं रहस्य-मर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु' (८. १. १५) इति सूत्रेण द्विशब्दस्य द्विर्वचनं पूर्वपदस्याम्भावः उत्तरपदस्य अत्वं च निपात्यते । अत्र सूत्रे, अन्यत्रापि द्वन्द्वमिष्यते इत्युक्तत्वात् साधुत्वम् । शेषे—'द्वन्द्वं रहस्यमर्यादायज्ञ-पात्रप्रयोजने' इति । यथा—द्वन्द्व मन्त्रयते । रहस्यं मन्त्रयत इत्यर्थः । मर्या-दावचने यथा—[4]'आचतुरं हीमे पशवो द्वन्द्व मिथुनायन्ते' इति । यज्ञपात्रे यथा—'द्वन्द्वं [5]यज्ञपात्राणि प्रयुनक्ति'[6] इति । व्युत्क्रमणं हि विभेदः पृथगव-स्थानम् । यथा—द्वन्द्व व्युत्क्रान्ता ब्राह्मणा इति । [7]द्विवर्गसंबन्धेन पृथगवस्थिता इत्यर्थः ॥ २१२ ॥

[1] निव्ययति, निवीयते वा । 'व्येञ् संवरणे' । 'नौ व्यो यलोप पूर्वस्य च दीर्घ' (उ ४ १३७) इनीण् । 'कृदिकारात—' (ग ४ १ ४५) इति ङीप् इति भा दी (पृ ५०१) [2] शुभे इति मु प्र. [3] चाथ Tj1 [4] काशिका (पृ ३७६) [5] न्यञ्चि B6 [6] धोर इत्यपि काशिकायाम् (२. पृ ३७६) [7] द्विवर्ण° B3

(पा) स्त्रीकटी—परिपणेऽपि च । शिवा गौरीफेरवयो । फेरवे स्त्री ।

'शिवा हरीतकी क्रोष्टा शमी नद्यामलक्युमा ।
शिवो [1]घोले पद्मरागे हरे [2]कीले शिव जले ॥'

इति वैजयन्ती (पृ. २३७, श्लो. ८४) ॥ द्वन्द्व कलहयुग्मयो । [3]कलहे पुलिङ्ग. । 'द्वन्द्वो रहस्ये कलहे द्वन्द्व मिथुनयुग्मयो' इति विश्व (पृ १६४, श्लो ७१) ॥ २१२ ॥

[1] तक्रे इत्यथ [2] कीरे B3 [3] कलह A1

**द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु ।**
**क्लीबं नपुंसके षण्ढे वाच्यलिङ्गमविक्रमे ।। २१३ ।।**

**इति वान्तवर्गः**

(वि.)　द्रव्ये [1]प्राणे वले जन्तौ व्यवसायस्वभावयो. ।। 464 ।।
गुणे वित्ते [2]सतो भावे सत्त्व गुणिनि तु[3] त्रिपु ।

[4]सीदतीति सत्त्वम् । 'षद्लृ विशरणादौ' । सतो भावो वा सत्त्वम् ।।

क्लीव तु त्रिपु च प्रोक्त निष्पराक्रमषण्डयो. ।। 465 ।।

[5]अप्रजत्वेन क्लाम्यतीति क्लीव । 'क्लमु ग्लानौ' ।। २१३ ।।

इति वान्तवर्ग [6]

[1] द्रुमे J2.　[2] सता J2.　[3] च K3, K4　[4] सीदत्यस्मिन् K5, K6
[5] क्लीबतेऽधीरो भवतीति । 'क्लीबृ अधाष्टर्ये' K5　[6] K2, K5 add वान्तशब्दसङ्ख्या २०

(विव.) द्रव्यासु—अस्त्री तु जन्तुषु। इह द्रव्यशब्देन पारिभाषिकं द्रव्यमाश्रीयते। तथा हि—

'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन [1]विवक्षितः ।।'

इति। अस्यार्थः—यत्र यस्मिन्नर्थे तदिदमिति सर्वनामद्वयमतीतवर्तमानसंबन्धवस्तुप्रतिपादकं प्रयुज्यते स [2]कालद्वयसंबन्धिसिद्धरूपार्थो भेद्यत्वेन विवक्षितः। गुणक्रियासामान्यैर्विशेष्यत्वेन विवक्षितो द्रव्यमित्युच्यते इति। यथा—'सत्त्वे निविशतेऽपैति' इति। असुषु प्राणेषु यथा—अन्तःसत्त्वः इति। व्यवसाय उत्साहः। यथा—सर्वत्र सत्त्वसंपन्न इति। द्रव्यादित्रये रूपभेदाद् नपुंसकलिङ्गत्वम्। जन्तुषु प्राणिमात्रे यथा—'सर्वसत्त्वहिते रतः' इति। [3]सीदतीति सत्त्वम्। औणादिकत्वन्प्रत्ययः[4] (उ. ४. १०७)। विश्वप्रकाशे—

'सत्त्वं [5]गुणे पिशाचादौ वले द्रव्यस्वभावयोः ।
[6]सद्भावे व्यवसाये च चित्ते [7]प्राणेषु शब्द्यते[8] ।।'

इति (पृ. १६३, श्लो. १६)। सात्त्विकप्रकृतिरिति सत्त्वाख्ये गुणे। सत्त्वनाथ इति पिशाचादौ। सिंहसत्त्वः इति बले। सतो भावः सद्भावः। शुद्धसत्त्व इति चित्ते॥ क्लीब नपुसके--अविक्रमे। नपुंसके तृतीयप्रकृतौ। षण्डे वर्षवरे। उभयत्र रूपभेदाद् नपुंसकत्वम्। पर्यायप्रस्तावे नपुंसकलिङ्ग उक्तः (१, पृ. ३८४)। अत एवामरमालायाम्—'अस्त्री नपुंसके क्लीबम्' इत्यभिहितम्। अविक्रमे धैर्यरहिते विशेष्यनिघ्न'। वबयोरेकत्वाभिधानात् काण्डस्थवकारमध्ये क्लीबशब्दोऽप्युक्तः॥ २१३॥

इति वान्तवर्गः[9]

[1] व्यवस्थित इति स्वामी (पृ ३२३) [2] °द्रव्यवस्तुसवन्धिनि Tv [3] सीदति जात्यादिक प्रवृत्तिनिमित्तमनेति द्रव्यम्। अन्यत्तु सीदतीति सत्त्वम्। 'पद्लृ विशरणगत्यवसादनेषु' Tv [4] 'अन्येभ्योऽपि दृश्यन्ते' [5] [6] द्रव्ये, आत्मत्वे इति मु ग्र [7] प्राणिषु Tj1, Tj2 [8] जन्तुषु इति मु ग्र [9] Gm3, Tv add शब्दसख्या २०।

(पा) द्रव्यासु—अस्त्री तु जन्तुषु। जन्तव इत्यनेन पिशाचादयोऽप्युक्ता। 'पिशाचादौ गुणे प्राणिवले जन्तौ च चेतसि' इत्यजय[1]॥ क्लीव नपुसक—अविक्रमे॥ अनुक्तम्—

[2]सोमात्मनोरपि च वि जीव स्यादसुमत्यपि।
भुवनेऽपि च विश्व स्यात् पार्श्वोऽस्त्री निकटेऽपि च॥
निष्पाव शूर्पवातेऽपि सभव सहतावपि।
एनस्यपि भवेत् किण्व स्नेहेऽपि स्यादपह्लव॥
फेरवो राक्षसेऽपि स्याद् ह्रस्व स्यादन्तकेऽपि च।
वडवा [3]घटचेट्या च याचके च कुशीलव॥
कैरव [4]कितवे पुसि चन्द्रिकाया तु कैरवी।
भार्गवी कमलाया स्याद् भार्गवस्तु धनुर्धरे॥
माधवी शीधुकुट्टन्योर्माधव स्याद् वसन्तके॥ २१३॥

इति वान्तवर्ग

[1] जयकोश A1 [2] व्योमात्मनो A1 [3] कुम्भदासीत्यर्थ [4] कैतवे A1

अथ शान्तवर्गः—

**द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमरौ स्पशौ ।**
**द्वौ राशी पुञ्जमेषाद्यौ द्वौ वंशौ कुलमस्करौ ॥ २१४ ॥**

(वि.) विड् वैश्ये मनुजे विष्ठावेशयोश्च [1]जने भवेत् ।

विशतीति विट् । 'विश प्रवेशने' ॥

स्पशश्चाराभिमरयो [2] युद्धे च परिकीर्तित ॥ 466 ॥

स्पशतीति स्पश । 'स्पश [3]वाधनस्पर्शनयो' ॥

मपादौ धान्यपुञ्जे च राशिशब्द प्रकीर्तित ।

[4]रश्यत इति राशि । 'रश कान्तौ' ॥

वेणी वर्गे [5]कुले वश पृष्ठस्यावयवेऽपि च ॥ 467 ॥

वन्यत इति वश । 'वन पण सभक्तौ' ॥ २१४ ॥

[1] मनुजे K5, K6  [2] अभिमरो मारणम्  [3] स्पर्शवाधनयो K2, K3, K6
[4] राश्यते K2, K3  [5] अङ्कुरे K6

(विव.) द्वौ विशौ वैश्यमनुजौ । मनुजो मनुष्यमात्रः । यथा—'विशापतिर्विष्टरभाजमारात्' इति (रघु. ५. ३) । स्त्रीविवक्षाया तु[1] स्त्रीलिङ्गो[2] वक्ष्यते । [3]प्रवेशमात्रे तु भावे क्विपि[4] स्त्रीलिङ्गः । वर्चस्के प्रागुक्तः (१, पृ. ४०४)॥ द्वौ चराभिमरौ स्पशौ । [5]चरो गूढपुरुष. । प्राणसशयावहव्यापारेषु सर्पग्रहणहस्तियोधनादिषु प्रवृत्तः साहसिकोऽभिमर इति सुबोधिनीकारः । अभिमरः सग्राम इति सुभूतिः । स्पशतीति स्पशः । 'स्पश [6]बाधनस्पर्शनयोः' । 'स्पशः प्रणिधियुद्धयोः' इति विश्वप्रकाशः (पृ. १६७, श्लो. ३) ॥ द्वौ राशी पुञ्जमेषाद्यौ । संस्थानविशेषविशिष्टो व्रीह्यादिसमूहः पुञ्जः । यथा—धान्यराशिः, तिलराशिः इति । आद्यशब्देन ज्योति.शास्त्रप्रसिद्धानां वृषभमिथुनादीनां ग्रहणम्[7] ॥ द्वौ वंशौ कुलमस्करौ । कुलं संतानम्[8] । मस्करो वेणुः । विश्वप्रकाशे—[9]'पृष्ठास्थ्नि गेहोर्ध्वकाष्ठे वंशो वेणौ गणे कुले' इति (पृ. १६८, श्लो. १०) ॥ २१४ ॥

[1] Tv adds विट्शब्द [2] Tj1, Tj2 add अपि [3] Tv adds शेषे—'विश प्रवेशे स्त्रियामेव [4] विशतीति विट्। 'विश प्रवेशने'। 'अन्येभ्योऽपि दृश्यते' (३ २ १७८) इति क्विप् [5] चार B6 [6] परिबाधने Gm1, Gm3 [7] राति, राशयति वा राशि इति स्वामी (पृ ३२३) [8] सतान Tv [9] अय पाठ वैजयन्त्या दृश्यते (पृ २१८ श्लो ५२), विश्वप्रकाशे तु—'वशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि च' इति

(पा) द्वौ विशौ वैश्यमनुजौ। [1]भमिस्पृशावपि स्याताम्। 'भूमिस्पृशौ वैश्यनरौ' इति वैजयन्ती (पृ २४४, श्लो ५९)॥ द्वौ चराभिमरौ स्पशौ। अभिमरो [2]युद्धम्। 'स्पश प्रणिधियुद्धयो' इति विश्व (पृ १६७, श्लो ३)॥ द्वौ राशी—वशौ कुलमस्करौ। अन्वयश्च समूहश्च कुल स्यात्। 'वश पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणेऽन्वये'[3] इति वैजयन्ती (पृ २१८, श्लो ५२)॥ २१४॥

[1] भूमिस्पृश् इति शब्दस्यापि वैश्यो नरश्चेति द्वावर्थौ [2] A1 adds वधश्च [3] कुले इति मु म

**रहःप्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः।**
**कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु॥ २१५॥**

(वि) रहस्ये च प्रकाशे च [1]वीकाश परिकीर्तित [2]।

विगत काश, विशिष्टा[3] दीप्तिरस्येति वा वीकाश। 'काशृ दीप्तौ'॥

भृतौ भोगे मूर्च्छने च निर्वेशो वक्ष्यते बुधै॥ 468॥

[4]निर्विश्यत इति निर्वेश। 'विश[5] प्रवेशने'॥

कीनाश क्षुद्रयमयो कर्षकोपान्तघातिनो।

कुत्सित नाशयतीति [6]कीनाश। 'णश अदर्शने'॥ २१५॥

[1] विकाश J2, K5 [2] परिकीर्त्यते K2, K3; °वक्ष्यते J2, K6 [3] विशेष° K2 [4] J2, K5 add भुज्यते [5] K3, K4 omit [6] क्लियतो यामतो नाशयति K5, K6

(विय.) रहःप्रकाशौ वीकाशौ। 'काशृ दीप्तौ' इति धातोः कर्मणि घञ्। काशः प्राकट्यम्। वीत्युपसर्गो निषेधार्थत्वेऽपि। [1]वीकाशः प्रकाश.[2]।

'उपसर्गस्य घञ्यमनुष्ये बहुलम्'[3] (६. ३. १२२) इति दीर्घः। समासोत्तरपदत्वे सत्येव सदृशवचनो नीकाशशब्दः प्रागुक्तः (१, पृ. ६४२) ।। निर्वेशो भृतिभोगयोः। निर्विश्यत इति निर्वेशः। भृतिर्वेतनम्। भोग आभोगः। 'निर्विष्टविषयस्नेहः' इति (रघु. १२. १) ।। कृतान्ते पुंसि—कर्षकयोस्त्रिषु। कृतान्तो यमः। क्षुद्रः कृपणः। कर्षकः कृषीवलः। की इति निपातः कुत्सितार्थेऽस्तीति भोजदेवेनोक्तमिति सुबोधिनीकारः। कुत्सितं नाशयति प्राणिनः कुटुम्बादिकं वेति कीनाशः[4]। 'कीनाशः कर्कशे क्षुद्रे [5]कृतान्तोपान्तघातिनोः' इति विश्वप्रकाशः (पृ. १६६, श्लो. २१)। कीनाशः कर्कशोऽप्याहुः ।। २१५ ।।

[1] नीकाश इति विवरणाभिमत पाठ　　[2] निगत काशोऽत्रेति नीकाशो निर्जन-स्थानम्। निश्चय काशोऽत्रेति नीकाश प्रकाश Iv　　[3] 'इक काशे' (६ ३ १२३) इति दीर्घ इति भा दी (पृ ५०१), अत्र काशशब्द पचाद्यच्प्रत्ययान्त इति काशिका (२, पृ २३४)　　[4] पचाद्यच् (३ १ १३४)। 'क्लिश बन्धे'। 'क्लिशेरीच्चोपधाया कन् लोपश्च लो नाम् च' (उ ५ ५६) इति भा दी (पृ ५०१-२)　　[5] कृतान्तपशुघातिनो इति मु ग्र °उपांशुघातिनो इति सुवचम्

(पा) रह प्रकाशौ वीकाशौ। प्रकाश स्फुट ।। निर्वेशो भृतिभोगयो। भृतिर्नाम[1] वेतनम् ।। कृतान्ते पुंसि—कर्षकयोस्त्रिपु। [2]क्षुद्र कदर्य। 'कीनाशो रक्षसि यमे कदर्ये [3]कृपके त्रिषु' इति वैजयन्ती (पृ. २५८, श्लो २३) ।। २१५ ।।

[1] $B_3$, $C_1$ omit नाम　　[2] क्षुद्र कदर्यम A1　　[3] कर्पके इति मु ग्र

**पदे लक्ष्ये निमित्तेऽपदेशः स्यात् कुशमप्सु च।**
**दशावस्थानेकविधाप्याशा तृष्णापि चायता ।। २१६ ।।**

(वि) प्रसिद्धौ [1]लक्ष्यपदयोरपदेशो निमित्तके ।। 469 ।।

अपदिश्यत इत्यपदेश। 'दिश अतिसर्जने' ।।

जले दर्भे रामसुते द्वीपे पापिष्ठमत्तयो।
अयोविकारे योक्त्रे च शङ्कावौदुम्बरे[2] कुश ।। 470 ।।

को भुवि शेत इति कुश। 'शीङ् स्वप्ने' ।।

दशा नानाविधावस्थावर्त्योर्वस्त्राञ्चलेऽपि च ।

दश्यत छिद्यत इति दशा । दश दशन ॥

स्यादाशाधिकतृष्णाया दिशि व्याप्तौ [3]भुजौ पुमान् ॥ 471 ॥

आ समन्तादश्नुत[4] इत्याशा । अशू व्याप्ता' ॥ २१६ ॥

[1] लक्ष' K6 [2] K5 adds छन्दोगा हि स्तोत्रसख्याया कुशाशब्द प्रयुञ्जत
[3] भोजन इत्यय [4] अश्नोति अश्यत वा K3 [5] K3 adds अश भोजने'

(विव) पदे लक्ष्ये—अपदेश स्यात् । अपदिश्यते [1]माथुर स्रौघ्न पर्वतीय इति निर्दिश्यते पुरोऽनेनेत्यपदेश [2] । पद स्थानम् । यथा—मथुरापदेशा, स्रुघ्नापदेशा इत्यादि । यत्किचिदुद्देशेन प्रत्युक्त लक्ष्य व्याज । यथा—'रक्षापदेशान्मुनिहोमधेनो ' इति रघुवशे (२ ८) । निमित्तशब्दो हेतुवचन इति प्रागुक्तम् (२, पृ ३२६) । यथा—तार्किकाणा लिङ्गदर्शनरूपे प्रकृतिहेतावपदेश इति । व्यवहारो यथा—'अप्रसिद्धोऽनपदेशोऽसन् सदिग्धश्चानपदेश ' (वै सू ३ १ १५) इति । 'अपदिश्यत इत्यपदेशो हेतु ' इति किरणावलीकार (पृ २२८) । अहेतुरनपदेशशब्देनोक्त । शेषे—'प्रसिद्धावपदेश स्यात्' इति । यथा—'औदार्यशौर्यधैर्येषु नि सीमव्यपदेशभाक्' इति ॥ कुशमप्सु च । अप्सु जले । कु भूमि श्यति नाशयतीति कुशम् । श्यते क [3] (३ २ ४) । चशब्दाद् 'अस्त्री कुश कुथो दर्भ ' इति गतम् (१, पृ ३१८) । शेषे—

'द्वीपराजन्ययो कुश ।
छन्दोगस्तोत्रगणनाशङ्कावौदुम्बरे तथा[4] ॥'

इति । द्वीपे यथा—कुशद्वीपाख्य । राजन्य क्षत्रियविशेषो रामसुत [5] । द्वयो रूपभेदात् पुलिङ्ग । यज्ञकर्मणि [6]छन्दोगस्तोत्रगणना पञ्चदशसप्तदशादिस्तोत्रेषु सख्याविशेषप्रतिपत्त्यर्थं कल्पिता प्रादेशमात्रा आस्तरण्यां निधीयमाना औदुम्बरा शङ्कव । ते कौ भूमौ शेरते तिर्यङ् निहिता भवन्तीति व्युत्पत्त्या टाबन्तेन कुशाशब्देनोच्यते । अयोविकारे तु जानपदादिसूत्रेण (४ १ ४२) ङीषन्त कुशीशब्द प्रागुक्त (१, पृ ६१०) । या वाचन स्त्रीलिङ्गपवाभिधेया भूमि नाशयन्ती भवति

सापि कुशा । यद्यपि [7]कुशीति भोगशेषे (?) त्रिलिङ्गत्वमनुपदमेवाभिधीयते, तथापि स्त्रियामाबन्तत्वकथनार्थमिहोदाहृतम् ।। दशावस्थानेकविधापि । बाल्ययौवनादिरूपेणावस्थाया बहुविधत्वं, दशति पूर्वावस्थामिति दशा । 'दश दशने'[8] । शेषे—'दशा प्रदीपवर्तौ स्यात्' इति । दीपधारणार्था वर्तिः यथा—'दीपो राम इवाभाति विनाशितदशाननः' इति । वस्त्रस्य दशा इति गतम् (१. पृ. ४३४) ।। आशा तृष्णापि चायता । आशा अतिमात्रोऽभिलाषः । आशासनम् आशा । 'शासु अनुशिष्टौ'[9] । शेषे—'आशा व्याप्तौ भुजौ च ना' इति । भुजिर्भोजनम् । यथा—'अजीर्णे प्रातराशेऽपि सायमाशो न दुष्यति' इति वाग्भटः । दिक्पर्यायेषु गतम् (१, पृ. ५१) ।। २१६ ।।

[1] माधुर B3, B6 [2] घञ् (३ ३ १९) [3] 'सुपि' (३ २ ४) इति योगविभागात् क इति भा दी (पृ ५०२) [4] मता Tv [5] B6 adds दशरथपौत्र [6] उद्गातार त्रिवृत्पञ्चदशसप्तदशस्तोमेषु आस्तरण्या क्षिपन्ति । ते शङ्कव Gm3, Tv [7] कुश्यदिति भानुशतके(?) Tv [8] मूलविभुजादि-क (वा ३ २ ५) । यद्वा 'पचाद्यच' । 'जपजभदहदश ' (७ ४ ८६) इति निर्देशाद् अक्ङित्यपि नलोप । यद्वा दश्यते । 'गुरोश्च ' (३ ३ १०३) इत्यङ इति भा दी (पृ ५०२) [9] आ समन्तादश्नुते । 'अशू व्याप्तौ' । पचाद्यच्

(पा) पदे [1]लक्ष्ये—अपदेश स्यात् । पद [2]नाम कपट । लक्ष्य[3] व्याज । कुशमप्सु च । 'कुशा वल्गा कुशी फाल [4] कुशो दर्भ कुश जलम्' इति शाश्वत (अने स पृ ३०, श्लो ३३७) ।। दशावस्थानेकविधापि । 'दशा वर्तावस्थाया वस्त्रान्ते[5] स्युर्दशा अपि' इति विश्वप्रकाशिका (पृ १६८, श्लो १३) ।। आशा तृष्णापि चायता । दिगपि स्यात् ।। २१६ ।।

[1] लक्षे A1 [2] B3 omits [3] A1 adds नाम [4] लाङ्गलदण्ड इत्यर्थ [5] वस्त्राशे इति म ग्र

वशा स्त्री करिणी च स्याद् दृग् ज्ञाने ज्ञातरि त्रिषु ।
स्यात् कर्कशः साहसिकः कठोरामसृणावपि ।। २१७ ।।
प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः ।
कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।। २१८ ।।

इति शान्तवर्गः

(वि) प्रमाणायत्तताया स्यादिच्छाप्राभवयोरपि ।
वन्ध्याकरिण्योर्योपाया स्त्रीगवीसुतयोर्वशा ॥ 472 ॥

[1]वष्टि इच्छतीति वशा । 'वश कान्तौ' ॥

ज्ञाने ज्ञातरि वुद्धौ च स्त्री नेत्रे दृक् प्रकथ्यते ।

[2]पश्यत्यनयेति दृक् । 'दृशिर्[3] प्रेक्षणे' ॥

कर्कशो निर्दये क्रूरे कठोरेक्षावमर्षणे ॥ 473 ॥
खड्गे साहसिके कासमर्दकाम्पिल्लयोरपि[4] ।

कृणातीति कर्कश । 'कृ हिंसायाम्' ॥

[5]अतिप्रसिद्धे [6]द्योतेऽपि प्रकाश [7]काशवत्यपि ॥ 474 ॥

प्रकाशत इति प्रकाश । 'काशृ दीप्तौ' ॥

अज्ञबालकयोश्चापि बालिश परिकीर्तितः[8] ।

[9]बालते आप्लावत इति बालिश । 'बाडृ आप्लाव्ये ॥'

कृपाणे च नृशंसे च निस्त्रिंश परिकथ्यते[10] ॥ 475 ॥

[11]निष्क्रान्तस्त्रिंशदङ्गुलिभ्य इति निस्त्रिंश ॥

आयुधे वन्धने चापि पाशो रज्जौ प्रकीर्तितः ।

पाश्यत इति पाश । 'पश [12]बन्धे' ॥

घोण [14]खड्गपिधाने स्याद् मयुलेऽर्थोपदिव्ययो ॥ 476 ॥

घूयते स्तूयत इति घोश । 'घु शब्दे' ॥ २१७–१८ ॥

इति शान्तवर्ग.[15]

[1] उच्यते K2, K3 [2] दृश्यते K3 [3] K3, K4 omit [4] कापिल्लय' J2, K5 [5] अतिप्रसिद्धो K5, K6 [6] द्योत्ये K2, K4 [7] काश इत्यपि J2

[8] सम्प्रकीर्तित J2, K3  [9] वाडते J2, K5  [10] परिकीर्तित K6  [11] °त्रिंशता° K1
[12] वन्धने K3 K4  [13] खड्गपरीधाने कुड्मल J2  [14] K2, K5 add शान्तशब्द
सख्या १७

(विव) वशा स्त्री करिणी वन्ध्या। स्त्री मानुषी। वन्ध्या या काचित् [अनपत्या]। वष्टि इच्छतीति वशा। 'वश कान्तौ'[1]। कान्तिरिच्छेति धातुवृत्तौ। शेषे—

'प्रभुत्वेच्छायत्ततासु वशो ना त्रिषु तद्वति।
स्त्रीगवीसुतयो स्त्री स्यात्।।'

इति। प्रभुत्वे यथा—स्ववश, स्वप्राधान्यवानित्यर्थ। तद्वति प्रभुत्वादिधर्मयुक्ते विशेष्यनिघ्न। सुता दुहिता। तथा च वैजयन्त्याम्—'वशा करिण्या वन्ध्याया रामाया दुहितर्यपि' इति (पृ २३५, श्लो ७१)।। दृग्ज्ञाने ज्ञातरि त्रिषु। 'दृशिर् प्रेक्षणे' इत्यस्माद्धातो सपदादित्वात् (वा ३ ३ ९४) क्विपि दृक्शब्दो ज्ञानवचन स्त्रीलिङ्गश्च। 'क्विप् च' (३ २ ७६) इति कर्तरि क्विपि दृक् ज्ञाता। तत्र विशेष्यलिङ्ग विचक्षणे। नयने च स्त्रीलिङ्ग प्रागुक्त (१, पृ ४२१)। 'क्विन्-प्रत्ययस्य कु' (८ २ ६२) इत्यत्र प्रत्ययग्रहणात् क्विबादिप्रत्ययान्तरेऽपि कुत्व क्वचिद् भवतीति न्यासकारेणोक्तम् (पञ्जिका २, पृ १००४)। तेन दृशेरपि [2]क्विप्प्रत्ययप्रकृते पदान्तरेऽपि कुत्व भवति।। स्यात् कर्कश—अमसृणावपि। लोभेन परधनहरणपरस्त्रीधर्षणादिकरणशील साहसिक। कठोर कठिन पाषाणादि। अमसृणो रूक्ष तुषाङ्गारभस्मादि। 'कृ हिंसायाम' इत्यस्मादौणादिके कशप्रत्यय कर्कश[1]। अथवा कर्कम् अश्मविशेषमपि श्यति नाशयति तनूकरोति स्वगतपारुष्येणेति कर्कश[2]। शेषे—'कर्कशौ क्रूरनिर्दयौ। खड्गेक्षुका समर्थाश्च'। कर्कशशब्दवाच्या इत्यर्थ। 'अपीवरो बृहत्काण्ड कृष्टेक्षु कर्कशाभिध' इत्यायुर्वेदद्रव्यभेदे च। 'काम्पिल्य कर्कश' इति गतम (१, पृ ३०४)। त्रिष्विति पदस्य पूर्ववाक्यादनुवृत्तेरस्यापि वाच्यलिङ्गत्वमुन्नेयम्।। प्रकाशोऽतिप्रसिद्धेऽपि। त्रिष्वित्यनुवर्तते। 'विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार स' इति कालिदास (रघु ४ ३१)। प्रकर्षेण काशत इति प्रकाश। 'काशृ दीप्तौ', पचाद्यच् (३ १ १३४)। शेषे—'प्रकाश प्रकाशवानपि' इति। 'प्रकाशो द्योत आतप' इति पुलिङ्गो गत (१, पृ ७२)। भावमात्रवचनत्वेऽपि पुलिङ्ग।। शिशावज्ञे च

बालिशः। विशेष्यनिघ्नवर्गे बालिशः कृतनिर्वचनः[6]।। कोशोऽस्त्री—अर्थौघदिव्ययोः। कुड्मलो मुकुलः । यथा—'कोशद्वन्द्वमिदं दधाति नलिनी कादम्बचञ्चुक्षतम्' इति । खड्गपिधाने यथा—[7]'उन्मुक्तकञ्चुकतेयमुदारकान्तिः शस्त्रीव शम्बररिपोरपनीतकोशः' इति। खड्गग्रहणमुपलक्षणम्। पिधायकमात्रे कोशशब्दो वर्तते। यथा—गर्भकोशान्निर्गत इति। अन्नमयादीनां पञ्चानामपि ब्रह्मस्वरूपावरकत्वेन कोशः प्रसिद्धः। अर्थौघो धनसमूहः, कृताकृतोभयरूपसुवर्णरजतसमुदायः। यथा—'कोशदण्डाविव क्षितिः' इति कालिदासः (रघु. १५. १३)। कोशागारमिति च। दिव्यं शपथम्। ब्रुवते च दुर्गाभैरवाद्युग्रदेवतास्नानोदकपानरूपम्। यथा—तुलाग्न्यापो विषं कोशो दिव्यानीति। विप्रं न पाययेत् कोशम् इत्यादि। कूयते शब्द्यत इति कोशः। 'कु शब्दे'। औणादिकः शप्रत्ययः। शेषे—'कोशः शिश्ने जातिफले तथा शब्दार्थसंग्रहे' इति। शिश्ने शेफसि यथा—'कुर्वन् करिकरक्रीडां शनैः कोशं प्रवेशयेत्' इति रतिरहस्ये। स्त्रीव्यञ्जनेऽपि कोशशब्दो यथा तत्रैव—'स्त्रीपुंसयोः कोशसाम्ये भावसाम्यं भवेद् ध्रुवम्' इति प्रयोगः[8]। अत्र मनुष्यवर्गोक्तजातीकोशशब्दस्यैकदेशन्यायेन कोशशब्दोऽपि जातीफले वर्तते। यथा—कोशवासितं सलिलम् इति। शब्दा अर्था वा उभये वा संगृह्यन्तेऽनेनेति शब्दार्थसंग्रहो ग्रन्थः। यथा—अमरकोशः। अभिधानकोश इत्यादि। अत्र शब्दार्थसंग्रहशब्देन पुस्तकमप्युच्यत इति केचित्। कोशान्तरे त्वयं पाठ इति लिखन्ति व्याख्यातारः। 'वैदेशिकेषु कोशेषु पाठभेदान् निरीक्ष्य तान्' इति। दक्षिणावर्तनाथस्तु कोशवानाचार्य इति। 'पेशी कोशः' इति गतम् (१, पृ. ३५७)। तालव्योपधोऽयं शब्दः। अत्र केचित्—कोशोऽस्त्रीत्यादिकम् अमरसिंहीयश्लोकार्धं समनन्तरमूर्धन्योष्मोपधवर्गे पठन्ति। व्याख्यातृभिः कैश्चित् तत्रैव व्याख्यातम्, 'कुष निष्कर्षे' इत्यस्माद् धातोर्निर्ब्रुवते च। अस्माभिस्तु कतिपयटीकाकारपद्धत्या नानाग्रन्थदर्शनेन च तालव्योपधत्वेन लिखितमित्यलम्॥ २१७–१८॥

इति शान्तवर्गः[9]

[1] पचाद्यच्  [2] क्विप्रत्ययप्रकृतिपदान्तविषये Tv  [3] बलानष्टम्भेन Tv
[4] कर्कशब्दाद् मत्वर्थे लोमादित्वान् श इति श द्रु (पृ ३६).  [5] 'सुपि' इति योगविभागात् क (३ १ ४)  [6] २, पृ ६७-८  [7] उन्मत्त° B5, B6  [8] पिधायकमात्रस्य यथा—'गवाना कोशधान्याना यथाकामी च भक्षणे' इति गोपाल। कोशेन शिम्ब्याच्छादितानि धान्यानि कोशधान्यानि Tv  Tv adds यथा वा प्राकृतसप्तशत्याम्—

कोस्सवदव्वमि ठिव इक्ककण्ठे मासापवासिनि वपुसि। मासखु उपवास वा अअ जणु मा होद मुहह सुररअकोसम् ।। कण्ठे मासोपवासिनि वदति मम खलु उपवासव्रतमद्य। ननु मा भवतु सुरतमिति [9] Tv adds शान्तशब्दसख्या १७

(पा ) वशा स्त्री करिणी च स्यात् । स्त्रीशब्द स्त्रीविशेषवचन । [1]वन्ध्या च स्यात् । 'वशा करिण्या वन्ध्यायां रामायां दुहितर्यपि' इति वैजयन्ती (पृ २३५, श्लो ७१) ।। दृग्ज्ञाने ज्ञातरि त्रिषु । त्रिष्विति बालिशशब्दान्तमधिकार ।। स्यात् कर्कश —अमसृणावपि । कठोरो निर्दय । [2]अमसृण खरस्पर्श ।। प्रकाशोऽतिप्रसिद्धेऽपि । 'प्रकाशोऽतिप्रसिद्धे स्यात् [3]सदृशातपयो स्फुटे' इति विश्व (पृ १६६, श्लो २०) ।। शिशावज्ञे च बालिश । अनुक्तम्—

नाश क्षये तिरोधाने जीवितेश प्रिये यमे ।
कोशोऽस्त्री कुड्मल खड्गपिधानेऽथाधदिव्ययो [4] ।।
नृशसखड्गौ निस्त्रिंशौ पाशो बन्धनशस्त्रयो ।
निवेश स्याद् विवाहेऽपि निस्त्रिंशो निर्दयेऽपि च ।।
अपभ्रंशोऽवपाते स्याज्जीवितेशो[5] रवावपि ।
टीकायामपि चादर्श सदृश तूचितेऽपि च ।।
क्लेशो दु ख व्यवसितौ स्पृहास्वाधीनयोर्वश ।
पल्लीपतौ स्यात् पिङ्गाश पिङ्गाश जात्यकाञ्चने ।। २१७–१८ ।।

इति शान्तवर्ग

[1] A1 omits [2] अमसृण A1 [3] सहास° इति मु ग्र [4] °दीप्ययो B3 C1 [5] B3 C1 *omit the pada*

**अथ यान्तवर्ग.—**

**सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ ।**
**काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ तु तृणवीरुधौ ।। २१९ ।।**

(त्रि ) सुपर्वणि जलचर कथ्यतेऽनिमिषा बुधे ।

न निमिषत निमिषाऽस्त्यत्यनिमिष ।।

क्षेत्रज्ञे मानभेदे च वल्लभे पुरुष स्मृत ॥ 477 ॥

पुरि देहे [1]सीदतीति पुरुष । 'पद्लृ विशरणगत्यवसादनेषु' ॥

काकमत्स्यात्पक्षिणोश्च ध्वाङ्क्षशब्दोऽभिधीयते[2] ।

ध्वाङ्क्षति मासमभिकाङ्क्षतीति[3] ध्वाङ्क्ष । 'ध्वाक्षि [4]काङ्क्षायाम्' ॥

रथभागे ग्राहणिकाकाञ्चीद्विरदरज्जुषु ॥ 478 ॥
तृणवीरुत्प्रकोष्ठेषु पश्चादञ्चलपल्लवे ।
स्पर्धापदे परीधाने कक्ष' स्याद् वाहुमूलके ॥ 479 ॥

[5]कष्यत इति कक्ष । 'कष हिंसायाम्' ॥ २१६ ॥

[1] K2 adds तिष्ठति [2] विवक्षित J2 [3] इच्छति K1 [4] इच्छायाम K4, घोरवाशिते च K5 [5] कपते K2, K3

(विव) सुरमत्स्यावनिमिषौ । न निमिषतीत्यनिमिषः[1] । सुरा देवाः । मत्स्यो मीनः ॥ पुरुषावात्ममानवौ । आत्मा क्षेत्रज्ञः । 'पुंनागे पुरुषः' इति गतम् (१, पृ. २३१) ॥ काकमत्स्यात्खगौ ध्वाङ्क्षौ । [2]मत्स्यभक्षकः खगः मत्स्यात्खगः । 'ध्वाङ्क्षौ तु बकवायसौ' इत्यमरमालायाम् ॥ कक्षौ तु तृणवीरुधौ । अत्र तृणशब्देन शुष्कतृणप्रायं विपिनमुच्यते इति सुबोधिनीकारः । यथा—'अग्निना वा दहेत् कक्षम्' इति । वीरुत् लता । कषते कषतीति वा कक्षः । 'कष हिंसायाम्'[3] । शेषे—'कक्षः पापपरीधानपश्चादञ्चलपल्लवे' इति । 'सत्रकष्टकक्षकृच्छ्रगहनेभ्यः'[4] (वा. ३. १. १४) इत्यत्र कक्षशब्दः पापवचनः । अत एव सत्रायते, [कक्षायते] पापं चिकीर्षतीति तत्र व्याख्यातम्[5] (काशिका १, पृ. १४६) । परिधानस्यान्तरीयस्य गुह्यप्रदेशाच्छादके पृष्ठभागसमुपनाये दशाभागे कक्षशब्दो वर्तत इत्यर्थः । बाहुमूले[6] प्रागुक्तः (१, पृ. ४११) ॥ २१६ ॥

[1] 'मिष स्पर्धायाम्'। 'इगुपध—' इति क । नञ्समास इति भा. दी (पृ ५०२)
[2] Tv adds मत्स्यानत्तीति
[3] 'वृतृवदिहनिकमिकषिभ्य स' (उ ३ ६२) इति स
[4] इति श ६ (२, पृ ३)
[5] Tv adds कण्वचिकीर्षायाम्
[6] कण्वचिकीर्षा पाप-चिकीर्षा इत्येव मु ग्र
[7] बाहुमूले उभे कक्षौ TJ1, Tv

(पा.) सुरमत्स्यौ—आत्ममानवौ । (पुरुष) शास्त्र च स्यात् । 'शासन दर्शन शास्त्रमागम· पुरुषो मतम् । श्रुतम्' इति पर्याया [1] इति सुभूतिटीका ॥ काकमत्स्यात्खगौ ध्वाङ्क्षौ । मत्स्यात्खगो 'ध्वाङ्क्ष काके बकेऽपि च' इति [2]जयकोश ॥ कक्षौ तु तृणवीरुधौ । वीरुच्छब्दो गुल्मवचन । 'कक्षस्तु गुल्म [3]स्पर्धापदे तृणे' इति वैजयन्ती (पृ २१५, श्लो १७) ॥ २१९ ॥

[1] पर्याय $A_1$ [2] जय $A_1$ [3] स्पर्धाया बाहुमूले $B_3$, $C_1$

**अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने ।**
**पक्षः सहायेऽप्युष्णीषं शिरोवेष्टकिरीटयोः ॥ २२० ॥**

(वि) [1]प्रग्रहे किरणे चैवाप्यभीषु परिकथ्यते ।

अभीष्यत इत्यभीषु । 'ईष[2] उञ्छे' ॥

प्रेषणे मर्दने क्लेशेऽप्युन्मादे [3]प्रैष इष्यते[4] ॥ 480 ॥

प्रेष्यत इति प्रैष [3] । 'इष[5] गतौ' ॥

साध्ये विरोधे मासार्धे सहाये बलपलयो ।
ग्रहे सख्यौ राजनागे देहाङ्गचुचपार्श्वयो ॥ 481 ॥
वेशादिपश्चाद्वन्धे च पक्ष स्याच्चुल्लिरन्ध्रके ।

[6]पक्ष्यते परिगृह्यत इति पक्ष । 'पक्ष परिग्रहे' ॥

*शिरोवेष्टे किरीटे स्यादुष्णीषो लक्षणान्तरे ॥ 482 ॥*

[7]उष्णनिवारणार्थमिष्यत इत्युष्णीष । 'इषु इच्छायाम्' ॥ २२० ॥

[1] रागादौ $J_2$ [2] 'इषु इच्छायाम्' $J_2$ [3] प्रेष्य $K_6$ [4] उच्यत $K_2$, $K_5$ [5] 'इषु इच्छायाम' $K_2$, $K_4$ [6] पक्षति $K_6$ [7] उष्णाशमिष्यते $K_5$

**(विव.)** अभीषुः प्रग्रहे रश्मौ । प्रग्रहो नाम रथादिवाहनद्वयनियमनार्थं सारथिना ध्रियमाणो[1] रज्जुविशेष· । रश्मिः किरणः । अभीष्यते बलीवर्दादि-

मुखमुन्नाम्यतेऽनेनेति[2] अभीषुः। 'ईष उञ्छे'। उञ्छः उच्चयनमिति धातुवृत्तिः।[3] किरणे तु तालव्योपधोऽप्यस्तीति सुभूतिचन्द्रः॥ प्रैषः प्रेषणमर्दने। प्रेषणं कर्मणि नियोजनम्। 'इष गतौ'[4]। 'भावे घञ्' (३. ३. १८)। अथवा प्रेष्यते अहोरात्रादिरनेनेति प्रैषः। 'होता यक्षत्' (ऋग्वेद ६. ६२. ४) इत्यादिः। यथा—'दण्डी प्रैषानन्वाह' इति। मर्दनं पीडनम्। 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' (वा. ६. १. ८९) इति वृद्धिः। पक्षः सहायेऽपि। पक्ष्यते परिगृह्यते संगृह्यत इति पक्षः। 'पक्ष परिग्रहे' (३. १. १३४)। शेषे—

'पक्षः पतत्रे कुचयोः पार्श्वे सख्यौ नृपस्य च।
गजे स्याच्चुल्लिरन्ध्रे च बले साध्यविरोधयोः[5]॥'

इति। नृपस्य गज इत्यन्वयः। तथा च विश्वप्रकाशे—

पक्षो मासार्धके पार्श्वे ग्रहे साध्यविरोधयोः।
[6]केशादेः परतो वृन्दे बले सखिसहाययोः॥
पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे॥

इति (पृ. १८२, श्लो. ५-६)। ग्रहः स्वीकारः। साध्यशब्देन साध्यधर्मवान् पर्वतादिर्विवक्षितः। केशपर्यायेभ्यश्च उत्तरः पक्षशब्दः समूहरूपार्थे-वर्तत इत्यर्थः। यथा—केशपक्षः, चिकुरपक्ष इति॥ [7]उष्णीषः शिरोवेष्टकिरीटयोः। वातादिनिवारणार्थम् अलंकरणार्थं वा शिरसि वेष्ट्यमानो वस्त्रबन्धः शिरोवेष्ट उच्यते। उश्यते काम्यत इति उष्णीषः। 'वश कान्तौ'। उष्णकाले इष्यत इति वा। पृषोदरादिः। उष्णीषशब्दः[8] पुंनपुंसकलिङ्ग इति सुभूतिचन्द्रः॥ २२०॥

[1] Tv adds स्कन्धासक्त [2] Tjı adds अभिमुखम् [3] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते [4] Tv adds प्रपूर्व [5] सखिसहाययो Tv [6] पक्षश्च इति म ग्र [7] उष्णीप Tv [8] उष्णमीषते हिनस्ति। 'ईष गत्यादौ'। 'इगुपध—' इति क इति भा दी (पृ ५०३)

(पा) अभीषु प्रग्रहे रश्मौ।

'लक्ष्म्या निषेव्यमाण [1]रत्यर्थमभीशुचामरैः सह सन्तम्।
हरिमनमत्कौस्तुभजैरत्यर्थमभिशुचामरं [2]सहस तम्॥'

इति हरिप्रबोधयमकात् [3]अभीशुरिति तालव्यान्तोऽपि स्यात् ।। प्रैष [4] प्रेषणमर्दने । पक्ष सहायेऽपि । अर्धमासपतत्रपार्श्वार्थेषु च स्यात् ।। उष्णीष शिरोवेष्ट-किरीटयो । शिरस्यपि स्यात् । 'उष्णीष शीर्षमक्षत्र पुसि मूर्धा च [5]मस्तक.' इति वैजयन्ती (पृ १८०, श्लो. ८५) ।। २२० ।।

[1] °अभीषु° C1　[2] सहास A1　[3] अभीशुभि शुर्भैरिति B3　[4] प्रैष A1
[5] मस्तिक इति मु ग्र.

**शुक्ले मूषिके श्रेष्ठे सुकृते वृषभे वृषः ।**
**द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाक्षमिन्द्रिये ।। २२१ ।।**
**ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे ।**

(वि) मूषिकश्रेष्ठयो राशौ [1]शुक्ले सुकृते तथा ।
[2]वृषो वृषभपुसो स्यात् सिंहीकण्डूरयोर्वृषा ।। 483 ।।
व्रत्यासने वृषी प्रोक्ता वर्षके तु वृष [3]मतम् ।

वर्षतीति वृष । 'वृष सेचने' ।।

द्यूते च पाशकाकृष्टयो कोदण्डाभ्यासवस्तुनि ।। 484 ।।
शारीणा फलके च स्यादाकर्षोऽपीन्द्रिये तथा ।

आकृष्यत इत्याकर्ष । कृष विलेखने' ।।

[4]कलिद्रुमे च द्यूताङ्गे कर्षे चक्रात्मनोरपि ।। 485 ।।
अक्षो व्याप्तौ परिपणे चेन्द्रियेऽक्षमुदाहृतम् ।

[5]अक्ष्यत इत्यक्षम् । 'अक्षू व्याप्तौ' ।। २२१ ।।

[1] शुक्लले J2　[2] वृषभे च वृष पुसि K5　[3] स्मृतम् K2, K3　[4] कलि-द्रुमो विभीतकाख्यो वृक्ष　[5] अक्ष्णोति K4, K5

(विव.) शुक्ले--वृषभे वृषः । शुक्रलः रेतोबहुलः । वर्षतीति [1]वृषः । 'वृष सेचने' । इगुपधलक्षणः कः[2] (३. १. १३५) शेषे--

'वृषः पुंसि च राशौ ना [3]कपिकच्चाटरूषयोः ।
शृङ्ग्यामपि वृषा स्त्री स्याद् व्रतिनामासने[4] वृषी ॥

इति । वृष इति राशिर्मेषानन्तरः ।

'वृषो धर्मे बलीवर्दे श्रेष्ठमूषकराशिषु ।
शुक्ले च पुमान् स्त्री तु कपिकच्चाटरूपयोः ॥

इति रभसः ॥ द्यूतेऽक्षे—आकर्षः । [5]आकृष्यते शारिकात्रेति आकर्षः द्यूतः क्रीडा द्यूतफलकं च । अत्राकर्षशब्दो द्यूतकर्मवाच्यः शारिकापि । छन्दः आकृष्यत इत्या-[6]कर्षोऽक्षः पाशकः । कार्मुकादेरप्याकर्षणमाकर्षः । आकृष्टिरित्यर्थः ॥ अथाक्षमिन्द्रिये—कलिद्रुमे । अक्ष्णोति विषयमित्यक्षम् इन्द्रियम् । यथा—प्रत्यक्षो घटः । प्रत्यक्ष आत्मा इति । तत्र रूपभेदाद् नपुंसकम् । [7]अर्थान्तरेषु पुंलिङ्गः । द्यूताङ्गं पाशकाख्यम् । यथा—'दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः' इति भारविः (किरा. ११. ४७) । कर्षः षोडशमाषात्मकः । यथा—'ते षोडशाक्षः कर्षोऽस्त्री' इति (१, पृ. ६०५) । चक्रं रथाङ्गम् । तेन तदुभयसंबन्धं तिर्यगवस्थापितं काष्ठं लक्ष्यते । यथोक्तम्—'अक्षाग्रकीलके तु द्वयोरणिः' इति (१, पृ. ५१८) । व्यवहारे यथा—'प्राड्विवाकाक्षदर्शकौ' इति (१, पृ. ४८६) । कलिद्रुमो विभीतकः (१, पृ. २४६) । शेषे—'अक्षो व्याप्तावात्मनि च' इति । आत्मनि यथा—एतदध्यक्षसाक्षिकम् इति ॥ २२१ ॥

[1] Tv adds वृषभ [2] 'इगुपधज्ञाप्रीकिरः कः' [3] कपिकच्छू' इति विश्व (पृ १७१ श्लो २) [4] आसनम् Tj2, वृसी Tv [5] आकृष्यन्ते शारय Tv [6] घञ् [7] Tv adds द्यूताङ्गादौ तु ना पुलिङ्ग

(पा) शुक्ले—वृषभे वृष । वृषभे नान्तोऽपि स्यात् । [1]'वृषोऽक्ष्ण्यरयं पुमिन्द्रयो' इति वैजयन्ती (पृ. २१८, श्लो ५६) ॥ [2]कोपोऽस्त्री—दिव्ययोः । 'कोशकाशकशाङ्कुशम्' इति तालव्यान्तेषु चन्द्रगोमी । द्यूतेऽक्षे—व्याकर्ष. । अक्ष पाशक[3] ॥ अथाक्षमिन्द्रिये—कलिद्रुम । कर्प उन्मानविशेष । चक्र [4]शकट च [5]रथाङ्ग च स्यात् । व्यवहारो न्याय ॥ २२१ ॥

[1] यथा नरागान , उक्षि वृषभे [2] कोपाऽस्त्री कुङ्कुमे खड्गपिधानेऽर्थपिदिव्यया

इति पारिजाताभिमत पाठ [3] पाशिक C1; पाशिके A1 [4] शकट. B3
[5] रथश्च A1

**कर्पूर्वार्ता करीपाग्निः कर्पूः कुल्याभिधायिनी ॥ २२२ ॥**
**पुंभावे तत्क्रियायां च पौरुषं विषमप्सु च ।**

(वि.) कुल्यावृत्त्यो· करीपाग्नौ कर्षश्च[1] समुदाहृता ॥ 486 ॥

कृष्यत[2] इति कर्पूः । 'कृप विलेखने' ॥

[3]मनोभावे कर्मजात्यो पुस पौरुपमुच्यते ।

पुरुपस्य भाव कर्म वा पौरुपम् ॥

क्ष्वेडे जले विप्रयुक्ते विशिष्टव्याप्तयोर्विपम् ॥ 487 ॥
विपा महौपधे च स्यात् लिषु लिङ्गेपु च स्मृता ।

वेवेष्टीति विपम् । 'विष्लृ [4]व्याप्तौ' ॥ २२२ ॥

[1] कर्पूस्तु K3, K4, K5 [2] K4 adds विलिप्यते [3] मानभावे K5
[4] K3, K5 omit.

(विव.) कर्पूर्वार्ता—कुल्याभिधायिनी । अत्र वार्ताशब्देन वृत्तिविशेपः कृपिरुच्यत इति स्वामी[1] (पृ. ३२६) । सुबोधिनीकारस्तु—'कर्पूर्वक्ता करीपाग्नेः' इति पठित्वा व्याचष्ट । कर्पूशब्दः करीषाग्नेः शुष्कगोमयेन्धनवह्नेः वक्ता वाचकः । वक्तेति विशेपणरूपभेदात् पुंलिङ्गत्वम्' इति । कुल्याशब्देनात्र प्रेतकर्मणि क्रियमाणो गर्त उच्यते । तदभिधानशीलेत्यर्थः । तत्रापि विशेपणवशेन कर्पूशब्दस्य स्त्रीलिङ्गत्वम् । यथा—'तिस्रः कर्पूः खात्वा' इति कल्पसूत्रे प्रयोगः[2] । तथा च रभसः—'करीपाग्नौ पुमान् कर्पूः कुल्यायां तु स्त्रियां भवेत्' इति । कर्पति समीपस्थमिति कर्पूः । कृष्यते कुद्दालादिनेति च । 'कृप विलेखने' । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ. १. ८४) इति औणादिक ऊकारप्रत्ययः ॥ पुंभावे तत्क्रियायां च पौरुषम् । पुरुपस्य भावः कर्म वा पौरुपम् । भावे कर्मणि च वर्तमाने 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' (५. १. १२९) इति

प्राणभृज्जातिविशेषवचनात् पुरुषशब्दाद् अन्प्रत्ययः। शेषे—'पुंस्तेजसि च पौरुषम्' इति। पुरुषस्य तेजसि प्रभावे इत्यर्थः। ऊर्ध्वविस्तृतदोःपाणिभागस्य[3] पुरुषस्य प्रमाणे गतम् (१, पृ ४१७)॥ विषमप्सु च। अप्सु जले चशब्दाद् गरले प्रागुक्तम् (१, पृ १५१)। यथा—'तया मम वियोगोऽद्य विषं मुञ्चन्ति वारिदाः' इत्यभिनन्दः[4] ॥ २२२ ॥

[1] वार्ता कृषि इति मु ग्र [2] 'कर्पूं खात्वा बिभरासि *Śat Br*, (मत्स्याख्यान) Apte's Dict p 543 [3] °पाणिनृमाने पौरुष त्रिपु इति मूलग्रन्थे [4] वेवेष्टीति विषम। 'विष्लृ व्याप्तौ'। 'इगुपध ' इत्यादिना (३ १ १३५) क

(पा) कर्षवार्ता—कुल्याभिधायिनी। वार्ताकरीषाग्न्यो पुलिङ्ग। वार्ता नाम वृत्ति[1]। कुल्याया स्त्रीलिङ्ग। कुल्या नाम नदी॥ पुभावे तत्क्रियाया च पौरुषम्। पुरुषतेजस्यपि स्यात्। 'पौरुष पुरुषस्योक्त भावे कर्मणि [2]तेजसि' इति विश्व (पृ १७२, श्लो १७)॥ विषमप्सु च। गरलेऽपि स्यात्॥ २२२॥

[1] वार्ताक्रम $A_1$, वृत्तिविशेष $C_1$ [2] चेतसि $A_1$

**उपदानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम् ॥ २२३ ॥**
**स्याद् वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम् ।**
**प्रेक्षा नृत्येक्षण प्रज्ञा भिक्षा सेवार्थना भृतिः ॥ २२४ ॥**

(वि) [1]उपदाने च मासादौ लोभसभोगयोरपि ॥ 488 ॥
सुन्दराकाररूपादिविषयेऽप्यामिष भवेत्।

आमिष्यत[2] इत्यामिषम्। मिष[3] स्पर्धायाम्'॥

पापऽपराधे रोगे च किल्विष कलुषे स्मृतम् ॥ 489 ॥

[1]कल्यते चित्रगुप्तन गण्यत इति किल्विष कलुष च। 'कल सख्यान'॥

वृष्टौ भुवोऽश क्लैब्ये च वत्सर वर्षमुच्यते।

[1]वर्षतीति वषम्। वृषु सेचने'॥

प्रज्ञाया दर्शने नृत्य प्रेक्षा तु परिकीर्तिता ॥ 490 ॥

प्रेक्ष्यत इति प्रेक्षा । 'ईक्ष [6]दर्शने' ॥

याच्ञाभृत्योश्च सेवाया भिक्षा भिक्षितवस्तुनि ।

[7]भिक्ष्यत इति भिक्षा । 'भिक्ष याच्ञायाम्' ॥ २२३-४ ॥

[1] उपादाने K2, K3　[2] K4, K5 add भुज्यते　[3] 'मिष शब्दे' K2, K3, K4　[4] कल्यत इति कलुषम् J2, K6.　[5] वृष्यत इति K3　[6] दर्शनाङ्कनयो J2　[7] भिक्षत इति K2, K3, K4

(विव.) उपदानेऽप्यामिषं स्यात् । 'उपाच्चारप्रदानन्दा हारो [1]ग्राह्योपायनेऽपि' इत्यभिधानचिन्तामणौ । उपशब्दाद् उत्तरेषां चारदानादिशब्दानां पर्यायत्वाभिधानाद् इहोपदानशब्देन उपायनमुच्यते; उपादान इति द्वितीयाक्षरदीर्घोऽपपाठः । शेषे—

'आमिषं सुन्दराराद्रूपादिविषये भवेत् ।
संभोगलोभयोर्मांसे ॥'

इति । सुन्दरविषये यथा—'आदास्यमानः प्रमदामिषं तत्' इति रघुवंशे (७. ३१)॥ अपराधेऽपि किल्बिषम् । वाग्दण्डपारुष्यराजाज्ञोल्लङ्घनादिकमपराधः[2] । शेषे—'किल्बिषं दुरिते रुजि' इति । रुग् रोगः ॥ स्याद् वृष्टौ—वर्षमस्त्रियाम् । लोकस्य धात्री, धारयित्री भूमिः [3] । अन्ये तु—दधातेः 'सितनिगमि . . .' इत्यादिना (उ. १. ७२) तुन्प्रत्ययान्तं कृत्वा लोकधात्वंश इति पठित्वा लोकधातुशब्देनापि भूमिरेवाभिधेय इत्याहुः । तस्या अंशो भूम्येकदेशस्य जम्बूद्वीपस्यैको[4] भागः । वत्सरः संवत्सरः । वृष्यते सिच्यत इति वर्षम् । 'वृषु सेचने'[5] (वा ३. ३. ५६)। शेषे—'वर्षं वर्त्मन्ये पुमान् मेघे' इति । वर्ष्मन्ये यथा—वर्षधर इति । वर्षतीति पचाद्यचि (३. १. १३४) वर्षो मेघः । 'पुंनपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु' इति रुद्रश्च ॥ प्रेक्षा नृत्तेक्षणप्रज्ञाः । नृत्तादीनां त्रयाणां द्वन्द्वः[6] । नृत्तप्रेक्षणकसंज्ञया प्रसिद्धम् । ईक्षणं नयनव्यापारः । केचित्तु—नृत्तस्येक्षणमिति षष्ठीतत्पुरुषमाश्रित्य भिन्नं पदमाहुः प्रेक्षा कौतुकमिति । प्रज्ञा सोऽप्रग्राहिणी बुद्धिः ।

प्रज्ञा यथा—प्रेक्षावन्त इति। प्रपूर्वाद् ईक्षतेः 'गुरोश्च हलः' (३. ३. १०३) इत्यकारप्रत्यये भावे कर्मणि च प्रेक्षा ॥ भिक्षा सेवार्थना भृतिः। अर्थना याच्ञा। भृतिर्वेतनम्। शेषे—'भिक्षा भिक्षितवस्तुनि' इति। यथा—भिक्षा देहीति। 'भिक्ष याच्ञायाम्' इति धातो पूर्ववद् [7]अकारप्रत्ययः ॥ २२३–४ ॥

[1] ग्राहयायते अपि B6 [2] °उल्लङ्घनादिकरणम् T₁ [3] T₁ adds इत्यर्थ [4] I v adds नवधा विभक्तस्य [5] 'अज्विधौ भयादीनामुपसख्यानम्' [6] नृत्तेक्षणप्रज्ञा इति विवरणाभिमत पाठ [7] 'गुरोश्च हल'

(पा) उपदाने[1] ऽप्यामिष स्यात्। मासेऽपि स्यात् ॥ अपराधेऽपि किल्विषम्। 'दुरिते दुष्टगरलेऽप्यपराधेऽपि किल्विषम्' इति जयकोश[2]॥ स्याद् वृष्टौ—वर्षमस्त्रियाम्। [3]लोकधात्व्यशो भारतादि ॥ प्रेक्षा नृत्तेक्षण प्रज्ञा। नृत्तस्येक्षण नृत्तेक्षणम्। 'प्रेक्षा नृत्तेक्षणे बुद्धौ' इति [4]विश्वप्रकाशवैजयन्त्यौ (पृ १८३, श्लो १३, पृ २२२, श्लो २५)॥ भिक्षा सेवार्थना भृति ॥ २२३–४॥

[1] A1 adds भङ्गिवस्तुनि [2] अजय A1 [3] लोकधात्री भू तदश भारत वर्षादि [4] B3 omits प्रकाश, 'प्रेक्षानुत्प्रेक्षणे बुद्धौ' इति मुद्रितविश्वप्रकाशे

**त्विट् शोभापि त्रिषु परे न्यक्षं कात्स्न्र्यनिकृष्टयोः।**
**प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे ॥ २२५ ॥**

(वि) शोभादीप्त्योर्गिरि रव व्यवसाये त्विडुच्यते ॥ 491 ॥

[1]त्वेषत इति त्विट्। 'त्विष दीप्तौ' ॥ त्रिषु परे। उत्तरे वक्ष्यमाणा शब्दा पान्ता[2] त्रिषु लिङ्गेषु वर्तन्त ॥

न्यक्ष परशुरामे स्याद् न्यक्ष कात्स्न्र्यनिकृष्टयो।

नितरामक्ष्णोतीति न्यक्षम्। 'अक्षू व्याप्तौ' ॥

अध्यक्षोऽधिकृते चैव प्रत्यक्षेऽपि [3]प्रकीर्तित ॥ 492 ॥

[4]अधिगतोऽक्षष्वित्यध्यक्ष ॥

अप्रेम्ण्यचिक्कणे चैव रूक्ष. स्यात् पादपान्तरे ।

रूक्षयतीति रूक्ष । 'रूक्ष [5]पारुष्ये' ॥ २२५ ॥

इति षान्तवर्ग.[6]

[1] K5 adds अनया [2] षान्तवर्गशब्दा K4 [3] परिकीर्तित J2 [4] अध्यक्ष्णोतीति K2 [5] नैस्निग्ध्ये K4, K5 [6] K2 adds षान्तशब्दसख्या २३

(विव.) त्विट् शोभापि । शोभा कान्तिः । यथा—चम्पकत्विडियमिति । अपिशब्दाद् दीप्तिरपि । यथा—सहस्रत्विडिति । त्वेषतेऽनयेति त्विट् । 'त्विष दीप्तौ' । क्विप्[1] (वा. ३. ३. ९४) । शेषे—'त्विड् दीप्तौ व्यवसाये च जिगीषायां गिरि ध्वनौ' इति ॥ त्रिषु परे । परे वक्ष्यमाणाः न्यक्षादयस्त्रयः शब्दा वाच्यलिङ्गा इत्यर्थः ॥ न्यक्षं कात्स्न्र्यनिकृष्टयोः । कात्स्न्र्यशब्दस्य धर्मवचनत्वेनार्थनिर्देशोऽपि पूर्ववाक्ये न्यक्षशब्दस्यापि वाच्यलिङ्गत्वविधानात् कृत्स्नरूपे धर्मिण्येव पर्यवसानम् । यथा 'कार्मस्ताच्छील्ये' (६. ४. १७२) इत्यादिषु । नियतमक्षमिन्द्रियसंयोगोऽस्मिन्निति न्यक्षं कृत्स्नम् । [2]निषिद्धमक्षमिन्द्रियव्यापारोऽनेनेति न्यक्षः निकृष्टः, अधम इत्यर्थः । शेषे—'न्यक्षः परशुरामे स्यात्' इति ॥ प्रत्यक्षेऽधिकृतेऽध्यक्षः । [3]अधिगतोऽक्षैरिन्द्रियैरिति अध्यक्षः । प्रत्यक्षो घटादिः । [4]अध्यक्ष्णोति व्याप्नोतीति अध्यक्षोऽधिकृतः ग्रामादिषु नियुक्तः ॥ रूक्षस्त्वप्रेम्ण्यचिक्कणे । [5]प्रेमरहिते यथा—रूक्षवृत्तिः प्रजाक्षयम् इति । अचिक्कणे [6]मार्दवरहिते यथा—रूक्षस्पर्श इति । 'रूक्ष पारुष्ये' इति चौरादिकाद् धातोः पचाद्यचि (३. १. १३४) रूक्षः । शेषे—'रूक्षः स्यात् पादपान्तरे' इति ॥

इह [7]मूर्धन्योष्मोपधवर्गमध्ये 'कोपोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः' (श्लो. २१८) इति श्लोकार्धं पठित्वा क्षीरस्वामिसुबोधिनीकाराभ्यां व्याख्यातम् । पुस्तकेष्वपि केषुचिदिहैव लिखितम् । अतो मूर्धन्योपधः कोपशब्दोऽप्यस्तीति विज्ञेयम् । अस्माभिस्तु तालव्योपधवर्गमध्ये व्याख्यातम् ॥ २२५ ॥

इति षान्तवर्गः[8]

[1] सपदादिभ्य क्विप् [2] निषिद्धमत्सरम् B5, B6 [3] अधिकृत TJ1, TJ2 [4] B6 adds 'अशू व्याप्तौ' [5] Tv adds अप्रेम्णि [6] मृदुत्व° B5, B6 [7] B5 omits °उष्म°. [8] B6, Tv add षान्तशब्दसख्या २३

(पा) त्विट शोभापि । 'त्विट् स्त्री शोभारुजोर्वाचि' इति रुद्र ॥ त्रिपु परे—निकृष्टयो । त्रिपु पर इत्यधिकार । कार्त्स्न्यशब्द कृत्स्नवचन ॥ प्रत्यक्षेऽधिकृतेऽध्यक्ष । प्रमाण च प्रमेय च प्रत्यक्षम् ॥ रूक्षस्त्वप्रेम्ण्यचिक्कण । अचिक्कण कर्कशस्पर्श ॥ अनुक्तम्—

व्याजसख्याशरव्येपु लक्ष घोषौ रवव्रजौ ।
शुण्डाग्रभागे गण्डूषो द्वयोश्च मुखपूरणे ॥
जिगीषा व्यवसाये च [1]सघर्षप्रमर्देऽपि च ।
शेषोऽक्षतादिदाने स्यान्निर्माल्ये मरुतामपि ॥
अम्बरीष किशोरे स्याद् भास्करे गिरिशेऽपि च ।
अनुतर्ष सुरापाने सुरापात्रे सुरातृषो [2] ॥ २२५ ॥

इति षान्तवर्ग

[1] सपर्ष B3 [2] सुरातृषि A1, C1

अथ सान्तवर्गः—

**रविश्वेतच्छदौ हसौ सूर्यवह्नी विभावसू ।**
**वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः ॥ २२६ ॥**

(वि) रवौ श्वेतच्छदे विष्णौ [1]ह्यऽमत्सरयोगिनो [2] ॥ 493 ॥
मन्त्रे निर्लोभनृपतौ देहस्थे मरदन्तरे ।
[3]शैलभेदात्मनोश्चैव हसशब्द प्रकीर्तित ॥ 494 ॥

[4]हन्तीति हस । 'हन हिसागत्यो ' ।

हारभेदे तीक्ष्णरश्मौ हव्यवाहे विभावसु ।

[5]विभा वसु यस्य स विभावसु ॥

वत्स वक्षसि सप्रोक्त वत्सस्तर्णकपुत्रयो ॥ 495 ॥

वस्यत छाद्यत इति वत्स । 'वस आच्छादने' ॥

सारङ्गेषु[6] सुपर्वसु दिवौका. परिकीर्त्यते[7] ।

द्यौरोक. स्थानं येषा[8] ते दिवौकस. ॥ २२६ ॥

[1] हरे K5 [2] मत्सर° K6 [3] शिलाभेद° K6 [4] हसति K3, K5; K2 adds गच्छति [5] J2 adds प्रभा [6] सारङ्गे च सुपर्वादौ J2, K4 [7] परिकथ्यते J2 [8] अस्येति दिवौका K2, K4

(विव.) रविश्वेतच्छदौ हंसौ। श्वेतच्छदो हंसनाम्नैव प्रसिद्धः पक्षि-विशेषः। शेषे—

'हंसो निर्लोभनृपतौ शारीरमरुदन्तरे ।
हयभेदे योगिभेदे मन्त्रभेदे च मत्सरे[1] ॥
परमात्मनि विष्णौ च श्रेष्ठे राजादिपूर्वकः ॥'

इति। हयभेदः सर्वशुभ्राश्वः। योगिभेदो हसाख्यः संन्यासिविशेषः। शारीरवायु-विशेषे यथा—'हंसं तनौ संनिहित चरन्तम्' इति नैषधकाव्ये (३. ४)। श्रेष्ठे यथा—राजहंसः, कविहंसः इत्यादि[2] ॥ सूर्यवह्नी विभावसू। विभा प्रभैव वसु धनं ययोस्तौ विभावसू। शेषे—'विभावसुर्हारभेदे' इति ॥ वत्सौ तर्णकवर्षौ द्वौ। अचिरजातगौस्तर्णकः। वर्ष. संवत्सर इति सुबोधिनी। तर्णकपुत्रौ इति पठित्वा पुत्रस्तनय इति केचिदाहुः। 'वस निवासे' इत्यस्मादौणादिकः सप्रत्ययः[3] (उ. ३. ६२)। 'सः स्यार्धधातुके' (७. ४. ४९) इति सकारस्य तकारः। 'उरो वत्सम्' (१, पृ. ४११) इति वक्षसि क्लीबं गतम् ॥ २२६ ॥

[1] वत्सरे Tv [2] हन्ति गच्छतीति हस । 'हन हिंसागत्यो '। पचाद्यच् (३ १ १३४)। 'भवेद् वर्णागमाद् हस ' इति सक्। यद्वा 'वृतृवदिवचिवसिहनिक्लिमिकषिभ्य स ' (उ ३ ६२) इति सप्रत्यय इति भा दी (पृ ५०४), हसतीति वा [3] 'वृत ' इत्यादि

(पा ) रविश्वेतच्छदौ हसौ। रव प्राणिस्वन[1]। 'प्राणिस्वने[1] त्वाराव आरव.। रव ' इति वैजयन्ती (पृ ३१, श्लो ३-४)। रवयोगाद् [2]रवी जीवोऽपि स्यात् ॥ सूर्यवह्नी—तर्णकवर्षौ द्वौ। पुत्रादिरपि स्यात्। 'वत्सस्तर्णकपुत्रादिवर्षे ' [3]इति विश्व. (पृ १७४, श्लो ६) ॥ सारङ्गाश्च दिवौकस । देवा अपि स्युः।

वहुत्वमविवक्षितम् । 'दिवौकाश्चातके सुरे' इति विश्व (पृ १७८, श्लो. ५४) ॥ २२६ ॥

[1] प्राणिस्वर $A_1$, $C_1$ [2] रविश्वेत इति मूलस्थरविशब्द नकारान्तोऽपि स्यादित्याशय [3] $C_1$ adds वत्स तु वक्षसि

**शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।**
**पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे ॥ २२७ ॥**

(वि ) [1]आद्ये धातौ विषे वीर्ये पारदे जलरागयोः ॥ 496 ॥
द्रवे गुणे [2]च तिक्तादौ शृङ्गारादौ रस. स्मृत ।
[3]घोण्टाभुवो कडगुजिह्वासल्लकीषु रसा भवेत् ॥ 497 ॥

रस्यत[4] इति रस । 'रस आस्वादने' ॥

स्यातामुत्तसावतसौ कर्णपूरे च शेखरे ।

उत्तस्यतेऽनेनोत्तस. । अवतसश्च । 'तसि [5]अलकरणे' ॥ २२७ ॥

[1] आढ्ये $K_6$ [2] शब्द इति $K_5$ [3] फाण्टे $J_2$ [4] $K_4$ adds आस्वाद्यते. [5] भूषायाम् $K_2$, $K_3$, $K_4$

(विव.) शृङ्गारादौ—द्रवे रसः। आदिशब्देन वीरकरुण° इत्यादिनोक्ताः (१, पृ. १३१) रसाः नाट्यवर्गोक्ता विवक्षिताः। विषं गरलं जलं च। विषे गरले यथा—'रसं दास्यामि' इति मुरारिनाटके शूर्पणखावाक्यम्। जले यथा—'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः' इति रघुवंशे (१. १८)। 'जले शरीरधातौ च [1]तिक्तादौ पारदे रसः' इति त्रिकाण्डशेषः (पृ. ३६, श्लो. १००२)। वीर्ये यथा—[2]'विद्धि चात्तरसमोजसा हरेरैश्वरं धनुरभाजि यत्त्वया' इति रघुवंशे (११. ७६)। [3]क्षीरादतिरसं सर्पिः इति च। गुणे माधुर्यादौ यथा—'रसाः कट्वम्ललवणतिक्तोष्णकषायकाः' इति। रागेऽनुरागे यथा—रसार्द्रचित्तः इति। द्रवे यथा—'क्षीरे त्रिरात्रं स्वरसे त्रिरात्रम्' इति। रस्यते आस्वाद्यत इति रसः। 'रस आस्वादने' चुरादावदन्तः[4]। शेषे—'रसः शरीरधातौ च रसो ग्रहणि पारदे' इति। शरीरधातौ यथा—'वसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि[5]

धातवः' इति (वाग्भट. १. ८)। ब्रह्मणि यथा--'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' इति (तै. उ. २. ७. १)। पारदे यथा--रसवाद इति। [6]भुवि [7]पाठायां सल्लक्यां रसेति स्त्रीलिङ्गः प्रागुक्तः (१, पृ. १८५, २६५, २८८)। पुंस्युत्तंसावतंसे वा कर्णपूरे च शेखरे। कर्णपूरः कर्णभूषणम्। शेखरः शिरोभूषणम्। उत्तंस्यते भूष्यते कर्णः शिरो वा अनेनेति उत्तंसः। उपसर्गभेदाद् अवतंसं च। तसिः भूषार्थो धातुर्दुर्गाचार्येण पठित इति सुबोधिनीकारः। [8]द्वन्द्वान्तरूपभेदादुभयोर्नपुंसकत्वम्। 'पुंसि वा' इत्युक्त्या विकल्पेन पुलिङ्गत्वं च। 'वष्टि भागुरिः . . .' इत्यादिना (कौमुदी २. ४. ८२) अकारलोपे वतंसोऽपि ॥ २२७ ॥

[1] पारदस्वादयो रस इति मु ग्र [2] विद्धि चात्तबलमोजसा इति मु ग्र (पृ २३४)
[3] रसस्यातिरस सर्पि इति स्वामी (पृ ३२७) [4] 'पुंसि सञ्ज्ञाया घ प्रायेण' इति घ इति श द्रु (४, पृ ६६) [5] °शुक्राणि $Gm_1$, $Gm_3$ [6] $B_6$ adds भूमौ
[7] 'पाठा शिवा' इति (१, पृ २६५) अस्मिन् ग्रन्थे पाठ, 'पाठा रसा' इति विवरणाभिमत पाठ, भा दी च (पृ १७६) [8] °अवतसे वा इति विवरणेऽङ्गीकृत पाठ

(पा) शृङ्गारादौ--द्रवे रस। विष गरल जल च स्यात्। वीर्य बलम्। देहधातुरपि[1] स्यात्। 'जले शरीरधातौ च पारदस्वर्णयो[2] रस' इति त्रिकाण्डशेष (पृ ३६, श्लो १००२)। द्रव [3]परीहास। निर्यासोऽपि स्यात्। 'निर्यासेऽमृतशब्दयो' इति वैजयन्ती (पृ २१८, श्लो ४६) ॥ पुंस्युत्तंसावतंसौ--शेखरे। वतंसोऽप्येतत्प्रकार एव। 'वतंसोत्तंसावतंसा कर्णपूरेऽपि शेखरे' इति वैजयन्ती (पृ २७०, श्लो ५६) ॥ २२७ ॥

[1] °धातुश्च $B_3$ [2] °स्वादयो रस इति मु ग्र [3] परिहास $A_1$

**देवभेदेऽनले रश्मौ वसू रत्ने धने वसु।**
**विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः ॥ २२८ ॥**

(वि) अग्नौ मयूखे धनदे देवे योक्त्रे वसु पुमान् ॥ 498 ॥

[1]वृद्धयोपधे धने रत्ने [2]हाटके मधुरे त्रिपु।

[3]वसतीति वसु.। 'वस निवासे' ॥

विधौ बुधे चक्रपाणौ वेधास्तु परिकीर्तितः ।। 499 ।।

[4]विदधातीति वेधा. । 'डुधाञ् धारणपोषणयो. ' ।।

आशी स्याद् विष्णुमायाया हिताशंसाहिदंष्ट्रयोः ।

आशास्तेऽनयेत्याशी । 'शासु[5] इच्छायाम्', 'शसु हिंसायाम्', 'शसु स्तुतौ' ।। २२८ ।।

[1] पथ्यौषधे $K_5$ [2] हट्टके $K_6$ [3] वसु अस्यास्तीति $K_6$ [4] विधति, 'विध विधाने' $K_2$, $K_3$ [5] आङ शासु इच्छायाम् $K_4$, $K_6$

(विव.) देवभेदेऽनले—धने वसु। अष्टौ वसव इति गणदेवताविशेषाः प्रसिद्धाः (१, पृ. ६)। अनलेऽग्नौ यथा—'वसुरग्निर्वसुश्रवाः' इति (ऋग्वेदः ५. २४. २)। रश्मिः किरणः। पुनरपि वसुग्रहणं रत्नधनयोर्वर्तमानस्य वसुशब्दस्य रूपभेदेन नपुंसकत्वज्ञापनार्थम्। किरणे धने च यथा—'निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका' इति माघकाव्ये (शिशु. ९. १०)। रत्ने यथा—'वामं वसु विवदमानो गृहान्' इति। स्वोचितस्थाने वसतीति वसु। 'वस निवासे'[1] ।। विष्णौ च वेधाः। 'विध विधाने' इत्यस्माद् असुन्प्रत्यये वेधाः[2]। शेषे—'वेधा विधौ[3] बुधे विष्णौ' इति। बुधः पण्डित इत्यर्थः। चतुर्मुखे प्रागुक्तः (१, पृ. १४) ।। स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः। हितस्य पुत्रपश्वादेराशंसा, 'प्रजावान् भूयासम्, पशुमान् भूयासं' इत्यादिरूपेण प्रार्थना। अहेः सर्पस्य दंष्ट्रायां यथा—आशीविष इति। आशासनमाशीः। 'आङः शासु इच्छायाम्'। संपदादित्वात् क्विप् (वा. ३. ३. ६४)। धातूनामनेकार्थत्वात् पूर्वस्मादेव धातोर्हिसार्थात् कर्तरि क्विपि आशीः सर्पदंष्ट्रा। 'शास इदङ्हलोः' (६. ४. ३४) इत्यत्र 'क्विप्प्रत्यये तु तस्यापि भवतीति वक्तव्यम्' (वा. ६. ४. ३४) इति आशासेरपि उपधाया इत्वम् ।। २२८ ।।

[1] 'शृस्वृस्निहित्रप्यसिवमि ' इत्यादिना (उ. १. १०) उ.। [2] 'विधाञो वेध च' (उ ४ २२५) इत्यसुन् इति भा दी. (पृ. ५०४-५); 'डुधाञ् धारणादौ विपूर्वादस्मादसि स्याद् वेधादेशश्च सोपसर्गधातो' इति कौमुदीव्याख्या (पृ. ५३८). [3] विधिर्बुधे $B_6$; विश्वप्रकाशेऽपि 'वेधा विधौ ' इति दृश्यते (पृ १७६, श्लो २७).

(पा) देवभेदेऽनले—धने वसु । [1]किरणश्च प्रग्रहश्च रश्मिशब्दार्थ । 'वसुर्योक्त्राग्निशुष्मेषु देवभेदमयूखयो ' इति जयकोश ।। विष्णौ च वेधा । 'वेधा विधौ बुधे विष्णौ ' इति विश्वप्रकाश (पृ १७६, श्लो २७) ।। स्त्री त्वाशी —दंष्ट्रयो । आशीति अहिदंष्ट्रायामीकारान्तोऽपि[2] स्यात् ।

'यो विभर्ति जटाजूटगाढबद्धोरगोज्झिताम् ।
[3]आशीमिव कलामिन्दोर्गङ्गानिर्व्ययनीमिव ।। '

इति [4]वालिविलास ।। २२८ ।।

[1] B3 omits the sentence　[2] A1 omits अपि　[3] आलीमिव A1
[4] हरिविलास B3

**लालसे प्रार्थनौत्सुक्ये हिंसा चौर्यादिकर्म च ।**
**प्रसूरश्वापि भूद्यावौ रोदस्यौ रोदसी च ते ।। २२९ ।।**

(वि) लालसा प्रार्थनौत्सुक्ययाच्ञातृष्णातिरेचने ।। 500 ।।

[1]अतिशयेन लस्यत इति लालसा । 'लस श्लेषणक्रीडनयो ' ।।

हिंसा स्याद् वन्धन चापि वधचौर्यादिकर्मणो ।

हिंस्यतेऽनयेति हिंसा । 'हिसि हिंसायाम् ' ।।

प्रसूर्वीरुधि कन्दल्यामश्वामात्रोश्च कथ्यते ।। 501 ।।

[2]प्रसूते प्रजा इति प्रसू । 'षूङ् गर्भविमोचने[3] ' ।।

रोदस्यौ रोदसी स्याता द्योर्धारित्र्योरुभे इमे ।

आद्यमीकारान्त द्वितीय [4]सान्तम् । रुदन्त्यस्मिन्निति रोद , रोदसी च । 'रुदिर् अश्रुविमोचने ' ।। २२९ ।।

[1] अतिशयस्तर्प K2, K3, K5　[2] प्रसूयते K5　[3] प्राणिप्रसवे K2
[4] सकारान्तम् K3

(विव.) लालसे प्रार्थनौत्सुक्ये। प्रार्थना वाञ्छा। औत्सुक्यमिष्टार्थोद्योगः। शेषे—'लालसा त्वक्लीबे तृष्णातिरेचने' इति। अक्लीबे द्वयोर्लिङ्गयोरित्यर्थः। भृशं लसति विषयेषु श्लिष्यत्यनया पुरुष इति लालसा। 'लस[1] श्लेषक्रीडनयोः'। क्रियासमभिहारे यङ्प्रत्ययः (३. १. २२)। 'सन्यङोः' (६. १. ९) इति द्विर्वचनम्। यङन्ताद् 'अ प्रत्ययात्' (३. ३. १०२) इति स्त्रियामकारप्रत्ययः। पुंलिङ्गपक्षे 'अकर्तरि च कारके संज्ञायाम्' (३. ३. १९) इति करणे घञ्प्रत्ययः। 'यङोऽचि च' (२. ४. ७४) इत्युभयत्र यङो लुक्। 'तृष्णातिरेके वाञ्छायामौत्सुक्ये लालसा द्वयोः' इति रभसः॥ हिंसा चौर्यादिकर्म च। परद्रव्यहरणं चौर्यम्। आदिशब्देन बन्धनताडनादिकं गृह्यते। चशब्दाद् वधोऽपि। 'हिंसि हिंसायाम्' इत्यस्मादकारप्रत्ययः ([2]३. ३. १०३)॥ प्रसूरश्वापि। अश्वा बडवा। जनन्यां प्रागुक्ता (१, पृ. ३७७)। लतायामपि प्रसूशब्द इत्याहुः॥ भूद्यावौ—रोदसी च ते। भूश्च द्यौश्च भूद्यावौ पृथिव्यन्तरिक्षे द्वे अपि सकृदुच्चरितेन ङीबन्तत्वेन द्विवचनान्तेन रोदसीशब्देन, सकारान्तेन च नपुंसकलिङ्गेन द्विवचनान्तरोद.शब्देन वा अभिधीयते। यथा—'होतारं सत्ययजं रोदस्योः' इति (ऋग्वेद. ४. ३. १)। तथा—'वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी' इति विक्रमोर्वशीये (१. १)। अन्तर्गतं सर्वं वस्तु रुन्धाते आवृण्वाते इति रोदसी[3]। 'रुधिर् आवरणे'। औणादिकोऽसुन्प्रत्ययः ([4]उ. ४. १८९)। बहुलग्रहणाद् धातुगतधकारस्य दकारः। रूपभेदादेव नपुंसकत्वम्। स्त्रीत्वविवक्षायाम् 'उगितश्च' (४. १. ६) इति ङीपि रोदस्यौ। गणरत्नमहोदधौ[5] तु 'भूर्भुवोर्वाचकं रोदसीत्यव्ययम्' (पृ. ३५) इत्यव्ययगणेऽभिहितम्॥ २२९॥

[1] लालसनम्। 'लस दीप्तौ'। यङन्त। 'अप्रत्ययात्' इति भा दी (पृ ५०५). [2] 'गुरोश्च हल'. [3] रोदिति सर्वमस्मिन्। 'रुदिर् अश्रुविमोचने'। असुन् (उ ४ १८९)। पक्षे गौरादित्वाद् ङीष् इति भा दी (पृ ५०५) [4] 'सर्वधातुभ्यो असुन्'. [5] 'रोदस्योर्भूर्भुव' इति मूलश्लोके, रोदसी इति द्यावापृथिव्यर्थे इति व्याख्याया न दृश्यते (पृ ३४-५)

(पा) लालसौ—हिंसा चौर्यादिकर्म च। [1]प्राणव्यपरोपणमपि स्यात्। प्रसूरश्वापि। मातापि स्यात्॥ भूद्यावौ—रोदसी च ते। [2]प्रत्येक समुदाये च स्याताम्। 'रोदसी रोदसा सार्धं पृथक् स्वर्गे दिवि क्षितौ[3]' इति जयकोश.॥२२९॥

[1] °व्यवरोपणम् A1 [2] प्रत्येकसमुदायाभ्याम् A1 [3] विवक्षितौ A1, पृथ्वीस्वर्गे इति टी स (३, पृ १४८)

**ज्वालाभासोर्न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु ।**
**पापापराधयोरागः खगबाल्यादिनोर्वयः ॥ २३० ॥**

(वि) स्त्रीनपुसकयोरर्चिर्ज्वालाभासो[1] प्रकथ्यते ॥ 502 ॥

अर्च्यते[2] पूज्यत इत्यर्चि. । 'अर्च पूजायाम्' ॥

तीक्ष्णरश्मौ हव्यवाहे पुमान् ज्योति प्रकीर्तित ।
प्रकाशदृष्टयोर्नक्षत्रे नपुसकमुदाहृतम् ॥ 503 ॥

द्योतत इति ज्योति । 'द्युत दीप्तौ' ॥

पापापराधयोराग शब्दस्तु परिकीर्तित[3] ।

आ समन्ताद्[4] अगत्यनेनेत्याग । 'अग कुटिलाया गतौ' ॥

बाल्यादौ पत्रिणि वयो भवेद्यौवनमात्रके ॥ 504 ॥

वीयत इति [5]वय । 'वी गत्यादिपु' ॥ २३० ॥

[1] ज्वालाभा स्त्री K2, K6 [2] K2 adds अनेन [3] परिकीर्त्यते K2, K3, परिकथ्यते K5 [4] K4, K6 omit [5] वयते । 'वय गतौ' K4.

(विव.) ज्वालाभासोर्न पुंस्यर्चिः । ज्वाला वह्नेः शिखा । भाः सूर्यादेः प्रभा । पुंसि नेति निषेधाद् नपुंसके च[1] ॥ ज्योतिर्भद्योतदृष्टिषु । भं नक्षत्रम् । द्योतः प्रकाशः । दृष्टिर्नेत्रस्य कनीनिका[2] । द्योतत इति ज्योतिः । 'द्युत दीप्तौ' । 'द्युतेरिसिन्नादेश्च जः' (उ. २. ११०) इति द्युतेरिसिन्प्रत्ययः, धात्वादेश्च[3] जकारः । शेषे—'ज्योतिः पुंस्यग्निसूर्ययोः । चन्द्रे च' इति । अग्न्यादिषु पुंस्त्वविधानाद् नक्षत्रादिषु नपुंसकत्वम् । अत एव रुद्रः—ज्योतिर्ना भास्करेऽग्नौ च क्लीब भद्योतदृष्टिषु' इति । 'ज्योतिः प्रकाशे ताराया वेदाङ्गान्तरनेत्रयोः' इत्यजयश्च ॥ पापापराधयोरागः । पापे यथा—'तौ नो 'मुञ्चतमागसः' इति श्रुतिः (तै.

स. ४ ७ १५. ३)। अपराधे यथा—'सहिष्ये शतमागासि' इति माघकाव्ये (शिशु २ १०८)॥ खगबाल्यादिनोर्वय । खग पक्षिमात्रम्। यथा—'आलोकशब्द वयसा विरावै' इति (रघु २. ६)। बाल्यादि बाल्ययौवनाद्यवस्थाविशेष । उभयत्र रूपभेदाद् नपुसकत्वम्। वयते स्वानुरूपव्यापार गच्छतीति वय.। 'वय गतौ'। [5]असुन्। शेषे—'युवतामात्रे[6] वय' इति। यौवनमात्र इत्यर्थ[7]। यथा—'वय प्रादुर्भाव प्रथयति परीहासफणिति' इति ॥ २३० ॥

[1] अर्च्यते। 'अच पूजायाम्'। 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसि' (उ २ १०८) इति इसि इति भा दी (पृ ५०५) [2] कनीनिकामध्यमिति स्वामी (पृ ३२८)
[3] धात्वादेश Gm1, Gm3 [4] मुञ्चतमहस इति अथर्ववेदे (४ २ ५ १)
[5] 'सर्वधातुभ्योऽसुन (उ ४ १६०) [6] यौवत° Tv [7] इत्यर्थान्तरकथनम् Tv

(पा) ज्वालाभासो—द्योतदृष्टिष। सूर्याग्न्यो पुलिङ्ग। 'ज्योतिर्ना भास्करेऽग्नौ च क्लीब भद्योतदृष्टिषु' इति रुद्र ॥ पापापराधयोराग। एन शब्दोऽप्येतत्प्रकार[1]। 'आग किल्विपमेनश्च त्रीणि [2]पापापराधयो' इति वैजयन्ती (पृ २७४, श्लो १६)॥ खगबाल्यादिनोर्वय। यौवनमात्रेऽपि[3] स्यात्। 'वय पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्व (पृ १७६, श्लो ३२)॥ २३० ॥

[1] B3, C1 omit एतत्प्रकार [2] पाप्मा इति मु ग्र [3] B3 omits the sentence

**तेज.पुरीषयोर्वर्चो महस्तूत्सवतेजसोः ।**
**रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः ॥ २३१ ॥**

(वि) वर्च [1]सुरूपपुरुषे भवेत् तेज पुरीषयो ।

[2]वर्चते दीप्यत इति वर्च । 'वर्च दीप्तौ'॥

क्लीव महस्तेजसि स्यादुत्सवे तु पुमान् मह ॥ 505 ॥

मह्यत [3]जनैरिति मह । 'मह पूजायाम्'॥

पामौ गुणे च स्त्रीपुष्पे रज शब्द उदाहृत ।

रज्यतेऽनेनेति रज.। 'रञ्ज रागे'॥

राहौ ध्वान्ते गुणे शोके तम.शब्दः प्रकीर्तित.[4] ॥ 506 ॥

[5]तम्यतेऽनेनेति तमः। 'तमु [6]ग्लानौ' ॥ २३१ ॥

[1]'पुंसि चन्द्रस्य तनये' इति मेदिनी; 'वर्चो रूपेऽपि च क्वचित्' इति विश्व. (पृ. १७६, श्लो २७)　[2]वर्च्यते, 'वर्च कान्तौ' K2, K4.　[3]K3, K6 omit जनै.
[4]प्रकथ्यते K2, K4　[5]तमयति ग्लपयतीति K2　[6]'तमु काङ्क्षायाम्' K5.

(विव.) तेजःपुरीषयोर्वर्चः। वर्च्यत इति वर्चः। 'वर्च दीप्तौ'। वृज्यते त्यज्यत इति वर्चः पुरीषम्। 'वृजी वर्जने'। औणादिकोऽसुन्प्रत्ययः[1] (उ. ४. १८६)। बाहुलको जकारस्य चकारः। शेषे—'वर्चस्तु रूपवद्वर्चः' इति। रूप इव तेजःपुरीषयोरपि वर्चःशब्दो वर्तत इत्यर्थः॥ महश्चोत्सवतेजसोः। मह्यते पूज्यते संबन्धिजनोऽत्रेति महः। 'मह पूजायाम्'[2]। [3]'महामहोनीलशिलारुचः पुरः' इति माघकाव्ये (शिशु. १. १६) सकारान्तप्रयोगः। उत्सववचने त्वकारान्तो नाट्यवर्गे कथितः (१, पृ. १४४)। तत्रापि सकारान्तकथने 'मह उद्धव उत्सवः' इत्यत्र लिङ्गसंकरदोषः प्रसज्येत। अतस्तत्राकारान्तत्वं सकारान्तत्वं चेत्युत्सववाचकस्य महःशब्दस्योभयमङ्गीकरणीयम्। 'न खलु दूरगतोऽप्यतिवर्तते महमसाविति बन्धुतयोदितैः' इति [4]माघकाव्ये (शिशु. ६. १९) अकारान्तस्य [5]महशब्दस्य प्रयोगश्च। 'स राशिरासीन्महसां महोज्ज्वलः' इत्युभयत्रापि नैषधकाव्ये (१. १)। इह तु प्रकरणपाठसामर्थ्यात् सकारान्तत्वमस्तीत्यवगम्यते॥ रजो गुणे च स्त्रीपुष्पे। 'गुणाः सत्त्वं रजस्तमः' इत्युक्तो गुणः (१, पृ. ९०)। स्त्रियाः पुष्पमार्तवम्[6]। प्रतिमासं जायमानमिति यावत्। चशब्दात् पांसौ च प्रागुक्तम् (१, पृ. ५४२)॥ राहौ ध्वान्ते गुणे तमः। गुणः तद्विशेषः प्रागुक्तः (१, पृ. ९०)। शेषे—'तमः शोके' इति। 'क्लीबं तमोगुणे शोके[7] सैंहिकेयान्धकारयोः' इति रभसश्च। राहौ—'तमस्तु राहुः स्वर्भानुः' इति (१, पृ. ६७)। 'स्वर्भानुश्च तमो राहुः सैंहिकेयो विधुंतुदः' इत्यमरमालायां पुंस्काण्डे कथितमिति सुभूतिचन्द्रः॥ २३१ ॥

[1]'सर्वधातुभ्योऽसुन्'　[2]असुन्प्रत्यय (उ ४ १८६)　[3]महामहानील° इति

मु ग्र (पृ ८) [4] उत्सवे माघेन प्रयुक्त Tv [5] मह शब्दस्य B6 [6] एतदपि पूर्वमुक्तम् 'स्याद् रज पुष्पमार्तवम् इति (१, पृ ३७३) [7] लोके B6

(पा) तेज पुरीषयो —उत्सवतेजसो । [1]अकारान्तमहशब्दोऽपि[2] स्यात्[3] । 'मही भूमौ मही नद्या मह उत्सवतेजसो ' इति विश्व (पृ १८०, श्लो १०) ॥ रजो गुणेऽपि—गुणे तम ॥ २३१ ॥

[1] °मह शब्द A1 [2] उक्त चैतद् व्याख्यात्रा (१, पृ १४५)—'अत्र महशब्दोऽकारान्त । यथा—' स स्वयवरमहाय महेन्द्रान्' इति नैषधे ' इति [3] B3 omits स्यात

**छन्दः पद्येऽभिलाषे च तपः कृच्छ्रादिकर्म च ।**
**सहो बलं सहा मार्गो नभः खं श्रावणो नभाः ॥ २३२ ॥**

(वि) छन्द स्यात् स्वैरचरणे पद्ये वेदाभिलापयो ।

[1]चन्दयत्याह्लादयतीति छन्द । 'चदि आह्लादने' ॥

कृच्छ्रादिकर्मणि तप पुमान् स्याद् माघघर्मयो ॥ 507 ॥

लोकान्तरे च शिशिरे धर्मे च समुदाहृतम् ।

[2]तपन्त्यत्रेति तप । 'तप सतापे' ॥

सहो वले ज्योतिपि च सहा [3]हेमन्तमार्गयो ॥ 508 ॥

सह्यत इति सह [4] । 'षह मर्पणे' ।

आकाशे श्रावणे मेघे [5]घ्राणे चैव पतद्ग्रहे ।
मृणालसूत्रे वर्पासु नभ शब्द उदाहृत ॥ 509 ॥

न भातीति नभ । 'भा दीप्तौ' ॥ २३२ ॥

[1] छन्दति K6, छन्दयति K5 [2] तप्यन्तेऽत्र K5 [3] मार्गहेमन्तयोर्भवेत् K4, °हेमन्तयोवने K5 [4] गहन सह K2, K4, हमा गह वर्तत इति वा सह K2 [5] प्राणे K6

(विव.) छन्दः पद्येऽभिलाषे च । पद्ये पद्यगताक्षरसंनिवेशविशेषे गायत्रीत्रिष्टुबादिपदाभिलप्ये । अभिलापेऽकारान्तोऽप्यस्ति । तथा च शब्दभेदप्रकाशे—'छन्दोऽभिलाषे छन्दः स्यादुत्सवे च महो महः' इति । चकाराद् वेदे च । यथा—श्रोत्रियः छन्दोऽधीते [1]इति ।। तपः कृच्छ्रादिकर्म च । कृच्छ्रं सातपनादिकम् । आदिशब्देन जपोपवासादिक गृह्यते । शेषे—'तपो लोके धर्ममात्रे क्लेशे शिशिरमाघयोः' इति । लोके—तपोलोके । धर्ममात्रे—दानाध्ययनादौ । क्लेशे यथा—किं करोतु तपस्वी । शोच्यत इत्यर्थः[2] ।। सहो बलं सहा मार्गः । बलं सामर्थ्यम् । मार्गो मासविशेषः[3] । तत्र रूपभेदात् पुंलिङ्गः । शेषे—'सहो ज्योतिषि हेमन्ते ना हासवति वाच्यवत्' इति । हेमन्ते च विशेषविधानात् पुंलिङ्गः । हासयुक्ते तु त्रिलिङ्गः । तत्र हसनं हस्, भावे क्विप्[4] । हसा सह वर्तत इति सहः । स्त्रीपुंसयोरप्येवमेव, दीर्घप्राप्तेरभावात् ।। नभः खं श्रावणे नभाः । खमाकाशम् । [5]द्विः पदोपादानमर्थविशेषेण लिङ्गभेदनप्रत्ययनार्थम् । शेषे—

'नभः क्लीबं जलधरे ना तु घ्राणे पतद्ग्रहे ।
मृणालसूत्रे वर्षासु ।।'

इति । विश्वप्रकाशे च—

'नभो व्योम्नि [6]नभा मेघे नभाः पुंसि पतद्ग्रहे ।
घ्राणे मृणालसूत्रे च वर्षासु श्रावणेऽपि च ।।'

इति[7] (पृ. १७७, श्लो. ३७)।। २३२ ।।

[1] 'चन्दनम् । चन्द्यतेऽनेन वा । 'चदि आह्लादने दीप्तौ च' । 'चन्देरादेश्च छ' (उ ४ २१६) इत्यसुन् । —छन्दति इति स्वामिमुकुटोक्तो विग्रहश्चिन्त्य' इति भा दी (पृ ५०५-६)   [2] 'तपनम् । तप्यते । अनेन वा । 'तप सतापे' । असुन् (उ ४ १८६)' इति भा दी (पृ ५०६)   [3] मार्गशीर्ष B6   [4] 'क्विप् च' (३ २ ७६)   [5] द्विपद° Tj1, Tj2   [6] नभो मेघे B6   [7] 'न वभस्ति भाति नभ' इति स्वामी (पृ २२), 'नभनम् । नभ्यते, अनेन अत्र वा । "णभ हिंसायाम्' । असुन्' इति भा दी (पृ ५०६)

(पा) छन्द पद्येऽभिलापे च । स्वैराचरणवेदयोरपि स्यात् । 'छन्द पद्ये च वेदे च स्वैराचाराभिलापयो' इति विश्व (पृ १७६, श्लो २८) ।। तप

कृच्छ्रादिकर्म च । 'तपश्चान्द्रायणादौ[1] स्याद् [2]धर्मे लोकान्तरेऽपि च' इति विश्व (पृ १७६, श्लो ३५) ।। सहो बल सहा मार्ग । मार्गो मार्गशीर्ष ।। नभ ख श्रावणे नभा ।। २३२ ।।

[1] चान्द्रायणादि $A_1$ [2] घर्मे $B_3$

**ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च ।**
**ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये ।। २३३ ।।**

(वि) अगाराश्रययोरोको न स्त्रिया परिकथ्यते ।

उच्यति समवैत्यत्रेत्योक । 'उच समवाये' ।।

क्षीरे च सलिले चैव पय शब्दोऽभिधीयते ।। 510 ।।

पीयत इति पय[1] । [2]'पीङ पाने' ।।

धात्ववष्टम्भबलयोर्दीप्तौ तेजसि न द्वयो ।

विक्रमे च प्रकाशे च सख्यास्त्वौजस्त्वदन्तक[3] ।। 511 ।।

[4]उब्जत्यनेनेत्योज । 'उब्ज आर्जवे' ।।

स्रोतो [5]नदीमहावेगे द्वारे चैवेन्द्रियस्य [6]हि ।

स्रवतीति स्रोत । 'स्रु गतौ' ।। २३३ ।।

[1] पयत इति वा । 'पय गतौ' $K_5$ [2] 'पा पाने' $K_2$, $K_4$ [3] विषमसख्यावाची त्वोजोऽदन्त इति स्वामी (पृ ३२६) [4] Pt2 adds व्यक्तीभवति, ओज शब्द सौत्रधातुज $K_3$ [5] महानदीवेगे $J_2$ [6] ह $K_4$

(विव.) ओक. सद्माश्रयश्चौका । सद्म गृहम् । आश्रयो वृक्षादिस्थानमात्रम् । उच्यन्ति सभूय तिष्ठन्त्यत्रेति ओकः । 'उच समवाये' दैवादिकः । 'ओक उच. के' (७ ३.६४) [1]इत्यसुन्प्रत्ययः चकारस्य ककारादेशश्च । उच्यतेरसुन्प्रत्यये उणादिषु बहुलग्रहणात् कुत्वमिति [2]काशिका (२, पृ. ३४३) ।

द्विः पदावृत्तिः पादपूरणार्था। शेषे—'स्यादोकः पुंस्यदन्तकः' इति। अकारान्तस्य प्रसङ्गादुक्तिः ॥ पयः क्षीरं पयोऽम्बु च। अत्रापि पादपूरणार्थं द्विः पदपाठः[3] ॥ ओजो दीप्तौ बले। दीप्तिः प्रकाशः। बलं सामर्थ्यम्। उब्जति व्यक्तीभवतीति ओजः। 'उब्ज आर्जवे'। आर्जवं स्पष्टतेति धातुवृत्तौ[4]। 'उब्जेर्बले बलोपश्च' (उ. ४. १९३) इति बलेऽभिधेयेऽसुन्प्रत्ययः। धातोर्बकारस्य च लोपः। सूत्रे बलग्रहणस्योपलक्षणत्वाद् अर्थान्तरेऽपि धातोरसुन्प्रत्यये बकारलोपश्च भवत्येव। लघूपधगुणः (७. ३. ८६)। 'ओजक्षे पुरुषाशके' इत्यकारान्तत्वेन जातकग्रन्थे प्रयुक्तः। ओजःशब्दो विशेषसङ्ख्यावाचित्वेन ज्यौतिषकैः परिभाषित इति नेह तस्योपयोगः ॥ स्रोत इन्द्रिये निम्नगारये। इन्द्रियम् इन्द्रियस्थानगतं द्वारम्। यथा—'स्रोतोभिस्त्रिदशगजा मद क्षरन्तः' इति भारविः (किरा. ७. ८)। रयशब्देनात्र प्रवाहो लक्ष्यते। यथा—त्रिस्रोता इति। [5]स्रवतीति स्रोतः।[6] 'स्रुरीभ्यां तुट् च' (उ. ४. २०३) इत्यसुन्, तस्य च तुडागमः ॥ २३३ ॥

[1] 'इत्यदन्तोऽपि' इति स्वामी (पृ ३२८), 'असुन्। न्यङ्क्वादि (७ ३ ५३)। दिवौकस, जलौकस, इत्येवमादावप्यसुनि प्रत्यये उणादयो बहुलमिति कुत्व द्रष्टव्यम्' इति काशिका

[2] 'किंपुनरत्र "ओक उच के" इति निपाताद् अदन्तोऽपि' इति भा दी (पृ ५०६) निपात्यते। कुत्व गुणश्च।

[3] पीयते। 'पीङ् पाने'। पयते वा। 'पय गतौ'। वा असुन् इति भा दी (पृ ५०६)

[4] मुद्रितमाधवीयधातुवृत्तौ न दृश्यते

[5] स्रवन्ति B6 [6] Gm1, Gm3 add 'स्रु गतौ'

(पा) ओक सद्माश्रयश्चौका। पदरुहस्पृशो चाङ्ग इति कात्यायन-सूत्रोक्त्या अदन्तोऽपि स्यात् ॥ पय क्षीर—इन्द्रिये निम्नगारये। निम्नगारयो नदी नदीप्रवाहोऽपि।

> 'स्रोत स्रोतस्विनी कर्पू कुल्या द्वीपवती सरित्।'
> 'ओघ प्रवाहो वेणी च धारा स्रोतो रय स्मृत।'

इति हलायुध (अ मा ३ ४४, ४७)। 'स्रोत इन्द्रिये गजपुष्करे' इति [1]पाठे गजपुष्करमिभकराग्रम्। 'स्रोतोऽम्बुनिर्गमद्वार इन्द्रियेभकराग्रयो' इति भागुरि ॥ २३३ ॥

[1] पाठान्तरे A1

**तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु ।**
**विद्वान् विदंश्च बीभत्सो हिंस्रेऽप्यतिशये त्वमी ॥ २३४ ॥**

(वि ) दीप्तौ प्रभावे *भरते तेज स्याद् वलशुक्रयो: ॥ 512 ॥

तेजयतीति तेज । 'तिज [1]निशातने'। अतस्त्रिपु । अत.पर वक्ष्यमाणा शब्दा आसान्तवर्ग त्रिपु लिङ्गेषु वर्तन्ते ॥

[2]पण्डितप्राज्ञयोर्विद्वानात्मवेदिनि कथ्यते ।

वेत्तीति विद्वान् । 'विद ज्ञाने' ॥

हिंस्रेऽर्जुने च बीभत्स कृपावति रसे त्रिपु ॥ 513 ॥

[3]बीभत्सा अस्यास्तीति [4]बीभत्स । 'वध वन्धने' इत्यस्य निन्दाया सन् ॥ अतिशये त्वमी । अमी वक्ष्यमाणा [5]चत्वार शब्दा अतिशये वर्तन्ते[6] ॥ २३४ ॥

[1] निशाने J2 [2] °प्राप्तयो K6 [3] भीषयते J2 [4] बीभत्सु K5
[5] J2, K5 omit चत्वार [6] K3 omits 8 lines * अग्नावित्यर्थ .

(विव.) तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि । प्रभावः प्रतापः । [1]दुराधर्षत्वमित्यर्थः । तदुक्तम्[2]—

'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं[3] तत्तेजः समुदाहृतम् ॥'

इति । दीप्तिः प्रकाशः । बलं सामर्थ्यम् । शुक्रं [4]चरमधातुः । तेजयति तनूकरोति शात्रवादिकमिति तेजः । 'तिज निशातने'। निशातनं तनूकरणम् । असुन्प्रत्ययः (उ.४.१८९) ॥ अतस्त्रिषु । इतः परं सान्तवर्गसमाप्तिपर्यन्ताः शब्दाः वाच्यलिङ्गा इत्यर्थः ॥ विद्वान् विदश्च । यो विदन् ज्ञेयोपादेयविवेकवान् स विद्वानुच्यते । 'विद ज्ञाने' इति धातोः लादेशस्य शतृप्रत्ययस्य 'विदेः शतुर्वसुः' (७.१.३६) इति वस्वादेशे सति 'उगिदचा सर्वनामस्थानेऽधातोः' (७.१.७०) इति नुमागमे 'सान्तमहतः संयोगस्य' (६.४.१०) इति दीर्घे संयोगान्तलोपे च (८.२.२३) विद्वानिति रूपम् । प्रज्ञादिगणे (५.४.३८) विदन्निति शत्रन्तः पठ्यते । अत एव

ज्ञापकाद् 'विदेः शतुर्वसुः' इति वस्वादेशस्य पाक्षिकत्वादिह ग्रन्थकारेण विदन्निति शत्रन्तनिर्देशः कृतः। अथवा—'तुह्योस्तातङाशिष्यन्यतरस्याम्' (७. १. ३५) इत्यनुवर्तते। तथा च काशिकाकारः—'केचिदन्यतरस्यां ग्रहणमनुवर्तयन्ति। तेन[5] विदन्तौ विदन्तः इति सिद्धं भवति' इति (२, पृ. २८०)। शेषे—'विद्वानात्मविदि प्राज्ञे पण्डिते चाभिधेयवत्' इति। प्राज्ञो गम्भीरार्थावधारणक्षमः॥ बीभत्सो हिंस्रेऽपि। हिंस्रो घातुकः। 'बध बन्धने' इति धातोः 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३. १. ६) इति सूत्रे बधेर्वैरूप्य[6] इति वक्तव्यात् वैरूप्यार्थे सन्प्रत्यये तदन्ताद्धातोः 'अप्रत्ययात्' (३. ३. १०२) इत्यकारप्रत्यये स्त्रीलिङ्गाद् बीभत्साशब्दाद् अर्शआद्यचि (५. २. १२७) बीभत्सः। शेषे—'पार्थो घृणावान् बीभत्सः' इति। पार्थोऽर्जुनः। घृणावान् जुगुप्सित इत्यर्थः। रसे पुंलिङ्गः। तद्वति त्रिलिङ्गश्चेति प्रागुक्तः (१, पृ. १०१)॥ अतिशये त्वमी। अमी वक्ष्यमाणाः ईयसुन्प्रत्ययान्ता ज्यायःप्रभृतयश्चत्वारः शब्दा वृद्धादीनां बाढपर्यन्तानामतिशयार्थे वर्तन्ते॥ २३४॥

[1] दुराधर्षे प्रसिद्धार्थं Tv [2] अपिशब्दादसहनत्वे यद्धूरत इति स्वामी (पृ ३२९); इति भरत इति भानुजीदीक्षितश्च (पृ ५०६) [3] अवस्यानम् $B_6$ [4] वसासृङ्मासे-त्यादिसप्तसु धातुषु [5] विदन् इत्यपि मु. ग्र [6] 'अत्रापि सन्नर्थविशेष इष्यते। . बधेर्वैरूप्ये' इति काशिकायाम् (१, पृ १४७), 'बधेश्चित्तविकारे' इति सि. कौमुद्याम् (पृ ३६६)

(पा) तेज प्रभावे—वले शुक्लेऽपि। वल पराक्रम। [1]शुक्ल रेत॥ अथ त्रिषु विद्वान् विदश्च। पण्डितोऽपि स्यात्। अधिकारात् त्रिलिङ्ग.। विदुषी सभा। विद्वत्सद॥ बीभत्सो हिंस्रेऽपि। [2]जुगुप्सितेऽपि स्यात्॥ अतिशये त्वमी॥ २३४॥

[1] शुक्रम् $A_1$. [2] जुगुप्सितश्च $A_1$.

वृद्धप्रशस्ययोर्ज्यायान् कनीयांस्तु युवाल्पयोः।
वरीयांस्तूरुवरयोः साधीयान् साधुबाढयोः॥ २३५॥

इति सान्तवर्गः

(वि ) प्रशस्तवृद्धयोर्ज्यायान् कनीयास्तरुणेऽल्पके ।
अतिशयेन वृद्धो[1] ज्यायान् । अतिशयेनाल्प [2] कनीयान् ।
उरौ वरे वरीयान् स्यात् साधीयान् साधुबाढयो ॥ 514 ॥
अतिशयेन उरु वरीयान् । अतिशयेन साधु [3] साधीयान् ॥ २३५ ॥

इति सान्तवर्ग.[4]

[1] J2 adds प्रशस्यो वा [2] J2 adds युवा वा [3] वाढ K4 [4] K2, K4 add सान्तशब्दसख्या ३६

(विव.) वृद्धप्रशस्ययोर्ज्यायान् । वृद्धप्रशस्यशब्दाभ्यामतिशयरूपार्थ-विवक्षायाम् ईयसुन्प्रत्यये (५. ३. ५७), प्रशस्यस्य (५. ३. ६०) इत्यनुवृत्तौ 'ज्य च' (५. ३. ६१), 'वृद्धस्य च' (५. ३. ६२) इति सूत्राभ्या [1]शब्दद्वयस्य ज्यादेशे, 'ज्यादादीयसः' (६. ४. १६०) इति प्रत्ययादेरात्त्वे ज्यायानिति रूपम् ॥ कनीयांस्तु युवाल्पयोः । अतिशयेन युवा, अतिशयेनाल्प इति च विग्रहे ईयसुन्-प्रत्यये (५. ३. ५७), 'युवाल्पयोः कनन्यतरस्याम्' (५. ३. ६४) इति [2]शब्द-द्वयस्य कन्नादेशे कनीयानिति रूपम् ॥ वरीयांस्तूरुवरयोः । उरुर्महान् । वरः श्रेष्ठः । अत्रापि [3]पूर्ववदतिशयार्थे शब्दद्वयादीयसुन्प्रत्यये, 'प्रियस्थिर...' इत्यादिना (६. ४. १५७) उरुशब्दस्य वरादेशे वरीयानित्यर्थद्वये साधारणं रूप भवति ॥ साधी-यान् साधुबाढयोः । अतिशयेन साधुरिति विवक्षायामीयसुन्प्रत्यये (५. ३. ५७) टिलोपे[4] (६. ४. १५५) साधीयान् । अतिशयेन साधुः सज्जन इत्यर्थः । अतिशयेन बाढ इत्यस्मिन्नर्थे 'अन्तिकबाढयोर्नेदसाधौ' (५. ३. ६३) इति [5]साधादेशे च साधीयान्, अतिदृढ इत्यर्थः ॥ २३५ ॥

इति सान्तवर्ग [6]

[1] B6 adds वृद्धप्रशस्येति [2] B6 adds युवाल्पयो. [3] °अतिशायनार्थे TJ1, TJ2. [4] 'टे' [5] B6 adds वाढशब्दस्य [6] Tv adds सान्तशब्दसख्या ३६

(पा ) वृद्धप्रशस्तयोर्ज्यायान् । 'अतिशये त्वमी' इत्यधिकाराद् अति-वृद्धातिप्रशस्तयो ॥ कनीयास्तु—साधुबाढयो ॥

अनुक्तम्—

ओदनेऽपि च पाथः स्यादम्भस्यपि सरो भवेत् ।
दासः स्याद् दानपात्रेऽपि त्रासो दोषेऽपि रत्नजे ॥
तिलित्सः [1]स्यात् तरक्षौ च रभसः[2] समदेऽपि च ।
ताम्रेऽपि स्यात् तामरस चन्द्रमस्यपि सारस ॥
क्रूरदृष्टौ च सप्तार्चिदंष्ट्रायामपि राक्षसी ।
अन्धेऽपि दिव्यचक्षुः स्याद् यथात्रैव सुलोचनः ॥
भवेद् घनरसस्तक्रघनसारकयोरपि ।
रासो ध्वनौ[3] नर्मगोष्ठयोः सेवासेवकयोश्च [4]से ॥ २३५ ॥

इति सान्तवर्गः

[1] 'तरक्षुस्तु मृगाजीवस्तिलित्सकमृगादनौ' इति वैजयन्ती (पृ ६५, श्लो ४).
[2] 'रभसो विपवेगयो' इति वैजयन्त्या (पृ २४४), 'रभसो वेगहर्षयो' इति शाश्वते (पृ. ५८), विश्वप्रकाशे च (पृ १७५) दृश्यते
[3] रसे A1, C1
[4] 'सेशब्द सेवने स्त्री स्यात् सेवके त्वभिधेयवत्' इति वैजयन्ती (पृ २८०, श्लो ४०)

**अथ हान्तवर्गः—**

**दलेऽपि वर्हं निर्बन्धोपरागार्कादयो ग्रहाः ।**
**द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके ॥ २३६ ॥**

(वि) दले मयूरपिच्छे[1] च प्रधाने परिवारके ।
उद्योगवृद्धयोरपि च वर्हंशब्द प्रकीर्तित ॥ 515 ॥

[2]वर्हत इति वर्हं । 'वर्ह प्राधान्यादौ' । वृहतीति वा वर्हं । 'वृह उद्यमने[3]' ॥

सूर्यादौ ग्रहणे युद्धे पूतनादावनुग्रहे[4] ।
उपरागे च निर्बन्धे स्वर्भानौ च ग्रह स्मृत ॥ 516 ॥

[5]गृह्यत इति ग्रहः । 'ग्रह उपादाने' ॥

[6]क्वाथस्य च रसे चैवाप्यापीडे नागदन्तके ।
अगारद्वारके चैव निर्यूह परिकथ्यते ।। 517 ।।

निर्यूह्यत इति निर्यूह । 'यूहि' लौकिको धातु ।। २३६ ।।

[1] °पिच्छे J2 [2] वर्हति नृत्तेन बर्हम् । 'बृह वृद्धौ' K6. [3] उद्यमे K4 [4] च सुग्रहे K4, K6 [5] गृह्यते सूर्याचन्द्रमसावनेनेति ग्रह K2, K4 [6] द्वार्यापीडे क्वाथरसे K5

(विव.) दलेऽपि बर्हम् । दलं पर्णम् । वर्हं मयूरपिञ्छम् । शेषे—

'वर्ह मयूरपिञ्छेऽथ प्राधान्योद्योगवृद्धिषु
परिवारे पुमान् ।।'

इति । प्राधान्यादिषु पुंलिङ्ग इत्यर्थः । 'बृह वृद्धौ' इति धातोः पचाद्यचि (३. १. १३४) बर्हम्[1] ।। निर्बन्धोपरागार्कादयो ग्रहाः । निर्बन्ध आग्रहः । उपरागो राहुणा चन्द्रसूर्ययोर्ग्रहणम् । आदिशब्देन सूर्यादयो नव ग्रहाः[2] । 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इति भावे अप्प्रत्ययः । गृह्णन्तीति ग्रहाः सूर्यादयः । 'विभाषा ग्रहः' (३. १. १४३) इति पक्षे पचाद्यच् । शेषे—'युद्धग्रहणानुग्रहेषु तु । पूतनादौ ग्रहः' इति । अत्र युद्धशब्देन युद्धोद्योगो विवक्षितः । तथा विश्वप्रकाशे—

'ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः ।।'

इति (पृ. १७९, श्लो. २) ।। द्वार्यापीडे—नागदन्तके । द्वारं गृहादौ निर्गमप्रवेशार्थं विकल्पितं कवाटस्थानविवरम् । 'आपीडशब्देन कुड्याद् बहिर्निर्गतं दारु कथ्यते' इति [3]क्षीरस्वामिसुबोधिनीकारौ । तदुक्तं विश्वकर्मणा—

'स्थूणा तुलाग्रयोर्लग्नं द्विप्रान्तं तिर्यगुन्नतम् ।
आपीड उच्यते दारु स्वोर्ध्वस्यापीडधारणात् ।।'

इति । अपरे तु—स्वसंबन्धं पुरुषमापीडयति स्थापयतीति व्युत्पत्त्या मत्तवारणमापीडशब्दायमाहुः । तथा च वैजयन्त्याम्—'कूटागारं तु वलभी निर्यूहो [4]मत्त-

वारणम्' इति (पृ. १६१, श्लो. ३१)। सुभूतिचन्द्रस्तु—आपीडः शेखर इति व्याख्याय तत्र रुद्राभिधानसंवादमाह—'निर्यासे शेखरे द्वारि निर्यूहो नागदन्तके' इति। क्वाथरसः [5]पुष्परसः। नागदन्तकलक्षणमुक्तं वास्तुशास्त्रे—

'द्वारप्रान्तद्वये खातं नासाया ईषदुन्नतम्।
दारु स्रगवलम्बार्थं नागदन्तक उच्यते॥'

इति। द्वारबन्धस्योपरिस्थितं दारु नासा। प्रान्तद्वयवर्तित्वेन नागदन्तसादृश्याद् नागदन्तकः। 'नागदन्तो द्विपरदे [6]गृहनिर्गतदारुणि' इति विश्वप्रकाशश्च (पृ. ७२, श्लो. १६६)। निर्यान्त्यनेनेति वा, स्वयं निर्यातीति वा निर्यूहः। यातेरूह-प्रत्ययः[7]॥ २३६॥

[1] वर्ह्यते वा। 'वर्ह हिंसायाम्'। घञ् इति भा दी (पृ ५०७)　　[2] B6 adds 'ग्रह उपादाने'　　[3] आपीडो बर्हिनि सृत दारु इति मु ग्र (पृ ३२६)　　[4] गृह परितो वृति, चन्द्रशालिका वा　　[5] क्वाथरसे घने द्रव्यनिर्यासे इति टी स (४, पृ १५१), क्वथितद्रव्यरसे इति भा दी (पृ ५०७)　　[6] गृहान्निर्गत° इति मु ग्र　　[7] कूहप्रत्यय F6, निर्यूहति। 'यूहि' लौकिको साधु (धातु ?)। 'इगुपध　　' इति क। निरूहति वा। पृषोदरादित्वाद धातोर्यडागम इति भा दी (पृ ५०७)

(पा) दलेऽपि वर्हम्। शिखिपिञ्छेऽपि स्यात्[1]। 'विटि अदुनु'॥ निबन्धोपराग—निर्यूहो नागदन्तके। नागदन्तक 'नागवासमु'। भाषान्तरे 'नेरुगुठम्' ॥ २३६॥

[1] B3 omits

तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च।
पत्नीपरिजनादानमूलशापाः परिग्रहाः॥ २३७॥

(वि) तुलासूत्रे हेम्नि भुजे वन्दीनियमयोर्घृणौ।
[1]हरिद्रौ हयरश्मौ च प्रग्राह प्रग्रहे भवेत्॥ 518॥

प्रगृह्यत इति प्रग्राह, प्रग्रहश्च[2]॥

भृत्ये शापे मूलपत्न्योरादाने स्यात् परिग्रह।

परिगृह्यत इति परिग्रह ॥ २३७ ॥

[1] हरिद्राहयरश्मौ K₄ [2] K₂, K₄ add 'ग्रह उपादाने'.

(विव.) तुलासूत्रे—प्रग्रहोऽपि च। तुलादण्डस्योपरि स्तम्भद्वये तिर्यगवस्थापितकीलमध्ये तुलाधारणार्थं निहितं सूत्रं तुलासूत्रमिति सुबोधिनीकारः। रथादावश्वादिनियमनार्था सारथ्यादिभिर्ध्रियमाणा[1] रज्जुः अश्वादिरश्मिः। प्रकर्षेण गृह्यते तुलादिकमनेनेति प्रग्राहः। ग्रह इति वर्तमाने 'प्रे वणिजाम्' (३. ३. ५२), 'रश्मौ च' (३. ३. ५३) इति ग्रहेर्विभाषायां घञि प्रग्राहः। तदभावपक्षे 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप्प्रत्यये प्रग्रहः। विश्वप्रकाशे—

'प्रग्रहस्तु[2] तुलासूत्रे बन्द्यां नियमने भुजे।
हयादिरश्मौ रश्मौ च सुवर्णहरिपादपे ॥'[3]

इति (पृ. १८०, श्लो. १२)। रश्मिः सूर्यादिकिरणः। शेषेऽपि—

'रश्मौ बन्द्या नियमने भुजे च हरिपादपे।
हेम्नश्च प्रग्रहः'॥

इति॥ पत्नीपरिजनादानमूलशापाः परिग्रहाः। परिजनः [4]परिवारः। आदानं मूलं युध्नः। यथा—दृढपरिग्रहः पादपः इति। शापः शपथः। परिपूर्वो गृह्णातिः, कर्मणि भावे करणे च 'ग्रहवृदृनिश्चिगमश्च' (३. ३. ५८) इत्यप्प्रत्यये परिग्रहः ॥ २३७ ॥

[1] ध्रियमाणा Ij₁, Ij₂ [2] प्रग्राह इति मु ग्र [3] हलिगादरे इति भा नी (पृ ५०७), मु ग्र न [4] परीवार B₆

(पा) तुलासूत्रे—मूलशापा परिग्रहा। मूल नाम[1] मूल्यम्। शापो नाम[1] शपथ ॥ २३७ ॥

[1] B₃, C₁ omit नाम

दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः।
व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोऽपहाः ॥ २३८ ॥

**परिच्छदे नृपार्हेऽर्थे परिवर्हः**

**इति हान्तवर्गः**

(वि) अगारे चैव भार्याया गृहशब्द प्रकीर्तित ॥ 519 ॥

सर्वं [1]गृह्णन्तीति गृहा ॥

वरस्त्रिया कटीभागेऽप्युच्छ्रायेऽश्वादिसादिनि ।
दैर्घ्यारोहणयोर्मानेऽप्यारोह परिकथ्यते ॥ 520 ॥

आरुह्यत इत्यारोह । 'रुह बीजजन्मनि प्रादुर्भावे च' ॥

वृन्दे विशिष्टतर्के च सैन्यविन्यसनेऽपि च ।
पक्षिवृन्दे गते व्यूहनिर्माणे व्यूह उच्यते ॥ 521 ॥

व्यूह्यत[2] इति व्यूह । 'ऊह वितर्के' ॥

वृत्रासुरे पन्नग [3]चाप्यहिस्तु समुदाहृत ।

[4]अहृत इत्यहि । 'अहि गतौ' ॥

हव्यवाहे हिमांशौ च सूर्येऽपि स्यात् तमोऽपह ।

तमोऽपहन्तीति तमोऽपह । 'हन हिंसागत्यो' ॥

नृपार्हचामरादौ च परिच्छद च वस्तुनि ॥ 524 ॥
परिच्छदे भूषणे च परिवर्ह प्रकथ्यते ।

परिवर्हत इति परिवर्ह । 'वर्ह [5]प्राधान्ये' ॥ २३८ ॥

इति हान्तवर्ग [6]

[1] गृह्णातीति गृह K4 [2] K2, K3 add समूहतया रच्यते [3] चाप्यहिशब्द प्रकीर्तित K5 [4] यत्तु 'अहति इत्युक्त स्वामिना, तन्न । नलोपासभवात् इति भा दी (पृ ५०७) [5] प्राधान्यपरिभाषणहिंसाप्रसादेषु J2 [6] K2, K5 add हान्तशब्द सख्या ११.

(विव) दारपु च गृहा। भर्त्रादिदत्त गृह्णन्तीति गृहा। पुलिङ्गो बहुवचनान्तश्चाय गृहशब्द। चशब्दाद् वेश्मनि च। 'गेहे क' (३ १ १४४) इति सूत्रे गेहशब्दस्य वश्माभिधेयत्वम्[1], तात्स्थ्यात् लक्षणया पत्नी चाभिधेयभूता। एवमर्थद्वयेऽप्यभिधेये कर्तरि ग्रहधातो कप्रत्यये 'ग्रहिज्या ' इत्यादिना (६ १ १६) सम्प्रसारणे गृहमिति॥ श्रोण्यामप्यारोहो वरस्त्रियाः। शेषे—

'अश्वादिसादिनि।
आरोहणे द्राघिमनि मानेऽप्यारोह इष्यते॥'

इति। द्राघिमनि रज्ज्वादेर्दीर्घत्वे, माने वेण्वादेरच्छ्राये। "रुहेर्धातो आङ्पूर्वात कर्मणि भावे च घञ्प्रत्यय। व्यूहो वृन्देऽपि। समूहे कृतनिर्वचन (१, पृ ३५८)। 'व्यूहस्तु बलविन्यासे' इति गत (१, पृ ५२६)। वीनां पक्षिणा समूहो व्यूह। तद्वानपि व्यूहस्त्रिलिङ्ग। विशिष्टस्तर्को व्यूह इत्यादि। 'व्यूहो ना बलविन्यासे निर्माणनिपुणम्वयो' इति रुद्र॥ अहिर्वृत्रेऽपि। वृत्रो दानवविशेष। अत एव—'सर्पे वृत्रासुरेऽप्यहि' इति रभस[3]। यथा—'द्रुत धनुष्खण्डमिहाहिविद्विष' इति भारवि (किरा ४ २७)। 'अहति लोकान् व्याप्नोतीति अहि[5]। 'अहि गतौ'। सर्पे प्रागुक्त (१, पृ १५०)॥ अग्नीन्द्वर्कास्तमोऽपहा। तमो ध्वान्तमप हन्तीति तमोऽपह। 'अपे क्लेशतमसो' (३ २ ५०) इति डप्रत्यय। डित्वात टिलोप[6]॥ परिच्छदे नृपार्हेऽर्थे परिवर्हः। परिबर्हं परिच्छद परिकर। राजार्हं छत्रचामरादिकम्। यथा—'वेश्मानि राम परिबर्हयन्ति' इति रघुवंशे (१४ १५)। अथा धनम्। परिवृह्यते वर्धत इति परिबर्ह। 'वृहि वृद्धौ'। कर्मणि घञ्प्रत्यय। परिबर्हयतीति वा परिबर्ह। बृहतेर्ण्यन्तात् पचाद्यच्प्रत्यय[7]। (३ १ १३४)॥

इति नानार्थवर्ग[8]

अत्र नानार्थवर्गपरिसमाप्ति दोर्नादि? वर्गान्तर वक्ष्यमाणमुपक्षिपति—अव्यया परं इति। अनन्तरमविभक्तिकत्वशब्दा अव्यया एव वक्ष्यन्त इत्यर्थ। इह कश्चिदाह—वक्ष्यमाणानाम् प्राग्दीनादीनामव्ययत्वाद् 'विशेष्यनिघ्न वर्गे' (३ १ १) इत्यादौ नानार्थवर्गे नानार्थमध्येऽसावधारणम्[10]। का

समाप्तिस्तु 'हि हेतावधारणे' (श्लो. २५७) इत्यन्तनानार्थाव्ययनिरूपणानन्तरभावीति[11]। अव्ययवर्गस्तु[12] 'चिराय चिररात्राय' इत्यादिक इति च। अपरे तु[13]—तेषामप्यविभक्तिकत्वाद् अव्ययपदेनैवोपसंग्रहणाद् आङीषदर्थे . . . इत्यादिकोऽव्ययवर्ग इत्याहुः। तेषामनेकार्थत्वं काण्डप्रथमश्लोकोक्तस्य वर्गाणां वर्गसंश्रयत्वस्यैव निर्वाहकमिति। अव्ययवर्गे द्वावप्यवान्तरवर्गौ नानार्थवर्गः पर्यायवर्गश्च इत्युपपत्तेः। [14]न च विशेष्यनिघ्नत्वं संकीर्णवर्गवद् अवान्तरवर्गाश्रयत्वं मा भूदिति वाच्यम्। सति संभवे तु परित्यागानुपपत्तेः। तयोरपि वर्गयोराचार्योक्तं वर्गसंश्रयत्वं प्रागेव समर्थितम्। किं च नानार्थवर्गादावाचार्येण प्रतिज्ञातम् इह केचिदनेकार्थाः कान्तादिवर्गेष्वेव विवक्ष्यन्ते। भूरिप्रयोगास्तु पर्यायकाण्डे कान्तादिषु चेति। न चाङादयः पर्यायकाण्डगताः। न हि कान्तादिवर्गेषु क्रोडीकृत्य पठिताः। अतो नानार्थवर्गसमाप्तिरत्रैव। अव्ययवर्गस्तु आङीषदर्थे (श्लो. २३९) इत्यादिरिति सर्वं कल्याणम्॥ २३८॥

व्याचष्टामरसिंहोक्ते[15] नामलिङ्गानुशासने।
बोम्मगण्टचप्पयाचार्यो वर्गं नानार्थगुम्फितम्॥
[16]इह यत्त्यक्तमज्ञानादालस्याद्यदुपेक्षितम्।
प्रमादादन्यथोक्तं यत् तद् विद्वद्भिर्विशोध्यताम्॥

इति नानार्थवर्गः समाप्तः[17]

[1] अभिधेयम् Gm1, Gm3.  [2] 'रुह बीजजन्मनि प्रादुर्भावे च' B6
[3] वैजयन्त्यामपि एव दृश्यते (पृ २१५, श्लो ५)  [4] अर्हति इत्युक्ते नलोपासभव इति
भा. दी (पृ ५०७)  [5] आहन्ति। 'हन हिंसागत्यो'। 'आङि श्रिहनिभ्या ह्रस्वश्च'
(उ ४ १३८) इतीण् डित् आङो ह्रस्व इति भा दी (पृ ५०७)  [6] 'टे' (६. ४
१६३)  [7] परिबर्हते। परिवर्हते वा। 'बर्ह प्राधान्ये'। पचाद्यच्। घञ् वा (३ ३
१६) इति भा दी (पृ ५०३)  [8] B6, Tv add हान्तशब्दसख्या १२
[9] °गतनानार्थ° B6  [10] उपसग्रहणम् B6, Tv.  [11] निरूपणान्त° Gm3
[12] Tj1, Tj2 omit वर्ग°  [13] B6 adds आहु  [14] स च विशेष्यनिघ्नसकीर्णपदस्याव्ययान्तवर्गाश्रयत्व मा भूदिति वाच्यम् Gm1, Gm3  [15] °अमरसिंहीये Tv  [16] Tv omits the verse  [17] नानार्थवर्गं इहैव समाप्यते इति विवरणकारमतम्

(पा) दारेषु च गृहा। नपुसकगृहशब्दोऽपि [1]एवप्रकार। 'जाया च गृहिणी गृहा.[2]' इति हलायुध. (अ मा २ ३३६)॥ श्रोण्यामप्यारोहो वरस्त्रियाः।

³समुच्छ्रायेऽपि स्यात् ।। व्यूहो बृन्देऽपि । सेनाविन्यासेऽपि स्यात् ।। अहिर्वृत्रेऽपि । सर्पेऽपि स्यात् ।। अग्नीन्द्वर्का—परिवर्हं । नृपार्हार्थं श्वेतच्छत्रादि ।। अनुक्तम्—

पिकालापेऽपि च कुहूरीहा स्यादुद्यमेऽपि च ।
आरोह स्यान्महामात्रो हस्त्यारोहोऽप्यय मत ।। २३८ ।।

इति हान्तवर्ग

[1] B3 omits [2] गृहम् A1 [3] उत्सेधेऽपि B3, C1

अव्ययाः परे ।
आङीषदर्थे ऽभिव्याप्तौ [1]सीमार्थे धातुयोगजे ।। २३९ ।।

(वि ) अव्यया परे। परे वक्ष्यमाणा शब्दा आलिङ्गसग्रहवर्गान्तम-व्यया । अलिङ्गा इत्यर्थ ।। अत [2]परमव्ययनानार्थवर्गमुपक्रमते—आङीषदर्थे—धातुयोगज इति । वर्तते इति शेष । अत्रोदाहरणानि । ईषदर्थे यथा—'आपाण्डरीभूतमुखच्छवीनाम्' इति (कु स ३ ३३) । अभिव्याप्तौ यथा—आकुमार यश । कुमारा अपि यशो जानन्तीत्यर्थ । सीम्नि यथा—'आसमुद्र-क्षितीशानाम्' (रघु. १ ५) । [3]धातुयोगजे यथा—आदत्ते । आहरति । [4]आक्रामति । आयातीत्यादि ।। २३९ ।।

[1] सीम्न्यर्थे K4, K5 [2] J2, K5 omit °नानार्थ° [3] धातुयोगजार्थे K5, °योगार्थे J2 [4] K5 omits आक्रामति

(विव.) आङीषदर्थे—धातुयोगजे । उद्देशक्रमानुरोधेन पूर्ववर्गान्त एवो-पक्षिप्तानव्ययानाह—आङित्यस्य गणगतत्वेन 'उपदेशेऽजनुनासिक इत्'(१. ३. २) इति ङकारस्येत्संज्ञालोपे सति प्रयोगकाले तस्याभाव एव । ईषदर्थोऽल्पार्थः । यथा—आ उष्णमिति विग्रहे 'नित्य[1] कुगतिप्रादयः' (२. २. १८) इति समासे सति ओष्ण, किंचिदुष्णमित्यर्थः । आलवणम् । [2]'आपाण्डरीभूतमुखच्छवीनाम्' (कु. स. ३. ३३) इति च । अन्येन युक्तो विधिः अभिविधिः[3] । यथा—'आकुमार यशः पाणिनेः' (म. भाष्य. १. ४. ८९), बाला अपि पाणिनेर्यशो जानन्तीत्यर्थः । 'आजन्मशुद्धानाम्' (रघु. १. ५) इति च । सीम्नि मर्यादायाम् ।

यथा—'ओदकान्त[4] प्रिय पान्थमनुव्रजेत्', देशान्तर प्रति गच्छन्त प्रिय सजलजलाशयदर्शनान्तमनुव्रजेदित्यर्थ । 'पञ्चम्यपाङ्परिभि ' (२ ३ १०) इति पञ्चमी धातुयोगजऽर्थ इति अनेकार्थे सत्यपि अनभिव्यक्तार्था एव धातव आङाद्युपसर्गवशादर्थविशेषे वर्तन्ते । अतो धात्वर्थद्योतकत्वेन उपसर्गाणामपि तदर्थत्वमुच्यते । आङित्यस्य ईषदाद्यर्थत्रयाभिधायकत्व, धातुयोगजार्थस्य तु द्योतकत्वमिति विवेक । एवमुत्तरत्रापि यथायथ द्रष्टव्यम् । अत्र धातुयोगज इत्यस्य विवरण शेषकारेण कृतम् । यथा—

'क्रियोद्गमग्रहाधर्षाश्लेषशापाभिकाङ्क्षण ।
अवष्टम्भे कालहृतावुत्कण्ठानिकटत्वयो ॥
स्पर्धावाधनिषेधेषु विनाशे बन्धने वधे ।
स्नाने सस्यासप्रदायदर्शनेषु विमर्शने ॥
विज्ञाने ज्ञापने पारतन्त्र्ये त्यागनियोगयो ।
भूषासभाषणालेख्याभिमुख्याक्रमणेषु च ॥
वृत्त्यावृत्तिप्रापणेषु प्रतिश्रवणविस्तृतौ ।
विस्रम्भाभिविधोद्योग सभ्रमाभ्यवहारयो ॥
स्थान आवरणाह्वान आध्मापूजाश्रमेषु च ।
उक्तिदु खानन्दनेषु सचये चाङ प्रवर्तते ॥'

इति । क्रियाया यथा—आचरति करोतीत्यर्थ । उद्गम ऊर्ध्वगमनम् । यथा—'यावत् प्रतापनिधिराक्रमते न भानु ' इति (रघु ५ ७१) । उदेतीत्यर्थ । ग्रहे स्वीकारे । यथा—'आदत्ते हि रस रवि ' (रघु १ १८) इति । 'मिथ-टामाच्छिनत्ति न ' (कु स २ ४६) । गृह्णातीत्यर्थ । 'आधर्ष आधर्षण-मुपद्रवकरणम् । यथा—आस्कन्दति । आश्लेषे यथा—आलिङ्गति । शापे यथा—आक्रोशति । अभिकाङ्क्षणमिच्छा । यथा—आकाङ्क्षति भिक्षाम् । अवष्टम्भ तदेकशरणत्वम । यथा—'नालम्बते दैष्टिकताम्' इति (शिशु २ ८६) । कालहृति कालयापनम् । यथा—आगमयस्व तावन्माणवकम् । उत्कण्ठायाम् । यथा—आध्यानमुत्कण्ठेति प्रागुक्तम् (१, पृ १३८) । निकटत्वे सामीप्ये । यथा—आसीदति, सनिकृष्टो भवतीत्यर्थ । स्पर्धायाम । यथा—'गतभीराह्वत चेदि-राण्मुरारिम्' (शिशु २० १), शिशुपाल स्पर्धमान सन्नाह्वान कृतवानित्यर्थ ।

आवापो निधानम् । यथा—गर्भमादधाति । [5]बीजमावपति । विनामो वक्रीकरणम । यथा—हस्तमाकुञ्चयति । बन्धने यथा—'आमुञ्चतीवाभरणम्' इति (रघु १३ २१) । वधे यथा—'वायव्य[6] श्वेतमालभेत' (तै स २ १ १ १) इति । स्नाने यथा—आप्लावते इति । सस्था अवयवविशेषो यथा—'आकारसदशप्रज्ञ' इति (रघु १ १५) । छन्दोगा आमनन्तीत्याम्नाय । सप्रदाय इति च गतम् (२, पृ १६८) । दर्शने यथा—आलोकन्त इति । विमर्शो विचारो यथा—आलोचयतीति । विज्ञाने यथा—अर्थोऽयमाभासते, ज्ञानविषयो भवतीत्यर्थ । ज्ञापने यथा—आदिशतीति । पारतन्त्र्ये यथा—तदायत्त , तत्परतन्त्र इत्यर्थ । त्याग प्रारब्धकर्मपरित्याग । यथा—'अनारत तेन पदेषु लम्भिता' इति[7] (किरा १ १५) । नियोगे यथा—आज्ञापयति देव इति । भूषाया यथा—आभरणमिति । सभाषणे यथा—आलपति, भाषन इत्यर्थ । आलेख्ये यथा—आलिखति । आभिमुख्ये यथा—आगच्छति । आक्रमण व्यापनम । यथा—आरोहति धूमो हर्म्यतलम् । आक्रमते नीहार इति । वृत्तौ यथा—वृद्ध्याजीवो वार्धुषिक । आवृत्तिर्निवृत्ति । यथा—[8]आवर्तते वनान्तात् । पुन पुन क्रिया यामभ्यास आवृत्ति । यथा—आवृत्तशास्त्र । प्रापणे यथा—अन्तर्वेदि हर्वोष्या सादयति । आज्यमासादयति[9] । प्रतिश्रवण प्रतिज्ञातम्[10] । यथा—'आश्रुत प्रतिज्ञातम्' इति गतम् (२, पृ १५०) । वेदमपौरुषेयमास्थियत भाट्टा । आश्रृणोति, प्रतिजानीत इत्यर्थ । विस्तृते विस्तारे यथा—आयाम । विस्रम्भो विश्वास । यथा—आश्वस्तमित्रजन इति । अभिनो विधान कार्त्स्न्येन करणमित्यर्थ । यथा—दर्भानालुनाति, समन्ततो लुनातीत्यर्थ । उद्योग यथा—आरभते । सभ्रमस्त्वरा । यथा—आवेग , आग्रह । अभ्यवहारे यथा—आचामति, आस्वादयति । स्थाने यथा—आधार । आवरण तिरोधानकरणम् । यथा—आवृणोति । आह्वाने यथा—आकारयति । आध्मा आध्मान पूरणमित्यर्थ । यथा—आध्मातशङ्ख इति । पूजाया यथा—[11]आराधयति शिवम् । श्रम यथा—आयासयति[12] । उक्तौ यथा—आचष्टे सम्यग् भाषणम् । [13]सामुख्येन भाषण सभाषणम्, उक्तिस्तु भाषणमित्यनयोर्भेद । दु खे यथा—आतङ्क आपन्न । आनन्दे यथा—'आपृच्छस्व प्रियसखममुम्' इति (मेघ १ १२) । सचय सग्रह । यथा—गोमयानाचिनोति । एव प्रयोगानुपलक्ष्योपसर्गद्योत्या अर्था द्रष्टव्या ॥ २३६ ॥

[1] Tj1, Tj2 omit नित्यम [2] आपाण्डुरीभूत Gm1 Gm3 [3] आहीग

दर्येऽभिविधौ' इति विवरणाभिमत पाठ. 4 'ओदकान्त स्निग्धो जनोऽनुगन्तव्य ' इति शाकुन्तले चतुर्थाङ्के 5 B6 adds भूमौ 6 'वायव्य श्वेतमालभेत भूतिकाम ' B6 (शावरभाष्येऽपि दृश्यते १० ७ ६८) 7 Tj2 adds भारवि 8 आववृते Gm1, आवर्तमान वनिता वनान्तात् (रघु २. १९). 9 आनयति Tj2 10 प्रतिज्ञानम् Tj2 11 आधावति B6 12 आयास B6. 13 आभिमुख्येन Gm1

(पा) अव्यया पर। हान्तवर्गादुपरि[1] वक्ष्यमाणा शब्दा अव्यया भवन्ति ॥ आङीषदर्थे—धातुयोगजे। ईषदर्थे—आपिङ्गला गौ । [2]अभिव्याप्तौ—आजन्मब्रह्मचारी। सीमार्थे— [3]ओदकान्त प्रियमनुव्रजत्। धातुयोगजे—[4]आहरति ॥ २३९ ॥

1 °वर्गोपरि A1 2 अभिव्याप्त्यर्थे A1. 3 ओदकात् पान्थमनुव्रजेत् B3, C1, ओदकान्त स्निग्धो जनोऽनुगन्तव्य इति शाकुन्तले चतुर्थाङ्के 4 आहरत्यर्धम C1

**आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात् कोपपीडयोः ।**
**पापकुत्सेषदर्थे कु धिग्निर्भर्त्सननिन्दयोः ॥ २४० ॥**

(वि) आ प्रगृह्य स्मृतौ वाक्य चा कोपे तापपीडयो ।
पापकुत्सेषदथ कु धिङ निर्भर्त्सननिन्दयो ॥ 524 ॥

वाक्येऽपि ।[1] वर्तत इति शेष । स्मृतौ यथा—आ एव किल तत्। वाक्ये यथा—आ एव नु मन्यस ॥ कोप यथा—'आ किमेतत् इति क्रोधात्' (देवीमा. २ ३६)। तापे यथा—आ [2]क्वासि प्रिये। पीडाया यथा—आ कष्ट वर्तते ॥ कु, पापार्थे यथा—त्यजेत् कुजनसगम्। कुत्साया यथा—कुभोजनम्। ईषदर्थे यथा—कोष्णम्, कदुष्णम्, कवोष्णम्[3] ॥ धिक्, निर्भर्त्सन यथा—धिग् जाल्मम्[4]। निन्दाया यथा—'धिगिमा देहभृतामसारताम्' इति (रघु. ८ ५१) ॥ २४० ॥

1 प्रगृह्य आ स्मृतौ वाक्ये च वतते K4, K5 2 क्वापि K6 3 J2, K2 omit कवोष्णम् 4 जालानि K2, जालान् K4

(विय.) आ प्रगृह्यः स्मृतौ वाक्येऽपि। आ इत्ययं निपातः स्मरणे वाक्ये च वर्तते। स्मृतौ यथा—आ एव किल तत् इति। पूर्वोदितादर्थादन्यथात्वद्योतनाय वाक्यान्तरस्यादौ आकारः प्रयुज्यते। यथा—आ एव नु मन्यसे इति। पूर्वं

नैवममंस्थाः, अधुना प्रकारान्तरेण मन्यस इति तस्यार्थः। वाक्ये वाक्यालंकारे इत्यपरे। यथा—आ अद्य स्वादिष्टं भोजनं लब्धम् इति।

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यास्मरणयोरङित्॥'

इति हरदत्तः (पदम. १, पृ. ११३[1])। ततश्च 'निपात एकाजनाङ्' (१. १. १४) इति प्रगृह्यसंज्ञाया 'प्लुतप्रगृह्या अचि' (६. १. १२५) इति प्रकृतिभावः। अमरसिंहग्रन्थेऽपि प्रगृह्यसंज्ञाविधानस्य प्रकृतिभाव एव प्रयोजनमिति ज्ञेयम्॥ आस्तु स्यात् कोपपीडयोः। आः इति विसर्जनीयान्तो [2]निपातः प्रयोक्तुः क्रोधे पीडायां च वर्तते। क्रोधे यथा—'आः किमेतदिति क्रोधादाभाष्य महिषासुरः' इति (देवीमा. २. ३६)। आः कष्टं वर्तते इति पीडायाम्॥ पापकुत्सेषदर्थे कु। पापे यथा—'त्यजेत् कुजनसंगमम्' इति। कुत्साया निन्दायाम्। यथा—कुभोजनम्। ईषदर्थे यथा—कोष्ण, कवोष्णमिति। अत्र 'कवं चोष्णे' (६. ३. १०७) इति कुशब्दस्य कवादेश.॥ धिग् निर्भर्त्सननिन्दयोः। निर्भर्त्सने यथा—धिगिम निष्ठुरालापमिति। निन्दायां यथा—'धिगिमां देहभृतामसारताम्' इति (रघु ८. ५१)॥ २४०॥

[1] कारिकेय महाभाष्ये दृश्यते (१ १ १४) [2] निपातित Gm1

(पा) आ प्रगृह्य स्मृतौ वाक्येऽपि। [1]स्मृत्यर्थे—आ ज्ञातम्। जटायुरेप। वाक्यपूरणे— आ एव मन्यसे। प्रगृह्यत्वात् सन्धिर्न भवति॥ आस्तु स्यात् कोपपीडयो। [2]कोपे—आ पाप। पीडायाम्—आ कष्टमापतितम्॥ पापकुत्सेषदर्थे कु। पापे—कुब्राह्मण। कुत्सायाम्—कुदानम्। ईषदर्थे—कोष्णम्॥ धिग् निर्भर्त्सननिन्दयो॥ २४०॥

[1] स्मृतौ B3, C1 [2] कोपार्थे A1.

चान्वाचयसमाहारेतरेतरसमुच्चये।
स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लङ्घनेऽप्यति॥ २४१॥

(वि) चान्वाचयसमाहारतरेतरसमुच्चये ।
पादपूरणचेदर्थतुल्ययोगावधारणे ॥ 525 ॥
विनियोगेऽपि हत्वर्थे चानुबन्धेऽपि कथ्यते ।

अन्वाचये यथा—भिक्षामट, गां चानय इति । समाहारे यथा—छत्रोपानहम् । इतरेतरयोगे यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्तव्यम् । समुच्चये—वसिष्ठं गौतमं धर्ममगस्त्यं प्रणनाम [1]च । पादपूरणे यथा—' रामो रामश्च रामश्च बुद्धः कल्कीति ते दश '* । चेदर्थे—' त्वं च [3]मां नयसे राजन्नागमिष्यामि सज्जितः ' इति । तुल्ययोगे यथा—त्वं चाहं च सखे गच्छावः । अवधारणे यथा—' वेलामतीता तव चेयमाज्ञा ' इति । विनियोगे यथा—पठ च पच च । हेत्वर्थे यथा—राजा च द्रष्टव्यः । अनुबन्धे यथा—त्वं च गच्छसि कार्यं न सत्स्यति ॥

स्वस्त्याशीःक्षेमयोः पुण्ये मङ्गले प्रतिवन्दने ॥ 526 ॥

आशिषि—' स्वस्त्यस्तु ते '[4] (रघु ५ १७) । क्षेमे यथा—स्वस्ति गच्छति । स्वस्ति पुनरागच्छति । पुण्ये यथा—स्वस्तिमान् स्वर्गमश्नुते । मङ्गले—स्वस्तिवाक्य[5] ततः कुर्यात् । प्रतिवन्दने—राज्ञा नमस्कृता विप्राः स्वस्तीत्येतं प्रयुञ्जते इति ॥

प्रकर्षे लङ्घने व्याधावतिदेशे च पूजने ।
दुर्नये यापने नाशे निबन्धानर्थशङ्कयोः ॥ 527 ॥
अनुबन्धानुज्ञयोः स्यादधिक्षेपापहासयोः ।
आरोपणे चाप्युपधावतिशब्द उदाहृतः ॥ 528 ॥

प्रकर्षे यथा—' पूर्वान् महाभाग तयातिशेषे ' (रघु ५. १४) । लङ्घने—[6]' अतीतकालस्त्वहमभ्युपेतः ' (रघु ५ १४) । व्याधौ—अतिसारेण पीडितः । अतिदेशे—अतिदिशति । पूजने—अतिस्तुतो मया विप्रः । दुर्नये—अतिचरति । यापने—गादपङ्कमतिवाहितातपः [7] । नाशे—' वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ' इति (रघु १३ ७७) । निर्बन्धे—यद्ब्रह्मचारिन् प्राणमत्यप्रक्ष [8] । अनर्थशङ्कायाम्—मा ते स्यादितमङ्गने । अनुबन्धे—अतिगच्छति मा सख्या[9] । अनुज्ञायाम्—अतिसृजति भोजनाय । अधिक्षेपे—[10]स्वाम्यधिक्षिपति प्रजा । अपहासे—स्थानान

देवोऽतिहसति[11] । आरोपणे––अत्यादधाति पात्रेषु धनं कुशलबुद्धय । उपधायाम्[12] ––अनिसधत्ते ।। २४१ ।।

[1] स for च J2, K4 [2] कल्किस्तथैव च J2 [3] मानयसे K2, K3 [4] तव K3 [5] °वाच्यम् J2, K4 [6] व्यतीत° इति मु ग्र (पृ ६३). [7] °वाहितातपा. K6 [8] अत्यप्रक्ष्य K3, K6 [9] सख्या K5 [10] स्वामिन्यधिक्षिपति K5 [11] देवरोऽतिहसति K4 [12] उपधा K6 *Vārāh P (Apte's Dict. p 245).

(विव.) चान्वाचय––समुच्चय । एकस्य प्राधान्ये सति अपरस्य [1]गुणीभावोऽन्वाचयः । यथा––भिक्षामट, गां चानय इति । अत्र भिक्षाटनं कुर्वाणो यदि गां [2]पश्यति तदा तामप्यानयति[3] । नो चेत् भिक्षाटनमेव करोति । न तु गामप्यन्विष्यानयतीति भिक्षाटनस्य प्राधान्यम् । गवानयनस्य गुणभावः चकारेणावगम्यते । इतरेतरशब्देनात्र इतरेतरयोगो लक्ष्यते । स च परस्परापेक्षाणां बहूनां द्वयोर्वा [4]परस्परभेदानुगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति । यथा––देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्तव्यमिति, प्लक्षन्यग्रोधौ सह तिष्ठत इति उद्भूतावयवभेदत्वाद् द्विवचनमपि भवति । प्लक्षन्यग्रोधावित्यत्र साहचर्यवशात् प्लक्षशब्दो [5]न्यग्रोधार्थोऽपि भवति । न्यग्रोधशब्दश्च प्लक्षार्थोऽपि शब्दशक्तिमहिम्ना [6]समावेव समुदायार्थमाहतुः । न पृथग्भूतौ । ततश्च न प्लक्षानयनप्रसङ्गे न्यग्रोधानयनम् । नापि न्यग्रोधानयनप्रसङ्गे प्लक्षानयनम् । नाप्येकेनोक्तत्वात् परस्य प्रयोगानुपपत्तिः । प्लक्षशब्देन यावदर्थोऽभिधीयते तावान् न्यग्रोधशब्देनापीति द्व्यर्थत्वाद् द्विवचनमेव भवति । अतः समुदायान्न बहुवचनमित्यादिप्रपञ्चो महाभाष्यकारकैयटाभ्यां निरूपितोऽनुसंधेयः । परस्परसापेक्षाणामेवावयवभेदतिरोधानेन एकीभूतावस्थतया एकस्मिन् [7]प्रतिसंबन्धिनि संबन्धः समाहारः । यथा––छत्रोपानहम्, मार्दङ्गिकपाणविकम् इत्यादि । अत्र संहतेः प्रधानत्वाद् एकवचनमेव । इतरेतरयोगसमाहाररूपयोरर्थयोः 'चार्थे द्वन्द्वः' (२. २. २९) इति विहितस्य समासस्य वैकल्पितत्वाद् वाक्यमपि भवति । तस्माद् देवदत्तेन यज्ञदत्तेन च कर्तव्यम्, छत्रोपानहोश्च समाहार इत्यपि प्रयोगः । परस्परनिरपेक्षाणामनेकेषामेकस्मिन् संबन्धिसंबन्धः समुच्चयः । यथा––गौरश्वश्च महिषश्च देवदत्तस्येत्यादि । 'शं च मे मयश्च मे प्रियं च मे' इत्यादि (तै. सं. ४. ७. ३.१) । तथा एकस्मिन् द्रव्ये बह्वीनां क्रियाणां समुच्चयः । यथा––

'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं[4] दिवः ।'

इति (शिशु. १.५१) । अत्र य इति निर्दिष्टकर्तृभूतरावणरूपे द्रव्ये पुर्यवस्कन्दन-नन्दनलवनरत्नमोषणाप्सरोहरणरूपाणां क्रियाणां समुच्चयः । अत्र चशब्दप्रयोगाभावेऽपि समुच्चयस्य गम्यमानत्वम् । अत एव 'समुच्चयेऽन्यतरस्याम्' (३.४.३) इति भूतलकारापवादेन लोट्प्रत्ययः । तथा गुणयोरपि क्वचित् समुच्चयः । यथा—पटान्तो रक्तः शुक्लश्चेति । शेषे—

'चण् चेदर्थे णकारेत्स्यादवधारणभेदयोः ।
पादस्य पूरणे हेतौ तुल्यद्‌विनियोगयोः ॥'

इति । यदा चेति निपातस्य णकार इत्संज्ञको भवति, तदा चेदर्थे वर्तत इत्यर्थः । तदुक्तम्—चण् चेदर्थ इति । यथा—त्वं च गच्छसि कार्यं नः सेत्स्यति इति; त्वं चेत् गच्छसि कार्यसिद्धिर्भविष्यतीत्यर्थः । णकारानुबन्धो निपातैर्यद्यदिह . . . चेत् चण् कच्चिद्यत्र युक्तमिति निघातप्रतिषेधार्थः । अवधारणे यथा—'अतीतः पन्थानं तव च महिमा वाङ्मनसयोः' इति (शिवमहिम्न. २) । भेदविशेषे यथा—स खलु त्वामनुवर्तते त्वं च निरपेक्षः इति । त्वं पुनर्निरपेक्ष इत्यर्थः । पादपूरणे यथा—'भीमः पार्थस्तथैव च' इति । हेतौ यथा—'न चान्यतस्तस्य शरीररक्षा' इति (रघु. २.४) । यस्मात् तस्य दिलीपस्यान्यतः शरीररक्षणं नापेक्षितम्, अतोऽनुयायिवर्गो निविद्ध इत्यर्थः । तुल्ययोगे यथा—त्वं चाहं च गच्छावः । विनियोगे यथा—पठ च पच च ॥ स्वस्त्याशीःक्षेमपुण्यादौ । अविद्यमानार्थस्य प्रार्थनमाशीः । यथा—'स्वस्त्यस्तु ते' (रघु. ५.१७) । लब्धपरिपालनं क्षेमः । यथा—स्वस्त्येव गच्छति स्वस्ति पुनरागच्छति । 'भूतानुकम्पा तव चेदियं गौरेका भवेत् स्वस्तिमती त्वदन्ते' (रघु. २.४८) इति । पुण्ये यथा—

'सौवस्तिकानि कर्माणि सर्वदैव करोत्ययम् ।
. . . . . . . स्वस्तिमान् स्वर्गमश्नुते ॥'

इति । आदिशब्दाद् मङ्गले यथा—स्वस्ति श्रीमदित्यादिकं संदेशपत्रिकासु । 'प्रास्थानिकं स्वस्त्ययनं प्रयुज्य' इति (रघु. २.७०) ॥ प्रकर्षे लङ्घनेऽप्यति । प्रकर्षे यथा—अतिशेते । लङ्घने यथा—अतिक्रामति । शेषे—

'अतिः पूजातिक्रमणातिदेशव्याधियापने ।
आरोपणे च निर्बन्धे विनाशानुज्ञयोरपि ॥'

इति । पूजायां यथा—[9]स्वती पूजायाम् ('स्वतिभ्यामेव' दा. ५. ४. ६६) । अतिक्रमणे यथा—'अतिरतिक्रमणे च' (१. ४. ९५) । एकत्रोपदिष्टानां धर्माणामन्यत्र सद्भावकथनमतिदेशः । यथा—[10]'प्रकृतिधर्माणां विकृतावतिदेशः' इति । व्याधौ यथा—अतिसारेण पीडितः इति । यापने यथा—कालमतिवाहयति । आरोपणे यथा—उद्घने काष्ठमत्यादधाति । निर्बन्धने यथा—मा स्म गुरूनतिपृच्छ, निर्बन्धेन मा प्राक्षीरित्यर्थः । विनाशे यथा—अतीतो देवदत्तः । अनुज्ञायां यथा—प्रत्यातिसृज होष्यामि अतिसृष्ट उद्धरे जुहुयात् इति । अपिशब्दाद् भये यथा—अत्याहितम् । कपटे यथा—अतिसंधत्ते ॥ २४१ ॥

[1] गुणभाव Gm1, Gm3. [2] पश्यसि Tj2 [3] आनयेति Tj2 [4] परस्परभेद° Gm1. [5] न्यग्रोधोऽपि भवति Tj2 [6] समुदितावेव समुदायमाहतु Gm1, Tj2 [7] प्रतिबन्धिनि Tj2 [8] अहर्निश Tj2, Tv [9] 'अतिरतिक्रमणे' इत्यत्र अतिशब्द अतिक्रमणे, चकारात् पूजाया च इति काशिका (१, पृ ८१) 'पूजाया स्वतिग्रहण कर्तव्यम्' इति वार्तिक काशिकायाम् (२, पृ ६४) [10] 'अतिदेशो नाम ये परत्र विहिता धर्मा तानतीत्यान्यत्र तेषा देश ' शाबरभाष्यम् (७ १ १२).

(११.) चान्वाचय—समुच्चये । अन्वाचये—भिक्षामट गा चानय । अन्वाचयो यत्रैक. प्राधान्येनाभिधीयते, अपरो गुणभावेनेति । अत्र भिक्षाटन प्रधानम्, गवानयनमुपसर्जनम् । समाहारे—गोबलीवर्दौ[1] । इतरेतरे—प्लक्षन्यग्रोधौ । आविर्भूतावयवभेद. इतरेतर,[2] तिरोहितावयवभेद. समाहार इति तद्भेदः । समुच्चये—गावश्च वत्साश्च[3] गच्छन्ति ॥ स्वस्त्याशी· क्षेमपुण्यादौ । आदिशब्दाद् मङ्गलेऽपि स्यात् । 'स्वस्ति [4]मङ्गलनिष्पापक्षेमेष्वाशीर्वचस्यपि' इति वैजयन्ती (पृ २८६, श्लो. २६) ॥ प्रकर्षे लङ्घनेऽप्यति । अपिशब्दात् प्रशसायामपि स्यात् । 'अति. प्रकर्षप्रशसालङ्घनेषु प्रयुज्यते ' इति जयकोश [5] ॥ २४१ ॥

[1] °बलीवर्दम् B3 [2] C1 adds °योग. [3] च गावश्च गच्छन्ति A1 [4] °निष्पाप° B3. [5] A1 omits °योग.

**स्वित् प्रश्ने च वितर्के च तु स्याद् भेदे ऽवधारणे ।**
**सकृत् सहैकवारे चाप्याराद् दूरसमीपयोः ॥ २४२ ॥**

(वि) वितर्कप्रश्नयोश्चैव स्विदव्ययमुदाहृतम् ।

वितर्के यथा—'अध स्विदासीदुपरि स्विदासीत्' (ऋग्वद १० १२९ ५) । प्रश्ने—'क[1] स्विदकाकी चरति' (तै स ७ ४ १८ ३) ॥

भेदावधारणार्चासु तु हेतौ पादपूरणे ॥ 529 ॥

[2]भेदविशेषे यथा—पूज्या गौ, कपिला तु पूज्यतरा । अवधारणे—वेदास्तु प्रमाणम् । अर्चायाम्—विद्वास्तु द्विजमुख्यानाम् । हेतौ—पात्र विप्र श्रोत्रियस्तु । पादपूरणे—ततस्त रामचन्द्रस्तु ॥

सकृत् सहैकवारे चाप्याराद् दूरसमीपयो ।

सहार्थे—देवदत्तयज्ञदत्तौ सकृद्भुञ्जाते । एकवारे—[3] 'सकृदशो निपतति' (म स्म ९ ४७) ॥ आरात् । दूरे यथा—आरादगता[4] दृष्टिपथ व्यतीता । समीपे यथा—'तमर्च्यमारादभिवर्तमानम्' (रघु २ १०) ॥ २४२ ॥

[1] सरस्वतीकण्ठाभरणे (पृ ३५) इति (*Ak* POS 43, p 333) [2] $K_5$ omits 3 lines [3] सकृत्युक्तम् $K_4$, $K_5$ [4] °गत व्यतीत $J_2$, आराद्य $K_5$

(विव) स्वित् प्रश्ने च वितर्के च । प्रश्न यथा—'क स्विदेकाकी चरति' (तै स ७ ४ १८ ३) । वितर्के यथा—'अध स्विदासीदुपरि स्विदासीत्' (ऋग्वेद १० १२९ ५) इति ॥ तु स्याद् भेदेऽवधारणे । भेदे[1] यथा—'सेवया तु फलो युगे' इति । अवधारणे यथा—'तत्तु समन्वयात्' (ब्र सू १ १ ४); 'वेदास्तु प्रमाणम्' इति च । शेषे—'त्वर्चाहेत्वो पादपूर्तौ' इति । अर्चा पूजा । यथा—'वेदाढ्यस्तु द्विजातीनाम्' इति । हेतौ यथा—'दिशस्तु जलदैश्छन्ना भविश्रो वृष्टिसहति' इति । यस्माद् मेघैर्दिशश्छन्ना अतो वृष्टिर्भविष्यतीत्यर्थ । पादपूरणे यथा—'ततस्तु धर्मराज तम्' इति ॥ सकृत सहैकवारे चापि । सहार्थे यथा—'दम्पती सकृद्भुञ्जाते । सहभुञ्जाते इत्यर्थ । एकवारे यथा—'सकृत् प्रदीयते कन्या' (म स्मृ ९ ४७) । अपिशब्दात् सर्वदेत्यर्थे यथा—

[3]सकृत्तरुणा देवा, सर्वदा युवान इत्यर्थः। आराद् दूरसमीपयो.। दूरे यथा—'आरात्तेऽग्निरस्त्वारात्[4] परशुरस्तु ते' इति (आपस्तम्बमन्त्रपाठ· १. १३. ७)। समीपे यथा—'आरादागतमृत्यव' इति ॥ २४२ ॥

[1] Tv adds विशेषे [2] दम्पती असकृद्भुङ्क्ते B6 [3] 'सकृद्युवानो गीर्वाणा' इति स्वामी (पृ ३३२) [4] आरात्ते Tj2

(पा) स्वित प्रश्ने—अवधारणे [1]'हेतुव्यावृत्तिपूजासु तथा पादस्य पूरणे' इति क्वचित् पाठ ॥ सकृत् सहैकवारे चापि। [2]सदैकवारे इति क्वचित् पाठ। आरादद्दूरसमीपयो ॥ २४२ ॥

[1] A1 omits the line [2] B3 C1 omit the sentence

**प्रतीच्या चरमे पश्चादुताप्यर्थविकल्पयोः।**
**पुनःसदार्थयोः शश्वत् साक्षात् प्रत्यक्षतुल्ययोः॥ २४३ ॥**

(वि) प्रतीच्या चरमार्थे च पश्चादव्ययमुच्यते ॥ 530 ॥

प्रतीच्या [1]यथा—पश्चादस्त गतो रवि। चरमार्थे यथा—'पश्चिमे वयसि नैमिश[2] वशी' इति (रघु १९ १) ॥

अप्यर्थपादपूर्त्योश्च समुच्चयविकल्पयो।
पक्षान्तरप्रश्नयोरप्युताव्ययमुदाहृतम् ॥ 531 ॥

अप्यर्थे[3] यथा—उत भिन्द्याच्छिरसा शिलोच्चयम्। पादपूर्तौ—अब्रवीदुत रावणम्। समुच्चये—सुग्रीवो[4] बलवानुत। विकल्पे—[5]'जायामदोषामुत सत्यजामि' (रघु १४. ३४)। पक्षान्तरे—'अजीजनत् सिन्धुरत्नावमन्थ्य'[6]। प्रश्न—'उत येन बिभर्षि तत्' (कु स ६ २३) ॥

*सहार्थे पुनरर्थे च सदार्थे शश्वदुच्यते।*

सहार्थे यथा—दम्पती शश्वद् भुञ्जाते। पुनरर्थे—'शश्वत् पश्यत मन्दवायिलहरी विघोलरण टोलनणम्'। सदार्थे—'शश्वद् दाता गुरु वसेत्' इति ॥

*प्रत्यक्षतुल्ययो साक्षादव्यय समुदाहृतम् ॥ 532 ॥*

प्रत्यक्षे—'श्रीवत्सलक्ष्मा पुरुषश्च साक्षात्' इति (कु स. ७ ४३) । [7]तुल्ये—'स्कन्देन साक्षादिव देवसेनाम्' इति (रघु. ७. १) ॥ २४३ ॥

[1] K5 adds पाश्चात्यभागमिह. [2] नैमिषमिति मु. ग्र. (पृ. ३३७) [3] K5 adds वाढार्थे. [4] सुग्रीव J2; सुरे वा K3. [5] जयाम दोपानुत K5; सययामि K6. [6] उतामृत द्यौ K4 [7] तुल्यार्थे J2.

(विव.) प्रतीच्यां चरमे पश्चात्। प्रतीच्यां यथा—पश्चादस्तं गतो रविः। चरमे यथा—श्रोत्रियेभ्योऽतिथिभ्यश्च पूर्वं दीयतां पश्चादितरेभ्यः इति[1] ॥ उताप्यर्थविकल्पयोः । अप्यर्थे समुच्चये यथा—'नमस्तेऽस्तु धन्वने बाहुभ्यामुत ते नमः' (तै. सं. ४. ५. १. १) । विकल्पे यथा—'पारिव्राज्यमुत ग्राह्यमुत राज्यं नृणां सुखम्' इति । शेषे—'वितर्केऽपि भवेदुत' इति । वितर्के यथा—स्थाणुरुतायं पुरुष इति । [2]पादपूरणे यथा—'अब्रवीदुत राघवम्' इति । प्रश्ने यथा—[3]उत पठसि ॥ पुनः[4]सदार्थयोः शश्वत् । पुनरर्थे यथा—शश्वदुदकं पिबति । सदाशब्दस्यार्थे यथा—शाश्वतः, सदातन इत्यर्थः । शेषे—'स्यात् शश्वत् सहसंतते[5]' इति । सहार्थे यथा—दम्पती शश्वद् भुञ्जाते । सहभुञ्जाते इत्यर्थः । संततं विच्छेदरहितम् । यथा—'वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्[6]' इति रघुवंशे (१. ८८)[7] ॥ साक्षात् प्रत्यक्षतुल्ययोः । प्रत्यक्षे यथा—'साक्षाद्[8] दृष्टोऽसि' इति (कु. सं ६. २२) । तुल्ये यथा—साक्षाद् महाराजोऽयम्; महाराजतुल्योऽयमित्यर्थः ॥ २४३ ॥

[1] 'पश्चात्' (५ ३ ३२) इत्यनेनावरस्य सप्तमीपञ्चमीप्रथमान्तस्य निपातित इति भा दी (पृ. ५०८), अपरस्य पश्चभाव आतिश्च प्रत्यय इति काशिका (२ पृ ६३) [2] पादस्य B6 [3] ऊयसे स्म । 'उङ शब्दे' । वन इनि भा दी (पृ ५०८) [4] °सहार्थयो [5] °सगते B5, B6 [6] आत्मान इनि पाठ —स्वामी (पृ ३३२), भा दी (पृ ५०८) गमनेऽनु गाम् TJ2 [7] शशति । शश प्लुतगतौ' । बाहुलकादत [शश्वत्] इति भा दी (पृ ५०८) [8] सहाक्षेण साक्ष । तमतति । क्विप् (भा दी पृ ५०८)

(पा) प्रतीच्या चरमे पश्चात् । अनन्तरार्थे च स्यात् । 'चरमेऽनन्तरे पश्चात्' इति गोपालित[1] ॥ उताप्यर्थविकल्पयो । [2]अप्यर्थ । प्रश्न । 'उत प्रश्ने वितर्के स्यादुताप्यर्थविकल्पयो' इति विश्व (पृ १८७, श्लो १७) ॥ पुन-[3]सदार्थयोः—प्रत्यक्षतुल्ययो ॥ २४३ ॥

[1] बोपालित (?) [2] B3 omits [3] सहार्थयो B3, C1

**खेदानुकम्पासंतोषविस्मयामन्त्रणे बत ।**
**हन्त हर्षेऽनुकम्पाया वाक्यारम्भविषादयोः ।। २४४ ।।**

(वि) खेदानुकम्पासतोषविस्मयामन्त्रण बत ।

खेदे यथा—'त्यजत [1]मानमल बत विग्रहै' इति (रघु. ९ ४७) । अनुकम्पाया यथा—'मा रोदीर्बत पुत्र त्व मोदकान्[2] प्रददामि त' इति । सतोषे यथा—'बत [3]मुक्तास्मि किल्बिषात्' इति । विस्मये यथा—'अहो बतासि स्पृहणीयवीर्य' इति (कु स ३ २०) । आमन्त्रण यथा—'बत पुत्र [4]सता सङ्ग कुरु नित्यमतन्द्रित' इति ।।

आमोदे च विषादे च [5]वाक्यारम्भानुकम्पयो ।। 533 ।।
दाननिश्चययोश्चैव हन्ताव्ययमुदाहृतम ।

आमोदे यथा—'हन्त जीविता स्म' इति (स कण्ठा पृ ३२) । विषादे यथा—'हन्त जातमजातारे प्रथमेन त्वयारिणा' इति (शिशु २ १०२) । वाक्यारम्भे यथा—'हन्त ते कथयिष्यामि' इति (भ गी १०. १९) । अनुकम्पाया यथा—'मा रोदीर्हन्त पुत्रक' इति । दाने यथा—'इद [6]मनुष्येभ्यो हन्त' इति (स कण्ठा पृ ३२) । निश्चये यथा—'हन्त भोक्ष्याव' इति ।। २४४ ।।

[1] मानबल K3 [2] दास्यामि तव मोदकान् K2, K4 [3] मुक्ता स्म J2, K2
[4] सदा K6 [5] वाच्यारम्भ° K1 [6] मानुषेभ्य K5

(विव) खेदानुकम्पा—आमन्त्रणे बत । खेदे यथा—'बत कष्टा दशा गतोऽसि' इति । अनुकम्पाया यथा—'बत बुभुक्षितासि' इति । सतोषे यथा—'बत दृष्टा प्रिया' इति । विस्मये यथा—'बत बाल[1] प्रगल्भसे' इति । आमन्त्रण सबोधनम् । यथा—'बत' वितरत तोय तोयवाहा हिमान्तम्' इति । हे मेघा सेतोरारभ्य हिमाचलावधि तोय मुञ्चत इत्यर्थ ।। हन्त हर्षे—विषादयो । हर्षे यथा—हन्त लब्धजीवना. स्म इति । अनुकम्पाया यथा—मा रोदीर्हन्त पुत्रक इति । वाक्यारम्भे यथा—'हन्त ते कथयिष्यामि' इति (भ. गी १० १९) ।

विषादे यथा—हन्त वृथा यत्नः कृतः इति । [3]हन्तेति निपातो दानेऽपि । यथा—भूरिय हन्तकार इति । मनुष्येभ्यो दीयमानमन्न हन्तकार इत्यर्थः ।। २४४ ।।

[1] वाल प्रगल्भते B6.　[2] वयते स्म । 'वय गतौ' । 'गत्यर्था—'इति क्त । नेट् । वन्यते स्म । 'वनु याचने' । क्त इति भा. दी (पृ. ५०६).　[3] हन्ति । बाहुलकात्त इति भा दी (पृ ५०६).

(पा )　खेदानुकम्पा—वत । हन्त— विषादयो ।। २४४ ।।

**प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ।**
**इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु ।। २४५ ।।**

(वि )　वीप्सायां च प्रतिनिधौ लक्षणप्रतिदानयो. ।। 534 ।।
इत्थभूतस्य चाख्याने प्रति भागे च कथ्यते ।

वीप्सायां यथा—वृक्ष वृक्ष प्रति [1]सिञ्चति (काशिका १, पृ ८०) । प्रतिनिधौ यथा—पुत्रो जनकत प्रति इति[2] । लक्षणे यथा—' वृक्ष प्रति विद्योतते विद्युत् ' इति (काशिका १ ४ ९०) । प्रतिदाने यथा—चणकानस्मै गोधूमेभ्य प्रति यच्छति इति । इत्थभूताख्याने यथा—साधु पुत्रो देवदत्त प्रति । भागे यथा—[3]यद्दत्त मा प्रति स्यादिति ।।

इति हतुप्रकरणप्रकर्षादिसमाप्तिषु[4] ।। 535 ।।
एवमर्थे वक्ष्यमाणविचारे नियमे तथा ।

हेतौ यथा—' सहसोद्वेगमिय व्रजदिति ' इति (रघु ८ ७) । [5]प्रकरणे यथा—'इति शत्रुपु चेन्द्रियेपु च ' इति (रघु ८ २३) । प्रकर्षे यथा—इति पाणिनि-शब्द इति[6] । समाप्तौ यथा—इति द्वितीयवर्ग इति[7] । एवमर्थे यथा—' इति श्रुवन्त तमुवाच स व्रती ' इति (शिशु १ ३१) । वक्ष्यमाणविचारे यथा—'स्तुतिरिति जगदे हरे सूनुना' (किरा १८. २१) इति । नियमे यथा—'आत्मोदय परज्यानिर्द्वय नीतिरितीयती ' इति (शिशु २ ३०) ।। ।। २४५ ।।

[1] प्रतिवृक्ष K5　[2] अभिमन्युरर्जुनत प्रति इति काशिका (१, पृ ८०)　[3] यदत्र K5, K6　[4] प्रकारादि° K3, K6　[5] प्रकारे K6　[6] पाणिनिशब्द प्रकर्षात् प्रसिद्ध इत्यर्थ इत्यपि स्वामी (पृ ३३३)　[7] अ अ इति ' (८ ४ ६८) इति स्वामिदत्तमुदाहरणम्

(विव ) प्रति प्रतिनिधौ—प्रयोगत । मुख्यसदृश प्रतिनिधि । यथा—'अभिमन्युरर्जुनत प्रति' (काशिका १ ४ ९२) । अभिमन्युरर्जुनसदृश इत्यर्थ । मुख्यसदृशतया प्रतिनिधीयत इति प्रतिनिधिशब्दस्यापि प्रतिशब्दसामर्थ्यलभ्यम् । सामर्थ्यमेव प्रवृत्तिनिमित्तमत्र । अत्र प्रतिनिधिशब्दग्रहणम् 'एकसूत्रोपात्तस्य प्रतिदानस्याप्युपलक्षणम । तथा च पाणिनिसूत्रम्—'प्रतिनिधिप्रतिदाने च यस्मात्' (२ ३ ११) इति । प्रतिदान यथा—'माषानस्मै तिलेभ्य प्रति यच्छति' इति (काशिका १, पृ ८०) । विनिमयसप्रतिपत्त्या तिलान् गृहीत्वा माषान् ददातीत्यर्थ । नानाभूतानामर्थाना क्रियागुणाभ्या युगपद् व्याप्तुमिच्छा वीप्सा व्याप्तिरित्यर्थ । यथा—वृक्ष वृक्ष प्रति सिञ्चति (काशिका १, पृ ८०) । द्विर्वचनमत्र प्रतिशब्दावयववीप्साभिव्यक्तचर्थम् । लक्षण चिह्नम् । ज्ञापकमिति यावत् । यथा—वृक्ष प्रति विद्योतते विद्युत् (काशिका १ ४ ९०) । आदि-शब्देन 'लक्षणेत्थभूताख्यानभागवीप्सासु प्रतिपर्यनव' (१ ४ ९०) इति सूत्रो-पात्तयो इत्थभूताख्यानभागयोर्ग्रहणम् । कचित् प्रकार प्राप्त इत्थभूत । तस्या ख्याने यथा—'साधु देवदत्तो मातर प्रति' इति (काशिका १, पृ ८०)। भागे यथा—यदत्र मा प्रति स्यात् स भागो दीयताम् इति ।'प्रतिनिधिप्रतिदाने च यस्मात्' (२ ३ ११), 'लक्षणेत्थभूताख्यानभागवीप्सासु प्रतिपर्यनय' (१ ४ ९०) इति सूत्राभ्या प्रतिशब्द पूर्वोक्ते प्रतिनिध्याद्यर्थषट्के कर्मप्रवचनीयसज्ञो भवति । 'प्रयोगत ' इत्यस्यायमर्थ । न केवल सूत्रद्वयानुसारेणोक्ता एत[3] एव प्रतिशब्द-स्यार्था, कि तु प्रयोगतो लोकप्रयोगानुसारेण अन्येऽप्यर्था, लक्षणादाविति आदि-शब्देनैव सगृहीता इति । ते च शेषकारेण केचित् दर्शिता —

'परिज्ञाने पदप्राप्तौ कालहृत्या निवारणे ।
व्यलीकाविष्कृतौ तुष्टौ सेवाया निष्क्रयेऽपि च ॥
प्रोत्साहे चायिनाभावे विघ्नाङ्गीकारयोरपि ।
व्यावर्तने विनिमये पुनरावर्तनेऽपि च ॥
वपरीत्ये विनिद्रत्वेऽपेक्षाप्रेक्षकयोरपि ।
सक्षेपस्पर्धमादृश्ये स्वीकाराभ्यवहारयो ॥
उत्तरस्तोकयत्नेषु चोपसर्ग प्रति स्मृत ।'

इति । परिज्ञानादिष्वर्थेषु कर्मप्रवचनीयसज्ञाया अभावे सति प्रतिशब्द उपसर्ग सज्ञको भवतीत्यर्थ । परिज्ञाने यथा—प्रतिदीयत, प्रतिपद्यते । पदप्राप्तौ यथा—

प्रतितिष्ठति। कालहरणे यथा—प्रतीक्षते, प्रतिपालयति। निवारणे यथा—प्रतिषेधति। व्यलीकाविष्कृतौ यथा—प्रतिभिनत्ति, प्रत्युपलभते। तुष्टौ यथा—प्रतिनन्दति, प्रतीतः। सेवायां यथा—प्रतिश्रयते। निष्क्रये यथा—प्रत्युपकुरुते, प्रतियातयति, प्रतिमुञ्चति। प्रोत्साहे यथा—होत्रे[4] प्रतिगृणाति (सि. कौ. १.४.४१)। अविनाभावे यथा—धूमोऽग्निना प्रतिबद्धः, व्याप्त इत्यर्थः। विघ्ने यथा—प्रतिबध्नाति। अङ्गीकारे यथा—प्रतीच्छति, प्रतिशृणोति। व्यावर्तने यथा—प्रत्यावर्तते, प्रतिगच्छति। विनिमये यथा—प्रतिददाति, प्रतिलभते। स्वत्वनिवृत्तिपरस्वत्वापत्तिपर्यन्तं प्रतिदानं विनिमयार्थः। व्यत्ययमात्रमिति प्रतिदानविनिमययोर्भेदः। पुनरावर्तने यथा—प्रत्यारभते, प्रत्युज्जीवति। वैपरीत्ये यथा—प्रत्यवतिष्ठते। विनिद्रत्वे यथा—प्रतिबुध्यते निशात्यये। [5]अपेक्षायां यथा—प्रतिजागरः[6]। प्रक्षेपे यथा—प्रतिवापः। संक्षेपे यथा—प्रत्याहरणम्। स्पर्धे यथा—प्रतिगर्जति। सादृश्ये यथा—प्रतिमानं, प्रतिबिम्बम्। स्वीकारे यथा—प्रतिगृह्णाति। अभ्यवहारे यथा—प्रत्यवस्यति। उत्तरे यथा—प्रतिब्रूते। स्तोकेऽल्पे यथा—सूपप्रति, शाकप्रति (काशिका १, पृ. ८६)। 'सुप्प्रतिना मात्रार्थे' (२.१.९) इति समासः। यत्ने यथा—भोक्तुं प्रतियतते। एवमभियुक्तप्रयोगाननिष्य प्रतिशब्दस्यार्थान्तराण्युन्नेयानि[7]॥

इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु। हेतौ यथा—चोर इति पलायते। प्रकरणं प्रकारः। यथा—गौरश्वः पुरुषो हस्तीति जातिः (म. भाष्य. १. १. १)। गवादिप्रकारा जातिरित्यर्थः। प्रकर्षे यथा—इति बोधायनोऽब्रवीत् इति। बोधायनो धर्मज्ञानप्रकर्षवान्, अतः तदुक्तमवश्यानुष्ठेयमिति तस्य तात्पर्यम्। आद्यर्थे यथा—'ज्वलितिकसन्तेभ्यो णः'[8] (३.१.१४०)। हेलालोलेत्यमी भावा इति च। समाप्तौ यथा—इति श्रीमद्रामायणे बालकाण्डे प्रथमः सर्गः। शेषे—

'[9]इतिरुक्तार्थनिर्देशे मत्येवंनियमेषु च।
वक्ष्यमाणपरामर्शे विवक्षानियमेषु च।'

इति। पूर्वोक्तवाक्यार्थस्य च निर्देशे कर्मत्वेन निर्दिश्यमानत्वे इत्यर्थः। अत्र वाक्यपरामर्शे, यथा—'आश्रावयेति चतुरक्षरमस्तु। श्रौषडिति चतुरक्षरम् (तै. सं. १.६.११.१)' इति। वाक्यार्थपरामर्शे यथा—'गतोऽस्तमर्क इति' (भामह. २.८७); सूर्यास्तकथनस्य संध्याकालो जात इत्यर्थः। मतौ बुद्धिविशेषे यथा—

इत्यापिशलिः; आपिशलेर्मतमित्यर्थ. ('वा सुप्यापिशलेः' ६. १. ९२) । एवमर्थे यथा—'इत्युक्तवन्तं व्रज साधयेति प्रमाणयन् वाक्यमजातशत्रोः' इति (किरा. ३. २४) । नियमो नाम योगान्ययोगयोर्व्यवच्छेदः । यथा—'सामान्यं द्विविधम्, परमपरं चेति' (तर्कसं. पृ. ७) । 'आत्मोदयः परज्यानिर्द्वयं नीतिरितीयती' (शिशु. २. ३०) इति । वक्ष्यमाणपरामर्शे यथा—'रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच' इति (रघु. १३. १)। विवक्षानियमे यथा—'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१. १. ६६) । 'तस्मादित्युत्तरस्य' (१. १. ६७) । 'तदस्यास्त्यस्मिन्निति मतुप्' (५. २. ९४) इति ॥ २४५ ॥

[1] एतत्सूत्र° Tv [2] व्याप्तिर्वीप्सा B6, Tj2 [3] अत एव Tv. [4] होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयति इति कौमुद्यां दृश्यते; होतुः प्रतिगृह्णाति B6 [5] अवेक्षायाम् Tv [6] प्रतिज्ञादर Tv [7] प्राति । 'प्रा पूरणे' । प्रयते वा । 'प्रथ प्रख्याने' । बाहुलकाडुति इति भा दी (पृ ५०६) [8] इतिशब्द आद्यर्थ इति काशिका (१, पृ १०२) [9] एति । अयति वा । क्तिच् [इति] इति भा दी (पृ ५०६).

(घ) प्रति प्रतिनिधौ—प्रयोगत । प्रतिनिधौ—प्रद्युम्नो [1]वासुदेवात् प्रति । 'प्रति[2] प्रतिनिधिप्रतिदानयोः' इति [3]पाणिनीयम् (१ ४. ९२) । प्रतिदानेऽपि स्यात् । 'माषानस्मै तिलेभ्यः प्रति यच्छति' (काशिका १, पृ ८०) । 'लक्षणेनाभिप्रती आभिमुख्ये' (२ १ १४) इति आभिमुख्यार्थेऽपि स्यात् । आचार्यं प्रति कृताञ्जलिस्तिष्ठेत् । वीप्सायाम्—वृक्षं वृक्षं प्रति सिञ्चति (काशिका १, पृ ८०) । लक्षणादौ—वृक्षं प्रति विद्योतते विद्युत् (काशिका (१ ४ ९०) । साधुर्देवदत्तो मातरं प्रति । यदत्र [4]मां प्रति स्यात् (काशिका १, पृ ८०) । 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' (१. ४. ९०) इति सूत्रात् पर्यनुशब्दावपि स्याताम् । 'अभिरभागे' (१ ४. ९१) इति [5]भागं विना अभिशब्दश्च स्यात् ॥ इति हेतु—समाप्तिषु । हेतौ—हन्तीति पलायते । प्रकरणे—इति वक्ष्ये [illegible] । प्रकरणं प्रक्रम.[6] प्रस्ताव इति पर्यायाः । प्रकारे—[illegible], [illegible] इति (म भाष्य. १ १ १.) । एवंप्रकार इत्यर्थः । 'प्रकारादिसमाप्तिषु' इति पाठे—इति पाणिनि. । पाणिनेः [illegible] । इति [illegible] । प्रकारा इत्यर्थः । आद्यर्थे—[illegible] इत्यादि [illegible] । समाप्तौ—'[illegible]' (१, पृ १८२) ॥ २४७ ॥

[1] कृष्णात् B3, C1　[2] प्रति A1　[3] A1 omits　[4] मातर A1　[5] B3, C1 add सूत्रात्, A1 adds वृक्षमभि विद्योतते इत्यादि　[6] B3 omits प्र　[7] A1 adds नामलिङ्गानुशासने (१ १२ ४५).

**प्राच्यां पुरस्तात् प्रथमे पुरार्थेऽग्रत इत्यपि ।**
**यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ।। २४६ ।।**

(वि) प्राच्या पुरस्तात् प्रथमे [1]पुरार्थेऽग्रत इत्यपि ।। 536 ।।

प्राच्याम् यथा—'पौरस्त्यानेवमाक्रामस्तास्ताञ्जनपदान् [2]जयी' इति (रघु ४ ३४)। प्रथमे यथा—'पुरस्तात त्रियते कर्म पश्चात् सिद्धचति तत्फलम्' इति। पुरार्थे यथा—'त्वया पुरस्तादुपयाचितो य' (रघु १३. ५३) इति। अग्रतोऽर्थे —'नश्यत् पुरस्तादनुपेक्षणीयम' इति (रघु २ ४४) ।।

यावत्तावच्च साकल्ये ऽप्यवधारणमानयो ।
भविष्यदर्थे सातत्येऽप्यवधावपि कथ्यते ।। 537 ।।

साकल्ये यथा—'यावत्कृत तावदेव फल [3]प्राप्नोति मानव' इति। अवधारणे यथा—'यावदमत्र[4] ब्राह्मणानामन्त्रयस्व' इति। माने यथा—'सप्ताश्वत्यस्य पत्राणि[5] तावत्सूत्रेण वेष्टयेत' (या स्मृ २ ७ १०३) इति। भविष्यदर्थे 'यावद् भवत्याहितमायकस्य' (कु स ३ ४) इति। सातत्य यथा—'यावज्जीवमतन्द्रित' इति। अवधौ यथा— 'यावत कुण्डिनमच्युत[6]' इति ।। २४६ ।।

[1] पुरोऽर्थे K5　[2] K5 omits latter half　[3] आप्नोति K3, K4 [4] तावन K5, यावन्त्यमत्राणि सभवन्ति पञ्च षड् वा तावत आमन्त्रयस्व (काशिका २. १ ८)　[5] पर्णानि J2, K4　[6] अच्युन K4

(विव.) प्राच्यां पुरस्तात्—अग्रत इत्यपि। प्राच्यादिष्वर्थेषु पुरस्ताच्छब्दो वर्तते। तथा च वोपालितः[1]—'प्राच्या पुरः [2]पुरस्तादग्रप्रथमव्यतीतेषु'[3] इति ।। यावत्तावच्च[1]—मानेऽवधारणे। साकल्यं सामस्त्यम्। यथा—यावत्कर्तव्य तावत्कृतम्। साकल्येन कृतमित्यर्थः। अवधि मर्यादा। यथा—'यावत् सस्यक्षेत्रं तावत् कण्टकीवृक्षैः परिवृतम्' इति। मान प्रमाणम्। यावद्दत्त तावद्भुक्तम्

(काशिका २. १. ८)। यत्प्रमाण दत्त तत्प्रमाण भुक्तमित्यर्थः। अवधारणे यथा—'यावदमत्र ब्राह्मणानामन्त्रयस्व' इति (काशिका १, पृ ८६)। अमत्रसख्ययैव ब्राह्मणा निमन्त्रणीया, न न्यूना, नाधिकाश्चेत्यर्थः। 'तद्वल्गुना युगपदुन्मिषितेन तावत्' (रघु. ५. ६८) इति युगपदेवेत्यर्थः। शेषे—'भविष्यदर्थे सान्तत्य यावदप्रतियुग्भवेत्' इति। तत्र प्रतियुक्च्छब्देन यावच्छब्दप्रतियोगित्वेन तावच्छब्दो विवक्षितः। तद्रहित. केवलो यावच्छब्दो भविष्यदर्थं सान्तत्य चाभिदधातीत्यर्थ। भविष्यदर्थे यथा—'यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती' इति (कु. स. ३. ४)॥ २४६॥

[1] वोपालित $T_{J2}$, गोपालित $B_6$ [2] पूर्वस्मिन्। '—सप्तमी—' (५ ३ २७) इत्यस्ताति। 'अस्ताति च' (५ ३ ४०) इति पुरादेश इति भा दी (पृ ५०६) [3] °प्रसिद्धेपु $B_5$, $B_6$ [4] यत्, तत् परिमाणमस्य। 'तद्धिता' (४ १ ७६) इति बहुवचनेनान्येऽनुक्ता अपि तद्धिता ज्ञापिता। तेन डावतु इति भा दी (पृ ५०६)

(पा) प्राच्या पुरस्तात्—अग्रत इत्यपि। पुरार्थ अतीत। अग्रतोऽर्थ [1] अग्रम्। 'प्राच्या पुर पुरस्तादग्रप्रथमव्यतीतेपु' इति गोपालित [2]॥ यावत्तावच्च —अवधारण॥ अनुक्तम्—

अहो वतानुकम्पाया खेदे सबोधनेऽपि च।
पक्षात्मनोरनिर्देश्ये प्रकृतामर्शने च तत्॥ २४६॥

[1] $B_3$ omits अर्थ [2] बापालित इति भा दी (पृ ५०६)

**मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।**
**वृथानिरर्थकाविध्योर्नानानेकविनार्थयोः॥ २४७॥**

(वि) अङ्गीकारेऽधिकारे च समुच्चयविकल्पयो।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ[1]॥ 538॥

अङ्गीकार यथा—'इद त्वदीय [2]धनुरथेति ब्रूम' इति। अधिकारे यथा—'अथ शब्दानुशासनम्' इति (महाभाष्य १ १ १)। समुच्चये यथा—'दान कुर्वथ भोजनम्' इति। विकल्पे यथा—'हन्मि लोकमथ[3] त मत्प्राजितम्' इति (रघु ११ ८८)। मङ्गले यथा—'अथ[4] वर्णान् प्रवक्ष्यामि' इति। अनन्तर यथा—

'अथौपधीनामधिपस्य वृद्धौ' इति (कु. सं. ७. १)। आरम्भे यथा—'अथ परस्मैपदान्यारभ्यन्ते[5]' इति। प्रश्ने यथा—'अथ किं कार्यं कर्तव्यं वद' इति। कार्त्स्न्ये यथा—'अथातो[6] दर्शपूर्णमासौ व्याख्यास्यामः' इति (आप. श्रौत. १. १)। एष्वर्थेषु अथोशब्दोऽपि वर्तते ॥

वृथा निरर्थकाविध्योर्नानानेकविनार्थयोः।

निरर्थके यथा—'प्रासादशृङ्गाणि वृथाध्यरोहत्[7]' इति। अविधौ यथा—'प्रपच्यते स नरके यो वृथालभते पशुम्' इति ॥ नाना, अनेकार्थे यथा—'नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम्' (मेघ १ ६५.) इति ॥ [8]विनार्थे यथा—'नाना नारी निष्फला [9]लोकयात्रा' इति ॥ २४७ ॥

[1] मत J2 [2] धेनुमथेति भूय K2, K6 [3] लोकमुतेति मु ग्र (पृ २३६) [4] अथ शिक्षां प्रवक्ष्यामि इति पाणिनीयशिक्षा १ [5] आरभन्ते K2, K5; Svāmin omits ārabhante (p. 333) [6] अथ व्याकरणम् J2 [7] अध्यरुक्षत् J2 ,K6 [8] उभयार्थयो इति क्वचित् पाठ J2 [9] कामयात्रा K5

(विव.) मङ्गलानन्तर—अथो अथ। मङ्गले यथा—'अथ वर्णसमाम्नायः' (तै. प्रा. १. १) इति।

'ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥'

इति। आनन्तर्ये यथा—'अथ प्रजानामधिपः प्रभाते' इति (रघु. २. १)। आरम्भे यथा—'अथेदानीमेतन्निरूप्यते' इति। प्रश्ने यथा—'अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद् बिभेषि' इति (रघु. २. ४६)। कार्त्स्न्ये यथा—अथ चुरादयः कथ्यन्ते इति। साकल्येन कथ्यन्त इत्यर्थः। शेषे—

'अङ्गीकारेऽधिकारे च समुच्चयविकल्पयोः।
मतान्तरेऽप्ययथाथो च अन्वादेशे त्वथो इति ॥'

इति। अङ्गीकारे यथा—'किं तार्किको भवानिति प्रश्ने अथेति ब्रूमः' इति। अधिकारे यथा—'अथ शब्दानुशासनम्' इति (महाभाष्य. १. १. १)। समुच्चये यथा—'ओदनं पचाथ'। सूपमपि पचनीयमित्यत्रैव प्रयोक्तुरभिप्रायः। नत्वा-

नन्तर्ये। विकल्पः संशयः। यथा—'शब्दः किं नित्यः, अथानित्यः' इति। मतान्तरे यथा—अथैव मनुषे इति। एतेष्वर्थेषु अथो अथ इति द्वयं वर्तते। ततश्च अथो इत्यस्यापि उदाहरणानि द्रष्टव्यानि। अन्वादेशे त्वथो शब्द एवेति शेषः। यथा—[2]'इमं व्याकरणमध्यापय, [3]अथो एनं स्मृतीः' इति॥ वृथा निरर्थकाविध्योः। निरर्थके प्रयोजनशून्ये यथा—'प्रयुक्तमप्यस्त्रमितो वृथा स्यात्' (रघु. २. ३४) इति। अविधौ शास्त्रीयेतिकर्तव्यताराहित्ये यथा—'वसेत् स नरके घोरे यो वृथा-लभते पशुम्[4]' इति (या. स्मृ. १. ७. १८०)। [5]वृथा अविधिनेत्यर्थः। अथवा अविधिः क्रियाशून्यः, यथा—वृथावाक्य इति। उक्तार्थकरणशून्य इत्यर्थः॥ नानानेकविनार्थयोः। अनेकार्थे यथा—'तस्मान्नानारूपाः पशवः'[6] इति। बहुरूपा इत्यर्थः। विनार्थे यथा—'नाना[7] नारीं निष्फला लोकयात्रा' इति। गणरत्नमहोदधौ च 'विनानेकार्थयोर्नाना' इति (पृ. २३, अध्या. १. १७)। वक्ष्यति च—'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने' इति (३. ४. ३)। 'नानानेकोभयार्थयोः' इति केचित् पठन्ति। तथा च विश्वप्रकाशे—[8]'नाना विनार्थेऽपि भवेन्नानानेकोभयार्थयोः[9]' इति (पृ. १८८, श्लो. ३२)॥ २४७॥

[1] °दण्डात् B6, Tj2　　[2] 'इमं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापय' इति काशिकायाम् (२. ४. ३४)　　[3] अर्थयते। 'अर्थ याच्ञायाम्'। बाहुलकात् डो। 'अन्येभ्योऽपि . . .' इति ड। पृषोदरादित्वाद्रलोप इति भा. दी. (पृ. ५०६)　　[4] 'यो हन्त्यविधिना पशून्' इति चतुर्थं पादो मु. ग्र. (पृ. ५४)　　[5] वृणोति। वृणीते वा। 'वृञ् वरणे'। 'वृङ् सभक्तौ' वा। बाहुलकात् थाक् [वृथा] इति भा. दी. (पृ. ५०६)　[6] 'नानारूपाः पशवो जायमानाः' इत्यथर्वसंहितायाम् (१४. २. २५)　　[7] नानानारीनिष्फला योगयात्रा T1　　[8] नेति नाना। 'विनञ्भ्यां नानाञौ नसह' (५. २. २७) इति नञो नाञ्.　　[9] °उभयोरपि B5, B6

(पा) मङ्गलानन्तर—अथो अथ। [1]अथशब्दः संशयप्रथमयोरपि स्यात्। 'अथ कल्याणानन्तरसप्रश्नारम्भसंशयाद्येषु[2]' इति गोपालितः॥ वृथा निरर्थकाविध्योः। निरर्थकं निष्कारणम्। 'वृथा निरर्थकाविध्योः' इत्यमरमाला॥ अनुक्तम्—

यथा सादृश्ययोग्यत्ववीप्सास्पर्धानतिक्रमे।
तथा समुच्चये सौम्ये परमार्थाभ्यनुज्ञयोः॥

नानानेकोभयार्थयो ॥ २४७ ॥

[1] B3 omits the word [2] °सशयादिषु A1

**नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु ।**
**प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ॥ २४८ ॥**

(वि) पृच्छाविषादयो पादपूरणोत्प्रेक्षयोरपि ॥ 539 ॥
उपमाया वितर्के च नुशब्द परिकथ्यते ।

पृच्छाया यथा—' कथ नु शक्योऽनुनयो महर्षे '[1] इति (रघु २ ५४) । विषादे यथा—'क्व नु मा त्वदधीनजीविताम्' इति (कु स ४ ६) । पादपूरणे यथा—' अहिंसा नु परो[2] धर्म ' इति । उत्प्रेक्षाया यथा—' व्यत्यय विनिमय नु वितेने ' इति (किरा ९ ६०) । उपमाया यथा—' पद्म नु [3]लपन तस्या राजते हरिणीदृश ' इति । [4]वितर्के यथा—' तया गृहीत नु मृगाङ्गनाभ्यस्ततो गृहीत नु मृगाङ्गनाभि '[5] इति (कु स १ ४७) ॥

वीप्सायामानुपूर्व्ये च पश्चात्सादृश्ययोरनु ॥ 540 ॥

वीप्साया यथा—' वृक्ष वृक्षमनु सिञ्चति ' (काशिका १ ४ ९०) इति । आनुपूर्व्ये यथा—' ज्येष्ठानुगमनात् पूर्वम् ' इति (रघु १२ ३५) । पश्चादर्थे यथा—अनुज इति । सादृश्ये यथा—' आत्मानुरूपा विधिनोपयेमे ' इति (कु स १ १८) ॥

आमन्त्रणेऽप्यनुज्ञायामवधारणपृच्छयो ।
ननुशब्दोऽप्यनुनये क्षेपे परमतस्य च ॥ 541 ॥

आमन्त्रणे यथा—' ननु नान्वेति हित [6] प्रिय ' इति । अनुज्ञाया यथा— ननु गच्छामि । अवधारणे यथा—' त्वया नियम्या ननु दिव्यचक्षुषा ' इति (रघु ३ ४५) । पृच्छाया यथा—नन्वभोजि । अनुनये यथा—नन्वधिष्ठा । परमतक्षेपे यथा—ननु चैतत् क्थ घटते इति ॥ २४८ ॥

[1] J2, K2 add ' विश्राणनाच्चान्यपयस्विनीनाम् ' [2] परम J2 [3] मुखमित्यर्थ, सवनम् K4 [4] विकल्प J2 [5] J2 omits the latter half [6] हित प्रिया K2, K4

(विव.) नु पृच्छायां विकल्पे च । पृच्छा प्रश्नः । यथा—''आ नो नु युवां न ह्रीमानि नो ह्रानि . . .' इति । विकल्पः संशयः । यथा—'स्थाणुर्नु पुरुषः' इति । 'पुरपो नु कामिनीषु मदनो नु' इति । शेषे—

'प्रत्युक्तावुपमाने च विषादोत्प्रेक्षयोरपि ।
नु पादपूरणे ज्ञेयो जिज्ञासायां समुच्चये ।।'

इति । प्रतिवचने[2] यथा—'देवदत्त किं कटं कृतवानसि[3]' इति प्रश्ने 'अहं नु करोमि' इति प्रतिवचनम् (काशिका १, पृ. १९५) । 'नन्वोर्विभाषा' (३. २. १२१) इति भूतार्थे लट् । उपमाने यथा—'पद्मं नु लपनं तस्या राजते हरिणीदृशः' इति । विषादे यथा—'क्व नु मां त्वदधीनजीविताम्' इति (कु. सं. ४. ६) । उत्प्रेक्षायां यथा—'अस्तशैलगहनं नु विवस्वानाविवेश जलधिं नु महीं नु' इति (किरा. ६. ७) । पादपूरणे यथा—'आख्यास्यामि नु ते वार्ताम्' इति । जिज्ञासायां यथा—'कथमिदं नु भवेत्' इति । समुच्चये यथा—'वारणी परगुणात्मगुणानां व्यत्ययं विनिमयं नु वितेने' इति[4] (किरा. ६. ६०) ।। पश्चात्सादृश्ययोरनु । पश्चादर्थे यथा—अनुरथं पादातम् । सादृश्ये यथा—अनुसखि । उभयत्रापि 'अव्ययं विभक्ति . . . वचनेषु' (२. १. ६) इत्यव्ययीभावः । शेषे—

'अनु हीने लक्षणे च सह दैर्घ्यानुपूर्व्ययोः ।
लक्षणेत्थंभूताख्यानभागवीप्सासमीपयोः ।।
अथोपसर्गो विज्ञेयः सहपश्चाद्‌यासु सः ।
अवबोधे चानुमतौ सादृश्ये सान्त्वसेवयोः ।।
प्रश्ने चालोचनाचार आनुकूल्ये च मार्गणे ।
आसवतावानुपूर्व्यां च सातत्येच्छोपकारवत् ।।
प्रोत्साहे चानुतापे च वासने च प्रसाधने ।
अन्वये विनियोगे च ।।

इति । हीने यथा—अनुशाकटायनं वैयाकरणाः (काशिका १. ४. ८६) । शाकटायनाद्धीना अन्ये वैयाकरणा इत्यर्थः । लक्षणं हेतुः । यथा—'शाकल्यस्य संहितामनु प्रावर्षत्' इति (काशिका १, पृ. ७६) । शाकल्यसंहिताहेतुनेत्यर्थः । सहार्थे यथा—

शेष—'ननु क्षेपे मतस्य च । प्रत्युक्तावेषणायां च' । [9]परमतक्षेपे यथा—'नन्वेतत् कथ घटते' इति । उक्तौ प्रतिवचन यथा—अकार्षी. कट देवदत्तेति प्रश्ने 'ननु करोमि भो' इति (काशिका १, पृ १९५) । 'ननौ पृष्टप्रतिवचने' (३. २. १२०) इति भूते लट् । एषणायां यथा—'ननु जीवन्तु सुधिय.' इति[10] ।। २४८ ।।

[1] कुतो नु भवान् न हि मानिनो हानि Tv [2] प्रत्युक्तौ TJ1, TJ2 [3] कृतवा-नासीत् Tv [4] नुदति । नौति वा । 'णुद प्रेरणे' । 'णु स्तुतौ' वा । मितद्रवादित्वात (वा ३ २ १८०) डु [नु] इति भा दी (पृ ५०६) [5] बद्धेत्यर्थ B5, B6 [6] Gm1, Gm3 omit लक्ष्यते [7] अनिति । 'अन प्राणने' । बाहुलकादु [अनु] इति भा दी (पृ ५०६) [8] ननु वर्णा नित्या B6 [9] Gm3, Tv omit परमत° [10] न नुदति । 'णुद प्रेरणे' । डु (वा ३ २ १८०) [ननु] इति भा दी (पृ ५०६)

(पा) नु पृच्छायां—सादृश्ययोरनु । पश्चात्—अनु जनक गच्छति । सादृश्ये—अनुकरोति जननीम् । 'अनु हीने सहार्थे च' इति [1]विश्व (पृ १८८, श्लो ३३) । पाणिनिमनु वैयाकरणा । अनु वीणा वैणिको गायति ।। प्रश्नावधारणा—आमन्त्रणे ननु ।। अनुक्तम्—नञभावविरोधान्यसाम्येष्वीषन्निषेधयो इति । अभावे यथा—अदन्तो बाल । अदन्तो वृद्ध । घट पटो न भवति । नास्त्यश्वस्य विषाणम् इत्यादि । विरोधे यथा—तम प्रकाशौ न निवसत । अतिमिरस्तरणिरुदेति । अन्यार्थे यथा—अगौर्गवय । साम्ये यथा—'असक्त सुखमन्वभूत्' इति (रघु १ २१) । ईषदर्थे यथा—स न पुरुषो यो न विक्रामति । निषेधार्थ यथा—[2]नानृत ब्रूयादिति ।। २४८ ।।

[1] B3, C1 add पश्चात्सादृश्ययोरनु [2] 'प्रिय च नानृत ब्रूयात' इति म स्मृ (४ १३८)

**गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।**
**उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ।। २४९ ।।**

(वि) गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि ।

गर्हायां यथा—'अपि वाग्भूतृणोदकं' इति (या. स्मृ १ ५ १०७) । समुच्चये यथा—'वत्सर सोऽपि तत्सम' इति । प्रश्ने यथा—'अप्यग्रणीर्मन्त्रकृतामृषीणाम्'

इनि (रघु ५ ४)। शङ्काया यथा—अप्यागच्छेद् व्याघ्र [1] इति। सभावनाया यथा—' समुद्रमपि लङ्घयेत् [2] ' इति ॥

उपमाया विकल्पे वावधारणसमुच्चये ॥ 542 ॥

उपमाया यथा—' विशेपको वा विशिशेप यस्या ' इति (शिशु ३ ६३)। विकल्पे यथा—'पष्ठेऽष्टमे वा सीमन्त ' इति (या स्मृ १ २ ११)। अवधारणे यथा—' अरावणमराम वा जगदद्येति निश्चित ' इति (रघु १२ ८३)। समुच्चये यथा—' अग्निर्वा पवनो वास्य कपेलंडका दिग्धक्षत [3] ' इति ॥

अर्धे जुगुप्सने सामि सहार्थान्तिकयोरमा।

अर्धे यथा—' ससीत्कृत सामि [4]विकूणितानना ' इति। जुगुप्सने यथा—' साम्यन्न न तु भोक्तव्यम् ' इति ॥ सहार्थे यथा—अमावास्या। अन्तिके यथा—अमात्य ॥ २४६ ॥

[1] विष्णु K2, K6 [2] लङ्घये J2 [3] K5 adds साहाय्यकमनुप्राप्त
[4] विकूञ्जिता° K3, K5

(विव) गर्हासमुच्चय—सभावनास्वपि। गर्हाया यथा—' अपि स्तुयाद् वृषलम्' (काशिका १, ८ ८१) इति। समुच्चये यथा—' अपि सिञ्च, अपि स्तुहि' इति (काशिका १ ४ ९६)। प्रश्ने यथा—'अपि क्रियार्थं सुलभ समित्कुशम्' इति (कु. स ५ ३३)। शङ्काया यथा—' अपि कुप्येदाचार्यः' इति। शक्तेरप्रतिघाताविष्करण सभावना। यथा—[1]अपि सिञ्चेद् ब्राह्मणा सहस्रम् इति। अपि पर्वत शिरसा भिन्द्यात्। किमुतान्यदित्यर्थः। ' अपि. पदार्थ-सभावनान्ववसर्गगर्हासमुच्चयेषु' (१ ४. ९६) इत्यपे. कर्मप्रवचनीयत्वम् [2]। उपमाया विकल्पे वा। उपमाया यथा—[3]' शिशिरमथिता पद्मिनीं वान्यरूपाम्' इति (मेघ. २. २३)। विकल्पे यथा—' [4]यवैर्व्रीहिभिर्वा यजेत' इति। शेषे—'अनवकल्पेऽवधारणं। समुच्चये वा' इति। अनवकल्पोऽसभावना। यथा—' [5]अस्त्रवेदमधिगम्य तत्त्वत. कस्य वेह [6] भुजवीर्यशालिन ' इति (किरा. १३. ६२)। अवधारणे यथा—' सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम' इति (कु म २ ६०)। न च तृतीयेत्यवधारणम्। ' गर्भाष्टमेऽष्टमे वाब्दे ' (या स्मृ. १.

२. १४) इति वाशब्दाभ्यां द्योतते । समुच्चये यथा—'वायुर्वा दहनो वास्य कपेर्लङ्का दिधक्षतः । साहाय्यकमनुप्राप्तो ' इति[7] ।। [8]सामि त्वर्धे जुगुप्सने । अर्धे यथा—'सामिभुक्तविषया. समागमा.' इति (रघु. १९. १६) । जुगुप्सायां यथा—'साम्यध्ययनमनध्यायः' इति ।। २४९ ।।

[1] मूलकसहस्रमिति काशिकायाम् (१, पृ ८१) [2] B6 adds तत्र छादने यथा—अपिदधाति । बन्धने यथा—अपिनह्यति; 'न पियति । 'पि गतौ' । क्विप् (३ १ १७८) । आगमशास्त्रस्यानित्यत्वान्न तुक्' [अपि] इति भा दी (पृ ५०९) [3] B6 adds जाता मन्ये [4] एव वा कार्यम् Tv [5] कस्य वेदमधिगम्य तत्त्वत , कस्य देहभुजवीर्यशालिन Tv [6] चेह इति मु ग्र (पृ ३०६) [7] वाति । 'वा गत्यादौ' । क्विप् [वा] इति भा दी (पृ ५०९) [8] सामयति । 'षाम सान्त्वप्रयोगे' । 'अच इ ' (उ ४ १३८) इति भा दी (पृ ५०९)

(पा) गर्हासमुच्चय — सभावनास्वपि । गर्हायाम् — अपि स्तुयाद् वृषलम् । समुच्चये—अपि सिञ्च, अपि स्तुहि । प्रश्नार्थे—अपि जानासि । शङ्कायाम्—[1]अपीह चोरो भवेत् । सभावनायाम्—अपि स्थाणु जयेद्रामो भवतो ग्रहण कियत्[2] ।। उपमाया विकल्पे वा । समुच्चयावधारणयोरपि स्यात् । 'वा स्याद् विकल्पोमयोरेवार्थे [3]च समुच्चये ' इति विश्व (पृ १८९, श्लो ४०)।। सामि त्वर्धे [4]जुगुप्सने । सामि कृतम्[5] ।। २४९ ।।

[1] अपि ह A1 [2] च यत् A1 [3] अपीति मु ग्र [4] जुगुप्सिते C1 [5] सामीकृतम् A1

अमा सह समीपे च कं वारिणि च मूर्धनि ।
इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये ।। २५० ।।

(वि) कमाकाशे जले मूर्ध्नि सुखे च समुदाहृतम् ।। 543 ।।
आकाश—कङ्का पक्षिण । जले—कञ्ज पद्मम् । मूर्ध्नि—कधरा । सुखे—कदर्प ।।

इवार्थेऽङ्गीकृताविव्यमर्थनिश्चययोरपि ।
एव भवेच्च प्रकृतपरामर्शोपदेशयो ।। 544 ।।

इवार्थे यथा—'भानुरेवमुनिर्भाति ' इति । अङ्गीकृतौ यथा—एव करोमि ।

इत्थमर्थे यथा—एवगुणस्य [1]कृष्णस्य रुक्मिणी ' इति । निश्चये यथा—एवमव । प्रकृतपरामर्शे यथा— [2]' एववादिनि देवर्षा ' इति (कु स ६ ८४) । उपदश यथा—' एव [3]कुर्याच्छिवार्चनम् ' इति ॥

उत्प्रेक्षाया भवेन्नूनमर्थनिश्चयतर्कयो ।

उत्प्रेक्षाया यथा—' कान्ताना दहनज्वाला नून चन्द्रमस करा [4] ' इति । अर्थ निश्चय यथा—' क्षुद्रेऽपि नून शरण प्रपन्ने ' इति (कु स १ १२)। तर्के यथा—' नूनमुनमति यज्वना [5]पति ' इति (कु स ८ ५८) ॥ २५० ॥

[1] भवतो गोविन्द K2, K4　[2] एव वदति गोविन्दे J2 K5　[3] कुर्याम् K3
[4] कला K4　[5] प्रिय J2 K3, K5

(विव ) अमा सह समीपे च । सूर्याचन्द्रमसौ अमा सह वसतोऽस्यामिति अमावास्या । समीपे यथा—अमात्य । समीपे भव इत्यर्थे ' अव्ययात त्यप् ' । [1](४ २ १०४) ॥ क वारिणि मूर्ध्नि च । वारिणि यथा—कञ्ज पद्मम् । मूर्ध्नि यथा—कधरा । शब—' क सुखे व्योम्नि ' इति । सुखे यथा—कदर्प । व्योम्नि यथा—कङ्का पक्षिण । ' क शिरोऽम्बुनो ' (२, पृ २२७) इत्यत्र फान्तवर्गे कशब्द उक्त । इह तु मकारान्तमव्ययमिति विवेक [2] ॥ इवेत्यमर्थयोरेवम । इवार्थे यथा—' अग्निरेव द्विजो भस्मसात् कुर्यात् ', ' भानुरेव मुनिर्भ्राजति ' इति । शेषे—

' एवमङ्गीकृतावपि ।
निर्धारणे च प्रकृतपरामर्शोपदेशयो ॥ '

इति । अङ्गीकारे यथा—कट कुरु इत्युक्ते एव करोमि इति । निर्धारणे निश्चये यथा—' आहार्यमेव मृगनाभिपात्रम् ' इति । प्रकृतपरामर्शे यथा—' एववादिनि दवर्षौ ' इति (कु स ६ ८४) । उपदशे यथा—' एव कुर्याच्छिवार्चनम् ' इति । निश्चये यथा—' [3]एवमेतत् क सदेह ' (रत्ना १ ७- ) इति ॥ नून तर्केऽर्थनिश्चये । [4]उत्कटककोटिस्तर्क । यथा—' नूनमेषा मम प्रिया भवेत् ' इति । अर्थनिश्चये यथा—' नीतानि पणता नूनमीदृशी भवितव्यता ' इति

(किरा. ११. ४७)। नूनमिति मान्तमव्ययमुत्प्रेक्षायामपि भवति। यथा— 'मदनस्येषवो नूनं युवतीनां दृशः शिताः' इति[7]॥ २५०॥

[1] B6 adds इति ल्यप्, 'न माति।' 'मा माने।क्विप्' (३ २ ७६) [अमा] इति भा दी (पृ ५०६) [2] कम्यते। 'कमु कान्तौ'। णिङभावे विच् [कम्] (३ २ ७५) [3] 'ए' एत्य वमति। 'टु वम उद्गिरणे'। विच् (३ २ ७५) इति भा दी (पृ ५१०) [4] उद्भट° Gm3, K5 [5] नुवा स्तुत्या नमति। विच (३ २ ७५) [नूनम्] इति भा दी (पृ ५१०)

(पा) अमा सह—क वारिणि च मूर्धनि। सुखे च स्यात्। 'क सुखे ऽम्भसि [1]मूर्ध्नि च' इति वैजयन्ती (पृ २८४, श्लो ३)॥ इवेत्थमर्थयोरेवम्। इवार्थ औपम्यम्[2]। इत्थमर्थः प्रकारः। 'एवं प्रकार औपम्येऽनुज्ञायामवधारणे' इति जयकोशः[3]॥ नूनं तर्केऽर्थनिश्चये॥ २५०॥

[1] मूर्धनि B3, C1 [2] सादृश्यम् B3 [3] A1 omits कोश

तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने।
नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने॥ २५१॥

(वि) तूष्णीमर्थे सुखार्थे च जोषमित्यव्ययं भवेत्॥ 545॥

तूष्णीमर्थे यथा— 'इति जोषमवस्थितं[1] द्विपः' इति (शिशु १६ १६)। सुखार्थे यथा—'जोषमासीत वर्षासु' इति॥

प्रश्नेषदर्थयोः किं स्यान्निन्दातिशययोरपि।

प्रश्ने यथा—'शक्ता प्रबन्धेषु महाकवीनां किमाद्रियेरन् रसिका श्रुतिं मे' इति। ईषदर्थे यथा—'तदस्ति किं व्यस्तमपि त्रिलोचने' इति (कु स ५ ७२)। निन्दायां यथा—'स किंसखा साधु न शास्ति योऽधिपम्[2]' इति (किरा १ ५)। अतिशये यथा—'निवार्यतामालि किमप्ययं वटुः' इति (कु स ५. ८३)॥

प्रकाशसंभावनयोः क्रोधोपगमकुत्सने॥ 546॥
कयचिदर्थे नाम स्याद् विस्मयालीकयोरपि।

प्रकाशे यथा—'कुम्भोदरं नाम निकुम्भमित्रम्[3]' इति (रघु २ ३५)।

सभावनाया यथा—'कुर्वन्नाम समेष्यसि' इति। क्रोधे यथा—'आ [4]कसस्य भय नाम गोपान्मेऽपि सुरद्विष' इति। उपगमे यथा—'अमृत नाम यत्सन्तो मन्त्रजिह्वेपु जुह्वति' इति (शिशु २ १०७)। कुत्सने यथा—'को नामाय प्रलपति पुरो मे विशङ्क. सभायाम्' इति। कथचिदर्थे यथा—पत्यु.[5] क्रुद्धस्य पुरतो सेवको नाम वर्तते इति। विस्मये यथा—'एको नामार्जुन [6] [7]शत्रून् कर्णादीनजयद्युधि' इति। अलीके यथा—'परिश्रम नाम विनीय च क्षणम्' इति (कु स ५ ३२) ॥ २५१ ॥

[1] अवस्थिते मुनौ $K_2$, $K_4$, $K_5$ [2] $K_3$, $K_5$ add हिताम्न य सशृणुते स किंप्रभु [3] निकुम्भतुल्यम् $J_2$, $K_4$, $K_5$ [4] कि तस्य $K_4$ [5] प्रत्युत्क्रुद्धस्य $K_5$ [6] जन $K_5$ [7] शत्रु $K_5$

(विव.) तूष्णीमर्थे सुखे जोषम्। तूष्णीमर्थो मौनम्। यथा—'जोषमास्ते जितेन्द्रियः' इनि। सुखे यथा—'जोषमासीत वर्षासु' इति[1] ॥ किं पृच्छायां जुगुप्सने। पृच्छाया यथा—किं भार्या प्रतिकूला। जुगुप्सने यथा—किंनरः, नरशरीरावयवानामपूर्णत्वात्। जुगुप्सितो नर इत्यर्थः। 'स किंराजा यो[2] राष्ट्रं न रक्षति'। किंराजा कुत्सितो राजा इत्यर्थः। अत्र किंराजेति समस्तं कथम्। 'राजाहःसखिभ्यष्टच्' (५. ४. ९१) इति सूत्रेण प्राप्तः समासान्तप्रत्ययो न भवति, 'किमः क्षेपे' (५. ४. ७०) इति सूत्रेण तस्य प्रतिषेधात्। शेषे—'किमीषदतिशायने' इति। ईषदर्थे यथा—'किमपि प्रियश्च'। ईषत्प्रिय इत्यर्थः। अतिशये यथा—किमप्येष प्रगल्भते। अतिशयेन प्रगल्भत इत्यर्थः[3] ॥ नाम प्राकाश्य—कुत्सने। प्राकाश्ये प्राकट्ये यथा—'हिमालयो नाम नगाधिराजः' इनि (कु. सं. १. १)। संभाव्ये कथंचिदर्थे यथा—इह लप्स्यते धनं नाम इति। क्रोधे यथा—'ममापि नाम दशाननस्य परैः परिभवः' इति। उपगमे यथा—'अस्तु नाम' इति। क्रोधेनोपगमः क्रोधपूर्वाङ्गीकार इति केचित्। यथा—अस्मानेवमधिक्षिपसि, भवतु नाम, संप्रत्येव भवन्तं कथावशेषं करिष्यामि इति। कुत्सने पृथक्करणे यथा—'को नामायं गृहपतिः, गृहा[4] येन न गृहीताः' इति। शेषे—'नामालीके विस्मये चामन्त्रणेऽर्थे कथंचितः' इति। अलीकेऽपरमार्थे यथा—'विश्रम्य विष्टरे नाम व्याजहारेति भारतीम्' इति। विस्मये यथा—'एको नामाजयद् रिपून्' इति। आमन्त्रणे यथा—'भो नाम रावण गृहाण धनुस्त-

**तज्यम्' इति। कथचित्पदस्यार्थे यथा—'पत्युः क्रुद्धस्य पुरतः सेवको नाम वर्तते'। कथचिद् वर्तते इत्यर्थः[5] ।। २५१ ।।**

[1] जुप्यते। 'जुप तृप्तौ'। बाहुलकादम् [जोषम्] इति भा दी (पृ ५१०). [2] यस्य राष्ट्रम् Gm3, Tv [3] कूयते कवन वा। 'कु शब्दे'। बाहुलकाड्डिम्। कायते डिमि (उ ४ १५८) वा [किम्] इति भा दी (पृ ५१०) [4] गृहा हि न हृतश्रिय Tv [5] नामयति। नाम्यते वा। 'णमु प्रह्वत्वे'। 'अन्येभ्योऽपि' (वा ३ २ १०१) इति ड [नाम] इति भा दी (पृ ५१०)

(पा) तूष्णीमर्थे सुखे जोषम्। तूष्णीमर्थो मौनम्।। किं पृच्छाया जुगुप्सने। [1]पृच्छार्थे—कुशल किमत्र भवत। जुगुप्सायाम्—स किंराजा यो न रक्षति प्रजा। विकल्पहेतुनिषेधेष्वपि स्यात्। विकल्पे—तिष्ठतु किं, गच्छतु किम्। हेतौ—किं मामङ्ग बाधसे। निषेधे—किं धनै परहितानि कुरुध्वम्।। नाम प्राकाश्य—कुत्सने। प्राकाश्यार्थे—राजाभूच्छूद्रको नाम। सभाव्ये—'विद्या नाम नरस्य रूपमधिक [2]प्रच्छन्नगुप्त धनम्' इति (नी श. ७०)। क्रोधे—रामो नाम कुत कुत। उपगमे—'अविवेकि कुचद्वन्द्व हन्तु नाम जगत्त्रयम्' (कुवलया पृ १०१)। कुत्सने—

'पुस्कोकिलस्य चरितानि करोतु नाम
काक कलध्वनिविधौ ननु काक एव'।

इति।। २५१।।

[1] पृच्छायाम् B3 [2] A1 omits the two words

**अलं भूषणपर्याप्तिशक्तिवारणवाचकम्।**
**हुं वितर्के परिप्रश्ने समयान्तिकमध्ययोः ।। २५२ ।।**

(वि) अल भूषणपर्याप्तिशक्तिवारणवाचकम् ।। 547 ।।

भूषणे यथा—'अलचकारास्य वधूरहस्कर' इति (शिशु १ ५८)। पर्याप्तौ यथा—'तस्यालमेषा क्षुधितस्य तृप्त्यै[1]' इति (रघु २ ३९)। शक्तौ यथा—'अल दशास्यस्य वधाय राघव' इति। वारणे यथा—'अल विवादेन यथा श्रुत त्वया' इति (कु स ५ ८२)।।

वितर्के च परिप्रश्ने [2]कोपभर्त्सनयोरपि ॥ 548 ॥
अनिच्छाभययोः स्मृत्या हुमित्यव्ययमुच्यते ।

वितर्के यथा—'हुं जलं मृगतृष्णा हुम्' इति । परिप्रश्ने यथा—हु देवदत्तोऽयम् इति । कोपे यथा—'हुं निहन्मि सहसा युधि शत्रून्' इति । भर्त्सनाया यथा—'हु युद्धादपसर शत्रो' इति । अनिच्छायाम्—हुं मुञ्च पापेति जगाद साध्वी इति । भये—हुं राक्षसः समायाति । स्मृतौ—अत्र हुं क्रीडितं पुरा इति ॥

मध्येऽन्तिके स्यात् समया भेदाप्रथमयोः पुनः ॥ 549 ॥

मध्ये—समया शैलयोर्नदी । अन्तिके—समया [3]पट्टणं नदी ॥ २५२ ॥

[1] तृप्तौ J2　[2] क्रोध° J2　[3] पत्तन J2

(विव.) अलं भूषण—वारणवाचके[1] । भूषणे यथा—अलंकरोति । [2]पर्याप्तौ यथा—'तस्यालमेषा क्षुधितस्य तृप्त्यै' इति (रघु. २. ३९) । शक्तौ सामर्थ्ये यथा—'अलं मल्लो मल्लाय' इति (काशिका २. ३. १६) । वारणे निषेधे यथा—[3] 'अलमतिप्रसङ्गेन' (मुद्रारा १-) ॥ हुं वितर्के परिप्रश्ने । वितर्के यथा—'हुं भवितव्यं कान्तारेऽस्मिन्नभिमुखागतैरेभिः पाटच्चरैरेव' इति । परिप्रश्ने पृच्छायां यथा—'रामो नाम बभूव हुं तदबला सीता' इति ([4]वसुंधरस्य) । 'आमन्त्रणे भर्त्सने हुं परिप्रश्नवितर्कयोः' इत्यजयः । आमन्त्रणे यथा—'हुं देवदत्त क्व यासि' इति । भर्त्सने यथा—'हुमपसर क्वासि मां नेतुं राम' इति । स्मृतावपि यथा—'अत्र हुं[5] क्रीडितं पुरा' इति ॥ [6]समयान्तिकमध्ययोः । अन्तिके यथा—'गङ्गां समया वाराणसी' इति । मध्ये यथा—'ग्रामं समया देवागारम्'; ग्रामस्य मध्ये देवागारमित्यर्थः ॥ २५२ ॥

[1] वाचकम् B6　[2] Gm1, TJ2 add पूर्णतायाम्　[3] अलति । 'अल भूषणादौ' । बाहुलकादम् इति भा दी (पृ ५१०). [4] सुभाषितरत्नभाण्डागारे श्लोकानुक्रमणिकायाम् (पृ ५३)　[5] हूयते । 'हु दानादौ' । बाहुलकान्म इति भा दी (पृ ५१०) [6]समेति । 'इण् गतौ' । 'आ समिण्निकषिभ्याम्' (उ ४ १७५) इति भा. दी (पृ ५१०).

(पा.) अल भूषण—वारणवाचकम् । भूषणे—अलकरोति कन्याम् । पर्याप्तौ—' फलमलमशनाय [1]स्वादु पानाय तोयम् ' (वै. श ५४) । शक्तौ—

अल मल्लो मल्लाय। वारणे—अल बाले रुदित्वा। निरर्थकेऽपि स्यात्। यथा—अलमूषरेषु[2] बीजावाप इति ।। हु वितर्के परिप्रश्ने। अनुक्तम्—कथ प्रश्ने प्रकारे च प्रकर्षात्ययोर्भृशम् इति ।। समयान्तिकमध्ययो २५२ ।।

[1] B3 omits the second *pāda* [2] ऊषरे B3

**पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ।**
**स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा ।। २५३ ।।**

(वि) भेदे यथा—'जीवन् पुन शश्वदुपप्लवेभ्य [1]प्रजा प्रजानाथ पितेव पासि' इति (रघु २ ४८)। अप्रथमे यथा—'पुनर्वभाषे तुरगस्य रक्षिता' इति (रघु ३ ५१)।

निषेधे [2]निश्चये नि स्यात् सुखाप्त्यादौ निरासने ।

निषेधे—निरस्यति। निराचष्टे। निराकरोति। निश्चये—निर्णयति। निश्चिनोति। सुखाप्तौ—निर्वृति। निर्वृणोति। निरसने—निरष्ठीवत् ।।

स्यात् प्रबन्धे चिरातीते निकटागामिके[3] पुरा ।। 550 ।।

प्रबन्धे यथा—'उपाध्यायेन पुरा धीयते स्म' इति। चिरातीते यथा—'पुरातन त्वा पुरप पुराविद' इति (शिशु १ ३३)। निकटागामिके समीपवर्तने यथा—'आलोके ते निपतति पुरा [4]सा वलिव्याकुला वा' (मेघ २ २५) ।। २५३ ।।

[1] K5 omits the second *pāda* [2] निश्चिते K5 [3] निकटागामिनो K5
[4] K5 omits the latter half

(यिव) पुनरप्रथमे खेदे। अत्राप्रथमे आवृत्तौ यथा—पुनर्भुक्तम्। खेदे यथा—'वैश्या आरण्यान्न विश्रीणन्ति किं पुनर्ब्राह्मणः' इति[1]। निर्निश्चयनिषेधयो। निश्चये यथा—निर्णय। निषेधे यथा—निरस्यति। शेषे—

'गुणप्राप्तावभावे च प्रादुर्ये पृथक्कृतौ ।
खेदनिग्रहकार्त्स्न्ये च भोगार्थादौ[2] निरीरित ।।'

इति । सुखप्राप्तौ यथा—निर्वृणोति । अभावे यथा—'कृतं भवता निर्मक्षिकम्' इति (शाकु. २. ७० ) । प्रादुर्यो व्यक्तत्वम् । यथा—निर्वचनम् । पृथक्करणे यथा—निर्धारयति । खेदे यथा—निर्वेदः । निग्रहे यथा—निर्बध्नाति । कार्त्स्न्ये यथा—निर्दहति । निष्कृन्तति । निष्पिनष्टि । उपभोगे यथा—[1]निर्विशति । आदिशब्दाद् निष्ठीवतीति निरसने, निर्दिशतीत्यन्वाख्याने इत्यादि । 'प्रपराप-समन्ववनिर्दुर्व्याङ्न्यधि . . .' इत्याद्युपसर्गगणे निः इति विसर्जनीयान्तं नि इति ह्रस्वान्तं चेति द्वयमपि पठितम् । सूत्रेष्वपि 'निरः कुषः' (७. २. ४६) 'नेर्गदनद . . .' (८. ४. १७) इत्यादिषु द्वयं व्याहृतम् । तया च अमरसिंहेनापि[4] 'निर्निश्चयनिषेधयोः' इत्युपसर्गद्वयस्यापि सामान्येन ग्रहणम् । तत्र ह्रस्वान्तस्य निश्चये यथा—'नियमेन मया निबर्हणीयः परमं लाभमरातिभङ्गमाहुः' इति (किरा. १३. १२) । नियमः[5] शास्त्रनियमः नियतवागित्यादि । निषेधे यथा—निषेधति । अभावे यथा—निवापो देशः । नीवाकः निधनमिति । निकार इति तिरस्कारे[6] ।। स्यात् प्रबन्धे—पुरा । प्रबन्धे सातत्ये यथा—उपाध्यायेन पुराधीयते स्म । अविरतमपाठीदित्यर्थः । अथवा प्रबन्धे वाक्यरचनारूपे पुराणादावित्यर्थः । चिरातीते बहुकालातीते यथा—'इतिहासः पुरावृत्तम्' (१, पृ. १०६); 'पुरातनं त्वां पुरुषं [7]पुराविदः' इति (शिशु. १. ३३) । केचित्तु चिरमतीतं चेति व्याचक्षते । अतीते यथा—'एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति' (तै. सं. ३. ३. ८. ४), 'अथैनं पुरर्षयः'; अतीते काले इत्यर्थः । निकटागमिकम् अविलम्बेन भावि । यथा—'गच्छ शीघ्रं पुरा देवो वर्षति' इति । वर्षिष्यतीत्यर्थः । केचित्तु—संनिहिते निकटवर्तिनि, आगामिके चेत्यर्थद्वयपरत्वेन व्याचक्षते । संनिहिते यथा—'पुरा प्रातरनुवाकाज्जुहुयात्' इति । प्रातरनुवाकात् संनिहिते पूर्वकाल इत्यर्थः[8] ।। २५३ ।।

[1] पनते । 'पन स्तुतौ' । बाहुलकादर, अकारस्योकार [पुन] इति भा दी (पृ ५१०)
[2] भोगार्थेऽपि Gm1, Tj1
[3] B6 adds निर्विष्टविषयस्नेह (रघु १२ १)
[4] °सिंहनाथेनापि Tj1, Tj2
[5] घण्टापथे नियमेनावश्यमिति मल्लिनाथेन व्याख्यातम् (पृ २८८)
[6] नृणाति । 'नॄ नये' । क्विप् (३ २ १७८) । 'ऋत इत्—' (७ १ १००) इति भा दी (पृ ५१०)
[7] पुरा विदु B5, B6
[8] पुरति । 'पुर अग्रगमने' । बाहुलकात् का [पुरा] इति भा दी (पृ ५०६)

(पा ) पुनरप्रथमे—निश्चयनिषेधयो । निश्चये—निर्वक्तु भवान् ।

निश्चित वक्तु भवानित्यर्थ । निषेधे--निष्कामो भवान् । निषिद्धकाम इत्यर्थः ।।
स्यात् प्रबन्धे--पुरा । प्रबन्धो [1]नाम वाक्यरचना । नटी कस्मात् पुरा धीयते ।
[2]चिरातीत भूतम् । यथा--पुरातनम् । [3]निकटागामिकम् अनागतम् । 'आलोके
ते निपतति पुरा' (मेघ २ २५) । अव्यवधानेन निपतिष्यतीत्यर्थः ।। २५३ ।।

[1] B3, C1 omit [2] चिर पुरातनम्, अतीत भूतम् A1. [3] निकट समीपम्, आगामिकमनागतम् A1.

**ऊर्य्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम् ।**
**स्वर्गे परे च लोके स्ववार्तासंभाव्ययोः किल ।। २५४ ।।**

(वि) उरर्यूरी चोररी च विस्तारे ऽङ्गीकृतौ[1] त्रयम् ।

विस्तारे यथा--उररीकरोति, ऊरीकरोति, ऊररीकरोति, अङ्गीकृतावप्येवम् ।।

परलोके देवलोके सुखे स्व. परिकथ्यते ।। 551 ।।

परलोके यथा--' स्वर्गतस्य क्रिया. कार्याः पूर्वैः परमभक्तितः ' इति । देवलोके
यथा--' स्वर्णद्या स्नाति नारद· ' इति । सुखे यथा--स्वर्ग. ।।

न्यक्कारालीकवार्तासु सभाव्येऽनुचिते किल ।

न्यक्कारे यथा--' त्व किलानमितपूर्वमक्षिणोः ' इति । अलीके यथा--' अमू
किल त्व त्रिदिवादवातर. ' इति (शिशु. १. ३६) । वार्ताया यथा--' अथ
किलैकरथेन नृपात्मजा ' इति । सभाव्ये यथा--गुरून् किलातिशेते शिष्य.[2] इति ।
अनुचिते यथा--' वक्तु किल गुरूनेवमनर्हस्त्वं विनष्टधी. ' इति ।। २५४ ।।

[1] अङ्गीकृते K3, K6 [2] अर्जुन K8

(विय.) ऊर्य्यूरी--अङ्गीकृतौ त्रयम् । द्वयं दीर्घादि, तृतीयं तु ह्रस्वादि ।
तथैव प्रागुक्तम् 'ऊरीकृतमुररीकृतम्' इति (२, पृ. १५०) । अजयस्तु
त्रयमपि ह्रस्वादिषु पपाठ । यथा--

'उपतापो गदे ताप उत्सर्गस्त्यागदानयोः ।
उररी चोररी चोरी विस्ताराङ्गीकृतेऽव्ययम् ।।'

इति। अत एव नैषधकाव्ये 'न खलु मुष्टिरुरीकृतबन्धनः' इति (४. ८४)। ह्रस्वादिः प्रागुक्तः। तत्रैव—'अर्थेषु स्वयमुररीकृतकाम्यः' इति च। 'तन्मे वरद्वयमुरीकृतपूर्वमेव' इति मुरारिश्च (अनर्घ. ४. ६६)। विस्तारे यथा—'ऊरीकृत्य पटं धारयति', विस्तार्य पटं धारयतीत्यर्थः[1] ॥ [2]स्वर्गे परे च लोके स्वः। स्वर्गे यथा—स्वर्लोकः। परलोकमात्रे यथा—'स्वर्गतस्य क्रियाः कार्याः' इति। '[3]स्वर्यातस्य पुत्रस्य पत्नी तद्भागमर्हति' इति च। शेषे—'स्वराकाशे शर्मणि च' इति। आकाशे यथा—स्वर्गङ्गा। आकाशगङ्गेत्यर्थः। शर्मणि सुखे यथा—स्वं सुखं गम्यतेऽत्रेति स्वर्गः[4] ॥ वार्तासंभाव्ययोः किल। वार्तायां यथा—'जघान कंसं किल वासुदेवः' ([5]महाभाष्ये) इति। संभवे यथा—'गुरून् किलातिशेतेऽर्जुनः' इति। शेषे—'अलीके च किल स्मृतः न्यक्कारेऽनुचिते हेतौ' इति। अलीके यथा—'अजानानः किल पृच्छति' इति। न्यक्कारे यथा—त्वं किल योत्स्यसे। अनुचिते यथा—एवं किल गुरून् वक्तुमनर्हो भवान्। हेतौ यथा—'शीघ्रं पाकस्त्वया कार्यः क्षुधा किल भविष्यति'। इति[6] ॥ २५४ ॥

1 ऊयते। 'ऊयी तन्तुसताने'। बाहुलकाद्ररीक्, रीक् च। वयते ररीक्। सम्प्रसारणम्
2 स्वर्गे च परलोके स्व Tv 3 स्वर्या-
(६ ४ १५) इति भा दी (पृ ५१०)
4 स्वरति। 'स्वृ शब्दोपतापयो'। विच्
तस्य ह्यपुत्रस्य इति या स्मृ (२ ८ १३६)
5 Mbh Apte's Dict p 573,
(३ २ ७५) [स्व] इति भा दी (पृ ५१०)
6 किलति। 'किल श्वैत्ये'।
स कण्ठा (पृ ३५)—Ak OBA ed p 336
'इगुपध ' इति क [किल] इति भा दी (पृ ५१०)

(पा) ऊर्य्यूरी—अङ्गीकृतौ त्रयम्। [1]ऊर्य्यूरीशब्दौ ह्रस्वादिरपि स्याताम्। ऊरीशब्दो दीर्घादि ।

उपतापो गदे ताप उत्सर्गस्त्यागदानयो ।
उररी चोररी चोरी विस्तारे ऽङ्गीकृतौ त्रयम् ॥

इति [2]जयकोशपाठाद् ह्रस्वादिरपि ॥ स्वर्गे परे च—सभाव्ययो किल। तन्त्राद् [3]वार्तासभाव्ययोरेव ग्रहणम्। 'सभाव्ये किल वार्तायाम्' इति रभस। 'वार्तायामरुचौ किल' इति त्रिकाण्डशेष (पृ ३७, श्लो १०२०) ॥ २५४ ॥

[1] ऊरर्युररीशब्दौ B3 [2] अजय इति भा दी (पृ ५१०). [3] सभाव्य-सभावयो A1

**निषेधवाक्यालंकारे जिज्ञासानुनये खलु ।**
**समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ।। २५५ ।।**

(वि) निषेधवाक्यालकारजिज्ञासानुनयेषु च ।। 552 ।।
निश्चये नियमे हेतौ खलुशब्द प्रकीर्तित ।

निषेधे यथा—'निर्धारितेऽर्थे लेखेन[2] खलूक्त्वा खलु [3]वाचिकम्' इति (शिशु २. ७०)। वाक्यालकारे यथा—अथो खल्वर्थ । जिज्ञासाया यथा—स[4] खल्वधीते[5] ते पुत्र । अनुनये यथा—'न खलु दूरगतोऽप्यतिवर्तते' इति । निश्चये यथा—'न खल्वनिर्जित्य रघु कृती भवान्' इति (रघु ३ ५१)। नियमे यथा—'प्रवृत्तिसारा खलु मादृशा गिर' इति (किरा १ २५)। हेतौ यथा—'कविरेव तत खलूक्तवान्' इति ।।

समीपोभयत शीघ्रसाकल्याभिमुखेऽभित ।। 553 ।।

समीपे यथा—वाराणसीमभितो भागीरथी । भागीरथीमभित इत्यर्थ । [7]उभयतो यथा—'भेजेऽभित पातुकसिद्धसिन्धो' इति[8] (शिशु ३ ३)। शीघ्रे यथा—अभित शत्रुरायाति । साकल्ये यथा—भुङ्क्तेऽन्नमभितोऽतिथि । अभिमुखे यथा—'अभितो हिंस्रको दन्ती मामेव परिधावति' इति ।। २५५ ।।

[1] प्रकीर्त्यते K2, K3,प्रकथ्यते K4 [2] लेख्येन K4, K6 [3] वाचकम् K2, K3 [4] न for स K3 [5] स्वधीते K5 [6] K3 adds पाठान्तरमपि—कविरेव स तत [7] उभयत इत्यर्थ K5 [8] K4 adds अभूतपूर्वां रचमम्बुराशे

(विव.) निषेधवाक्यालंकारे—खलु । निषेधे यथा—'निर्धारितेऽर्थे लेख्येन[1] खलूक्त्वा खलु वाचिकम्' इति (शिशु. २. ७०)। वाक्यालंकारे यथा—'अयं खलु महाराज इत एवाभिवर्तते' इति । जिज्ञासाया यथा—को नु खल्वयम् । अनुनये यथा—'न खलु न खलु मुग्धे साहस कार्यमेतत्' इति (नागा. २. ११)। शेषे—'विषादे[2] निश्चये हेतौ' इति । विषादे यथा—'न विदीर्ये कठिनाः खलु स्त्रियः' इति (कु. स. ४. ५)। निश्चये यथा—तत् खलु देयम्, निश्चयेन

देयमित्यर्थः। हेतौ यथा—ततः खलु[3]; तस्माद् हेतोरित्यर्थः ॥ समीपोभयतः—अभिमुखेऽभितः। समीपे यथा—पर्वतमभितो ग्रामः। उभयत इत्यस्यार्थे यथा—नगरमभितो नदी। [4]उभयत्रापि 'पर्यभिभ्यां च' (५. ३. ९) इति तसिल्प्रत्ययः, 'अभितः[5] परितः...' इत्यादिना (वा. १. ४. ४८) द्वितीया च। शीघ्रे यथा—आगच्छ [6]त्वामभितः सार्थो दूरं यास्यति। साकल्ये यथा—व्याप्नोत्यभितो रजः, समन्ताद् रजो व्याप्नोतीत्यर्थः। अभिमुखे यथा—अभितः समापतन्तमरिमपश्यत्; आभिमुख्येनापतन्तं शत्रुमपश्यदित्यर्थः ॥ २५५ ॥

[1] लेखेनेति मु ग्र (पृ ५०)　　[2] नियमे Gm1, Tj1　　[3] खलति। 'खल सचये'। बाहुलकादु [खलु] इति भा दी (पृ ५१०)　　[4] उभयत्राप्यभिशब्दयोगाद् द्वितीया B5, B6　　[5] अभिमुखमप्रमस्य। 'पर्यभिभ्या च' इति तसिल् इति भा दी. (पृ ४२९)　　[6] त्वम् B6

(पा) निषेधवाक्यालंकारे—खलु। क्रमेणोदाहरणानि—

'कुपित्वा खलु वामाक्षि कोप क खलु किंकरे।
जाने खलु कृपालु[1] त्वा वाच देहि खलु प्रिये ॥

इति ॥ समीपोभयत —अभिमुखेऽभित ॥ २५५ ॥

[1] कृपालुस्त्वम् A1

**नामप्राकाश्ययोः प्रादुर्मिथोऽन्योन्यं रहस्यपि।**
**तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ॥ २५६ ॥**

(वि) जन्मप्रकाशयो प्रादुर्मिथोऽन्योन्यरहस्ययो।

जन्मनि यथा—'प्रादुरासीच्चक्रपाणिर्देवक्या वसुदेवत' इति। प्रकाशे यथा—'प्रादुरासीद् वसुधरा' इति (रघु १५ ८३) ॥ मिथ, अन्योन्यार्थे यथा—वसिष्ठकौण्डिन्यमैत्रावरुणा मिथो न विवाह्या[1]। रहस्ये यथा—'वक्तु मिथ प्राक्रमतैवमेनम्[2]' इति (कु स ३ २) ॥

अन्तर्धाने तिर्यगर्थे तिर इत्यव्यय भवेत् ॥ 554 ॥

अन्तर्धाने यथा—'अभिवृष्य[3] मरुत्सस्य कृष्णमेघस्तिरोदधे' इति (रघु. १०. ४८)। तिर्यगर्थे यथा—'तिरस्करिण्यो जलदा भवन्ति' इति (कु स. १ १४)॥

निन्दाविस्मययोर्हा स्यादार्तौ शोकविषादयोः ।

निन्दाया यथा—हा कदन्नमुपभुञ्जते द्विजाः। विस्मये यथा—हा गजेन हतः सिंहः। आर्तौ यथा—हा हतोऽस्मि मन्दभाग्यः । शोके यथा—'हा लक्ष्मणेति [4]गदित विनिशम्य सीता' इति । विषादे यथा—'[5]हा हा कृष्णो राजपुत्र रथस्थः' इति ॥ २५६ ॥

[1] विवाहयेयु K5 [2] एनमेवम् इति मु ग्र (पृ २३) [3] अभिपिच्य K5
[4] कथितम् K5. [5] हा ह कृष्ण K5

(विव.) नामप्राकाश्ययोः प्रादुः । नाम नामधेयमिति सुबोधिनीकारः। यथा—'प्रादुर्भावा हरेर्दश'। मत्स्यकूर्मादिरूपेण दश नामानीत्यर्थः। सुभूतिचन्द्रस्तु व्याचष्ट—नाम्नि नामशब्दार्थे संभावनारूपे प्रादुःशब्दः[1]। तथा च—'प्रादुः स्फुटे च संभाव्ये' इत्यजयः। प्राकाश्ये यथा—'प्रादुरास प्रभाकरः' इति । केचित्तु—'जन्मप्राकाश्ययोः प्रादुः' इति पठन्ति। जन्मनि यथा—'प्रादुर्भूतः सुतस्तस्य' इति ॥ मिथोऽन्योन्यं रहस्यपि । अन्योन्यमित्यर्थे यथा—भारद्वाजकपिगर्गाणां मिथो विवाह्याः । रहसि यथा—'[2]मिथस्त्वदाभापणलोलुपं मनः' इति (शिशु. १. ४०); 'मिथः[3] कृते मन्मथ एव साक्षी' इति च ॥ तिरोऽन्तर्धौ तिर्यगर्थे । अन्तर्धे यथा—'विश्वयोनिस्तिरोदधे' इति (कु. सं. २. ६२) । तिर्यगर्थे यथा—'गतं तिरश्चीनमनूरुसारथेः' इति (शिशु. १. २)[4]॥ हा विषादशुग्र्गार्तिषु । विषादे यथा—'पुण्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः' इति (महावीर. २. २०)। शुचि शोके यथा—'हा प्रिये जानकि' इति (उत्तर. ३. १२-)। आर्तौ यथा—'हा हतोऽस्मि मन्दभाग्यः' इति । शेषे—'विस्मये च जुगुप्सायां हा मतः' इति । विस्मये यथा—'हा गजेन हतः सिंहः' इति । जुगुप्सायां यथा—'[5]हा कदन्नमुपभुञ्जते द्विजाः' इति ॥ २५६ ॥

[1] प्रान्दति । 'अदि वन्धने' । बाहुलकादुस् । आगमशास्त्रस्यानित्यत्वान्न नुम् [प्रादु] इति भा दी (पृ ५१०) [2] मिथस्त्वदाभापण° Gm3, Tj2 [3] मेथति । 'मेथृ सङ्गमे' । असुन् (उ ४ १८९) । पृषोदरादित्वाद् ह्रस्व [मिथ] इति भा. दी (पृ ५१०)

[4]तरति। 'तृ'। असुन (उ ४ १८६)। 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' इति गुणविषये इर् [तिर] इति भा दी (पृ ५१०) [5]जहाति। 'ओहाक् त्यागे'। क्विप् (३ २ १७८) इति भा दी (पृ ५११)

(पा) नामप्रकाशयो प्रादु। नामप्रकाशौ सभाव्यस्फुटार्थकौ। 'प्रादु स्फुटे च सभाव्ये' इति जयकोश ॥ मिथोऽन्योन्य—हा विपादशुर्गातिपु ॥ २५६ ॥

## अहहेत्यत्यद्भुते खेदे हि हेतावधारणे ॥

## इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने नानार्थवर्गः

(वि) अहहेत्यव्यय[1] प्रोक्त खेदनाश्चर्ययोरपि ॥ 555 ॥

खेदने यथा—'अहह कष्टमपण्डितता विधे' इति (-भर्तृहरि ३४२)। आश्चर्ये यथा—'अहह महता नि सीमानश्चरित्रविभूतय' इति[3] (भर्तृ ७३)। अहहा इति वा पदच्छेद। 'अहहा भिक्षमाणोऽपि क्षुधा सपीड्यते जन' इति ॥

अवधारणहेत्वोर्हि स्फुटार्थे पादपूरण।

अवधारणे यथा—चन्द्रो हि शीत। हेतौ यथा—कृतिमन्तो हि कार्यत। स्फुटार्थे यथा—'तथा हि सर्वे तस्यासन्'[4] इति (रघु १ २६)। पादपूरणे यथा—'रामो हि लक्ष्मण वाक्यमवादीद् विहसन्निव' इति ॥

इति श्रीवङ्गलकामयभट्टोपाध्यायसूनुलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ

अव्ययनानार्थवर्ग सपूर्ण

[1] द्वयम् $K_4$, $K_8$ [2] Kosambi s edn p 133 [3] ibid, p 30

[4] $J_2$ adds परार्थैकफला गुणा

(विव) अहहेत्यद्भुते खेदे। अद्भुते यथा—'अहह महता नि सीमानश्चरित्रविभूतय' इति (भर्तृ ७३)। खेदे यथा—'अहह कष्टमपण्डितता विधे' इति (भर्तृ ३४२)। अहहा इति दीर्घान्तो वा [1]पदच्छेद। यथा—'[2]अहहा भिक्षमाणोऽपि क्षुधा सपीड्यते जन' इति ॥ हि हेतावधारणे। हेतौ यथा—'जानाम्यग्निरिहास्तीति महान् धूमो हि दृश्यते' इति। अवधारणे

यथा—'परुषोक्तिः कथं तस्मिन् ब्रूहि त्वं हि तपोधन' इति। त्वमेव ब्रूहीत्यर्थः। शेषे—'हि स्फुटार्थे विनिश्चित्यां पादपूरे प्रकीर्तितः' इति। स्फुटार्थे यथा—'तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः' इति (रघु. १. २९)। निश्चये यथा—'दाक्ष्यं हि सद्यः फलदम्' इति। पादपूरणे यथा—[3]'उत्फुल्लपद्मकेसरपरागगौरद्युते मम हि गौरि' इति[4] (नागा. १. १३)॥

इति नानार्थाव्ययवर्गः[5]

[1] Gms, Tv omit पद°. [2] अह जहाति, जिहीते वा। 'हाक्', 'हाङ्'। 'अन्येभ्योऽपि . . ' (वा ३ २ १०१) इति ड.। पृषोदरादित्वाद् मलोप। अहहा। तत्र क्विप् इति भा दी (पृ ५११). [3] Tv adds 'अभिवाञ्छित प्रसिध्यतु भगवति युष्मत्प्रसादेन' इति [4] हिनोति, 'हि गतौ'। क्विप् (३ २. ७५)। सज्ञापूर्वकत्वाद् गुणाभाव। क्विपि (३ २ १७८) तुगभावो वा [हि] इति भा. दी (पृ. ५११). [5] E6 adds अत्र श्लोकसख्या १८.

(पा) अहहेत्यद्भुते—अवधारणे। 'हि स्याद् विशेषणे हेतौ हि हेतावधारणे' इति वैजयन्ती (पृ २८४, श्लो. ६)। अनुक्तम्—'स्यात् प्रश्नोत्तरयोस्तर्हि प्रसिद्धयारम्भयोर्हं वै' इति॥

इति[1]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजातेऽव्ययनानार्थवर्गः

[1] °नागनाथनारसिंह° A1

## ४. अव्ययवर्गः

चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः।
मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः॥ १॥

(वि.) [1]अथाव्ययवर्गमुपक्रमते चिरायेति—अत्राद्यशब्देन [2]प्रथमातृतीयापञ्चमीविभक्तयन्तप्रतिरूपका[3] अव्यया गृह्यन्ते। अत्र [4]क्रमेणोदाहरणानि—'चिराय सतर्प्य समिद्भिरग्निम्' इति (रघु. १३. ५५)। 'चिररात्राय सचिनम्' इति। 'चिरस्य दृष्ट्वेव मृतोत्थितेव' इति (कु. स. ७. ४)। 'चिरतनम्नावदभिन्यवीविशत्' इति (शिशु. १. १५)। 'चिरेण नामि

प्रथमोदबिन्दव ' इति (कु स ५ २४) । ' चिरात् सुतस्पर्शरसज्ञता ययौ ' इति (रघु ३ २६) ॥ [5]मुहुर्मुहु —असकृत्समा । अत्रोदाहरणानि—' अवेक्षमाण महती मुहुर्मुहु ' इति (शिशु १ १०) । 'पुन पुन सूतनिषिद्धचापलम्' इति (रघु ३ ४२) । [6]' वन्यवृत्तिरिमा शश्वत्' इति (रघु १ ८८) । ' अभीक्ष्णमक्षुण्णतयातिदुर्गमम् ' इति (शिशु १ ३२) । ' असकृदनवगीत गीतमाकर्णयन्त ' इति (शिशु ११ १०) । एतानि मुहुरर्थे वर्तन्ते ॥ १ ॥

[1] °अव्ययपर्यायवर्ग° K5　　[2] °तृतीयया° K4　　[3] °विभक्तयन्तर° K6
[4] K5, K6 omit क्रमेण　　[5] मुहु पुन पुन J2　　[6] वन्यवृत्तीनिमान K4

(विव ) चिराय चिररात्राय—चिरार्थका । अर्थकार्थाव्यया उच्यन्ते । नानार्थाव्यया उक्ता । अर्थकार्थानव्ययानाह—चिरायेति । अत्र आद्यशब्देन चिर चिरात् चिरेणेति विभक्तचन्तप्रतिरूपका अव्यया गृह्यन्ते । चिरार्थका चिरकालार्थका इत्यर्थ । चिरार्थका इत्युक्तिभङ्ग्या चिरशब्दोऽव्ययोऽप्यस्तीति सूचितम् । अत एव 'सायचिरप्राह्णे　　' (४ ३ २३) इत्यत्र वृत्तावुक्तम्— सायादयो न व्यया अपीति (काशिका १, पृ ३३६)[1] । तथा च चिरपरिचय, चिराय इत्यादय प्रयोगा द्रष्टव्या । क्रमेणोदाहरणानि—चिराय[2] यथा— 'चिराय सतर्प्य समिद्भिरग्निम्' इति (रघु १३ ५५) । 'सचित चिररात्राय' इति। 'चिरस्य दृष्टेव मृतोत्थितेव' इति (कु स ७ ४) । 'चिर न सहते स्थातु परेभ्यो भेदशङ्कया' इति (शिशु २ २६) । 'चिरण नाभि प्रथमोदबिन्दव ' इति (कु स ५ २४) । 'चिरात् सुतस्पर्शरसज्ञता ययौ' इति (रघु ३ २६) ॥ मुहु पुन —असकृत्समा । यस्या कस्याश्चित् क्रियाया अनुपरत एवाभ्यासवृत्ते [3] एतानि नामानि। यथा—'शरासनज्या मुहुराममर्श' इति (कु स ३ ६४) । 'स्रस्ता नितम्बादवलम्बमाना[4] पुन पुन [5]केसरदामकाञ्चीम्' इति (कु स ३ ५५) । 'शश्वत् प्रियमय ब्रूते' इति । अभीक्ष्णमिति मकारान्तमव्ययम् । यथा—' अभीक्ष्णमक्षुण्णतयातिदुर्गमम् ' इति (शिशु १ ३२) । 'असकृद् भक्तिहित हिताभिलाषी' इति । शेषे—' वारवार शश्वदर्थे ' इति । 'वारवारेण चेष्यते' इति त्रिकाण्डशेषश्च (पृ ३७, श्लो १०२३) । यथा— 'वार वार तिरयति दृशावुद्गतो बाष्पपूर ' इति (मालती १ ३५) । 'आस्ते नताननस्तूष्णीं वार वारेण निश्वसन्' इति ॥ १ ॥

[1] सायमिति मकारान्त पदमव्यय, ततोऽव्ययत्वादेव सिद्ध प्रत्यय । यस्तु स्यतेरन्त कर्मणो घञि सायशब्दस्तस्येद मकारान्तत्व प्रत्ययसनियोगेन निपात्यते इति काशिका [2] चिरमयते । अय गतौ । 'कर्मण्यण्' [चिराय] इति भा दी (पृ ५११) [3] अनुपरमेणाभ्यावृत्ते B6 [4] अवरोहयन्ती $Gm_3$, Tv [5] केसरपुष्प° इति मु ग्र (पृ ३४)

(पा) चिराय चिररात्राय—चिरार्थका । एते चिरार्थका स्यु । चिरार्थो दीर्घकाल । 'चिरेण चिररात्राय दीर्घकाले चिराच्चिरम्' इति वैजयन्ती (पृ २८७, श्लो १) ।। मुहु पुन —असकृत्समा । एते पौन पुन्यार्थका । वारवारेण वारवार शब्दावपि[1] । 'वारवार शश्वदर्थे वारवारेण चेष्यते' इति त्रिकाण्डशेष (पृ ३७, श्लो १०२३) । नपुसकभूतो[2]ऽभीक्ष्णशब्दोऽप्यस्ति । अभीक्ष्णमव्यय वा स्यात् पौन पुन्यभृशार्थयो ' इति वैजयन्ती (पृ २५०, श्लो २) ।। १ ।।

[1] $A_1$ adds स्त $C_1$ स्याताम् [2] °भूताभीक्ष्ण° $A_1$

स्राग्झटित्यञ्जसाह्नायद्राङ्मङ्क्षुसपदि द्रुते ।
बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरे ।। २ ।।

(वि) स्राग्झटिति—द्रुते । एतानि द्रुतार्थे वर्तन्ते । स्राक्—[1]'स्राग्वयो याति देहिनाम्' । झटिति—[2]'सुतशतमत्यन्तदुर्लभ[3] झटिति । अञ्जसा —अञ्जसा याति तुरग । अह्नाय—[4]'अह्नाय तावदरुणेन तमो निरस्तम्' इति (रघु ५ ७१) । द्राक्—'द्राग्भविष्यति सुख तव प्रिये' इति । मङ्क्षु—'मङ्क्षूदपाति परित पटलैरलीनाम्' इति (शिशु ५ ३७) । सपदि—'वचसस्तस्य सपदि क्रिया केवलमुत्तरम्' इति (शिशु २ २२) ।। बलवत्सुष्ठु —निर्भरे । एतानि निर्भरार्थे वर्तन्ते । अत्रोदाहरणानि । बलवत्—'पुनर्वशित्वाद् बलवन्निगृह्य' इति (कु स ३ ६६) । सुष्ठु—सुष्ठु पीत मया घृतम् । किमुत—किमुताद्य कृत कार्यम् । सु—सुवृष्टि सस्यवर्धनी[5] । अति—'अतिवृष्टिरनावृष्टि' इति । अतीव—अतीव शोभते राजा ।। २ ।।

[1] $K_5$ omits 4 lines [2] $J_2$ omits 3 lines [3] °दुर्भवम् $Pt_2$ [4] $K_4$ adds यावत् प्रतापनिधिराक्रमते न भानु [5] °वर्धिनी $J_2$

(विव.) स्राग्झटिति—सपदि द्रुते। स्रागादयः सप्त शीघ्ररूपार्थे। क्रमेण यथा—स्राक् सरन्त्यभिसारिकाः (गणरत्न. पृ. ३६)। झटिति—'आनीय झडिति घटयति [1]विधिरभिमतमभिमुखीभूतः' इति (रत्ना. १. ५)। एव मूर्धन्यवर्गतृतीयमध्याक्षरः। झटितीति वर्गप्रथममध्याक्षरस्त्वपपाठः। अञ्जसा—सुवर्गं लोकमञ्जसा नयति। अह्नाय—'अह्नाय सा नियमजं क्लममुत्ससर्ज' इति (कु. सं. ५. ८६)। द्राक्—'पाताले द्रागहिभयमयास्त्येव नित्यम्' इति। सपदि[2]—मङ्क्षु—'मङ्क्षूदपाति परितः पटलैरलीनाम्' इति (शिशु. ५. ३७)। सपदि—'वचसस्तस्य सपदि क्रिया केवलमुत्तरम्' इति (शिशु. २. २२)। झगितीति कण्ठ्यवर्गतृतीयमध्याक्षरोऽप्यस्ति। तथा च गणरत्नमहोदधौ द्वयमप्युक्तम्—'अह्नाय मङ्क्षु झगिति[3] झडिति द्राक् स्राक् शीघ्ये' इति। बलवत्—निर्भरे। बलवदादिषट्कं निर्भरेऽतिमात्रे। क्रमेण यथा—'बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः' इति (अभि. शा. १. २)। सुष्ठु—सुष्ठु पीतं मया घृतम्। किमुत—किमुत ब्रह्मविद् याज्ञवल्क्यः। गणरत्नमहोदधौ—'किंपुनरर्थेऽतिशये [4]प्रश्ने पक्षान्तरेऽपि किमुत' इति (पृ. ७)। सु—सुवृष्टिः सस्यवर्धनी। अति—अतिवृष्टिरभूत्। अतीव—अतीव क्षुधितोऽतिथिः ॥ २ ॥

[1] Gm3, Tv omit अभिमतम्
[2] Tv adds द्रुत गृह्णाति सपदि व्याकरोति
[3] झगितीत्यपि केचित् इति मु ग्र (पृ ३५)
[4] प्रश्ने इति मुद्रितग्रन्थे न दृश्यते (पृ ७)

(पा) स्राग्झटिति—सपदि द्रुते। एते शीघ्रार्थे [1]स्युः ॥ बलवत्—निर्भरे। एते षट् निर्भरे इति साधिकार्थे [2]वर्तन्ते। 'किमुतातीव [3]बलवदतिसुष्ठु सु साधिके' इति वैजयन्ती (पृ २८७, श्लो ४) ॥ २ ॥

[1] वर्तन्ते A1　[2] स्युः B3, C1　[3] बलवत् स्वति सुष्ठु च साधिक इति मु ग्र॰

**पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने ।**
**यत्तद्यतस्ततो हेतावसाकल्ये तु चिच्चन ॥ ३ ॥**

(वि) पृथग्विना—वर्जने। अत्रोदाहरणानि। पृथक्—किंचिद् दत्त्वा पृथक्क्रियाम्। विना—'क्षणमप्युत्सहते न मा विना' इति (कु स ४ ३६)। अन्तरेण सुत नास्ति सुख ससारिणा[1] भुवि। ऋते—'ऋते रवे क्षालयितु

क्षमेत क ' इति (शिशु. १ ३८) । हिरुक्—हिरुक् कर्मणा मोक्ष । नाना—नाना विष्णु मोक्षदो नास्ति देव । एतानि वर्जनार्थे वर्तन्ते ॥ यत्तद्यतस्ततो हेतौ। अत्रोदाहरणानि । यत्—'[2]व्यावृत्ता यत् परस्वेभ्यः' इति (रघु. १. २७) । तत्—'तदिद परिरक्ष शोभने भवितव्यप्रियसगम वपुः' इति (कु. सं. ४. ४४) । यत —'[3]यतो बुधैः सर्वगतस्त्वमुच्यसे ' इति (कु. स ५ ५८) । 'यतो गङ्गाम्भसि स्नातस्ततो निष्कल्मषो [4]जन·' इति । एतानि हेत्वर्थे वर्तन्ते ॥ असाकल्ये तु चिच्चन । अत्रोदाहरणे । चित्—करोति किंचिदभ्यासात् । चन—'अपात्रे कुशलैर्देय न किंचन धन सदा' इति । एते असाकल्यार्थे वर्तेते ॥ ३ ॥

[1] ससारिण J2 [2] व्यापृता K4; K2 adds श्रुतौ तस्करता स्थिता [3] यदा बुधै इति मु ग्र (पृ ६३) [4] नर J2, K3

(विव.) पृथग्विना—वर्जने । पृथगादिषट्कं वर्जनरूपार्थे । पृथग् देवदत्तम् । पृथग् देवदत्तेन । पृथग् देवदत्तात् (काशिका. १, पृ. ११७) । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' (२. ३. ३२) इति द्वितीयातृतीयापञ्चम्यः । एवं विनानानाशब्दयोर्योगेऽपि विभक्तित्रयम् । त्वामन्तरेण । 'अन्तरान्तरेण युक्ते' (२. ३. ४) इति द्वितीया । ऋते—'ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम्[1]' इति (कु. सं. १. ५२) । 'अन्यारादितरर्ते . . .' इत्यादिना (२. ३. २९) ऋतेयोगे पञ्चमी । हिरुक्—'न[2] हिरुक् कर्मणां मोक्षः' इति । (गणरत्न. पृ. ३९) । कर्मणां वर्जने सति मोक्षो नास्तीत्यर्थः । नाना—[3]'नाना नारीं निष्फला लोकयात्रा' (गणरत्न. पृ. ४१), 'नाना विष्णुं मोक्षदो नास्ति देवः' । अत्र महोदधौ—'पृथग्विना च वर्जने नानानेकविनार्थयोः, अन्तरान्तरेण विनार्थौ [4]हिरुग्वर्जने' इति (पृ. ४१, पृ. ३९) ॥ यत्तद्यतस्ततो हेतौ । 'यद् विद्यासु प्रगल्भोऽसि तत्सर्वैरपि पूज्यसे' । 'यतो मेघाः समुन्नादास्ततो वृष्टिर्भविष्यति' इति ॥ असाकल्ये तु चिच्चन । असाकल्ये परितश्छिन्नपरिमाणे यथा । चित्—अत्र केचिदाहुः । चन—स्मृतिरन्येति केचन ॥ ३ ॥

[1] Gm3, Tv omit the latter half [2] 'न' मुद्रितग्रन्थे न दृश्यते (पृ ३९). [3] Vopadeva (Apte's Dict p 887) [4] 'हिरुगिति वियोगहिंसावर्जनेषु' इति मु. ग्र (पृ ३९)

(पा ) पृथग्विना—वर्जने । एते पट् वर्जनार्थे ।। यत्तद्यतस्ततो हेतौ । एते च हेत्वर्थे ।। असाकल्ये तु चिच्चन । एतौ द्वौ असाकल्यार्थे ।। ३ ।।

**कदाचिज्जातु सार्धं तु साकं सत्रा समं सह ।**
**आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ।। ४ ।।**

(वि ) कदाचिज्जातु । अत्रोदाहरणे । ' कदाचिदुपविष्टेन [1]ज्ञायते जातु न श्रम ' इति । एते [2]एकदार्थे वर्तेते ।। सार्धं तु साक सत्रा सम सह । अत्रोदाहरणानि । सार्धम्—' सार्धमुद्धवसीरिम्याम् ' इति (शिशु २ २) । साकम्—पत्न्या साक पतिर्भुङक्ते । सत्रा—सत्रा कलत्रेण सुख समश्नुते । समम्—' सम वधूभिर्वलभीर्युवान ' इति(शिशु ३ ५३)। सह—' [3]नि श्वासधूम सह रत्नभाभि ' इति (शिशु ४ १) । एतानि सहार्थे वर्तन्ते ।। आनुकूल्यार्थक प्राध्वम् । ' सव्येतर प्राध्वमित प्रयुङक्ते ' इति (रघु १३ ४३) । एतदानुकूल्यार्थे वर्तत ।। व्यर्थके तु वृथा मधा । वृथा—' प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ' (रघु २ ३४) । मुधा—' तत्र भ्रमत्येव मुधा पडङ्घ्रि ' इति । एते व्यर्थकार्थे[4] वर्तेते ।। ४ ।।

[1] जायते J2, जानते　श्रमम् K6　[2] कदार्थे K3, K4　[3] निश्वास° J2 K4
[4] व्यर्थार्थे K5

(विव ) कदाचिज्जातु । अनियतकालस्यैते नामनी । यथा—'कदाचिदासन्नसखीमुखेन सा' इति (कु स ५ ६) । जातु—'तत्रानिश निषण्णाप्ता[1] जानकी जातु न श्रमम्' इति ।। सार्धं तु साक सत्रा सम सह । पञ्चैतानि सहेत्यस्य नामानि । सार्धम्—'सार्धमुद्धवसीरिम्याम्' इति (शिशु २ २) । साकम्—'साक शक्तिधरेण तत्रभवतो देवाद् भवानीपते ' इति । सत्रा— [2]सत्रा कलत्रमित्रैश्च गार्हस्थ्य सुखमश्नुते' इति । समम्—'सम वधभिर्वलभीर्युवान ' इति (शिशु ३ ५३) । सह—पुत्रेण सहागत पिता (काशिका १, पृ ११५) । एतैर्योगे 'सहयुक्तेऽप्रधाने' (२ ३ १९) इति तृतीया । समक सजूरिति शब्दावप्यत्र । 'समक चतुरङ्गसेनया', 'सजूर्देवं ' इति ।। आनुकूल्यार्थक प्राध्वम यथा—'सव्येतर प्राध्वमित प्रयुङक्ते' (रघु १३ ४३) । अत्र 'प्राध्व बन्धने' (१ ४ ७८) इति बन्धनहेतुकमानुकूल्यमभिप्रेतम् । ततश्च सव्येतर भुजमङगुलि-

बन्धनेनानुकूल कृत्वा प्रयुङ्क्ते इत्यर्थ ।। व्यर्थके तु वृथा मुधा । यथा—
'वृथा कृथा[3] मानिनि मा परिश्रमम्' इति । मुधा—'मुग्धे मुधा मा कुप' इति ।
अय वर्गचतुर्थोपध इत्याहु. ।। ४ ।।

[1] निषण्णास्ते B6, निषण्णा ते Gm3 [2] 'सत्रा पुत्रकलत्रमित्रनिवहे' *Rām ca* 2 94 (Apte's Dict p 1613) [3] क्रिया Tv

(पा) कदाचिज्जातु । एतौ [1]द्वौ [2]विशिष्याज्ञातकालार्थकौ । 'ओह-
माटु' ।। साधँ तु साक सत्रा सम सह । एते पञ्च[3] साहित्यार्थे । 'कूडुट' । क्वचित्तु
सत्राशब्द सत्रमिति मान्तोऽपि । 'समक तु सजू साक साधँ [4]सत्र सम सह' इति
वैजयन्ती (पृ २८८, श्लो १७) ।। आनुकूल्यार्थक प्राध्वम । [5]प्राध्वशब्द
आनुकूल्यार्थक । नम्रार्थेऽपि स्यात् । 'प्राध्व नम्रानुकूलयो' इति विश्व (पृ
१८६, श्लो ४६) ।। व्यर्थके तु वृथा मुधा । व्यर्थक इति निष्फलार्थे ।। ४ ।।

[1] B3 omits द्वौ [2] युगपदर्थकौ A1 [3] B3, C1 omit पञ्च [4] सत्रा इत्येव मु ग्र [5] प्राध्वमिति शब्द B3

आहो उताहो किमुत विकल्पे कि किमूत च ।
तु हि च स्म ह वै पादपूरणे पूजने स्वति ।। ५ ।।

(वि) आहो उताहो—किमुत च । अत्रोदाहरणानि । आहो—'आहो
स्विदासारयदच्युतोऽङ्घ्रात्' इति । उताहो—'उताहो ब्रह्म [1]चोच्यते' इति ।
किमुत—'किमुत त्व शिवो ब्रह्मा विष्णुर्वा यदि देवराट्' इति । किम्—
स्थाणुरय कि पुरुष । किमु—किमु ते कार्यमुतान्यदीयकार्यम् । उत—'उत येन
विभर्षि तत्' (कु स ६ २३) । एतानि विकल्पार्थे वर्तन्ते ।। तु हि च स्म ह वै
पादपूरणे । अत्रोदाहरणानि । तु—[2]रामस्तु लक्ष्मण प्राह । हि—अह हि यास्ये
नगरम् । च—स च प्राह च राजानम् । स्म—मया स्म भुक्त सहसा[3] । ह—
राम प्राह ह लक्ष्मणम् । वै—तेन वै राक्षसो हत । एतानि पादपूरणार्थे वर्तन्ते ।।
पूजने स्वति । सु—[4]सुपन्था । अति—अतिपन्था । एते[5] पूजने वर्तेते ।। ५ ।।

[1] ब्रह्म उच्यते J2 [2] K5 omits two lines [3] K5 K6 omit. [4] सुपथ K6 [5] एतौ J2 K3.

(विव.) आहो उताहो—किमुत च । यथा—'स्थाणुरयमाहो पुरुषः' इति (गणरत्न. पृ. १०) । उताहो—'परमात्माथवानन्त उताहो ब्रह्म उच्यते' इति । किमुत—स्थाणुरयं किमुत पुरुषः । 'शब्दः किं [1]नित्योऽनित्यो वा किमु' इति द्व्यक्षरो निपातः । यथा—'उत मुखं सुदृशः किमु वारिजम्' इति । आहो इति पदं दीर्घादि ह्रस्वादि च ॥ [2]इत्यादिषट्क [3]वितर्कसंशये वर्तते इत्यर्थः । आहो इति पदं दीर्घादि ह्रस्वादि च ॥ तु हि च स्म वै पादपूरणे । श्लोकपादे सार्थकाक्षरैरपरिपूरणे सति छन्दसःपूर्तये प्रकृतोपयुक्तार्थपरत्वाभावेऽपि स्तोभाक्षरवत् [4]प्रयोक्तव्या इत्यर्थः । यथा—आख्यास्यामि तु ते वार्ताम् । हि—'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि' इति (नागा. १. १३) । च—स च प्राह च राजानम् । स्म—'इति ह स्माहुराचार्याः' [5] । वै—'यो वै युवाप्यधीयानः' इति (म. स्मृ. २. १५६) ॥ पूजने स्वति । यथा—सुपन्थाः, अतिपन्थाः इति । 'न पूजनात्' (५. ४. ६९) इति समासान्तप्रतिषेधः ॥ ५ ॥

[1] नित्यम् Gm3, Tv [2] B6 omits इत्यादि [3] विकल्पे Tj1, Tj2 [4] B5 adds तावत् [5] सर कण्ठा (पृ ३७) इति स्वामिव्याख्याने दृश्यते (पृ ३३८), मुद्रितग्रन्थे तु 'इति स्मोपाध्याय कथयति' इति दृश्यते (पृ ३७)

(पा ) आहो उताहो—किमुत च । एते षड् विकल्पार्थका । स्थाणुरयमाहो[1] पुरुष । [2]ह्रस्वादिश्च दृष्ट । '[3]आहो उताहो च विकल्पार्थे प्रयोक्तृभि ' इति भागुरि ॥ तु हि च—पादपूरणे । एते षट् पादपूरणार्थका ॥ पूजने स्वति । एतौ पूजनार्थे ॥ ५ ॥ '

[1] अहो B3 [2] दीर्घादि च A1 [3] अहो A1

**दिवाह्नीत्यथ दोषा च नक्त च रजनाविति ।**
**तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥ ६ ॥**
**स्युः पाट् प्याडङ्ग हे है भोः समया निकषा हिरुक् ।**

(वि ) दिवाह्नीति । दिवा—'केचिद् दिवा तथा रात्रौ' (देवीमा १ ३६) । एतद् [1]अह्नीति सप्तम्यर्थे [2]एव वर्तते ॥ अथ दोषा—रजनाविति । दोषा—चोरा दोषा यथु पथि । नक्तम्—'नक्तमापानभूमिषु[3]' इति (कु स ६ ४२) ।

एतौ शब्दौ [4]रजनौ रात्रौ सप्तम्यर्थेऽपि[5] वर्तेते ।। तिर्यगर्थे साचि तिरः । साचि—'चुम्बनायोद्यते पत्यौ वध्वा [6]साचीकृत मुखम्' इति । तिरः—मेघैस्तिरोधीयते तीक्ष्णरश्मि । एतौ तिर्यगर्थे वर्तेते ।। अथ सबोधन—हे है भोः । अत्रोदाहरणानि । पाट्—पाट् प्रिये ह्येहि मेऽन्तिकम् । प्याट्—प्याट् पुत्र पठ सर्वदा । अङ्ग—'श्रूयतामङ्ग वामपि' इति (शिशु. २ १२) । हे—हे वृक्ष कि कम्पसे । है—है वटो भैक्षमाहर[7] । भो—भो रावण तिष्ठ ममाग्रतो युधि । एतानि संबोधनार्थं कथयन्ति ।। समया निकषा हिरुक् । समया—समया पर्वतं नदी । निकषा—आपः खराशु निकषा न्यकार्षुः । हिरुक्—पर्वतस्य हिरुङ् नदी । एते समीपार्थे वर्तन्ते ।। ६ ।।

[1] J2 omits अह्नीति. [2] K5 omits एव. [3] सोपानपङ्क्तिषु इति मु. ग्र (पृ ७६) [4] रजन्यामिति सप्तम्यर्थे K5. [5] J2 omits अपि. [6] साचि कृतम् K4. [7] आरभस्व K6.

(विव.) दिवाह्नीति । दिवेत्येतदव्ययम् अधिकरणे, प्रधान एव वाहः-शब्दार्थे वर्तत इति दर्शयितुमितिकरणं कृतम् । यथा— 'केचिद् दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः' (देवीमा. १. ३६) इति ।। अथ दोषा च नक्तं च रजनाविति । अत्रापि दोषेत्याकारान्तम्, नक्तमिति मकारान्तं चेत्यव्ययद्वयम् । अधिकरणप्रधाने रजनिशब्दार्थे रात्रिरूपे वर्तत इति दर्शयितुमितिकरणं[1] कृतम् । यथा—'दोषा चरन्ति चोरा नक्तंचराः' इति ।। तिर्यगर्थे साचि तिरोऽपि । यथा—'साचि लोचनयुगं नमयन्ती' इति (किरा. ६. ४४) । तिरः—तिरोऽञ्चतीति तिर्यक् । 'तिरसस्तिर्यलोपे' (६. ३. ९४) इति [2]तिरि इत्ययमादेशो भवति ।। अथ संबोधन—हे है भोः । संबोधनमभिमुखीकरणम् । प्याट्—प्याट् पुत्र पठ सत्वरम् । पाट्—शीघ्रमायाहि पाट् प्रिये । केचित्तु प्याट् पाडिति ओष्ठ्यवर्गप्रथममिदं पठन्ति । अपरे तु फाडिति द्वितीयमादिम् अन्तस्थरहितं चाहुः । पाट् पान्थ मद्गृहे भुङ्क्ष्व, फाट् सखे फलितो माकन्दः । अङ्ग— 'मम तावन्मतमिदं श्रूयतामङ्ग यामपि' इति (शिशु. २. १२) । हे—हे वृक्ष कि कम्पसे[3] । है—है वटो भैक्षमाहर । भोः सप्तद्वीपवर्तिनो राजानश्चेतयध्वम् । अयं सकारान्तः, विसर्जनीयरहित ओकारान्तोऽप्यस्ति । यथा—'भो भो जामदग्न्य[4]' इति । ननुयतशब्दायम्यत्र ।।

समया निकषा हिरुक् । एतत् त्रयं सामीप्ये वर्तते । वाराणसी गङ्गां समया । वाराणसी गङ्गायाः समीपे इत्यर्थः । निकषा—⁵' विलङ्घ्य लङ्कां निकषा हनिष्यति ' इति (शिशु. १. ६८) । ' अभितः परितः समया निकषा हा प्रतियोगेऽपि ' (वा १. ४. ४८) इत्युभयत्र द्वितीया । हिरुक्—गङ्गाया हिरुक् वाराणसी । गङ्गासमीपे वाराणसीत्यर्थः। उत्तरत्र ' निकषान्तिके ' (श्लो. १९) इति निकषाशब्दस्य सामीप्यलक्षणार्थे वक्ष्यमाणत्वाद् इह समयादित्रयं मध्यरूपार्थे वर्तत इति सुभूतिचन्द्रः ॥ ६ ॥

[1] ' अथ दोषा . रजनाविति ' इति विवरणाभिमत पाठ　[2] तिर्यातिदेश Tj1, Tj2　[3] कम्पसि B5, B6　[4] भो भो क्षात्रेण विकत्थमाना इति, भो भो पौरजानपदा इति च अ रा (४ ५६, पृ २१९)　[5] B6 adds नदीम्, पयोधिम् Gm1, Gm3

(पा ) दिवाह्नीति । दिवाशब्दोऽह्नीति सप्तम्यर्थे । [1]अहर्मात्रेऽपि वदन्ति ॥ अथ दोषा—रजनाविति । [2]दोषा नक्त शब्दौ रजनाविति सप्तम्यर्थे । रजनीमात्रार्थेऽपि [3]वदन्ति । अनव्ययावित्यपि वदन्ति । तथा च विश्वप्रकाशिका—(पृ. १७१, श्लो ७, पृ १९१, श्लो ६४)—

' दोष स्याद् दूषणे पापे दोषा रात्रौ भुजेऽपि च ' ।

' दोषा रात्रिमुखे रात्रावत्रानव्ययमप्यसौ ' ।

इति । ' वसति स्थाननक्तयो ' इति ध्वनिमञ्जरी ॥ तिर्यगर्थे साचि तिर । तिर्यगर्थे स्त्रीलिङ्ग साचिशब्दोऽप्यस्ति । ' तिर्यक् साचि स्त्रियाम्[4] ' इति रत्नकोश ॥ अथ सबोधन—हे है भो । अये, हन्त, हहो शब्दा अपि स्यु ।

' हहो सिंहणभूप तावकयश कर्पूरमुर्वीभृता

[5]विक्रीणन् कटकेषु जीवति चिर श्रीमान् कलिङ्ग कवि ।'

ति । रेशब्द नीचसबोधनार्थक ।

' रे रे कोकिल मा भज मौन
किंचिदुदञ्चय पञ्चमरागम् ' ॥ इति ।

समया निकषा हिरुक् । एते समीपार्थे ॥ ६ ॥

[1] A1 adds अपरार्धे [2] B3 omits the three words [3] C1 omits वदन्ति
[4] B3 adds पराक् [5] विक्रीडन् A1

अतर्किते तु सहसा स्यात् पुरः पुरतोऽग्रतः ॥ ७ ॥
स्वाहा देवहविर्दाने श्रौषड् वौषड् वषट् स्वधा ।
किंचिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे ॥ ८ ॥

(वि) अतर्किते तु सहसा । यथा—'सहसा विदधीत न क्रियाम्' इति (किरा २ ३०) । अविचारितार्थस्य नाम ॥ स्यात् पुर पुरतोऽग्रत । पुर —'पुर सखीनाममिमीत लोचने' इति (कु स. ५. १५) । पुरत —पुरतोऽवलोक्य । अग्रत —'प्रत्यर्थिनोऽग्रतो लेख्यम्[1]' (या स्मृ २ १ ६) इति । एतान्यग्रसमार्थानि ॥ स्वाहा देव—वषट् स्वधा । अत्रोदाहरणानि । स्वाहा—'अग्नये स्वाहा' (तै स १ ४ २८ १) । श्रौषट्—[2]'अस्तु श्रौषट्' (तै स १ ६ ११ १) । वौषट्—'इन्द्राय वौषट्' ।[3] वषट्—'शिखायै वषट्' (वरद उप २ २) । स्वधा—'स्वधा पितृभ्य' (तै स १ १ ११ १) । एते देवेभ्यो हविर्दाने वर्तन्ते ॥ किंचिदीषन्मनागल्पे । किंचित्—'किंचिद् विहस्यार्थपति वभाषे' इति (रघु २ ४६) । ईषत्—ईषदुष्ण पय पिव । मनाक्—'मनागनभ्यावृत्त्या वा' इति (शिशु २ ४३) । एतान्यल्पार्थे[4] वर्तन्ते ॥ प्रेत्यामुत्र भवान्तरे । 'प्रेत्य स्वर्गे महीयते' (रामा १. १ ६६)। अमुत्र—'इह वामुत्र वैकेपा[5] भावस्तत्र प्रयोजनम्' इति (या स्मृ ३ ४ १३३) । एतौ जन्मान्तरे वर्तेते ॥ ७-८ ॥

[1] B6 adds यथावेदितमर्थिना [2] भवतु J2 [3] वौषडित्येके (आप श्रौ २४ १४ ११) [4] अल्पार्थं वदन्ति K4, K5 [5] वामुत्र चैकेपाम् J2

(विव.) अतर्किते तु सहसा स्यात् । यथा—'सहसा विदधीत न क्रियाम्' इति (किरा. २. ३०) ॥ पुरः पुरतोऽग्रतः । एते त्रयोऽग्रशब्दसमानार्थाः । पुरः—'पुरः सखीनाममिमीत लोचने' इति (कु. सं. ५. १५) । पुरतः—पुरतोऽवलोक्य । अग्रतः—'प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना' इति (या.

स्मृ. २. १. ६) ।। स्वाहा देव—वषट् स्वधा । यदुद्देशेन पुरोडाशादिकं त्याज्यमिति श्रुतिवाक्येषु दृश्यते सा देवता देवताशब्देनोच्यते । एवं चायमर्थः संपन्नः । चोदिता देवतामुद्दिश्य द्रव्यप्रदाने प्रकाश्ये स्वाहादयः शब्दा वर्तन्ते । यथा—'अग्नये स्वाहा' (तै. सं. १. ४. १८. १) । श्रौषट्—'अस्तु श्रौषट्' (तै. सं. १. ६. ११. १) । वौषट्—'सोमस्याग्ने वीहि[1] वौषट्' (ऐ. ब्रा. ३. ५) । वषट्—'इन्द्राय वषट्' (तै. सं. ३. ५. ४. ६) इति । स्वधा—'आ स्वधेत्याश्रावयति, अस्तु स्वधेति प्रत्याश्रावयति' इति (तै. ब्रा. १. ६. ६. ५) ।। किंचिदीषन्मनागल्पे । अल्पेऽल्पार्थे वर्तन्ते । यथा—'किंचिद् विहस्यार्थपतिं बभाषे' इति (रघु. २. ४६) । ईषत्—'ईषदुष्णं पयः पिब' इति । मनाक्—'मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी' इति (शिशु. २. ४३) ।। प्रेत्यामुत्र भवान्तरे । एतद् द्वयं भवान्तरे जन्मान्तरे[2] । प्रेत्येति ल्यबन्तकप्रतिरूपकमव्ययमिदम् । ल्यबन्तत्वे तु जन्मान्तररूपार्थविरोधः स्यात् । भवो[3] मरणानन्तरभाविवर्तमानशरीरासङ्गानन्तरपरिग्रह इत्यर्थः । 'प्रेत्य स्वर्गे महीयते' (रामा. १. १. ६६) इति । अमुत्र—'अमुत्र भविता यत्ते तच्चिन्तय शुभाशुभम्' इति (स्वामी पृ. ३३६) ।। ७-८ ।।

[1] वाहीत्यनु वषट् इति मु ग्र (पृ ५७) [2] Tv adds वर्तते [3] भव B8.

(पा) अतर्किते तु सहसा । सहसाशब्द अतर्कितार्थे । अकस्माच्छब्दोऽपि स्यात् । अकस्मात् कुप्यति भवान् ।। स्यात् पुर पुरतोऽग्रत । एते अग्रार्थे ।। स्वाहा देव—वषट् स्वधा । एते देवताना[2] हविर्दानार्थे ।। किंचिदीषन्मनागल्पे । एते अल्पार्थे ।। प्रेत्यामुत्र भवान्तरे । एतौ भवान्तरार्थे ।। ७-८ ।।

[1] B3, C1 omit the sentence [2] देवताहविर्दाने एते स्यु B3

**वद् वा यथा तथेवैवं साम्येऽहो ही च विस्मये ।**
**मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे ।। ९ ।।**

(वि) [1]वद् वा यथा तथेवैव साम्ये । अत्रोदाहरणानि । वत्—'सोमवत् प्रियदर्शन' (रामा. १. १ १८) इति । वा—'पुष्पेक्षणैर्विम्बितलोचनैर्वा' इति । यथा—'तस्यार्तस्य यथौषधम्' इति (रघु १ २८) । तथा—'यथा तथैवावरजेषु वृत्तिम्' इति (रघु १४ २१) । इव—'इन्दु क्षीरनिधाविव' इति (रघु.

१. १२)। एवम्—'अग्निरेव द्विजो भस्मसात्कुर्यादवमानित.' इति। एतानि[2] साम्ये वर्तन्ते ।। अहो ही च विस्मये । 'अहो मे सौभाग्य मम च भवभूतेश्च भणितम्' इति (भो प्र पृ ५६, श्लो २५३) । ही—'[3]हतविधिलसिताना ही विचित्रो विपाक ' इति (शिशु ११ ६४)। एते विस्मये वर्तेते ।। मौने तु तूष्णी तूष्णीकाम् । तूष्णीम्—'तूष्णीमेता. क्रिया स्त्रीणाम्' इति (या स्मृ १ २ १३)। तूष्णीकाम् —' जपन्नास्ते मुनिर्देवी तूष्णीका जलमध्यग ' इति । एते मौनस्य नामनी ।। सद्य· सपदि तत्क्षणे । सद्य —'सद्यो हतन्यङ्कुभिरस्रदिग्ध व्याघ्रै पद तेपु निधीयते मे' इति (रघु १६ १५)। सपदि—[4]'सारन्धतीका सपदि प्रादुरासन् पुर प्रभो ' इति (कु स ६ ४)। एते[5] तत्क्षणार्थे वर्तेते ।। ६ ।।

[1] वद् वा ' इति विवृत्यभिमत पाठ [2] K5 adds पदानि [3] J2 adds हन्त हन्त [4] 'सपदि प्रदहत्यपेक्षितोऽग्नि ' Pt2 [5] एतौ K2, K4

(विव.) [1]वद् वा यथा तथैवैवं साम्ये । अत्र वच्छब्देन वतिप्रत्ययान्ता गृह्यन्ते । 'तेन तुल्यं क्रिया चेद्वतिः' (५. १. ११५) इति । यथा—'पुंवत्प्रगल्भा'[2] इति (रघु. ६. २०) । 'तत्र तस्येव' (५. १. ११६) इति वतिः । यथा—ब्राह्मण इव ब्राह्मणवत् । वा—' विशेषको वा विशिशेष[3] यस्या श्रियं त्रिलोकीतिलकः स एव' इति (शिशु. ३. ६३) । यथा—'तस्यार्तस्य यथौषधम्' इति (रघु. १. २८) । तथा—' शिवः पूज्यस्तथा गुरुः ' इति । इव[4] —कमलमिव मुखम् । एवम्—यथा गौरेव गवय इति ।। अहो हीति विस्मये । साम्ये अहो इत्यकारप्रश्लेषः। अहो इति द्व्यक्षरो निपातः । 'अहो मे सौभाग्यम्'[5] इति (भो. प्र. पृ. ५६, श्लो. २५३) । ही—' हतविधिलसितानां ही विचित्रो विपाकः' इति (शिशु. ११. ६४) ।। मौने तु तूष्णीं तूष्णीकाम् । मौने वाग्वृत्तिपरित्यागे यथा—तूष्णीमास्ते[6] इत्यादि । '[7]तूष्णीमः काम्प्रत्ययो वक्तव्यः' (वा. ५. ३. ७१) इति काम्प्रत्यये तूष्णीकामास्ते (काशिका. २, पृ. ७०) । काम् प्रत्ययस्याज्ञानकुत्सानुकम्पाद्यर्थविशेषविवक्षायामेव विधानात् तूष्णीका शब्दस्य मौनविशेषोऽर्थः । तूष्णींशब्दस्य मौनमात्रमर्थ इत्यर्थभेदे सत्यपि प्रधानमात्रस्याभेदात् पर्यायत्वमुक्तमिति विज्ञेयम् ।। सद्यः सपदि तत्क्षणे । तत्क्षणे तत्काले । यथा—'सद्यो हतन्यङ्कुभिरस्रदिग्धम्' इति (रघु. १६. १५) । सपदि—'सपदि मुकुलिताक्षीं रुद्रसरम्भभीत्या' इति (कु स ३. ७६) ।। ६ ।।

1 'वद्वेति' पाठ, नतु 'व वा' इति; व वेति भा दी (पृ. ५१४) [2] Tj2 adds प्रतिहाररक्षी [3] प्रविवेश Tv [4] 'तथैवैवम्' इति विवरणाभिमत पाठ [5] B5, B6 add अप्यस्ति किंचिदद्भुतमिव द्रष्टुम् [6] Tv adds तूष्णी चतुर्थम् [7] 'अक च्प्रकरणे तूष्णीम . ' इति काशिकायाम् (२, पृ ७०)

(पा) [1]वद् वा यथा तथैवैव साम्ये । एते साम्यार्थे ।। अहो हीति विस्मये । एतौ विस्मयार्थे । तन्त्रात् हिशब्दस्यापि ग्रहणम् । 'अहो हि[2] हो अहहा च नना पश्यत विस्मये[3]' इति शृङ्गारप्रकाशिका ।। मौने तु—सपदि तत्क्षणे । एतौ तत्क्षणार्थे ।। ६ ।।

1 'व वा' इति भानुजीदीक्षिताभिमत पाठ [2] ही B3 [3] विस्मयार्थे A1

**दिष्टया समुपजोषं चेत्यानन्देऽथान्तरेऽन्तरा ।**
**अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम् ।। १० ।।**

(वि) दिष्टया समुपजोष चेत्यानन्दे । यथा—'दिष्टया त्वमसि मे धात्रा [1]भीतेनेवोपपादित ' इति (रघु १५ १८) । 'समुपजोष भवान् जयति' इति । एते आनन्दस्य नामनी ।। अथान्तरे—मध्ये स्यु । अत्रोदाहरणानि । अन्तरे —'[2]आवयोरन्तरे जाता सरित्सागरपर्वता ' इति (महानाटक ५ २५) । अन्तरा—'अन्तरा त्वा च मा च कमण्डलु '[3](सर कण्ठा पृ ५८) । अन्तरेण —[4]' मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वय स ' इति (शिशु ३ ३)। एतानि[5] मध्यार्थे वर्तन्ते ।। प्रसह्य तु हठार्थकम् । यथा—'प्रसह्य दास्यभिगमे ' इति (या स्मृ २ २४ २९१) । एतद् हठार्थस्य बलात्कारस्य नाम ।। १० ।।

1 भीतेनेव K4, मुद्रितग्रन्थे च (पृ ३००) [2] इदानीम् K6 [3] महाभाष्य (Apte's Dict p 124) [4] °सूत्रान्तर° K5, K6 [5] एते K5

(विव.) दिष्ठचा शमुपजोष[1] चेत्यानन्दे । इतिशब्दोऽत्र शब्दस्वरूप-निर्देशार्थः । नवानन्दार्थः । ततश्च दिष्टचादयस्त्रयः आनन्दे चित्रहर्षे वर्तन्त इति सुभूतिचन्द्रः । यथा—'देव दिष्ठचा वर्धसे' इति । शमिति तालव्यादि मान्तमव्ययं च । 'श नो वातः पवता मातरिश्वा श नस्तपतु सूर्यः' इति (तै. आ. ४. ४२. १) । 'शकरः श करोतु न. ' इति । उपजोषम्—'उप-

जोषमिहास्महे ' इति । तथा च वैजयन्ती—'सुखे दिष्टचोपजोषं शम्' इति (पृ. २८८, श्लो. १७) । सुबोधिनीकारस्तु—'दिष्टचा समुपजोषम्' इति पठित्वा द्वितीयं शब्दं पञ्चाक्षरदन्त्योष्ठचादि च मन्वानो 'दिष्टचा समुपजोषं च' इत्यव्ययद्वयमानन्दे वर्तत इति व्याख्याय उदाजहार—'दिष्टचा पुत्रो जातः, समुपजोषं शुभं चेति मकारान्तमव्ययद्वयमप्यत्र विज्ञेयमिति' ।। अथान्तरे—मध्ये स्युः। अन्तरे इति सप्तम्यन्तप्रतिरूपकमेकारान्तमव्ययम् । तदादाय त्रयः शब्दा यत्किंचिद्द्वयापेक्षया मध्यरूपार्थे वर्तन्ते । यथा—अन्तरे पर्वतयोः नदी । अन्तरा —'[2]अन्तरा त्वां च मां च कमण्डलुः (सर. कण्ठा. पृ. ५८) । अन्तरेण—'मातरं पितरं चान्तरेण पुत्रः' इति । 'अन्तरान्तरेण युक्ते' (२. ३. ४) इति द्वितीया । अत्र गणरत्नमहोदधिकारः[3]—'अन्तरान्तरेणेति मध्यमाधेयप्रधानमाचक्षते' इति (पृ. ३२) ।। प्रसह्य तु हठार्थकम् । प्रसह्येति ल्यबन्तप्रतिरूपको निपातो बलात्कारशब्दसमानार्थ[4] इत्यर्थः । यथा—'प्रसह्य सिंहः किल तां चकर्ष' इति (रघु. २. २७) ।। १० ।।

[1] शम् उपजोपमिति विवरणाभिमत पाठ [2] गणरत्न° (पृ ३२) [3] अन्तरा इति मध्यविनार्थयो इति मुद्रितग्रन्थे दृश्यते (पृ ३२) [4] °समार्थ $B_6$

(पा) दिष्टचा समुपजोष चेत्यानन्दे । एतौ आनन्दार्थे । [1]जोपशब्दो नानार्थवर्गे गत (पृ ५९८, श्लो २५१) ।। अथान्तरे—मध्ये स्यु । एते मध्यार्थे ।। प्रसह्य तु हठार्थकम् । प्रसह्यशब्दो [2]बलात्कारार्थे ।। १० ।।

[1] $B_3$ omits the sentence [2] हठार्थे $B_3$; $A_1$ omits the sentence

युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते ।
अभावे नह्य नो नापि मास्म मालं च वारणे ।। ११ ।।

(वि) युक्ते द्वे साप्रत स्थाने । यथा—'[1]स्वय छेत्तुमसाप्रतम्' इति (कु स २ ५५) । स्थाने यथा—'स्थाने भावानेकनराधिप सन्नकिंचनत्व मखज व्यनक्ति' इति (रघु ५ १६) । [2]एते द्वे युक्तार्थे वर्तेते ।। अभीक्ष्ण शश्वदनारते । यथा—'अभीक्ष्णमुष्णैरपि तस्य सोष्मण.' इति (शिशु. १. ६५) । शश्वद् भव' शाश्वत । एतावनारतार्थं कथयतः ।। अभावे [3]नहि नो नापि । अपिशब्दाद्

नञपि । यथा—' नहि स्वात्मारामं विषयमृगतृष्णा [4]मृगयते ' इति । नो—
' नो[5] चक्री किं कुलालः ' इति । न—' न मे किंचन दह्यते ' इति । अ—' अरा-
जदैविकं नष्टं भाण्ड दाप्यस्तु वाहकः ' इति (या. स्मृ. २. १६. १९७) । एते
ऽभावे [6]नास्तीत्यर्थे वर्तन्ते ॥ मास्म मालं च वारणे । अत्रोदाहरणानि । मास्म
—' सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः ' इति (मेघ. १ २८) । मा
—' मा भूदाश्रमपीडेति ' (रघु. १. ३७) । अलम्—' अलं महीपाल तव श्रमेण '
इति (रघु. २. ३४) । एतानि वारणार्थे वर्तन्ते ॥ ११ ॥

[1] K₄ adds विपवृक्षोऽपि सवर्ध्यं.    [2] एतौ K5    [3] ' नहि नो ' इति विवृत्यभिमत.
पाठ    [4] भ्रमयति K2, K3    [5] अङ्गुल्या क. कपाट प्रहरतीत्यादिश्लोकः (सुभा
रत्नभा पृ २७ श्लो. १६१)    [6] अभावार्थे K5, नास्त्यर्थे K2, K6.

(विव.) युक्ते द्वे सांप्रतं स्थाने । सांप्रतमिति मकारान्तम्, स्थाने इत्ये-
कारान्तं चेत्यव्ययमिति युक्तरूपार्थे वर्तेते । यथा—' विपवृक्षोऽपि संवर्ध्य स्वयं
छेत्तुमसांप्रतम् ' इति (कु. सं. २. ५५) । युक्तं न भवतीत्यर्थः । स्थाने यथा—
' स्थाने भवानेकनराधिपः सन्नकिंचनत्वं मखजं व्यनक्ति ' इति (रघु. ५. १६) ॥
अभीक्ष्णं शश्वदनारते । अनारते[1] सर्वकाल इत्यर्थः । यथा—अभीक्ष्णमन्नं ददाति ।
अजस्रं ददातीत्यर्थः । शश्वद् भवः शाश्वतः ॥ अभावे नह्य नो नापि । नह्यादि-
चतुष्कमभावे निषेधे वर्तते । नहीति द्व्यक्षरमेकं पदम् । यथा—' नहि स्वात्मा-
रामं विषयमृगतृष्णा भ्रमयति ' इति । अकारः केवलः प्रतिषेधे । यथा—स्वय-
मपचन्ति परिव्राजकाः । स्वयं न पचन्तीत्यर्थः । ' हासकरमिदमधनुते नितरा
शिरसीव कङ्कणमुपोढमूर्धजे ' इति माघकाव्ये च । नो—' नो चक्री किं कुलालः '[2]
इति । न—' न मे किंचन दह्यते[3] ' इति । अपिशब्दाद् नञ् निषेधे यथा—
' अनादिरन्तः ' इत्यादि । ' नलोपो नञः ' (६. ३. ७३) इति नकारलोपः ।
अत्र सुभूतिचन्द्रः—अनशब्दोऽपि निषेधे । यथा—' अनोपमा ते बुद्धिः ' इति
शृङ्गारप्रकाशे इति ॥ मास्म मालं च वारणे । मास्मेत्यादयस्त्रयो निवारणार्थे
वर्तन्ते । यथा—' सौधोत्सङ्गप्रणयविमुखो मास्म भूरुज्जयिन्याः ' इति (मेघ.
१. २८) । मा—' मा भूदाश्रमपीडेति परिमेयपुरःसरौ ' इति (रघु. १. ३७) ।
अलम्—' अलं महीपाल तव श्रमेण ' इति (रघु. २. ३४) । माङ्व्यतिरिक्तः
केवलोऽपि माशब्दो निपातः प्रतिषेधवचनः । यथा—' मा[4] चापलायेति गणान्
व्यनैषीत् ' इति (कु. सं. ३. ४१) ॥ ११ ॥

[1] Tj1, Tj2 add अनुपरते [2] सत्यभामाश्रीकृष्णयो चाटुश्लोक [3] जनकस्योक्तिरियम्—'मिथिलाया प्रदीप्ताया न मे किंचन दह्यते' इति [4] मा भवतु चास्य पापम् B5, B6

(पा) युक्ते द्वे साप्रत स्थाने । एते युक्ते इति उचितार्थे ।। अभीक्ष्ण शश्वदनारते । अनारतार्थे ऽविच्छेदेऽर्थे[1] ।। अभावे [2]नह्य नो नापि । एतेऽभावार्थे[3] ।। मास्म माल च वारणे । एतानि वारणे इति निषेधार्थे । चशब्दाद् नह्यादयोऽपि स्यु । 'न हि नो अनमा मास्म प्रतिषेधे प्रकीर्तिता' इति त्रिकाण्डशेष [4] (पृ ३६, श्लो १०१७) ।। ११ ।।

[1] B3 adds एतौ स्त [2] 'नह्य नो' इति पारिजाताभिमत पाठ [3] B3 C1 add स्यु [4] मुद्रितग्रन्थे तु 'नञभावे निषेधे च तद्विरुद्धतदन्ययो' इति दृश्यते

**पक्षान्तरे चेद्यदि च तत्त्वे त्वद्धाञ्जसा द्वयम् ।**
**प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ।। १२ ।।**

(वि) पक्षान्तरे चेद्यदि च । यथा—'सत्य चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्' इति (नी श ३७) । एतौ पक्षान्तरे वर्तेते ।। तत्त्वे त्वद्धाञ्जसा द्वयम् । उदाहरणे । अद्धा—'आराधितोऽद्धा मनुरप्सरोभि' इति । (सर कण्ठा पृ ५८) । अञ्जसा—'अञ्जसेति रुरुधु [1] कचग्रहे' इति (रघु १९ ३१) । एतौ तत्त्वे निश्चये वर्तेते ।। प्रकाशे प्रादुरावि स्यात् । [2]यथा——'प्रादुरासीद् वसुधरा' इति (रघु १५ ८३) । 'आविर्बभूव कुशगर्भमुख मृगाणा यूथम्' इति (रघु ९ ५५) । एते[3] प्रकाशस्य नामनी ।। ओमेव परम मते । यथा—'ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाच नभ' इति (शिशु १ ७५) । एवम्—'एव यदात्थ भगवन्' [4] इति (कु स २ ३१) । परमम्—'तत परममित्युक्त्वा' इति (कु स ६ ३५) । एते मते ऽङ्गीकारे वर्तन्ते ।। १२ ।।

[1] रुरुदु K2, K4 [2] K2, K4 add उदाहरणे [3] एतौ प्रकाशार्थे वर्तेते K5
[4] J2, K6 add आमृष्ट न परै पदम्

(विव.) पक्षान्तरे चेद्यदि च। अनेकपक्षसंभावनायाम् अन्यतरपक्षविशेषपरिग्रहरूपार्थे द्वावेतौ शब्दौ वर्तेते। यथा च 'कोटिद्वयनिपाते एककोटिपरिग्रहः यद्यर्थः' इति वल्लभाचार्यः। यथा—'सत्यं चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्' इति (नी. श. ३७)॥ तत्त्वे त्वद्धाञ्जसा द्वयम्। यथा 'अद्धा श्रियं पालितसंगराय प्रत्यर्पयिष्यत्यनघा स साधुः' इति (रघु. १३. ६५)। अञ्जसा—'अञ्जसा वक्ति [1]सज्जनः' इति॥ प्रकाशे प्रादुराविः स्यात्। यथा—'प्रादुरासीत् प्रजापतिः' इति। आविः—'आविर्भूतप्रथममुकुलाः'[2] इति (मेघ. १. २१)॥ ओमेव परमं मते। मतेऽङ्गीकारे ओमिति। यथा—'ओमित्युक्तवतोऽथ शार्ङ्गिणः' इति (शिशु. १. ७५)। एवम्—'ओं तथा। एवमेतद् यथात्थ त्वम्' इति। परमम्—'ततः परममित्युक्त्वा [3]प्रतस्थे मुनिमण्डलम्' इति (कु. सं. ६. ३५)॥ १२॥

[1] अञ्जसा वक्ति साधु इति स्वामी (पृ ३४०) [2] B6 adds कन्दलीश्चानुकच्छम्
[3] TJ2 omits the latter half of the hemistich

(पा) पक्षान्तरे चेद्यदि च। एतौ पक्षान्तरार्थे। 'च पादपूरणे पक्षान्तरे हेतौ विनिश्चये' इति त्रिकाण्डशेष (पृ ३६, श्लो १०१८)॥ तत्त्वे त्वद्धाञ्जसा द्वयम्। एतद् द्वय तत्त्वे इति परमार्थे॥ प्रकाशे प्रादुरावि स्यात्। एते द्वे प्रकाशे इति प्राकट्यार्थे[1]। प्रादुरभूत्। साक्षादिति पाठे व्यवहितेऽपि स्याताम्। 'अभवन् युगपद् विलोलजिह्वा[2]युगलीढोभयसृक्कभागमावि' इति (शिशु २० ४२)॥ ओमेव परम मते। एतानि मताथ[3]॥ १२॥

[1] A1 adds वर्तेते [2] °युगवीथोभय° A1 [3] B3 adds वतन्ते

**समन्ततस्तु परितः सर्वतो विष्वगित्यपि।**
**अकामानुमतौ काममसूयोपगमेऽस्तु च॥ १३॥**

(वि) समन्ततस्तु—विष्वगित्यपि। उदाहरणानि। 'समन्ततो वर्षति मेघसघ' इति। परित—'आयान्ति परित स्त्रिय[1]' इति। सवत —'त्व सर्वतोगामि च साधक च' इति (कु स ३ १२)। विष्वक्—'विष्वक् तटेषु[2] पतति स्फुटमन्तरिक्षम्' इति। एतानि सर्वतोऽर्थे वर्तन्ते॥ अकामानु-

मतौ कामम् । यथा—' कामं [3]क्षाम्यतु य क्षमी ' इति (शिशु. २. ४३) । एतदकामानुमतौ अनिश्चयाङ्गीकृतौ वर्तते ।। असूयोपगमेऽस्तु च । चकाराद् भवत्वित्यपि । अत्र उदाहरणे । अस्तु—' तथाविधस्तावदशेषमस्तु सः ' इति (कु. स. ५. ८२) । भवतु—' भवतु भवत्वसुहृज्जनः सकामः ' इति । एतावसूयया अङ्गीकारे वर्तेते ।। १३ ।।

[1] श्रिय K₄ [2] मेघततिम् K₂, K₅ [3] क्षाम्यतु K₆

(विव.) समन्ततस्तु—विष्वगित्यपि । समन्तत इत्यादिचतुष्टयं क्रियायाः सर्वदेशसंबन्धित्वे[1] । यथा—' समन्ततो वर्षति मेघसंघः ' इति । परितः —' आयान्ति परितः श्रियः ' इति । सर्वतः—सर्वतोऽवलोक्य । विष्वक्—' विष्वक्तटेषु पतति स्फुटमन्तरिक्षम् ' इति । इतिशब्दः [2]एवंविधाव्ययान्तरप्रदर्शनार्थः । यथा—समन्तादवलोक्य इत्यादि ।। अकामानुमतौ कामम् । कामम् आत्मन इच्छाया अभावेऽपि परानुरोधाद् बलाद्वा कृतमङ्गीकरणम् अनुमतिः । यथा—[3]' मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ' इति (शिशु. २. ४३) । कदाचिदपि क्षमा न करणीयेति तन्मतम् । यदि करणीयेति परस्य मतं, तर्हि क्वचिदेव क्रियतामित्यर्थः कामामिति मान्तेनाव्ययेन प्रकाश्यते । सुभूतिचन्द्रस्तु 'आकामानुमतौ कामम्' इति दीर्घादिं पठित्वा निकामानुमताविति व्याचष्ट । तथा च ' कामं कामाभ्यनुज्ञायाः ' इति त्रिकाण्ड्यामुक्तम् । रुद्रस्तु उभयमप्याह—' आकामानुमतौ काममसूयोपगमेऽपि च ' इति ।। असूयोपगमेऽस्तु च । असूयापूर्वकेऽङ्गीकारे यथा—' अलं विवादेन[4] यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ' इति (कु. सं. ५. ८२) । चशब्दाद् भवतुशब्दोऽपीति सुबोधिनीकारः । यथा —' भवतु को दोषः ' इति ।। १३ ।।

[1] Tv adds वर्तते [2] अभित, विश्वत, समन्तात् इत्याद्यपि इति मा. दी. (पृ ५१५) [3] Tv omits the first half [4] विपादेन Gm₃, Tv

(पा.) समन्ततस्तु—विष्वगित्यपि । एतानि सर्वत्रार्थे । समन्ताच्छब्दोऽप्यस्ति । 'परितः सर्वतो विष्वक् समन्ताच्च समन्तत' ' इति वैजयन्ती (पृ. २८७, श्लो. ३)।। अकामानुमतौ कामम् । कामशब्दः अकामपूर्वकानुमतौ[1] ।

असूयोपगमेऽस्तु च । अस्तुशब्दोऽसूयापूर्वकाभ्युपगमेऽपि स्यात् । 'अस्तु स्याद-
भ्युपगमेऽप्यसूयापीडयोरपि' इति विश्वः[2] (पृ. १८६, श्लो. १५) ॥ १३ ॥

[1] °अनुमते B3.　　[2] मुद्रितग्रन्थे तु—'अस्तु स्यादभ्यनुज्ञानेऽप्यसूयानीहयोरपि' इति
दृश्यते.

**ननु च स्याद् विरोधोक्तौ कच्चित् कामप्रवेदने ।**
**निःषमं दुःषमं गर्ह्ये यथास्वं तु यथायथम् ॥ १४ ॥**

(वि.)　ननु च स्याद् विरोधोक्तौ । 'ननु चात्र [1]तुगागमः कथं भवति'
इति । ननु चेति[2] विरोधोक्तौ वर्तते ॥ कच्चित् कामप्रवेदने । यथा—' आमृश्यते
जानपदैर्न कच्चित्' इति (रघु. ५ ६) । एतत् कामप्रवेदने इष्टपरिप्रश्ने वर्तते ॥
निःषमं दुःषमं गर्ह्ये । यथा—निःषमं वक्ति मूर्खः । दुःषमं वर्तते वधूः । [3]एतौ
गर्ह्ये निन्दार्थे वर्तेते ॥ यथास्वं तु यथायथम् । [4]यथा—'यथास्वमाश्रमैश्चक्रे' इति
(रघु. १७ ६५) । यथायथं पलायन्त.[5] । एतावात्मन्यात्मीये वर्तेते ॥ १४ ॥

[1] तुरगम J2; नागम K6　　[2] एतौ K3, K4, K5　　[3] एते गर्ह्ये K3, K4
[4] K2, K3 add अत्रोदाहरणे.　　[5] पलायन्ते J2

(विव.)　ननु च स्याद् विरोधोक्तौ । यथा—ननु च नित्या वेदाः;
त्वदुक्तं वेदानामाप्तप्रणीतत्वं विरुद्धमित्यर्थः ॥ कच्चित् कामप्रवेदने । स्वाभि-
प्रायाविष्करणं कामप्रवेदनम् । यथा—'कच्चिज्जीवति ते माता कच्चिज्जीवति
ते पिता' इत्यादावपि भवदीयपित्रोर्जीवनं ममाभिमतमित्यादिरर्थोऽवगन्तव्यः ।
केचित्तु—कामप्रवेदनशब्द इष्टपरिप्रश्ने लक्षणया वर्तत इत्याहुः ॥ निःषमं दुःषमं
गर्ह्ये । निर्गतं समं निःषमम् । दुष्टं समं दुःषमम् । 'तिष्ठद्गुप्रभृतीनि च' (२.
१. १७) इत्यव्ययीभावे 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' (८. ३. ८८) इति
षत्वम् । तथा च महोदधौ—(पृ. १३३) 'निर्गतं समं निर्गतत्वं समस्येति वा
समान्निष्क्रान्तो वा निःषमम्[1]' । 'दुष्टं[2] समं, दुष्टत्वं वा समस्य दुःषमम्' ।
(पृ. १३५) । [3]'अव्ययीभावश्च' (२. ४. १८, १. १. ४१) इति नपुंसकत्व-
मव्ययत्वं चेत्यनयोः शब्दान्तरेण समासो नास्तीति 'तिष्ठद्गुप्रभृतीनि च' (२.
१. १७) इति चकारेणावधारितम्' । अन्ये त्वाहुः—'निर्गता बहवः समाः

संवत्सरा यस्मिन् शरत्संवत्सराद्यात्मके काले स कालो निःषमम् । यथा—निःषमं वक्ति मूर्खः । बहुकालसाध्यमर्थं स्वल्पावशिष्टकाले वक्तीत्यर्थः । तथा दुःषम-शब्दोऽपि कालवाचनः । यथा—दुःषमं वर्तत इति । दुष्टसमावेशात् कालस्य दुष्ट-त्वम् । दुष्टः कालो वर्तत इत्यर्थः । उभयोरपि पुर्ववदेवाव्ययीभावत्वं षत्वं च । निःषमदुःषमकालोऽप्यतिरिक्ते गर्ह्यमात्रे तूपचाराद् निःषमदुःषमशब्दौ वर्तेते इति बोद्धव्यम् ॥ यथास्वं तु यथायथम् । अत्र स्वशब्द आत्मीयवचनः । तेन यो य आत्मा यो य आत्मीयो वा तत्रोभयत्रापि यथास्वं यथायथमिति शब्दद्वयं वर्तते । 'यथास्वमिति वीप्सायामव्ययीभावः' इति काशिका । यथास्वं यथायथमिति यथाशब्दस्य द्विर्वचनं नपुंसकत्वं[4] च निपात्यते (काशिका. २, पृ. ३७६)। अत एव 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वत्वस्या-व्ययगणे पाठादव्ययत्वम् । तत्रात्मवचनत्वे यथा—'यथास्वं कृतविक्रमाः' इति । 'तत्प्रसादादमी भावा ज्ञाताः सर्वे यथायथम्' इति । सर्वे पदार्थाः[5] स्वरूपतो ज्ञाता इत्यर्थः । आत्मीयवचनत्वे यथा—'अध्यासते चीरभृतो यथास्वं चिरोज्झि-तान्याश्रममण्डलानि' इति (रघु. १३. २२) । 'यथायथं ताः सहिता नभश्चरैः प्रभाभिरुद्भासितशैलवीरुधः' इति (किरा. ८. २) ॥ १४ ॥

[1] इति केचित् इति मु ग्र (पृ १३३). [2] दुष्टत्व समाया दुष्टा. समा वा यत्र तद् दु षमम् इति मु ग्र (पृ १३५) [3] तिष्ठद्गु इत्येवमादय समासास्तिष्ठद्ग्वादिरय-मित्यनेनाव्ययीभावसज्ञा निपात्यन्ते । अयमेव निपातित समासो भवति नान्य इति मु ग्र. (पृ १३२) [4] नपुसकलिङ्गता इति मु ग्र. (२, पृ ३७६). [5] वेदार्था B5, B6.

(पा.) ननु च स्याद् विरोधोक्तौ । ननुचशब्दो विरोधोक्तौ स्यात् । प्रश्नेऽपि स्यात् । तथा च विश्वः 'ननुच प्रश्नदृष्टचोक्तयोः' इति (पृ. १८६, श्लो. ११) ॥ कच्चित् कामप्रवेदने । कच्चिच्छब्दः कामप्रवेदनायाम्[1] । प्रश्न-*वितर्कयोरपि स्यात् । 'कच्चित् प्रश्नवितर्कयो.'* [2]*इति विश्वः (पृ. २८७, श्लो.* १५) ॥ नि षमं दु.षम गर्ह्ये । एते गर्ह्यार्थे स्याताम् ॥ यथास्व तु यथायथम् । स्वेषा स्वेषामित्यस्मिन्नर्थे स्याताम्[3] ॥ १४ ॥

[1] A1 adds वर्तते [2] मुद्रितग्रन्थे तु 'किंस्वित् प्रश्ने वितर्के च' इति दृश्यते.
[3] A1 adds 'तमतमगु अनेटि अयंमदु'

**मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ।**
**स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः ॥ १५ ॥**

(वि) मृषा मिथ्या च वितथे । यथा—' भवन्ति[1] नोद्दामगिरा कवीना-मुच्छ्रायसौन्दर्यगुणा मृषोद्याः[2] ' इति (शिशु ४. १०) । मिथ्या—' तामूचतुस्ते प्रियमप्यमिथ्या ' इति (रघु १४ ६) । एतावनृते वर्तेते ॥ यथार्थं तु यथातथम् । यथा—यथार्थमुक्तवानासीत् । यथातथम्—गुरुर्यथातथ वक्ति । एतौ सत्ये वर्तेते ॥ स्युरेव—धारणवाचका । यथा—' एवमेतद् यथा प्राह विष्णुस्तु जगदीश्वर ' इति । तु—' रावण [3]तु दुरात्मानमवधीद् राघव पुन ' इति । वा—' व्यासो [4]वा सर्वधर्मज्ञः ' इति । एव—' त्वमेव साक्षात्करणीय इत्यत किमस्ति कार्य गुरु योगिनामपि ' इति (शिशु १ ३१) । एतेऽवधारणे[5] निश्चयार्थे वर्तन्ते ॥ १५ ॥

[1] K5 omits the first half of the hemistich　[2] मृषार्था K6　[3] वै J2; हि K4　[4] पुन वा एव इति विवृत्यभिमत पाठ　[5] अवधारणार्थं K5.

(विव.) मृषा मिथ्या च वितथे । वितथेऽप्रामाणिके वचसि वस्त्वन्तरे वा यथा—मृषा भाषसे, मिथ्या वदसि । मिथ्याभूतमिदं जगत्, प्रपञ्चो मिथ्या इति । यथार्थं तु यथातथम् । अर्थं वस्तुतत्त्वमनतिक्रम्य यथार्थम् । ' तथाशब्दः[1] सत्यवचने ' इति महोदधौ (पृ. ४२२) । तथा सत्यमनतिक्रम्य यथातथम् । ' यथातथयथापुरयोः पर्यायेण ' (७. ३. ३१) इति निपातनात् साधुत्वम् ॥ स्युरेव तु—धारणवाचकाः । एवशब्दादयः पञ्च स्वेतरनिषेधगर्भितनिश्चयज्ञान-वाचकाः । यथा—' न वैव द्रव्याणि ' इति । केचित् एवमिति सबिन्दुक पठित्वो-दाहरन्ति—' एवमेतत् कः संदेहः ' इति (रत्ना. १. ७-) । तु—' आत्मा सव तु पश्यति ' इति । आत्मैव पश्यतीत्यर्थः । पुन—' विप्रः[2] पुनः पूज्यतमः[3] समस्तैः ' इति । विप्र एव पूज्य इत्यर्थः । वै—' न वै ब्राह्मणे श्री रमते ' इति । न रमत एवेत्यर्थः । च—' आत्मा च सच्चिदानन्दः ' इति प्रामाणिकप्रथा । [4]केचित्तु वैवेत्यन्तिम शब्द पठन्ति । यथा—' सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ' इति (कु. स. २ ६०) । अत्र न तृतीया व्यक्तिरित्यवधारण द्वाभ्यां वाशब्दाभ्यां गम्यते ॥ १५ ॥

[1] यथातथ सत्यम् इति मु ग्र [2] विप्र पुन पूज्य इति स्वामी (पृ ३४०) [3] पूज्यतमैं B6 [4] 'पुनर्वै च' इति विवरणाभिमत पाठ, 'चान्वाचये समाहारे अन्योन्यार्थे समुच्चये। पक्षान्तरे तथा पादपूरणेऽप्यवधारणे'।। इति रुद्र इति भा दी (पृ ५१६)

(पा) मृषा मिथ्या च वितथे। एते वितथार्थे स्याताम्।। यथार्थं तु यथातथम्। एते सत्यार्थे।। स्युरेव तु—धारणवाचका। एते पञ्च अवधारणार्थका स्यु ।। १५ ।।

**प्रागतीतार्थक नूनमवश्यं निश्चये द्वयम्।**
**सवद् वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना ।। १६ ।।**

(वि) प्रागतीतार्थकम्। यथा—'प्रपेदिरे प्राक्तनजन्मविद्या' इति (कु स १ ३०)। एतदतीतार्थके वर्तते।। नूनमवश्य निश्चये द्वयम। यथा—'नून मत्त पर वश्या' इति (रघु १ ६६)। अवश्यम्—'अवश्य [1]यातारश्चिरतरमुषित्वापि विषया' इति (वै श पृ ६१, श्लो १५७)। [2]एतौ निश्चये वर्तेते।। सवद् वर्षे। यथा—'राम पञ्चदशे सवदयोध्या प्रविवेश ह' इति। एतद् [3]वर्षे सवत्सरे वर्तते।। [4]अवरे त्वर्वाक्। यथा—'अर्वाक् सपिण्डीकरण यस्य सवत्सराद् भवेत्[5]' इति (या स्मृ १ २० २५५)। एतदवरार्थे[6] वर्तते।। आमेवम्। यथा—'आ करोमि तव प्रियम्' इति। एतदेवमर्थेऽङ्गीकारे वर्तते।। स्वयमात्मना। यथा—[7]'स्वयकृतप्रसादस्य' इति (शिशु २ ११०)। एतदात्मना[8] इति तृतीयार्थे वर्तते।। १६ ।।

[1] स्थिरपरिगृहीताश्च K3, K6 [2] एते J2 [3] सवदिति पद वत्सरे वत्ते J2, K5 [4] अधर K5, K6 [5] भवति K6 [6] अधरार्थे K5 [7] 'स्वयं कृत वा यद्गुण' (या स्मृ २ ३ ४६) K2, K3 [8] आत्मनि K5, K6

(विव) प्रागतीतार्थकम्। यथा—'प्रपेदिरे प्राक्तनजन्मविद्या' इति प्रागुक्तम् (कु. स १. ३०) ।। नूनमवश्य निश्चये द्वयम्। यथा—'नून हन्तास्मि [1]रावणम्' इति। अवश्यम्—'अवश्य यातारश्चिरतरमुषित्वापि विषया' इति (वै. श. १५७) ।। सवद् वर्षे। वर्षे वत्सरे। यथा—'राम पञ्चदशे सवदयोध्यां प्रविवेश ह' इति। 'सवत्तृतीये चूडाकर्म' इति, तृतीये वर्षे चूडाकरण कर्तव्य-

मित्यर्थः ॥ अपरे त्ववर्वाक् । परस्मादुत्कृष्टादन्योऽपरः । अवर इत्यन्तस्यमध्याक्षरपाठेऽप्ययमर्थः[2] । यथा—'अर्वाक् तु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत्' इति ॥ आमेवं । आमेवमिति द्वयं परोदीरितार्थस्याङ्गीकारे वर्तते । ओमेवं परममिति प्रागुक्तम् (पृ. ६२६, श्लो. १२) । [3]शब्दद्वयं तु स्वपरयोरुभयोरपि संमतस्याङ्गीकारे इति भेदः । यथा—आं किं करोमि, एवं करोमि इति ॥ स्वयमात्मना । तृतीयैकवचनान्तस्यात्मशब्दस्य यावानर्थः तत्र स्वयमित्यव्ययं वर्तत इत्यर्थः । यथा—'स्वयंकृतप्रसादस्य' इति (शिशु. २. ११०) ॥ १६ ॥

[1] रावण Gm1, Gm3　　[2] अयमेवार्थ B6　　[3] शब्दत्रय B6

(पा) प्रागतीतार्थकम् । प्राक्शब्दोऽतीतार्थक स्यात् ॥ नूनमवश्य निश्चये द्वयम् । एते द्वे निश्चयार्थे स्याताम् ॥ सवद् वर्षे । सवच्छब्द[1] सवत्सरार्थे[2] ॥ अवरे त्ववर्वाक् । अर्वाक् शब्द अवरे इत्यधस्तादर्थे ॥ आमेवम् । एते द्वे ऽनुज्ञार्थे[3] वर्तेते ॥ स्वयमात्मना । एतदेकमात्मनेति तृतीयान्तार्थे ॥ १६ ॥

[1] A1 adds वर्षे इति　　[2] C1 adds वर्तते　　[3] अङ्गीकारार्थे B3

**अल्पे नीचैः महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः ।**
**सना नित्ये बहिर्बाह्ये स्मातीतेऽस्तमदर्शने ॥ १७ ॥**

(वि) अल्पे नीचैः । यथा—'तथापि नीचैर्विनयादृश्यत' इति (रघु ३ ३४)। एतदल्पार्थे वर्तते ॥ महत्युच्चैः । यथा—'शृङ्गमुच्चैर्गिरेरिदम्' इति । एतद् महदर्थे वर्तते ॥ प्रायो भूम्नि । यथा—'प्रायो नववधू कान्ता[1]' इति । एतद् भूमार्थे वर्तते ॥ अद्रुते शनैः । यथा—आलिङ्गति शनैः शनैः । एतदद्रुतेऽशीघ्रार्थे वर्तते ॥ सना नित्ये । यथा—सनातन । [2]एतन्नित्यार्थं कथयति ॥ वहिर्बाह्ये । यथा—'दासीकुम्भ [3]वहिर्ग्रामान्निनयेरन् स्ववान्धवा' इति (या स्मृ ३ ५ २९४) । एतद् वाह्यार्थे वर्तते ॥ स्मातीते । यथा—'सेवते स्म शयन पराङ्मुखी' (कु स ८ २) इति । एतदतीतार्थे वर्तते ॥ अस्तमदर्शने । यथा—' [4]अस्तमेति [5]युगभग्नकेसरै' इति । एतददर्शननाम ॥ १७ ॥

[1] कान्त K2, K3, K4 [2] एतद् नित्ये वर्तते K5 [3] बहिरगात् J2
[4] अस्तमिति K6. [5] K5, K6 omit

(विव.) अल्पे नीचैः । 'यथा— तथापि नीचैर्विनयाददृश्यत' इति (रघु. ३. ३४) ॥ महत्युच्चैः । यथा—महान् वातो वातीत्यर्थे उच्चैर्वातो वाति । सकारान्तावेतौ[1] ॥ प्रायो भूम्नि । भूम्नि बाहुल्ये । यथा— 'प्राय. प्रत्ययमाधत्ते [2]स्वगुणेषूत्तमादरः' इति (कु. सं. ६. २०)। अकारान्तः प्रायशब्दः [3]थान्तेषु प्रागुक्तः (पृ. ४३३, नाना. १५३) । अद्रुते शनैः । अद्रुते शीघ्ररहित इत्यर्थः । यथा—शनैश्चर इति ॥ सना नित्ये । यथा—'पूर्णं ब्रह्म सनातनम्' इति । नित्यमित्यर्थः ॥ बहिर्बाह्ये । अनावृतो देशो बाह्यम् । तत्र यथा—ग्रामाद् बहिरिति । स्मातीते । अतीतकालसंबन्धिनि भूतार्थ इत्यर्थः । 'सेवते स्म शयनं पराङ्मुखी' (कु. सं. ८. २) इति ॥ अस्तमदर्शने । अदर्शन दर्शनाभावो नाशप्रयुक्तः तिरोभावप्रयुक्तो वा । तत्रोभयत्र मान्तमव्ययं वर्तते । यथा—अस्तं गतो रावणः,[4] अस्त गतो भास्करः[5] इति ॥ १७ ॥

[1] B6 adds नीचैरुच्चै शब्दौ [2] प्रगुणेषु TJ1, TJ2 [3] ब्रह्मवर्गेऽनशनेऽपि प्रायशब्दोऽकारान्त (१, २ ४८०) [4] B6 adds इति नाशार्थे, [5] इति तिरोधानार्थे

(पा) अल्पे नीचैं । नीचैं शब्दोऽल्पार्थे नीचार्थे चापि [1]स्यात् ॥ महत्युच्चैं । उच्चैं शब्दो महदर्थे स्यात् । उच्चार्थेऽपि स्यात् ॥ प्रायो भूम्नि । प्राय शब्दो भूमार्थे[2] ॥ अद्रुते शनै । शनै शब्दोऽशीघ्रार्थे ॥ सना नित्ये । सनाशब्दो नित्यार्थे वर्तते ॥ वहिर्वाह्ये । वहि शब्दो वाह्यार्थे ॥ स्मातीते । स्मशब्दोऽतीतार्थे । स्मृतिनिषेधयोरपि स्यात् । 'स्मृतौ वृत्ते निषेधे स्म' इति वैजयन्ती (पृ २८४, श्लो ७) ॥ अस्तमदर्शने । अस्तशब्दोऽदर्शनार्थे ॥ १७ ॥

[1] A1 adds अधस्तादर्थेऽपि स्यात् [2] B3 adds वर्तते

अस्ति सत्त्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि ।
हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥ १८ ॥

(वि) अस्ति सत्त्वे । यथा—'आस्तिक श्रद्दधानश्च' इति (या स्मृ १ १० २६८)। एतत् सत्त्वे सतोभावे वर्तते ।। रुपोक्तौ हुम्[1] । 'प्रसह्य[2] हुकारनिर्वर्तित पुरा' इति (कु स ५ ५४)। [3]उमिति वा पाठ । यथा—'[3]उमित्युवाच पुरत पुरुषस्य कान्ता' इति । एतद् रुपोक्तौ वर्तते ।। उ प्रश्ने । 'उ [4]आगत शत्रु' इति । एतत् प्रश्नार्थे वर्तते ।। अनुनये त्वयि । यथा—'[5]अयि क्रियार्थं सुलभ समित्कुशम्' इति (कु स ५ ३३)। [6]एतदनुनये वर्तते ।। [7]तर्के तु स्यात् । [8]यथा—'स्याच्चेत् किं नोपपद्यते[9]' इति (कु स ६ ६१)। 'तर्के नु स्यात्' इति वा पाठ । यथा—रामो नु लक्ष्मणो नु इति । एतौ तर्के वर्तेते ।। उषा रात्रेरवसाने । यथा—उषा जना प्रबुध्यन्ते इति । एतत् प्रभाते वर्तते ।। नमो नतौ । यथा—नमो विष्णवे । एतन्नत्यर्थे वर्तते ।। १८ ।।

[1] हुमिति विदृतौ विवरणे च पाठ
[2] असह्यहुकार° इति मु ग्र (पृ ५४)
[3] ऊमिति $K_4$, $K_5$
[4] मागत $J_2$, $K_4$
[5] अपि इति मु ग्र (पृ ५७)
[6] अयीत्यनुनये $K_5$
[7] तर्के स्यात् स्यात $K_2$
[8] $K_5$ adds स्यादिति तर्के वर्तते
[9] नोपदिश्यते इति मु ग्र (पृ ७६).

(विव) अस्ति सत्त्व । अस्तीति कालसामान्ये तिङन्तप्रतिरूपकमव्यय सत्तावाचकम् । यथा—'षण्णा पदानामस्तित्वम्' 'अस्तिक्षीरा ब्राह्मणी' (काशिका १, पृ १०६) इति ।। रुपोक्तौ हुम् । रोषेण वचसि हुमिति निपातो वर्तते । यथा—'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हु वर्तते' इति भवभूति (उत्तर ५ ३५)। अनुचितभवदीयवचनश्रवणेनास्माक रोषोवितर्वर्तत इत्यर्थ'। अन्ये तु रुपोक्तावूम् इति मकारान्त दीर्घमोष्ठ्य स्वर पठन्ति । यथा—ऊ सैव भवत प्रिया । भवतो मनसि या वर्तते सैव प्रिया नाह प्रियेत्यर्थ ।। [1]उ प्रश्ने । परोदीरित मनसिकृत्य प्रकृतप्रसङ्गविशेषजिज्ञासाविष्करणमिह प्रश्नशब्देन विवक्षितम् । अत्र उमिति ह्रस्वो मान्तो निपातो वर्तते । 'उकोनुट्ठ पेरु' ।। अनुनये त्वयि । यथा—'अयि जीवितनाथ जीवसि' इति (कु स ४ ३)। 'अयि मुग्धे' इति च ।। तर्के नु स्यात् । द्वयमूहे । यथा—'अस्तशैलगहन नु विवस्वानाविवेश जलधिं नु महीं नु' इति (किरा ६ ७)। स्यात्—'यद्यग्निर्न स्यात् तर्हि धूमोऽपि न स्यात्' इति ।। उषा रात्रेरवसाने । रात्रेश्चतुर्थप्रहरोत्तरार्धे

घटिकाचतुष्टये[2]। यथा—'उषातनो वायुरुपैति मन्दम्' इति। नमो नतौ। नतौ प्रणामे। यथा—'नमो धर्माय महते नमः कृष्णाय वेधसे' इति (भागवत. १२. १२. १)। 'नमः[3] स्वस्ति . . .' इत्यादिना (२. ३. १६) चतुर्थी। 'साक्षात्प्रभृतीनि च' (१. ४. ७४), 'विभाषा कृञि' (१. ४. ७२) इति गतिसञ्ज्ञापक्षे 'नारायण नमस्कृत्य' इत्यादौ 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' (परि. २. ३. १६) इति द्वितीयैव भवति। 'नमोवरिवश्चित्रङ क्यच्' (३. १. १९) इति क्यच्प्रत्यये तु 'नारायणं नमस्यति'। 'स्वयंभुवे नमस्कृत्य', 'ब्राह्मणेभ्यो नमस्कृत्य' इत्यादयः प्रयोगाः 'पत्ये शेते' 'युद्धाय संनह्यति' इत्यादिवदुपपादनीयाः ॥ १८ ॥

[1] उ प्रश्ने Tv, ऊम् B6   [2] TJ1, TJ2 add उपाशब्दो वर्तते   [3] नमनम्। 'णम प्रह्वत्वे'। असुन् (उ ४ १८९) [नम] इति भा दी (पृ ५१७).

(पा) अस्ति सत्त्वे। अस्तिशब्द सत्त्वे इति विद्यमानतायां वर्तते। अस्ति [1]देवदत्त, अभूत् भवति भविष्यति वा इत्यर्थ। 'अस्त्याह कालसामान्ये तिडन्तप्रतिरूपकम्' इति त्रिकाण्डशेष (पृ ३७, श्लो १०२५)॥ रुषोक्तावूम्। ऊशब्दो रोषोक्तौ दीर्घादि[2]॥ उ प्रश्ने। उ शब्द प्रश्नार्थे ह्रस्वादि॥ अनुनये त्वयि। अयिशब्दो ऽनुनयपूर्वक प्रश्नार्थे[3]। 'अयि प्रश्नेनानुनये' इत्यमरमाला॥ तर्के नु स्यात। नुस्याच्छब्दौ तर्कार्थे[4]॥ उषा रात्रेरवसाने। उषाशब्दो रात्रिशेषे। उष शब्दोऽप्यस्ति। 'उषा स्याद् रजनीशेष उष इत्यपि दृश्यते' इति रभस॥ नमो नतौ। नम शब्दो नत्यर्थे। अनव्ययनम शब्दोऽप्यस्ति। 'यत्तन्नम किमपि शुश्रुम देवताभ्य' इति। 'त्वामन्तरेण नमसामवसानभूमिम्' इति च॥ १८॥

[1] A1 omits देवदत्त   [2] B3, C1 add अनुनासिक, ऊ A1   [3] A1 adds प्रश्नो नामानुवर्तनम्, 'अनुर्वति स्युश्चुट'.   [4] B3 adds स्याताम्

पुनरर्थेऽङ्ग निन्दाया दुष्ठु सुष्ठु प्रशंसने।
(आमानुगुण्ये स्मरणेऽप्ये फड् विघ्ननिराकृतौ।
अङ्गीकृतौ स्यादधिकं हीनसंबोधने तु रे॥)
सायं साये प्रगे प्रातः प्रभाते निकषान्तिके॥ १९॥

(वि.) पुनरर्थेऽङ्ग । यथा—' मूर्खस्तु[1] नावमन्तव्य किमङ्ग विद्वान् ' इति (स्वामी पृ. ३४१) । एतत् पुनरर्थे वर्तते । निन्दाया दुष्ठु । यथा—दुष्ठु-वृत्तिर्दुर्जन स्यात् । एतन्निन्दाया वर्तते ।। सुष्ठु प्रशसने । यथा—सुष्ठु भुक्त मया गृहे । एतत् प्रशसाया[2] वर्तते ।। [3]आमानुगुण्ये । यथा—आम वर्तते । एतदानु-गुण्ये स्ववशत्वे वर्तते । स्मरणेऽये । यथा—अये पूर्व कृतं मया । एतत् [4]स्मरणे वर्तते ।। फड् विघ्ननिराकृतौ । ' अस्त्राय फट् ' इति (वरदपूर्वतापन्युपनिषत् २ २) । एतद् विघ्ननिराकरणे वर्तते ।। [5]अङ्गीकृतौ स्यादथ किम् । यथा—देवदत्त घट करोषि? अथ किम् । एतदङ्गीकारे वर्तते ।। हीनसबोधने तु रे । यथा—रेरे [6]पापिन् ममान्तिकादपसर । एतत् हीनसबोधने वर्तते ।। साय साये । यथा—[7]' विन्यस्तसायतनमल्लिकासु ' इति । एतत् साये दिनान्ते वर्तते ।। प्रगे प्रात. प्रभाते । यथा—[8]' इत्थ रथाश्वेभनिपादिना प्रगे गणो नृपाणामथ तोरणाद् वहि ' इति (शिशु १२. १) । प्रात —' प्रात सध्यामुपासीत ' इति (या. स्मृ. १ ५ ९८) । एतौ प्रभाते वर्तेते ।। निकषान्तिके । यथा—' विलङ्घ्य लङ्का निकषा हनिष्यति ' इति (शिशु १ ६८) । [9]एतत् समीपार्थे वर्तते ।। १६ ।।

[1] मूर्तिस्तु $K_4$　[2] प्रशसनार्थे $K_4$　[3] ' आमानुगुण्ये . हीनसबोधने तु रे ' इति श्लोकोऽधिक पाठ　[4] स्मरणार्थे $J_2$　[5] अङ्गीकृते $K_4$　[6] पाप $J_2$, $K_4$　[7] साय सयमिनस्तस्य $J_2$　[8] $J_2$, $K_2$ omit the first two words　[9] निकपा इत्यन्तिकार्थे वर्तते $K_5$

(विव.) पुनरर्थेऽङ्ग । अत्र पुनरर्थे भेदरूपः । यथा—' मूर्खोऽपि नाव-मन्तव्यः किमङ्ग विद्वान् ' इति मुरारिनाटके । ' नारकेऽपि तं चोत्तिष्ठमानं पौरजानपदाः प्रकृतयो ऽप्यनूत्तिष्ठेरन्[1] किमङ्ग संबन्धिबान्धवाः ' इति । किंपुनः संबन्धिबान्धवा इत्यर्थः ।। निन्दायां दुष्ठु । यथा—दुष्ठु जल्पति । गर्हितं वद-तीत्यर्थः ।। सुष्ठु प्रशंसने । यथा—सुष्ठु भाष्यकारेण इति ।। [2]आमानुगुण्ये । आनुगुण्ये आनुकूल्ये । यथा—आम मैथिलि । आम इति ह्रस्वान्तोऽयं निपातितः स्मरणेऽये । यथा—' अये पूर्वं कृतम् ' इति पूर्वं मया कृतं स्मृतमित्यर्थः ।। फड विघ्ननिराकृतौ । यथा—' हुं फट् ' ' अस्त्राय फट् ' (वरद. उप. २. २.) ।। अङ्गीकृतौ स्यादथ किम् । यथा—' देवदत्त किं भोक्ष्यसे ' इति पृष्ट आह ' अथ

किम्' इति ।। हीनसंबोधने तु रे। यथा—'रे रे रावण' इति। केचित् 'हीनसंबोधने त्वरे' इति स्वरादिद्व्यक्षरं पठित्वोदाहरन्ति—यथा—'रे रे वानर को भवानहमरे त्वत्सूनुहन्ताहवे' इति । इह कैश्चित् टीकाकारैः 'आमानुगुण्ये' इत्यादिश्लोको न व्याख्यातः न पठितश्च । सायं साये। अत्र साय इति सप्तम्या विनिर्दिशन्नव्ययोऽप्यकारान्तः सायशब्दोऽस्तीति दर्शयति । कालवर्गेऽप्यकारान्त उक्तः[3] (पृ. ७४) । स च सायाह्न इत्यादौ दिनान्ते वर्तते । '[4]सायमण्डनमभि त्वरयन्त्यः' (किरा. ९. ६) इत्यादौ निशामुखे। अत्रोभयत्रापि सायमिति मान्तमव्ययं भवति। यथा—'सायंतन्यपरत्र चेन्मृततिथिः प्रत्याब्दिके मासिके सा ग्राह्या' इति दिनान्ते । '[5]सायं प्रातरग्निहोत्रं जुहोति' इति निशामुखे ।। प्रगे प्रातः प्रभाते। प्रगे इत्येकारान्तमव्ययम्। यथा—'प्रगेतनो वायुरुपैति मन्दम्' इति। प्रातः—'प्रातःसंध्यामुपासीत' इति (या. स्मृ. १. ५. ९८) ।। निकषान्तिके। यथा—'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति (शिशु. १. ६८)। लङ्कायाः समीपे इत्यर्थः। 'अभितःपरितःसमयानिकषा हाप्रतियोगेषु च दृश्यते' (वा. १. ४. ४८) इत्यनेन निकषाशब्दयोगे लङ्काशब्दस्य द्वितीया ।। १९ ।।

[1] प्रकृतयोऽनुतिष्ठेरन् $T_{J1}$, $T_{J2}$ [2] विवरणेऽपि श्लोकोऽयमधिक पठित
[3] 'साय. सध्या पितृप्रसू' इति (पृ ७४). [4] सायमण्डलमिति मु. ग्र. (पृ. १७८)
[5] साय प्रातर्जुहोति इति कौशिकसूत्रे (७३ १६).

(पा) पुनरर्थेऽङ्ग। अङ्गशब्द [1]पुनरर्थे ।। निन्दाया दुष्ठु। दुष्ठुशब्दो निन्दार्थे ।। सुष्ठु प्रशसने। सुष्ठुशब्द प्रशसायाम् ।। साय साये। सायशब्द. साये इति दिवसावसाने ।। प्रगे प्रात प्रभाते। एते द्वे दिवसादौ[2] ।। निकषान्तिके। निकषाशब्द. समीपार्थे[3] ।। अनुक्तम्—अत्यन्ताय स्यान्नितान्ते। अत्यन्तायशब्दो नितान्तार्थे स्यात् ।। १९ ।।

[1] $C_1$ adds स्यात् [2] प्रभातेऽर्थे $A_1$. [3] $B_3$ adds the verse 'आमानुगुण्ये . . . हीनसंबोधने तु रे'.

परत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यति ।
अद्यात्राह्न्यथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् ।। २० ।।
तथाधरान्यान्यतरेतरात् पूर्वेद्युरादयः ।

(वि ) परुत्परारि—पर्वतरे यति । पूर्वे पूर्वतरे यति वर्तमाने च क्रमेण परुच्छब्द परारिशब्द ऐषम शब्दश्च [1]वर्तते । अत्रोदाहरणे श्लोक —

' परारिसचित वित्त परुन्नष्टमभोगत ।
[2]ऐषमश्चीयते यत्नात् [3]तस्य किं वा भविष्यति ' ॥

इति ॥ अद्यात्राह्नि । अत्राह्नि अस्मिन् वर्तमानेऽहनि अद्यशब्दो वर्तते । यथा— [4]'अरावणमराम वा जगदद्येति निश्चित ' इति (रघु १२ ८३) ॥ अथ पूर्वेऽह्नीत्यादौ—पूर्वेद्युरादय । अस्यार्थ —पूर्वोत्तरापरात् तथा अन्यान्यतरेतरात् शब्दाच्च पूर्वेऽह्नीत्यादौ [5]पूर्वेद्युरादय शब्दा वर्तन्ते । अत्र क्रमेणोदाहरणानि— पूर्वेद्यु —' निमन्त्रयेत पूर्वेद्यु ' इति (या स्मृ १ १० २२५) । उत्तरेद्यु — 'नान्दीमुखादुत्तरद्युर्विवाह ' इति । अपरेद्यु अधरद्यु —' आगतानपरेद्युस्तानधरेद्यु समागता [6] ' इति । अन्येद्यु —' अन्यद्युरात्मानुचरस्य भावम् ' इति (रघु २ २६)। अन्यतरेद्यु —' पञ्चमीषष्ठयोरन्यतरद्यु पितर द्रक्ष्यसि '। इतरेद्यु —[7]कष्टदिनादितरेद्यु प्रियो द्रष्टव्य ॥ २० ॥

[1] वतन्ते K4, K5　[2] एषमश्च यत K5 K6　[3] तत K6　[4] K3, K4 omit the first half　[5] पूर्वेद्युरित्यादय K5　[6] समागतान् K2, K3
[7] अष्टदिन॰ J2

(विव ) परुत्परारि—पूर्वतरे यति । पूर्वस्मिन्नब्दे परुच्छब्द । पूर्वतरे वर्षे परारिशब्द । यति वर्तमाने वर्षे ऐषम इत्यर्थ । 'सद्य परुत्परार्यैषम . . .' (५ ३ २२) इत्यत्र काशिका (२, पृ ६१)—'पूर्वपूर्वतरयो परभावो निपात्यते[1] उदारी च प्रत्ययौ सवत्सरेऽभिधेये । पूर्वस्मिन् सवत्सरे परुत्, पूर्वतरे सवत्सरे परारि । इदम इश्भाव समसण्प्रत्ययो निपात्यते सवत्सरेऽभिधेये । " इदम[2] इश् " (५ ३ ३) इतीशादेश आदिवृद्धिश्च । अस्मिन् [3]सवत्सरे ऐषम ।' यथा—

' परारिसंचित वित्त परुन्नष्टमभोगत ।
ऐषमश्चीयते यत्नात् तस्य किं वा भविष्यति ॥ '

तथा च—

' परारिसदर्शितसनिवेशौ परुत्पराभूतसरोजकोशौ[4] ।
इमावियन्तौ पुनरैषमस्ते कुचौ कियन्तौ पुरतो भवेताम् ॥ '

इति ॥ अद्यात्राह्नि । अत्र वर्तमानेऽहनि, अधिकरणार्थप्रधाने । यथा—'अद्याहं वसन्तोत्सवे सबहुमानमाहूय' इति (रत्ना. १. ५-) । अथ पूर्वेऽह्नीत्यादौ—पूर्वेद्युरादयः । अस्यार्थः—[5]पूर्व उत्तर अपर इत्येतेभ्यः, अधर अन्य अन्यतर इतर इत्येतेभ्यश्च सप्तभ्यः शब्देभ्यः क्रमेण पूर्वेऽह्नि उत्तरेऽह्नि अपरेऽह्नि इत्याद्यधिकरणत्वविशिष्टार्थविवक्षायाम् एद्युसिप्रत्यये, पूर्वेद्युः उत्तरेद्युः अपरेद्युः अधरेद्युः अन्येद्युः अन्यतरेद्युः इतरेद्युः इत्येते सप्त शब्दा भवन्ति । 'सद्यः परुत् परार्यैवमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः' (५. ३. २२) इति निपातनादेषां साधुत्वम् । यथा—'पूर्वेद्युर्नान्दीमुखम्' इति । 'पूर्वेद्युरिष्यते प्रातः पूर्वेद्युः पूर्ववासरे' इति रुद्रवाक्यात् पूर्वेद्युशब्दः प्रातरर्थेऽपि वर्तते । उत्तरेद्युः—नान्दीमुखादीनामुत्तरेद्युर्विवाहः । अपरेद्युः—तस्मिन्नपरेद्युर्वा गृहप्रवेशः । अधरेद्युः—सर्वत्रोपवासदिनादधरेद्युरेकभुक्तं कुर्यात् । अन्येद्युः—'अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः' इति (रघु. २. २६) । अन्यतरेद्युः—'प्रतिपत्पञ्चदश्योरन्यतरेद्युरागमिष्यत् प्रभाकरः' इति । इतरेद्युः—'रिक्ततिथेरितरेद्युर्द्रष्टव्यो राजा' इति ॥ २० ॥

[1] B6, Tv omit निपात्यते    [2] इद वाक्य मुद्रितग्रन्थे न दृश्यते    [3] वत्सरे Gm3, Tv    [4] °पयोजकोशौ Tv    [5] अथ पूर्वेऽह्नीत्याद्यधिकरणविशिष्टार्थविवक्षायामेद्युसिप्रत्यये पूर्वेद्यु    सप्त शब्दा भवन्ति Tv

(पा) परुत्परारि—पूर्वतरे यति । परुत् परारि ऐषम [1]इत्येते शब्दा [2]पूर्वपूर्वतरवर्तमानवर्षेषु स्यु । यथा—

'परारिसदर्शितसनिवेशौ परुत्पराभूतसरोजकोशौ ।
[3]तथैषमस्तालफलोपमौ तौ स्तनौ कियन्तौ पुरतो भवेताम् ॥'

इति ॥ अद्यात्राह्नि । अद्यशब्दोऽत्राह्नीत्येतस्मिन्नर्थ स्यात् ॥ अथ पूर्वेऽह्नीत्यादौ—पूर्वेद्युरादय । पूर्वेद्युरादिशब्दा पूर्वादिशब्देभ्य. सकाशात् पूर्वेऽह्नीत्याद्यर्थेषु स्यु । पूर्वेद्यु पूर्वाह्णश्च पूर्वदिवसश्च स्यु. । 'पूर्वेद्युरिष्यते प्रात पूर्वेद्यु. पूर्ववासर ' इति रुद्र । उत्तरेद्यु [4]उत्तरेऽह्नीत्यर्थ. । अपरेद्युरपरेऽह्नि । अधरेद्युरधरेऽह्नि । अन्येद्युरन्यस्मिन्नहनि । अन्यतरेद्युरन्यतरस्मिन्नहनि । इतरेद्युरितरस्मिन्नहनीत्यर्थ ॥ २० ॥

[1] A1 omits इत्येते. [2] पूर्वे पूर्वतरे वर्तमाने च वर्षे स्युः B3, C1 [3] इमावियन्तौ पुनरेपमस्त्यौ A1 [4] A1 omits the three lines.

**उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥ २१ ॥**
**ह्योऽतीतेऽनागतेऽह्नि श्वः परश्वस्तत्परेऽहनि ।**
**तदा तदानीं युगपदेकदा सर्वदा सदा ॥ २२ ॥**

(वि.) उभयद्युश्चोभयेद्यु । [1]एतावुभयोरह्नोरित्यस्मिन्नर्थे वर्तेते । यथा—उभयद्युरुपोषणम्[2] । उभयेद्युरुत्सव ॥ परे त्वह्नि परेद्यवि । परेऽह्नीत्यर्थे परेद्यवि इत्यव्यय वर्तते । यथा—परेद्यवि दृष्टस्ते सखा ॥ ह्योऽतीते । गतेऽह्नि ह्य इत्यव्यय वर्तते । यथा—ह्य सर्वमभवत्[3] ॥ अनागतेऽह्नि श्व । अनागते वर्तमानानन्तरदिवसे श्व शब्दो वर्तते । यथा—'श्व कार्यमद्य कुर्वीत' इति[4] ॥ परश्वस्तत्परेऽहनि । [5]श्वोदिनानन्तरेऽहनि परश्व शब्दो वर्तते । यथा—परश्वो वा भविष्यति ॥ तदा तदानीम् । एतौ तस्मिन्[6] काले इत्यर्थे वर्तेते । यथा—'तदा चक्षुष्मता प्रीतिरासीत् समरसा द्वयो ' इति (रघु ४ १८) । तदानीम्—' यदा स्यात् प्रियया सङ्गस्तदानीमेव मे सुखम् ' इति ॥ युगपदेकदा । एतौ तुल्यकाल इत्यस्मिन्नर्थे वर्तेते । यथा—' युगपद्व्यानशे दिश ' इति । एकदा—एकदा मिलिता द्विजा ॥ सर्वदा सदा । एतौ सर्वस्मिन् काल [7]इत्यर्थे वर्तेते । यथा—' सर्वदा सर्वदोऽसीति याचते याचक सदा' ॥ २१-२ ॥

[1] उभयस्मिन् अह्नि K5 [2] K4 adds मया [3] एतद् गतदिननाम K2, K6 [4] K2, K6 add एतदनागतदिननाम [5] K5 omits दिन° [6] अस्मिन् काले K6 [7] इत्यस्मिन्नर्थे K2, K4

(विव.) उभयद्युश्चोभयेद्युः । उभयस्मिन् अह्नीत्यर्थे ' द्युश्चोभयाद्वक्तव्यः ' (वा. ५. ३. २२) इति द्युःप्रत्यये उभयद्युः, तदभावपक्षे ' सद्यःपरुत् परारि . . . ' (५. ३. २२) इत्यादिनिपातनात् एद्युसप्रत्यये उभयेद्युः । यथा—' उभयेद्युर्जलूकाभिरसृङ्मोक्षः प्रशस्यते ' इति ॥ परे त्वह्नि परेद्यवि । पूर्ववदेव निपातनात् साधुः । यथा—' हन्तास्मि लङ्काधिपतिं[1] परेद्यवि ' इति ॥ ह्यो गते । अह्नीत्यनुकृष्यते । गतेऽनन्तरातीते दिने । यथा—' ह्योगोदोहोद्भव घृतम् ' इति ॥ अनागतेऽह्नि श्वः । सन्निहित एव भविष्यति दिवसे । यथा—' श्वोभूते

ब्राह्मण वृणीते' इति । 'श्वो न हन्ता जयद्रथम्' इति च । ह्यस् श्वस् शब्दावुभावपि सकारान्तावव्ययौ ॥ परश्वस्तत्परेऽहनि । तस्मात् श्वःशब्दवाच्यात् परेऽनन्तरेऽहनि परश्वः । पारस्करादित्वेन (६. १. १५७) परशब्दादुत्तरस्य श्वःशब्दस्य सुडागमे श्चुत्वे च परश्श्वः । यथा—'परश्वोऽपि वाहनोत्सवः' इति ॥ तदा तदानीम् । द्वय तस्मिन् काले इत्यर्थे वर्तते । 'तदो दा च' (५. ३. १९) इति वर्तमानकाले[2] वर्तमानात् सप्तम्यन्तात् तच्छब्दाद् दाप्रत्ययः । चकाराद् दानींप्रत्ययश्च (५. ३. १८) । यथा—'तदैव प्रातःसवनाय प्रसर्पन्ति' इति । तदानीम्—'तदानीं कलहो महान्' इति ॥ युगपद् एकदा । बह्वीनां [3]क्रियाणामवच्छेदकन्यूनातिरेकरहिते काले द्वय वर्तते । तत्र युगपत् [4]इत्यव्युत्पन्नं प्रातिपदिकम् । यथा—युगपद् [5]व्रजन्ति, युगपदागच्छन्ति[6] इति । एकदा—'सर्वैकान्यकियत्तदः काले दा' (५. ३. १५) इति दाप्रत्ययः । यथा—एकदा कर्म कुर्वन्ति इति ॥ सर्वदा सदा । सर्वस्मिन् काले इत्यर्थे द्वयम् । 'सर्वैकान्य. . .' इत्यादिना (५. ३. १५) सर्वशब्दात् सप्तम्यन्तात् काले वर्तमानाद् दाप्रत्यये सर्वदा । यथा—सर्वदा क इव वा सहिष्यते । 'सर्वस्य सोऽन्यतरस्याम्' (५. ३. ६) इति विकल्पेन सभावे सदा । यथा—सदातन इति ॥ २१-२ ॥

[1] °अधिपनि B6, Gm3 [2] 'काले' इत्येव काशिकायाम् (२, पृ. ६०)
[3] अवच्छेदके Gm3 [4] युवन्त्यस्मिन् काले । 'यु मिश्रणादौ' । गपदाप्रत्यय । युगपतेऽस्मिन् । 'पत गतौ' । इनप्रत्यय इति भा दी (पृ ५१८). [5] भुञ्जते Gm3
[6] आगच्छन्ति B5

(पा) उभयद्युश्चोभयेद्यु. । एते द्वे [1]उभयस्मिन्नहनीत्यर्थे स्याताम् ॥ परेद्यवि परेऽहनि । परेद्यविशब्द परेऽहनीत्यर्थे[2] स्यात् ॥ ह्यो गते । ह्य शब्दो [3]भूतदिवसार्थे स्यात् । 'निन्नतु' ॥ अनागतेऽह्नि श्व । श्व शब्दोऽनागतदिवसार्थे[4] स्यात् । 'रेपु' ॥ परश्वस्तु परेऽहनि । परश्व.शब्दः [5]श्व परदिवसार्थे स्यात् । 'मनाडु' ॥ तदा तदानीम् । एते द्वे तस्मिन् काले इत्यर्थे स्याताम् । 'अप्पुडु[6]' ॥ तर्हिशब्दोऽपि स्यात् । 'यदा यर्हि तदा तर्हि' इति वैजयन्ती (पृ २८७, श्लो ५) ॥ युगपदेकदा । एते द्वे एकस्मिन् काले इत्यर्थे स्याताम् । 'ओरप्पुडु[6]' ॥ सर्वदा सदा । एते द्वे सर्वस्मिन् काले इत्यर्थे स्याताम् । 'यल्लप्पुडुनु[6]' ॥ २१-२ ॥

[1] उभयोरह्नोरित्यर्थे B3　[2] परेऽह्नीत्यर्थे B3　[3] भूतेऽह्नि B3; भूतदिनार्थे C1.
[4] अनागतेऽह्नि B3　[5] श्व.परेऽहनि B3　[6] B3 omits

**एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ।**
**दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ।। २३ ।।**

**इत्यव्ययवर्गः**

(वि.) एतर्हि सप्रति—साप्रतं तथा। एते पञ्चशब्दा अस्मिन् काले इत्यर्थे वर्तन्ते । [1]यथा—एतर्हि क्रियते कार्यम् । सप्रति—' सप्रत्यसाप्रत वक्तुम्[2] ' इति (शिशु. २. ७०) । इदानीम्—' इदानीमस्मि सवृत्त [3]सचेता. प्रकृति गत. ' इति (भ गी ११. ५१) । अधुना—' वलावलेपादधुनापि पूर्ववत् ' इति (शिशु १ ७२) । साप्रतम्—[4]तत्पापो धाम साप्रतम् ।। दिग्देशकाले—प्रत्यगादय । अस्यार्थ —पूर्वादौ पूर्वपश्चिमोत्तराधरेषु दिग्देशकाले[5] दिगर्थे देशार्थे कालार्थे गम्यमाने प्रागुदक्प्रत्यगादय प्राक् उदक् प्रत्यक्, आदिशब्दादधस्तात् अर्वाक् इति पञ्चाव्यया भवन्ति । अत्रोदहरणानि—दिशि यथा । प्राक्—' [6]आयुष्य प्राङ्मुखो भुङ्क्ते ' इति (म.स्मृ २. ५२) । देशे यथा—' प्राग्भागत पतदिहेदमुपत्यकासु ' इति (शिशु. ४ ४६) । काले—' प्राक्सृष्टे केवलात्मने ' इति (कु स २ ३) । एवमुदक्प्रत्यगादिष्वपि कालवर्जमुदाहरणानि द्रष्टव्यानि ।। २३ ।।

इति श्रीवडगललिङ्गयसूरिविरचितायाममरकोशपदविवृतावव्ययवर्ग [7]

[1] अत्रोदाहरणानि K2, क्रमेणो° K4　[2] J2 adds उक्ते मुसलपाणिना　[3] K2, K3 omit the latter half　[4] तद्वद्य K6　[5] °कालेपु K5　[6] प्राङ्मुखोऽन्नानि भुञ्जीत K6　[7] °वर्गविवरण समाप्तम् J2

(विव.) एतर्हि संप्रति—सांप्रत तदा । एते पञ्च शब्दाः अस्मिन् काले इत्यर्थे वर्तन्ते । ' इदमो हिल् ' (५. ३. १६) इति हिल्प्रत्ययः । ' एतेतौ रथोः ' (५. ३. ४) इति इदम एतादेशश्च । संप्रतिशब्दस्य तिष्ठद्गुप्रभृतित्वेन (२. १. १७) निःयमादिशब्दवदव्ययीभावत्वम् । ' दानीं च ' (५. ३. १८) इति सप्तम्यन्ताद् इदंशब्दात् काले वर्तमानात् दानींप्रत्यये इदादेशे च इदानींशब्दसिद्धिः । ' अधुना ' (५. ३. १७) इति निपातनाद् इदंशब्दात् काले वर्तमानात् सप्तम्यन्तात्

धुनाप्रत्ययः प्रकृतेरशादेशे च अधुनाशब्दः साधुः । 'तद्धितश्चासर्वविभक्तिः' (१. १. ३८) इत्यव्ययत्वम् । संप्रतिशब्दादेव स्वार्थिकेऽण्प्रत्यये सांप्रतम् । यथा—एतर्हि क्रियते । संप्रत्येवागतं मया । इदमिदानीं निरूप्यते । उपयोगोऽधुनोच्यते । 'कोन्वस्मिन् सांप्रतं लोके' इति (रामा. १. १. २) ।। दिग्देशकाले—प्रत्यगादयः। अस्यार्थो यथा—'दक्षिणोत्तराभ्यामतसुच्' (५. ३. २८) इत्यत्र सूत्रे दिग्देशकालेषु इत्यर्थत्रयानुवृत्तावपि दक्षिणशब्दस्य काले वृत्त्यसंभवाद् उत्तरशब्दादेवार्थत्रयवृत्तेरतसुच्प्रत्ययविधिरङ्गीकृतो वृत्तिकारादिभिः (काशिका २, पृ. ६२)। एवं प्रकृतेऽपि दिग्देशकाल इत्यविशेषणोक्तावपि प्राक्पदस्यैवार्थत्रये विधिः। उदगादिशब्दानां तु कालरूपार्थे वृत्त्यसंभवाद् अर्थद्वय एव विधिः । यथा—'प्राङ्मुखोऽन्नानि भुञ्जीत' इति प्राच्यां दिशि । 'प्राग्भागतः पतदिहेदमुपत्यकासु' इति (शिशु. ४. ४६) प्राग्देशः । 'प्राक्सृष्टेः केवलात्मने' (कु. सं. २. ३) इति पूर्वकाले । कण्ठस्थब्रह्मसूत्र उदङ्मुख इति उदीच्यां दिशि । उदक्प्रवण इति देशे। प्रत्यगा तारकोदयादिति प्रतीच्यां दिशि, प्रत्यगुन्नत इति देशे । आदिशब्देन अर्वाक् अधराक् इत्यादि । यथा—'प्राग् अवाग् उदग् अधराक् सर्वतस्त्वा दिश आधावन्तु' इति श्रुतिः (तै. सं. १. ४. १. २) । तथा 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो 'दिग्देशकालेष्वस्तातिः' (५. ३. २७) इति प्राची अवाची उदीची अधरा इत्येतेभ्यो यथासंभवं दिग्देशकालेषु वर्तमानेभ्यः अस्तातिप्रत्यये सति 'अञ्चेर्लुक्' (५. ३. ३०) इति दिक्शब्दस्य उत्तरस्यास्तातिप्रत्ययस्य लुक् । ततो 'लुक्तद्धितलुकि' (१. २. ४९) इति स्त्रीप्रत्ययस्य लुकि प्राक् अर्वाक् प्रत्यक् अधराक् इति भवति । इदानीं शेषकारेणोक्ता निरूप्यन्ते ।

'उक्ता ग्रन्थकृता केचित् प्रत्ययान्ताव्यया इह ।
तत्प्रसङ्गान्निरूप्यन्ते प्रत्ययान्ताव्ययाः परे ॥'

इत्यव्ययवर्गनिरूपणप्रस्तावे परत्परारितदातदानीमित्यादयः केचित् प्रत्ययान्ताव्ययाः अमरसिंहनाम्ना प्रदर्शिताः । तत्प्रसङ्गादपरेऽपि प्रत्ययान्ता अव्यया निरूप्यन्त इत्यर्थः । तानेव श्लोकेन संगृह्णाति—

सुच्स्त्यसुच्प्रातसित्रल्दादामेधाहिलाह्वयः ।
साच्च्विडाज्थमुन्डचवत्थाशस्यतिमान्तकृदव्ययम् ॥

इति। एतेषां च सुजन्तप्रभृति मान्तकृदन्तपर्यन्तानां 'स्वरादिनिपातमव्ययम्' (१ १ ३७) इत्यधिकारे सूत्रवार्तिकभाष्यकारैरव्ययत्वकथनात्,

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥'

इति (काशिका १, पृ १४) अव्ययलक्षणस्य सद्भावाच्च सुस्पष्टमव्ययत्वम्। सुजादिप्रत्ययान्ता अव्ययीभावसमासश्च अव्यया इत्यर्थः। एषां क्रमेणोदाहरणानि। सुच्—'द्वित्रिचतुर्भ्यः सुच्' (५ ४ १८)। 'द्विर्भुङ्क्ते त्रिर्भुङ्क्ते, चतुरवत्तं हविः' इति। कृत्वसुच्—'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (५ ४ १७)। यथा—'पञ्चकृत्वस्ते नमः' इति (तै आ ४ २८ १)। षट्कृत्वः, सप्तकृत्वः। त्रा—'तदधीनवचने' (५ ४ ५४) 'देये त्रा च' (५ ४ ५५)। ब्राह्मणाधीनं देयं करोति ब्राह्मणत्रा करोति। ब्राह्मणत्रा भवति। ब्राह्मणत्रा स्यात् (काशिका २, पृ ९१)। अत्र कृभ्वस्तियोगनियमः। 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (५ ४ ५६) इति त्रा। अत्र धातुनियमो नास्ति। यथा—देवान् गच्छति, देवत्रा गच्छति। देवेषु गच्छति, देवत्रा गच्छति इत्यादि (काशिका २, पृ ९१)। एवं मनुष्यादयोऽप्युदाहार्याः। बहुलग्रहणाद् 'बहुत्रा जीवतो मनः' (ऋग्वेद १० १६४ २) इत्याद्यपि भवति। तसिल्—'पञ्चम्यास्तसिल्' (५ ३ ७) कस्मादित्यर्थे कुतः। सर्वस्मादित्यर्थे सर्वतः। यस्मादित्यर्थे यतः इत्यादि। 'पर्यभिभ्यां च' (५ ३ ९) इत्यत्र सर्वोभयार्थे वर्तमानाभ्यां प्रत्ययः इष्यते। परितः, अभितः इति। तथा—'प्रतियोगे पञ्चम्यास्तसिः' (५ ४ ४४)। 'प्रद्युम्नो वासुदेवतः प्रति' (काशिका २, पृ ८८)। माषानस्मै तिलतः प्रति यच्छति इति। 'तसिप्रकरणे आद्यादिभ्य उपसंख्यानम्' (वा ५ ४ ४४) इति। आदौ आदितः। मध्ये मध्यतः। पार्श्वे पार्श्वतः। पृष्ठे पृष्ठतः इत्यादि॥

त्रल्—'सप्तम्यास्त्रल्' (५ ३ १०) इति सप्तम्यर्थे। यथा—कस्मिन्नित्यर्थे कुत्र। यत्र, तत्र इत्यादि॥ दा—'सर्वैकान्यकियत्तदः काले दा' (५ ३ १५) इति। सर्वदा, सदा, एकदा॥ अत्—'किमोऽत्' (५ ३ १२)। किमः 'क्वाति' (७ २ १०५) इति क्वभावः। कस्मिन्नर्थे क्व॥ आम्—'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' (५ ४ ११) इति। किंतराम्। किंतमाम्। प्रगेतराम्।

प्रगेतमाम् । पचतितराम् । पचतितमाम् । उच्चैस्तराम् । उच्चैस्तमाम् (काशिका २, पृ ८२) इति ॥ एधा—'द्वित्र्योश्च धमुञ्' (५ ३ ४५) इति वर्तमाने, 'एधाच्च' (५ ३ ४६) इति एधाजादेश । द्वेधा, त्रेधा इत्यादि । 'संख्याया विधार्थे धा' (५ ३ ४२) इति । द्विधा करोति । त्रिधा दृश्यते । बहुधा भाषते इत्यादि । अत्र धाग्रहणमन्यस्यापि धाप्रत्ययादेशस्योपलक्षणम् । ततश्च 'एकाद्धो ध्यमुञन्यतरस्याम्' (५ ३ ४४) इति ध्यमुञ्प्रत्यये 'तद्धितेष्वचामादे' (७ २ ११७) इति ञिति तद्धितप्रत्ययस्य परत्वादादिवृद्धि । ऐकध्यम् । एकधा इति भवति ॥

हिल्—'इदमो हिल्' (५ ३ १६) इत्यस्मिन् काले इत्यर्थे 'एतेतौ रथो' (५ ३ ४) इति इदम एतादेश । 'अनद्यतने र्हिलन्यतरस्याम्' (५ ३ २१) इति किमादे सप्तम्यन्ताद् अनद्यतने वा र्हिल् । कदेत्यर्थे कर्हि । यदेत्यर्थे यर्हि इत्यादि । पक्षे दादि (५ ३ १५) कदा, यदा ॥ आ—'दक्षिणादाच्' (५ ३ ३६) इति । दक्षिणा वसति, दक्षिणस्या दिशि वसतीत्यर्थ । दक्षिणा दिगिति वा ॥ आहि—आहय इत्यत्र (शेषकारश्लोके) आकारस्यापि सवर्णदीर्घे आहिप्रत्यय-निर्देशसिद्धि । 'आहि च दूरे' (५ ३ ३७) इति, चकारात् आच्प्रत्यय । दक्षिणाहि वसति । दक्षिणस्या दिशि दूरे इत्यर्थ । दक्षिणाहि पर्वतो दूरे । दक्षिणाहि रमणीयम् इति । 'उत्तराच्च' (५ ३ ३८) इति आजाही प्रत्ययौ । उत्तरस्या दिशि दूरे वसतीत्यर्थे उत्तराहि वसति । उत्तराहि पर्वत । उत्तराहि रमणीयम् इति ॥

साति—'विभाषा साति कार्त्स्न्ये' (५ ४ ५२) इति । सर्वं लवणमुदकमापद्यत इत्यर्थे उदकसाद्भवति लवणम् । पक्षे उदकीभवति । अग्निसाद्भवति । पक्षे—अग्नीभवति । 'अभिविधौ सपदा च' (५ ४ ५३) इति सातिप्रत्यये अग्निसात् सपद्यते । 'तदधीनवचने' (५ ४ ५४) इति सातिप्रत्यये अग्निसात् भवति । राजाधीन करोति राजसात् करोति । राजसाद्भवति । राजसात् सपद्यते । राजसात् स्यात् । तथा 'देये त्रा च' (५ ३ ५५) इति साति । ब्राह्मणाधीन देय करोति ब्राह्मणसात्करोति, पात्रसात्करोतीत्यादि (काशिका २, पृ ६०-१) ॥ च्वि—'अभूततद्भावे कृभ्वस्तियोगे सपद्यकर्तरि च्वि' (५ ४ ५०) इति । अशुक्ल शुक्ल सपद्यत इत्यर्थे शुक्लीभवति, शुक्ली स्यात्, शुक्लीकरोति इति । तथा 'अरुर्मनश्चक्षुश्चेतो-

रहोरजसां लोपश्च' (५. ४. ५१) इति च्विः। प्रातिपदिकस्य च लोपः। अनररररर्भवति अरूभवति। उन्मनीभवति। प्रचक्षूभवति। प्रचेतीकरोति। विरजीकरोति इत्यादि॥ डाच्—'अव्यक्तानुकरणाद्‌द्व्यजवरार्धादनितौ डाच्' (५. ४. ५७) इति। दमदमा भवति। सिमसिमा करोति इत्यादि। तथा 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ' (५. ४. ५८) इति डाच्। द्वितीया करोति। द्वितीयलेखनं करोतीत्यर्थः। एवं तृतीया करोति। शम्बा करोति। अनुलोमकृष्टं क्षेत्रं पुनः प्रतिलोमं तिर्यग् वा कृषतीत्यर्थः इत्यादि। 'मद्रात् परिवापणे' (५. ४. ६७), 'भद्राच्चेति वक्तव्यम्' (वा. ५. ४. ६७) इति डाच्। मद्रा करोति, भद्रा करोति; मङ्गलार्थं मुण्डनं करोतीत्यर्थः। इत्यादयो डाजन्ताः॥

धमुञ्—धाप्रत्ययस्य विधार्थे 'द्वित्र्योश्च धमुञ्' (५. ३. ४५) इति। द्वैधम्। त्रैधम् इति। 'धमुञश्च' इति शेषग्रन्थे चकारो विकल्पार्थः। धमुञ्प्रत्ययान्तो विकल्पनाव्यय इत्यर्थः। तथा च 'धमुञन्तात् स्वार्थे डदर्शनम्' (वा. ५. ३. ४५) इति डप्रत्यये सत्यकारान्तनपुंसकत्वमपि विकल्पेन भवति। यथा—द्वैधस्य विषयः, त्रैधस्य विषयः इति॥

क्त्वा—'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (३. ४. १८) इति। यथा—'आलप्यालम्' इति (शिशु. २. ४०) नालपितव्यमित्यर्थः। खलु—'खलूक्त्वा खलु' (शिशु. २. ७०)। वाचिकं न वक्तव्यमित्यर्थः। तथा 'उदीचां माङो व्यतीहारे' (३. ४. १९) इति क्त्वा। यथा—अपमित्य याचते। याचित्वापमयते इत्यर्थः। 'समानकर्तृकयोः पूर्वकाले' (३. ४. २१) इति क्त्वा। यथा—भुक्त्वा व्रजति। पीत्वा गच्छति (काशिका १, पृ. २४३)। व्यादाय स्वपिति। संमील्य स्वपिति इत्युपसंख्यानम्। अत्र अपूर्वकालत्वादिति आद्युदाहरणानि [अपमित्य याचते इत्यादि]॥ शस्—'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' (५. ४. ४२) इति। बह्वर्थाद् मङ्गलवचनम्। यथा—बहुशो ददाति। पक्षे बहूनि ददाति। भूरिशो ददाति। भूरि ददातीति। अल्पार्थादमङ्गलवचनम्। यथा—अल्पशो ददाति। पक्षे अल्पं ददाति। स्तोकशो ददाति। पक्षे स्तोकं ददाति। (काशिका. २, पृ. ८८)। एवं कारकान्तरेष्वुदाहार्यम्। 'संख्यैकवचनाच्च वीप्सायाम्' (५. ४. ४३) इति शस्। यथा—द्वौ द्वौ ददातीत्यर्थे द्विशो ददाति। त्रींस्त्रीन् ददातीत्यर्थे त्रिशो ददाति। कर्षापणं कर्षापणं ददातीत्यर्थे कर्षापणशो ददाति। माषशो ददाति। प्रस्थशो ददाति इत्यादि (काशिका. २, पृ. ८८)॥

वति—इवार्थे वति प्रागुक्त । 'तेन तुल्य क्रिया चेद् वति' (५ १ ११५)। ब्राह्मणवत् । राजवत् । 'तत्र तस्येव' (५ १ ११६) इति वति । मथुरायामिव मथुरावत् । देवदत्तस्येव देवदत्तवत् ॥

मान्तकृत्—'आभीक्ष्ण्ये णमुल् च' (३ ४ २२)। यथा—भोज भोज व्रजति । पाय पाय व्रजति । तथा 'विभाषाग्रेप्रथमपूर्वेषु' (३ ४ २४)। अग्रे भोज व्रजति । अग्रे भुक्त्वा व्रजतीत्यर्थ ॥ तथा 'कर्मण्याक्रोशे कृञ खमुञ्' (३ ४ २५)। चोरकारमाक्रोशति । चोरोऽसि इत्याक्रोशतीत्यर्थ । तुमुन्—'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' (३ ४ ६५)। यथा—शक्नोति भोक्तुम् इत्यादि । 'तुमुन्ण्वुलौ क्रियाया क्रियार्थायाम्' (३ ३ १०) इति तुमुन् । यथा—भोक्तु व्रजति इति (काशिका १, पृ २०८)॥ शेषे—

'थाल्यमुस्तादेनबसादव्ययीभाव आसि च'

इति । थाल्प्रत्ययादिसप्तप्रत्ययान्त शब्दरूपम् अव्ययीभावसमासश्चेत्यष्टविधम् अव्ययसज्ञमिति पूर्वेणान्वय । तत्र थाल्—'प्रकारवचने थाल्' (५ ३ २३)। तेन प्रकारेणेत्यर्थे तथा । एव यथा सर्वथा इति ॥ थमु—'इदमस्थमु' 'किमश्च' (५ ३ २४-५) इति । यथा—इत्थम्, कथम् इति ॥ अस्ताति—'दिक्-शब्देभ्य सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति' (५ ३ २७)। पूर्वस्या दिशीत्यर्थे पुरस्तात्, पूर्वस्या दिश पुरस्तात्, पूर्वा दिक् पुरस्तात् इत्यादि ॥ एनप्—'एनबन्यतरस्यामदूरेऽपञ्चम्या' (५ ३ ३५) इति । यथा—उत्तरस्या दिश्यदूरे वसतीत्यर्थे उत्तरेण वसति इति । एव दक्षिणेन, अधरेण इत्यादि दिग्देशकालेषु विभक्तयन्तरे द्रष्टव्यम् । अपञ्चम्या इति निषेधात् तत्राभाव ॥ अस—'पूर्वाध रावराणामसि पुरधवश्चैषाम्' (५ ३ ३९) इति । पुर । पूर्वस्या दिशीत्यर्थ । एवम् अध, अव इति दिग्देशकाले विभक्तित्रय द्रष्टव्यम् ॥ आत्—'उत्तराधर-दक्षिणादाति' (५ ३ ३४) इति अस्तातेरर्थे आति । उत्तरस्या दिशि वसति, उत्तराद् वसति । अधराद् वसति । दक्षिणाद् वसति इति ॥ अव्ययीभाव—अव्ययीभावो नाम समासविशेष । 'अव्यय विभक्तिसमीप' (२ १ ६) इत्यादिसूत्रसदर्भविहित । यथा—अधिपीठम्, उपकुम्भम्, प्रत्यर्थमित्यादि ॥ आसि—'इण आसि' (उ ४ २२३)। अया ॥ अनन्तर केचिदव्यया शेषकारेण दर्शिता । यथा—प्रत्यारम्भे सह इति । अचोदितस्यार्थाधिकरणे न प्रतिषेध प्रत्यारम्भ । यथा—सह भोक्ष्यस इति ॥ शेषे—

'भगो हे हंहो भो हो च संबुद्धिः'

इति । एते पञ्च संबुद्धिः संबोधने । यथा—भगो गुरवः । हे वृक्ष किं कम्पसे । हंहो पश्यत । भो देवदत्त । उपहूतो हो इत्याह इति ॥ शेषे—'दुष्टसंबोधने अघो स्यात्' । यथा—अघो दुरात्मन् इति ॥ शेषे—'त्वया ते मे मयेति च' । इतिशब्दस्य त्वयेत्यनेनाप्यन्वयं दर्शयितुं चशब्दः । ततश्च त्वयेत्यर्थे तेशब्दो वर्तते । मयेत्यर्थे मेशब्दो वर्तत इत्यर्थः । यथा—'श्रुतं ते राजशार्दूल श्रुतं मे भवतो गुरो' इति ॥ शेषे—'येन तेनेति हेतौ स्तः' इति । साधनत्वावस्थापन्ने हेतौ अभिधेये तृतीयैकवचनप्रतिरूपकौ येन तेनेत्यव्ययौ स्त इत्यर्थः । 'वितर गिरमुदारां येन मूकाः पिकाः स्युः' इति । तेन—अयं वादेषु प्रगल्भते तेन श्लाघ्यः इति ॥ शेषे—'न ह वै तु निषेधने' । यथा—'न ह वा एतस्यार्चा न यजुषा न साम्नाऽर्थोऽस्ति, यः सावित्रं वेद' इति । शेषे—'शुभं शुभे' । यथा—शुभंयुः इति ।

शेषे—'विशेषे तु' इति । यथा—अयं तु वक्ता इति ॥ शेषे—'वितर्के नु वै स्मृतः' इति । यथा—'को नु वा अन्तरिक्षे वाचं विसृजति' इति ॥ शेषे—'हेतावृतं निमित्तर्ते' इति । निमित्तं च ऋतं च निमित्तर्तम् इति द्वन्द्वैकवद्भावः । हेतौ इत्यव्ययं निमित्ते वर्तते । ऋतमित्यव्ययम् ऋते सत्ये वर्तते इत्यर्थः । हेतौ यथा—हेतौ तुष्यति भवान् इति । केनापि निमित्तेन तुष्यतीत्यर्थः । यथा—ऋतंवदः । सत्यवादीत्यर्थः ॥ शेषे—'सम्यगर्थे पशुः स्मृतः' इति । यथा—'बोधं नयन्ति पशुंमन्यमानाः' इति । सम्यक् प्रतिपाद्यमाना इत्यर्थः ॥ शेषे—'मात्रायां परिमाणार्थे' इति । यथा—मात्राया भुङ्क्ते इति ॥ शेषे—'शुकं शीघ्रे' इति । यथा—शुकं गच्छति इति ॥ शेषे—'ममत्ववान् मम' । ममेत्यव्ययम् । ममत्वं यवतीत्यर्थः । यथा—'निर्ममो निरहंकारः' इति (भ. गी. २. ७१) ॥ शेषे—'प्राह्णे अह्न आरम्भे' इति । अह्नः प्रारम्भे प्राह्णेशब्दः । यथा—'प्राह्णे देवानाम्' इति । पूर्वाह्णे देवानामित्यर्थः ॥

शेषे—'अयान्योन्यस्य परस्परे' इति । अन्योन्यस्येत्यव्यय परस्परशब्दार्थे वर्तते । यथा—'छन्दांस्यन्योन्यस्य लोकमभ्यध्यायन्' इति ॥ शेषे—'यथा कथा चानादृत्याम्' इति । अनादृत्यामनादरे । यथा—'यथा कथा च दीयते । यथा कथा च दक्षिणा' इति (गण. महो. पृ. १५) ॥ शेषे—'मर्यादा स्यात् सीमबन्धने' इति । सीम्नि दीयमानतया मर्यादाशब्दो निर्व्यूढः । 'मर्या इति सीमबन्धने ।

मर्या आदीयते मर्यादा' इति महोदधिश्च (पृ १५) ॥ शेषे—'हिं प्रस्तावे' इति। प्रस्ताव सामभक्तिविशेष । यथा—'हिं करोति' इति। (हिं साम गीयते इति महोदधौ पृ १६) ॥ शेषे—'कत् प्रकर्षे' इति। यथा—'कद् रुद्राय प्रचेतसे' इति (तै आ १० १७ १) ॥ शेषे—'शो कुत्सायाम्' इति। यथा—'शो करोति' इति ॥ शेषे—'सुखे तु शम्' इति। यथा—शङ्कर· शम्भु इति ॥

शेषे—'अन्तरिक्षे भुव ' इति। सकारान्तोऽयम्। 'भुवो वायुनान्तरिक्षेण साम्ना' इति श्रुति. (आपस्तम्बमन्त्रपाठ २ २१. ३)। रेफान्त इत्यपरे। यथा—'भुवर्देवांस्तर्पयामि' इति। एतच्चोदाहरणद्वय भ्रान्तिमूलमित्यन्ये ॥ शेषे—'क्ष्मौ भू·' इति। भूरित्यव्यय रेफान्त क्ष्मौ भूमौ वर्तत इत्यर्थ.। यथा—भूर्लोक इति ॥ *शेषे—'मिथुने मिथुन विदु ' इति। यथा—'मिथुनभाव उभयो '* इति ॥ शेषे—'समानार्थे प्रशान्' इति। यथा—प्रशान् देवदत्तेन यज्ञदत्त इति ॥ शेषे—'युक्त न्याय्ये' इति। यथा—'न तव युक्त दुष्टभाव.' इति ॥ शेषे—'क्षान्तौ क्षमा भवेत्' इति। यथा—क्षमाकरोति, इत्यादयोऽप्यनन्तत्वा । अव्ययगणेषु विभक्तिस्वरप्रतिरूपकाश्च निपाता इत्युक्ता अव्यया । त इदानीं प्रदर्श्यन्ते । यथा—आस बभूवार्थे। यथा—'लावण्य उत्पाद्य इवास यत्न ' इति (कु· स १ ३५) ॥ न यातीति न शक्यते इत्यर्थे। यथा—इद ते कर्तुं न याति इति। यातीति शक्यार्थे। इद कर्तुं याति ॥ वर्तते इति सोल्लुण्ठमङ्गवचने। यथा—'युद्धान्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते' इति (उत्तर ५ ३५)। न वर्तते इति मङ्गलप्रतिषेधे। यथा—'समराङ्गमुखे पराक्रमणानां न वर्तते' (गण महो पृ ३०) इति। मङ्गल न सम्भवतीत्यर्थ ॥ भवति सत्तायाम्। यथा—'भवति नाम तत्रभवान् युवन यात्रविष्यति' इति (गण महो. पृ ३०) ॥ मन्ये वितर्के। यथा—'मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुद्गुरः' इति (गण महो पृ ३०)। नास्तीति सत्तानिषेधे। यथा—नास्ति मतिरस्य नास्तिक. इति ॥ अस्मीत्यस्मदर्थानुवादे। यथा—'अविद्यास्मितारागद्वेषाभिनिवेशा पञ्च क्लेशा ' इति (योगसू २ ३)। 'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति' इति काव्य प्रकाशिकायाम् ॥ एहि मन्ये प्रहासे। यथा—एहि मन्ये रथेन यास्यसि इति। *एहि न त्वया [illegible] । अपि [illegible] ।* [illegible] मालतीमाधवे—'कन्यानां स्वरति महतो भास्तत विरचयते' इति (१ ३)।

'आसते शतमधिक्षिति भूपास्तोयराशिरसि ते खलु कूपाः' इति नैषधकाव्ये (५. १००)। त्वं तोयराशिरित्यर्थः। वाक्यालंकारे यथा—'यदपूपुजस्त्वमसि पार्थ' इति (शिशु. १५. १४)॥

पूर्यते इति निषेधे। यथा—'पूर्यतें प्राणायामेन' इति (गण. महो. पृ. ३०)। अलं प्राणायामेनेत्यर्थः॥ अस्ति सत्तायाम्। यथा—अस्ति परलोके मतिरस्येत्यास्तिकः। अस्तिक्षीरा ब्राह्मणी (काशिका १, पृ. १०६) इति। शङ्के इति वितर्के। यथा—'शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते' (मेघ. २. २८) इति। शङ्के शशाङ्कोऽयम् इति च। विद्यते इति भवत्यर्थे। यथा—विद्यते क्षीरा ब्राह्मणी इति। पश्य, पश्यत इति पूजायाम्। यथा—

'महीं सागरपर्यन्तां भो राजन् पश्य पालय।<br>गुरवः पश्यतासन्ने मयि दत्त कृपां दृशा॥'

इति। आह इत्युवाचेत्यर्थे। यथा—'अथाह वर्णी विदितो महेश्वरः' इति (कु. सं. ५. ६५)। इति तिङन्तप्रतिरूपका उक्ताः।

अथ विभक्तिप्रतिरूपकाः केचिदुच्यन्ते—प्रायः, अहम्, त्वम्, शुभम्, कृतम्, पर्याप्तम्, येन, तेन, चिरेण, अन्तरेण, चिराय, चिररात्राय, अकस्मात्, अकृत्या, अन्योन्यस्य, चिरस्य, मम, प्राह्णे, प्रगे, हेतौ, वेलायाम्, मात्रायाम् इति विभक्तिप्रतिरूपकाः। एवमादयो गणपाठेषु निघण्ट्वन्तरे च द्रष्टव्याः। ग्रन्थगौरवभयादिह न लिख्यन्ते॥ २३॥

नानैकार्थविशेषाद् वर्गद्वयवन्तमव्ययसमूहम्।<br>शेषोक्तादिसमेतं प्रव्यक्तं व्याख्यदप्पयाचार्यः॥<br>इह यत्त्यक्तमज्ञानादालस्याद्युपेक्षितम्।<br>प्रमादादन्यथोक्त यत् तद्विद्वद्भिर्विशोध्यताम्॥<br>आद्याव्ययवर्गीयश्लोका अष्टोत्तरा दश।<br>चिराद्यव्ययवर्गीयश्लोका नेत्रपयोधयः[1]॥<br>नानार्थाव्ययसयुक्ताश्चत्वारिंशदधिद्विकाः।

इति श्रीबोम्मगण्टयप्पयाचार्यकृतनामलिङ्गानुशासनवि[2]वरणेऽव्ययः समाप्तः

[1] चतुर्विंशतिरित्यर्थः [2] विवृतौ P6

(पा ) एर्तांह सम्प्रति—साम्प्रत तदा । एतानि एतस्मिन् काले इत्यर्थे स्यु । 'इप्पुडु' । दिग्देशकाले—प्रत्यगादय । प्रागादिशब्दा पूर्वादिग्देशकालेपु स्यु । पूर्वदिग्देशकाला । प्राक्—प्रागागत । प्राग्वसति । प्राग्रमणीयम् । उत्तरदिग्देशकाला । [1]उदक्, प्रत्यक् । आदिपदात् अधरदिगादि [2] । अधस्तात् । [3]उपरि [4]उपरिप्टात् इत्यादि ।। २३ ।।

इति [5]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजातेऽव्ययवर्ग

[1] A1 adds अपरदिग्देशकाला [2] B3 adds अधरदश [3] C1 adds ऊर्ध्वदेशकाला [4] तावेव B3, C1 [5] °नागनाथनरसिंह° A1

---

## ५. लिङ्गादिसंग्रहवर्गः

**सलिङ्गशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ।**
**[1]अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत् ।। १ ।।**

(वि ) अथ लिङ्गादिसग्रहवर्गमुपक्रमते सलिङ्गेति । अस्यार्थ —लिङ्गशास्त्रसहितै सन्नादिकृत्तद्धितसमासजैर्ग्रन्थैरिह सग्रहे वर्गेऽनुक्त लिङ्ग सकीर्णवत् सकीर्णवर्गे इवोन्नयेत् ।। १ ।।

(विव.) सलिङ्गशास्त्रैः—सकीर्णवदिहोन्नयेत् । इह हि ग्रन्यादौ ग्रन्थकारः 'सपूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्' (१, पृ. ३) इति प्रतिज्ञाय एतदन्तेन ग्रन्थसदर्भेण [2]सलिङ्गाना नाम्ना साव्ययानामनुशासन विधाय तत्र तत्र लिङ्गविधेरसपूर्णता मन्वानः तन्निरूपणाय वर्गान्तरमारभते सलिङ्गेति । सक्षेपेण सम्यक् वाच्यलिङ्गान्यत्र गृह्यन्ते निरूप्यन्त इति संग्रहशब्देन वक्ष्यमाणो लिङ्गसग्रहाख्यो वर्गो विवक्षित. । लिङ्गमित्येकवचनमविवक्षितम् । उन्नयेदिति लक्षणमुखेन तत्त्वज्ञानमुन्नीय[3] लिङ्गानि जानीयादित्यर्थः । कथ जानीयात् ? इत्यत आह—सन्नादीत्यादिना । इह सन्नादिशब्देन सन् क्यच् काम्यजादिप्रत्ययान्तेभ्यो धातुभ्यो विहिता[1] अकारादिप्रत्यया अभिहिता, तृतीयधात्वधिकारविहिता' तिङ्वर्जिताः

प्रत्यया कृत सनाद्यन्तेभ्यो धातुभ्यो विहिताना कृत्प्रत्ययव्यतिरिक्तप्रत्ययाना लिङ्गनिर्णयौपयिकत्वाभावात्। यद्यपि सन्नादयोऽपि कृद्रूपा एव, तथापि ब्राह्मणपरिव्राजकन्यायेन कृद्भ्य सन्नादीना पृथगेव निर्देश कृत । तथा कृच्छब्देन सनाद्यन्तधातुव्यतिरिक्तधातुविहिता एव कृत्यप्रत्यया ग्राह्या । तद्धिता प्रसिद्धा । सन्नादय कृतश्च तद्धिताश्च समासाश्चेति द्वन्द्व । तेभ्यो जातान्यनन्तरमेवास्माभि कृदाद्युपाधिमुखेन वक्ष्यमाणानि वाक्यानि। तत्र स्त्रीभावादावनिक्तिन्नित्यादीनि कृज्जानि (श्लो ४), तल्वृन्दे येनिकट्यत्रा इत्यादीनि (श्लो ४) तद्धितानि, अजन्तैर्द्विगुरेकार्थ (श्लो ३) इत्यदीनि समासजानि तल्लिङ्गान्युन्नयेत् इत्यन्वय ।

ननु—भवत्प्रणीतवाक्याना कथ प्रामाण्यमित्यत आह—सलिङ्गशास्त्रैरिति। 'स्त्रिया क्तिन्' (३ ३ ९४), 'अकारान्तोत्तरपदो द्विगु स्त्रियामिष्यते' (वा २ ४ १७), 'पुसि सज्ञाया घ प्रायेण' (३ ३ ११८), 'घञन्ता पुसि' (लिङ्गानु ३६)। 'रात्राह्नाहा पुसि' (२ ४ २९), 'अनुवाकादय पुसि वक्तव्या', 'नपुसके भावे क्त' (३ ३ ११४), 'अपथ नपुसकम्' (२ ४ ३०), 'अर्धर्चा पुसि च' (२ ४ ३१), 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो' (२ ४ २६) 'पूर्ववदश्ववडवौ'(२ ४ २७)इत्यादीनि यानि पाणिनिवररुचिभाष्यकारादिभि प्रणीतानि लिङ्गप्रतिपादकानि शास्त्राणि, यानि च बार्हस्पत्यादीनि च लिङ्गानुशासनानि तत्सहितैरित्यर्थ । तत्साहित्य च तदेकार्थत्व तन्मूलत्वमिति यावत्। अनेन स्ववाक्याना प्राक्तनलिङ्गानुशासनमूलकत्वेन प्रामाण्यमुक्तम् ।

ननु—नामानुशासनसमय एव लिङ्गानामपि स्पष्टीकरणात् किमनेन पिष्टपेषणप्रयासतुल्येन प्रत्ययादिद्वारकलिङ्गनिर्णयकर्तव्यताप्रयासेन इत्यत आह—अनुक्तमिति। अयमभिप्राय —सकलस्य शब्दजातस्य प्रातिपद्येन लिङ्गनिर्णयकरणानुपपत्ते यत्किंचिदुपाधिमुखेनैव शब्दजात क्रोडीकृत्य लिङ्गनिर्णय कर्तव्य । स च पूर्वमकृत एव । सकीर्णवर्गे तु प्रकृत्यादिभिरुन्नयनमात्रमुपक्षिप्तम् । न तून्नयनोपायोऽपि विविच्य दर्शित । अत पर्यायकाण्डे नानार्थकाण्डे च कृतमपि लिङ्गानुशासनम् असाकल्यादनुक्तप्रायमेवेति मन्वानेन अनुक्तमित्युक्तम् ।

अत्र केचित पठन्ति—तत्रापि प्रागनुक्तं सकलशब्दशास्त्रक्रोडीकारं कृत्यप्रत्ययादिभिरुपाधिभि लिङ्गमुन्नयेदिति योज्यम्। दृष्टान्तमुखेनापि लिङ्गोन्नयनोपायप्रकारमाह—सकीर्णवदिति । यथा सकीर्णवर्गे प्रकृत्यादिमुखेन लिङ्गोन्नयनमुक्त तद्वदिहापीति। तत्र प्रकृत्या यथा—बाल एव बालक । शश एव शशक । गोधैव गोधिका। स्थानमेव स्थानकम्। इत्यादिषु स्वार्थविहितप्रत्यया तेषु प्रकृतिलिङ्गानु-

वर्तनम्। विशेषविधानेषु चातुर्वर्ण्यादिषु प्रकृतिलिङ्गस्याप्यतिसृति प्रत्ययेन लिङ्गोन्नयनम्। यथा—पात्री पुटी इत्यादीनाम्(श्लो. ४२)। मत्वर्थे इनिप्रत्ययान्तत्वपक्षे वक्ष्यमाणपरोपगत्वप्रकरणपाठापत्ते । तदभावत्वेन ङीबन्तत्वनिश्चये सति स्त्रीलिङ्गनिर्देश इत्यवधार्यते। यत्र पात्रीभूतप्रदेश इति प्रयोगस्तत्र मत्वर्थीयप्रत्ययेन विशेष्यनिघ्नमित्यादि। अर्थेन यथा—'नाभी राजसभापि च' (श्लो. ६)। यद्यपि स्त्रीलिङ्गप्रकरणे वक्ष्यते, तथापि प्राण्यङ्गवचनस्य[7] च स्त्रीलिङ्गत्वम्। क्षत्रिये तु पुस्त्वमित्यर्थेन निर्णय (१, पृ ५१८)। चूर्णि, शाणी, दृणी, दरद् इत्यादिषु प्रकरणवशात् लिङ्गावधारणम्। तथा क्रियाविशेषणाना कर्मत्व नपुसकत्व चेत्यादिक बोद्धव्यम्[8]।

ननु—समनन्तरवर्गस्य लिङ्गनिर्णयार्थत्वे 'पात्रामत्र च भाजनम्' (१, पृ ५७३) इत्यत्र पात्रशब्दस्य केवलनपुसकलिङ्गत्वमुक्तम्। लिङ्गादिसग्रहे तु—'त्रिषु पात्री' (श्लो ४२) इति त्रिलिङ्गत्व वक्ष्यते। अत केवलनपुसकत्वत्रिलिङ्गत्वयोर्विरोध । तथा—'कुवलफेनिले' (१, पृ २३७) इति कुवलशब्दस्य नपुसकत्व प्रागुक्तम्। लिङ्गसग्रहे तु—[9]त्रिलिङ्गत्वमभिधास्यते (श्लो ४२) इत्यादिस्थलेषु पूर्वोत्तरस्थलेषु च विरोधे कस्य प्रसङ्ग इत्याकाङ्क्षायामाह—लिङ्गशेषेत्यादि (श्लो २) ॥ १ ॥

[1] अनुक्त Gm3, सग्रहे इति विवरणपाठ [2] नानालिङ्गाना Tv [3] उन्नय्य B6
[4] धात्वधिकारविहिता Tv [5] °वररुचिभि Gm1 [6] तद्वदत्रापीत्यथ Gm1 Gm3
[7] Tv adds चक्रमध्यवचनस्य च [8] नपुसकत्व च बोध्यम् B5 B6 [9] 'त्रिषु पात्री पुटी वाटी पटी कुवलदाडिमौ' इत्येव मुद्रितग्रन्थे दृश्यते (श्लो ४२)

(पा) रक्षतु लक्ष्मीरमणो लक्ष्मीकुचकुम्भयुग्मपरिरम्भ ।
रक्षितलोकत्रितय शिक्षितरक्षोगणाधिपाध्यक्ष[1] ॥

सलिङ्गशास्त्रै —सकीर्णवदिहोन्नयेत। इह सग्रहो लिङ्गाना नाम्ना च सग्रहणादय वर्गो लिङ्गादिसग्रहवर्ग । अत्रानुक्त[2] लिङ्ग च सकीर्णवत् सकीर्णवर्गे प्रकृतिप्रत्ययार्थादिभिर्यथा लिङ्गोन्नयन तथा सलिङ्गशास्त्रै लिङ्गशास्त्रसहितै सन्नादिकृत्तद्धितसमासजै [3]कृत्तद्धितसमासशास्त्रै उन्नयेत् तर्कयेत। 'जैनेन्द्र प्रतिपत्तव्य शम्भर शब्दशासन' इति। तानि कानीति चेद् विद्युन्निशावल्लीत्यादीनि लिङ्गशास्त्राणि। स्त्रीभावादौ क्तिन्नित्यादीनि कृच्छास्त्राणि। सन्नादिग्रहण तुमादिव्युदासार्थम्।

तल् कटचच् त्रलित्यादितद्धितशास्त्राणि । [4]द्विगुरेकवचनमित्यादीनि समासशास्त्राणि ॥ १ ॥

[1] A1 adds श्रीधेनुवागीश्वर्यै नम श्रीमहागणाधिपतये नम　[2] B3 adds अकथित लिङ्गम　[3] C1 omits　[4] द्विगुरेकार्थं A1

**लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।**
**स्त्रियामीदूद्विरामैकाच् सयोनिप्राणिनाम च ॥ २ ॥**

(वि) लिङ्गशेष—अबाधित । लिङ्गशास्त्रे स्त्रियामीदूदित्यादिभि, सन्नादिभि चिकीर्षा जिहीर्षा इत्यादिभि, कृज्जै कृति हृति इत्यादिभि, तद्धितजै मौष्टा पाल्लवेत्यादिभि, समासजै त्रिलोकी त्रिवेदीत्यादिभि लिङ्गविशेषविधि स्त्रीलिङ्गानुशासनविशेषविधिरबाधितश्चेत् [1]अविशषितश्चेत् तदा व्यापी प्रसङ्गाद् भवति ॥ स्त्रियामीदूद्विरामैकाच् । एकाच् एकस्वरा ईद्विरामा[2] ऊद्विरामा च शब्दप्रकृति स्त्रिया वर्तते । अत्रोदाहरणानि—श्री, धी, भू, पू इत्यादि ॥ सयोनिप्राणिनाम च । योनिमत्प्राणिना नाम स्त्रिया वर्तते । यथा—इयं कपि । इय गुरु । इय हरिरित्यादि ॥ २ ॥

[1] J0, K2 add विशषद्वारा दारा पुंभम्नि इत्यादिभि　[2] ईदूद्विरामा शब्दप्रकृति K6

(विव) लिङ्गशेषविधिर्व्यापी । उक्तनयेन लिङ्गयोर्विरोधे सति [1]लिङ्गशेषविधिरेव व्यापी प्रसङ्गवान् भवति । ग्राह्यो भवतीत्यर्थ । पात्रादिशब्दाना प्रागुक्त(१, पृ ५७३)लिङ्गमबाधित्वैव लिङ्गान्तरविधानाद्(श्लो ४२)वास्तवो विरोधो नास्तीत्यभिप्राय । ननु—लिङ्गशेषविधिनैव तदर्थलाभात् [2]पूर्वविधिवैयर्थ्यमित्यपि न वाच्यम् । प्रयोगप्राचुर्यप्रदर्शनपरत्वाद्वा स्वप्रायपठितस्य लिङ्गनिश्चयार्थत्वाद्वा तस्योपपत्तेरित्यलम् ॥

ननु—यदि पूर्वविध्यपेक्षया लिङ्गविशेषविधे प्राबल्य स्यात्, तर्हि 'सयोनिप्राणिनाम च' इति स्त्रीमात्रे नाम्ना सामान्येन स्त्रीलिङ्गत्व विदधता लिङ्गविशेषविधिना दारशब्दस्य पूर्वोक्त(१, पृ ३६५)पुंलिङ्गत्व कलत्रशब्दस्य नपुंसकत्वम् (२, पृ ४७०) इत्यादि बाध्येतेत्यत आह—विशेषैर्यद्यबाधित । [3]अस्यार्थ —'सयोनिप्राणिनाम च' इति लिङ्गसंग्रहोक्तो विधि सामान्यविधि । 'पुं भूम्नि

दाराः' (१, पृ. ३६५), 'कलत्रं श्रोणिभार्ययोः' (१, पृ. ४७०) इति प्रागुक्तो विधिः विशेषविधिः। विशेषेण च सामान्यबाधो युक्तः। [4]विशेषगृहीतव्यतिरिक्तस्थले सामान्यस्य सावकाशत्वात्। न च सामान्यविधिना विशेषविधेर्बाधः। विशेषविधेरन्यत्रानर्थक्यप्रसङ्गात्। अतः सामान्यविशेषव्यतिरेकेण द्वयोरपि विशेषविधित्वे लिङ्गशेषवर्गोक्तविधेः प्राबल्यमिति ॥

एवं सुखज्ञानाय परिभाषामुक्त्वा स्त्रीपुंनपुंसकलिङ्गानि व्यस्तानि च क्रमेण विधत्ते—स्त्रियामिति। अधिकारोऽयम् आ पुंलिङ्गविधेः (श्लो. ११), इत उत्तरत्र वक्ष्यमाणाः स्त्रियां वेदितव्या इत्यर्थः॥ ईदूद्विरामैकाच्। ईद्विरामम् ईकारान्तम्, ऊद्विरामम् ऊकारान्तम्, एकाच् एकस्वरं पदं च स्त्रियां भवति। यथा—श्रीः, धीः, भूः, पूः इत्यादि। एकाजिति किम्? [5]ग्रामणीः, [6]प्रतिभूः इति। ईदूद्विरामेति किम्? कः, स्वम् इति॥ सयोनिप्राणिनाम च। योनिः स्त्रीव्यञ्जनम्। योनिमतः प्राणिनो नाम स्त्रियां भवति। यथा—योषित्, वधूः, स्नुषा इत्यादि। सयोनीति किम्? पुरुषः, पिता, भ्राता इति॥ २॥

[1] लिङ्गविशेषे विधिर्व्यापी Tv [2] तात्पर्यस्य वैयर्थ्यम् B5, B6 [3] अयमर्थ Gm3; अस्यायमर्थं Gm1, Tv [4] विशेषागृहीतस्थले B6; °गृहीतव्यक्तिव्यतिरिक्त° Gm1 [5] पुलिङ्ग (२, पृ २६३) [6] पुलिङ्ग (१, पृ ६४६).

(पा.) लिङ्गशेष—अबाधित। [1]विशेषैरबाधितो लिङ्गशेषविधिर्व्यापी। बाधितविषयं विना तदतिरिक्तस्वविषये व्यापक इत्यर्थः। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' (१, पृ. १३५)। अत्र मन्दाक्षशब्दो बाधितविषय.॥ स्त्रियामीदूद्विरामैकाच्। स्त्रियाम् इत्यासमसीशब्दम् (श्लो. १०) अधिकारः। ईदूद्विरामाणि ईदूदन्तानि [2]एकाच्कानि च नामानि स्त्रीलिङ्गानि। यथा—लक्ष्मी., तन्त्री., तन्द्रीः, तरी, जम्बूः, अलाबूः, सुत्र्, कूहू, दृक्, शृक्, स्रक्, वाक्॥ सयोनिप्राणिनाम च। योनिमत्प्राणिना नाम स्त्रीलिङ्गम्। यथा—गौः, करेणुः॥ २॥

[1] A1 omits; विशेषैः B3 [2] एकाच्भूतानि A1.

नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम्।
अदन्तैर्द्विगुरेकार्थो न स पात्रयुगादिभिः॥ ३॥

(वि.) नाम विद्युत्—नदीह्रियाम् । तडिद्रात्रिलतावल्लकीदिग्भूसरिल्लज्जाना नाम स्त्रिया वर्तते ।। अदन्तैर्द्विगुरेकार्थः । अदन्तैरकारान्तोत्तरपदैः एकार्थः समाहाररूपो द्विगुसमासः स्त्रियां [1]भवति । अत्रोदाहरणानि—[2]पञ्चपूली, दशपूली, त्रिलोकी इत्यादि ।। न स पात्रयुगादिभिः । स द्विगुसमासः पात्रयुगादिभिरुत्तरपदैः स्त्रिया न वर्तते । उदाहरणानि—[3]त्रिपात्रम्, चतुर्युगम् । आदिशब्दात् त्रिभुवनमित्यादि ।। ३ ।।

[1] भवेत् $K_3$, $K_6$　　[2] पञ्चवटी $K_3$.　　[3] पञ्चपात्रम् $K_3$

(विव.) नाम विद्युत्—नदीह्रियाम् । विद्युतः सौदामिन्याः, निशाया रात्र्याः[1], वल्ल्याः लतायाः, वीणाया वल्लक्याः, दिशः ककुभः, भुवो भूमेः, नद्याः सरितः, ह्रियो लज्जायाश्च सर्वाणि नामानि स्त्रीलिङ्गानि[2] भवन्ति । उदाहरणानि स्पष्टानि । मन्दाक्षमित्यादौ (१, पृ. २३५) विशेषविधिना सामान्यस्य बाधः सर्वत्रानुसंधेयः । अत्र भूशब्दह्रीशब्दयोर्द्वयोः 'ईदूद्विरामैकाच्' (श्लो. २) इति प्रागुक्तम् । निशावल्लीवीणादिशब्दानां 'ङ्याबूडन्तम्' (श्लो. ५) इति वक्ष्यमाणं नित्यस्त्रीत्वं सुस्पष्टम् । तथापि तत्पर्यायाणामनेवंभूतानां विद्युद्रात्रिव्रततिप्रभृतीनां लिङ्गप्रतिपादनार्थं [3]स्पष्टार्थं चानेन रूपेणाभिधानमित्यवगन्तव्यम् ।।

अदन्तैर्द्विगुरेकार्थे । अदन्तैः अकारान्तोत्तरपदैः सह सख्याशब्दानामेकार्थे । '[4]तद्धितार्थोत्तरपदसमाहारे च' (२. १. ५१) इति समाहाररूपार्थे विहितो द्विगुसमासः स्त्रियां वर्तते । तदुक्तम्—'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति (वा. २. ४. १७) । अत्र समाहारस्यैकत्वाद् 'द्विगुरेकवचनम्' (२. ४. १) इत्येकवचनम् । 'द्विगोः' (४. १. २१) इति ङीप्प्रत्ययश्च । यथा—पञ्चपूली, दशपूली (काशिका १, पृ. २६६), षट्शती, सप्तशती इत्यादि । तथा तिसृणां पुरां समाहारः त्रिपुरी, पञ्चानां धुरां समाहारः पञ्चधुरी इति । अत्र 'ऋक्पूरब्धू...' इत्यादिना (५. ४. ७४) समासान्तस्य उत्तरपदावयवत्वदर्शनाश्रयणेन उत्तरपदस्याकारान्तत्वे त्रिपुरी पञ्चधुरी इत्यादि भवति ।।

यत्तु मतम्—प्रथमतः समासः, ततः समासान्तविधिः इति । अत्रादन्तैरिति अकारान्तभूतैर्लक्षितो द्विगुः स्त्रियामिति व्याख्येयम् । अदन्तैरिति किम्? पञ्चानामग्नीनां समाहारः पञ्चाग्नि । अत्र 'स नपुंसकम्' (२. ४. १७) इति नपुंसकत्वम् । द्विगुरिति किम्? समित्कुशम्, पाणिपादम् इति समाहारद्वन्द्वे मा

भूत् । अत्र 'द्वन्द्वैकत्वाव्ययीभावौ' (श्लो. २६) इति नपुंसकत्वं वक्ष्यति । एकार्थ इति किम् ? त्रिनावम्,[5] पञ्चकपालः पुरोडाशः इति ।।

अदन्तैर्द्विगुरेकार्थ इत्यस्य क्वचिदपवादमाह—न स पात्रयुगादिभिः । स द्विगुरकारान्तैरपि पात्रयुगादिभिरुत्तरपदैरुपेतः स्त्रियां न भवति । यथा—त्रिपात्रम्, चतुर्युगम् त्रिभुवनम् (काशिका १, पृ. १३१) इत्यादि । ननु—'पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः' (श्लो. २५) इति वक्ष्यमाणो नपुंसकविधिः अदन्तैरित्यस्य बाधको भविष्यतीति किमत्रानेन प्रतिषेधेनेति चेत्, सत्यम् । अस्य प्रतिषेधस्य 'पात्रादिभ्यः[6] प्रतिषेधो वक्तव्यः' (वा. २. ४. १७) इति वक्तव्यमूलत्वप्रतिज्ञानार्थं प्रपञ्चार्थं चोपन्यास इति ।। ३ ।।

[1] रात्रे Gm1. [2] स्त्रीलिङ्गा B6. [3] Gm3 omits स्पष्टार्थं [4] तद्धितोत्तर° B5, B6. [5] त्रिपवणम् Tj1. [6] 'पात्राद्यन्तस्य न' इति कौमुद्या पाठ' (पृ १८२).

(पा.) नाम विद्युत्—नदीह्रियाम् । विद्युदाद्यर्थाना नाम स्त्रीलिङ्गम् । विद्युन्नाम्नो नीलाञ्जना [1]शतह्रदा, निशानाम्नो याम्या क्षणिनी[2], वल्लीनाम्नो व्रततिः प्रतति', तद्विशेषनाम्नोऽपि[3] द्राक्षा नवमालिका, वीणानाम्नो घोषवती कण्ठकूणिका, तद्विशेषनाम्नोऽपि किनरी दन्तिका ।। अदन्तैर्द्विगु—युगादिभिः । अकारान्तोत्तरपदसमाहारद्विगु' स्त्रीलिङ्गः । त्रिलोकी पञ्चपूली । न स पात्रयुगादिभिरिति बाधितविषयः प्रदर्शित. । यथा—[4]पञ्चपात्रम्, चतुर्युगम्, त्रिभुवनम् इति (काशिका १, पृ. १३१) ।। ३ ।।

[1] शतावर्ता A1. [2] B3, C1 add पक्षिणी. [3] °विशेषनामानि B3 [4] A1 omits the examples.

तल्वृन्दे येनिकटचत्रा वैरमैथुनिकादिवुन् ।
स्त्रीभावादावनिक्तिण्वुल्णच्ण्वुच्यय्युजिञ्ङनिशाः ।। ४ ।।
उणादिषु निरीश्च ङ्याबूङन्तं चलं स्थिरम् ।

(वि ) तल्वृन्दे येनि—चल स्थिरम् । तल्—भावसमूहस्वार्थेषु वर्तमानः तल्प्रत्यय.[1] स्त्रिया वर्तते । अत्र क्रमेणोदाहरणानि । भावे यथा—अश्वता, पुरुषता[2] । समूहार्थे यथा—[3]जनता, बन्धुता, सहायता । स्वार्थे यथा—देवता

इत्यादि ।। वृन्दे येनिकटचत्रा । वृन्दे समूहार्थे विहिता यप्रत्ययइनिप्रत्ययकटचच्-प्रत्ययत्रप्रत्ययान्ता स्त्रिया वर्तन्ते । उदाहरणानि । यप्रत्ययान्ता यथा—[4]पाश्या, वात्या, धूम्या, वन्या इत्यादि । इनिप्रत्ययान्ता यथा—खलिनी, उलूकिनी, [5]कुण्डलिनी इत्यादि । कटचच्प्रत्ययान्तो यथा—रथकटचा इति (काशिका १, पृ ३१२) । त्रप्रत्ययान्तो यथा—गोत्रा इति ।।

वैरमैथुनिकादिवुन् । वैरविवाहवाचको[6] वुन्प्रत्ययान्त स्त्रिया वर्तते । उदाहरणानि । वैरे यथा—काकोलूकयोर्वैर काकोलूकिका, अश्वमहिषिका इत्यादि । विवाहे यथा—अत्रिभरद्वाजयोर्विवाह अत्रिभरद्वाजिका[7] । [8]वसिष्ठकुशिकयोर्विवाह वसिष्ठकुशिकिका । आदिशब्दाद् दानदण्डद्वन्द्वभावकर्मवाचको वुन्प्रत्ययान्तश्च स्त्रिया वर्तते । क्रमेणोदाहरणानि । द्वौ द्वौ [9]पादौ ददाति द्विपदिका ददाति । द्वे द्वे शते दण्डयति द्विशतिका दण्डयति ।। वुञ् शिष्योपाध्याययो भाव कर्म वा शैष्योपाध्यायिका (काशिका २, पृ २६) । गर्गस्य [श्लाघार्थे] भाव कर्म वा गार्गिका । कौशिकस्य[10] भाव कर्म वा कौशिकिका (५ १ १३४) इत्यादि ।।

स्त्रीभावादिति । सिद्धावस्थामापन्नो धात्वर्थो भाव[11] । भाव आदिर्यस्यासौ भावादि । स्त्री चासौ भावादिश्च स्त्रीभावादि । तस्मिन् विहिता अन्यादिप्रत्ययान्ता स्त्रिया वर्तन्ते । अनिप्रत्ययान्तो यथा—अजननि , अकरणि ।। क्तिन्प्रत्ययान्तो यथा—कृति , भृति , हृतिरित्यादि ।। ण्वुल्प्रत्ययान्तो यथा—प्रवाहिका, प्रच्छर्दिकेत्यादि ।। णच्प्रत्ययान्तो यथा—व्यावक्रोशी । अन्योन्यक्रोशन वर्तत इत्यर्थ । व्यावहासीत्यादि । ण्वुच्प्रत्ययान्तो यथा—[भवत ] शायिका । क्यप्प्रत्ययान्तो यथा—[12]व्रज्या । समज्या, सुत्येत्यादि ।। युच्प्रत्ययान्तो यथा—आसना, कारणा, ग्रन्थनत्यादि ।। अङ्प्रत्ययान्तो यथा—त्रपा, भिदा, छिदा इत्यादि ।। अप्रत्ययान्तो यथा—पुत्रीया इत्यादि[13] । निप्रत्ययान्तो यथा—ग्लानि , म्लानि , हानि इत्यादि । शप्रत्ययान्तो यथा—मृगया, इच्छा[14] इत्यादि । अथ उणादिपु निप्रत्ययान्तो यथा—श्रेणि , योनि , द्रोणि इत्यादि ।। अनिप्रत्ययान्तो यथा—सरणि । ऊकारप्रत्ययान्तो यथा— खर्जू , चमू इत्यादि । ईकारप्रत्ययान्तो यथा—तन्त्री , लक्ष्मी इत्यादि ।।

ङ्यावूङन्त चल स्थिरम । ङीत्यनेन ङीप्, ङीष्, ङीन् इति प्रत्ययान्ताना ग्रहणम् । आवित्यनेन टाप् डाप् चाप् इति प्रत्ययान्ताना ग्रहणम् । ऊङ इत्यनेन ऊङ्प्रत्ययस्य ग्रहणम् । चलमभिधेयवल्लिङ्गम् । स्थिर नियतलिङ्गम् । चल स्थिर

ङीवन्तमावन्तमूङन्त शब्दरूप स्त्रिया वर्तते । ङीवन्ते यथा—कर्त्री । ङीषन्ते यथा—गौरी । ङीनन्ते यथा—शार्ङ्गरवी । टावन्तो यथा—अजा । डावन्तो यथा—सुराजा । चावन्तो यथा—कौमुदगन्ध्या । ऊङन्तो यथा—वामोरूः ॥४॥

[1] °प्रत्ययान्त J2, K5 [2] पुत्रता J2 [3] K3, K4 add °ग्रामता [4] 'पाशादिभ्यो य ' (४ २ ४९) [5] उल्मुकिनी K4 [6] J2, K5 add विरोधे विवाहे, आदिशब्दग्रहणाद् वीप्सायां च विहित वुन् [7] K5 adds बाभ्रव्य-शालङ्कायनिका [8] °विश्वामित्रयो J2 [9] K6 omits पादौ ददाति [10] श्लाघार्थे, 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५ १ १३४) [11] K5 adds धात्वर्थं केवल शब्दो भाव इत्यभिधीयते [12] प्रव्रज्या K4, K5 [13] K4, K5 add इञ्प्रत्ययान्तो यथा—कारि , दारि इत्यादि [14] K3, K5 add यदृच्छा, परिसर्या, अवद्या

(विव.) तल्वृन्दे येनि—चलं स्थिरम् । तल् । विविधस्तल्प्रत्ययः । तलन्तं शब्दरूपं स्त्रिया [1]वर्तते । तत्र, 'तस्य भावस्त्वतलौ' (५. १. ११९) इति भावार्थे तल् । यथा—देवदत्तस्य भावो देवदत्तता । [2]अश्वता । '[3]ग्रामजनबन्धुभ्यस्तल्' (४. २. ४३) इति समूहार्थे तल् । यथा—ग्रामता, जनता इत्यादि । 'देवात्तल्' (५. ४. २७) इति स्वार्थे तल् । देव एव देवता । अत्रानुबन्धग्रहण किम्? '[4]पूञ्हसिभ्यां तन्' (उ. ३. ८६) इति तन्प्रत्यये पोतः, हस्तः, इति ॥

[1] Gm1 adds एव [2] आश्वता B6, Gm1 [3] °बन्धुसहायेभ्य ° TJ1
[4] 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्' इत्युणादिसूत्रम् (पृ ५१८)

वृन्दे येनिकड्यञ्यत्राः[1] । यश्च इनिश्च कड्यच्च त्रश्चेति चत्वारः प्रत्ययाः समूहार्थे विहिताः । तदन्ताः शब्दाः स्त्रियां भवन्ति । 'पाशादिभ्यो यः' (४. २. ४९) इति यप्रत्यये पाशाना समूहः पाश्या । एवं गल्या, तृण्या, हल्या इत्यादि ॥ 'खलगोरथात्' (४. २. ५०) इत्यनुवृत्तौ, 'इनित्रकट्यचश्च' (४. २. ५१) इति यथासंख्यन्यायेन खलशब्दाद् इनिप्रत्यये खलिनी । अत्र 'खलादिभ्य इनिर्वक्तव्यः' (वा. ५. २. ५१) इति वक्तव्यबलाद् उलूकानां समूहः उलूकिनी, कुटुम्बिनी, कुण्डलिनी [2]इत्यादि । गवां समूह इत्यर्थे गोशब्दादुत्तरे[3] त्रप्रत्यये गोत्रा । रथानां समूहो [4]रथकड्या इति । केचित्तु रथकट्येति मूर्धन्यवर्गप्रथमाक्षरयुक्तं कथयन्ति । सूत्रस्थचशब्देन शब्दत्रयादपि यप्रत्ययः समुच्चीयते । ततश्च खल्या, गव्या, रथ्या इति त्रयः शब्दा भवन्ति । वृन्द इति किम् ? 'सख्युर्यः' (५. १. १२६) इत्यादौ स्त्रीत्वं मा भूत् ॥

[1] कडचच् इति विवरणाभिमत पाठ   [2] Gm₁ Tv add उल्मुकिनी, उविथनी
[3] Gm1 omits उत्तरे   [4] B6, Tj2 add रथ्या

वैरमैथुनिकादिवुन्। वैर विरोध । मैथुनिक विवाह । तत्र 'द्वन्द्वाद् वुन् वैरमैथुनिकयो ' (४ ३ १२५) इत्यनेन सूत्रेण द्वन्द्वसमासात् प्रातिपदिकाद् वुन्-प्रत्ययो विहित । तदन्त शब्दरूप स्त्रिया भवति। यथा—काकोलूकयोर्वैर काकोलूकिका। अश्वमहिषिका इति ।। मैथुनिकाया यथा—अत्रिभरद्वाजयोर्विवाह अत्रिभरद्वाजिका। शाण्डिल्यकुशिकयोर्विवाह शाण्डिल्यकुशिकिका। आदिशब्दार्थ शेषे—'वीप्सादण्डनदाने वुन्' इति। वीप्साया यथा—द्वौ द्वौ पादौ ददाति द्विपदिका। 'पादशतस्य सख्यादेर्वीप्साया वुन् लोपश्च' (५ ४ १) इति वुन्-प्रत्यय । तत्सनियोगेन चान्त्यस्य लोप । 'यस्येति च' (६ ४ १४८) इत्यनेनैव लोपे सिद्धे पुनर्लोपवचन [1]परनिमित्तानपेक्षलोपविधानार्थम्। 'यस्येति च' इति विहितो लोप परनिमित्तक । तस्य स्थानिवद्भावेन[2] 'पाद पत्' (६ ४ १३०) इति पद्भावो न स्यात्। प्रत्ययसनियोगविशिष्टस्य तु लोपस्य परनिमित्तकत्वाभावात् [3]स्थानिवद्भावाभावेन द्विपदिका ददाति द्विशतिका ददातीत्यादौ पद्भाव स्यादेवेति वृत्तिकारेण प्रपञ्चितम् (काशिका २, पृ ८०)। दण्डने यथा—द्विपदिका दण्डयति। दाने यथा—द्विपदिका ददाति। द्वौ द्वौ पादौ ददातीत्यर्थ । द्वे द्वे शते ददाति द्विशतिका ददाति। 'दण्डव्यवसर्गयोश्च' (५ ४ २) इत्युभयत्रापि वुन्प्रत्यय । व्यवसर्ग दानम्।

[1] अनैमित्तिकाथम् इति मुद्रितकाशिकायाम (२ पृ ८०)   [2] स्थानिवद्भावात इति मु ग्र   [3] न स्थानिवत्त्वम इति मु ग्र

अत्र शेषकार —

'वुञ्‌ द्वन्द्वाद् भावकर्मणो । श्लाघाया तदवेतेत्याकारे चरणगोत्रयो' इति। अस्यार्थ —'योपधाद् गुरूपोत्तमाद् वुञ्' । (५ १ १३२) इत्यतो वुञ् इति वर्तमाने, 'द्वन्द्वमनोज्ञादिभ्यश्च' (५ १ १३३) इत्यनेन सूत्रेण भावकर्मणोरर्थयो द्वन्द्वसमासाद् विहितो यो वुञ्प्रत्यय तदन्त शब्दरूप स्त्रिया भवति। यथा—शिष्योपाध्याययोर्भाव कर्म वा शैष्योपाध्यायिका। गोपालपशुपालिका। तथा 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५ १ १३४) इति सूत्रेण, गोत्रमपत्यम्, चरण शाखा, गोत्रप्रत्ययान्तात् चरणप्रत्ययान्ताच्च श्लाघादिष्वर्थेषु गम्यमानेषु

भावकर्मणोर्विहितो यो वुञ्प्रत्ययः तदन्तं शब्दरूपं स्त्रियां भवति। गर्गस्य भावेन कर्मणा वा श्लाघते गार्गिकया श्लाघते[1]। तदवेतः तत्प्राप्तिः। अत्याकारः पराधिक्षेपः[2]। गार्गिकामवेतः। गार्गिकया अत्याकरोति। चरणप्रत्ययान्ताद् यथा—काठिकया श्लाघते। काठिकया अत्याकरोति। [3]काठिकामवेतः इत्यादि (काशिका २, पृ. २९)॥

[1] B6 adds तत्र श्लाघा विकत्थनम्। गार्ग्यत्वेन विकत्थत इत्यर्थ.. [2] पराक्षेप: Gm1, Gm3 [3] Tj1, Tj2 add तदवेत इत्यर्थे यथा—

स्त्रीभावादावनिक्तिन्—युजिन्वङनिशाः। शेषे—'अकर्तृककारके भावे क्विबकारेण्वुचः स्त्रियाम्' इति। भाव आदिर्यस्य कर्तृवर्जितकारकस्य स भावादिः इति तद्गुणसंविज्ञानो बहुव्रीहिः। स्त्रीलिङ्गश्चासौ भावादिश्च, [1]स्त्रीभावे कर्तृवर्जिते कारकेऽर्थे च विहिताः अनि, क्तिन्, ण्वुल्, णच्, क्यप्, युच्, इञ्, अङ, नि, श, इत्याचार्यसंगृहीता दश प्रत्ययाः, तथाभूत एवार्थे शेषकारेण क्विप् अकारः [2]इण् ण्वुच् इति चत्वारश्च, इत्येवं चतुर्दशप्रत्ययान्ताः स्त्रीलिङ्गा संगृहीताः वेदितव्याः। ते च क्रमेणोदाह्रियन्ते।

[1] स्त्रीलिङ्गे भावे B5, B6 [2] इञ् Tj1, Tj2.

तत्र[1] 'आक्रोशे नञ्यनिः' (३. ३. ११२) इत्याक्रोशे शपथे गम्यमाने नञ्युपपदे भावार्थे धातोरनिप्रत्ययो विहितः। यथा—अकरणिस्ते वृषल भूयात् (काशिका १, पृ. २२४)। अभवनिरस्तु ते विभूतेः[2]। अपूरणिस्ते कामानामस्तु। 'तस्याजननिरेवास्तु जननीक्लेशकारिणः' इति (शिशु. २. ४५)। अथ क्तिन्। यथा—'स्त्रियां क्तिन्' (३. ३. ९४)। प्रकृतिः, हृतिः, शुद्धिः, बुद्धिः इति। 'श्रुयजिस्तुभ्यः करणे' (वा. ३. ३. ९४)। श्रूयतेऽनयेति[3] श्रुतिः। इज्यतेऽनयेति इष्टिः। स्तूयतेऽनया सा स्तुतिः। '[4]ऋकारल्वादिभ्यः क्तिन्निष्ठावद् भवति इति वक्तव्यम्' (वा. ३. ३. ९४)। 'जॄष् वयोहानौ'। जीर्णिः। 'शॄ हिंसायाम्'। शीर्णिः। 'लूञ् छेदने'। लूनिः। निष्ठायद्भावात् तकारस्य नकारः (८. २. ४२)। 'स्थागापापचो भावे' (३. ३. ९५) इत्यङ्प्रत्ययस्यापवादः। 'ष्ठा गतिनिवृत्तौ'। प्रस्थितिः। 'व्ययस्यापामसंज्ञायाम्' (१. १. ३४), 'आस्पदं प्रतिष्ठायाम्' (६. १. १४६) इत्यादिज्ञापकाद् अङप्यस्ति। प्रतिष्ठा, संस्था,

निष्ठा इत्यादि । 'गै शब्दे' । उद्गीतिः । 'पा पाने' । प्रपीतिः । 'डुपचष् पाके' । पक्तिः । पित्करणसामर्थ्याद्[5] अङप्यस्ति (३. ३. १०४) । पचा । तथा 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च' (३. ३. ९७) इति क्तिन्नन्तनिपातनम् यथा—'अव रक्षणे' । ऊतिः । 'यु मिश्रणे' । यूतिः । 'जू' इति सौत्रो धातुः । जूतिः । 'षोऽन्तकर्मणि' । सातिः । 'हि गतौ' । हेतिः ॥

[1] Tv adds अनिप्रत्ययो यथा [2] विभूति Gm1, Gm3 [3] B6 adds सा.
[4] 'ऋज्वादिभ्य क्तिन्निष्ठावद्वाच्य' B5, B6 [5] 'पिद्भिदादिभ्योऽङ'.

अथ ण्वुल् । 'रोगाख्यायां ण्वुल् बहुलम्' (३. ३. १०८) इति ण्वुल् । 'छर्द वमने' । प्रच्छर्दिका । 'वह प्रापणे' । प्रवाहिका (काशिका १, पृ. २२३) । 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः' (वा. ३. ३. १०८) । 'आस उपवेशने' । आसिका । 'शीङ् स्वप्ने' । शायिका । 'विश प्रवेशने' । वेशिका ॥

अथ णच् । 'कर्मव्यतिहारे णच् स्त्रियाम्' (३. ३. ४३) इति । धातुभ्यो भावार्थे णच्प्रत्ययो भवति । कर्मव्यतिहारे क्रियाविनिमये गम्यमाने, 'णचः स्त्रियामञ्' (५. ४. १४) इति स्वार्थिकोऽञ्प्रत्ययः । अञ्प्रत्ययान्तत्वेन 'टिड्ढाणञ् . . .' इत्यादिना (४. १. १५) ङीपि व्यावक्रोशी । अन्योन्यं क्रोशनमित्यर्थः । एवं परस्परं हसनं व्यावहासी । परस्परमुक्षणं व्यात्युक्षी । [1]व्यावचोरी इत्यादि (काशिका १, पृ. २१४) ॥

अथ ण्वुच् । 'पर्यायार्हणोत्पत्तिषु ण्वुच्' (३. ३. १११) इति । पर्यायः परिपाटी । अर्हणमर्हो योग्यता । एष्वर्थेषु ण्वुच् स्यात् । यथा—भवतः शायिका । भवत आसिका । अर्हे—भवानिक्षुभक्षिकामर्हति । ऋणे—इक्षुभक्षिकां मे धारयसि । उत्पत्तौ—इक्षुभक्षिका मे[2] उदपादि (काशिका १, पृ. २२४) ॥

अथ क्यप्—'व्रजयजोर्भावे क्यप्' (३. ३. ९८) । 'व्रज गतौ' । व्रज्या । 'यज देवपूजादौ' । इज्या । 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (३. ३. ९९) इति क्यप् । 'अज गतिक्षेपणयोः' । समजन्त्यस्यामिति समज्या । 'षद्लृ विशरणगत्यवसादनेषु' । निषीदन्त्यस्यामिति निषद्या । निपत्या । 'मन ज्ञाने' । मन्यते मन्या । झलादित्वाभावाद् अनुनासिकलोपाभावः । 'विद ज्ञाने' । विदन्ति यया सा विद्या । 'षुञ् अभिषवे' । सुन्वन्त्यस्यामिति सुत्या । 'शीङ् स्वप्ने' । शेरतेऽस्यामिति शय्या । '[3]भृञ् भरणे' । भ्रियते कर्मकरोऽनयेति

भृत्या । 'इण् गतौ'। [4]यन्त्यनयेति इत्या । 'कृञः श च' (३. ३. १००) इति क्यपि कृत्या (६. १. ७१) ॥

[1] व्यावभोजी B6, Gm3 [2] Tv omits मे [3] 'डुभृञ् धारणपोषणयो' Tv
[4] यान्ति B6

अत्र क्यप्प्रत्ययोदाहरणमध्ये 'हनस्त च' (३. १. १०८) इति सूत्रेण निष्पन्नो हत्याशब्दोऽपि स्त्रीलिङ्गः कैश्चिदुदाहृतः । तत्र मूलं चिन्तनीयम् । तथा हि—नात्र [1]भावमात्रविहितक्यप्प्रत्ययान्तत्वमेव स्त्रीलिङ्गत्वे प्रयोजकम् । किं तर्हि? [2]स्त्र्यधिकारविहितक्यबन्तत्वम् । अन्यथा 'भुवो भावे' (३. १. १०७) इति सूत्रविहितक्यबन्तो ब्रह्मभूयशब्दोऽपि स्त्रीलिङ्गः प्रसज्येत[3] । तच्चानिष्टम् । न च 'हनस्त च' इति सूत्रे स्त्रियामिति पदं श्रूयते । नापि स्त्र्यधिकारगतमिदं सूत्रम् । तस्मादस्मिन् प्रकरणे हत्या इत्युदाहरणमसङ्गतम् । अतः हत्याशब्दस्य प्रमाणान्तरात् स्त्रीलिङ्गत्वमवगन्तव्यम् ॥

अथ युच् । 'ण्यासश्रन्थो युच्' (३. ३. १०७) इति । तत्र ण्यन्ताद् यथा—कारणा । हारणा । 'आस उपवेशने' । आसना । 'श्रन्थ[4] ग्रन्थ सदर्भे' । श्रन्थना । ग्रन्थना । चन्द्रस्तु—'ण्यासश्रन्थो युच्' इति सूत्र पठित्वा 'ग्रन्थ मोचनप्रतिपादनयोः' इति क्र्यादिधातुजं ग्रन्थनाशब्दमाह । 'घट्टिवन्दिविदिभ्य उपसंख्यानम्' (वा. ३. ३. १०७) इति युच् । 'घट्ट चलने' । घट्टना । 'वदि अभिवादनस्तुत्योः' । वन्दना । 'विद ज्ञाने' । वेदना (काशिका १, पृ. २२२)। 'इषेरनिच्छार्थस्य युज् वक्तव्यः' (वा. ३. ३. १०७) इति अन्वेषणा, अध्येषणा इति ॥

[1] °विहित T1 [2] स्त्र्यधिकार विहितस्य Tj1, Tj2 [3] प्रसज्यते T1
[4] काशिकाया तु (१, पृ २२२)—'श्रन्थि क्र्यादिर्गृह्यते, श्रन्थ विमोचनप्रतिहर्षयोरिति । न चुरादि , श्रन्थ ग्रन्थ सदर्भे' इति । ण्यन्तत्वेनैव सिद्धत्वात्

अथ इञ् । 'विभाषाख्यानपरिप्रश्नयोरिञ् च' (३. ३. ११०) इति । परिप्रश्ने आख्याने गम्यमाने इञ् स्यात् । यथा—कां कारिं त्वमकार्षीः । सर्वां कारिमकार्षं क्रियां कृत्यां कृतिं वा अकार्षीः । चकारानुबन्धनाद् ण्वुलपि ॥

अथ अङ्। 'षिद्भिदादिभ्योऽङ्' (३. ३. १०४) इति। षिद्भ्यस्तावत्। 'जॄष् वयोहानौ'। जीर्यन्त्यङ्गान्यस्यामिति जरा। 'ऋदृशोऽङि गुणः' (७. ४. १६) इति गुणः। 'त्रपूष् लज्जायाम्'। त्रपा इत्यादि। भिदादयस्तु महोदधौ—

> '[1]भिदि छिदि विदि दयि रुजि मृजि प्रछि चुरिम्।
> अनामनि क्षिपि तथा गुहि तुलि वसि वपिम्॥
> क्षपि क्षियि रिखि लिखि शुभि सिधि मिधि गुधिम्।

इत्यादयः पठिताः (८. ४५१-२, पृ. ४७४)। 'भिदिर् विदारणे'। भिदा। 'छिदिर् द्वैधीकरणे'। छिदा। 'विदिर् लाभे', 'विद ज्ञाने'। विदा। 'दय दानगतिरक्षणेषु'। दया। 'रुज रोगे'। रुजा। 'मृजूष् शुद्धौ'। मृजा[2]। 'प्रच्छ ज्ञीप्सायाम्'। पृच्छा। 'चुर स्तेये'। चुरा। गणपाठादेव णेर्लुक्। 'क्षिप प्रेरणे'। क्षिपा। एतेऽनामनि असंज्ञाविषये साधवः। अनन्तरधातुभ्यः संज्ञायामेव प्रत्ययः। यथा—'गुहू संवरणे'। गुहा। पर्वतकुहरम्, ओषधिविशेषश्च[3]। 'तुल उन्माने'। तुला। 'वस निवासे'। वसत्यनया मांसमिति वसा मांसस्नेहः। 'डुवप् [4]बीजतन्तुसंताने'। उप्यते नाभिसमीपमिति वपा। वस्त्रखण्डसदृशाकारो मेदोविशेषः। 'क्षै क्षये'। हेतुमण्णिचि [5]पुगागमे (७. ३. ३६) मितां ह्रस्वे [6]च (६. ४. ९२) क्षपा रात्रिः। 'क्षि हिंसायाम्'। क्षिया आचारभ्रंशः। रेखा राजिः। लेखा सैव। रिखिलिखसमानार्थः सौत्रो धातुः। 'शुभ दीप्तौ'। शोभा कान्तिः। 'षिधू सराद्धौ'। सेधा। प्राणिविशेषः[7]। ['मिधि मेधाहिंसनयोः'। मेधा]। 'गुध परिवेष्टने'। गोधा[8]। 'कृप कृपायाम्' इत्यस्मात् 'कृपेः सम्प्रसारणं च' (गणसूत्रम्) इत्यङि कृपा। आरा शस्त्री[9]। हारा। कारा बन्धने। तारा ज्योतिः। धारा प्रपातः इत्यादिप्रपञ्चो भिदादेर्द्रष्टव्यः॥

[1] भिदा, छिदा, विदा इत्यादि Tv [2] $B_6$ adds पित्वादेरङ्प्रत्यये सिद्धे मृजेर्गणपाठ [3] गिर्योषध्योर्गुहा Tv [4] $B_8$ omits °तन्तु° [5] 'अर्तिह्री क्ष्माय्याता पुग्णौ' [6] घटादयो मित (गणसूत्रम्) [7] 'अलुगुपेरु' $B_5$ [8] 'उड्डुमु' $B_5$ [9] शस्त्याम् Tv

'चिन्तिपूजिकथिकुम्बिचर्चश्च' (३. ३. १०५) इति स्त्रियामङ्। 'चिती संज्ञाने'। अस्माच्चुरादिण्यन्तात् चिन्ता। 'पूज पूजायाम्'। पूजा। 'कथ वाक्यप्रबन्धे'। कथा। 'कुबि आच्छादने'। कुम्बा। 'चर्च अध्ययने'। चर्चा।

'आतश्चोपसर्गे'[1] (३. ३. १०६)। प्रदा। प्रधा। विदा। उपधा। 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' (वा. ३. ३. १०६)। श्रद्धा। अन्तर्धा। '[2]इक् कृष्यादिभ्यः' (वा. ३. ३. १०८)। कृषिः। 'लिप उपदेहे'। लिपिः इत्यादि ॥

अथ निः। 'ग्लाम्लाज्याहाभ्यो निर्वक्तव्यः' (वा. ३. ३. ९४)। 'ग्लै हर्षक्षये'। ग्लानिः। 'म्लै गात्रविनामे'। म्लानिः। 'ज्या वयोहानौ'। ज्यानिः। 'ओहाक् त्यागे'। हानिः। ग्लादिभ्यो निप्रत्ययः क्तिन्प्रत्ययस्यापवादः (काशिका १, पृ. २२१)॥

अथ शप्रत्ययः। 'कृञः श च' (३. ३. १००)। [3]क्रिया। तथा इच्छेरप्रत्ययान्तो निपातः (३. ३. १०१)। इच्छा। तथा 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' (वा. ३. ३. १०१) इति शप्रत्ययान्तनिपातः। तथा 'जागर्तेरकारो वा' (वा. ३. ३. १०१) इति शप्रत्ययः। जागर्या। एवं मूलग्रन्थस्था दश प्रत्यया उदाहृताः॥

[1] Tv adds इति स्त्रियामङ [2] Tv adds अथ इक्. [3] Gm1, Gm3 add रिङशयग्लिङक्षु (७. ४. २८).

अथ शेषकारीयाश्चत्वारः क्रमेणोदाह्रियन्ते—क्विप्। 'संपदादिभ्यः[1] क्विप्' (वा. ३. ३. ९४)। भावग्रहणं [अकर्तृककारके भावे इति शेषग्रन्थे पृ. ६६२] कर्तृव्यतिरिक्तकारकोपलक्षणम्। 'पद गतौ'। संपत्। विपत्। आपत्। 'षद्लृ विशरणगत्यवसादनेषु'। संसत्। परिषत्। उपनिषत्। 'विद ज्ञाने'। वित्। संवित्। 'णह बन्धने'। उपानत्। 'वृषु सेचने'। प्रावृट्। 'प्लुष दाहे'। विप्रुट्। 'वृतु वर्तने'। आवृत्[2]। 'यम उपरमे'। संयत्। 'श्रु श्रवणे'। प्रतिश्रुत्। 'डुभृञ् धारणपोषणयोः'। उपभृत्। 'वृधु वृद्धौ'। संवृत्। 'ञि इन्धी दीप्तौ'। समित्। 'क्रुध कोपे'। क्रुत्। 'क्षुध बुभुक्षायाम्'। क्षुत्। 'युध संप्रहारे'। युत्। 'रुजो भङ्गे'। रुक्। 'रुष हिंसायाम्'। रुट्। 'शुच शोके'। शुक्। 'रुच दीप्तौ'। रुक्। 'मृड सुखने'। मृट्। 'गॄ निगरणे'। गीः। 'गुरी उद्यमने[3]'। [4]आगूः। 'ह्री लज्जायाम्' ह्रीः। 'ञिभी भये'। भीः। 'लुभ विमोहने'। लुप्॥ 'भू सत्तायाम्'। भूः। 'लूञ् छेदने'। लूः। 'द्विष अप्रीतौ'। द्विट्। 'त्विष दीप्तौ'। त्विट्। 'क्रुश आह्वाने'। क्रुट्। तथा—'ज्वरत्वरश्रिव्यविमवामुपधायाश्च'। (६. ४. २०)[5]। जूः। 'ञित्वरा

संभ्रमे'। तूः। [6]'त्रिवु गतिशोषणयोः'। स्रूः। 'अव रक्षणे'। ऊः। 'मव बन्धने'। मूः। 'मुच्लृ मोक्षणे'। मुट्[7]। 'णश अदर्शने'। नट्। 'नशेर्वा' (८. २. ६३) इति कुत्वविकल्पे नक्। नट्। एवं कृत्, युज्, विद्, भिद्, छिद् इत्यादयोऽवगन्तव्याः॥

[1] B5, B6 add भावे  [2] सवृत् Tv  [3] उद्यमे Tj2  [4] गू Tv.  [5] Gm1. Gm3 add इति ऊडादेश  [6] काशिकाया तु श्रिवीति पठित्वा श्रूः इत्याद्युदाहृतम्  [7] मुक् Tv

अथ अ। 'गुप्तिज्किद्भ्यः सन्' (३. १. ५) इति। निन्दाक्षमाव्याधिप्रतीकारेष्वर्थेषु विहितात्[1] सन्प्रत्ययान्ताद् धातोः 'अ प्रत्ययात्' (३. ३. १०२) इति अकारप्रत्यये जुगुप्सा। तितिक्षा। चिकित्सा। 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३. १. ६) इत्यत्र 'मान जिज्ञासायाम्' इति सन्नन्ताद् अप्रत्यये मीमांसा। 'बध वैरूप्ये' सनि उपधादीर्घे भष्भावे (८. २. ३७) चर्त्वे च अकारप्रत्यये बीभत्सा। दानेरार्जव इति दीदांसा। [2]शानेर्निशातनेऽर्थे सनि शीशांसा। तथा 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (३. १. ७) इति सनि अप्रत्यये च चिकीर्षा, जिहीर्षा, जिगीषा इत्यादि। 'आशङ्कायामुपसंख्यानम्' (वा. ३. १. ७)। विचिकित्सा। एवं [3]सन्प्रत्ययव्यतिरिक्त-क्यजादिप्रत्ययान्तेभ्योऽपि धातुभ्यः पूर्ववदप्रत्ययान्ता [4]उदाहर्तव्याः। यथा—पुत्रीया, पुत्रकाम्या, [5]लोलूया, कण्डूया, चित्रीया, कलहाया इत्यादयः। तथा—'गुरोश्च हलः' (३. ३. १०३) इत्यप्रत्ययः। 'एध वृद्धौ'। एधा। 'स्पर्ध संघर्षे'। स्पर्धा। 'शंसु स्तुतौ'। शंसा इति। 'जागर्तेरकारो वा' (वा. ३. ३. १०१)। जागरा, जागर्या इति।

अथ इण्। [6]'इणजादिभ्यः' (वा. ३. ३. १०८) इति इण्। 'अज गतिक्षेपणयोः'। आजिः। 'अत सातत्यगमने'। आतिः। 'राजृ दीप्तौ'। राजिः। 'जनी प्रादुर्भावे', 'जनिवध्योश्च' (७. ३. ३५) इति वृद्धिप्रतिषेधे जनिः। तथा 'विभाषाख्यानपरिप्रश्नयोरिञ् च' (३. ३. ११०) इति। परिप्रश्ने यथा—कां त्वं कारिमकार्षीः। कां क्रियामकार्षीः इति प्रश्नार्थः। आख्याने यथा—सर्वां कारिमकार्षम् इत्यादि (काशिका १, पृ. २२४)॥

[1] विहितसन्प््रत्यय° Tj2 [2] निशानेऽर्थे Tj2 [3] °क्यबादि° Gm3
[4] उदाहार्या Gm3 [5] Tj1, Tv add रोहिताया, गोपाया, ऋतीया. [6] 'इञजादिभ्य.' इति काशिकाया पाठ (१, पृ. २२३)

अथ ण्वुच् । 'पर्यायार्हर्णोत्पत्तिषु ण्वुच्' (३. ३. १११) इति। पर्याये यथा—भवतः शायिका। भवत आसिका। अर्हे यथा—अर्हति भवानिक्षुभक्षिकाम्। ऋणे यथा—इक्षुभक्षिकां मे धारयसि। उत्पत्तौ यथा—इक्षुभक्षिका मे उत्पन्ना इति। अत्र 'ण्वुल्तृचौ' (३. १. १३३), 'वदः सुपि क्यप् च' (३. १. १०६), 'यथि च' (७. ४. ३३), 'अत इञ्' (४. १. ९५), 'पाघ्राध्माधेट्दृशः शः' (३. १. १३७), 'इक्श्तिपौ धातुनिर्देशे' (वा. ३. ३. १०८) इत्यादिभिः कर्तरि विहितानां ण्वुलादीनां स्त्रीत्वं मा भूदिति [1]'भावादौ' इत्युक्तम्। तथापि 'भुवो भावे' (३. १. १०७) इत्यादिना विहितक्यबादिनिवृत्त्यर्थं [2]स्त्र्यधिकारविशेषणं कृतम् ॥

केचिदत्र 'स्त्रीभावादनिक्तिण्णुल्णच्ण्वुच्क्यब्युजिञ्ङनिशाः' इति पूर्वोदाहृतदशप्रत्ययातिरिक्तं ण्वुच्प्रत्ययमकारप्रत्ययं [3]चान्तरीकृत्य द्वादशप्रत्ययोपसंग्रहत्वेन अमरसिंहीयश्लोकार्धं पठन्ति। स पाठः [4]शेषकारस्यानभिप्रेतः। ण्वुच्प्रत्ययाकारप्रत्यययोः अमरसिंहनाथेनानुक्तत्वबुद्ध्या ताभ्यां सह प्रत्ययचतुष्टयस्य स्वेनोपसंग्रहणादिति ॥

उणादिषु निरूरीश्च। उणादिप्रत्ययानां मध्ये निः, ऊः, ईः इति प्रत्यया उक्ताः। तदन्ताः शब्दाः स्त्रीलिङ्गा भवन्ति। तत्र निप्रत्ययो यथा—'वीज्याज्वरिभ्यो निः' (उ. ४. ४९) इति। 'वी गतिप्रजनकान्त्यसनखादनेषु'। वीयते वध्यत इति वेणिः केशबन्धः। 'ज्या वयोहानौ'। जिनात्यनयेति ज्यानिः। 'ज्वर रोगे'। ज्वरयतीति जूर्णिः आदित्यः। 'सृवृषिभ्यां कित्' (उ. ४. ५०)। सरन्त्यनयेति सृणिः अङ्कुशः[5]। वर्षतीति वृष्णिः यदुविशेषः। अग्निः। वह्निः। इत्यादीनां तु सुरपर्यायाणां विशेषणेन बाधसद्भावात् पुंस्त्वम् ॥

[1] मूले (श्लो ४) [2] स्त्र्यधिकारविहितत्वेन Tj2 [3] अन्तर्गमरीत्या Tv; अन्तर्गनीकृत्य Tj2 [4] अमरशेषकारस्य नाभिप्रेत. Tv [5] Tv adds अरणि, अवनि-

अथ ऊः। 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' (उ. १. ८४)। 'कृष विलेखने'। कर्षूः [1]व्याधिविशेषः, गोमयश्च। 'चमु अदने'। चमूः सेना। 'तनु

विस्तारे'। तनूः शरीरम् । 'धन धान्ये'। धनत्यनेनेति धनूः[3] शरः । 'सर्ज पर्ज अर्जने'। सर्ज्यते [4]आर्ज्यते ऽनेनेति सर्जूः वणिक् । 'खर्ज व्यथने पूजने च'। [5]खर्जतीति खर्जूः। पामा। 'मृजेर्गुणश्च' (उ. १. ८५)। 'मृजूष् शुद्धौ'। मर्जूः शुद्धिः रजश्च। 'वहो धश्च' (उ. १. ८६)। उह्यत इति वधूः अभिनवपाणिग्रहणा। अन्यत्र स्त्रीमात्रे गौणः। 'कषेश्छश्च' (उ. १. ८७)। 'कष हिंसार्थः'। कषत्यनयेति कच्छूः पामा। 'णित्कसिपद्यर्तेः' (उ. १. ८८)। 'कस गतौ'। कासूः रोगविशेषः। (शक्तिरिति कौमुद्याम् पृ. ४९८)। [6]आयुधविशेषश्च। 'पद गतौ'। पादूः उपानत्। 'ऋ गतौ'। अर्यतेऽनयेति आरूः। वेदिका, वेदना, बलं च। 'नञि लम्बेर्नलोपश्च' (उ. १. ९०)। 'लबि शब्दे अवस्रंसने च।'। अलाबूः। 'के श्र एरङ् चास्य' (उ. १. ९१)। 'शृ हिंसायाम्'। कशेरूः। [7]तृणकन्दविशेषः। पद्ममूलम्। वीरुद्विशेषः। फलजातिश्च। 'त्रो दुट् च' (उ. १. ९२)। 'तॄ प्लवनतरणयोः'। तरतीति तर्दूः। दारुहस्तकः। 'दरिद्रातेर्यलोपश्च' (उ. १. ९३)। 'दरिद्रा दुर्गतौ'। दर्द्रूः कुष्ठविशेषः। 'नृतिशृध्योः कूः' (उ. १. ९४)। 'नृती [8]गात्रविक्षेपे'। नृत्यतीति नृतूः। दीर्घकृमिविशेषः। 'शृधु मृधु उन्दे'। शृधूः [9]गुणः प्रज्ञा च। अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ. १. ९६)। 'अदि बन्धने'। अन्दूः अयोमयी [10]शृङ्खला। 'दृभी ग्रन्थे'। दृम्भूः सर्पजातिः, दृन्भूर्वा। 'चमु छमु जमु झमु अदने'। जम्यत इति जम्बूः वृक्षविशेषः। 'फल निष्पत्तौ'। कफेलूः श्लेष्मातकः। कर्कशब्दोपपदाद् धाञः कूप्रत्ययः। उपपदस्य नुक्। कर्कन्धूः बदरी। दधातेः इषुक् चागमः। दिधिषूः द्विरूढा॥

[1] Tj2 omits Dhātu sūtra [2] कुष्ठम् Tj2 [3] A bow (Apte's Dict p 853) [4] आर्जयत इति B5, B6 [5] खर्जयति Gm1, Gm3 [6] सुवलाख्यमायुध च B6, Tv [7] Gm3, Tj2 add जलजातिविशेष [8] गात्रविनामे Tj2 [9] गुदमिति कोशे (Apte's Dict p 1566) [10] गजशृङ्खला B6, Tj2

अथ ईः। 'अवितृस्तृतन्त्रिभ्य ईः' (उ. ३. १५८)। 'अव रक्षणादिषु'। अवतीति अवीः प्रकाशः। अवति रक्षत्यात्मानं परपुरुषादिभ्य इति अवीः रजस्वला। 'तॄ प्लवनतरणयोः'। तीर्यतेऽनयेति तरीः नौः। 'स्तृञ् आच्छादने'। स्तृणातीति स्तरीः [1]धूमः। 'तन्त्रि कुटुम्बधारणे'। तन्त्रीः वीणारज्जुः, वाद्यविशेषश्च। तन्द्रिः सौत्रो धातुः आलस्यार्थः। तन्द्रीः आलस्यम्।

'लक्षेर्मुट् च' (उ. ३. १६२)। 'लक्ष दर्शनाङ्कनयोः'। लक्षयतीति[2] लक्ष्मीः॥ अत्र चकारेण औणादिक एव अनिप्रत्ययो गृह्यते। यथा—'अर्तिसृधृधम्यश्य-वितृभ्योऽनिः' (उ. २. १०२)। 'ऋ गतौ'। अर्यत इति अरणिः काष्ठविशेषः। 'सृ गतौ'। सरन्त्यनेनेति सरणिःपन्थाः। 'धृङ् अवस्थाने'। धरणिः पृथिवी। धमिः सौत्रो धातुः। धमनिः। अश्नुत इति अशनिः वज्रम्। अवतीति अवनिः पृथिवी। तरतीति तरणिः सूर्यः इति। अत्र अरण्याशनिशब्दयोरपि विशेषविधिना [3]लिङ्गद्वयवृत्तित्वम्। तरणिशब्दस्य सूर्यवाचकत्वाद् 'द्युमणिस्तरणिर्मित्रः' (१, पृ. ६६) इति विशेषविधिकल्पनेन[4] पूर्वोत्तरसाहचर्येण पुंलिङ्गत्वमिति[5] विज्ञेयम्॥

ङ्याबूङन्तं चलं स्थिरम्। ङीप्, ङीष्, ङीन् इति त्रयाणां ङी इति सामान्य-ग्रहणम्। आप् इति टाप्, डाप्, चाप् इति त्रयाणां ग्रहणम्। ङ्यन्तम्, आबन्तम्, ऊङन्तं च स्त्रीलिङ्गं भवति। क्रमेणोदाहरणानि। यथा 'ऋन्नेभ्यो ङीप्' (४. १. ५)। कर्त्री, दण्डिनी इति। 'अन्यतो ङीष्' (४. १. ४०), 'षिद् गौरादिभ्यश्च' (४. १. ४१) इति ङीषि गौरी। 'शार्ङ्गरवाद्यञो ङीन्' (४. १. ७३)। शार्ङ्गरवी। बैदी। इत्यादि। 'अजाद्यतष्टाप्' (४. १. ४) इति टापि अजा, एडका। 'डाबुभाभ्यामन्यतरस्याम्' (४. १. १३) इति डापि बहुराजा। 'यङश्चाप्' (४. १. ७४) इति चाप्प्रत्यये [6]कारीषगन्ध्या। 'ऊङुतः' (४. १. ६६) इति ऊङ्प्रत्यये ब्रह्मबन्धूः। 'ऊरूत्तरपदादौपम्ये' (४. १. ६९) करभोरूः। 'संहित-शफलक्षणवामादेश्च' (४. १. ७०) इति रम्भोरूः, संहितोरूः, शफोरूः, लक्षणोरूः, वामोरूः इत्यादि।

ननु यस्य शब्दस्य स्त्रियां वृत्तिः स शब्दः स्त्रीलिङ्ग इति वक्तव्यम्। ततश्चास्मिन् शास्त्रे स्त्रियामपरिभाषितत्वात् लोकप्रसिद्धस्त्रीग्रहणे खट्वा-शालादौ अतिव्याप्तिप्रसङ्गात् 'स्त्रियाम्' इति सिद्धवदनुवादोऽनुपपन्नः। एवं पुंनपुंसकयोर्लिङ्गयोरपि दुर्वचनत्वात् लिङ्गविशेषव्यवहारानुपपत्तिरित्याशङ्क्याह —चलं स्थिरमिति। चलं चेतनम्। स्थिरमचेतनमित्यर्थः। अयमभिप्रायः—चेतनेषु [7]स्तनादिरभिव्यक्तिः स्त्रीत्वव्यञ्जिका। [8]श्मश्रुरोमादिरभिव्यक्तिः पुंस्त्वस्य। उभयविलक्षणा तु नपुंसकत्वस्य। अचेतनेषु खट्वादिषु पूर्वोक्तव्यञ्जकव्यक्तीनाम-भावाद् ब्राह्मणत्वादिवद् उपदेशव्यङ्ग्या एव जातय इति। तदुक्तं 'स्त्रियाम्' (४. १. ३) इत्यत्र सूत्रे वृत्तिकारैः—'सामान्यविशेषाः स्त्रीत्वादयो [9]गोत्वादय इव बहुप्रकारा व्यक्तयः। [10]क्वचिदाश्रयविशेषाभावाद् उपदेशव्यङ्ग्या[11] एव

भवन्ति । यथा ब्राह्मणत्वादयः ' इति (काशिका. १, पृ. २६२) । अत्र न्यासकारादिभिश्च अयमेवार्थः प्रपञ्चितः । तत्र चलनशीलेषु चेतनेषु योषितादिषु व्यक्तिविशेषव्यङ्ग्यं [12]स्त्रीत्वादिकं शब्दार्थः । स्थिरप्रायेष्वचेतनेषु खट्वादिषु पुनरुपदेशमात्राभिव्यङ्ग्यं स्त्रीत्वादिकं शब्दार्थः । एवं च सति चलं चलव्यक्तिव्यङ्ग्यलिङ्गविशिष्टार्थाभिधायकम् । स्थिर स्थिरव्यक्तिगतोपदेशमात्राभिव्यङ्ग्यलिङ्गविशिष्टार्थाभिधायक ङ्याबूडन्तं स्त्रिया भवतीति । एतच्च लिङ्गस्वरूपनिरूपण यद्यप्येतद्वर्गादौ ग्रन्थादौ वा कर्तव्यम्, तथापि ङ्याबूडन्तमित्यस्य मूलभूते ' स्त्रियाम् ' (४. १. ३) इति सूत्रे [13]कृतमित्यत्रैवायमर्थः एकमुष्टचा आचार्येण सूचितमित्यवधेयम् ।। ४ ।।

[1] छदि Tj2　[2] B6 adds नीतिकुशलम्　[3] पुलिङ्ग , स्त्रीलिङ्गश्च　[4] विशेषविधिना Tv　[5] इह for इति Tj2　[6] कौमुदगन्ध्या Tv　[7] स्तनादिमतीव्यक्ति Tv　[8] Tj2 omits °रोम°　[9] गोत्वादिपदवत् Gm1, Gm3　[10] आश्रयगतविशेषस्य दुर्निरूपत्वात् B5, B6　[11] उपदेशमात्राभिव्यङ्ग्या एव Tj1, Tv　[12] स्त्रीलिङ्गत्व° Tj2　[13] अत्रैवाचार्येण सूचितम् Tj2

(पा ) तल्वृन्दे येनि—चल स्थिरम् । तल्प्रत्ययान्त स्त्रीलिङ्ग । भावे तल् यथा—जडस्य भावो जडता । 'देवात्तल्' (५ ४ २७) । देव एव देवता । ' ग्रामजनबन्धुसहायेभ्यस्तल्[1] ' (४ २ ४३) । ग्रामाणा समूहो ग्रामता । जनता । बन्धुता । सहायता । ' गजाच्चेति वक्तव्यम् ' (वा ४ २ ४३) । गजाना समूहो गजता ।। वृन्दे येनिकट्यत्रा । समूहार्थे यप्रत्ययान्ता इनित्रकटचजन्ताश्च स्त्रीलिङ्गा । पाश्या, तृण्या, उलूकिनी, गोत्रा, रथकटचा ।। वैरमैथुनिकादिवुन् । वैरमैथुनिकाद्यर्थेषु वुन्प्रत्यय स्त्रीलिङ्ग । ' द्वन्द्वाद् वुन् वैरमैथुनिकयो ' (४ ३ १२५) । काकोलूकाना वैर काकोलूकिका । अत्रिभरद्वाजयोर्मैथुनिको विवाह अत्रिभरद्वाजिका ।। ' पादशतस्य ' (५ ४ १)' दण्डव्यवसर्गयोश्च ' (५ ४ २) । द्वौ द्वौ पादौ ददाति द्विपदिका ददाति, द्विशतिका ददाति । द्विपदिका दण्डित । द्विपदिका व्यवसृजति । उपलक्षणात् वुञ्प्रत्ययोऽपि स्त्रीलिङ्ग । गार्गिकया श्लाघते । ' द्वन्द्वमनोज्ञादिभ्यश्च ' (५ १ १३३) वुञ् । शिष्योपाध्याययोर्भाव शैष्योपाध्यायिका ।।

स्त्रीभावादौ—चल स्थिरम् । स्त्रीभावार्थे अनिप्रभृतिप्रत्ययान्ता स्त्रीलिङ्गा । ' आक्रोशे नञ्यनि ' (३ ३ ११२) । अकरणिस्ते वृपल[3] भूयात् ।

अजननि ॥ 'स्त्रियां क्तिन्' (३ ३ ९४)। कृति, हृति। क्तिन्ग्रहणेन निप्रत्ययस्यापि ग्रहणम्। 'ग्लाम्लाज्याहाभ्यो [4]नि' (वा ३ ३ ९४)। ग्लानि, म्लानि [5]॥ 'रोगाख्यायां ण्वुल् बहुलम्' (३ ३ १०८)। प्रवाहिका, प्रच्छर्दिका। 'पर्यायार्हणोत्पत्तिषु ण्वुच्' (३ ३ १११)। भवत शायिका॥ 'कर्मव्यतिहारे णच् स्त्रियाम्' (३ ३ ४३)। अन्योन्य क्रोशन व्यावक्रोशी वर्तते॥ 'व्रजयजोर्भावे क्यप्'। व्रज्या, इज्या॥ 'ण्यासश्रन्थो युच्' (३ ३ १०७)। कारणा, आसना, श्रन्थना। 'षिद्भिदादिभ्योऽङ्' (३ ३ १०४)। पचा, भिदा, छिदा॥ '[6]प्रश्नाख्यानयोरिञ्च' (३ ३ ११०)। का कारिमकार्षी। सर्वां कारिमकार्षम्। 'अ प्रत्ययात्' (३ ३ १०२)। चिकीर्षा, पुत्रीया॥ 'कृञः श च' (३ ३ १००)। क्रिया। 'इच्छा' (३ ३ १०१)॥ [7]उणादिष्वन्यन्तादय। अरणि, धमनि, लक्ष्मी, तन्त्री, अलाबू इत्यादि॥ ४॥

[1] °गजसहायेभ्य A1 [2] B3 adds 'पाशादिभ्यो य', 'खलगोरथात्', 'इनित्रकट्यचश्च'। पाश्या, वात्या, खल्या, रथ्या, खलिनी, गोत्रा, रथकट्या [3] शठ B3, C1 [4] निर्वक्तव्या A1 [5] C1 adds ज्यानि, हानि [6] 'विभाषाख्यानपरिप्रश्नयोरिञ्च' इति काशिकाया सूत्रपाठ (१, पृ २२४) [7] A1 omits unādi examples

तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णदिक्॥ ५॥
घञो ञः सा क्रियास्या चेद् दाण्डपाता हि फाल्गुनी।
श्यैनंपाता च मृगया तैलंपाता स्वधेति दिक्॥ ६॥

(वि) तत्क्रीडायां प्रहरणं चेत्। अस्यां क्रीडायां तत्प्रहरणमित्येतस्मिन्नर्थे णप्रत्ययो विहितश्चेत् तदन्त शब्दरूप स्त्रियां वर्तते[1]। मौष्टा पाल्लवा णदिक्। [2]पूर्वोक्तप्रत्ययस्योदाहरणमिदम्। मुष्टि [3] प्रहरणमस्यां क्रीडायामिति मौष्टा। पल्लव [4] प्रहरणमस्यां क्रीडायामिति पाल्लवा॥ घञो ञ सा क्रियास्या चेत्। सा क्रिया अस्यां वर्तते इति विवक्षा चेत् तदा घञन्तप्रतिपादकोपरि विहितोञप्रत्यय स्त्रियां भवति। अत्र पूर्वोक्त स्पष्टीकर्तुं स्वयमेवोदाहरणानि दर्शयति—दाण्डपाता हि फाल्गुनी—स्वधेति दिक्। यस्यां फाल्गुन्यां दण्डपातो वर्तते सा दाण्डपाता। यस्यां मृगयायां श्येनानां पातो वर्तते सा श्यैनंपाता। यस्यां स्वधायां तिलानां पातो वर्तते सा तैलंपाता। दिग्ग्रहणमुदाहरणान्तरप्रदर्शनार्थम्[5]॥ ५-६॥

[1] भवति K4 [2] J2, K3 K5 add मौष्टा पाल्लवेति पदद्वयम् [3] मुष्टि प्रहरणम J2 K6 [4] पल्लवप्रहरणम J2 K6 [5] K5 adds यथा—मौसलपाता, कौसुमपाता इत्यादि

(विव ) तत्क्रीडाया प्रहरण चेत् । तदित्यनन्तरम् अस्याम् इत्यध्याहार्यम् । अनन्तरोदाहरण एव वाक्ये[1] 'णदिक्' इति वक्ष्यमाणसामर्थ्याद् इहापि चेत् इत्यनन्तर णप्रत्यय इत्यध्याहार्यम्[2]। ततश्चायमर्थ —मुष्ट्यादिकमस्या क्रीडायामित्य स्मिन्नर्थे तदिति प्रथमासमर्थात् प्रहरणवाचिनो मुष्ट्यादिशब्दात् णप्रत्ययो विहित । तदन्त शब्दरूप च स्त्रिया भवति । 'तदस्या प्रहरणमिति क्रीडाया ण ' (४ २ ५७) इति क्रीडायामिति[3] स्त्रीलिङ्गनिर्देशाद् एवविधविषये णप्रत्ययान्तस्य स्त्रीलिङ्गत्व सूत्रकारस्याभिमतमिति गम्यते ।। स्वयमेवोदाहरति—मौष्टा पाल्लवा णदिक् इति । मुष्टि प्रहरणमस्या क्रीडायामिति मौष्टा । पल्लवा प्रहरणमस्या क्रियायामिति पाल्लवा इति । णदिक् णप्रत्ययस्योदाहरणमार्ग इत्यर्थ ।।

घञो ञ सा क्रियास्या चेत । भावार्थविहितघञन्तशब्दवाच्या दण्डपातादिरूपा या क्रिया सा वर्ततेऽस्यामिति विवक्षा चेद् भवति तदा घञो घञन्तरूपात् प्रातिपदिकात् प्रथमासमर्थाद् 'घञ सास्या क्रियेति ञ ' (४ २ ५८) इति सूत्रेण यो ञप्रत्ययो [4]विहित तदन्त शब्दरूप स्त्रिया भवति । स्वयमेवोदाहरति—

दाण्डपाता हि फाल्गुनी—स्वधेति दिक् इति । दण्डानां कर्तृभूताना पात । 'षष्ठी' (२ २ ८) इति कर्तरि षष्ठीसमास । दण्डपातरूपक्रिया यस्या फाल्गुन्या सा फाल्गुनी दाण्डपाता । श्येनपातलक्षणा क्रिया यस्या मृगयाया सा श्यैनपाता । स्वधेति पद श्राद्धक्रियावचनमाकारान्तम् । 'स्वधायै व पितरो नम ' (वाज स काण्व २ ७ ४), 'मध्यान्नीचादुच्चा स्वधयाभिप्रतस्थे', [5]'स्वधा पितृभ्योऽमृत दुहाना ' इत्यादिप्रयोगदर्शनात् । तिलपातक्रिया यस्या स्वधाया सा स्वधा तैलपाता । 'घञ सास्या क्रियेति ञ ' (४ २ ५८) इति ञप्रत्यये आदिवृद्धिश्च (७ २ ११७) । 'श्येनतिलस्य पाते ञे'(६ ३ ७१) इति मुम् । अत्रापि सूत्रकारेण अस्यामिति निर्देशात् स्त्रीलिङ्गत्वमभिप्रेतम् । अतश्च मृगयादेरेव विशेष्यत्वम् । न त्वाखेटमृगव्यश्राद्धादीनामित्यवगन्तव्यम् । दिक् । एष दिगुदाहरणमार्ग इत्यर्थ । तेन मौसलपाता, पौष्पपाता इत्यादि भवति ।। ५-६ ।।

[1] वाक्येन Tv [2] अध्याहर्तव्यम् Gm1, Gm3 [3] Tj2 adds अस्यामिति
[4] अभिहित Tv [5] 'स्वधा दुहाना अमृतस्य धाराम्' इति तै स ४ २ ६ ६

(पा ) तत्क्रीडाया—पाल्लवा णदिक् । 'तदस्या प्रहरणमिति क्रीडाया ण ' (४ २ ५७) इत्यर्थे विहितणप्रत्ययान्त स्त्रीलिङ्ग । मुष्टिप्रहरणमस्यामिति मौष्टा । पाल्लवा[1] । एव दण्ड प्रहरणमस्या क्रीडायामिति दाण्डा ।। घञो ञ सा क्रियाया—तैलपाता स्वधेति दिक् । 'घञ सास्या क्रियेति ञ ' (४ २ ५८) इत्यस्मिन्नर्थे[2] विहितञप्रत्ययान्त [3] स्त्रीलिङ्ग । दण्डपातोऽस्या वर्तत इति दाण्डपाता फाल्गुनी । फाल्गुनीति फल्गुनीनक्षत्रयुक्ता पौर्णमासी । श्येनपातोऽस्या वर्तत[4] इति श्यैनपाता मृगया । तिलपातो ऽस्या वर्तत इति तैलपाता स्वधा । 'श्येनतिलस्य पाते ञे ' (६ ३ ७१) इति मुमागम ।। ५-६ ।।

[1] A1 adds पल्लवैर्वा अत्र क्रीडा [2] B3 omits अस्मिन् [3] ञप्रत्यय A1
[4] प्रवर्तते B3

**स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि ।**
**लङ्का शेफालिका टीका धातकी पञ्जिकाढकी ।। ७ ।।**

(वि ) स्त्री स्यात् काचित्— अपचये यदि । मृणाल्यादि काचिदाख्या अपचयेऽल्पत्वे यदि विवक्षा तदा स्त्री स्यात् । अल्प मृणाल मृणाली । आदिग्रहणाद् अल्प पट पटी । एव घटी[1] पुटी छत्री [2]इत्यादि ।। लङ्का शेफालिका—आढकी । एते शब्दा स्त्रीलिङ्गे वर्तन्ते । लङ्का रावणपुरी । शेफालिका[3] सुवहा । टीका [4]पूर्वकृतग्रन्थव्याख्या । धातकी धातुपुष्पिका । पञ्चिका न्यास । आढकी [5]तुवरिका ।। ७ ।।

[1] J2, K4 add मठी, कुम्भी [2] इत्यादीनि K3 [3] K2, K4 add तु
[4] K3 omits "ग्रन्थ" [5] तुवरी K4, K5

**(विव.) स्त्री स्यात् काचित्—अपचये यदि । [1]मृणाल्यादिरित्ययमर्थः । अल्पविवक्षायामशेषेष्वपि[2] महाप्रबन्धेषु दृष्टा काचिदेव मृणाल्यादिः स्त्री स्यात् । गौरादिपाठात्[3] (४. १. ४१) ङीषन्तश्च भवति । आदिशब्दाद् घटपटकुम्भादिशब्देभ्य तदर्थापचयविवक्षायां घटी पटी कुम्भी इत्यादिर्भवति । काचिदिति किम्? अल्पो वृक्ष । अल्प गृहम् । अल्प सुखमित्यदो मा भूत् ।।**

एवं पुरातनलिङ्गानुशासनछायामनुसृत्यानेकशब्दोपसंग्राहप्रत्ययादिमुखेन[4] केषांचिल्लिङ्गान्यनुशिष्य अधुना काश्चित् स्त्रीलिङ्गान् सार्धश्लोकत्रयेण स्वरूपतो दर्शयति—[5]लङ्का शेफालिका—आढकी इति। लङ्का रावणपुरी। शेफालिका नीलपुष्पिका निर्गुण्डी। टीका प्रतिपदव्याख्याग्रन्थः न्यासपदमञ्जर्यादिः। धातकी धातुपुष्पिका प्रागुक्ता (१, पृ. २८९)। पञ्चिका व्याख्येयविषयपदार्थप्रकाशको ग्रन्थः कौमारपञ्चिकादिः। आढकी तुवर्याख्यो धान्यविशेषः। 'आढकं मानभेदे स्यात् तुवर्यामाढकी मता' इति विश्वप्रकाशः (पृ. ८, श्लो. ६९) ॥ ७ ॥

[1] मृणाल्यादेरि° Tv   [2] अशेपेऽपि B5, B6   [3] 'पिद्गौरादिभ्यश्च'. [4] °सग्राहक° Tv   [5] 'लक आस्वादने' चुरादि। 'एरच्'। घञ् वा। पृषोदरादित्वाद् नुम्। नुम्यनुपधात्वान्न वृद्धि [लङ्का], शेते इति शे। शीङ विच्। शय फालयति। 'ञिफला विशरणे'। अण्। स्वार्थे कन्। क्वुन् वा [शेफालिका], टीक्यतेऽर्थो यया। 'टीकृ गतौ'। 'गुरोश्च हल' इत्य [टीका], धातु करोति। 'तत्करोति ' इति णिच्। टिलोप। क्वुन्। पिप्पल्यादित्वात् ङीप् [धातकी], 'पिजि भाषार्थे', 'गुरोश्च' इत्य। पृषोदरादित्वादिकारस्याकार। स्वार्थे कन् [पञ्चिका], आ समन्तात् ढौकने। अच् घञ् वा। पृषोदरादि। 'गौरादि' (४ १ ४२) [आढकी] इति भा दी (पृ ५२०)

(पा) स्त्री स्यात् काचित्—अपचये यदि। मृणल्यादिशब्दा केचन[1] अपचयविवक्षाया स्त्रीलिङ्गा। अल्प मृणाल मृणाली। एव मठी छत्री[2] इत्यादि॥ लङ्का शेफालिका—आढकी। लङ्कादय शब्दा स्त्रीलिङ्गा। लङ्काशब्दोऽनेकार्थ[3]। 'लङ्का रक्ष पुरीशाखाशाकिनीकुलटासु[4] च' इति विश्वप्रकाश (पृ ६, श्लो ४६)। शेफालिका गतार्था (१, पृ २५७)। टीकेति विवरणम्। धातकी गतार्था (१, पृ २८९)। पञ्चिकेति विवरणम्। द्यूतभेदोऽपि स्यात्। 'द्यूतोऽस्त्रियामक्षवती तद्भेदा पञ्चिकादय' इति वैजयन्ती (पृ १४०, श्लो ५९)। आढकीति स्वल्पद्रोण[5]। आढकिकेति केषांचित्पाठः॥ ७॥

[1] केचित् B3   [2] छत्रिका B3, C1   [3] नानार्थ B3   [4] °शाखिनी° A1
[5] A1 adds 'पिन्नतूमड्डु'

सिध्रका शारिका हिक्का प्राचिकोल्का पिपीलिका।
तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः॥ ८॥

(वि ) सिध्रका—सूचिमाढय । एते शब्दा स्त्रीलिङ्गे वर्तन्ते । सिध्रका[1] वृक्षविशेष [2] । शारिका पक्षिभेद । हिक्का वायुविकारेण कण्ठे विलम्ब्य[3] जायमानो ध्वनि । प्राचिका स्पृक्का[4] । उल्का पुच्छज्योति [5] । पिपीलिका क्षुद्रजन्तुभेद । तिन्दुकी [6]वृक्षभेद । कणिका गोधूमपिष्टम्[7] । भङ्गिर्भङ्गी वा विच्छित्ति । सुरङ्गा चोरकृतकुडयादिगतद्वारम्[8] । सूचि [9] सीवनसाधनम् । माढिर्देश-विशेष ॥ ८ ॥

[1] °सिध्रिका J2, K6 [2] °भेद K3, K4 [3] विलम्ब्य विलम्ब्य K5
[4] J2 adds मक्षिकाविशेष इति केचित् [5] तेज पुञ्ज इति यावत् [6] तिन्दुक K6
[7] पिष्टकम् K4 [8] °गर्त° K4 [9] सूची K2, K3

(विव.) सिध्रका—सूचिमाढयः । [1]सिध्रका शिवलिङ्गाभबीजाढ्यफला । ' स्यात् सिध्रका लता ' इति भट्टशिवः । शारी एव शारिका पक्षिविशेष· ।[2] हिक्का [3]विलम्ब्य कण्ठादुद्गतो वायुविकारजः शब्दः । ' वेक्कुपेरु ' । प्राचिका वनमक्षिका । प्राचिकाशब्दः प्रसिद्ध इति सुबोधिनीकारः । ' प्राचिका वनमक्षिका ' इति सुभूतिचन्द्रः । ' श्येन्यां तु प्राचिका मता ' इति वैजयन्ती (पृ. २७, श्लो. २०)। उल्का नभसः पतन्ती विद्युत्समतारा । पिपीलिका स्वेदजः क्षुद्रजन्तुविशेषः । ' चिमपेरु ' । तिन्दुकः पुलिङ्गः वृक्षविशेषः प्रागुक्तः (१, पृ. २३८) । संप्रति तत्रैवार्थे तिन्दुकीति स्त्रीलिङ्गोऽपि ङीपन्तः पठ्यते । कणिका दारुमयी लेखिनी । गोधूमचूर्णं च । व्रीहिभेद इत्यन्ये । कर्णिका इति पाठे कर्णभूषणमर्थः । भङ्गी प्रकारः । ' चञ्चद्विपञ्चीकलनादभङ्गीसंगीतमङ्गीकुरुते स्म भृङ्गी ' इति प्रयोगः । सुरुङ्गा चोरकृतकुडयविवरम् । ' कन्नपेरु ' । सूचिः जीर्णवस्त्रखण्डसीवनसाधनम्, तीक्ष्णाग्रायोविकारः । सूची नृत्तभेदश्च । वीचिः कल्लोल. । अन्ये तु वीचि-शब्दस्थाने माटिरिति मूर्धन्यप्रथमोपधं माटिशब्दं पठन्ति । तत्र माटिः पर्णशिरा । अन्ये तु माढिरिति मूर्धन्यचतुर्थोपधमाहुः । तत्र माढिः देशविशेष इति स्वामी (पृ. ३४६) । पत्रादिभङ्ग इत्यपरे । ' माढिः पत्रादिभङ्गौ स्यान्माढिर्दैन्यप्रकाशने ' इति विश्वप्रकाशः (पृ. ४६, श्लो. ४) । माटिमाढिशब्दयोरुभयोरपि देशीय-पदत्वेन धातुजत्वाभावात् स्वोपज्ञान्तवर्णक्रमोल्लङ्घनमपि न दोषमावहति । केचित्[4] काञ्चिरिति पठन्ति । काञ्चिर्मेखला । ' नीवीमुन्मुच्य शनैः स्पृशति रतिकाले करेण काञ्चिपदम् ' इति चम्पूकाव्ये ह्रस्वान्तस्य प्रयोग.[5] ॥ ८ ॥

[1] सिध्रिका Tv  [2] 'गोरवडक' B6  [3] अविलम्ब्य Gm3  [4] अपरे तु Tv
[5] सेधति, सिध्यते वा । 'षिधु गत्याम्' । 'स्फायि तञ्चि ' (उ २ २३) इति रक् । स्वार्थे कन् । क्षिपकादित्वाद् (वा ७ ३ ५) इत्वाभाव [सिध्रका], सरति । 'सृ गतौ' । ण्वुल् [सारिका], 'शॄ हिंसायाम्' [शारिका], हिक्कनम् । 'हिक्क अव्यक्ते शब्दे' । 'गुरोश्च हल ' इत्य [हिक्का], प्राचति । 'अचु गतौ' । ण्वुल् [प्राचिका], ऋच्छति । अर्यते वा । 'ऋ गतौ' । 'शुकवल्कोल्का ' (उ ३ ४२) इति साधु [उल्का], अपि पील्यते । 'पील प्रतिष्टम्भे' । घञ् । 'वष्टिभागुरिरल्लोपम्' इत्यपेरल्लोप । स्वार्थे कन् [पिपीलिका], तिम्यति । 'तिम आर्द्रीभावे' । बाहुलकादुकप् गुणाभावश्च [तिन्दुकी], कणति । 'कण गतौ' । पचाद्यच् । स्वार्थे क्न् [कणिका], भङ्गस्य करणम् । 'तत्करोति' इति ण्यन्तात् 'अच इ' (उ ४ १३९) [भङ्गि ], सु बहु रज्यतेऽस्या रजसा । 'रञ्ज रागे' । 'हलश्च' इति घञ् । 'चजो —' इति कुत्वम् [सुरङ्गा], सूच्यतेऽनया । 'सूच पैशुन्ये' । चुरादि । 'अच इ' [सूचि ], महनम् । अनया वा । 'मह पूजायाम्' । क्तिन । ढत्व (८ २ ३१), घत्व (८ २ ४०), ष्टुत्व (८ ४ ४१) ढलोप (८ ३ १३) दीर्घ (६ ३ १११) [माढि] इति भा दी (पृ ५२१)

(पा ) सिध्रका—सूचिमाढय । सिध्रकेति वृक्षभेद । शारिका शुकाङ्गना[1] । वाद्यलगुडोऽपि स्यात् । 'वादित्रलगुडे कोणा[2] न नपु शारिका स्त्रियाम्' इति वैजयन्ती (पृ १४७, श्लो १३६) । हिक्का रोगविशेष । प्राचिका पक्षिजाति । नीलमक्षिकापि स्यात् । [3]'प्राचिका पक्षिजाति स्यात् प्राचिका नीलमक्षिका' इति ध्वनिमञ्जरी । उल्का निर्गतज्वाला[4] । पिपीलिका कृमिविशेष । 'चिम' । 'शनैर्याति पिपीलिक ' इति पुस्त्वमपि सिद्ध क्षीरस्वामिवचनात् (पृ ३४६) । तिन्दुकीति वृक्षभेद [5] । कणिका नाम वृक्षविशेष । भङ्गि विच्छित्ति । सुरङ्गा नाम चोरादिकृतभित्त्यादिरन्ध्रम् । 'कन्नमु' । सूचीति स्यूतिसाधनम्[6] । सूचिश्च सूचा च स्यात् । 'सूचि सूचा च सीवनी' इति वैजयन्ती (पृ १३६, श्लो ११) । माठि कवच । 'माठि स्त्री जागरो वक्षश्छद सनाहकङ्कटौ' इति वैजयन्ती (पृ ११६, श्लो १५३) । माढिरिति पाठे, पत्रवल्कमपि स्यात् । 'पत्रमध्यसिरा माढि ' इति वैजयन्ती (पृ ४६, श्लो १८) ।। ८ ।।

[1] पक्षिविशेष B3, C1, A1 adds भाषान्तर 'पुरिळी'  [2] कोणोऽस्त्री A1
[3] प्रचिका A1  [4] गतार्था (१, पृ ४०) B3, A1 adds 'कारवी'  [5] निन्दुक A1
[6] 'सूदि' A1

पिच्छावितण्डाकाकिण्यश्चूर्णिः शाणी द्रुणी दरत् ।
सातिः कन्था तथासन्दी नाभी राजसभापि च ।। ६ ।।

(वि ) पिच्छा—द्रुणी दरत् । एते शब्दा स्त्रीलिङ्गे वर्तन्ते । पिच्छा [1]आचाम । वितण्डा वादविशेष । काकणी [काकिणी] [2]कर्षस्य चतुर्थो भाग. । चूर्णी [3]गद्यविशेष. । शाणी कर्षणशिला । [4]द्रुणी कर्णजलूका । दरद् दारदाख्य-विषजन्मदेश । सातिर्दानम् । कन्था [5] पटखण्डै [6]स्यूतवास. । [7]कथा प्रसिद्धा । आसन्दी शवयापनयानविशेष.[8] (?) । नाभि कुक्षिमध्यगतरन्ध्रम्[9] । राजसभा नृपास्थानम् ।। ६ ।।

[1] ओदनमण्ड इति यावत् [2] मापस्य J2 [3] गद्यम् K6 [4] दृणी K3, K1
[5] कर्पटीखण्डै K4 [6] व्यूढ॰ K5 [7] कथा for तथा is the reading in Vivrti; प्रवन्ध K5 [8] यानम् K3, K5 [9] ॰गत द्वारम् K4

(विव.) पिच्छा—द्रुणी दरत् । पिच्छादयः स्त्रीलिङ्गे वर्तन्ते । पिच्छा शाल्मलिपिष्टः ओदनमण्डश्च । वितण्डा [1]स्वपक्षस्थापनाहीनो वादः । काकणि-र्मानभेदः । 'मापचतुर्थो भागः काकणी' इति सुबोधिनीकारः । विंशतिर्वराटिका काकणी इत्यन्ये । चूर्णिः गद्यात्मकः पदसंदर्भः, कादम्बर्यादौ चूर्णिकेति प्रसिद्धा । शाणिः कर्षणशिला । [2]दृणिः कर्णजलूका । दरद् म्लेच्छाधिष्ठितो देशविशेषः । तकारान्तत्वमस्य वर्णप्रक्रमादेवावगम्यते[3] । सातिर्दानम् । कन्था निरन्तरतन्तु-जालस्यूतपटखण्डसमुदायः । कथा वादजल्पवितण्डात्मिका, वाक्यसंदर्भरूपा [4]राज-वाहनादिकथा च । आसन्दी शववाहनसाधनं काष्ठयन्त्रम् । स्वल्पखट्वातुल्यं समचतुरश्रमासनं च । नाभिः पिण्डिकाख्यः चक्रावयवविशेषः । कुक्षिमध्यरन्ध्रे तु द्वयोर्लिङ्गयोः प्रागुक्तः ([5]१, पृ. ४० ८) । क्षत्रियविशेषे तु पुंस्त्वं नानार्थे कथितम् (२, पृ. ४१०) । वक्ष्यति च (श्लो. २०) । राज्ञः सभा राजसभा । 'सभा राजा-मनुष्यपूर्वा' (२. ४. २३) इत्यत्र पर्यायस्यैव राजाद्यर्थमिति वचनाद् (काशिका. १, पृ. १३२) राजपर्यायाणामेव ग्रहणम् । न राजशब्दस्य । तेनायमर्थः— सभान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति, सा चेत् सभा राजवर्जिताद् राजपर्यायात् परा भवति । यथा—ईशसभम् । ईश्वरसभम् । राजपर्यायवाचिन इति किम्? पुष्य-मित्रसभा, चन्द्रगुप्तसभा इत्यादौ तद्विशेषणवाचिनो मा भूत् । राजशब्दवर्जनादिति किम्? राजसभा । तदेतत्प्रत्युदाहरणमभिप्रेत्य 'राजसभापि च' इत्युक्तम्[6] ।। ६ ।।

[1] 'स्थापनवाद Tv [2] दृणिरिति विवरणाभिमत पाठ [3] दृणि, दरत्, साति, कन्या इति वर्णक्रम [4] दशकुमारचरितमिति यावत् [5] अमरसिंहीयपाठस्तु 'वस्तिर्नाभेरधो द्वयो ' इत्येव दृश्यते (१, पृ ४०८) [6] पिच्छयते । 'पिच्छ बाधे' । 'गुरोश्च ' इत्य [पिच्छा], वितण्डते । 'तडि आघाते' । 'गुरोश्च ' इत्य [वितण्डा], काक्मणति । 'अण शब्दे' । अण् । पृषोदरादि [काकिणी], चूर्णस्य करणम् । 'तत्करोति ' इति ण्यन्तात् 'अच इ ' । 'घृणि ' (उ ४ ५२) इति साधु [चूर्णि], शणस्य विकार । 'तस्य विकार ' इत्यण् । 'टिड्ढाणञ् ' इति ङीप् [शाणी], द्रुणति । 'इगुपध ' इति क । 'जाते ' इति ङीप् [द्रुणी], दरणम् । दीर्यते वा । 'शॄदॄभसोऽदि ' [दरत्], सननम् । 'षणु दाने' । 'ऊतियूति ' इति साधु [साति], कम्यते । बाहुलकात्यन् [कन्था], आस्यतेऽस्याम् । 'शव्दादयश्च' (उ ४ ९८) इति साधु [आसन्दी], नभ्यतेऽनया । 'इनजादिभ्य ' (वा ३ ३ १०८) [नाभि] इति भा दी (पृ ५२१)

(पा) पिच्छा—द्रुणी दरत् । पिच्छा नामाश्वपदव्याधि [1] । वितण्डा वाद, दारविशेषो[2] वा । काकिण्यनेकार्था । 'काकिणी पणतुर्यांशे मानदण्डे च काकिणी' इति विश्व (पृ ५३, श्लो ७९) । चूर्णिर्नाम गद्यभेद । ग्रन्थभेदेऽपि स्यात् । चूर्णिभण्यिमिति क्षीरस्वामी (पृ ३४६) । शाणी निकषपाषाण । 'ओरगल्लु '[3] । शाणोऽपि स्यात् । 'शाणी निकष, शाण इत्येके' इति क्षीरस्वामी (पृ ३४६) । द्रुणीशब्दोऽनेकार्थ । 'द्रुणी [4]कच्छपिकाया च जलद्रोण्यामुदाहृता' इति विश्व (पृ ४८, श्लो ७) । दरदिति देश । सातिर्नाम दुकूलम् । कन्था भिक्षुप्रावरणम् । कन्थटिकापि स्यात् । 'कन्थाकन्थटिके समे' इति वैजयन्ती (पृ १६६, श्लो १२८) । कन्थटिरपि स्यात् । छिन्न च सधत्ते दरिद्र इव कन्थटिम्' इति प्रयोगरत्नावलि । आसन्दी नामासनम् । नाभिर्गतार्थं (१, पृ ५१८, २, पृ ४१०) । राजसभा नामास्थानम् । अपिशब्देन मनुष्यसमेति मनुष्यसघात ॥ ९ ॥

[1] अश्वपादम् A1 [2] A1 omits [3] B3 omits [4] कमठिकाया A1

झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला ।
लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी ॥ १० ॥

इति स्त्रीलिङ्गविशेषप्रकरणम्

(वि) झल्लरी—चमसी मषी। एते शब्दा स्त्रीलिङ्गे वर्तन्ते। झल्लरी वाद्यविशेष । चर्चरी काचिद्देवी [नृत्तविशेष ][1] । पारी [2]कलशी । होरा लग्नम् । लट्वा भ्रमरक [3] । सिध्मला पामा । लाक्षा अलक्तक । लिक्षा यूका[4] । गण्डूषा प्रसिद्धा[5] । गृध्रसी ऊरुसधौ वातरुक् । चमसी पात्रविशेष । मषी[6] लेखनार्थ द्रवद्रव्यम् ।। १० ।।

इति स्त्रीलिङ्गविशेषप्रकरणम्

[1] हर्षक्रीडा इति स्वामी (पृ ३४६) [2] 'पादरज्ज्वा च हस्तिन' इति विश्व (पृ १२६, श्लो १७) [3] विहगविशेष, क्रीडासाधन वा [4] यूकागर्भ इति स्वामी (पृ ३४६) [5] आस्यचुलुकमित्यर्थ [6] मषीति विवृतौ पाठ

(विव.) झल्लरी—चमसी मसी । झल्लरी वाद्यविशेषः । चर्चरी गीतिभेदः। चर्चरी काचिद्देवीनृत्तविशेषः इत्यन्ये। तालविशेषः इत्यपरे। पारी जलाधारः । कर्कर्याख्यपात्रविशेषः इति सुभूतिचन्द्रः । तथा च नैषधकाव्ये—

'चुचुम्ब नोर्वीवलयोर्वशीं परं
पुरोऽधिपारि प्रतिबिम्बिता विटः' ।

इति (१६. ६६) । दोहनभाण्डमिति सुबोधिनी । तथा च 'प्रगृह्य पारीमुभयेन जानुनोः' इति माघकाव्ये प्रयोगः (शिशु. १२. ४०) । होरा अहोरात्रविकल्प. । [1]ससिध्मला सिध्मलासहिता च द्वे[2] इत्यर्थः । एवं च लट्वाशब्दात् पूर्वमेव सिध्मलाशब्दस्य निर्देशः फलति । तथा च लान्तादिक्रमस्य भङ्गो नाशङ्कनीयः । लट्वा बालक्रीडासाधनभूता भ्रमरकाख्या । 'बोङ्गरपेरु'। ग्रामचटको लट्वाख्य इति चन्द्रः। शिवयमेवेति सुबोधिनी। मनुष्यवर्गे 'किलासी सिध्मलः' (पृ. ३६६) इत्युक्तस्य वाच्यलिङ्गत्वाद् अत्र न तस्य ग्रहणम् । लाक्षा अलक्तकः । लिक्षा यूकाण्डम् । 'ईरुपेरु'। गण्डूषा जलादिना मुखपूरणम् । अत्राह सुभूतिचन्द्रः— गण्डूषशब्दः स्त्रियामाम्नातोऽपि कविसमयात् पुंसि प्रयुज्यते । तथा च माघकाव्ये—

'गण्डूषमुज्झितवता पयसः सरोषं
नागेन लब्धपरवारणमारुतेन ।

इति (शिशु. ५. ३६) । तथान्यत्रापि 'गण्डूषमेव मदनं.' इति । यथाहुः पूर्वाचार्याः —' देशभाषापद प्रयोक्तव्यम्, लिङ्गाध्याहारोऽपि' इति । "गण्डूषे मुखपूर्तो ना"

इति बोपालितेन पुलिङ्गत्वयानुशासनमपि कविसमयमूलमेव, यद्येवं न स्याद् गण्डूष-शब्दमाचार्यः स्त्रीपुंसप्रकरण एव ब्रूयात् इति । "गण्डूषजलम्" (कु. सं. ३. ३७) इत्यादौ तु मत्वर्थेऽच्प्रत्ययाश्रयणेन निर्वाहः कार्य' इति । अथ दन्त्योपधास्त्रयः । गृध्रसी ऊरुसंधिप्रभवो वातरोगविशेषः । चमसी सोमपात्रम् । श्रुतौ 'चमसो देवपानः' (तै. सं. २. ५. ६. ३) इत्यादयो बहवः पुलिङ्गप्रयोगाः । मसीप्रक्रमा-दयमपि दन्त्योपधः । श्रीतालपत्रादौ लिपिप्रयोजनमञ्जनरूपं द्रव्यं मसीति । मस्यति वर्णादिरूपेण परिणमतीति मसी । 'मसी परिणामे' । पचाद्यचि (३. १. १३४) गौरादिङीपि (४. १. ४१) रूपम् । अत्र प्रागुक्तानामपि शेफालिकादिशब्दा-नामिहापि पठनमेतद्दृष्टान्तबलादितरेषामपि लिङ्गविधानार्थमिति विज्ञेयम्[3] ॥ १० ॥

## इति स्त्रीलिङ्गविशेषप्रकरणम्

[1] ससिध्मला इति विवरणाभिमत पाठ      [2] लट्वेत्यर्थं Tv      [3] झर्झते । 'झर्झ भर्त्सोक्तयो' । बाहुलकादरन् । पृषोदरादि । गौरादि [झल्लरी], चर्च्यते । 'चर्च उक्तौ' । बाहुलकादरन् । गौरादि [चर्चरी], पारयति पार्यते वा पचाद्यच् । घञ् वा । गौरादि [पारी], होलति, हुल्यते वा । पचाद्यच् । घञ् वा [होरा], लटति । 'अशूप्रुषि-लटि      ' (उ १ १५१) इति क्वुन् [लट्वा], सिध्ममस्त्यस्या । 'सिध्मादिभ्यश्च' इति लच् [सिध्मला], लाप्यते 'लप शिल्पयोगे' चुरादि । बाहुलकात् स [लाक्षा], लक्ष्यते । घञ् । पृषोदरादित्वाद् अस्य इ [लिक्षा] गण्ड्यते । 'गण्डेश्च' (उ ४ ७८) इत्यूपन् [गण्डूषा], गृध्रमपि स्यति । 'आतोऽनुपसर्गे' इति क । गौरादिङीप् [गृध्रसी], चम्यते । 'अत्यविचमितसि      ' (उ ३ ११७) इत्यसच् । गौरादित्वाद् ङीप् [चमसी] इति भा दी (पृ ५२२)

(पा) झल्लरी—चमसी मसी । झल्लरी [1]अनेकार्थ । '[2]झल्लरी झाल्लरी च द्वे हुडुक्के बालचन्द्रे' इति विश्व (पृ १४३, श्लो २२४) । 'त्युडुकु वाद्यमु' ।

'जयन्ति मम सूक्तयो जलजसूतिसीमन्तिनी-
विलासहसितामृतस्रदिमनर्ममर्मस्पृश[3] ।
विशकटनटन्महानटजटाटवीवाटिका[4]-
झरीलहरिझल्लरीगरिमगर्वसर्वंकषा[5] ॥

इति साहितीकल्पवल्ली । चर्चरी करतालिका । पारी [6]क्षीरदोहनपात्रम् । होरा अहोरात्र । लट्वा चटका 'आडुपिचुक' । लट्वा चटकेति उणादिवृत्ति । लट्वेत्येव पाठ । लड्वेति पाठो दुरुक्तोऽपि कैश्चिदङ्गीकृत । 'वोगरमु' । लट्वा भ्रमरक इति क्षीरस्वामी (पृ ३४६) । सिध्मला नाम मलिनचित्रम् । लाक्षा गतार्थ (१, पृ ४४१) । गण्डूषा गण्डपूर्ति । स्त्रीलिङ्गमध्यपाठ आवन्तत्वमात्र-प्रख्यापनार्थ ।

> 'गण्डूषगर्जभुजजागरहारकील-
> ज्वालाच्छटारभसवर्तकगर्तश्रृङ्गा ।
> व्रीडोदयश्च वरटश्च फणो मृणाल[7]-
> श्चोत्कण्ठबाणकरकाश्च समामया च (?) ।।

इति रभसकोश । गृध्रसीति वातरोग । चमसी चणकपिष्टम् । 'सोमिपिण्डि' । मषी मसीति द्वे [8]निर्वाणाङ्गार ।। १० ।।

इति स्त्रीलिङ्गशेष

[1] वाद्यभेद $B_1$ [2] 'सल्लरी सिल्लरा च द्वे हुडुक्के चारचक्रके' इति मु ग्र
[3] सर्वं for नर्म $B_3$, $C_1$ [4] अटवीजाह्नवी $B_3$ [5] °गरिमवर्गक्लवपा $A_1$
[6] वादनदण्ड $A_1$ [7] मराल° $B_3$ [8] निष्प्रभालातम $A_1$

अथ [1]पुलिङ्गविशेषविधिप्रकरणम्--

**पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः ।**
**स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः ।। ११ ।।**

(वि) पुस्त्वे--सुरासुरा । सुरपर्याया अमरा [2]निर्जरा देवा इत्यादय (१, पृ ७) । सुरभेदपर्याया ब्रह्मशभुविष्णुसूर्यचन्द्रा[3] इत्यादय (१, पृ १६, २२, १५, ६८, ५६) । सुरानुचरपर्याया माठरपिङ्गलदण्डादय (१, पृ ७०) । असुर-पर्याया असुरा दैत्यदैतेया[4] इत्यादय (१, पृ ११) । असुरविशेषपर्याया हिरण्य-[5]कशिपुबाणविरोचनादय । असुरानुचरपर्याया प्रहस्तचण्डमुण्डादय । एते पुस्त्वे पुलिङ्गे वर्तन्ते । अत्र तत्पर्यायपदेष्वेवोदाहरणानि द्रष्टव्यानि ।। स्वर्गयाग--

शरारय । नाकयज्ञशैलवारिदसमुद्रवृक्षकालखड्गबाणशत्रूणा पर्याया यथासभव तद्विशेषपर्यायाश्च पुसि भवन्ति । अत्रादाहरणानि तत्तत्पर्याये द्रष्टव्यानि ॥ ११ ॥

[1] पुल्लिङ्गशेष° $J_2$ $h_3$ [2] $J_2$ omits निजरा दया [3] °शत्रचन्द्रसूयादय $J_2$ $h_4$ [4] °दैतेयादय $J_?$ $h_4$ [5] प्रह्लाद for बाण $h_5$

(विव) अथ पुलिङ्गविशेषा । पुस्त्वे—सुरासुरा । पुस्त्व इत्यधिकारोऽय नपुसकविधिपर्यन्त । ततोऽर्वागनुक्रान्ता सर्वे पुलिङ्गा इत्यर्थ । सुराश्च असुराश्च इति शब्दव्यक्तिगतबहुत्वाभिप्रायेण बहुवचनम् । कथभूता ? सपर्याया । अमरनिर्जरादिभि दैत्यदैतेयादिभिश्च पर्यायै सहिता । पुन कथभूता ? सभेदानुचरा । अत्र भेदानुचरशब्दाभ्या तद्वाचका शब्दा लक्ष्यन्ते । ततश्च सुरविशेषवाचकै इन्द्राग्नियमवरुणादिशब्दै असुरविशेषवाचकै हिरण्यकशिपुरावणकुम्भकर्णादिशब्दै सुरानुचरवचनै माठरपिङ्गलादिशब्दै, असुरानुचरवचनै प्रहस्तधूम्राक्षादिशब्दैश्च सहिता इत्यर्थ ।

अत्र दैवतशब्दस्य स्वर्गवर्गोक्ततरूपभेदलक्षणविशेषेण केवलपुस्त्वाभावात् नपुसकत्वम् । इह केषाचिद् देवादिशब्दाना प्राप्त पुस्त्व[1], ' द्विचतु षट्पदोरगा जातिभेदा ' (श्लो ३७) इत्यत्रैव वर्गे वक्ष्यमाणेन स्त्रीपुसविधिना विरुध्यते । तथापि स्त्रीपुसविधे परत्वात् तस्यैव प्राबल्यम् । दिव्योपपादुकशब्दस्य (२, पृ ७१) देवतावचनत्वेऽपि क्रियावचनत्वाद्, ' गुणद्रव्यक्रियायोगोपाधिभि परगामिन ' (श्लो ४४) इति वक्ष्यमाणविधिबलात् त्रिलिङ्गत्वम् । अत एव विशेष्यनिघ्नवर्ग एव पठित इत्यादिरूपेण सर्वत्र बाधकपर्यालोचनया सामान्यविधिविषया उन्नेया ॥

स्वर्गयाग—शरारय । अत्र सभेदा सपर्याया इति पदद्वय पूर्ववाक्यादनुपज्यते । ततश्च एते स्वर्गादय शब्दा सुरपर्याया यथासभव स्वप्रभेदसहिता पुस्त्वे भवन्तीत्यधिकृतेनान्वय । स्वर्गादिपर्यायास्तदनुशासनप्रस्तावे प्रव्यक्ता एव दर्शिता । स्वर्गविशेषा —नाकपृष्ठमहेन्द्रादय । यागविशेषा —अग्निष्टोमोऽत्यग्निष्टोमोक्थ्यादय । अद्रे पर्वतस्य विशेषा —मेरुहिमवदादय । मेघविशेषा —पुष्करावर्तकादय । समुद्रविशेषा —क्षीरोदादय । द्रो वृक्षस्य विशेषा —अश्वत्थचूतपनसादय । कालविशेषा —क्षणलवमाससवत्सरादय । असे खड्गस्य भेदा —नन्दकचन्द्रहासादय । शरविशेषा —क्षुरप्रनाराचादय । अरिविशेषा —यातव्यपार्ष्णिग्राहोदासीनादय इत्याद्युदाहर्तव्यम् । त्रिविष्टपराजसूयगन्धमादना-

भ्रहरिचन्दनप्रतिपदादिशब्दाना विशेषबाधेन लिङ्गान्तरवृत्तिरित्यपि न विस्मर्तव्य [2] ।। ११ ।।

[1] Tv adds यद्यपि [2] सुरन्ति । 'पुर प्रसवैश्वर्ययो '। 'इगुपध ' इति क [सुरा], अस्यन्ति क्षिपन्ति देवान्, 'असेरन्' (उ १ ४२) [असुरा], सुष्ठु अर्य्यते। कमणि घञ् [स्वर्ग], इज्यते। अनेन वा। अत्र वा। यजेर्यज्ञ (३ ३ १६) [याग], अत्ति, अद्यते वा। 'अदिशदिभूशुभिभ्य क्रिन' (उ ४ ६५) [अद्रि], मेहति। अच्। न्यङ्क्वादित्वात् कुत्वम् (७ ३ ५३) [मेघ], आपो धीयन्तेऽत्र। 'कर्मण्यधिकरणे च' (३ ३ ९३) इति धाञ कि [अब्धि], द्रवत्यूर्ध्वम्। 'द्रु गतौ'। मितद्र्वादित्वात् (वा ३ २ १८०) डु [द्रु], कलयत्यायु। पचाद्यजन्तात् प्रज्ञाद्यण् (५ ४ ३८) [काल], अस्यते। 'सर्वधातुभ्य इन्' (उ ४ ११८) [असि], शृणाति। पचाद्यच् [शर], इर्यति विरोधम्। 'ऋ गतौ'। 'अच इ' (उ ४ ११६) [अरि] इति तत्र तत्र भा दी

(पा) पुस्त्वे—सुरासुरा । पुस्त्वे इति आपतद्ग्रहशब्दम् (श्लो २१) अधिकार । सभेदानुचरा सुरासुरपर्याया पुलिङ्गा [1] । सुरपर्यायस्य—'अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा ' (१, पृ ७)। सुरभेदपर्यायस्य—'आदित्यविश्ववसवस्तुषिताभास्वरानिला ' (१, पृ ६ )। सुरानुचरपर्यायस्य—'स्यात् किंनर किंपुरपस्तुरङ्गवदनो मयु ' (१, पृ ४६)। असुरपर्यायस्य—'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा ' (१, पृ ११)। असुरभेदपर्यायस्य—'तमस्तु राहु स्वर्भानु सैंहिकेयो विधुतुद ' (१, पृ ६७) ।। स्वर्गयाग—शरारय । सभेदाना स्वर्गादीना पर्याया [2] पुलिङ्गा ।। ११ ।।

[1] B3 adds पुस्त्वे [2] A1 adds पर्यायास्तु तत्र तत्र द्रष्टव्या

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तना. ।**
**अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसख्यकाः ।। १२ ।।**

(वि) करगण्ड—नखस्तना । पाणिकपोलाधरबाहुरदनगलकचनखकुचाना पर्याया यथासभव तद्विशेषपर्यायाश्च पुसि भवन्ति। अत्रोदाहरणानि तत्तत्पर्यायेषु[1] द्रष्टव्यानि ।। अह्नाहान्ता । अह्न अह इत्येवमन्ता शब्दा [2] पुसि वर्तन्ते। अह्नान्ता यथा—प्राह्ण, पराह्ण, पूर्वाह्ण, मध्याह्न [3] इत्यादि। अहान्ता यथा—द्व्यह, त्र्यह, पञ्चाह इत्यादि ।। क्ष्वेडभेदा । क्ष्वेडभेदा

[4]विपवाचका शब्दा पुसि [5]वर्तन्ते । अत्रोदाहरणानि—सौराष्ट्रिक । शौक्लिकेय । ब्रह्मपुत्र । प्रदीपन [6] इत्यादि ।। रात्रान्ता प्रागसख्यका । सख्याव्यतिरिक्त-शब्दपूर्वा [7]रात्र इत्येवमन्ता शब्दा पुसि[8] भवन्ति । अत्रोदाहरणानि । अर्धरात्र । पूर्वरात्र [9] । अहोरात्र इत्यादि ।। १२ ।।

[1] तत्पर्याय K3, K4     [2] K5, K6 omit     [3] K4 adds अपराह्ण
[4] विपविशेप° K3     [5] भवन्ति K5     [6] K2, K3, K4 omit     [7] रात्रान्ता K5
[8] पुलिङ्ग J2     [9] K3, K4 add अपररात्र

(विव ) करगण्ड—नखस्तना । करादीना नवानामर्था प्रसिद्धा एव । तथापि लिपिसदेहभ्रान्त्यादिमूलपाठान्तरसदेहनिवृत्त्यर्थं तत्पर्यायपदानि लिख्यन्ते । करो हस्त । गण्ड कपोल । ओष्ठो दन्तच्छद । दोर्बाहु । दन्तो रद । कण्ठो गल । केश शिरोरुह । नख कररुह । स्तन कुच इति । शेपे—

'कुसूलनदपुष्याशुपविकुन्तपरश्वधा ।
धान्यध्वनिरथोऽह्यात्मगुल्ममानाब्जकर्दमा ।।'

इति । एते कुसूलादय पोडशपर्याया यथासभव विशेपरहिताश्च पुलिङ्गा । कुसूल कोष्ठ । नदविशेप शोणादि । पुष्य तिष्य । अशु किरण । पवि शतकोटि । कुन्त प्रास । परश्वध परशु । अत्र धान्यशब्देन न स्वरूपग्रहणम् । कि तु तद्विशेषा व्रीहियवगोधूमादय एव गृह्यन्ते । ध्वनि शब्द । रथ शताङ्ग । तद्विशेप पुष्यरथ । अहि सर्प । तद्विशेपा शेपवासुकिप्रभृतय । 'द्विचतु पट्पदोरगा ' (श्लो ३७) इति वक्ष्यमाणस्य स्त्रीपुसविधे परत्वात् परवल्लिङ्गम् । आत्मा जीव । गुल्म स्तम्ब । अत्र मानशब्देन तद्विशेपा कुडुवप्रस्थाढकद्रोणादय एव गृह्यन्ते । न स्वरूपम् । अब्ज शङ्ख । कर्दमो जम्बाल । 'विशेपैर्यद्यबाधित ' (श्लो २) इत्युक्तत्वाद् अशनिकुलिशादीना लिङ्गान्तरेऽपि वृत्तिरित्यनुस्मर्तव्य ।।

अह्नाहान्ता । समासे सति 'राजाह सखिभ्यष्टच्' (५ ४ ९१) इति टच्प्रत्यये अह इत्येवरूपतया श्रूयमाण शब्दो येपा समासशब्दाना ते अहान्ता । पूर्ववदेव समासान्तप्रत्यये 'अह्नोऽह्न एतेभ्य ' (५ ४ ८८) इत्यहन्शब्दस्य अह्नादेशे सति अह्न इत्येव श्रूयमाण शब्दो येषा समासान्ताना तेऽह्नान्ता । ते च द्विविधा पुस्येव भवन्ति इत्यधिकृतेन सबन्ध । 'रात्राह्नाहा पुसि' (२ ४ २९)

अहरिचन्दनप्रतिपदादिशब्दाना विशेषबाधेन लिङ्गान्तरवृत्तिरित्यपि न विस्मर्तव्यः[2] ।। ११ ।।

[1] Tv adds यद्यपि [2] सुरन्ति । 'पुर प्रसवैश्वर्ययो '। 'इगुपध ' इति क [सुरा], अस्यन्ति क्षिपन्ति देवान् 'असेरन्' (उ १ ४२) [असुरा], सुष्ठु अर्ज्यते । कर्मणि घञ् [स्वर्ग], इज्यते । अनेन वा । अत्र वा । यजेर्घञ् (३ ३ १९) [याग], अत्ति, अद्यते वा । 'अदिशदिभूशुभिभ्य क्रिन्' (उ ४ ६५) [अद्रि], मेहति । अच् । न्यङ्क्वादित्वात् कुत्वम् (७ ३ ५३) [मेघ], आपो धीयन्तेऽत्र । 'कर्मण्यधिकरणे च' (३ ३ ९३) इति धाञ कि [अब्धि], द्रवत्यूर्ध्वम् । 'द्रु गतौ'। मितद्रवादित्वात् (वा ३ २ १८०) डु [द्रु], कलयत्यायु । पचाद्यजन्तात् प्रज्ञाद्यण् (५ ४ ३८) [काल], अस्यते । 'सर्वधातुभ्य इन्' (उ ४ ११८) [असि], शृणाति । पचाद्यच् [शर], इयर्ति विरोधम् । 'ऋ गतौ'। 'अच इ' (उ ४ ११९) [अरि] इति तत्र तत्र भा दी

(पा) पुंस्त्वे—सुरासुरा । पुंस्त्वे इति आपतद्ग्रहशब्दम् (श्लो २१) अधिकार । सभेदानुचरा सुरासुरपर्याया पुलिङ्गा[1] । सुरपर्यायस्य—' अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा ' (१, पृ ७) । सुरभेदपर्यायस्य—' आदित्यविश्ववसवस्तुषिताभास्वरानिला ' (१, पृ ९ ) । सुरानुचरपर्यायस्य—' स्यात् किंनर किंपुरुषस्तुरङ्गवदनो मयु ' (१, पृ ४९) । असुरपर्यायस्य—' असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा ' (१, पृ ११) । असुरभेदपर्यायस्य—' तमस्तु राहु स्वर्भानु सैंहिकेयो विधुंतुद ' (१, पृ ६७) ।। स्वर्गयाग—शरारय । सभेदाना स्वर्गादीना पर्याया[2] पुलिङ्गा ।। ११ ।।

[1] B3 adds पुंस्त्वे [2] A1 adds पर्यायास्तु तत्र तत्र द्रष्टव्या

**करगण्डौष्ठदोर्दन्तकण्ठकेशनखस्तनाः ।**
**अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसंख्यकाः ।। १२ ।।**

(वि) करगण्ड—नखस्तना । पाणिकपोलाधरबाहुरदनगलकचनखकुचाना पर्याया यथासभव तद्विशेषपर्यायाश्च पुंसि भवन्ति । अत्रोदाहरणानि तत्तत्पर्यायेषु[1] द्रष्टव्यानि ।। अह्नाहान्ता । अह्न अह इत्येवमन्ता शब्दा[2] पुंसि वर्तन्ते । अह्नान्ता यथा—प्राह्न, पराह्न, पूर्वाह्न, मध्याह्न[3] इत्यादि । अहान्ता यथा—द्व्यह, त्र्यह, पञ्चाह इत्यादि ।। क्ष्वेडभेदा । क्ष्वेडभेदा

[4]विषवाचकाः शब्दाः पुंसि [5]वर्तन्ते । अत्रोदाहरणानि—सौराष्ट्रिकः । शौक्लिकेयः । ब्रह्मपुत्रः । प्रदीपनः[6] इत्यादि ॥ रात्रान्ताः प्रागसंख्यकाः । संख्याव्यतिरिक्त-शब्दपूर्वा [7]रात्र इत्येवमन्ताः शब्दाः पुंसि[8] भवन्ति । अत्रोदाहरणानि । अर्धरात्रः । पूर्वरात्र.[9] । अहोरात्रः इत्यादि ॥ १२ ॥

[1] तत्पर्याये K3, K4. [2] K5, K6 omit. [3] K4 adds अपराह्ण..
[4] विषविशेष° K3. [5] भवन्ति K5. [6] K2, K3, K4 *omit* [7] रात्रान्ता. K5.
[8] पुलिङ्गे J2. [9] K3, K4 add अपररात्र .

(विव.) करगण्ड—नखस्तनाः । करादीनां नवानामर्थाः प्रसिद्धा एव । तथापि लिपिसंदेहभ्रान्त्यादिमूलपाठान्तरसंदेहनिवृत्त्यर्थं तत्पर्यायपदानि लिख्यन्ते । करो हस्तः । गण्डः कपोलः । ओष्ठो दन्तच्छदः । दोर्बाहुः । दन्तो रदः । कण्ठो गलः । केशः शिरोरुहः । नखः कररुहः । स्तनः कुच इति । शेषे—

'कुसूलनदपुष्यांशुपविकुन्तपरश्वधाः ।
धान्यध्वनिरथोऽह्यात्मगुल्ममानाब्जकर्दमाः ॥'

इति । एते कुसूलादयः षोडशपर्यायाः यथासंभवं विशेषरहिताश्च पुंलिङ्गाः । कुसूलः कोष्ठः । नदविशेषः शोणादिः । पुष्यः तिष्यः । अंशुः किरणः । पविः शतकोटिः । कुन्तः प्रासः । परश्वधः परशुः । अत्र धान्यशब्देन न स्वरूपग्रहणम् । किं तु तद्विशेषा व्रीहियवगोधूमादय एव गृह्यन्ते । ध्वनिः शब्दः । रथः शताङ्गः । तद्विशेषः पुष्परथः । अहिः सर्पः । तद्विशेषाः शेषवासुकिप्रभृतयः । 'द्विचतुःषट्पदोरगाः' (श्लो. ३७) इति वक्ष्यमाणस्य स्त्रीपुंसविधेः परत्वात् परवल्लिङ्गम् । आत्मा जीवः । गुल्मः स्तम्बः । अत्र मानशब्देन तद्विशेषाः कुडुवप्रस्थाढकद्रोणादय एव गृह्यन्ते । न स्वरूपम् । अब्जः शङ्खः । कर्दमो जम्बालः । 'विशेषैर्यद्यबाधितः' (श्लो. २) इत्युक्तत्वाद् अशनिकुलिशादीनां लिङ्गान्तरेऽपि वृत्तिरित्यनुस्मर्तव्यः ॥

अह्नाह्नान्ताः । समासे सति 'राजाहःसखिभ्यष्टच्' (५. ४. ९१) इति टच्प्रत्यये अह इत्येवंरूपतया श्रूयमाणः शब्दो येषां समासशब्दानां ते अहान्ताः । पूर्ववदेव समासान्तप्रत्यये 'अह्नोऽह्न एतेभ्यः' (५. ४. ८८) इत्यहन्शब्दस्य अह्नादेशे सति अह्न इत्येवं श्रूयमाणः शब्दो येषां समासान्तानां तेऽह्नान्ताः । ते च द्विविधाः पुंस्येव भवन्ति इत्यधिकृतेन संबन्धः । 'रात्राह्नाहाः पुंसि' (२. ४. २९)

इति सूत्रमूलमेतत् । अह्नान्ता यथा—सर्वाह्णः । अह्नः पूर्वो भागः पूर्वाह्णः । मध्याह्नः । अपराह्ण इत्यादि । लिङ्गानुशासने 'द्रोणापराह्णतोरण . . .' इत्यादिना अपराह्णशब्दः अर्धर्चादौ पठित इति सुभूतिचन्द्रः । अहान्ता यथा—द्वयोरह्नोः समाहारो द्व्यह· । त्रयाणामह्नां समाहारः त्र्यहः । अत्र 'न संख्यादेः समाहारे' (५. ४. ८९) इत्यह्नादेशप्रतिषेधः । तथा वर्तमानमहः वर्तमानाहः । गताहः इत्यादि । अत्र अहान्ता इत्यधिकृतसमासान्तग्रहणेन बहुव्रीहिसमासे समासान्ताभावात् तदन्तस्य विशेष्यनिघ्नत्वेन नियतपुंलिङ्गत्वं मा भूत् । अहान्तस्य तु 'पुण्यसुदिनाभ्या त्वहः परः' (श्लो. २९) इति क्वचिन्नपुसकत्वं वक्ष्यते । द्वयोरह्नोर्भवः द्व्यहः उत्सवः । द्व्यहा पूजा । इत्यादौ 'तद्धितार्थे द्विगुः' (श्लो. ४३) इति परोपगत्वं वक्ष्यते ॥

क्ष्वेडभेदाः । सौराष्ट्रिकवत्सनाभादयः षड् विषविशेषाः पुंलिङ्गाः । काकोलकालकूटादीनां विशेषविधानात् पुंनपुंसकलिङ्गत्वं प्रागुक्तम् (१, पृ. १५२) ॥ रात्रान्ताः प्रागसंख्यकाः । 'सख्याव्ययादेः' (५. ४. ८६) इति वर्तमाने 'अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः' (५. ४. ८७) इत्यचि रात्रशब्दः, तदन्ताः संख्यावाचकशब्दव्यतिरिक्तपूर्वपदाः पुंसि भवन्ति । यथा—अहश्च रात्रिश्च समाहृते अहोरात्रः । 'चार्थे द्वन्द्वः' (२. २. २९) इति समासे सति समाहारे नपुंसकस्यापवादः । असमाहारे तु पुंस्त्वविधेर्वक्ष्यमाणवाच्यलिङ्गतापवादो वेदितव्यः । 'अहोरात्रे वा अकामयेताम्' इत्यादौ वेदे लिङ्गव्यत्ययश्छान्दसः । सर्वा रात्रिरिति कर्मधारये सर्वरात्रः । पूर्वो भागो रात्रेः इत्येकदेशिसमासे पूर्वरात्रः । एवमपररात्रः, पश्चिमरात्रः, संख्याता रात्रिः संख्यातरात्रः । अतिक्रान्तो रात्रिमतिरात्रः सोमसस्थाविशेषः । प्रागसख्यकाः इति किम् ? पञ्चरात्रम् । गणरात्रम् । अत्र 'त्रिरात्रमाहुराशौचम्' (मनु. ५. ८०) इति जयादित्येन[1] 'रात्राह्नाहाः पुसि' (२. ४. २९) इति सूत्रे उदाहृतम्[2] ॥ १२ ॥

[1] काशिकाया त्रिरात्र इत्येव दृश्यते (१, पृ १३३) [2] गण्डति । 'गडि वदनैकदेशे' । पचाद्यच् [गण्ड ], उष्यते उष्णाहारेण । 'उष दाहे' 'उषिकुषि .' (उ २ ४) इति थन् [ओष्ठ ], दाम्यत्यनेन । 'दमेर्डोस्' (उ २ ६६) [दो ], दाम्यति । 'दमु उपशमे' । अन्तर्भावितण्यर्थाद् बाहुलकात् तन् [दन्त ], कणति । 'कण शब्दे' । 'कणेष्ठ' (उ १ १०३) [कण्ठ ], क्लिश्यते । 'क्लिशेरन् लो लोपश्च' (उ ५ ३३) [केश ], न खमस्य । 'न भ्राट् ' (६ ३ ७५) इति साधु [नख ], स्तनति कथयति यौवनोदयम् । पचाद्यच् [स्तन ], क्ष्वेडते मोहयति । 'पचाद्यच्' । [क्ष्वेड ] इति तत्र तत्र भा दी

(पा.) करगण्ड—नखस्तना. । करादीना पर्याया· पुलिङ्गा· ।। अह्नाहान्ता.। अह्नान्ता[1] अहान्ताश्च शब्दाः पुलिङ्गा. । पूर्वमह्नः पूर्वाह्ण· । अपराह्णः द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः ।। क्ष्वेडभेदाः । विषभेदाः पुलिङ्गाः । मेषशृङ्गः ।वत्सनाभः । पुण्डरीक. । कुण्ठः । ब्रह्मघोषः[2] ।। रात्रान्ताः प्रागसङ्ख्यकाः । प्रागसंख्यकाः रात्रान्ता. शब्दा. पुलिङ्गा. । पूर्वरात्रः । सर्वरात्रः । मध्यरात्रः । प्रागसंख्यका इति [3]बाधितविषयप्रदर्शनार्थम् ।। १२ ।।

[1] अह्नाहान्ता A1. [2] विषविशेषा B3 [3] बाधितविषय प्रदर्शित A1

**श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः ।**
**कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः ।। १३ ।।**

(वि ) श्रीवेष्टाद्याश्च निर्यासा । श्रीवेष्टसर्जरसकर्पूरयावनादयो निर्यासा [1]पुलिङ्गे वर्तन्ते ।। असन्नन्ता अबाधिता· । असन्ता अन्नन्ताश्च शब्दा अबाधिता विशेषविधिनाबाधिता [2] पुंसि भवन्ति । असन्ता यथा—उशना । अनेहा इत्यादय । अन्नन्ता यथा—सुत्रामा, मातरिश्वा इत्येवमादय·[3] । कशेरु—तुरुविरामका । रुविरामा शब्दा कशेरु, दारु, श्मश्रु, अश्रु वर्जयित्वा, तुविरामा मस्तु, जतु, वस्त्वादीन् शब्दान् वर्जयित्वा, सर्वे पुलिङ्गे वर्तन्ते । तुविरामा यथा—धातु , ओतु , सेतु [4] इत्यादि । रुविरामा यथा—चरु , [5]मरु , त्सरु इत्यादि ।। १३ ।।

[1] पुंसि K5 [2] °विधानाबाधिता K2, K4 [3] इत्यादय K2, K5. [4] J2 adds हेतु . [5] मेरु J2

(विव.) श्रीवेष्टाद्याश्च निर्यासाः । निर्यासो वृक्षद्रवः । श्रीवेष्टः प्रागुक्तः (१, पृ. ४४३) । तदादयो निर्यासवाचकाः शब्दाः पुंलिङ्गाः । श्रीवेष्टः, सर्जरसः, कर्पूरः इत्यादयः ।। असन्नन्ता अबाधिताः । अस् इत्येवमन्ताः, अन् इत्येवमन्ताश्चेति द्विविधाः अबाधिताः 'द्व्यच्कमसिसुसन्नन्तम्' (श्लो. २४) इति नपुंसकविधानादबाधिताः तद्विधेरविषयाः, त्र्यच्काः चतुरच्काश्चेति यावत्, पुलिङ्गा भवन्ति । अङ्गिराः, पुरोधाः, पुरूरवाः इत्याद्या असन्ताः । अथर्वा, सुत्रामा, मातरिश्वा इत्याद्या अन्नन्ता इति ।।

कशेरु—तुरुविरामकाः । विरामोऽन्त्याक्षरम् । धातुहेतुसेतुप्रभृतयस्तु-विरामाः। कारुमेरुमरुत्सरुप्रभृतयो रुविरामाश्च शब्दाः पुमांसः। अत्रापवादमाह—कशेर्वादीनि हित्वा वर्जयित्वा । कशेरु जलकन्द. । जतु लाक्षारसः । वस्तु पदार्थः । एतच्च मस्तुवास्तु-अश्रुश्मश्रुदारुकुस्तुम्बुरु-प्रभृतीनामुपलक्षणम् । तुरुविरामका इति किम्? त्रपुजानुताल्वादीनि नपुंसकनि[1] ।। १३ ।।

[1] श्रीसञ्ज्ञक श्रियो वा वेष्टा निर्यास [श्रीवेष्ट], 'कश शब्दे'। वाहुलकादेरु [कशेरु], जायते। 'फलिपाटि ' (उ १ १८) इत्यु तोऽन्तादेश [जतु], वसति। 'वसेस्तुन्' (उ १ ७६) [वस्तु] इति तत्र तत्र भा दी

(पा) श्रीवेष्टाद्याश्च निर्यासा । श्रीवेष्टादिनिर्यासा पुलिङ्गा । श्रीवेष्ट, सिल्वाक, गुग्गुलु । श्रीवेष्टादिग्रहणादत्र न भवति—पिच्छा, हिङ्गु[1] ।। असन्नन्ता अबाधिता । अबाधिता असन्नन्ता पुलिङ्गा ।

'नभो व्योम्नि नभा माघे श्रावणे च पतद्ग्रहे ।
अध्वा वर्त्मनि सस्थाने ।।'

इत्याद्यनुशासनेन न बाधितत्वम् । 'द्व्यच्कमसिसुसन्नन्तम्' (श्लो २४) इत्यनेन[2] बाध ।। कशेरु—तुरुविरामका । कशेरुजतुवस्त्वादीन् शब्दान् हित्वा तुरुविरामका शब्दा पुलिङ्गा । धातु, सेतु, हेतु, केतु, जीवातु, मन्तु, तन्तु, जन्तु, मरु, डमरु, चरु, खरु । 'खरुर्दन्ते हरे दर्पे हये श्वेते तु वाच्यवत्' । ऊरु, किंशारु । कशेर्वादिनियमाद्[3] अत्रापि स्यात् दारु, अगरु ।। १३ ।।

[1] हिङ्गु $A_1$ [2] $A_1$ omits अनेन [3] °पर्युदासात् $B_3$, $C_1$

**कषणभमरोपान्ता यद्यदन्ता अमी अथ ।**
**पथनयसटोपान्ता गोत्राख्याश्चरणाह्वयाः ।। १४ ।।**

(वि) कषणभम—सटोपान्ता । अत्र[1] अथशब्द सदाशब्दार्थ । ककार-षकारणकारभकारमकाररेफा उपधा येषा शब्दानाम् । तथा पकारथकारनकार-यकारसकारटकारा उपधा येषा शब्दाना ते शब्दा यद्यकारान्ता[2] भवेयुर्तर्हि पुलिङ्गे

वर्तन्ते। अत्रोदाहरणानि द्रष्टव्यानि[3] ॥ गोत्राख्याः। गोत्रं काश्यपादि, तस्य आख्या गोत्राख्याः। ताः पुलिङ्गे वर्तन्ते। अत्रोदाहरणानि—गार्ग्यः, [4]वासिष्ठः, भारद्वाजः[5] इत्यादि ॥ चरणाह्वयाः। अत्र चरणशब्दो गौणः शाखानिमित्तकः [6]पुरुषे वर्तते। चरणविशेषाद्यत्राह्वयाः, कठकलापवह्वृच इत्येवमादयः शब्दाः पुलिङ्गे वर्तन्ते ॥ १४ ॥

[1] K5 omits the sentence　[2] यद्यदन्ताः K3　[3] J2 adds लोक°, माष°, गुण, होम इत्यादीनि　[4] वसिष्ठ J2　[5] भरद्वाजः J2　[6] पुलिङ्गे K5.

(विव.) कषणभम—सटोपान्ताः। अत्र उपान्तशब्दः 'अलोऽन्त्यात् पूर्व उपधा' (१. १. ६५) इति वैयाकरणप्रसिद्धोपधावचनः। अमी अथ[1] इति केचित् पठन्ति। अत्राप्यथशब्दः तथाशब्दार्थः। ततश्च नाकः, सायकः, श्लोकः, लोकः, कलङ्क इत्याद्याः ककारोपधाः। पक्षः, कक्षः, शोषः, रोष इत्याद्याः षकारोपधाः। कोणः, बाणः, पणः, गुणः[2] इत्याद्याः णकारोपधाः। कुम्भः, स्तम्भः, दम्भः, गर्भ इत्याद्याः भकारोपधाः। उत्सः, [3]समासः, दास इत्यादयः सकारोपधाः। वटः,[4] विटः, रटः, चाट इत्यादयो टकारोपधाश्च इत्येवं द्वादशवर्णोपधाः शब्दा यदि अदन्ताः अकारान्ता भवन्ति तदा विशेषबाधरहिताः पुंलिङ्गा भवन्तीत्यर्थः। कषादिग्रहणं किम्? कुण्डलम्, बलम्, कूलम्,[5] उपदा, उपधा इत्यादौ मा भूत्। अदन्ता इति किम्? कोका, भूषा, पारणा, शोभा,[6] नारी, वामा इत्यादौ मा भूत् ॥

गोत्राख्याः। *याभिर्गोत्रस्य वंशस्य व्यपदेशः ता गोत्राख्याः पुंसि भवन्ति।* *यथा—गार्ग्यः, वात्स्यः, भारद्वाजः, वासिष्ठः इत्यादिगोत्रान्ताः*[7]। अपत्यप्रत्ययान्ता इति तु व्याख्यानमसङ्गतम्। 'स्त्रीपुंसयोरपत्यान्ताः' (श्लो. ३७) इत्यनेन पौनरुक्त्यविरोधयोरापत्तेः ॥ चरणाह्वयाः। यथा स्वमनुष्ठातारः चरन्त्येतेष्विति चरणशब्दो यद्यपि मुख्यया वृत्त्या काठककालापकादिशाखाविशेषेषु वर्तते, तथापि अत्र तदध्येतृपुरुषाः चरणशब्देन पुंलिङ्गतया विवक्षिताः। अत एव चरणशब्दः शाखानिमित्तकः पुरुषेषु गौण्या वृत्त्या वर्तत इति काशिकादयः। यथा—कठः, कलापः, कौथुमिः इति ॥ १४ ॥

[1] 'अमी तथा' इति विवरणाभिमत पाठ　[2] गण Tv　[3] Tj1, Tj2 add रसः.　[4] घट Tv　[5] कुलम् Tv　[6] शोभना Tv　[7] °गोत्राख्या B5, B6

(पा) कपणभम—अदन्ता अमी। अदन्ता काद्युपान्ता पुलिङ्गा। अलक, पुलक, चलुक, कलडक, करडक, पेटक, पाटक सेनानिवेश,[1] कुशिक तैलशेप मिसिक, सस्यक हरिद्रत्नम्, मलूक कृमि, फल्लूक [2]बालपक्षी, जाहक सकुञ्चितगात्रमार्जार, गोकुणिक पडकपतितगौ[3], रात्रक लञ्जामीढ, भार्याटिक भार्याप्रधान, सूचक बुक्कचछुनक,[4] खट्टिक महिषीक्षीरम्, शार्कक क्षीरफेनम्[5], तर्तरिक काकनीडम्[6], पर्परिक चपेट, कर्करिक जलपात्रम्, प्रचलाक मयूरवर्हम्[7], खजक दधिमन्थनदण्ड इति। क्वचित्स्थले न भवति। शलाका, सलाका, पताका, खजाका, मर्तेलिका, रक्तपिपीलिका[8], विका चिन्ता, शूका जुगुप्सा, कुटिलिका, रिक्कणिका, गुलिका मुक्तामणि, चिल्लिका, तुम्बिका चक्रमध्यरन्ध्रम्, अम्बक नेत्रम्॥ पकारोपान्तस्य यथा—वेप, कोप, माप, ऊप, प्रत्यूप, वातरूप इन्द्रधनु, लम्बूप सप्तसूत्रप्रोतमुक्तादाम 'येडुपेट्टिनमुत्योलदण्ड', अक्ष, पक्ष, कक्ष, कटाक्ष[9]॥

णकारोपान्तस्य यथा—क्षण, पङ्कण, गुण, पण, कार्षापण, टिप्पण टीका, मत्कुण श्मश्रुविहीनपुरुप 'पेडुमूतिवाडु', प्रघण ताम्रकुम्भ, परिरण, तण्डुरीण, कर्ण वर्ण, अवर्ण, चूर्ण, रागचूर्ण स्मर, किरण, वरण, वारण, वुर्वाण भृत्य, भ्रूण, कोण॥ भकारोपान्तस्य यथा—गर्भ, रासभ, कुम्भ, कुम्भी इति स्वल्पघटे स्त्रीत्वम्, कुम्भा इति वेश्यापुत्र्या स्त्रीत्वम्, करम्भ, करभ[10] 'क्व प्रस्थितासि करभोरु घने निशीथे' (अमर ७१), ऋपभ, वृपभ, ककुभ, कौस्तुभ, शलभ, वलिभ स्त्रीवस्त्रभङ्गी 'स्त्रीलनेरिकट्टिनकुच्चुल्लु'॥

मकारोपान्तस्य यथा—व्याम, सोम, होम, धूम, ग्राम, सग्राम, द्रुम, विद्रुम, डिण्डिम, डिम, घर्म, धर्म॥ रेफोपान्तस्य यथा—मुकुर, शीकर, शेखर, मुद्गर, वागर पशुव्याधि 'पसुलरोगमु', विष्टर, पिठर, कोटीर, कैटीर 'इन्द्रगोपमु', अङ्गार, भृङ्गार, शृङ्गार, दीनार, [11]शुनीर शुनीसमूह, वन्धुमार 'वरन्दुव', [12]घर्घर वर्पध्वनि 'वानम्रात', कर्कर, [13]अवस्कर, मुर्मुर तुषाग्नि इति॥

[1] A1 adds 'पानेमु पाडगमुनु' [2] 'लेतपिट्ट A1 [3] 'अडुगुलोपट्टगोवु' A1 [4] 'मोरिगेटिकुक्क' A1 [5] पाननोर A1 [6] 'काकिगूडु' A1 [7] नेमलिपिरि' A1 [8] यर्चिम' A1 [9] वटाशहसिनम् A1 [10] A1 adds चापाग्रम् [11] शुनार शुनकक्षीरम। सर्पाण्डमपि स्यात्। 'पामुगुड्डुन्नु' A1 [12] वहर गृहमध्यस्तम्भ 'वट्टर' A1 [13] 'अद्दमु' A1

पथनयसटोपान्ता । पकाराद्युपान्ता पुलिङ्गा । कूप , सूप , पूप , दीप , प्रदीप प्रशब्द इतरोपसर्गनिवृत्त्यर्थ , धूप अगर्वादिधूम 'धूपोऽसौ गन्धवासित ', इति वैजयन्ती (पृ ११, श्लो २८), कोप [1], नीप , तप ग्रीष्मकाल , चप वेणु ,[2] बाष्प [3], खजप दर्वी, वृषप शुष्कवृक्ष 'येंडिनचेट्टु ', दलप मुखत्राणम्[4], कुतुप 'कुतुपनियतविक्रमा स्त्रिय ', कुटप गृहाराम । क्वचित्तु स्थले न भवति । पिण्डपुष्पम्, बालकूपी बद्धसोपानकूप [5] ।। थोपान्तस्य यथा—रथ , कर्णीरथ [6], पुष्परथ । 'धान्यध्वनिरथी ह्यात्मा गुल्ममासर्तुकर्दम ' इति पुस्तकान्तरपाठादपि स्यात् पुलिङ्ग रथी इति । अपचयविवक्षाया स्त्रीत्वम् । मेथि , सारथि बुद्धचैव सारथिना शास्त्रमिद खे    इति । अतिथि 'अतिथिना भवितव्यमत्रभवता ' । भेदका सन्तोऽपि भेद्यलिङ्गा न भवन्ति । अर्थ , सार्थ , घण्टापथ , शमथ , दमथ , आवसथ , सवसथ , अवभृथ , निशीथ , गोपीथ जलद्रोणी, अवगाथ प्रात सवनम, ग्रन्थ , ग्रन्थि , कुन्थु सूक्ष्मजन्तु ।

नोपान्तस्य यथा—जन , अभिजन , देवन , कर्केतन गोमेद [7], सिन शरीर वस्त्र च स्यात्, भानु , धनु 'अस्त्रियौ चापधनुषावासेष्वासौ धनुर्द्रुणम् ' इति वैजयन्ती (पृ ११८, श्लो १७२), स्नु , वस्न , बुध्न , रक्षोघ्न श्वेतसर्षप , अध्वान 'करितुरगमनुष्य यत्र चाध्वानदीपम्' अनुमान 'कोऽसावनुमान ' इत्यमरभाष्यम्, अन उच्छ्वास , अपान ।।

[1] B3 adds कलाप    [2] वेदर A1    [3] A1 adds शुष्प बलात्कार
[4] स्तलिप स्तम्भ A1    [5] 'नडवावि' A1    [6] कर्णरथ C1    [7] गोमेदिकम A1

योपान्तस्य यथा—पायु , मायु , जायु अगद , जरायु , मन्यु , जन्यु जन्म कुलाय , विपूय [1], विनीय पापम्, उद्य , भिद्य 'भिद्योद्यौ तदतिष्यपुष्य    ' इति पुस्तकान्तरपाठादपि स्यात् पुलिङ्ग । वीक्ष्य नर्तक , कुल्य कुलीन , पूज्य । ह्यमन्त्रश्वशुरवाचकत्वाद् वाच्यलिङ्गा न भवन्ति ।। सकारोपान्तस्य यथा— वीकस कृमि 'पुरुवु ', पनस कण्टक 'मुल्लु ', वाहस 'नीरुगण्डि ', स्त्रीपुस शिखण्डी[2], मलीमस अय , नभश्चमस इन्द्रजालम्, विभावसु हार , असु , पासु , उत्स , गुत्स [3] ।। टकारोपान्तस्य यथा—पट , कूट , चेट , किलाट क्षीरविकार करहाट , आरकूट , कामकूट वेश्याप्रणय , परिकूट पुरद्वारस्थमत्कूट , मत्कोट 'चीम ', चतु षष्टि गीतनृत्यादिकला [4], घरट्ट गोधूमयन्त्रम् 'प्रतिहट्टपथे घरट्टजात्

पथिकाह्वानदसक्तुसौरभै ' इति नैषध (२ ८५), कर्पट , कङ्कट , अवट , चिपिट , निष्कुट , करट , भरट कुम्भकार , वहट तन्तूत्पादकयन्त्रम् ' राट्नमु ', अर्गट अर्गलम् । क्वचित् स्थले न भवति । धाटी, भाटी वेश्या[5], [6]कुक्कुटी ॥ गोत्राख्या । गोत्रनामानि पुलिङ्गानि । वात्स्य , गार्ग्य ॥ चरणाह्वया । शाखानामानि पुलिङ्गानि । छन्दोग कठ ॥ १४ ॥

[1] मुन्ज इत्यर्थ [2] A1 adds 'स्त्रीपुवविट्टि' [3] गुच्छ इत्यर्थ [4] B3 adds °वाद्यादि° [5] A1 adds भाषान्तरे कावटी [6] कुकुटि B3

**नाम्न्यकर्तरि भावे च घञजब्नङणघाथुचः ।**
**ल्युः कर्तरीमनिज्भावे को घोः किः प्रादितोऽन्यतः ॥ १५ ॥**

(वि) नाम्न्यकर्तरि—णघाथच । नाम्नि सञ्ज्ञायामकर्तरि कारके भावे च विहिता घञादिप्रत्ययान्ता शब्दा पुलिङ्गे[1] वर्तन्ते । घञन्तो यथा—पाद , रोग वेश इत्यादि । कर्तृव्यतिरिक्तकारके यथा—प्रक्रियत इति प्रकार । प्रसीदत्यस्मिन्निति प्रसाद । भावार्थे यथा—त्याग , भोग , योग इत्यादि[2] । अच्प्रत्ययान्ता यथा—नय , चय , जय इत्यादि । अप्प्रत्ययन्ता यथा—कर , गर , लव इत्यादि । नङ्प्रत्ययान्ता यथा—[3]विज्ञ , यत्न , प्रश्न इत्यादि । णप्रत्ययान्तो यथा—न्याद इति । घप्रत्ययान्ता यथा—उरच्छद , दन्तच्छद इत्यादि । अथुच्प्रत्ययान्ता यथा—आनन्दथु , [4]क्षयथु , वेपथुरित्यादि ॥ ल्य कर्तरि । कर्त्रर्थकारकार्थे विहितो ल्युप्रत्ययान्तो पुलिङ्गो भवति । उदाहरणे—नन्दन , रमण इत्यादि ॥ इमनिज्भावे । भावार्थे विहित इमनिच्प्रत्ययान्त पुसि[5] भवति । उदाहरणे—प्रथिमा, लघिमा इत्यादि ॥ को घो कि प्रादितोऽन्यत । भावे विहित कप्रत्ययान्त पुसि[5] वर्तते । उदाहरणे—आपूत्य , श्येनोत्य इत्यादि । प्रादित प्राद्युपसर्गाच्च अन्यत उपसर्गव्यतिरिक्ताच्च पर किप्रत्ययान्तो यो घुसञ्ज्ञको धातु तदुपरि विहित किप्रत्ययान्तशब्दश्च पुसि भवति । प्रादित उदाहरणे—निधि , विधिरिति । अन्यत इत्यस्योदाहरणे—वार्धि , जलधिरिति[6] ॥ १५ ॥

[1] पुसि K5 [2] K2, K3 omit इत्यादि [3] J3, K3 add यज , रग्न.. [4] K4, K5 add श्वयथु [5] पुलिङ्गे K3 [6] K5 adds वारिधि

(विव ) नाम्न्यकर्तरि—णवाथुच । नाम्नि कर्तृरूपार्थविषये तद्व्यतिरिक्तार्थविषये वा, सज्ञामात्रे, अकर्तरि सज्ञाव्यतिरिक्तार्थत्वेऽपि कर्तृव्यतिरिक्त कारकमात्रे भावे शुद्धे धात्वर्थमात्रे च यथासभव घञ्, अच, अप्, नड, ण, घ, अथुच् इति सप्तप्रत्ययान्ता पुसि भवन्ति । तत्र कर्तरि सज्ञाया घञ्प्रत्ययान्तो यथा—'पदरुजविशस्पृशो घञ' (३ ३ १६) । पद्यतेऽसौ पाद । रुजतीति रोग । विशतीति वेश । अकर्तरि सज्ञाविषये यथा—प्रक्रियत इति प्रकार । पच्यत इति पाक ओदन । अत एव केषाचिद् यज्ञाना पक्वगुणकत्वेन पाकयज्ञसज्ञा । रज्यतेऽनेनेति रागो लाक्षा । प्रपतन्त्यस्मिन्निति प्रपात तटम् । [1]प्रतिहारो द्वारम्। विपथ काकोटिकाख्य पर्याहारो वा इत्यादिकमुदाहार्यम । 'अकर्तरि च कारके सज्ञायाम' (३ ३ १९) इत्यत्र सूत्रे चकार सज्ञाव्यभिचारार्थ इति वृत्तिकारेणाभिधानाद् (काशिका १, पृ २१०) असज्ञायामपि कर्तृव्यतिरिक्ते घञ्प्रत्ययो यथा—दीयत इति दाय । लभ्यत इति लाभ ।।

केचित्तु—कर्तृव्यतिरिक्तार्थविषयस्य घञन्तस्य विशेष्यनिघ्नत्वम् । यथा—पङ्क, काष्ठमिति । तथा नम इत्युच्यते यत्र वाक्ये, तत नमोवाकम् । तथा च 'अनुवाकादय पुसि वक्तव्या ' इत्यत्र 'भावे' (३ ३ १८) इति सूत्रेण भावार्थेषु घञ्प्रत्ययान्तो यथा—पचन पाक । त्यजन त्याग । यजन याग इत्यादि । सज्ञायामच्प्रत्ययान्ता यथा—क्षयन्ति निवसन्त्यस्मिन्निति क्षय गृहम् । चीयत इति चय प्रकार । नीयतेऽर्थोऽनेनेति नय नीति । भावे यथा—चयन चय । 'एरच्' (३ ३ ५६) । असज्ञाया यथा—चय , जय इति । 'अज्विधौ भयादीनामुपसख्यानम्' नपुसके [2]क्तादिनिवृत्त्यर्थम् (वा ३ ३ ५६) इति विशेषविधानाद् अजन्तानामपि भयादीना नपुसकत्वम् । अपप्रत्ययान्ता यथा—कीर्यत इति कर , राजग्राह्यो भाग । लवन लव । अत्र 'ऋदोरप्' (३ ३ ५७) इति सूत्रेण अप्प्रत्यय । नङ्प्रत्ययान्तस्तु—'यजयाचयतविच्छप्रच्छरक्षो नङ' (३ ३ ९०) इति । यज्ञ , यत्न , विश्न , प्रश्न , रक्ष्ण । नङन्तस्यापि याच्ञाशब्दस्य रूपभेदलक्षणविशेषबाधेन स्त्रीलिङ्गत्वम्[3] । 'नौ ण च ' (३ ३ ६०) इति सूत्रेण णप्रत्ययान्तो यथा—नितरामद्यत इति न्याद न्यदन च । घप्रत्ययान्तो यथा—'पुसि सज्ञाया घ प्रायेण' (३ ३ ११८) इति । उरश्छाद्यतेऽनेनेति उरश्छद कवच । दन्तच्छद ओष्ठ । एत्य कुर्वन्त्यत्रेति आकर । अथुच्प्रत्ययो यथा—[4]क्षवथु । वेपथु । [5]श्वयथु इत्यादि । अत्र 'ट्वितोऽथुच' (३ ३ ८९) इत्यथुच्प्रत्यय ।।

[1] प्रतीहार B6 [2] Tv adds भावे [3] Tv adds युक्तम् [4] Gm1, Gm3 add सदथ् [5] B6 adds टुओश्वि

ल्युः कर्तरि । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३. १. १३४) इति विहितो नन्द्यादिल्युप्रत्ययान्तः पुंस्येव । यथा—नन्दनः पुत्रः । रमणो भर्ता । दहनः पावकः । पवनो वायुरित्यादि । ये तु संज्ञायामेव नन्द्यादिल्युप्रत्ययमिच्छन्ति तन्मते-नेदमुक्तम् । केवलयौगिकत्वे तु विशेष्यनिघ्नत्वमेव । 'कर्तरि' इति स्वरूपकथनम् ।। इमनिज्भावे कः । 'पृथ्वादिभ्य इमनिज्वा' (५. १. १२२) इति सूत्रेण विहिते [1]भावार्थे य इमनिच्प्रत्ययः, यश्च भावार्थे कप्रत्ययः तदन्ताः पुंसि । यथा—पृथोर्भावः प्रथिमा । एवं महिमा, गरिमा इत्यादि । विशेषविधानात् [2]प्रेमशब्दस्य नपुंसकत्वमपि । 'सुपिस्थः' (३. २. ४.) इति योगविभागात् कप्रत्यये सति आखूनामुत्थानम् आखूत्थः । श्येनोत्थः (काशिका १, पृ. १७५) । यथा 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (वा. ३. ३. ५८) इति वक्तव्यात् कप्रत्ययः । यथा—प्रस्थानं प्रस्थः । आविधः । विघ्नः इत्यादि । शब्दार्णवे तु—'आखूत्थशलभोत्थादि तत उत्थानमद्वयोः' इति नपुंसकत्वमुक्तम् । भाव इति किम्? [3]भरिमा पर्यङ्कः । भरिमा खट्वा । भरिमा पीठम् इत्यादेरौणादिकस्य कर्त्रर्थस्य विहिते तस्य इमनिच्प्रत्ययान्तस्य, गोदः, पार्ष्णिः, त्रिः इत्यादेः कप्रत्ययान्तस्य च विशेष्यनिघ्नयोर्व्यवच्छेदार्थम् ।।

घोः किः प्रादितोऽन्यतः । 'दाधाघ्वदाप्' (१. १. २०) इति केषांचिद् धातूनां पूर्वाचार्यैः कृता घुसंज्ञा । प्राद्युपसर्गपूर्वात् पदान्तपूर्वाच्च घुसंज्ञकाद् धातोर्यः किप्रत्ययः तदन्तः पुंसि । प्रादितः किप्रत्यये यथा—विधिः, आधिः, उपाधिः, निधिः इत्यादि । उपसर्गव्यत्ययात् किप्रत्यये यथा—जलधिः, अब्धिः अम्बुधिः इत्यादि । अत्र 'प्रादितः' इत्यनेन 'उपसर्गे घोः किः' (३. ३. ९२) इति विहितः कप्रत्ययः 'अन्यतः' इत्यनेन 'कर्मण्यधिकरणे च' (३. ३. ९३) इति विहित उक्तः । न तु तदन्यस्य ग्रहणम् । तथाहि—'कानच्क्वसुचकिकिनो भाषायां यङ्लुकायपि' इति वाक्यपदीयवचनात् भाषायामपि किकिन्प्रत्ययदर्शनात् 'आदृगमहनजनः किकिनौ लिट् च' (३. २. १७१) इति सूत्रे विहितस्य किप्रत्ययान्तस्य कर्तरि विहितस्य विशेष्यनिघ्नत्वादिति ।। १५ ।।

[1] इह 'भावे' इति न सबध्यते। कर्मार्थस्येमनिचोऽसग्रहापत्ते। चण्डस्य कर्म भावो वा चण्डिमा। महत कर्म भावो वा महिमा इति भा दी (पृ ५२२ ३) [2] प्रीधातोरौणादिक मनिनन्त प्रेमशब्द इति भा दी (पृ ५२४) [3] वरिमा, तरिमा इत्याद्यौणादिकेम-निज्वारणाय 'भावे' इति स्वामी। तन। 'कृत कर्तर्यसज्ञायाम' (श्लो ४५) इत्यनेन तत्र सिद्धत्वात इति भा दी (पृ ५२४)

(पा) नाम्न्यकर्तरि—गघाथुच। सज्ञासु विहिता घञादिप्रत्ययान्ता [1] शब्दा पुलिङ्गा। भावे घञ्—पाक, त्याग। 'एरच्' (३ ३ ५६)—चय, जय। 'ऋदोरप्' (३ ३ ५७) कर, गर, भव, स्तव। 'यजयाचयतविच्छ-प्रच्छरक्षो नङ' (३ ३ ९०) [2]यज्ञ, प्रश्न। 'नौ ण च' (३ ३ ६०)न्याद। 'पुसि सज्ञाया घ प्रायेण' (३ ३ ११८) उरश्छद, दन्तच्छद [3]। 'ट्वितोऽथुच्' (३ ३ ८९) श्वयथु, वेपथु [4]॥ ल्यु कर्तरि। कर्त्रर्थे विहितल्युप्रत्ययान्त शब्द पुलिङ्ग। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' (३ १ १३४) [5]नन्दन, शोभन। इमनिज्भावे। भावार्थे विहित इमनिच्प्रत्ययान्त शब्द पुलिङ्ग। 'पृथ्वादिभ्य इमनिज्वा' (५ १ १२२) प्रथिमा, म्रदिमा, अकिंचनिमा। क। कप्रत्ययान्त [6] शब्द पुलिङ्ग। 'घञर्थे [7]कविधान कर्तव्यम्' (वा ३ ३ ५८) प्रस्न, विघ्न। किप्रत्ययसानिध्याद् घञर्थस्यैव ग्रहणम्। घो कि प्रादितोऽन्यत। प्रादिपूर्वस्य च कर्मपूर्वकस्य च घुसज्ञकधातोर्विहित किप्रत्ययान्त शब्द पुलिङ्ग। 'उपसर्गे घो कि' (३ ३ ९२) [8]विधि, निधि। 'कर्मण्यधिकरणे च' (३ ३ ९३) जलधि, इषुधि ॥ १५ ॥

[1] °प्रत्यया A₁ [2] A₁ adds यत्न [3] B₃, C₁ omit [4] A₁ omits
[5] A₁ adds व्रश्चन [6] कप्रत्यय A₁ [7] C₁ adds स्थास्नापाव्यधिहनियुध्यर्थम्
[8] B₃ adds प्रदि

द्वन्द्वेऽश्वबडवावश्वबडवानसमाहृते।
कान्तः सूर्येन्दुपर्यायपूर्वोऽय.पूर्वकोऽपि च ॥ १६ ॥

(वि) द्वन्द्वेऽश्व—असमाहृते। [1]इतरतरशब्दयोगार्थे ऽश्वबडवया य समास तदात्मक शब्द पुलिङ्गो[2] भवति। अत्रोदाहरण दर्शिते—अश्वबडवौ। अश्वबडवानिति ॥ कान्त —अय पूर्वकोऽपि च। सूर्यपर्यायपूर्व, इन्दुपर्यायपूर्व,

[3]अय शब्दपूर्वकश्च कान्तशब्द पुलिङ्गे वर्तते । क्रमेणोदाहरणानि—सूर्यकान्त, पतङ्गकान्त,[4] चन्द्रकान्त [5], अयस्कान्त इत्यादि ॥ १६ ॥

[1] K3, K4 add असमाहृते [2] पुसि K5 [3] K2, K3, K4 omit °शब्द°. [4] इनकान्त J2 [5] J2, K4 add इन्दुकान्त

(विव.) द्वन्द्वे—असमाहृते । असमाहृते समाहारद्वन्द्वादन्यत्र, अश्वश्च बडवा च इति इतरेतरयोगे द्वन्द्वसमासे [1]परवल्लिङ्गबाधेन पूर्वपदलिङ्गत्वमनेनोच्यते । 'पूर्ववदश्वबडवौ' (२. ४. २७) इति द्विवचनान्तस्योक्तत्वाद् अश्वबडवागतबहुत्वविवक्षायां पूर्वपदलिङ्गत्वं नास्तीति वा मन्दाशङ्कानिरासार्थम्, असंदिग्धमुदाहरणद्वयम् । तत्र अश्वबडवौ इति प्रथमयोर्द्विचनम् । अश्वबडवानिति शसन्तं द्वितीयम् । समाहारद्वन्द्वे तु 'स नपुंसकम्' (२. ४. १७) इति नपुंसकलिङ्गत्वाद् असमाहृत इत्युक्तम् । कान्तः—अय.पूर्वकोऽपि च । सूर्यशब्दपूर्वकः, इन्दुशब्दपूर्वकः, तदुभयपर्यायपूर्वकश्च, अयःशब्दपूर्वकश्च कान्तशब्दः पुलिङ्गः । यथा—सूर्यकान्तः, रविकान्तः, इन्दुकान्त', चन्द्रकान्त इति । द्वाविमौ मणिविशेषौ । अयस्कान्तो लोहविशेषप्रकृति. चुम्बकशीला । कस्कादित्वात् (८. ३. ४८) विसर्जनीयस्य सत्वम् । अत्र केचित्[2] 'अपि च' इति समुच्चयदर्शनाद् अय.पर्यायात् लोहशब्दाद् उत्तरस्यापि कान्तशब्दस्य पुलिङ्गत्वमिच्छन्ति । यथा—लोहकान्त इति[3] ॥ १६ ॥

[1] 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो' (२ ४ २६) [2] मल्लिनाथीयपारिजाते एव दृश्यते [3] अश्नुते । 'अशू व्याप्तौ' । 'अशूप्रुपिलटि ' (उ १ १५१) इति क्वन् [अश्व], बल याति । 'आतोऽनुप ' इति क । बलेन वजति वा । 'अन्येभ्योऽपि ' इति ड डलयोरेकत्वम् [बडवा], सुवति । 'पू प्ररेणे' । 'सुसूधाञ्गृधिभ्य क्रन्' (उ २ २४) [सूर्य], उनत्ति । 'उन्दी क्लेदने' । 'उन्देरिच्चादे ' (उ १ १२) इत्यु [इन्दु] इति ता तत्र भा दी

(पा) द्वन्द्वे—अश्वबडव[1] तु समाहृते । [2]इतरेतरयोगद्वन्द्वे ऽश्वबडवौ इति पुलिङ्ग । समाहारद्वन्द्वे तु अश्वबडवमिति नपुसक स्यात् । 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो ' (२ ४ २६) इति विहितपरवल्लिङ्गस्यापवाद [3] ॥ कान्त.—अय पूर्वकोऽपि च । सूर्येन्दुपर्यायपूर्वकश्च अय पर्यायपूर्वकश्च कान्तशब्द. पुलिङ्ग: । यथा—सूर्यकान्त, रविकान्त, इन्दुकान्त.[4], अयस्कान्त, लोहकान्त ॥ १६ ॥

[1] '°बडव तु समाहृते' इति पारिजाताभिमत पाठ　[2] $B_3$ omits °योग°
[3] इत्यस्यापवाद $B_3$, $C_1$　[4] $B_3$ adds चन्द्रवान्त

**वटकश्चानुवाकश्च रल्लकश्च कुडङ्गकः ।**
**पुङ्खो न्यूङ्खः समुद्गश्च विटपट्टघटाः खटः ॥ १७ ॥**

(वि ) वटकश्चानुवाकश्च—खट । अत्र काश्चित् पुलिङ्गान् स्वरूपेणाह —वटक इति । वटको[1] भक्ष्यविशेष । अनुवाक [2]ऋक्सामयजु समूह । रल्लक कम्बल । [3]कुडङ्गो लतागहनम् । पुङ्खो बाणमूलम् । न्यूङ्खो नैरन्तर्येणोक्ता षडोकारा । समुद्ग सपुटक । विट कामुकानुचर [4] । पट्टो ललाटभूषणम् । घटो दारुतुला । खट स्थूणाविशेष ॥ १७ ॥

[1] $K_4$ adds वटकादय शब्दा पुलिङ्गा भवन्ति　[2] $K_5$ omits °सामयजुस्°
[3] कुडङ्गक $K_3$, $K_5$　[4] कामुक $K_5$

(विव.) वटकश्चानुवाकश्च—खटः । अथ पूर्वाचार्यकृतलिङ्गानुशासनच्छायया पर्यायावसरे प्रागुक्ताननुक्ताश्च काश्चित् पुलिङ्गान् स्वरूपेणाह—वटक इति । वटको [1]मरीचजीरकार्क्षिमिश्रितः पिष्टादिकृतो भक्ष्यविशेषः । निस्तलीकृतमृत्पाषाणौषधादि च । अनूच्यत इत्यनुवाकः । यथायोगम् ऋचा साम्ना यजुषा वा समूहः । यथा—रुद्रानुवाक, काण्डानुवाक, शान्त्यनुवाक इत्यादि । अत्रानुवाकशब्देन 'अनुवाकादयः पुंसि वक्तव्या' इत्युक्ताना ग्रहणम् । यथा—सूक्तवाकः, शयुवाक इत्यादि । रल्लक कम्बलविशेष । मृगभेदश्च । कुडङ्गो[2] वृक्षलतादिच्छादितप्रदेश. । यथा—'अभिषेकजलेन दत्तसेकाः प्रमथाधीशजटाटवीकुडङ्गा.[2]' इति । स्वार्थे वृत्तपूरणार्थः कप्रत्यय [3] । पुङ्ख शरस्य ज्यासंधानप्रदेशः । न्यूङ्खो नैरन्तर्येणोच्चारिताः षडोकारा. । सुन्दरे तु वाच्यलिङ्ग । तथा च चन्द्र —'न्यूङ्ख. साम्नि षडोकारे त्रिषु सम्यङ्मनोहरः' इति । दीर्घादिरयं शब्द. । समुद्गक सपुटकः । विटः कामुकानुचरविशेषः । पट्टो ललाटभूषणविशेष. । शिलाविशेषश्च । घटः तुलाविशेषो दारुनिर्मितः । खटः करस्य प्रहारविशेष. । 'खट. श्लेष्मण्यन्धकूपे प्रहारान्तरटङ्कयो.' इति रभसः । प्रहारान्तर मुष्टिविशेष इति सुभूतिचन्द्रः । खटस्तृणविशेष इति स्वामि (पृ. ३४९) सुबोधिनीकारौ[4] ॥ १७ ॥

[1] मरिच° Tj1, Tj2 [2] कुडुङ्ग Gm1, Gm3 [3] मूले कुडङ्गव इत्यत्र [4] वटति। 'वट वेष्टने'। क्वुन् (उ २ ३२) [वटक], अनु उच्यते। घञ्। 'चजो ...' इति कुत्वम् [अनुवाक], लल्यते। 'लल ईप्सायाम्'। सपदादि (वा. ३ ३ ९४)। रलयोरेकत्वम्। लक्यते। 'पुंसि सञ्ज्ञायां ' घ। रल् चासौ लकश्च [रल्लक]; कुटति। क्विप्। नुट् अङ्गमस्य। 'शेषाद्विभाषा' इति कप् [कुडङ्गक], पुमांस खनति। 'अन्येभ्योऽपि' (वा ३ २ १०१) [पुङ्ख], 'यज्ञकर्मण्यजपन्यूङ्खसामसु' (१. २ ३४) इति साधु [न्यूङ्ख], समुद्गम्यते। 'अन्येष्वपि ' (वा ३ २.४८) इति ड [समुद्ग.]; वेटति। 'इगुपध ' इति क [विट], पटति। बाहुलकात्त [पट्ट]; खट्यते। 'पुंसि ...' इति घ [खट] इति भा दी (पृ. ५२४).

(पा) <u>वटकश्चानुवाकश्च—खट</u>:। वटकादयः पुलिङ्गा.। वटक. 'वडियम्'। अनुवाको नाम अवच्छेदविशेषः।

' अनुवाकश्च खण्डिका ।
ब्राह्मण चेत्यवच्छेदा एकग्रन्थस्तु [1]फक्किका ॥ '

इति <u>वैजयन्ती</u> (पृ ८५, श्लो ३२-३)। रल्लक उक्त (१, पृ. ४३६)। कुडङ्गक. कुञ्जः। पुङ्ख. शरस्य गरुत्मनिवेशः। [2]न्यूङ्खो नाम षडोंकाराः। समुद्गको गतार्थः (१, पृ. ४४६)। विटपट्टशब्दावनेकार्थकौ।

' विटोऽद्रौ लवणे पिङ्गे मूषके खदिरेऽपि च । '
' पट्ट. पेषणपाषाणे व्रणादीनां च बन्धने ।
चतुष्पथे च राजादिशासनान्तरपीठयोः ॥ '

इत्युभयत्र[3] <u>विश्वः</u> (पृ. ३६, श्लो. ७, पृ. ३७, श्लो १४-५)। घटो दारुतुला। घटोऽन्धकूपः ॥ १७ ॥

[1] पक्किका A1; भक्किका B3 [2] न्यूङ्ख इति पारिजातानभिमत. पाठ [3] B3 adds अपि

फोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत् ।
गडुः करण्डो लगुडो वरण्डश्च किणो घुणः ॥ १८ ॥

(वि) <u>फोट्टारघट्ट—किणो घुण</u>। फोट्टादिषुणान्ता. शब्दाः पुंलिङ्गा. भवन्ति। फोट्टो दुर्ग.। [1]अरघट्टो महाकूप। हट्टो विपणि.। पिण्डो ग्रास। गोण्ड:

तुन्दिलः । पिचण्डः कुक्षिः । [2]गडुर्मांसविशेषः । करण्डः समुद्‌ग । लगुडो दण्डः । वरण्डो रोग [3] । किणो व्रणस्थानम् । घुणो दारुकृमिः[4] ॥ १८ ॥

[1] आरघट्ट A1    [2] गण्डु J2.    [3] मुखरोग. J2, K2    [4] °त्रिमि. K5, K6

(विव.) कोट्टारघट्ट—किणो घुणः । अत्र कोट्टारश्च घट्टश्च हट्टश्च इति विग्रहे प्रथमपदं त्र्यक्षरं रेफोपधं चाभिप्रेत्य सुभूतिचन्द्रो व्याचष्ट । भट्टग्रामन्यायेन टान्तेष्वपि रेफान्तस्य कोट्टारशब्दस्य पाठः । 'कोट्टारो नागरे कूपे पुष्करिण्यां च पाटके' इत्यभिधानात् (विश्व. पृ. १३६, श्लो. १७७) । घट्टः शुल्कस्थानम्' इति । स्वामी (पृ. ३४६) तु प्रकारान्तरेण पदं छित्त्वा व्याचष्ट—'कोट्टो [1]दुर्गम् । अरघट्टः[2] महाकूप' इति । हट्टः क्रयविक्रयस्थानम् । पिण्डः—

'पिण्डो देहे जपापुष्पे निवापे सिल्हकेऽपि च ।
[3]पिण्डः स्यात्तगरेऽलाबुखर्जूरीभेदयोरपि ॥'

इति विश्वप्रकाशः (पृ. ४४, श्लो. १४-५) । 'गोण्डः पामरजातीये वृद्धनाभौ तु वाच्यवत्' इति रुद्रः । पिचण्डः कुक्षिः । गडुः शरीरपृष्ठभागस्थो मांसग्रन्थिविशेषः । यथा—'किमन्तर्गडुना' इति[4] (सर्व. संग्र.) । गण्ड इति पाठे गण्डः कपोलः । करण्डः कर्पूरादेराधारभूतः पात्रविशेषः । लगुडो लोहमयः प्रहरणविशेषः । वरण्डः तृणपत्रादिनिचयः । 'फलकमुखरोगयोर्वरण्डः स्यात्' इति रत्नकोशः । '[5]वरण्डस्त्वन्तरावेद्यां संदोहमुखरोगयोः' इति विश्वप्रकाशश्च (पृ. ४५, श्लो. २७) । किणो रोपितव्रणप्रदेशजन्यो मांसग्रन्थिः । घुणः काष्ठकीटः[6] ॥ १८ ॥

[1] दुर्गं इति मु ग्र    [2] आरघट्ट TJ1, TJ2    [3] लोहे Gm1, Gm3; पिण्डी इति मु ग्र    [4] किमनेनान्तर्गडुना (*Sar Sam* Apte's Dict p 119)    [5] 'वरण्डोऽप्यन्तरा वेदी' इति मु ग्र    [6] कुट्टयने । बाहुलकादारन् गुणश्च [कोट्टार], घट्टयते । 'हलश्च' इति घञ् [घट्ट], हटन्त्यत्र । बाहुलकात्त [हट्ट], पिडि सघाते । पचाद्यच् [पिण्ड], अपि चण्डते, अनेन अत्र वा । 'चडि कोपे' । 'हलश्च' इति घञ् । 'वष्टि भागुरि .' इत्यपेरल्लोप [पिचण्ड]; गडति । 'गड सेचने' । बाहुलकाद् [गडु], क्रियते । 'अण्डन् कृसृभृवृञ' (उ १ १२६) [करण्ड], लगति । बाहुलकादुडच् [लगुड], वृणोति । 'अण्डन् . '[वरण्ड], कणति । पचाद्यच् । पृषोदरादित्वाद् अत इ [किण], घोणते । 'इगुपध ..' इति क [घुण] इति भा दी. (पृ ५२४-५)

(पा) कोट्टारघट्ट—किणो घुण । कोट्टादय पुलिङ्गा । कोट्टो दुर्गपुरम्। अरघट्टो घटीयन्त्रम्[1] । यद्वा[2] कोट्टारो जलकुण्डम् । 'निश्लकुण्ड' । घट्टो वनगिरिप्रायदश । हट्ट [3]आपणवीथी । पिण्डोऽनेकार्थ । 'पिण्डो देहे [4]जपापुष्पे निवापे सिल्हकेऽपि च' इति विश्व (पृ ४४, श्लो १४) । गोण्ड पामरजाति । तुण्डिले वाच्यलिङ्ग । '[5]गोण्ड पामरजातौ च वृद्धनाभौ च वाच्यवत्' इति विश्व (पृ ४४ श्लो १३) । पिचण्डो गतार्थ (१, पृ ४१०)। अथवा पिचण्ड शय्या । 'पिचण्ड कुक्षिशय्ययो' इति वैजयन्ती (पृ २४३, श्लो ५७) । गडु 'वेनुकोप्पु' । करण्ड पुष्पपुट । 'करेडे' । करण्डीत्यपचयविवक्षाया स्त्रीत्वम् । लगुडो दण्ड[6] । वरण्डस्त्वनेकार्थ । वरण्डोऽप्यन्तरावेदौ सदोह मुखरोगयो' इति विश्व (पृ ४५, श्लो २७) । किणो व्रणलाञ्छनम् । 'पुटिमत्स' । घुणो [7]दारूपरिवर्णालेखकीट । 'कुट्टिकपुरुवु' ॥ १८ ॥

[1] A1 adds 'यान्तामु [2] अथवा A1 [3] °वीथि B3 [4] जवा° इति मु ग्र [5] गौण्ड इति मु ग्र [6] A1 adds 'वेदुरुगदिध [7] दारुत्रिमि B3 C1

**दृतिसीमन्तहरिता रोमन्थोद्गीथबुद्बुदा. ।**
**कासमर्दोऽर्बुदः कुन्द. फेनस्तूपौ सयूपकौ ॥ १९ ॥**

(वि) दृतिसीमन्त—सयूपकौ । दृत्यादियूपकान्ता शब्दा पुलिङ्गा भवन्ति । दृतिर्भस्त्रिका । सीमन्त केशपद्धति । [1]हरित पक्षिभेद [2] । मुनिर्वा । रोमन्थ पशूना चर्वितचर्वणम् । उद्गीथ सामप्रवण । बुद्बुदा जलस्फोट । कासमर्द [3]शाकभेद । अर्बुद सङ्ख्याविशेष । कुन्दो माघ्यपुष्पम् । फेनो डिण्डीर । स्तूपा मृदालिन्द [4] । यूपको यूपस्तम्भ ॥ १९ ॥

[1] हारीत J2 [2] °विशेष J2, K6 [3] कासमद शाकविशेष J2, काशमद K6 [4] मदादिकूट K2

(यिव) दृतिसीमन्त—सयूपकौ । दृत्यादय शब्दा पुलिङ्गा । दृति-र्जलाधारश्चर्मविकार । सीमन्तो ललाटस्योपरि वर्तमाना केशपद्धति । हरित पक्षिभेद । ऋषिविशेषश्च[1] । रोमन्थ पशूनां चर्वितचर्वणम् । उद्गीथ सामभक्ति-विशेष । बुद्बुदो जलस्फोट । कासमर्दो वन्यशाकविशेष । 'कसवदपेरु' ।

अर्बुदो व्रणविशेषः । पर्वतभेदश्च । संख्यावचनत्वे तु पुंनपुंसकत्वम् । कुन्दः पुष्पवृक्षविशेषः । 'कुन्दश्चक्रभ्रमौ[2] माघ्ये निधिभेदे मुरद्विषि' इति विश्वप्रकाशः (पृ. ७८, श्लो. ६) । 'माघ्य कुन्दम्' (१, पृ. २५८) इत्यत्र कुन्दशब्दस्य नपुंसकत्वमुक्तम् । इह तु पुलिङ्गत्वमित्युभयलिङ्गत्वम् । 'माघ्यं कुन्दोऽस्त्रियाम्' इति वनौषधिवर्गे शेषकारेणोक्तम् । फेनो डिण्डीराख्यो जलपरिणामः । स्तूपो मृत्पाषाणादिकृत उन्नतप्रदेश. । गृहवंशरूपो दारुविशेषश्च । तथा च 'गृहस्तूपे निदधाति' इत्यापस्तम्बप्रयोगः । यूपः अग्नीषोमीयादिपशुबन्धनार्थं पालाशादिदारुविशेषः । तेन सह वर्तत इति सयूपकौ । स्वार्थे कप्रत्यय. (५. ४. ५) । 'सपूपकौ' इति पाठे पूपो गोधूमादिपिष्टविकार. पक्व उच्यते[3] ।। १६ ।।

[1] °भेद Tv    [2] चक्रभ्रमे B5, B6    [3] द्रियते । क्तिच् (३ ३ १७४) [दृति], सीम्नोऽन्त । शकन्ध्वादि (वा ६ १ ९४) [सीमन्त], हरति । 'हृसृरुहि-' (उ १ ९७) इतीति [हरित्], रोम [ग ?] स्य मन्थ । पृषोदरादि [रोमन्थ], उद्गीयते । 'गश्चोदि' (उ २ १०) इति थक् [उद्गीथ], 'बुद्' इत्यव्यक्तशब्दध्वनि बुन्दति करोति । मूलविभुजादित्वात् (वा ३ २ ५) क [बुद्बुद], कास मृद्नाति । कर्मण्यण् [कासमर्द], अर बुन्दति । मूलविभुजादि । पृषोदरादि [अर्बुद], कु द्यति । पृषोदरादि [कुन्द], स्फायते । 'फेनमीनौ' (उ ३ ३) इति साधु [फेन], स्तूयते । 'स्तुवो दीर्घश्च' (उ ३ २५) इति प [स्तूप], यौति । 'कुयुभ्या च' (उ ३ २७) इति दीर्घ निच्च [यूप], पुनाति । पूयते वा । बाहुलकात् पक् [पूप] इति भा दी (पृ ५२५)

(पा) दृतिसीमन्त—सयूपकौ । दृत्यादय पुलिङ्गा । दृतिर्भस्त्रा[1] । सीमन्त केशवीथि[2] । हरितो मुद्ग[3] । रोमन्थ पशूना चर्वितचर्वणम् । 'पसुलमेलुकु' । उद्गीथ साम । बुद्बुदो [4]जलस्फोट । 'नीरुबुड्ढलु' । स्थासकोऽपि । 'बुद्बुदस्थासकौ समौ' इति वैजयन्ती (पृ १५५, श्लो १३) । कासमर्द ओषधिविशेष । 'तगचचेट्टु' । भाषान्तरे 'एलट्टू' । अर्बुदो मासकील । कुन्दस्त्वनेकार्थ । 'कुन्दश्चक्रभ्रमौ माघ्ये निधिभेदे मुरद्विषि' इति विश्व (पृ ७८, श्लो ६) । फेनो [5]गतार्थ (१, पृ ६१५) । अथवा वज्र इत्युणादिवृत्ति । स्तूप चैत्यम् । यूपो यज्ञीयस्तम्भ[6] ।। १६ ।।

[1] चर्मभस्त्रा A1    [2] A1 adds 'पापट'    [3] 'पेसरु' A1    [4] A1 adds जलबुदबुदोपमम    [5] 'डिण्डीरोऽब्धिकफ फेन' इति    [6] यज्ञकाष्ठम् A1

**आतपः क्षत्रिये नाभिः कणयक्षुरकेदराः ।**
**पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः ॥ २० ॥**

(वि) आतप—पुद्गला । आतपादिपुद्गलान्ता शब्दा पुलिङ्गा भवन्ति । आतपोऽर्कद्योत । क्षत्रिये नाभि, नाभिशब्द. क्षत्रियविशेषे पुंसि वर्तते । अत्र क्षत्रियशब्द प्राण्यङ्गव्यवच्छेदार्थ[1] । कणय[2] कुन्तभेद । क्षुरो वपनसाधनम् । केदरस्तरुविशेष[3] । पूरो जलोल्लास । क्षुरप्र. शरविशेष.[4] । [5]चुक्रोऽम्लवेतस । गोलो वर्तुल पिण्ड[6] । हिङ्गुलो रागद्रव्यम् । पुद्गलो जीव ॥ २० ॥

[1] व्यवच्छेदक $K_5$ [2] $K_4$ adds कणप इति केचित्, स्वामी च (पृ ३४६). [3] कूपक $K_6$ [4] काण्डच्छेद $K_6$, काण्डविशेष $K_5$ [5] चुक्ल $K_2$, $K_3$ [6] वर्तुलेन्द्रियस्थानम् $K_4$, $K_6$

(विव.) आतपः—पुद्गलाः । आतपः सूर्यप्रकाशः । राजमण्डलमध्यस्थक्षत्रियवाचको नाभिशब्दः पुलिङ्ग एवेति नियमः । अर्थान्तरे तु लिङ्गविवेकः प्रागेव कृतः (पृ. ६७८) । कणयः कुन्तायुधविशेष इति केचित्[1] । शरभेद इत्यन्ये[2] । क्षुरः केशवपनसाधनम् । केदरस्तरुविशेषः । केदारो व्रीहिक्षेत्रमिति कश्चित् । नद्यादौ जलार्थः स्वल्पः कूप इत्यन्ये । केदाराख्यतरुविशेष इत्यपरे । पूरो जलवृद्धिः । क्षुरप्रः शरविशेषः । खुर इव स्वसंयुक्त देश प्रति पूरयति खुरप्र इति कवर्गद्वितीयादिरयं शब्द इति केचित् । चुक्रः अम्लवेतसः । अन्यस्तु खुरश्च प्रचुरश्च इति त्र्यक्षरं रेफोपध च विगृह्य प्रचुरो वृद्धिविशेषः इति व्याचष्ट । गोलो वर्तुलो मृत्पिण्डादिः । यथा—ब्रह्माण्डगोल इति । चक्षुरादीन्द्रियाधिष्ठानभूतः पार्थिवावयवविशेषश्च । यथा—चक्षुर्गोल इति । विधवापुत्रो गोल इत्युच्यते । यथा—'अवकीर्णी कुण्डगोलौ' इति (या. स्मृ. १. १०. २२२) । हिङ्गुलिः रागद्रव्यविशेषः । आकारान्तोऽप्य शब्द इत्येके । पुद्गलो जीवात्मा जैनानां प्रसिद्धः । 'देहेऽप्यात्मनि पुद्गलः' इति रुद्रः[3] ॥ २० ॥

[1] विवृतौ दृश्यते [2] पारिजाते दृश्यते [3] आतपति । पचाद्यच् [आतप], वप पाति । 'आतोऽनुप ' इति क [कणप], क्षुरति । 'इगुपध ' इति क [क्षुर], के दृणाति । पचाद्यच [केदर], पूरयति । पचाद्यच् [पूर], क्षुरं प्राति । 'आतोऽनुप ' इति क [क्षुरप्र], पचयतेऽनेन । 'पत्रिवस्योरच्योरादयामा ' (उ २ १८) इति

रक् [चुक्र], गुड्यते । घञ् । रलयोरेकत्वम् [गोल], हिङ्गु लाति । 'आतोऽनुप' इति क [हिङ्गुल], 'पुत्' इति कुत्सायामव्ययम् । पुद्गिलति । 'ऋदोरप्' [पुद्गल] इति भा दी (पृ ५२५-६)

(पा) आतप —पुद्गला । आतपादय पुलिङ्गा । आतपो [1]गतार्थ (१, पृ ७२) । अथवा [2]रविताप । 'अथातपो रौद्रमिद्धम्' इति वैजयन्ती (पृ १८, श्लो २२) । नाभि क्षत्रिय । क्षत्रिय इति शृङ्गग्राहिकया[3] वचन प्राण्यङ्गादिव्युदासार्थम् ।

'मुख्यराट् क्षत्रियो नाभि पुंसि प्राण्यङ्गके द्वयो ।
चक्रमध्ये प्रधाने च स्त्रिया कस्तूरिकामदे ॥'

इति रभस । कणय शर । 'अम्मु' । क्षुरो नापितशस्त्रम्[4] । 'मङ्गलकत्ति' । केदर केदार । 'केदार केदर क्षेत्रम्' इति वैजयन्ती (पृ १२४, श्लो १७) । पूरस्तोयोल्लास । क्षुरप्रो बाणविशेष । 'अर्धचन्द्र [5]क्षुरप्र स्यात्' इति हलायुध (अ मा २ ३१४) । चक्र समूहचक्रवाकयोरन्यतर ॥

'चक्र कोके व्रज पुंसि चक्र[6] सैन्यरथाङ्गयो ।
ग्रामजाले कुम्भकारभाण्डे राष्ट्रे च दृश्यते ॥'

इति त्रिकाण्डशेष (पृ ३३, श्लो ६०४) । गोल 'गोट्टिकल्लु' । हिङ्गुलो रागद्रव्यम् । 'इङ्गिलिकम्' । 'हिङ्गुल हंसपाद च कुरुविन्द निगद्यते' इति [7]केषाञ्चिन्नपुंसकम् । पुद्गलो देह ॥ २० ॥

[1] प्रकाश B3, C1   [2] रव्यादि° B3   [3] °ग्राहिवचनम् A1   [4] °खड्ग A1
[5] 'अधचन्द्रक्षुरप्रादि' इति मु ग्र (पृ ५०)   [6] क्लीबे इति मु ग्र   [7] वैजयन्त्या दृश्यते (पृ ४४ श्लो ४४)

**वेतालमल्लभल्लाश्च पुरोडाशोऽपि पट्टिसः ।**
**कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः ॥ २१ ॥**

**इति पुलिङ्गशेष**

(वि.) वेतालमल्ल—पतद्ग्रह । [1]वेतालादिपतद्ग्रहान्ता शब्दा पुलिङ्गा । वेतालो भूताविष्टशव । मल्लो बाहुयोद्धा । भल्ल शरभेद [2]। पुरोडाश पिष्टकृतहोमद्रव्यम् । पट्टिस आयुधविशेप । कुल्मापो यावक । रभस पौर्वापर्याविचार । कटाहो [3]जलपूरणार्हो घटविशेप । पतद्ग्रहो [4]गण्डूपताम्बूलादिग्रहणसाधनम् ॥ २१ ॥

इति पुलिङ्गशपप्रकरणम्[5]

[1] वेताल K4 [2] काण्डच्छेद K6 [3] °पूरणार्थ K4 [4] °ग्रहण-पात्रविशेष K4, K5; °विशेपसाधनम् J2 [5] °विशेप° J2

(विव.) भेतालमल्ल—पतद्ग्रहः । भेतालः[1] पिशाचविशेषः । मल्लो नियुद्धकुशलः । भल्लः स्थूलफलः शरविशेषः । पुरोडाशो दर्शपूर्णमासादिषु व्रीह्यादिपिष्टकृतोऽश्वशफमात्रः कूर्माकृतिराग्नेयादिहोमद्रव्यविशेषः । पट्टिसः आयुधविशेषः । कुल्मासोऽर्धपक्वो मुद्गगोधूमादिः । दन्त्योपधमध्यपाठात् कुल्मास इत्यस्य शब्दस्य [2]साधुत्वमसदिग्धम् । 'कुल्मापो यावके पुंसि काञ्जिके स्यान्नपुसकम्' इति मूर्धन्यान्ते रभसश्च । व्रीहिभेदे कुल्माष इति मूर्धन्यान्तं केचिदाहुः । अनालोचितार्थप्रारम्भो रभसः । 'रभसो हर्षवेगयोः' इति रुद्रः । तद्युक्ते तु वाच्यलिङ्गः । यथा—'रभसया तु दिगन्तदिदृक्षया' इति भारविप्रयोगः (किरा. ५. १) । कटाहो नाम बहुद्रव्याधारो मृन्मयादिर्भाण्डविशेषः । सकटाह' कटाहशब्देन सहित इत्यर्थः । पतद्ग्रहो गण्डूषादिप्रक्षेपार्थः कांस्यादिनिर्मितः पात्रविशेषः[3] । 'पडिगम्' ॥ २१ ॥

इति पुलिङ्गविशेषप्रकरणम्

[1] भेताल इति विवरणाभिमत पाठ [2] सान्तरवम् B5, B6 [3] वो वायुरिता गता यस्मात् स वेत । वेनमलति । कर्मण्यण् [वेताल], मल्ले । पचाद्यच् [मल्ल], भल्लते । पचाद्यच् [भल्ल], 'व्रीहेश्च पुरोडाशे' (८ ३ १४८) इति साधु [पुरोडाश], पट्टि स्यति । 'आतोऽनुप ' इति क [पट्टिश], कोलनम् । गत्यादिर्दिरप् । कुल मस्यते । कर्मण्यण् [कुल्माप], रभते । 'अत्यविचमितमि ' (उ ३ ११७) इत्यसच् [रभस], कटेनातिगमे शाहन्ते । 'अन्येभ्योऽपि ' इति ड [कटाह], गृह्णाति । पचाद्यच् । पतत्ताम्बूलादेर्ग्रह [पतद्ग्रह] इति मा दी (पृ ५२६-७).

(पा) वेतालमल्ल—पतद्ग्रह । [1]वेतालादय शब्दा पुलिङ्गा । वेतालो यमकिंकर । भूताविष्टमृतशरीर वा । मल्लो बाहुयोद्धा । भल्लो [1]बाणभेद 'बाडम्मु' । 'स्नुहीदलफलो भल्ल ' इति वैजयन्ती (पृ ११६, श्लो १८२) । पुरोडाशो [2]यज्ञीयपूप । पट्टिस[3] आयुधभेद । [4]' कुल्माषोऽर्धस्विन्नो माषादि ' इति क्षीरस्वामी (पृ ३५०) । अथवा[5] कुल्माषो रत्नभेद । 'कुरुविन्दस्तु[6] कुल्माष ' इति वैजयन्ती (पृ ४४, श्लो ४०) । रभसो वेग । कटाह पात्र-भेद । 'काप्पेर' । 'कटाह कर्परो लट्ट[7]' इति वैजयन्ती (पृ १६३, श्लो. ५६) । पतद्ग्रह कलाचिका । 'पडिगमु' । पतद्ग्रह प्रतिग्राहो वालोऽस्त्री दारुणा कृत ' इति वैजयन्ती (पृ १७१, श्लो १६०) ॥ २१ ॥

इति पुलिङ्गशेष

[1] A1 omits [2] यज्ञपूप A1 [3] पट्टिश A1, C1 [4] A1 adds 'गुग्गिल्लु [5] यद्वा B3 [6] °विन्दास्तु कुल्माषा इति मु ग्र [7] लट्व इति मु ग्र

अथ नपुसकशेषप्रकरणम्—

**द्विहीनेऽन्यच्च खारण्यपर्णश्वभ्रहिमोदकम् ।**
**शीतोष्णमासरुधिरमुखाक्षिद्रविण बलम् ॥ २२ ॥**

(वि) द्विहीनेऽन्यच्च—बलम । अथ नपुसकलिङ्गशेष । अन्यत पूर्वोक्तादन्यद् नपुसकलिङ्गशेषानुशासनमारभ्यत इत्यर्थ । खशब्दमारभ्य ध्वान्त शब्दान्ता सर्वे सपर्याया सविशेषा शब्दा विशेषविधिनाबाधिता सन्त नपुसक-लिङ्गे वर्तन्ते ॥ २२ ॥

(विव) [1]तृतीयेऽन्यच्च—बलम् । यत् शब्दरूप स्त्रीलिङ्गे पुलिङ्गे वा वर्तते, ततोऽन्यत् सर्वं तृतीये नपुसकलिङ्गे भवतीत्यर्थ । तदेव विवृणोति—वज्र-विमानबिम्बमण्डलादिशब्दाना सत्यपि नपुसकलिङ्गत्वे तेषा स्त्रीपुसयोरपि वृत्ते तदन्यत्वाभावेन वक्ष्यमाणप्रकरणविषयत्व नास्ति । किं तु केवलनपुसकलिङ्गाना-मेवेति बोद्धव्यम् । खादय शब्दा ध्वान्तपर्यन्ता एकोनपञ्चाशत् सपर्याया विशेष-विधिबाधरहिता सन्तो नपुसकलिङ्गे वर्तन्ते । अत्र खशब्देन गगनमिन्द्रिय चेति

**द्वितयमपि विवक्षितम् । अरण्य विपिनम् । पर्णं पत्रम् । श्वभ्रमवटः । हिमं प्रालेयम् । उदकं पानीयम् । शीतमुष्ण चेति द्वावपि स्पर्शविशेषौ । धर्मिवचनत्वे तु तयोर्वाच्य-लिङ्गत्वम् । मांसमामिषम् । रुधिर रक्तम् । मुखं वदनम् । [अक्षि नयनम्] । द्रविणं धनम् । बल सैन्य शौर्यं च[3] ।। २२ ।।**

[1] तृतीये इति विवरणाभिमत पाठ [2] ध्वान्तशब्दोऽधिकपाठे दृश्यते (श्लो २३) [3] खनति, खन्यते वा । 'अन्येभ्योऽपि ' इति ड [खम्], अर्यते । 'अर्तेर्निच्च' (उ ३ १ २) इत्यन्य [अरण्यम्], पर्णयति । पचाद्यच् [पर्णम्], श्वभ्रयति । पचाद्यच् [श्वभ्रम्], हन्ति । 'हन्तेर्हिच्च' (उ १ १४७) [हिमम्], उनत्ति, क्वुन् (उ २ ३२) । नलोप (६ ४ २४) [उदकम्], श्यायते स्म । 'गत्यर्था . ' (३ ४ ७२) । 'द्रवमूर्तिस्पर्शयो ' इति सम्प्रसारणम् [शीतम्], ओषति । 'इण्सिञ् ' (उ ३ २) इति नक् [उष्णम्], मन्यते 'मनेर्दीर्घश्च' (उ ३ ६४) इति स [मासम्], रुणद्धि । 'इषिमदि ' (उ १ ५१) इति किरच् [रुधिरम्], खन्यते, खनति वा । 'डित्खनेर्मुट् चोदात्त ' (उ ५ २०) इत्यजलौ [मुखम्], अश्नुते । 'अशेर्नित्' (उ ३ १५६) इति क्सि [अक्षि], द्रवत्यनेन । 'द्रुदक्षिभ्यामिनन्' (उ २ ५०) [द्रविणम्], बलति । पचाद्यच् [बलम्] इति भा दी (प ५२७)

(पा ) <u>द्विहीनेऽन्यच्च—बलम्</u> । द्विहीने नपुसके । [1]आवाह्लिकशब्द-मधिकार । अन्यदेवाह—खेति । खादीनि नपुसकानि । खशब्देन इन्द्रियाका-शयोरेव ग्रहणम् । 'हृषीक विषयीन्द्रियम्' (१, पृ ६५), 'इन्द्रियेऽपि खम्' (२, पृ २४७) । 'व्योम पुष्करमम्बरम् । सुरवर्त्म <u>खम्</u>' (१, पृ ५०) । '<u>अरण्य</u> विपिन गहन कानन वनम्' (१, पृ २१५) । 'पत्र पलाश छदन दल <u>पर्णम्</u>' (१, पृ २२३) । 'छिद्र निर्व्यथन रोक रन्ध्र <u>श्वभ्रम्</u> (१, पृ १४६)। '<u>हिम</u> प्रालेय तुहिनम्' (१, पृ ६२)। '<u>उदक</u> जल पय ' (१, पृ १५६-७)। शीतोष्णशब्दौ गुणमात्रनिष्ठौ । देवदत्तस्य [2]शीत वर्तते । गुणिनि गुणिलिङ्गावेव । शीतोऽपि चन्द्रो विरहिणामुष्ण एष । मास पिशितम् । रुधिर रक्तम् । मुख वदनम् । अक्षि नेत्रम् । द्रविण वित्तम् । [3]बल सैन्यम् ।। २२ ।।

[1] श्लोक २२ [2] B3 adds उष्ण वा [3] बलमिति A1

**फलहेमशुल्बलोहं सुखदुःखशुभाशुभम् ।**
**जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम् ।। २३ ।।**

(वि.) फलहेम—अनुलेपनम् । फलादय शब्दा. नपुसकलिङ्गे वर्तन्ते ॥ २३ ॥

विवृतौ अधिक: पाठ —

भयामृतशकृद्वस्त्रचापाभरणलाञ्छनम् ।
दार्वौषधमृधापत्यहृदयोदरकाकुदम् ॥
पत्तनाजिनशृङ्गार्मद्वारबर्होडुमानसम् ।
ध्वान्त चाव्यक्तलिङ्गस्य भणितौ यत्प्रयुज्यते ॥

अव्यक्तलिङ्गस्य इय स्त्री, अय पुमान् इति यस्य व्यक्तिर्नास्ति, अस्य भणितौ उक्तौ यत्प्रयुज्यते तत् नपुसक ज्ञेयम् । अत्रोदाहारणम्—'स्त्री वा पुमान् वा कि तस्य जात तद् ब्रूहि पण्डित ' इति

**(विव.) फलहेम—अनुलेपनम् । फल चूतपनसादि । हेम हिरण्यम् । हलमिति पाठे हल लाङ्गलम् । शुल्बं ताम्रम् । लोहशब्देनात्र[1] गोबलीवर्दन्यायेन सुवर्णताम्रव्यतिरिक्तमेव त्रपुसीसादिक गृह्यते । सुख शर्म । तद्विपरीतं दुःखम् । शुभं कल्याणम् । अशुभममङ्गलम् । जलपुष्पाणि [2]कमलोत्पलकुमुदादीनि । लवणं सैन्धवं सामुद्रादि । व्यञ्जनं तेमनं रसादिवस्तु, शाकादिकं च । अनुलेपनं चन्दनागरुकुङ्कुमादि ॥ २३ ॥**

[1] लाहशब्द $B_{a}$, $B_{6}$  [2] कुमुदकल्हारादीनि $T_{J1}$, $T_{V}$ विवरणेऽधिक पाठ —

भयामृतशकृद्वस्त्रचापाभरणलाञ्छनम् ।
दार्वौषधमृधापत्यहृदयोदरकाकुदम् ॥
पत्तनाजिरशृङ्गार्मद्वारबर्होडुमानसम् ।
ध्वान्त चाव्यक्तलिङ्गस्य भणितौ यत्प्रयुज्यते ॥

भय साध्वसम् । अमृत पीयूषम् । शकृत् पुरीषम् । वस्त्रमशुकम् । चाप धनु । आभरण भूषणम् । लाञ्छन चिह्नम् । दार काष्ठम् । औषध भेषजम् । मृध युद्धम् । अपत्य तोकम् । हृदय वक्ष । उदर जठर । काकुद तालु । पत्तन नगरम् । अजिर चत्वरम् । शृङ्ग शिखरम् । अर्मशब्देन चक्षुर्गोलस्थित दृष्टिवारक रोगज चर्मोच्यते । द्वार गोपुरम् । बर्हं पिञ्छम् । उडु नक्षत्रम् । मानस मन । ध्वान्त तिमिरम् । अत्र चकारस्य अनुक्तसमुच्चयपरत्वेन गृहमुरतरामठकाञ्चिकादीना ग्रहणम् । अव्यक्तेति । गर्भसत्त्वादिना निमित्तेन अव्यक्तस्य लिङ्गस्यार्थस्य भणितौ अभिधाने यत् पद प्रयुज्यते तत् नपुसकलिङ्गे वर्तते इत्यधिकृतेन सबन्ध । यथा—स्त्री वा पुमान् वा कि तस्य जात तत्र हि तत्त्वत इति । तथा ' रे रे मानिक देव शाधि ननु किं त्वत्कटबन्धे स्रज ' इति ॥

फलति । पचाद्यच् । [फलम्], हिनोति । 'सर्वधातुभ्यो मनिन्'(उ ४ १४५) [हेम], शलति । 'उल्बादयश्च' (उ ४ ९५) इति साधु [शुल्बम्], लोहयति । पचाद्यच् [लोहम्], सुखयति । दुःखयति । पचाद्यच् [सुखम्, दुःखम्], शोभते । 'इगुपध ' इति क [शुभम्], लुनाति । नन्द्यादिल्यु (३ १ १३४) । 'लवणाल्लुक्' (४ ४ २४) इति निर्देशाण्णत्वम् [लवणम्], व्यज्यतेऽनेन । 'करणाधि ' इति ल्युट् [व्यञ्जनम्], अनुलिप्यते, अनेन वा । कर्मणि,करणे वा ल्युट् [अनुलेपनम्] इति भा दी (पृ ५२७ ८)

(पा) फलहेम—अनुलेपनम् । फलशब्द पर्यायविशेषयोरेव वाचक । फल, सस्य, पिप्पल, पनस, [1]चूत, कपित्थ, नारङ्गम् । हेम काञ्चनम् । शुल्ब ताम्रम् । लोहम् अय । सुखदुःखशब्दौ धर्मवचनौ । देवदत्तस्य सुखमभूत् मा[2] भूत् दुःखम् । धर्मिणि धर्मिलिङ्गावेव । सुखो वसन्तसमय । दुःखो हेमन्तसमय । शुभ मङ्गलम् । अशुभमरिष्टम् । जलपुष्पाणि कमलकुवलयादीनि । लवणव्यञ्जनानुलेपनानि स्वरूपविशेषाणि । सैन्धव सामुद्रम् । व्यञ्जन तेमन, क्षीर दधि घृतम् । अनलेपन कुङ्कुमचन्दनादि । ध्वान्त तिमिरम् । [3]अव्यक्तलिङ्गस्य फणितौ यत्[4] प्रयुज्यते तत्पद नपुसकम् । किमस्या गर्भे सजातम् । किं करोषि भद्रक ॥ २३ ॥

[1] A1 omits [2] दुःखमभूत् A1 [3] अव्यक्तेत्यादि पारिजातेऽधिक पाठ
[4] A1 adds अव्यक्तलिङ्गार्थस्योक्तौ यत् पद प्रयुज्यते

**कोट्याः शतादिः संख्यान्या वा लक्षा नियुतं च तत् ।**
**द्व्यच्कमसिसुसन्नन्तं यदनान्तमकर्तरि ॥ २४ ॥**

(वि) कोट्या शतादि —अकर्तरि । कोट्या अन्या शतसहस्रादिसङ्ख्या नपुसके वर्तते । लक्षशब्दो विकल्पेन नपुसकलिङ्गो भवति । [1]नियुतपद च लक्षशब्दार्थम् । द्वौ अचौ यस्य द्व्यच्कम्[2] । [3]द्व्यच्कमसन्तमिसन्तमुसन्त, द्व्यच्कमन्नन्त च नपुसकलिङ्ग भवति । असन्त यथा—तेज इत्यादि । इसन्त यथा—हविरित्यादि । उसन्त यथा—वपुरित्यादि । अन्नन्त यथा—नामेत्यादि । यदनान्तमकर्तरि । अकर्तरि वर्तमानमनप्रत्ययान्त यच्छब्दरूप तन्नपुसक[4] ज्ञेयम् । अत्रोदाहरणानि—साध्यतेऽनेनेति साधनम् । लवनम् । छेदनमित्यादि ॥ २४ ॥

[1] प्रयुतपदम् K4 [2] K4 adds द्विस्वरमित्यर्थ [3] द्व्यच्कमिसन्तम्, द्व्यच्कमुसन्त K3, K4 [4] °नपुसकलिङ्ग J2, K3

(विव.) कोटयाः शतादिसंख्यान्या । कोटिपदव्यतिरिक्तं शतं सहस्र-मित्यादिसंख्यावाचकं पदं नपुंसकलिङ्गं भवतीत्यर्थः । कोटया इति रूपनिर्देशात् कोटिशब्दस्य स्त्रीलिङ्गत्वम् । अत्र शतादिग्रहणात् ततोऽर्वाचीनानाम् एकादि-विंशतिपर्यन्तानां वाच्यलिङ्गत्वम् । विंशत्यादीनां नवतिपर्यन्तानां स्त्रीलिङ्गत्वं च प्रागुक्तमवगन्तव्यम् (१, पृ. ६०२-३) ।। वा लक्षा नियुतं च तत् । लक्षशब्दः शतादित्वेऽपि रूपभेदाद् विकल्पेन स्त्रीलिङ्गः । यथा—

'कियती पञ्चसहस्री कियती लक्षाधिकोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ।।'

इति । स्त्रीत्वाभावपक्षे प्रकरणान्नपुंसकत्वम् । तदेव लक्षं नियुतमित्युच्यते । अत्रादित्यपुराणम्—

'एकं दश शतं चैव सहस्रं चेति सत्तमाः ।
यथोत्तरं दशगुणं सहस्राणि दशायुतम् ।।
तथा शतसहस्राणि प्रोच्यते नियुतं बुधैः ।
तथा शतसहस्राणि दशप्रयुतमुच्यते ।।
शतं शतसहस्राणि कोटिरित्यभिधीयते ।।'

इति । द्व्यच्कमसिसुसन्नन्तम् । द्वावचौ स्वराख्यौ वर्णौ यस्य तद् द्व्यच्कम् । अन्त-शब्दः प्रत्येकमभिसंबध्यते । अस्, इस्, उस्, अन् इत्येवमन्तं शब्दरूपं द्व्यच्कं चेद् नपुंसकम् । असन्तं यथा—यशः, पयः, तेजः इत्यादि । बर्हिः, सर्पिः, रोचिः इत्यादिक-मिसन्तम् । उसन्तं यथा—यजुः, वपुः, अरुः, परुः इत्यादि । अन्नन्तं यथा—साम, लोम, वर्म, चर्म इत्यादि । द्व्यच्कमिति किम् ? उशना, पुरूरवाः, मातरिश्वा इत्यत्र मा भूत् । वेधाः, बर्हिः, अयं धनुः इत्यादौ विशेषविधानाद् अन्यथात्व विज्ञेयम् ।।

यदनान्तमकर्तरि । अनशब्देन 'युवोरनाकौ' (७. १. १) इति सूत्र-प्राप्तमादिष्टरूपं विवक्षितम् । तेन घनः, विघनः, अभिजनः, संतानः, संमान इत्या-दावप्रसङ्गः । अकर्तरि वर्तमाने अन इत्यन्तशब्दरूपं नपुंसकलिङ्गं भवति । अत्र कर्तृपदं कारकमात्रोपलक्षकं सर्वेषामपि कारकाणाम्

' स्वव्यापारेषु कर्तृत्वं सर्वेषामुपजायते ।
विक्लृद्यन्ति ज्वलन्तीति बिभर्तीति च दर्शनात् ।। '

इति । विक्लृद्यन्ति तण्डुला इत्यत्र पचनरूपव्यापारे करणभूतानां काष्ठानां कर्तृत्वम् । ज्वलन्ति काष्ठानीत्यत्र ज्वलनाख्यव्यापारे करणभूतानां काष्ठानां कर्तृत्वम् । बिभर्ति स्थालीत्यत्र तण्डुलधारणरूपव्यापारेऽधिकरणभूतस्याल्याः कर्तृत्वम् । ततश्च कारकव्यतिरिक्ते भावमात्रे विहितमनान्तं नपुंसकं भवतीत्युक्तम् । यथा—हरणम्, गमनम्, भोजनम् इत्यादि । अकारक इति किम्? नन्दयतीति नन्दनः, दहनः इत्यादि । अत्र ' नन्दिग्रहि. . . . ' (३. १. १३४) इत्यादिना कर्तरि ल्युः । तथा मुखसहितया नासिकया उच्यत इति मुखनासिकावचनः । राजभिर्भुज्यन्त इति राजभोजिनः शालयः । अत्र ' कृत्यल्युटो बहुलम् ' (३. ३. ११३) इति कर्मणि ल्युट् । तथा इध्मप्रव्रश्चनः कुठारः, पलाशशातन आयसनखः इति । अत्र ' करणाधिकरणयोश्च ' (३. ३. ११७) इति करणे ल्युट् । तथा यत्र मांसं पच्यते सा [1]मांसपचनी । अत्राधिकरणे ल्युट् । एवं निष्प्रवाणी तन्तुवायशलाका, प्रसाधनी कङ्कतिका, पृषदाज्यधानी इत्यादीनां कारकार्थानामनंपुसकत्वमवगन्तव्यम् । तस्य वाक्यस्य भाववचनमनान्तं नपुंसकमित्यत्रैव [2]तात्पर्यात्, अन्यत्र चौदासीन्याद् भावार्थव्यतिरिक्तवृत्तेरनान्तस्यापि क्वचिन्नपुंसकलिङ्गत्वं न निषिध्यते । यथा— साध्यतेऽनेनेति साधनम्, गजतुरगाद्युपकरणम् । मेहनं शेफः । यानं तुरगशकटबलीवर्दादि । व्यञ्जनं श्मश्र्वादि । करणं साधकतमम् (१. ४. ४२) । करणं हेतुः । पीयत इति पानम् । प्रह्रियतेऽनेनेति प्रहरणम् आयुधम् । आस्यत उपविश्यतेऽत्रेति आसनं पीठम् । शयनं मञ्चः इत्यादि तत्तत्प्रस्तावे लिङ्गानुशासनं कृतमेव । यत्र तु न कृतः तत्र शिष्टप्रयोगान्निर्णय इति ग्रन्थान्ते वक्ष्यति (श्लो. ४६)[3] ।। २४ ।।

[1] मास्पचनी Gm3 [2] तात्पर्यावधारणात् Tj1, Tv. [3] कोटयते । 'अच इः' (उ ४ १३६) [कोटि]; दश दशत परिमाणमस्य सघस्य । 'पङ्क्ति . . . .' (५ १.५९) इति साधु [शतम्], लक्ष्यते । 'गुरोश्च हल ' इत्य [लक्षा], नियूयते स्म । क्त. [नियुतम्]. इति भा दी

(पा.) कोटया. शतादिसङ्ख्यान्या । कोटिसङ्ख्याया अन्या शतादिसंख्या नपुंसकम् । शत सहस्रमयुत लक्षम् । या लक्षा । पक्षे लक्षशब्दः स्त्रीलिङ्गश्च स्यात् ।

[1]नियुतं च स्यात् । नियुतमित्यप्युच्यते[2] ।। द्वयच्कमसिसुसन्नन्तम् । द्वयच्का असन्ता इसन्ता उसन्ता अन्नन्ताश्च नपुसका । असन्तस्य यथा— वच , तप , यश , वय , विव । ' विवासि भान्वोरिव विभ्रतोस्तयो ' इति । इसन्तस्य यथा— हवि , ज्योति , छर्धि , सर्पि , । उसन्तस्य यथा—अरु ,परु , धनु , वपु । अन्नन्तस्य यथा —दाम, धाम, नाम, व्योम, लोम । द्वयच्करणाद् अन्यत्र न भवति । सुगन्धय सुमनस , चन्द्रमा । ' प्रक्षिप्योदर्चिप कक्षे ' (शिशु २ ४२) । उदर्चिर्नाम वह्हिर्मुख [3] । सचक्ष्युषो हि सभामण्डनम् । सचक्ष्युषो विद्वास । सुधर्माणमतिशेते भूसुरसभा । सुधर्मा देवसभा ।। यदनान्तमकर्त्तरि । [4]अकर्त्रर्थेऽनान्तो य शब्दोऽस्ति स नपुसक । साध्यतेऽनेनेति साधनम् । अधिक्रियते ऽस्मिन्नित्यधिकरणम् । पाक पचनम्। [5]त्याग त्यजनम् । क्वचिन्न भवति । राजभोजना शालय । गोदोहनी स्थाली ।। २४ ।।

[1] B3, C1 add पक्षे लक्षा　[2] उक्तम् A1　[3] वह्नि B3　[4] अकर्त्रर्थकानान्तशब्द B3　[5] B3 omits the sentence

**त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययान्वितम् ।**
**पात्राद्यदन्तैरेकार्थो द्विगुर्लक्ष्यानुसारतः ।। २५ ।।**

(वि ) त्रान्त—सख्ययान्वितम् । लकरोपधेन सहित [1]त्रान्त शब्दरूप शिष्ट पूर्वोक्तात् त्रान्तात् लकारोपधाच्च व्यतिरिक्त नपुसकलिङ्ग भवति । उदाहरणानि । त्रान्त यथा—पात्रम्, मित्रम् , पत्रम् इत्यादि । लकारोपधानि यथा— फलम्, जलम्, कुलमित्यादि[2] ।। [3]रात्रान्त सख्यापूर्वक शब्दरूप नपुसकलिङ्ग भवति । उदाहरणानि—त्रिरात्रम्, पञ्चरात्रम्, गणरात्रम् इत्यादि । पात्राद्यदन्तै —अनुसारत । पात्रादिभिरदन्तैरेकार्थ [4]समाहारो द्विगुसमासो लक्ष्यानुसारत प्रयोगानुसारेण[5] नपुसकलिङ्गो भवति । उदाहरणानि—त्रियुगम्, त्रिपात्रम्, त्रिभुवनमित्यादि ।। २५ ।।

[1] त्रान्तशब्दान्त K6　[2] इत्यादीनि K4　[3] J2, K4 add रात्र प्राक्सख्यायान्वितम्　[4] K2 omits　[5] °अनुसारत K3 K4

(विव.) त्रान्त सलोपध शिष्टम् । त्र इति सरेफमसयुक्तमक्षरम् अन्ते यस्येति तत् त्रान्तम् । सकारो लकारो वा उपधा यस्य तत् सलोपधम् । तत् त्रिविध

नपुंसकलिङ्गं भवति । त्रान्तं यथा—पत्रम्, पतत्रम्, पात्रम्, गात्रम्, गोत्रम्, मित्रम्, कलत्रम्, चित्रम्, तोत्रम् इत्यादि । सकारोपधं यथा—बिसम्, बुसम्, साध्वसम्, साहसम्, कोकसम्, महानसम्, श्वःश्रेयसम्, ब्रह्मवर्चसम्, निःश्रेयसम् इत्यादि । लकारोपधं यथा—आवालम्, आलवालम्, कमलम्, कूलम्, कौतूहलम्, पलम्, पललम्, पातालम्, फलम्, बलम्, लाङ्गलम्, लाङ्गूलम् इत्यादि । ननु कथं तर्हि पुत्रः, मन्त्रः, मित्रः सूर्यः, शात्रवोऽमित्रः, मात्रा, गोत्रा, गजस्य जङ्घादेशो गात्रा; तथा घासः, कासः, प्रासः, व्यासः, मासः, रसः, हसः; तथा तालः, कालः, कोलः, फालः, सालः, हालः, वेला, शिला, शाला, कला, माला, हेला, डोला, लीला, फेला, खला, बला, बाला, जाला, इत्यादीनां लिङ्गान्तरत्वमित्यत आह—शिष्टमिति । स्त्रीलिङ्गत्वेन पुलिङ्गत्वेन वा तत्र तत्रानुशिष्टाद् यत् शिष्टम् अवशिष्टम् अन्यदेव त्रान्तं सलकारोपधं च तद् नपुसकमित्यर्थः ॥

<u>रात्रं प्राक्संख्यान्वितम्</u> । संख्यावाचकपदपूर्वकं रात्रान्तं नपुसकम्[1] । यथा—तिसृणां रात्रीणां समाहारः त्रिरात्रम् । पञ्चरात्रम् । गणरात्रमित्यादि । 'अहः-सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' (५. ४. ८७) इति चकारेण समासान्तोऽच्प्रत्ययः समाहार इत्येव । द्वयोः रात्र्योः समाहारः द्विरात्रम् । प्राक्संख्ययान्वितमिति किम्? अहोरात्रः । अतिरात्रः इत्यादि । रात्रान्ताः प्राक्संख्याका इत्यनेन संख्यापूर्वस्य पुंस्त्वे निषिद्धे किंलिङ्गत्वमिति जिज्ञासायामिदमुच्यते । इदं च नपुसकत्वं <u>कात्यायनमता</u>नु-सारेणेति द्रष्टव्यम् । <u>पाणिनीयाचार्यमते तु</u>—'रात्राह्नाहाः पुंसि' (२. ४. २९) इत्यत्रोपपदविशेषानुपपादनात् प्रत्युत <u>वृत्तिकारेण</u> (काशिका १, पृ. १३३) द्विरात्रः त्रिरात्रः इति संख्यापूर्वस्यैवोदाहृतत्वाच्च पुंस्त्वमेवाभिप्रेतमिति गम्यते । वक्ष्यमाणेन समनन्तरवचनेनैव अस्यार्थस्य सिद्धत्वेऽपि पुंस्त्वनपुसकत्वलक्षणमत-भेदसूचनार्थमत्राप्याभिधानमित्यवगन्तव्यम् ॥

<u>पात्राद्यदन्तैः—अनुसारतः</u> । पूर्वम् 'अदन्तैर्द्विगुरेकार्थः' (पृ. ६५६, श्लो. ३) इति प्राप्तस्य स्त्रीत्वस्य, 'न स पात्रयुगादिभिः' (श्लो. ३) इति प्रतिषेधः कृतः । तर्हि किं लिङ्गं भवतीति जिज्ञासायामिदमारभ्यते । पात्रादिभिरकारान्तैः उत्तर-पदभूतैः समाहारार्थे संख्याशब्दानां यो द्विगुसमासः स प्रयोगानुसारेण नपुंसकलिङ्गो भवति । यथा—त्रिपात्रम्, चतुर्युगम्, त्रिभुवनम्, द्विचन्द्रम् इत्यादि । तथा—पञ्चानां गवां समाहारः पञ्चगवम्, षड्गवम् इत्यादि । अत्र 'गोरतद्धितलुकि' (५. ४. ९२) इति समासान्तः । अत्र केचिदाहुः—प्रथमतः समासान्तविधिः, ततः समास इति तत्र

कृता पदयोजना । यत्तु मतम्—समासोत्तरकाल समासान्तविधिः इति । तत्र तु अदन्तैः अकारान्त्यावयवत्वेनोपलक्षितैर्यो द्विगुरेकार्थः इति योजनीयम् । पात्रादिग्रहणं किम्? पञ्चपूली, दशपूली इति । [2]अदन्तैरिति किम्? त्रिखट्वम्, त्रिखट्वी इत्यत्र 'वा टाबन्त' (श्लो. ४१) इति विकल्पो न स्यात् । एकार्थ इति किम्? पञ्चकपालः पुरोडाशः इत्यत्र तद्धितार्थविषयद्विगुसमासे नपुंसकत्वं मा भूत् । द्विगुरिति किम्? लक्ष्यानुसारत इत्यनेन पात्रादेराकृतिगणत्व दर्शितम् । अत एव 'पात्रादिराकृतिगणः' इति कैयटः ॥ २५ ॥

[1] नपुसकलिङ्ग भवति Tv [2] अकारै Tv

(पा) त्रान्त सलोपध शिष्टम् । अवशिष्टानि त्रान्तानि लोपधानि च नपुसकानि । त्रान्त यथा—पात्रम्, क्षेत्रम्, दात्रम्, गात्रम्, कलत्रम्, खनित्रम्, भटित्रम्, धवित्रम् । लोपधानि यथा—कुलम्, बिलम्, शिलम्, सिलम् । लूनकेदारशेप तु शिलसिलमिति स्मृतम् । मूलम्, जालम्, कूलम्, मङ्गलम्, लाङ्गलम्, जाङ्गलम्, त्र्यङ्गुलम्[1], चतुरङ्गुलम् । शिष्टग्रहणादत्र न भवति—यात्रा, मात्रा, होत्रा, वरत्रा, शाला, टोला, माला, हेला, उलकल [2] 'चलिचिम', कमली मञ्जूषा, काकल 'काकितमु', तैतिल 'मदगि' ॥ रात्र प्राक्सख्ययान्वितम् सख्यापूर्वको रात्रिशब्दो नपुसक । त्रिरात्रम्, गणरात्रम् । पात्राद्यदन्तै —अनुसारत । पात्राद्यदन्तै कृत समाहारद्विगु [3]शिष्टप्रयोगगम्य [4] ॥ २५ ॥

[1] द्वयङ्गुलम B3 [2] A1 adds शाकुला कोङ्ववलि' [3] विशिष्ट° B3, C1
[4] C1 adds नपुसक स्यात् । पञ्चपात्रम त्रिभुवनम्

**द्वन्द्वैकत्वाव्ययीभावौ पथः संख्याव्ययात्परः ।**
**षष्ठ्याश्छाया बहूना चेद्विच्छायं संहतौ सभा ॥ २६ ॥**

(वि) द्वन्द्वैकत्वाव्ययीभावौ । द्वन्द्वैकत्व समाहारे द्वन्द्वसमास, अव्ययीभावसमासश्च[1] नपुसकलिङ्गौ भवत । द्वन्द्वैकत्व यथा—पाणिपादम्, समित्कुशम् (कु स ५ ३३) इत्यादि । अव्ययीभावसमासो यथा—यथाशक्ति, यावदमित्रमित्यादि ॥ पथ सख्याव्ययात्पर । सख्यावाचिपदादव्ययाच्च पर समासान्त [2]पथशब्दो विशेषविधिना अबाधितो नपुसकलिङ्गो भवति । सख्यापरो यथा—

त्रिपथम्, चतुष्पथमित्यादि । अव्ययात्परो यथा—उत्पथम्, [3]सत्पथमित्यादि । षष्ठ्याश्छाया—विच्छायम् । षष्ठ्या षष्ठीतत्पुरुषात् परो यः छायाशब्दो बहूना चेद् बहूना छाया चेत् नपुसकलिङ्गो भवति । अत्रोदाहरणे[4]—इक्षूणा छाया इक्षुच्छायम् (रघु ४ २०) । वीना पक्षिणा छाया विच्छायम् ॥ सहतौ सभा । अत्र सभाशब्द समूहार्थे, शालार्थश्च[5] । समूहार्थे वर्तमान सभाशब्दान्त षष्ठीतत्पुरुषो नपुसकलिङ्गो भवति । अत्रोदाहरणम्—स्त्रीणा सभा स्त्रीसभम् । स्त्रीसमूह इत्यर्थ ॥ २६ ॥

[1] K4 omits समास [2] पथिन्शब्द K4 [3] K5 adds दुष्पथम
[4] K3, K4 add दर्शिते [5] J2 omits

(विव.) द्वन्द्वैकत्वाव्ययीभावौ । द्वन्द्वस्यैकत्वं समाहाररूपोऽर्थः । अर्थे लिङ्गविध्यसंभवात् तद्वाचिनो नपुसकत्वविधिरित्यवसेयम् । ततश्च समाहारार्थ-द्वन्द्वसमासोऽव्ययीभावश्च नपुसकलिङ्गौ स्यातामित्यर्थः । अश्वश्च बलीवर्दश्च अश्व-बलीवर्दम् । धवखदिरपलाशम् । अत्र समाहारः [1]समासार्थः । तथा—'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (२. ४. २.) इति समाहारार्थे द्वन्द्वः । पाणिपादम् । शिरोग्रीवम् । मार्दङ्गिकपाणविकम् । गजाश्वम् । गजारोहम् । अश्वारोहमित्यादि समासार्थैकत्वाद्,[2] एकवचनम् । 'स नपुसकम्' (२. ४. १७) 'अव्ययीभावश्च' (२. ४. १८) इति च सूत्रेण अव्ययीभावसमासस्य[3] समाहारस्यापि नपुसकत्वम् । यथा—अधिपीठम् इति । विभक्तयर्थेऽव्ययीभावः (२. १. ६) । अन्वहम् इति यथार्थे । शाकस्य मात्रा शाकप्रति इति 'सुप्रतिना मात्रार्थे' (२. १. ९) । उपकुम्भमिति समीपार्थे निर्मक्षिकमित्यभावे । 'ह्रस्वो नपुसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वत्वम् । अव्ययीभावस्य लिङ्गविधानं शब्दशास्त्रे फलम् । निघण्टुकारैस्तु लिङ्गविधानं निर्मक्षिकं मुखमित्यादौ अव्ययीभावविशेषणाना नपुसकलिङ्गानामेव साधुत्वमिति ज्ञापयितुमित्यवगन्तव्यम् ॥

पथः संख्याव्ययात्परः । संख्यावाचिनः शब्दा अव्ययाश्च, कृतसमासान्तः पथशब्दो नपुंसकलिङ्गः । यथा—त्रयाणां पन्थाः त्रिपथम् । द्वयोः पन्थाः द्विपथम् । 'पथः संख्याव्ययादेः क्लीबतेष्यते' (वा. २. ४. १८) इत्यत्र पदमञ्जरीकारः शिवभक्तो हरदत्ताचार्यः—'त्रिपथमिति षष्ठीसमासोऽयम्, द्विगौ तु पात्रादित्वात् सिद्धम् इति (पदम. पृ. ६१) । अव्ययात् परो यथा—उत्पथम् ।

प्रपथम्। दुष्पथमित्यादि। अत्र 'कुगतिप्रादयः' (२. २. १८) इति समासः। न त्वव्ययपरत्वे सत्येव विपथकापथशब्दयोः भूवर्गोक्तं पुंस्त्वम् (१, पृ. १६३) अनेन विरुध्यते। न च वाच्यम्—भृङ्ग्राहिकया भूवर्गोक्तं शब्दद्वयमपहाय[4] अयं नपुसकविधिः उत्पथादिष्ववतिष्ठत इति।

> 'दुरध्वस्तु कदध्वा स्याद् व्यध्वौ विपथकापथौ।
> न स्त्रियौ स्ताम्॥'

इति प्रतापमार्तण्डे विपथकापथशब्दयोः नपुसकलिङ्गत्वमप्यङ्गीकृतत्वात्। अयमत्र समाधिः—शब्दद्वयस्यापि प्राक् पुंलिङ्गत्वमुक्तम् (१, पृ. १६३)। इह तु क्लीबत्वमुच्यत इत्युभयलिङ्गत्वं विपथकापथयोः अमरसिंहनाथेनाभिप्रेतमिति। 'पथः संख्याव्ययादेः क्लीबतेष्यते' (वा. २. ४. १८) इति लिङ्गविधायकसूत्रविरोधस्तु शेषकारेण परिहृतः—

> 'इह द्वैधं जयादित्यः पथः संख्याव्ययात्परम्।
> नपुसकमुवाचामु पुमांसं वामनोऽब्रवीत्॥'

इति। अस्यार्थः—कृतसमासान्तोऽकारान्तः पथशब्दः संख्यावाचकाद् अव्ययाच्च परश्चेत् तं पथशब्दं जयादित्यो नपुसकमाह। तथा च तस्य ग्रन्थः—'पथः संख्याव्ययादेरिति नपुसकमिति प्रकृतेन संबन्धः' इति। वामनस्तु अमु पथशब्दं पुमांसमाह। तथा च तस्य ग्रन्थः—'संख्याव्ययात्पूर्वकश्च पथः इति पुंसि प्रकृतेनान्वयः' इति। जयादित्यमतेन नपुसकत्वमुक्तम्। भूवर्गे तु वामनमतेन पुलिङ्गत्वमिति न पूर्वोत्तरविरोध[5] इति। एवं वामनमतेन पुंस्त्वं प्रागुक्तम् (१, पृ. १६३)। इह तु जयादित्यमतेन क्लीबत्वमुक्तमिति ज्ञेयम्[6]। सुभूतिचन्द्रस्तु प्रकारान्तरेण विरोधं परिजहार। 'पादः[7] पथश्च मार्गश्च' इति त्रिकाण्डशेषे दर्शनात् (पृ. ६, श्लो. १६६) पथिपर्यायोऽदन्तशब्दः पुंलिङ्गः पथशब्दोऽप्यस्ति। तथा च 'कुपथं तं विजानीयात्' इति महाभारतप्रयोगश्च (१३. ६३७. ६)। तथा च विरुद्धः पथो विपथः इति पथशब्देनैव विग्रहे पुलिङ्गत्वमेव। यथा पथिन्शब्देनैव विगृह्य समासान्तविधिः तथा 'पथः संख्याव्ययादेः' इति नपुंसकत्वमिति। संख्याव्ययादेरिति किम्? राजपथः। जनपथः। घण्टापथः[8]। कृतसमासान्तग्रहणं किम्? अपन्थाः, सुपन्थाः इति॥

षष्ठयाश्छाया--विच्छायम् । अत्र षष्ठया इति पद ' कन्थोशीनरनामसु ' (श्लो २८) इत्येतदन्तमधिक्रियते । षष्ठीविभक्तयन्तपूर्वपदात् परो य· छायाशब्द तदन्तः तत्पुरुषसमासो नपुसकलिङ्गः सा छाया बहूना सबन्धिनी [9]भवति चेत् । ' छाया बाहुल्ये ' इति (२. ४. २२) सूत्रमूलमेतत् । अत्र स्वयमेवोदाहरति । वीनां पक्षिणां छाया विच्छायमिति । एवं शलभच्छायमित्यादि । ' अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ' इति कालिदासः (रघु. १२. ५०) । कुड्यस्य छाया इत्यादौ छायाया एकमात्रसबन्धित्वे ' विभाषा सेनासुराच्छायाशालानिशानाम् ' (२. ४ २५) इति विकल्पेन स्त्रीलिङ्गत्वमपि स्यात् । तन्निवृत्त्यर्थं बहूनामित्युक्तम् । षष्ठया इति किम्? शुद्धा चासौ छाया च शुद्धच्छाया । बह्वर्थवचनषष्ठयन्तपूर्वपदत्वेऽपि उत्तरपदार्थविवक्षाया नपुसकत्वं नास्तीति सुभूतिचन्द्र. ।। सहतौ सभा । सभाशब्दः शालावचनः, समूहवचनश्च । तत्र समूहवाची सभाशब्दान्त. षष्ठीतत्पुरुषसमासो नपुसकलिङ्ग· । यथा--स्त्रीणा सभा स्त्रीसभम्, स्त्रीसघात इत्यर्थः । ' अशाला च ' (२. ४. २४) इति सूत्रेण नपुसकत्वम् । सहताविति किम्? अनाथसभा, अनाथशालेत्यर्थः । षष्ठया इति किम्? शुद्धा चासौ सभा च शुद्धसभा[10] ।। २६ ।।

[1] समास Tj1, Tj2 [2] समासार्थस्य Tv [3] B5, B6 omit °समास [4] परिहाय Gm1, Gm3 [5] पूर्वापरविरोध Tv [6] घ्येयम् Tj2 [7] वाट पथश्च माथश्च इति मु ग्र [8] Tv adds वणिक्पथ [9] Tv omits भवति
[10] सहन्यते । क्तिन् [सहति], सह भान्त्यत्र । 'अन्येभ्योऽपि दृश्यते' (वा ३ ३ १०१) इति ड [सभा] इति भा दी (पृ १३५)

(पा ) द्वन्द्वैकत्वाव्ययीभावौ । समाहारद्वन्द्वश्च अव्ययीभावश्च नपुसकौ । यथा--पाणिपादम्, तिष्ठद्गु ।। पथ सख्याव्ययात्पर । [1]सख्याया अव्ययेभ्यश्च पर. पथशब्दो नपुसक । यथा--त्रिपथम् । उत्पथम् ।। षष्ठयाश्छाया--विच्छायम् । [2]बहुसबन्धि स्याच्चेत् षष्ठीतत्पुरुषात्[3] पर छायाशब्दो नपुसक । विच्छायमिति तदुदाहरणम् । वीना [2]पक्षिणा छाया विच्छायम् । अबहुसबन्धि चेन्न भवति । वृक्षस्य छाया वृक्षच्छाया[4] इति ।। सहतौ सभा । [5]सहतिरर्थश्चेत् षष्ठया पर सभाशब्दो नपुसक [6] । दासीना सभा दासीसभम्[7] । शालार्थे न भवति । दास्या सभा दासीसभा । दासीशालेत्यर्थ ।। २६ ।।

[1] सख्याव्ययेभ्य A1. [2] B3 omits [3] षष्ठया. A1 [4] A1 adds 'इक्षुच्छायानिषादिन्य' इति (रघु ४. २०)। [5] सहतिरित्यर्थ B3, C1 [6] A1 adds दासीसभमिति तदुदाहरणम् [7] B3 adds सहतिरित्यर्थ .

शालार्थापि परा राजामनुष्यार्थादराजकात् ।
दासीसभं नृपसभं रक्षःसभमिमा दिशः ।। २७ ।।

(वि.) शालार्थापि—अराजकात् । अराजकाद् राजशब्दवर्जिताद् राजामनुष्यार्थाद् राजपर्यायाद् अमनुष्याद् रक्ष पिशाचपर्यायाच्च परा शालार्था सभा, अपिशब्दात् समूहार्थापि षष्ठीतत्पुरुषे सति नपुसकलिङ्गे वर्तते । नृपाणा सभा सहति. शाला वा नृपसभम् । अत्रोदाहरणानि स्वयमेव दर्शयति—दासीसभम्— इमा दिश । दासीसभमिति 'सहतौ सभा' (श्लो. २६) इत्यस्योदाहरणम् । नृपसभमिति राजपर्यायस्योदाहरणम् । रक्ष सभमिति अमनुष्यार्थस्योदाहरणम् ।। इमा दिश इति इमान्युदाहरणानीत्यर्थ ।। २७ ।।

(विव.) शालार्थापि—अराजकात् । अराजकाद् राजशब्दवर्जिताद् राजार्थाद् राजपर्यायाद् अमनुष्यार्थाद् रक्षःपिशाचपर्यायाच्च परा सभा शालार्था, अपिशब्दाद् अशालार्थापि, तदन्तः षष्ठीतत्पुरुषसमासो नपुंसकलिङ्गो भवति । 'सभा राजामनुष्यपूर्वा' (२. ४. २३) इति सूत्रेण नपुंसकत्वम् । 'अत्रामनुष्यशब्दो [1]रक्षःपिशाचेषु रूढः' इति काशिका (१, पृ. १३२) । अत्र वेदभाष्यकर्ता हरदत्ताचार्यः—'तत्र पूर्वसूत्रेण राजामनुष्यपूर्वत्वे शालावचनस्यापि भविष्यति, 'अशाला च' इत्यत्र तु अशालावचनत्वे राजामनुष्यपूर्वत्वाभावेऽपीति[2]' (पदम. पृ. ६३) । अत्रोदाहरणानि स्वयमेव दर्शयति—दासीसभं—इमा दिशः । अत्र दासीसभमित्येतत् 'संहतौ सभा' (श्लो. २६) इत्यस्योदाहरणम् । नृपसभमित्येतद् राजव्यतिरिक्तराजपर्यायोत्तरस्य । रक्षःसभमित्येतदमनुष्योत्तरस्य । 'अशाला च' (२. ४. २४) इति निर्देशाद् दासीसभं दासीसमूहमित्यर्थः । नृपाणां संहतिः शाला च नृपसभम् । राजपूर्वस्य तु 'नाभौ राजसभापि च' इति स्त्रीलिङ्गत्वमुक्तम् (पृ. ६७८, श्लो. ६) । तस्माद् अराजकादित्युक्तम् । अत्र राजशब्देन राजपर्यायाणामेव ग्रहणम् । न तु [3]तद्विशेषाणाम् । तेन ब्रह्मगुप्तसभा, हरिश्चन्द्रसभा इत्यादौ स्त्रीलिङ्गत्वमेव । अमनुष्याणां रक्षसां संहतिः शाला वा रक्षःसभम् ।

**इमा दिश उदाहरणप्रकारा इत्यर्थ । तत उदाहरणान्तराण्यपि उन्नेयानीति भावः । यथा—स्त्रीणा समूह स्त्रीसभम्, ईश्वरसभम्, राक्षससभम्, पिशाचसभमित्यादि । षष्ठ्या इति किम्? दासीप्रधाना सभा दासीसभा इति[4] ।। २७ ।।**

[1] रूढिरूपेण रक्ष पिशाचादिष्वेव वर्तते इति मु ग्र [2] Gm1, Gm3 add भवति [3] तत्तद्विशेषाणाम B5, B6. [4] तत्पुरुष इति किम्? ईश्वरस्य सभेव सभा यस्य स ईश्वरसभ । 'सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च' (वा २ २ २४) इति बहुव्रीहि इति भा दी (पृ ५२६)

(पा) शालार्थापि—इमा दिश । राजशब्दवर्जितराजार्थकभ्य अमनुष्यार्थकेभ्यश्च षष्ठ्या पर [1]सभाशब्द सहतिशालार्थयो [2] नपुसकलिङ्गो भवति । राजार्थषष्ठ्या उदाहरणम्—नृपसभमिति । नृपाणा[3] सहति शाला चेत्यर्थ । रक्ष सभमिति अमनुष्यार्थषष्ठ्या उदाहरणम् । रक्षसा सहति शाला चेत्यर्थ । अमनुष्यशब्दो रूढ्या रक्ष पिशाचादिवचन । अन्यत्र तु 'स्यात् सुधर्मा देवसभा' इति (१, पृ ३४) ।। २७ ।।

[1] B3 adds समस्त [2] A1 adds द्वयोरपि [3] A1 omits the sentence

**उपज्ञोपक्रमान्तश्च तदादित्वप्रकाशने ।**
**कोपज्ञकोपक्रमादि कन्थोशीनरनामसु ।। २८ ।।**

(वि) उपज्ञोपक्रम—प्रकाशने । [1]आद्य ज्ञानमुपज्ञा । उपक्रम्यत इत्युपक्रम । इमावन्तौ यस्य [2]समासस्य स उपज्ञोपक्रमान्त । तदादित्वप्रकाशने —तयो उपज्ञोपक्रमयो आदित्वप्रकाशने उपज्ञेयस्य उपक्रम्यार्थस्य च प्रकाशने द्योत्ये सति नपुसक[3] भवति । उदाहरणे स्वयमेव दर्शयति—कोपज्ञकोपक्रमादि इति । कस्य ब्रह्मण उपज्ञा कोपज्ञम् वेद । कस्य ब्रह्मण उपक्रम कोपक्रम [4]सर्ग । आदिग्रहणात् प्राचेतसोपज्ञ रामायणमित्यादि ।। कन्थोशीनरनामसु । उशीनरदेशे या कन्था षष्ठ्या परा तदन्त समास सज्ञाया नपुसकलिङ्गो भवति । अत्रोदाहरणे —सुशमस्यापत्यानि सौशमय । तेषा कन्था सौशमिकन्थम्[5] ।। २८ ।।

[1] K4 omits two lines [2] K2 adds षष्ठी° [3] नपुसकलिङ्ग K5 [4] स्वर्ग K4 [5] K5 adds आश्वकन्थम्, कन्था नगरी

(विव.) उपज्ञोपक्रम—प्रकाशने। अत्राप्युपदेशमन्तरेण प्राग्भवीयसंस्कारादिना स्वेनैव उपज्ञायत इत्युपज्ञा, स्वयमेव प्रतिभातं वस्तु । उपक्रम्यत इत्युपक्रमः । अन्योपदेशं विना स्वत एव प्रक्रान्तं वस्तु । अनयोरर्थयोः अभिधायकौ उपज्ञोपक्रमशब्दान्तौ यस्य षष्ठीसमासस्य असौ उपज्ञातः उपक्रान्तश्च । तयोः उपज्ञोपक्रमयोः आदित्वे प्रायम्ये गम्यमाने नपुंसकलिङ्गो भवति । तदुक्तम्—' उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ' (२. ४. २१) इति ।। स्वयमेवोदाहरति — कोपज्ञकोपक्रमादि । कस्य ब्रह्मणः उपज्ञा कोपज्ञं वेदः । कस्य ब्रह्मणः उपक्रमणं कोपक्रमं सर्गः । आदिशब्दात् ' प्राचेतसोपज्ञं रामायणम् ' (रघु. १५. ६३) । मनूपज्ञं लोकव्यवहारः । नन्दस्य उपक्रमाः नन्दोपक्रमाणि मानानि । ' तिर्यञ्चमप्यञ्च मृपानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम् ' इति नैषधकाव्ये (३. ६४) । ' रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ' इति [1]कालिदासः (रघु. १२. ४२) । तदादित्वप्रकाशने इति किम्? देवदत्तोपज्ञो ग्रन्थार्थः । यज्ञदत्तोपक्रमः स्वाध्यायः इति । अत्र क्रियासंबन्धमात्रस्य विवक्षितत्वात् तदादित्वप्रकाशनमविवक्षितम् । षष्ठ्या इत्येव त्वदुपक्रमः मदुपक्रमः इत्यत्र विशेषणसमासे पुंलिङ्गत्वमेव ।।

कन्योशीनरनामसु । उशीनरो नाम देशविशेषः । तत्प्रतिबद्धा ग्रामा अपि [2]उशीनरनामसंज्ञाः । उशीनराश्च नाम चेति [3]बहुवचनानुपपत्तेः । अयमर्थः कन्याशब्दान्तः षष्ठीतत्पुरुषो नपुंसकलिङ्गः स्यात्, संज्ञायां विषये सा चेत् कन्या उशीनरेषु उशीनराख्ये देशे भवति । तथा ' संज्ञायां कन्योशीनरेषु ' (२. ४. २०) इति नपुंसकत्वम् । यथा—सौशमिकन्थम् । आह्वरकन्थम् इति । सुशमस्यापत्यानि सौशमयः, तेषां कन्था इति शब्दसाधुत्वार्थं व्युत्पत्तिमात्रकथनम् । वस्तुतस्तु—कन्याविशेषस्येयं प्रसिद्धा संज्ञा । एवम् आह्वरकन्थम् । उशीनरेष्विति किम् ? दाक्षेरिति प्रसिद्धस्य कस्यचित् देशान्तरभवा कन्या दाक्षिकन्थेति संज्ञया प्रसिद्धा, तत्र मा भूत् । नाम्नीति किम्? उशीनरदेशेष्वेव, वरिणाना कन्था इति योगवशादेव वरिणकन्थेति प्रयुज्यते । तत्र नपुंसकत्वं मा भूत् इति [4] ।। २८ ।।

[1] रघुकार Gm3    [2] उशीनरा नाम B8    [3] बहुवचनोपपत्ति B5
[4] उपज्ञायते । 'आतश्चोपसर्गे' इति कर्मण्यङ [उपज्ञा], उपक्रम्यते । कर्मणि घञ् [उपक्रम], कम्यते । बाहुलकात् थन् [कन्था] इति भा दी (पृ ५२६)

(पा.) उपज्ञोपक्रम—प्रकाशने । उपज्ञायत इत्युपज्ञा । उपक्रम्यत इत्युपक्रम । उपज्ञोपक्रमयो. प्राथम्ये गम्यमाने तदन्ता [1] तत्पुरुषा[2] नपुंसकलिङ्गा ।

कोपज्ञकोपक्रमादि इति तदुदाहरणम् । कस्य ब्रह्मण [3] उपज्ञा कोपज्ञ, कोपक्रम वा सृष्टि । वाल्मीक्युपज्ञ वाल्मीक्युपक्रम वा श्लोक । प्राथम्यागम्ये चेन्न भवति । दवदत्तोपज्ञा[4] देवदत्तोपक्रमो वा तटाकस्नानम् ।। कन्थोशीनरनामसु । कन्यान्त [5] तत्पुरुषो नपुसकलिङ्ग स चेद् उशीनरदेशोत्पन्नाया कन्थाया सज्ञा । सौशमिकन्थम् । आह्लिकन्थम्[6] । उशीनरग्रहणादत्र न भवति—दाक्षिकन्था । नामग्रहणादत्र न भवति—चैत्रकन्था ।। २८ ।।

[1] उपज्ञोपक्रमान्ता A1, [2] समुदाया षष्ठीसमासेन A1 [3] A1 omits
[4] विष्णुकर्मोपज्ञा विष्णुकर्मोपक्रम A1 [5] उशीनरदेशे सज्ञाया षष्ठ्या पर कन्याशब्द नपुसक A1 [6] आह्वार° A1

**भावे नणकचिद्भ्योऽन्ये समूहे भावकर्मणो ।**
**अदन्तप्रत्यया· पुण्यसुदिनाभ्या त्वह पर. ।। २९ ।।**

(वि) भावे नणकचित्—अदन्तप्रत्यया । अदन्तप्रत्यया य भावार्थे विहिता नणकचिद्भ्योऽन्ये नप्रत्ययणप्रत्ययकप्रत्यय-चकारानुबन्धकप्रत्ययेभ्य इतरे कृत्सज्ञका , य च समूहार्थे भावकर्मणोश्चार्थे विहिता तद्धितसज्ञका , तेऽदन्तप्रत्यया नपुसकलिङ्गा भवन्ति। अत्रोदाहरणानि—साराविण वर्तते । [1]समन्ताद् रावो वर्तत इत्यर्थ । [2]साकूटिन वर्तते । [3]भिक्षाणा समूहो भैक्षम् । भावकर्मणोर्यथा—ब्राह्मणस्य भाव कर्म वा ब्राह्मण्यम् इत्यादि । पुण्यसुदिनाभ्यामह परम । पुण्य च सुदिन च पुण्यसुदिने । ताभ्या परमुत्तरभूतम्[4] अहरिति पद [5]कृतसमासान्त नपुसकलिङ्ग भवति । अत्र सुदिनशब्द शोभनवचन । उदाहरणे—पुण्याहम्, सुदिनाहमिति ।। २९ ।।

[1] K3 omits the sentence [2] K2 omits [3] K2, K4 add समूहार्थे यथा
[4] उत्तरपदभूतम् K2, K3 K4 [5] K2 K3 omit

(खिव) भावे नणकचित्—अदन्तप्रत्यया । अत्र नणकचिद्भ्य इत्युपलक्षणम् । ततश्च नप्रत्ययणप्रत्ययकप्रत्ययचकारानुबन्धप्रत्ययेभ्य स्त्रीलिङ्गपुलिङ्गप्रकरणोक्तघञ्याधितप्रत्ययेभ्यश्चान्ये ये धात्वर्थलक्षणभावार्थविहिता कृत्सज्ञका, ये च समूहाद्यर्थत्रये विहिता तद्धितसज्ञका अदन्तप्रत्यया ते तदन्ता शब्दा नपुसकलिङ्गा भवन्ति । तत्र भावमात्रे यथा—समन्ततो

रावणमिति विग्रहे, 'रु शब्दे' इति सपूर्व, 'अभिविधौ भाव इनुण्' (३ ३ ४४) इति इनुण्प्रत्यय । तदन्तात् स्वार्थे 'अणिनुण' (५ ४ १५) इत्यण् । 'नस्तद्धिते' (६. ४. १४४) इति प्राप्तस्य टिलोपस्य, 'इनण्यनपत्ये' (६. ४ १६४) इति प्रकृतिभावात् प्रतिषेध । एव सारावविणम् । एव साकोटिनम् इति । तथा 'भुवो भावे' इति क्यप्प्रत्यये ब्रह्मभूयम्, देवभूयम् इत्यादि । तथा 'नपुसके भावे क्त' (३ ३ ११४) इति भावे क्तप्रत्यये हसितम्, जल्पितम् इत्यादि । 'यजयाच ' (३ ३ ९०) इत्यादिना विहितनङप्रत्ययान्ताना स्वप्नयज्ञप्रश्नादीना, 'नौ ण च' (३ ३ ६०) इति णप्रत्ययान्तस्य,[1] घञर्थे कप्रत्ययान्ताना (वा ३ ३ ५८) आखूत्थादीनां चकारानुबन्धप्रत्ययाना चय[2]जयादीनामन्येषा चोपलक्षणप्रसक्त-घञादिप्रत्ययान्ताना पाकादीना च भावविहितकृत्प्रत्ययान्तत्वे सत्यपि पर्युदास-सामर्थ्यात् तेषा नपुसकत्व न भवति ।

समूहे यथा—भिक्षाणा समूहो भैक्षम । 'भिक्षादिभ्योऽण्' (४ २ ३८) इति । युवतीना समूहो यौवतमिति । भिक्षादिषु पाठसामर्थ्यादेव पुवद्भावो नास्तीति काशिका (१, पृ ३०६) । महाभाष्ये तु—'भस्याढे तद्धिते' (वा ६ ३ ३५) इति पुवद्भावे, 'प्रकृत्याके राजन्यमनुष्ययुवान ' (वा ७ १ १) इति प्रकृतिभावे टिलोपाभावे च [3]यौवतमित्युक्तम् । तथा च वार्त्तिकम्—'भिक्षादिषु युवतिग्रहणा-नर्थक्य पुवद्भावस्य सिद्धत्वात्' इति । तथा 'गोत्रोक्षोष्ट्रोरभ्र ' (४.२ ३९) इत्यादिना वुञ्प्रत्यये गर्गाणा समूहो गार्गकम् । उक्ष्णा समूह औक्षकम् । एव औष्ट्रकमित्यादि । तथा 'केदाराद्यञ्च' (४ २ ४०) इति कैदार्यम, कैदारकम् इत्यादि । अत्र द्वितीयभावशब्देन प्रवृत्तिनिमित्त[4] विवक्षितम् । यथा—गोर्भावो गोत्वम् । 'तस्य भावस्त्वतलौ' (५ १ ११९) इति त्वप्रत्यय । अश्वत्वम, घटत्वमिति । 'वर्णदृढादिभ्य ष्यञ् च (५ १ १२३) इति ष्यञ् । शौक्ल्यम्, कार्ष्ण्यम्, दार्ढ्यम् इति । कर्मव्यापारे यथा—'गुणवचनब्राह्मणादिभ्य कर्मणि च' (५ १ १२४) इति ष्यञ्प्रत्यय । यथा—राज्ञो भाव कर्म वा राज्यम् । आधिपत्यम् । युवादित्वाद् अण प्रत्ययो भवति (५ १ १३०) । कौशलम्, कौशल्यम्, चापलम, चापल्यम्, पैशुनम्, पैशुन्यम् इत्याद्युदाहार्यम । अदन्तग्रहण स्पष्टार्थम् ।।

पुण्यसुदिनाभ्या त्वह पर । पुण्यसुदिनाभ्या पर कृतसमासान्तोऽह शब्दो नपुसके । यथा—पुण्य च तदहश्चेति पुण्याहम् । सुदिन च तदहश्चेति सुदिनाहम् ।

सुदिनशब्दः शोभनमात्रवचनः। तथा—'सुदिनासु सभासु कार्यमेतत् परिचिन्वीत विशेषतः स्वय च' इति प्रयोगः। तथा च 'भवन्तु सुदिनाह.क्रिया.' इति च। 'अह्नाह्नान्ताः' इति प्रागुक्तस्य (श्लो. १२) अपवादोऽयम्। तथा च 'पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते' (वा. २. ४. १७) इति नपुसकत्वम् ॥ २९ ॥

[1] Tj1, Tj2 add अदन्तार्थस्य [2] चयनयजनादीना B5, B6. [3] यौवनम् Gm1, Gm3 [4] काशिका (२, पृ २५)

(पा) भावे नणकचिद्भ्योऽन्ये। भावे विहिता नणकचिद्व्यतिरिक्ता कृत्प्रत्यया अदन्ता नपुसकलिङ्गा[1]। 'अभिविधौ भाव इनुण्' (३ ३ ४४)। [2]'अणिनुण' (५ ४ १५)। समन्ताद् राव साराविण वर्तते। 'भुवो भावे' (३ १ १०७) इति क्यप्। ब्रह्मणो भाव ब्रह्मभूय गत। अदन्तग्रहणादत्र न भवति—सधि, व्यवधि इति॥ समूहे—अदन्तप्रत्यया। समूहे च भावकर्मणोश्च विहिता तद्धितप्रत्ययान्ता नपुसका। समूहे यथा—काकाना समूह काकम्। भैक्षम्। औक्षकम्। कैदार्यम्। कावचिकम्। अदन्तग्रहणादत्र न भवति—खलाना समूह खलिनी। भावकर्मणोर्यथा—शुक्लस्य भाव कर्म वा शौक्लचम्। मार्दवम्। मानोज्ञकम्। ब्रह्मत्वम्। अदन्तग्रहणादत्र न भवति—[3]पृथोर्भाव प्रथिमा॥ पुण्यसुदिनाभ्या त्वह पर। पुण्यसुदिनाभ्या पर अह शब्दो नपुसक। पुण्यमह पुण्याहम्[4]। सुदिनमह सुदिनाहम्। 'सुदिन शोभनार्थे स्याद् दुर्दिन तद्विपर्यये' ॥ २९ ॥

[1] नपुसका A1 [2] A1 omits [3] B3, C1 omit [4] A1 adds पुण्य हवनमुच्यते

क्रियाव्ययानां भेदकान्येकत्वेऽप्युक्यतोटके।
चोचं पिच्छं गृहस्थूणं तिरीटं मर्मयोजने ॥ ३० ॥

(वि) क्रियाव्यय—एकत्वेऽपि। क्रियाविशेषणानि अव्ययविशेषणानि च। अपिशब्दात् क्रियाव्ययाश्च नपुसकलिङ्गा भवन्ति। तान्येकत्वे एवयचने वर्तन्ते। क्रियाविशेषणानि यथा—शोभन पचति। मन्द पचति। साधु वदतीत्यादि। अव्यय-

विशेषणानि यथा—पुरस्ताद्रमणीयम् । प्रागन्तव्यम् इत्यादि । क्रियाव्यया यथा—[1]पचतिरूपम् । [1]पचतिकल्पम् । [1]पचतिदेश्यम् इत्यादि । अत्र काश्चिन्नपुसकलिङ्गान् स्वरूपेणाह—उक्थतोटके—मर्मयोजने । उक्थ [2]सामविशेषः । तोटक वृत्तविशेषः । चोच लवङ्गाख्यगन्धद्रव्यम्[3] । [4]उक्तमेकाक्षरं छन्द । गृहस्थूण गृहस्तम्भः । किरीटं[5] शिरोवेष्टनम् । मर्म सधिस्थानम् । योजन क्रोशचतुष्टयम् ॥ ३० ॥

[1] पचन्ति° K₂, K₆　[2] सामभेद K₃, K₄.　[3] °द्रव्यविशेष. K₆.　[4] उक्तमिति विवृतौ पाठ , पिच्छमिति पाठे मयूरच्छद K₅　[5] किरीटमिति विवृतौ पाठ

(विव.) क्रियाव्यय—एकत्वेऽपि । धात्वर्थलक्षणक्रियाणाम् अव्ययार्थस्य च यानि भेदकानि विशेषणानि तदभिधायकानि शब्दरूपाणि नपुसकलिङ्गानि एकवचनानि च भवन्तीत्यर्थः । क्रियाया अव्ययार्थस्य चासत्त्वरूपत्वेन लिङ्गसंख्याभावात् तद्विशेषणमपि अलिङ्गसंख्यत्वे प्राप्ते इदमारब्धम् । क्रियाविशेषणानि यथा—शोभनं पचति । [1]संतत पठति । ' मन्दं नुदति पवनः ' इति (मेघ. १. १०) । अव्ययविशेषणानि यथा—निर्मलं प्रातः । शोभनं श्वः इत्यादि । तथा—' तिङश्च ' (५. ३. ५६) इति वर्तमाने ' प्रशंसायां रूपप् ' (५. ३. ६६) । यथा—पचतिरूपम्, पचतोरूपम्, पचन्तिरूपम् इति । तथा—' ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ' (५. ३. ६७) इति । पचतिकल्पम्, पचतःकल्पम्, पचन्तिकल्पम् इति । अत्र काशिका (२, पृ. ६६)—' क्रियाप्रधानमाख्यानं भवति । एका च क्रियेति रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः[2] । नपुसकलिङ्गं तु भवति, लोकाश्रयत्वाल्लिङ्गस्य ' इति । अत्र न्यासः (२, पृ. १२७)—' यदि तर्हि एका क्रिया, पचतः पचन्तीति द्विवचनबहुवचने न भवतः, नैतत् साधनाश्रये भविष्यतः । रूपप्प्रत्ययान्तात्तु तिङन्तेनैवोक्तत्वाद् न भविष्यतः, एकवचनं तु भवति । "' एकवचनमुत्सर्गतः करिष्यति " इति न्यायात् तस्यौत्सर्गिकत्वादिति ' ।

अथ कानिचिद् नपुंसकानि लिङ्गानि स्वरूपेण निर्दिशति—उक्थतोटके—मर्मयोजनम् । उक्थं नाम सुत्याहे[4] होत्रादिभिः शंस्यः सप्रतिगरमृक्समूहः । यथा—' आज्यमुक्थमव्ययत् ' (तै. सं. ४. ४. २. १), ' प्र उगमुक्थमव्ययत् ' (तै. सं. ४. ४. २. १) इत्यादि । तोटकं रूपकभेदः, छन्दोभेदो वा । ' इह

तोटकमम्बुधिसै. प्रमितम्[5] ' इत्युक्तलक्षणवृत्तविशेषश्च । चोच लवङ्गाख्य गन्धद्रव्यम् । ' चोच भुक्तफलावशेष ' इति चन्द्र. । तालफलमित्यपरे । [6]उल्ब प्रागुक्तलक्षणम् (१, पृ ३८३) । पिञ्छमिति पाठे मयूरस्य शिखण्डः । गृहस्य स्थूणा गृहस्थूणमिति विग्रहे षष्ठीतत्पुरुषस्य परलिङ्गत्वबाधेन नपुसकत्वमुच्यते । वामनीयलिङ्गानुशासनेऽप्युक्तम्—' ऊर्णास्थूणे शशगृहपरे ' इति शशगृहशब्दाभ्या ये ऊर्णास्थूणे शब्दौ तदन्तः षष्ठीतत्पुरुषो नपुसकलिङ्ग इत्यर्थः । तिरीटं वेष्टनम् । किरीट शिरोवेष्टनमिति केचित् पठन्ति । शिरोभूषणमित्यरुणदत्त. । मर्म प्राणसचरणस्थानम् । योजन क्रोशचतुष्टयम्[7] ॥ ३० ॥

[1] सुम्वर Gm3, Tv [2] सिदध्यत इति मु ग्र [3] ' एकवचनमुत्सर्गं करिष्यत इति वचनात् ' इति मु ग्र [4] सुत्याग्निहोत्रादि° Tv [5] प्रथितम् Tv [6] उल्बमिति विवरणे पाठ [7] उच्यते । ' पातृतुदि ' (उ २ ७) इति थक् [उक्थम्], तुदति । ण्वुल् [तोटकम्], चञ्चति, चच्यते वा । पचाद्यच् । घञ् वा । पृषोदरादि [चोचम्], पिच्छ्यते । घञ् [पिच्छम्], तरति तीर्यते वा । कृतॄकृपिभ्य कीटन् ' (उ ४ १८५) [तिरीटम्], म्रियतेऽनेन । ' सर्वधातुभ्यो मनिन् ' (उ ४ १४५) [मर्म], युज्यते । कर्मणि ' कृत्यल्युटो बहुलम् ' इति ल्युट् [योजनम्] इति भा दी (पृ ५२९-३०)

(पा ) क्रियाव्यय—एकत्वेऽपि । क्रियाविशेषणानि अव्ययविशेषणानि च नपुसकानि । यथा—स्तोक पचति । पुरो रमणीयम् । एकत्वेऽपीत्यनेन उभयत्रैकवचनम् । उक्थतोटके—मर्मयोजने । उक्थादीनि नपुसकानि । उक्थ सामभेद [1] । तोटक वृत्तभेद । ' इह तोटकमम्बुधिमै प्रमितम् '। चोच नारिकेलफलम् । [2]उक्त वचनम् । छन्दोभेदो[3] वा । ' उक्तमेकाक्षर छन्दस्युक्त स्याद् भाषितेऽपि च ' इति विश्व (पृ ५६, श्लो ३५) । गृहस्थूण गृहमध्यस्तम्भ । ' निहङ्ङु '[4]। वेश्मस्थूणा गृहस्थूणमुल्बस्थूणा तु[5] पादिका ' इति वैजयन्ती (पृ १६२, श्लो ३६) । गृहस्य स्थूणा गृहस्थूणमित्येवप्रकारेण ब्रह्मणि चर्या ब्रह्मचर्यम् । तिरीट किरीटम् । मर्म जीवस्थानम्[6] । ' जीवस्थान भवेन्मर्म ' इति हलायुध (अ मा २ ३७४) । योजन क्रोशचतुष्टयम्[7] ॥ ३० ॥

[1] साम A1 [2] पिच्छम् B3, C1 [3] छन्दो वा A1 [4] B3 omits [5] अन्तस्थूणा A1, B3 [6] जीवाधाम A1 [7] A1 adds ' आयद '

राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः ।
माणिक्यभाष्यसिन्दूरचीरचीवरपञ्जरम् ॥ ३१ ॥
लोकायतं हरितालं विदलं स्थालबाह्लवम् ।

इति नपुंसकलिङ्गशेष.

(वि) राजसूय—स्थालवाह्लवम् । राजसूयादिशब्दा नपुसका । [1]राजसूयवाजपेयौ यज्ञविशेषौ । कवे कृतौ कविविरचिते गद्यपद्ये वर्तेते । गद्यमपादवद्धम् । पद्य पादवद्धम् । माणिक्य मणिविशेष [2]। भाष्य सूत्रव्याख्यानम्[3] । सिन्दूर नागसभवम् । चीर वल्कलवस्त्रम् । चीवर मुनिवास [4] । पञ्जर पक्ष्यादिवन्धनम् । लोकायत चार्वाकतर्कशास्त्रम् । हरिताल धातुविशेष । विदल दाडिमफलकणम् । स्थाल भोजनपात्रम् । बाह्लीक देशभेद ॥ ३१ ॥

इति नपुसकलिङ्गशेष [5]

[1] राजसूयवाजपेयौ पुलिङ्गेऽपि भवत [2] मणि $K_3$, $K_5$ [3] °व्याख्या $K_2$, $K_4$
[4] °वस्त्रम् $J_2$ [5] °विशेष $K_2$, $K_4$

(विव.) राजसूय—बाह्लकम् । राजसूयवाजपेयशब्दयोः यज्ञविशेषवचनयोः पुलिङ्गत्वेन सर्वत्र प्रसिद्धत्वाद् इह ताभ्यामन्नविशेषावेव विवक्षिताविति सुबोधिनीकारः । कवेः कृतौ काव्ये वर्तमानौ गद्यपद्यशब्दौ नपुसकलिङ्गौ । 'अपाद' पदसतानो गद्यम्' (काव्यादर्शः १. २३) । पद्यं तु पादबद्धम् । कविकृतेरन्यत्र तु 'गदमद . . .' इत्यादिना (३. १ १००) यत्प्रत्यये गद्या वाक्, गद्यः श्लोक, गद्य वचनमिति । तथा—'पदमस्मिन् दृश्यम्' (४. ४. ८७) इति यत्प्रत्यये पद्या धूलिः, पद्यः कर्दम', पद्यं रजः इति विशेष्यनिघ्नत्वमेव । मणिशब्दात् प्रशसाया कन्प्रत्यये, ततः स्वार्थे ष्यञि माणिक्यं रत्नविशेषः । भाष्य सूत्रव्याख्यानरूपो ग्रन्थः । तदुक्तम्—

"सूत्रार्थो वर्ण्यते यत्र वाक्यै. सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्य भाष्यविदो विदुः ॥'

इति । सिन्दूरं स्त्रीणां सीमन्तप्रसाधनार्थो [2]रक्तद्रव्यविशेषः । चीरं वल्कलादिवस्त्रम् । 'अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि' इति रघुवंशे (१३ २२) । चीवरं जीर्णत्यक्तवस्त्रम् । 'प्रेतचीवरवसा स्वनोग्रया' इति च तत्रैव (रघु. ११. १६ ) । पञ्जरं वंशशलाकादिकृतं शुकशारिकादिपलायनप्रतिबन्धनार्थं यन्त्रम् । लोकायतं चार्वाकशास्त्रम् । हरीतालं हरिद्रासदृशवर्णो धातुविशेषः । हरितालमिति ह्रस्वद्वितीयाक्षरशब्दस्तु प्रागुक्तः (१, पृ. ६१४) । अत एव 'हरितालं हरीतालम्' इति शब्दभेदप्रकाशे द्वयमप्युक्तम् । द्विधाकृते मुद्गमाषकलायादिधान्ये. द्विधाकृते वेणुवेत्रादौ च विदलशब्दो वर्तते । 'विदलं दाडिमबीजकणः' इति सुबोधिनीकारः । स्थालं कांस्यादिनिर्मितं विस्तृतं भोजनपात्रम् । '[3]स्थालानीव प्रेतराजस्य' इति माघकाव्ये (शिशु. १८. ६७) । बाह्लकं कुङ्कुमम् । बाह्लवं देशविशेष इति सुबोधिनीकारः । बाहुभवम् । अङ्गदादिपरिष्कारजातं बाहुभवमिति सुभूतिचन्द्रः[4] ॥ ३१ ॥

## इति नपुंसकलिङ्गशेषप्रकरणम्

[1] सूत्रग्रन्थ Gm1, Gm3 [2] रक्तचन्दनविशेष Gm1 [3] 'आहाराय प्रेतराजस्य रौप्यस्थालानीव स्थापितानि स्म भान्ति' इति मु ग्र [4] 'राजसूय . . .' (३ १ ११४) इति साधु [राजसूयम्], भाष्यते सूत्रार्थो येन । 'कृत्यल्युटो . . .' इति करणे ण्यत् [भाष्यम्], स्यन्द्यते । 'स्यन्दे सम्प्रसारण च' (उ १ ६८) इत्यूरन् [सिन्दूरम्], चयिते । 'शुसिचिमीना दीर्घश्च' (उ २ २५) इति रक् [चीरम्], चीयते । 'छित्वरच्छत्वर . . . चीवर . . .' (उ ३. १) इति साधु [चीवरम्], पिञ्ज्यते । बाहुलकादर. । पृषादरादि [पञ्जरम्], लोके आयनन्ते । पचाद्यच् । तेषामिद शास्त्रम् । तस्येदमित्यण् । सज्ञापूर्वकत्वाच्च वृद्धि [लोकायतम्], हरितेनालति । पचाद्यच् [हरितालम्]; विदलति । पचाद्यच् [विदलम्], स्थलत्यत्र । 'हलश्च' इति घञ् । [स्थालम्], बह्लदेशे भवम् । 'तत्र भव' इत्यण् [बाह्लवम्] इति भा दी (पृ ४३०)

(पा ) राजसूय—स्थालबाह्लिकम् । राजसूयादिबाह्लिकान्ता शब्दा नपुंसका । राजसूय वाजपेय यज्ञभेदौ । गद्यपद्ये द्वे कविकृती स्याताम् । अन्यत्र गद्या स्त्री । गदितव्येत्यर्थं । पद्या शर्करिला[1] पादाहतेत्यर्थं । माणिक्य मणि. । पल्ल्या तु नपुंसक न । 'टट्टनी मुसली पल्ली माणिक्या गृहगोधिका' इति वैजयन्ती (पृ १५०, श्लो ३०) । भाष्य विवरणभेद । सिन्दूर गतार्थम् (१, पृ. ६१५) । चीरचीवरे द्वे वस्त्रभेदौ । 'चीर गण्डामस्त्रियाम्[2]' इति, 'चीवर भिक्षुसघाटी'

इत्युभयत्र वैजयन्ती (पृ १६६, श्लो १३०, १२८)। पञ्जर पक्षिनीडम्। 'पिट्टगूडु'। लोकायत चार्वाकमतम्। हरिताल गतार्थम् (१, पृ ६१४)। हरिताली च गतार्था (?)। 'हरिताली नभोरेखादूर्वाखड्गलतासु च' इति विश्व (पृ १६१, श्लो १५५)। विदल [3]'स्राकुविडिके'। 'विदल दारु पाटितम्' इति वैजयन्ती (पृ ४६, श्लो १४)। दाडिमफलमिति क्षीरस्वामी[4] (पृ ३५३)। स्थाल भोजनपात्रम्। [5]बाह्लिक कुङ्कुमम् ॥ ३१ ॥

इति नपुंसकलिङ्गशेष

[1] शर्करा पदहिताहितेत्यय A1　[2] खण्डलमस्त्रियाम् इति मु ग्र　[3] B3 omits
[4] विदल दाडिमकण, फल [लि] स्य सिद्धम् इति मु ग्र　[5] बाह्लिकमिति पारिजाते पाठ

अथ पुंनपुंसकसग्रह—

**पुनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः ॥ ३२ ॥**
**मोदकस्तण्डकष्टङ्कः शाटकः खर्वटोऽर्बुदः।**
**पातकोद्योगचरकतमालामलका नडः ॥ ३३ ॥**

(वि) पुनपुसकयो शेष। पुनपुसक प्रागनुशिष्टेभ्य शिष्टा [1] अर्धर्चादिशब्दा पुनपुसकयो वर्तन्ते। के ते शब्दा—अर्धर्चपिण्याक—आमलका नड। ऋचोर्धमर्धर्च। पिण्याक [2]उद्धृततैलपिष्टम्। कण्टक [3] [4]तीक्ष्णाग्रस्वल्पखदिराद्यवयव [5]। मोदको भक्ष्यविशेष। तण्डक परिकर। टङ्क पाषाणभेदक। शाटक स्वल्पवस्त्रम्। खर्वट [6]चतु शतग्रामसग्रहस्थानम्। अर्बुदो दन्तरोग। सख्याविशेषो वा। पातको ब्रह्महत्यादि। उद्योग उत्साह। चरको वैद्यशास्त्रभेद। *तमालो वृक्षभेद। आमलको धात्रीफलम्। नड तृणविशेष ॥ ३२-३ ॥*

[1] अवशिष्टा K2　[2] उत्पतत° K3, K4　[3] कूटक J2　[4] तीक्ष्णोग्र° K6
[5] °कटुक° K3, K6　[6] °ग्रामजन° J2

**(विव.)** पुनपुसकयो शेष। [1]पुनपुसकोभयलिङ्गत्वेन प्रागनुशिष्टेभ्य शेषो[2] वक्ष्यमाणोऽर्धर्चादि पुनपुसकयो वर्तत इत्यर्थ। अत्र कश्चिदाह—'पुनपुसकयो' इत्येकमेव पद आप्रकरणमधिक्रियते। शेषशब्दोऽर्धर्चादिशब्दवद्

विधेयभूत एव । उपयुक्तादन्यः शेषः । "शेषो बहुव्रीहिः" (२. २. २३) "शेषं पूर्ववत्" इत्यादौ शेषशब्दस्याप्युभयलिङ्गत्वदर्शनात्' इति । तदसङ्गतम् ।

'शेषोऽप्रधानेऽनन्ताख्ये सर्पराजेऽथ शार्ङ्गिणः ।
अवतारान्तरेऽपत्ये त्रिष्वन्यत्रोपयुक्ततः ।
माल्याक्षतादिदाने तु स्त्री शेषा ॥'

इति केशवस्वामिना (नाना. सं. १. पृ. १६३, श्लो. १४१५-१६) उपयुक्ताद् अन्यस्मिन्नर्थे त्रिलिङ्गत्वाभिधानात् केवलपुनपुंसकप्रकरणे शेषशब्दस्य पाठायोगाद् उपयुक्तादन्यः इत्यत्रापि शेषशब्दस्य लिङ्गविशेषः सूत्रस्थान्यशब्दवदेव प्राकरणिकविशेष्याभिप्रायेणोक्तः । इहापि 'कृतः कर्तर्यसंज्ञायाम्' (श्लो. ४५) इति विशेष्यनिघ्नत्वं वक्ष्यते । अत एव--'शेषान् मासान् गणय[3] चतुरो लोचने मीलयित्वा' इति कालिदासः (मेघ. २. ५०) । 'तया नभः पुष्यतु कोरकेण' इति नैषधकाव्ये (३. ११४) स्त्रीलिङ्गप्रयोगो विशेष्यानुरोधादेव । 'सप्तर्षिहस्तावचितावशेषाणि' इति (कु. सं. १. १६) नपुंसके ॥

तानेव शब्दानाह--अर्धर्चपिण्याक--आमलका नडः । अर्धं ऋचः अर्धर्चम्, अर्धर्चः । एवं तद्गणपठितानां सर्वेषां लिङ्गद्वये रूपद्वयं द्रष्टव्यम् । पिण्याकम् [4]उद्धृततैलपिष्टम् । कण्टको नाम खदिरबर्बरादिवृक्षाणां तीक्ष्णाग्रावयवविशेषः । 'रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्' इति रुद्रः । कङ्कट इति मूर्धन्यप्रथमोपधान्तपाठे कङ्कट उरच्छदः । मोदको भक्ष्यविशेषः । तण्टकः परिकरः । दण्डक इति दन्त्यवर्गतृतीयादित्वपाठे दण्डकः [5]समासप्रयोगगद्यविशेषः । टङ्कः पाषाणदारणः[6] । शाटकोऽल्पवस्त्रम्[7] । खर्वटः चतुःशतग्रामजनसंग्रहस्यानर्मिति सुबोधिनी । ग्रामजनवास्तव्यजनोपजीव्यो ग्रामः खर्वट इति सुभूतिचन्द्रः । खर्वटः प्रचुरकण्टकसंतानो ग्राम इति विज्ञानेश्वरः (या. स्मृ. २. १०. १६७) । कर्पट इति पाठे स्वल्पमुपसंव्यानम् । कर्पटः कौपीनमित्येके । अर्बुदं दन्तरोगविशेषः । संख्याविशेषश्च । पातकः पापविशेषः । उद्योग उद्यमः । चरकं वैद्यशास्त्रविशेषः । तमालं वृक्षविशेषः । आमलकं धात्री । नलो नडो वा [8]तृणविशेषः[9] ॥ ३२-३ ॥

[1] पुनपुंसकयो B3, B6 [2] Iv adds अवशिष्ट. [3] गणय इति मु. पु.
[4] उद्धृतम् निर्मपिष्टम् Gm1 [5] °प्रयोगस्य विशेष° B3 [6] °दारक° Gm1.

[7] स्वल्प° Gm1  [8] Tv adds अर्थान्तरे तु पुलिङ्ग  [9] 'अर्धं नपुसक्म्' इति समास । 'ऋक्पू  ' इत्य समासान्त [अर्धर्चम्], पच्यते । 'पिनाकादयश्च' (उ ४ १५) इति साधु [पिण्याकम्], कण्टति । ण्वुल् [कण्टक], मोदयते । ण्वुल् [मोदक], तण्डते । ण्वुल् [तण्डक], टङ्कयति । अच् [टङ्क], शटति । ण्वुल् [शाटक], खवति । 'शकादिभ्योऽटन्' (उ ८ ८१) [खर्वट], अर्वति । बाहुलकादुदच् [अर्बुद], पातयति । ण्यन्त । ण्वुल् [पातक], उद्योजनम् घञ् [उद्योग], चरति । क्वुन् (उ २ ३२) [चरक], ताम्यति । 'तमिविशि  ' (उ १ ११८) इति कालन् [तमाल] आमलक्या फलम् । 'नित्य वृद्ध  ' इति मयट् । 'फले लुक्' [आमलक], नडति । 'चुरादीना वा णिच' इति पक्षाश्रये पचाद्यच् [नड] इति भा दी (पृ ५३१)

(पा) पुनपुसकयो —आमलका नड । अर्धर्चादय पुनपुसकलिङ्गा । अर्धर्च ऋचोऽर्धम् । पिण्याको गतार्थ (पृ २३१, नाना ६) । कण्टको वेण्वादि । 'वेणौ द्रुमाङ्गे रोमाञ्चे क्षुद्रशत्रौ च कण्टक' इति पुलिङ्गाध्याये वैजयन्ती (पृ २४०, श्लो १४) । मोदको लड्डुक[1] । तण्डका गृहदारु । समासप्रायवचन वा । '[2]तण्डको दण्डक' इति क्षीरस्वामी (पृ ३५४) । टङ्को गतार्थ (१, पृ ६४०) । [3]शाकटो नाम प्रत्यय । तद्ग्रहणात् तदन्तस्यैव ग्रहणम् । शाकस्य क्षेत्र शाकशाकटम् । [4]खर्वटो ग्रामभेद । अर्बुद सख्याभेद । 'अथ स्त्री कोटिरर्बुदे' इति कोटिसख्याया वैजयन्ती (पृ १८८, श्लो २९) । 'दशकोटिषु चार्बुदम्[5]' इति दशकोटौ विश्व (पृ ७६, श्लो २३) । पातको ब्रह्महत्यादि । उद्योगो यत्न । चरक वैद्यशास्त्रम् । तमाल तमालपत्रम् । आमलकमामलकफलम् । नडो गतार्थ (१ पृ ३१६) ॥ ३२-३ ॥

[1] A1 adds 'लड्वम्  [2] 'तण्डक परिष्कार, दण्डको वायम इति मु ग्र
[3] शाकट इति पारिजात पाठ  [4] खपट A1 B3  [5] अर्बुद इति मु ग्र

**कुष्ठ मुण्ड शीधु बुस्त क्ष्वेडित क्षेमकुट्टिमम् ।**
**सगमं शतमानार्मशम्बलाव्ययताण्डवम् ॥ ३४ ॥**

(वि) कुष्ठ मुण्ड—ताण्डवम् । कुष्ठादय पुनपुसकलिङ्गा । कुष्ठ त्वग्दोष । मुण्ड कबन्ध । शीधु मद्यविशेष । पुस्त[1] लेख्यादिकर्म । क्ष्वेडितो विषविशेष[2] । क्षेम कुशलम् । कुट्टिमो मणिबद्धभूमि । सगमो नद्यादिमेलनम् ।

शतमान पलपरिमितम् । हेमरूप वा । अर्म अक्षिरोग । शम्वल पाथेयम् । अव्यय [3]स्वरादिनिपातरूपा चादय । ताण्डवो [4]नृत्तविशेप ।। ३४ ।।

[1] पुस्त इति विवृतौ पाठ [2] सिंहनाद K5 [3] अलिङ्ग शब्दरूपम् K5 [4] नाटयम् J2, K6

(विव.) कुष्ठं मुण्डं—ताण्डवम् । कुष्ठं गन्धद्रव्यविशेपः। रोगविशेपश्च । मुण्डं [छिन्न]मस्तकम् । तद्युक्ते तु वाच्यलिङ्गः । मुण्डो ब्रह्मचारी । मुण्डा विधवा इत्यादि । शीधु मद्यविशेपः । पुस्त पुस्तकम् । 'बुस्तं लेख्यकर्मविज्ञानयोरपि' इति स्वामी[1] (पृ. ३५४) । क्ष्वेडितमुत्साहर्जासिहनादः[2] । क्षेमं कुशलम् । कुट्टिमं मणिपापाणसुधादिबन्धनेन निर्वृत्तं स्थलम् । संगमं संवन्धः । नद्यादिमेलश्च । शतमानं पलपरिमितं रजतम् । तच्च[3] रजतमानप्रस्तावे याज्ञवल्क्यः (या. स्मृ. १. १३. ३६४-५)—

' द्वे कृष्णले रूप्यमापो धरणं पोडशैव ते ।
शतमानं तु दशभिर्धरणैः [4]पलमेव तु ।। '

इति । अर्मं नेत्ररोगविशेपः । तस्य द्विलिङ्गत्वेऽपि नपुंसकलिङ्ग एव प्रयोगप्राचुर्यदर्शनात् 'पत्तनाजिरशृङ्गार्मं' (पृ. ७०७) इति केवलनपुंसकलिङ्गमध्येऽपि पाठः कृत इति न विरोधः। शम्वलं पाथेयम् । अव्ययमलिङ्गसंख्यं शब्दरूपम् । तदुक्तम्—

' सदृश त्रिपु लिङ्गेपु सर्वासु च विभक्तिपु ।
वचनेपु च सर्वेपु यन्न व्येति तदव्ययम् ।। '

इति । ताण्डवमुद्धतनृत्यम्[5] ।। ३४ ।।

[1] 'बुस्त मागधपुस्तो' इति मु. प्र. [2] Gm1 adds 'यावेत्र' [3] तथा च Gm1 [4] परिमीलितम् Gm1, Gm3 [5] कुष्टादि, 'इतिकुष्टि . ' (उ ३ ३) इति कथन् [कुष्टम्], मुण्डपरो । मन् [मुण्डम्], [illegible] । 'शीढो धातुरर . . . ' (उ ४ ३८) इति धुक् [शीधु], बुस्तो [illegible] । [illegible] [बुस्तम्]; क्ष्वेडाम् । 'श्रीता [illegible] ' [क्ष्वेडितम्], [illegible] । 'अर्तिस्तुसु ' (उ ३ १४५) इति मन् [क्षेमम्], कुट्टेन निर्वृत्तम् । 'भाव ' (पा ४ ४ ७०) इति इमप् [कुट्टिमम्], [illegible] ।

'ग्रहवृद्  ' (३ ३ ५८) इत्यप् [सगमम्], ऋच्छति । 'अतिस्तुसु  ' (उ १ १४५) इति मन् [अम], शम्बत्यनेन। बाहुलकादलच् [शम्वलम्], न व्येति 'एरच्' [अव्ययम्], तण्डुना प्राक्तम । 'तेन प्रोक्तम्' इत्यण् [ताण्डवम]

(पा ) कुण्ठ मुण्ड—ताण्डवम । कुण्ठो गतार्थ (१, पृ ३९४)। मुण्ड शिर । ग्रीधुर्गतार्थ (१, पृ ६४४) । पुस्त पुस्तकम् । अथवा वुस्तमिति मासशष्कुली । 'वुस्त मासशष्कुली' इति क्षीरस्वामी[1] (पृ ३५४) । क्ष्वेडित सिंहनाद । 'पिडिवोब्ब' । क्षेम गतार्थम् (१, पृ ८८) । कुट्टिम [2]निबद्धभूमि । 'ऺरायिगट्टिननेल' । सगम सङ्ग । शतमान पलम् । 'शतमान तु कर्षे द्वे' इति वैजयन्ती (पृ १९०, श्लो ५०) । अथवा शतमाने सख्याभेदपरिमाणभेदे[4] । अर्म पक्ष्ममध्यकेश 'कोटिरेप्पलु' । शम्वल पाथेयम् । 'पाथेय शम्वल मतम्[5]' इति हलायुध (अ मा २ २०३) । अव्यय स्वरादिशब्द [6] । ताण्डव गतार्थम् (१ पृ १२६) ॥ ३४ ॥

[1] A1 adds 'मासचक्किलम'   [2] बद्ध° A1   [3] B3 omits   [4] A1 adds 'शङ्कुस्तु शत पुस्त' इति चन्द्रगोमी   [5] स्मृतम इति सु ग्र (पृ ३९)   [6] B1, C1 omit शब्द

कविय कन्दकार्पास पारावार युगधरम् ।
पूयं प्रग्रीवपात्नीवे यूष चमसचिक्कसौ ॥ ३५ ॥

(चि ) कविय—चमसचिक्कस । कवियम् अश्वमुखबन्धनम् । कन्दो मूलविशेष । [1]कार्पासि बादरम्[2] । पारावारम् उभयतटौ । युगधर रथकाष्ठम् । पूय क्लिन्नरुधिरम् । प्रग्रीवो वातायनम् । पात्नीवो यज्ञोपकरणम् । यूष मुद्गादि निर्यास । चमस यज्ञपात्रम् । चिक्कस [3]यवादिपिष्टम् ॥ ३५ ॥

[1] कर्पास J2   [2] खादरम K2   [3] मदादि° K6

(विय ) कविय—चमसचिक्कसे । कवियमश्वमुखबन्धनम् । कन्द सूरणादिमूलविशेष इति सुबोधिनीकार । सुभूतिचन्द्रस्तु—कर्मेति पाठेनाह । 'कर्म क्रिया । " कर्म व्याप्यक्रियाया च पुनपुसकयोर्मतम् " इति रुद्र ' इति । कार्पास वस्त्रयोनि । फलविशेषे च । पार नद्या परो देश । 'अवारमवाग्देश '

इति टीकाकृत्। युगधरः कूबरः। ईषाग्रमित्यन्ये। पर्वतविशेष इत्यपरे। पूयं क्लिन्नशोणितम्। सुभूतिचन्द्रस्तु यूपमिति पठित्वा यूप पशुबन्धकाष्ठमिति व्याचष्ट। [1]प्रग्रीवो वातायनम् इति स्वामी (पृ. ३५४)। 'प्रग्रीवो मत्तवारणः' इति प्रतापः। [2]पात्रीवशब्दस्तु अप्रसिद्धार्थः। यूष मुद्गकुलुत्थादिनिर्यूह.[3]। चमस· सोमाधारणपात्रविशेषः। स्त्रीलिङ्गप्रकरणेऽपि चमसीति ङीबन्त उक्तः (पृ. ६७६, श्लो. १०)। चिक्कसं यवादिपिष्टम्[4] ॥ ३५ ॥

[1] प्रग्रीवमिति मु ग्र [2] पात्नीय° $B_5$ [3] निर्व्यूह $T_{J1}$, $T_{J2}$ [4] क्वते। वाहुलकादिय [कवियम्], कन्दति। पचाद्यच् [कन्द], करोति। 'कृञ पास' (उ ५ ४५) [कर्पास], पारयति, न वारयति। पचाद्यच् [पारावारम्], युग धारयति। 'सञ्ज्ञाया भृतृ ' इति खच्। 'खचि ह्रस्व'। 'अरुर्द्विषत् ' इति मुम् [युगधर], युवन्त्यस्मिन्। 'कुयुभ्या च' (उ ३ २७) इति पो दीर्घश्च [यूपम्], पात्नी वाति। क (३ २ ३) [पात्नीवम्], यूपति 'इगुपध ' इति क [यूपम्], चमन्त्यनेन। 'अत्यावचमि ' (उ ३ ११७) इत्यसच् [चमसम्], चिक्कयति। अच्। चिक्क स्यति। 'आतोऽनुप ' इति क [चिक्कसम्] इति भा दी (पृ ५३२)

(पा) कविय—चमसचिक्कसे। कवियादय पुनपुसका। कविय खलीनम्। 'गुरूपुकशिलमु'। 'कवियोऽस्त्री खलीनोऽस्त्री पञ्चाङ्गी कविका [1]कवी' इति वैजयन्ती (पृ ११३, श्लो ११३)। कर्म[2] नाम करणम्। 'चेसुट'। 'करण क्लीबे कृत्य कर्म नृशस्ये क्रियाविला' इति गोपालित। कार्पासो गतार्थ (१, पृ ४३२)। 'प्रत्ति'। पारावारमुभयतटम्। 'पारावार समुद्रे च पारावार तटद्वयम्'[3] इति विश्व (पृ १४६, श्लो २५८)। युगधर गतार्थम् (१, पृ ५१८)। पूय शुक्लरक्तम्। 'पूय तु कुणप दूष्यम्' इति वैजयन्ती (पृ १८२, श्लो ११८)। प्रग्रीवोऽनेकार्थ। 'प्रग्रीवमस्त्री कलशे ग्रीवाप्रासादयोरपि[4]' इति वैजयन्ती (पृ २६१, श्लो ५६)। पात्नीव यज्ञोपकरणम्। यूप पक्वधान्यरस। 'पुल्ववट्टु[5]'। 'यूपो ऽस्त्री यू पुमान् रमे' इति वैजयन्ती (पृ १६७, श्लो १००)। चमस यज्ञपात्रविशेष[6]। चिक्कस यवपिष्टम्। 'यवपिण्डि' ॥ ३५ ॥

[1] कवि $B_3$ [2] कन्दस्य स्थाने कर्म इति पारिजातपाठ [3] तटद्वये इति मु ग्र
[4] °जालया $B_3$ [5] $C_1$ adds 'मुदर्नदि' [6] पर्शेऽम्बुप्रणयनम् $A_1$

**अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम् ।**
**तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ।। ३६ ।।**

इति पुंनपुंसकसंग्रहः

(वि) अर्धर्चादौ—शेषवत् । अर्धर्चादौ अर्धर्चादिगणे घृतादीना घृतक्षीरामृतादीना[1] [2]यद्वैदिक पुस्त्व पुलिङ्गत्व ध्रुव निश्चित, तदिह केवललौकिकशब्दावधि[3] कुर्वन् अस्मिन् ग्रन्थे नोक्तम्, लौकिकेऽपि च तत् पुलिङ्गमस्ति चेत् तर्हि शेषवदस्तु, तल्लिङ्गशेषत्वाद् अङ्गीकरोमीत्यर्थ ।। ३६ ।।

इति पुनपुसकलिङ्गशेषप्रकरणम्

[1] K₄ omits.　[2] पुस्त्व यत् इति विवृतौ पाठ　[3] °शब्दानधिकुर्वति K₄

(विव.) ननु अर्धर्चादिगणपठितानां घृतामृतक्षीरादिशब्दानां तत्तत्पर्यायकथनप्रस्तावे नपुसकलिङ्गत्वमात्रमेवोक्तम् । तत् ' अर्धर्चाः पुंसि च ' (२. ४. ३१) इति सूत्रेण विरुद्धमित्याशङ्क्य परिहरति—अर्धर्चादौ—तन्नोक्तमिह । इह ग्रन्थे घृतामृतक्षीरादिशब्दानाम् अर्धर्चादिगणपठितत्वेन पुंनपुंसकोभयलिङ्गत्वेनानुशिष्टानामपि यस्मात् पुलिङ्गत्वे वैदिकं छन्दोविषयत्वमेवेति ध्रुवं निश्चितम् । लोके घृतादिशब्दानां नपुसकत्वेनैव प्रयोगदर्शनाद् इति भावः । तस्मात् कारणाद् अस्मदीयग्रन्थस्य लोकप्रसिद्धमात्रसुशब्दानुशासनपरत्वात् तेषां शब्दानां पुलिङ्गत्वमत्र नेष्यते ।

ननु चात्यन्तविदुषोऽपि लोकप्रसिद्धसकलप्रयोगपरिज्ञानसाधर्म्याभावात् कथमुच्यते पुंस्त्वं वैदिकमेवेत्यत आह—लोके तु तच्चेदस्त्यस्तु शेषवत् । अत्र घृतादिशब्दाना लोके पुलिङ्गत्वं यदि महाजनप्रयोगेषु विद्येत तदप्यस्तु । न वयं निर्बन्धेन तेषां पुस्त्वं निराकरिष्याम इति भावः । तस्मात् कारणाद् अस्यास्मदीयग्रन्थस्य लोकप्रसिद्धमात्रसुशब्दानुपरत्वादिति । शेषवदिति दृष्टान्तः । शेषं नपुसकत्वं यथा तेषामङ्गीक्रियते, तद्वत् पुलिङ्गत्वमपीत्यर्थः । अथवा शेषवत् शेषाणामेवेत्यर्थः । यथा—पर्यायप्रस्तावे कुष्ठमुण्डशीधुपुस्तादीनां[1] केवलनपुसकत्वेनानुशिष्टाना[2]मप्यत्र कुष्ठ मुण्डं शीधु पुस्तम् इत्यादिनोभयलिङ्गत्वमुच्यते । तद्वद् घृतादिशब्दानामिति भावः । अथवा इह ग्रन्थे प्रमादाद् विस्तरभयाद्वा

छन्दोभङ्गभयाद्वा यदनुक्तं तच्छेषम् । तच्च शिष्टप्रयोगतो ज्ञेयमिति ग्रन्थान्ते वक्ष्यते । तद्वद् घृतादिशब्दानामपि पुंलिङ्गत्वं लोकेऽपि शिष्टप्रयोगतोऽङ्गीकरणीयमिति[3] ।। ३६ ।।

इति पुनपुसकलिङ्गशेपप्रकरणम्

[1] वुस्तादीना° Tv, प्रस्थादीना B5   [2] Tv omits अनुशिष्टाना   [3] घ्रियते । 'घृ सेके' । 'अञ्जिघृसिभ्य क्त' (उ ३ ८९) [घृतम्], वेदे उक्त ठञ् [वैदिकम्], ध्रुवति । 'इगुपध ' इति क [ध्रुवम्] इति तत्र तत्र भा दी

(पा ) अर्धर्चादौ—शेपवत् । अर्धर्चादिगणपठिताना घृतामृतरजतादिशब्दाना पुस्त्व यत् तद् वैदिकम् । यच्च लौकिक भवति चेत् शेपवदस्तु । इह लौकिकम्, तद्वैदिक नोक्तम् ।। ३६ ।।

इति पुनपुसकलिङ्गशेप

अथ स्त्रीपुंससग्रहः—

स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः ।
जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः ।। ३७ ।।

(वि ) स्त्रीपुसयोरपत्यान्ता । अपत्यप्रत्ययान्ता शब्दा स्त्रीपुसयोर्वर्तन्ते । अत्रोदाहरणानि—उपगोरपत्यम् औपगव । औपगवी । एव भैद , भैदी ।। द्विचतु —जातिभेदा । द्विपदचतुष्पदपट्पदोरगरूपजातिविशेपा स्त्रीपुसयोर्वर्तन्ते । द्विपदानामुदाहरणानि—नर , नारी । कुक्कुट , कुक्कुटी इत्यादि । चतुष्पदादीनामुदाहरणानि—भ्रमर , भ्रमरी इत्यादि । उरगाणामुदाहरणानि—पन्नग , पन्नगी । नाग , नागी । इत्यादि ।। पुमाख्याश्च स्त्रीयोगैं सह । पुमाख्या गणकमहामात्राद्या स्त्रीयोगैं सह स्त्रीणा पुयोगनिमित्तवाख्याभि सह स्त्रीपुसलिङ्गयोर्वर्तन्ते । अत्रोदाहरणानि— गणक पुरुप , तस्य स्त्री गणकी । महामात्रः पुरुप , तस्य स्त्री महामात्री । आदिशब्दाद् इन्द्र , इन्द्राणी इत्यादि । काश्चित् स्त्रीपुमलिङ्गान् शब्दान् स्वरूपेणाह—मल्लक इति । मल्लक मल्लकी दीपपात्रम् ।। ३७ ।।

(विव.) स्त्रीपुसयोरपत्यान्ता· । अधिकारोऽयम् । उत्तरप्रकरणाद् अपत्यान्ताः अपत्यप्रत्ययान्ताः शब्दाः स्त्रियां पुंसि च भवन्ति । यथा—उपगोरपत्य

पुमान् औपगवः, औपगवी स्त्री । भिदस्यापत्यं पुमान् भैदः, भैदी स्त्री । यद्यप्यत्र न्यासकारेण (पञ्जिका १, पृ. ८६२) 'गोत्रं [1]सर्वलिङ्गभाग् भवति' इत्युक्त्वा 'नाडायनः पुमान्, नाडायनी स्त्री, नाडायनं नपुंसकम्' इत्यादि लिङ्गत्रयेऽप्युदाहृतम्, यदाप्येवं त्रिलिङ्गत्वेऽपि स्त्रीलिङ्गत्वसद्भावादोऽत्र नानुपपन्नः । यथा—पात्रादयः स्त्रीलिङ्गा अप्यर्धर्चादौ पठिताः । सुभूतिचन्द्रस्त्वाह—'नहि नपुंसकत्वमप्यत्राप्युपदेशार्हम् । किं तर्हि ? यैरेव पूर्वजाः संतानोत्पादनद्वारेण 'पुंनाम्नो नरकाद् घोरात् त्रायन्ते' (म. स्मृ. ९. १३८) इति तान्येव अपत्यप्रत्ययोत्पत्तिस्तु संबन्धमात्राभिप्रायेण' इति । तथा कम्बोजादिभ्य इति उत्तरस्यापत्यप्रत्ययस्यात्रः 'कम्बोजाल्लुक्' (४. १. १७५) इति लोपेऽपि प्रत्ययलक्षणन्यायेनापत्यप्रत्ययान्तत्वमेव 'कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम्' (वा. ४. १. १७५) । कम्बोजः, कम्बोजी । चोलः, चोली इत्यादि ॥

द्विचतुः—जातिभेदाः । द्विचतुःषट्पदोरगाः द्विपदचतुष्पदषट्पदरूपजातिविशेषवाचकाः सर्पजातिविशेषवाचकाश्च शब्दाः स्त्रीपुंसयोर्वर्तन्त इत्यर्थः । क्रमेण यथा—मानुषः, मानुषी । कुक्कुटः, कुक्कुटी । मयूरः, मयूरी । मृगः, मृगी । शार्दूलः, शार्दूली । भ्रमरः, भ्रमरी । मधुकरः, मधुकरी । उरगः, उरगी । पन्नगः पन्नगी इत्यादि । द्विपदादिग्रहणं मत्स्यादीनामुपलक्षणम् । तेन मत्स्यः, मत्स्यी इत्याद्यपि द्रष्टव्यम् ।

पुमाख्याश्च स्त्रीयोगैः । पुंसः आचष्ट इति पुमाख्यः । अत्र सोपसर्गत्वाद् 'आतोऽनुपसर्गे कः' (३. २. ३) इति कप्रत्ययस्याभावः । 'कर्मण्यण्' (३. २. १) तु प्रकृतरूपसिद्धिः । तस्माद् मूलविभुजादिलक्षणः कप्रत्ययः, पुंसामाख्या इति वा (वा. ३. २. ५) । पुरोगत्वादिगुणविशिष्टपुरुषेष्वेव प्रयुक्तत्वाद् अत्र पुमाख्यशब्देन प्रष्ठमहामात्रगणका उच्यन्ते । स्त्रीति भिन्नं पदम् । स्त्रीकर्तृयोगैः स्वस्वपुरुषसबन्धैः स्वस्वामिभावादिभिर्हेतुभूतैः पुमाख्याः, स्वस्वपुराख्या लभते पुरुषे वर्तमानं प्रातिपदिकम् । तत्सबन्धापा स्त्रियामपि वर्तत इत्यर्थः । तथा चैकस्यैव लिङ्गद्वयवृत्तित्वमित्याशयः । यथा—प्रष्ठस्य भार्या प्रष्ठी । महामात्रस्य भार्या महामात्री । गणकस्य भार्या गणकी इत्यादि । तथा च जयादित्यः—'पुंयोगाद्धेतोः प्रातिपदिकं [2]पुमासमाख्याभूतं स्त्रियां वर्तते' इति (काशिका १, पृ. २७३) । अत्र न्यासकारः—'यथैव ह्यसौ स्त्री तद्योगात् स्नानोद्वर्तनाभिषेकान् लभते तथैव ताच्छब्द्यमपि' इति (पञ्जिका १, पृ. ८४६) । यथा[3] पुमाख्यास्तद्योगात्

स्त्रीषु वर्तन्ते तया[4] 'पुयोगादाख्यायाम्' (४. १. ४८) इति ङीप्। अन्यस्तु व्याचष्ट—'स्त्रीयोगैरित्यनन्तरस्य सहशब्दस्य पूर्वेण सबन्धः, पुमाख्याः प्रष्ठगणक-महामात्रेन्द्रवरुणशर्वाद्याः शब्दाः स्त्रीयोगैः सह स्त्रीणा पुंयोगनिमित्ताख्याभिः सह प्रष्ठी गणकी महामात्री इन्द्राणी वरुणानी शर्वाणी इत्यादिभिः सह स्त्रीपुंसयोर्वर्तन्ते' इति। अत्र पूर्वापरानुसधानरहितः कश्चिद् व्याचष्ट—[5]प्रष्ठजवनमहामात्राद्या अजातिवाचकाः शब्दा. स्त्रीणा पुरोगत्वशीघ्रत्वादिगुणयोगैः हेतुभि. स्त्रीष्वपि वर्तमाना. स्त्रिया पुसि च वर्तन्ते। यथा—[5]प्रष्ठः पुरुष', [5]प्रष्ठा स्त्री। जवन पुरुष, जवना स्त्री इत्याद्यूहनीयम्' इति। तदसङ्गतम्। 'उक्ता भूरिप्रयोगत्वात्' (१, पृ ६४७) इत्यत्रैव सकलयौगिकशब्दाना लिङ्गनिर्णयस्योक्तत्वाद् यौगिक-शब्दाना लिङ्गत्रयवृत्तित्वेन स्त्रीपुसप्रकरणानुपपत्तेश्च इत्यलमतिप्रसङ्गेन॥

अथ काश्चित् स्त्रीपुसलिङ्गान् स्वरूपेणाह—[6]सहमल्लक इति। मल्लकेन सह वर्तते इति सहमल्लक·[7] ॥ ३७ ॥

[1] मलिङ्ग° Tv [2] पुस आख्याभूतमिति मु ग्र [3] यदा TJ1 [4] तदा TJ1 [5] प्रेष्ठ° Tv [6] सहमल्लक इति विवरणाभिमत पाठ [7] मल्लते। 'मल्ल धारणे। ण्वुल् (३ १ १३३) [मल्लक] इति भा दी (पृ ५३२)

(पा) स्त्रीपुसयोरपत्यान्ता। स्त्रीपुसयोरिति आकुटीशब्दमधिकार। [1]अपत्यप्रत्ययान्ता शब्दा स्त्रीपुसलिङ्गा। औपगव, औपगवी॥ द्विचतु षट्-पदोरगा। एते स्त्रीपुसलिङ्गा। कुक्कुट कुक्कुटी। गर्दभ, गर्दभी। भ्रमर, भ्रमरी। सर्प, सर्पी[2]। जातिभेदा। एते स्त्रीपुसलिङ्गा। ब्राह्मण, ब्राह्मणी॥ पुमाख्याश्च स्त्रीयोगै सह। स्त्रीयोगै सार्धं पुमाख्या स्त्रीपुसलिङ्गा। इन्द्र, इन्द्राणी॥ मल्लक। मल्लकादय स्त्रीपुसलिङ्गा[3]। मल्ल, मल्ली। 'मल्लो मल्ली च कोशिका[4]' इति वैजयन्ती (पृ १६३, श्लो ५७) ॥ ३७ ॥

[1] A1 omits °प्रत्यय° [2] A1 adds सर्पिणीशब्द प्रकृत्यन्तर [3] 'मल्लकमनि वेसला' A1 [4] कौशिकी A1, B3

**मुनिर्वराटकः स्वातिर्वल्लको झार्टलिर्मनुः।**
**मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी ॥ ३८ ॥**

इति स्त्रीपुलिङ्गशेषप्रकरणम्

(वि ) मुनिर्वराटक —कटी कुटी । एते शब्दा स्त्रीपुसलिङ्गा । अय मुनि तपस्वी । इय मुनि । वराटक, वराटिका पद्मकोश । स्वाति, स्वाती नक्षत्रभेद[1] । [2]वल्लक, वल्लकी वीणा । झाटलि, झाटली वृक्षभेद[3] । अय मनु इय मनु, स्वायभुव तस्य पत्नी च । मूष, मूषा च धातुद्रवीकरणपात्री । सृपाट, सृपाटी सरित्[4] । अय कर्कन्धू, इय कर्कन्धू बदरी । अय यष्टि, इय यष्टि दण्ड । शाट, शाटी वस्त्रम् । कट, कटी च श्रोणी । कुट, कुटी च पर्णशाला ।। ३८ ।।

इति स्त्रीपुलिङ्गशेषप्रकरणम

[1] विशेष $J_2$, $K_5$ $K_6$　　[2] $J_2$ adds वणक इति वा पाठ　　[3] मुष्क $K_6$
[4] परिमाणविशेष $K_4$

(विव ) [1]योनिर्वराटक —कटी कुटी । योनिशब्द स्त्रीपुसयोरित्यर्थ । सहशब्दस्य पूर्ववाक्यशेषत्वपक्षे मल्लक इति पद दीपभाजनम् । मल्लिका च । योनि स्त्रीपुसयोर्व्यञ्जनम् । वराट कपर्दिकायाम्, पद्मकोशे च । स्त्रिया तु वराटिका । स्वातिर्नक्षत्रविशेष । स्वाती च । वल्लकी वीणा, वल्लकी च । वर्णक इति पाठे नील्यादिलेपनद्रव्यम्, वर्णिका च । झाटलिर्वृक्षविशेष । स्त्रिया झाटली च । अय मुनिर्वाचयम । इय मुनि । मनुरिति पाठे मनुष्याणामाद्यभूता स्त्री पुरुषो वा मनुशब्दार्थ । अय मनु । इय मनु । मूष स्वर्णादिविलेपनपात्रम् । अजादित्वात् टापि मूषा च । सृपाटिशब्दोऽप्रसिद्धार्थ इति सुबोधिनी । परिमाणविशेष इति सुभूति । असिधारा इत्यन्ये । सरिदित्यपरे । स्त्रिया तु ङीपि गौरादिपाठे सृपाटी । इयमय वा कर्कन्धू बदरी । इयमय वा यष्टिर्दण्ड । शाटोऽल्पवस्त्रम् । शाटी च । कट श्रोणी कटी च । कुटोऽल्पगृहम् । कुटी च ।

' स्त्रीपुसयोरशन्यूर्मियोनिश्रोणिमरीचय ।
इपुर्धरणिकर्कन्धूवस्तिशाल्मलिमृत्यव ।
मणिबाणशाटयष्टित्रुटिकोटकुटीष्व ।। '

इत्यादि ।। ३८ ।।

इति स्त्रीपुसशेषप्रकरणम

[1] यानिरिनि विवरणाभिमत पाठ

(पा ) मुनिर्वराटक —कटी कुटी । मुनिर्गतार्थ (१,पृ ४७४) । वराटक कपर्द [1] । 'कपर्दस्तु वराटक' इति वैजयन्ती (पृ १५२, श्लो ५७) । स्वातिरिति नक्षत्रम् । [2]भल्लको बाण । 'भल्लो भल्ली च बाणे स्यात्' इति विश्व (पृ १५१, श्लो ३०) । पुन पाठ मतान्तराङ्गीकारार्थ । तेनेतरत्राभिहिता शब्दाश्चाङ्गीकृता ।

'शाटी रेणुहरेणूरजलूकाकोलिधूलय ।
उत्कण्ठा कङ्कती कन्दूवितस्ती [3]रयिरञ्जलि ॥'

इति वैजयन्ती (पृ २६१, श्लो २६-७) ।

'तिथिमणिधृणिकेलीशाल्मलीस्वातिवस्ती-
रशनिमुनिगभस्तीराशियोन्यूर्मिवार्ष्णी ।
[4]विरणिमणिमरीचिश्रेण्यणिर्मुष्टियष्टी
कुटिमिपुधिमवीची पाटली पुसि चाहु ॥'

इति रभसकोश । शाटलि कुञ्ज । 'अनिपाद'। मनुर्देवता । मूपाशब्दो गतार्थ (१,पृ ६४०) । सृपाटी तुण्डम् । 'चञ्चुस्त्रोटि सृपाटिका' इति वैजयन्ती (पृ ३०, श्लो ५०) । कर्कन्धूर्गतार्थ (१,पृ २३७) । यष्टिरनेकार्थ । यष्टिर्हारलताशस्त्रभेदयोध्वजदण्डके' इति विश्व (पृ ३७, श्लो २३)। शाटीकटीकुटीशब्दा शाटककटकुटार्थका ॥ ३८ ॥

इति स्त्रीपुलिङ्गशेप

[1] A1 adds 'गव्व' [2] भल्लक इति पारिजाते पाठ [3] वितस्तिरणि° A1, C1
[4] मरीची A1

अथ स्त्रीनपुसकशेपप्रकरणम्—

**स्त्रीनपुंसकयोर्भावक्रिययोः ष्यञ् क्वचिच्च वुञ् ।**
**औचित्यमौचिती मैत्री मैत्र्य वुञ् प्रागुदाहृतः ॥ ३९ ॥**

(वि ) स्त्रीनपुसव—क्वचिच्च वुञ् । शब्दप्रवृत्तिनिमित्तो भाव, क्रिया व्यापार । तयोर्भावकर्मणोरन्यतरार्थे वर्तमान ष्यञ्प्रत्ययान्तो वुञ्प्रत्ययान्तश्च

स्त्रीनपुसकयोवर्तते । क्वचित् प्रत्यययोगानुसारेण स्त्रिया वर्तते । अत्रोदाहरणानि दर्शयति—औचित्यमौचिती—प्रागुदाहृत । ष्यञ्प्रत्ययान्तो यथा—उचितस्य भाव कर्म वा औचित्यम्, औचिती च । एव मैत्र्य मैत्री । वुञ्प्रत्ययान्तस्तु [1]प्राग् वैरमैथुनिकादिवुन् (पृ ६५८, श्लो ४) इत्यत्रादाहृत ॥ ३९ ॥

[1] वुन् प्रत्यय वञप्रत्ययस्याप्युपलक्षणमिति भावनीयम

(विव) स्त्रीनपुसक—क्वचिच्च वुञ् । त्रिलिङ्गशेषावधितया (श्लो ४२) अधिकारो वेदितव्य । भावकर्मणो ष्यञ्, क्वचिच्च वुञ् । भाव शब्द-प्रवृत्तिनिमित्तभूतो वस्तुधर्म । क्रिया कर्मव्यापार इत्यर्थ । 'तस्य भावस्त्वतलौ' (५ १ ११९) इत्यतो भाव इति वर्तमाने, 'वर्णदृढादिभ्य ष्यञ् च' (५ १ १२३) इत्यतो भावे ष्यञ् । 'गुणवचनब्राह्मणादिभ्य कर्मणि च' (५ १ १२४) इति भावकर्मणो ष्यञ् भावकर्माधिकारे 'योपधाद् गुरूपोत्तमाद् वुञ्' (५ १ १२३), 'द्वन्द्वमनोज्ञादिभ्यश्च' (५ १ १३३) इति भावकर्मणो वुञ्प्रत्यय-यान्ताश्च शब्दा स्त्रीनपुसकलिङ्गा भवन्ति । क्वचिदिति विशेषणमसाकल्यार्थम् । ततश्च उचितादिसबन्धिनोरेव ष्यञ्वुञ्प्रत्यययोरुभयलिङ्गत्वम् । न तु शुक्लादि-सबन्धिनोरपीति प्रयोगानुसारेण विज्ञेयमित्यर्थ ।

स्वयमेवोदाहरति—औचित्यमौचिती मैत्र्य मैत्री । उचितशब्दाद् गुणवचनाद् भावकर्मणोरर्थयो ष्यञ्प्रत्यये औचित्यम् । स्त्रीविवक्षाया तु षित्वाद् ङीष्प्रत्यये भसज्ञायामकारयकारयोर्लोपे[1] औचिती । मित्रशब्दाद् ब्राह्मणादिभ्यष्यञि पूर्ववदेव मैत्र्य मैत्री इति रूपद्वयम् ॥ वुञ् प्रागुदाहृत । पूर्व मानुष्यकराजन्यकादिशब्दा (२, पृ २१७, १, पृ ४८५) समहार्थे वुञन्ता, तत्तत्प्रस्तावेषु दर्शिता । तद्वदेव भावकर्मणोरपि योपधादिभ्यो वुञ् ऊहितु शक्य इति उदाहृत इत्युक्तम् । उदाहृत इति उदाहृतप्राय इत्यर्थ । अथवा—आहोपुरुषिकाचौरिकादिशब्दाना (१, पृ ५४३, ६३५) मनोज्ञादिपठितानामुक्तत्वाद् (५ १ १३३) उदाहृत इत्युक्तेर्न विरोध । अथवा स्त्रीलिङ्गशेषे 'वैरमैथुनिकादिवुन्' (पृ ६५८, श्लो ४) इत्यत्र वुन्ग्रहण-स्योपलक्षणत्वेन व्याख्यानाद् वुञ्प्रत्ययान्ता केवलस्त्रीलिङ्गा दर्शिता । नपुसकशेषप्रकरणे तु—'समहे भावकर्मणोरदन्तप्रत्यया' (पृ ७२०, श्लो २९) इति वाक्येन वुञ्प्रत्ययोऽपि सामान्येन नपुसकलिङ्ग उक्त । अतो वुञ्प्रत्ययान्तस्य

स्त्रीनपुसकयोरभयलिङ्गत्व क्वाचित्कमिति प्रकटयितु 'वुञ् प्रागुदाहृत ' इत्युक्तम् । क्वचित्तु स्त्रीलिङ्गत्वेन, क्वचिच्च नपुसकलिङ्गत्वेनोदाहृत इत्यर्थ ॥

इह ष्यञन्तवुञन्तशब्दयोर्मध्ये केषामुभयलिङ्गत्वम्, केषा केवलस्त्रीलिङ्गत्वम् केषा नपुसकलिङ्गत्वमिति जिज्ञासाया क्वचिच्छन्दसजातशङ्का वारयितु स्वय शेषकार आह—

' स्यादौचित्य मैत्र्य शैल्यानुपूर्व्यवैदग्ध्यसामग्र्यम् ।
चातुर्य वाणिज्य पारिख्यात्यमपि सामाचार्यम् ॥
वैदुष्य मौखर्य याथाकाम्यार्हन्त्यसाहित्यम् ।
स्यादौचिती च मैत्री च शैल्यानुपूर्वी च वैदग्धी ॥
स्यात् सामग्री चातुरी स्याद् वाणिजी पारिख्यात्यपि ।
सामाचारी वैदुषी च याथाकामी च मौखरी ॥
आर्हन्ती साहितीति स्युरिति पञ्चदश ष्यञि ।
स्त्रीनपुसकयोरेव चौरिका चौरिक तथा ॥
धौर्तक धौर्तिका शारपत्रिका शारपत्रकम् ।
कौलपुत्रिका कौलपुत्रकमेते स्त्रिया नपि ॥
आहोपुरुषिका च स्यादामुष्यकुलिका तथा ।
आमुष्यपुत्रिका चादोरूपिका वैश्वदेविका ॥
कुमारिका पुत्रिका च कुलिका च कुलालिका ।
पण्डिका चेति पञ्च स्युर्ग्रामशब्दात् परे स्त्रियाम् ॥
परिशिष्ट मनोज्ञादौ नपुसकमिति स्थिति ॥

इति । अस्यार्थ —उचितस्य भाव कर्म वा औचित्यम् । स्त्रीत्वविवक्षाया ङीषि औचिती । एव मैत्र्य मैत्री । शीलमस्यास्तीति शील । अर्शआदिभ्योऽच । शीलस्य भाव कर्म वा शैल्यम्, शैली । ' इयमाचार्याणा शैली ' इति पञ्चपादिकाया प्रयोग । पूर्व पूर्व सगता अनुपूर्वा । तेषा भाव आनुपूर्व्यम् , आनुपूर्वी च । विदग्धस्य भाव कर्म वा वैदग्ध्यम्, वैदग्धी च । समग्रस्य भाव कर्म वा सामग्र्यम् सामग्री च । चतुर-शब्दात् चातुर्य चातुरी च । वणिजो भाव कर्म वा वाणिज्यम् वाणिज्या च । स्त्रिया तु अजादित्वात् टाबिति वामन । परित ख्यात परिख्यात । तस्य भाव कर्म वा पारिख्यात्यम् । पारिख्याती च । सम्यग् आचारो यस्य स समाचार ।

[3]तस्य भावः कर्म वा सामाचार्यम्, सामाचारी च। विदुषो भावः कर्म वा वैदुष्यम्, वैदुषी च। मुखरो वाचालः, तस्य भावः कर्म वा मौखर्यम्, मौखरी च। यथाभूतः कामो यस्य यथाकामः। ततो याथाकाम्यम्, याथाकामी च। अर्हन् पूज्यः। तस्य भावः कर्म वा आर्हन्त्यम्,[4] आर्हन्ती च। सहितयोः शब्दार्थयोरन्वययोः भावः साहित्यम्, साहिती च। एते पञ्चदशशब्दाः ष्यञन्ताः भावकर्मणोः स्त्रीपुंसकयोर्वर्तन्ते। ततोऽन्ये ब्राह्मण्यम्, शौक्लचम्, दार्ढ्यम्,[5] जाड्यम्, शैत्यमित्यादयो नपुंसकलिङ्गा एव।

अथ वुञ्। चोरस्य भावः कर्म वा चौरिका, चौरिकं च। धूर्तशब्दात् कितव-वचनाद् धौर्तिका, धौर्तकं च। शरपत्रशब्दात् शारपत्रिका, शारपत्रकं च। कुल-पुत्रशब्दात् कौलपुत्रिका, कौलपुत्रकम्। एते वुञन्ताः चत्वारः शब्दाः स्त्रीनपुंसकयो-र्भवन्ति। अमुष्य पुत्रस्य भावः कर्म वा आमुष्यपुत्रिका। 'आमुष्यायणामुष्यपुत्रि-कामुष्यकुलिकेति चालुग्वक्तव्यः' (वा. ६. ३. २१) इत्यलुक्॥

[6]आदोरूपिकाशब्दः प्रशस्तवचनः इति गणकारः। वैश्वदेवशब्दाद् वैश्व-देविका। कुमारिकादयस्तु पञ्चशब्दा ग्रामशब्दात् परभूता एवेति नियमः। यथा—ग्रामकुमारस्य भावः कर्म वा ग्रामकुमारिका। एव ग्रामपुत्रिका, ग्रामकुलालिका इति। षण्डो वृषः। ग्रामषण्डिका, आमुष्यपुत्रिकादयः त्रयः, ग्रामशब्दोत्तरः पञ्च इत्येवमष्टौ शब्दा वुञन्ताः स्त्रियामेवेति नियमः। मनोज्ञादि-गणपठिता अवशिष्टाः सर्वे वुञन्ता नपुंसकलिङ्ग एव। यथा मानोज्ञकमित्यादि। चातुर्वर्ण्यादौ अर्थान्तरे ष्यञि लिङ्गनियमनिवृत्त्यर्थं भावकर्मणोरित्युक्तम्॥

[1] हलस्तद्धितस्य यस्येति च　[2] Tv omits the line　[3] समाचारस्य Gm1　[4] आर्हत्यम् आर्हती B5, B6　[5] शैष्ट्यम् T\　[6] आहापुरुपिका° Tj1

(पा) स्त्रीनपुंसक—क्वचिच्च वुञ्। एतौ प्रत्ययान्तौ स्त्रीनपुंसकलिङ्गौ॥ औचित्य—मैत्र्यम्। एव पाण्डित्यम्, पाण्डिती। साहित्यम्, साहिती। एतानि ष्यञ उदाहरणानि॥ वुञ् प्रागुदाहृत[1]। 'वृद्धमघेऽपि वार्द्धकम्' (१, पृ ३८५) इति क्वचिद्ग्रहणात् स्त्रीलिङ्गो न भवति। 'चौरिका स्तैन्यचौर्ये च' (१, पृ ६३५) इति क्वचिद्ग्रहणाद् नपुंसक न भवति। भैषज्यानन्त्यावसथ्यैतिह्यशब्दा यदि स्त्रियाम्, मूरजादौ द्रष्टव्या इति शाकटायनमते। एते स्त्रीनपुंसकलिङ्गा। [2]भेषजमेव भैषज्यम्, भैषज्या वा। भिषज्यमिति वण्ड्वादि॥ ३९॥

[1] आहोपुरुषिका इत्यादौ (१ पृ ५४३)　[2] A1 omits the examples

**षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः ।**
**स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक् ।। ४० ।।**

(वि) षष्ठ्यन्तप्राक्पदा ---स्युर्वा । अत्र वाशब्दः स्त्रीलिङ्गोदाहारण-समुच्चयार्थः[1] । षष्ठ्यन्तपूर्वपदा छायाशालासुरासेनानिशा[2] इत्येते शब्दा वा स्त्रीनपुंसकयोः [3]स्युः । अत्रोदाहरणानि स्वयमेव दर्शयति---नृसेन---इतरे च दिक् । नृणा सेना नृसेनम्, नृसेना । एव [4]श्वनिशम्, श्वनिशा । गोशालम्, गोशाला । इतरे च दिक् । इतरे च छायासुरे अपि दिक् उदाहार्ये । वृक्षच्छायम्, वृक्षच्छाया । यवसुरम्, यवसुरा ।। ४० ।।

[1] K6 omits °समुच्चय° [2] सेनादय शब्दा K5 [3] स्युरिति विवृतौ पाठ .
[4] स्वनिशम् J2.

(विव.) षष्ठ्यन्तप्राक्पदाः---इतरे च दिक् । षष्ठीतत्पुरुषसमासे उत्तर-पदभूताः सेनादयः पञ्च शब्दाः स्त्रीनपुंसकयोरित्यर्थः । स्वयमेवोदाहरति---स्यादिति । वा विकल्पेन निर्दिष्टाः । तदभावपक्षे स्त्रीलिङ्गान्ताः । इतरे छाया-सुरान्ताः शब्दाश्च दिक् उदाहरणानि भवन्तीत्यर्थः । नृणां सेना नृसेनम्, नृसेना च । शुनो निशा श्वनिशम्, श्वनिशा च । यत्र श्वानः कस्यांचित् कृष्णचतुर्दश्या-मुपवसन्ति तत् श्वनिशमिति क्वचित् प्रसिद्धिः । गवां शाला गोशालम्, गोशाला च । एवं वृक्षस्य छाया वृक्षच्छायम् । छायाया बहुद्रव्यसंबन्धित्वे विच्छायमिति केवलनपुंसकत्वं प्रागुक्तम्[1] (श्लो. २६) । तदन्यसबन्धित्वे तूभयलिङ्गत्वमत्रोच्यत इति न विरोधः । तथा गुडस्य सुरा गुडसुरम्, गुडसुरा । एवमेव कपिसेनम्, कपिसेना । शिवनिशम्, शिवनिशा । अश्वशालम्, अश्वशाला । यवसुरम्, यवसुरा इत्यादिकमप्युदाहार्यमिति दिक्पदेन सूचितम् । 'विभाषा सेनासुराच्छायाशाला-निशानाम्' (२. ४. २५) इति सूत्रमूलमेतत् ।। ४० ।।

[1] B5 adds 'छाया बाहुल्ये' इति वृद्धित्वे वा छायायोगलक्षणे तत्पुरुषसमासे च पर्यायपदस्य यल्लिङ्ग तद्भवतीत्यर्थं । तदुक्त 'परवल्लिङ्ग द्वन्द्वतत्पुरुषयो ' इति । अतः छायमिति केवलनपुसकलिङ्गमिति

(पा.) पष्ठ्यन्तप्राक्पदाः—स्याद्वा । षष्ठ्यन्तपूर्वपदाः सेनादयः स्त्रीनपुंसकलिङ्गाः । नृसेनम्—इतरे च दिक् । नृसेनादीनि तदुदाहरणानि । नृणा सेना नृसेनम् । वाग्रहणाद् नृसेना । एवमन्येऽपि ॥ ४० ॥

**आबन्नन्तोत्तरपदो द्विगुश्चापुंसि नश्च लुप् ।**
**त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि ॥ ४१ ॥**

इति स्त्रीनपुंसकशेषः

(वि) आबन्नन्तोत्तर—नश्च लुप्[1] । *आबन्तोत्तरपदोऽन्नन्तोत्तरपदश्च* द्विगु द्विगुसमास अपुंसि स्त्रीनपुंसकयोर्वर्तते । नश्च उत्तरपदस्थनकारस्य[2] च लुप् लोपो भवति । उदाहरणानि स्वयमेव दर्शयति । त्रिखट्व—त्रितक्ष्यपि । तिसृणा खट्वाना समाहार त्रिखट्वम् । त्रिखट्वी च । त्रयाणा तक्ष्णा समाहार त्रितक्षम्, त्रितक्षी च ॥ ४१ ॥

इति [3]स्त्रीनपुंसकशेषप्रकरणम्

[1] लुक् $J_2$, $K_2$ [2] °पदस्य नकारस्य $K_4$, $K_6$ [3] °लिङ्गशेष $K_4$

(विव.) आबन्नन्तोत्तर—नश्च लुप् । अत्र आब्ग्रहणेन लोप एव ग्रहणम् । 'अनो नलोपश्च वा द्विगुः स्त्रियाम्' (वा. २. ४. १७) इत्येतन्मूलत्वाद् अस्य विधेराबन्तोत्तरपदो द्विगुसमासः, अन्नन्तशब्दोत्तरपदश्च समाहारद्विगुः अपुंसि स्त्रीनपुंसकयोर्भवति । अन्नन्तोत्तरपदस्य यो नकारः तस्य लोपो भवति । तेन लोपविधानं लिङ्गशास्त्रे यद्यपि न वक्तव्यम्, तथापि, अस्य लिङ्गविधेः 'अनो नलोपश्च वा द्विगुः स्त्रियाम्' इति वक्तव्यमूलत्वप्रत्यभिज्ञानार्थमिति ज्ञेयम् । अपुंसि [1]इत्यधिकृतस्यैवानुवादो वृत्तानुसारेण पादपूरणार्थं इति ॥ द्विविधस्यापि द्विगोरुदाहरणे स्वयमेव दर्शयति त्रिखट्वम्—त्रितक्ष्यपीति । तिसृणां खट्वाना समाहारः त्रिखट्वम् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वत्वम् । स्त्रीत्वविवक्षायां 'द्विगोः' (४. १. २१) ङीपि त्रिखट्वी । त्रयाणां

वचनश्च, यथा—ब्राह्मणवाटी, विटपवाटी, विद्वद्वाटी इत्यादि । पेटः पेटी पेटम्, वस्त्रादिरक्षणार्थं दारुवेणुवेत्रादिनिर्मितं मञ्जूषाख्यम् । स्त्रियां तु गौरादित्वाद् ङीप् । कुवलदाडिमशब्दौ विशेषवाचिनौ स्त्रियां ङीबन्तौ । अजादिपाठाच्च पेटा इति टाबन्तोऽप्यस्ति[6] ॥

इति त्रिलिङ्गशेषः

[1] $B_5$, $B_6$ omit °आदि°     [2] पटी $T_{J1}$, $T_{J2}$     [3] प्रसारयन्ति इति मु ग्र
[4] पटीयसी $B_6$     [5] इतिवत् $B_5$     [6] पाति । प्ट्रन् (उ ४ १८९) [पात्री], पुटति । 'इगुपध ' इति क । गौरादि [पुटी], वाटयते । ण्यन्त । कर्मणि घञ् [वाटी], पिट्यते । घञ् । जातित्वात्, गौरादित्वाद्वा ङीप् [पेटी], कौ वलति । पचाद्यच् [कुवली], दलनम् । घञ् । दालेन निर्वृत्त । 'भावप्रत्ययान्तादिमप्' (वा ४ ८ २०) । डलयोरेकत्वम् [दाडिमी] इति भा दी (पृ ५२९-३०)

(पा ) त्रिषु पात्री—कुवलदाडिमौ । [1]पात्र्यादय त्रिलिङ्गा । पात्री पात्र पात्रम् । पुटी पुट पुटम् । पुटी पुष्पकरण्ड । 'पुल्वुलकरेडु' । 'करण्डी तु पुटी त्रयी' इति वैजयन्ती (पृ १३८, श्लो ३३) । [2]वाटी [3]शाकाद्याराम । 'कूरगायलतोट' । 'पुष्पवाटी त्वमात्यादेस्त्रयी वाटी फलाय चेत्' इति वैजयन्ती (पृ ४५, श्लो ४) । पेटी पेट पेटम्, पेटिका । 'पेट्टि' । [4]कुवल वदरम्[5] । दाडिमी दाडिम दाडिमम्, 'दाडिम्वम्' ॥

इति त्रिलिङ्गशेष

[1] पात्राद्य $B_3$, $C_1$     [2] $B_3$ adds वाट वाटम्     [3] शलाटूनाम् $A_1$
[4] $B_3$ adds कुवल कुवली     [5] वदरी $B_3$, $C_1$

## परलिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत् ॥ ४२ ॥

(वि ) परलिङ्ग—अपि तत् । अथ परलिङ्गप्रकरणम्[1] । स्वप्रधाने द्वन्द्वे इतरेतरयोगद्वन्द्वसमासे[2] तत्पुरुषसमासे च[3] उत्तरपदस्य यल्लिङ्ग तद्भवति । द्वन्द्वस्योदाहरणानि—पार्वतीपरमेश्वरौ । जायापती । कुक्कुटमयूर्यौ । [4]मयूरीकुक्कुटावित्यादि । तत्पुरुषे यथा—अर्ध पिप्पल्या अर्धपिप्पली । अर्धं कोशातक्या अर्धकोशातकी । वृक्षशाखेत्यादि ॥ ४२ ॥

इति परलिङ्गशेषप्रकरणम

[1] परलिङ्गशेप J2 [2] °समासेऽपि K2, K4 [3] परलिङ्गम् K3 [4] मयूर° K5, K6

(विव.) [1]अनेकलिङ्गपदात्मकसमासरूपं प्रातिपदिकं किंलिङ्गकमिति जिज्ञासायामिदमारभ्यते--परलिङ्गं--तत्पुरुषेऽपि च। समाहारद्वन्द्वस्य नपुंसकलिङ्गत्वात् तद्व्यवच्छेदार्थं स्वप्रधान इत्युक्तम्। समाहारद्वन्द्वो हि समस्यमानपदार्थैः गम्यमानसमुदाये तात्पर्यान्न स्वप्रधानः। इतरेतरद्वन्द्वस्तु समस्यमानपदार्थेषु तात्पर्यात् स्वप्रधानः। तथाभूतद्वन्द्वे इतरेतरयोगलक्षणे तत्पुरुषसमासे च परस्य पदस्य यल्लिङ्गं तद्[2] भवतीत्यर्थः। तदुक्तम्—'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२. ४. २६) इति। यथा—पार्वतीपरमेश्वरौ। पृथिव्यप्तेजोवाय्वाकाशानि। कुक्कुटमयूर्यौ। मयूरीकुक्कुटाविमौ। तत्पुरुषे यथा—नीलं च तदुत्पलं च नीलोत्पलम्। मुखमेव चन्द्रो मुखचन्द्रः। ग्रामं प्राप्तः ग्रामप्राप्तः। शङ्कुलया खण्डः शङ्कुलाखण्डः। रुद्राय बलिः रुद्रबलिः। चोराद् भयं चोरभयम्। देवदत्तस्य कन्या देवदत्तकन्या। अर्धं पिप्पल्याः अर्धपिप्पली। अक्षेषु शौण्डः अक्षशौण्डः इत्यादि॥ ४२॥

इति [3]परलिङ्गप्रकरणम्

[1] Tv adds अथ परलिङ्गप्रकरणम् [2] तद्भवति B5 [3] इत्युत्तरप्रकरणम् T11

(पा) परलिङ्ग स्वप्रधाने द्वन्द्वे। इतरेतरयोगद्वन्द्वे[1] परवल्लिङ्ग स्यात्। कुक्कुटमयूर्यौ। मयूरीकुक्कुटौ। तत्पुरुषेऽपि तत्। तत्पुरुषविशेषेऽपि तद्वत् इति परवल्लिङ्ग स्यात्। कुलविप्र, विप्रकुलम्। [2]स्वप्रधान इति वचनाद् अत्र न। पाणिपादमित्यादि॥ ४२॥

इति परलिङ्गशेष·

[1] A1 omits °योग° [2] A1 omits the sentence

**अर्थान्ताः प्राग्लंप्राप्तापन्नपूर्वाः परोपगाः।**
**तद्धितार्थे द्विगुः संख्यासर्वनामतदन्तकाः॥ ४३॥**

(वि) अर्थान्ता। अर्थशब्दान्ता परोपगा वाच्यलिङ्गा भवन्ति। अर्थान्ता यथा—ब्राह्मणाय धन ब्राह्मणार्थं धनम्। सतानाय सतानार्थो विधि। भटाय

भटार्था भृति इत्यादि ।। प्राद्यलप्राप्तापन्नपूर्वा परोपगा । प्रादयश्च अलशब्दश्च[1] प्राप्तशब्दश्च आपन्नशब्दश्च येषा समासशब्दाना [2]पूर्वपदानि भवन्ति ते परोपगा विशेष्यनिघ्ना भवन्ति । प्रादिपूर्वा यथा—प्रगत आचार्यो यस्य प्राचार्य । प्राचार्या नर्तकी । प्राचार्य शिष्यकुलम् । एव कोकिलया अवशिष्ट अवकोकिल पुष्पम् । अवकोकिला कलिका । अवकोकिल कुड्मल । परिश्रान्तोऽध्ययनाय पर्यध्ययनो माणवक । पर्यध्ययना शिष्यसहृति । पर्यध्ययन शिष्यकुलम् इत्यादि । अलपूर्वा यथा—अल जीवनाय, अलजीवन कोश । अलजीवना भू । अलजीवन धनमित्यादि । प्राप्तपूर्वा यथा—[3]प्राप्तो जीविका प्राप्तजीविक पुरुष । प्राप्तजीविका स्त्री । प्राप्तजीविक नटकुलमित्यादि । आपन्नपूर्वा यथा—आपन्न सत्त्वमापन्नसत्त्व । आपन्नसत्त्वा सिंही । आपन्नसत्त्व [4]भटकुलमित्यादि ।।

तद्धितार्थो द्विगु । तद्धितार्थो द्विगुसमास परोपगो भवति । अत्रोदाहरणानि —पञ्चसु कपालेषु संस्कृत पुरोडाश पञ्चकपाल, पञ्चकपाला, पञ्चकपाल मित्यादि ।। सख्यासर्वनामतदन्तका । [5]सख्यावाचिन शब्दा परोपगा भवन्ति । एको घट [6] । एका शाटी । एक मित्रमित्यादि । द्वौ कुचौ । द्वे स्त्रियौ । द्वे लोचने । त्रय पुरुषा । तिस्र स्त्रिय । त्रीणि फलानि । चत्वार समुद्रा । चतस्रो विद्या । चत्वारि पदानि इत्यादि । सर्वनामशब्दा सख्यान्ता सर्वनामान्तशब्दाश्च परोपगा भवन्ति । उदाहरणानि—सर्व पुमान् । सर्वा नारी । सर्व जगत् । विश्वो जन । विश्वा जनता । विश्व कुलमित्यादि ।। [7]सख्यान्ता यथा—द्वित्रा पुरुषा । द्वित्रा स्त्रिय । द्वित्राणि पदानि । एव द्विचतुरा, त्रिचतुरा, पञ्चषा इत्यादि । सर्वनामान्ता यथा—आभ्यामन्य तदन्य । तदन्या स्त्री । तदन्य कुलमित्यादि[8] ।। ४३ ।।

[1] Ks adds °आदिशब्दश्च [2] पूवपूव° K3 K4 [3] K6 omits the two words. [4] नटकुलम् K1, K6 [5] J2 adds सख्या [6] नट J2 [7] J2 adds तदन्तका शब्दा [8] °आद्युन्नयम J°

(विव) अथ विशेष्यनिघ्नशेष । अर्थान्ता । अर्थशब्दोऽन्तो येषा चतुर्थीसमासान्ते अर्थान्ता । अर्थशब्दान्ता चतुर्थीसमासा परोपगा इत्युत्तरवाक्यस्य पदमेतत्प्रकरणस्थं पूर्वोत्तरवाक्यं यथायोग सबध्यते । विशेष्यनिघ्ना इत्यर्थ । तदुक्तम्—'अर्थेन नित्यसमासवचन सर्वलिङ्गता च वक्तव्या' (वा २ १ ३६)

इति । यथा—ब्राह्मणार्थ सूप । ब्राह्मणाय सूप इत्यर्थ । जलार्था वापी । जलार्थ-मुदपानमित्यादि ।। प्राद्यलप्राप्तापन्नपूर्वा परोपगा । प्राद्यन्यतमोपसर्गपूर्वका, अलशब्दपूर्वा, प्राप्तपूर्वका, आपन्नपूर्वकाश्च परोपगा भवन्ति । अत्र परशब्देन श्रेष्ठवाचिन प्रधानभूत विशेष्य विवक्षितम् । तेन च तल्लिङ्ग लक्ष्यते । परलिङ्ग-मुपगच्छन्तीति परोपगा । विशेष्यवाचकशब्दानुसारिलिङ्गवचना इत्यर्थ । अथवा परशब्दोऽन्यार्थ । अन्याधीनलिङ्गा, न तु स्वाधीनलिङ्गा इत्यर्थ । कस्यान्यस्य लिङ्गमनुसरतीत्याकाङ्क्षाया सनिधिप्रयुक्तस्य स्वावच्छेद्यस्य विशेष्यस्यैवेत्यव-गम्यते । क्रमेणोदाहरणानि—अतिक्रान्त खट्वाम् अतिखट्व पुरुष । अतिखट्वा स्त्री । अतिखट्व कलत्रमिति । 'अत्यादय क्रान्ताद्यर्थे द्वितीयया' (वा २ २ १८) इति समास । अवकृष्ट[1] कोकिलया अवकोकिल पुष्पस्तबक । अवकोकिला मञ्जरी । अवकोकिल फलम् इत्यादि । 'अवादय [2]कृष्टाद्यर्थे तृतीयया' (वा २ २ १८) इति समास । परिश्रान्तोऽध्ययनाय पर्यध्ययनो माणवक । पर्यध्ययना वटुसहति । पर्यध्ययन कठवृन्दम् इति । 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' (वा २ २ १८) इति [3]समास । निष्क्रान्तो ग्रामाद् निर्ग्राम पशुगण । निर्ग्रामा सेना । निर्ग्राममजाविकुलम् । प्रच्युत आचारात् प्राचारो ब्राह्मण इति । 'निरादय क्रान्ताद्यर्थे पञ्चम्या (वा २ २ १८) इति समास । अल जीविकायै अलजीविको ग्राम [4] । अलजीविका भूमि । अलजीविक धनमित्यादि । आकृतिगणत्वेन अल-शब्दस्य पर्यादिष्वनुप्रवेशात् 'पर्यादय ग्लानाद्यर्थे चतुर्थ्या' (वा २ २ १८) इति समास । प्राप्तो धन प्राप्तधन पुत्र । प्राप्त गर्भं प्राप्तगर्भा पत्नी । प्राप्त धन प्राप्तधन विप्रवृन्दम् । आपन्नो ग्राममापन्नग्राम पुरुष[5] । आपन्नग्रामा स्त्री । आपन्नग्राम कलत्रम् इत्यादि । 'प्राप्तापन्ने च द्वितीयया' (२ २ ४) इत्युभयत्र समास ।।

तद्धितार्थे द्विगु । परोपग इति वचनविपरिणामेनानुषज्यते । 'तद्धितार्थोत्तर-पदसमाहारे च' (२ १ ५१) इति सूत्रेण सख्यावाचिशब्दाना समानाधिकरणेन यो द्विगुसमास तद्धितार्थे विषयभूते तद्धितप्रत्यये कर्तव्ये सति विशेष्यनिघ्न इत्यर्थ । यथा—पञ्चकपाल पुरोडाश । एककपाल हविरित्यादि । अत्रोत्पन्नस्य तद्धितस्य 'द्विगोर्लुगनपत्ये' (४ १ ८८) इति लुकि कृते द्विगोरणाद्यन्ताभावात् तस्य परोपगत्व न स्यात इति शङ्का वारयितुमिदमारब्धम् । अर्थान्तरविहितद्विगो परोगत्वाभावात् तद्धितार्थं इत्युक्तम् ।।

सख्यासर्वनामतदन्तका । सख्यावाचिन शब्दा , सख्यान्तशब्दा , सर्वनामशब्दा , सर्वनामान्तशब्दाश्च इति चतुर्विधा परोपगा इति सबन्ध । अत्र सख्यावाचिना मध्ये 'तासु चानवते स्त्रिय ' (१, पृ ६०३) इति विंशत्यादीना स्त्रीलिङ्गत्वमुक्त वैश्यवर्गे । शतादीना त्वत्रैव वर्गे 'कोट्या शतादि सख्यान्या' (पृ ७०८, श्लो २४) इत्यादिना नपुसकत्वमुक्तम् । अतोऽत्र सख्याशब्देन एकाद्या अष्टाविंशान्ता बहुशब्दश्च गृह्यन्ते । ननु—अत्रापि 'षट्सज्ञकास्त्रिषु समा' (श्लो ४६) इति पञ्चन्नादीनामष्टादशान्ताना त्रिलिङ्गत्वावगमात् प्रकृते सख्याशब्देन एकादिचतुरन्तानामेव ग्रहणमिति वाच्यम् । पञ्चन्नादीना तत्प्रायपठिततिङव्ययसाधारण्याद् अलिङ्गत्वप्रतिपादनमात्रेणापि वक्ष्यमाणवाक्यार्थपर्यवसानस्य वक्तु शक्यत्वात् । तर्हि 'सख्या सख्येये ह्यादश त्रिषु' (१, पृ ६०२) इत्यनेन पौनरुक्तच स्यादिति चेत सत्यम् । तत्रैकादिसख्याना त्रिलिङ्गत्वमात्रमुक्तम् । न तु परोपगत्वमिति । तच्च त्रिलिङ्गम् । तटमण्डलादिशब्दवदाविष्टलिङ्गत्वेनाप्युपपद्यत इति परोपगत्वमिदानीमुच्यत इति सर्वं सुस्थम्[6] ॥

सख्याशब्दे यथा—एको घट । एका वापी । एक गृहम् । द्वौ घटौ । द्वे जाये । त्रयो लोका । तिस्र आहुतय । त्रीणि सवनानि । चत्वार ऋत्विज । चतस्रो दिश । चत्वारि कृष्णलानि इत्यादि । सर्वनामशब्दा द्विविधा सर्वादय प्रथमचरमादयश्च इति । तत्राद्या यथा—सर्वे जना । सर्वा पृथिवी । सर्वं जगत् । विश्वे देवा । विश्वा आशा । विश्वानि भुवनानि । प्रथम सर्ग । प्रथमा सृष्टि । प्रथम कलत्रम् । पूर्व पुरुष । स्व कलत्रम् इत्यादि । सख्यान्ता यथा—परमैक पुरुष । परमत्रयो नरा । परमतिस्रो नार्य इति । सर्वनामान्ता यथा—परमसर्व पुमान् । परमसर्वा नारी । परमसर्वं कुलमित्यादि ॥ ४३ ॥

[1] अवनुष्ट Tv    [2] कृष्टाद्यर्थं Tv मुद्रितकाशिकाया च (१ पृ १०/    [3] B₀ B₈ add चतुर्थी°    [4] ब्राह्मण Tv    [5] देवदत्त TJ1, TJ°    [6] ६ॽ/॥ Gm1, Gm3

आपन्नो जीविकामापन्नजीविकः[4] इत्यादि ।। तद्धितार्थे द्विगु. । तद्धितार्थद्विगुर्वाच्यलिङ्गः । पञ्चसु कपालेषु सस्कृत. पञ्चकपालः पुरोडाश. । पञ्चकपाला अपूपिका ।। सख्यासर्वनामतदन्तकाः । सख्याश्च सर्वनामानि च [5]संख्यासर्वनामान्ताश्च वाच्यलिङ्गा । सख्याया यथा—एका, एकः, एकम् । सर्वनाम्नो यथा—सा, स , तत् । तदन्ताना यथा—ऊनास्तिस्रो यासा ताः ऊनतिस्रः, ऊनत्रय । सर्वनामान्ता यथा—एकामतिक्रान्त.[6] अत्येकः, अत्येका, अत्येकम्, द्वाभ्यामन्या द्वचन्या, द्वचन्यः, द्वचन्यमित्यादि ।। ४३ ।।

[1] A1 omits　[2] B3, C1 add अतिखट्वा　[3] अलजीविका B3　[4] आपन्नजीविका B3.　[5] तदन्ताश्च C1.　[6] A1 omits

**बहुव्रीहिरदिग्नाम्नामुन्नेयं तदुदाहृतम् ।**
**गुणद्रव्यक्रियायोगोपाधयः परगामिनः ।। ४४ ।।**

(वि ) बहुव्रीहिरदिग्नाम्नाम् । दिङ्नामव्यतिरिक्ताना शब्दाना यो वहुव्रीहिसमास.[1] स परोपगो भवति । अत्रोदाहरणानि—चित्र पटो यस्य चित्रपटो जन । चित्रपटा सेना[2] । चित्रपटं सद इत्यादि ।। उन्नेय तदुदाहृतम् । [3]शेषाणाम् 'अर्थान्ता ' इत्यादीनामेतदन्तानामुदाहरणमुन्नेयम् । गुणद्रव्य—परगामिन । गुणश्च द्रव्य च क्रिया च तेषा योग· सवन्ध , स एवोपाधिर्येषा शब्दाना ते शब्दा परगामिनो वाच्यलिङ्गा भवन्ति । गुणयोगोपाधयो यथा—शुक्ल. पट । शुक्ला शाटी । शुक्लं वस्त्रमित्यादि । द्रव्ययोगोपाधयो यथा—दण्डी पुरुष. । दण्डिनी स्त्री । दण्डि सैन्यमित्यादि । क्रियायोगोपाधयो यथा—पाचक· पुरुष । पाचिका[4] स्त्री । [5]पाचक कुलमित्यादि ।। ४४ ।।

[1] K5 omits °समास　[2] J2, K3 add चित्रपटा सभा　[3] तेषामर्थान्ता K5; एषा° K6　[4] पचका K6.　[5] पाचिक K5

(विव.) बहुव्रीहिरदिङ्नाम्नाम् । [1]अदिङ्नाम्नां दिङ्नामव्यतिरिक्तानां यो बहुव्रीहिः स परोपगो भवति । चित्रः पटो यस्य सः चित्रपटः पुरुषः । चित्रपटा सेना । चित्रपटं कलत्रम् । वीरपुरुषो ग्रामः । वीरपुरुषं पुरम् । कण्ठे कालो यस्य कण्ठेकालः । कण्ठेकाला मूर्तिरित्यादि । 'अनेकमन्यपदार्थे' (२. २. २४) इति

बहुव्रीहिसमास । अदिङ्नाम्नामिति किम् ? दक्षिणपूर्वा । दक्षिणपरा । उत्तरपूर्वा । उत्तरपरा इत्यादि । अत्र 'दिङ्नामान्यन्तराले' (२ २ २६) इति सूत्रेण अवान्तरदिशि वाच्ये बहुव्रीहिविधानाद् अवान्तरदिशा च केवलस्त्रीलिङ्गवाच्यत्वेन चित्रपटादिवत् परोपगनिवृत्त्यर्थम् । अत एव काशिकाकारेण (१, पृ १०७)—'दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तराल सा दक्षिणपूर्वा दिक् । एव पूर्वोत्तरा, उत्तरपश्चिमेति' केवलस्त्रीलिङ्गान्येवोदाहरणानि दर्शितानि ॥

इह वर्गे कतिचिल्लिङ्गलक्षणाना कानिचिदुदाहरणानि मूलग्रन्थ एवोक्तानि । यत्र तु 'अर्थान्ता' (श्लो ४३) इत्यादौ लक्षणमात्रमेवोक्तम्, तत्र लक्ष्याणामुन्नेतु शक्यत्वात् तन्मात्रमेवोक्तमित्यभिप्रायेणाह—उन्नेय तदुदाहृतम इति । एक-वचनमविवक्षितम् । तेषामदर्शितलक्ष्याणामुदाहरणमुन्नेयमुन्नेतु शक्यमित्यर्थ । अथवा—चित्रगु, चित्रपट, इत्यादीनामेव बहुव्रीहित्वेनाबाल प्रसिद्धत्वात् परोपग-त्वबुद्धेस्तन्मात्रविश्रान्ततापरिहारेण व्याकरणलक्षणसिद्धबहुव्रीह्यन्तराण्यपि परोपग-त्वेनोदाहर्तव्यानीत्यमुमर्थं सूचयितु बहुव्रीहिप्रकरण एवोन्नयनस्य कर्तव्यताकथन कृतमित्यनुसधेयम् ।

तथा हि —'सख्ययाव्ययासन्नादूराधिकसख्या सख्येये' (२ २ २५) इति बहुव्रीहि । यथा—उपगता दश उपदशा घटा । उपदशा इमा नार्य । उपद-शानीमानि फलानि । उपविंशा । आसन्नविंशा । अदूरदशा । अधिकदशा । अधिकविंशा । एको वा द्वौ वा एकद्वा शूरा । द्वौ वा त्रयो वा द्वित्रा । त्रिचतुरा । चतु पञ्चा इत्यादि ॥ 'तेन सहेति तुल्ययोगे' (२ २ २८) इति बहुव्रीहि । यथा—पुत्रेण सहागत[2] इति सपुत्र । सशिष्य । सवधूक । सभर्तृका योषित इति ॥ 'प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्य' (वा २ २ २४) । यथा—प्रगत आचार्यो यस्य प्राचार्य शिष्य । प्राचार्या नर्तको इत्यादि-कमुन्नेयमिति ॥

गुणद्रव्य—परगामिन । योग सबन्ध । गुणसबन्ध, द्रव्यसबन्ध, क्रिया-सबन्धो वा येषा शब्दाना प्रवृत्तिनिमित्तम्, तं प्रवृत्तिनिमित्तहेतुभूतं ये शब्दा,[3] ते शब्दा परोपगा इत्यधिकृतेन सबन्ध । उपाधय इति पाठे बहुव्रीहिसमाश्रयणेन [4]शब्दपरत्वेन योज्यम् । अत्र योगपद प्रयुञ्जानस्यायमभिप्राय । यदा गुणद्रव्या-दिव्यक्तयस्तद्गताकृतयो वा [5]मतभेदेन शब्दाना प्रवृत्तिनिमित्तानि भवन्ति, यदा न

वाच्यलिङ्गत्वम्, तदा न गुणलिङ्गत्वम्। अत एव 'गुणे शुक्लादयः पुंसि' [6](१, पृ. १०१), 'क्लीबे शीघ्राद्यसत्त्वं स्यात्' (१, पृ. ४६) इत्यादिना तत्तत्प्रस्तावे शुक्लादिशब्दानां स्वप्रधानत्वेन[7] नियतलिङ्गत्वमुक्तम्। यथा—पटस्य शुक्लः। अपां शुक्लो रूपम्। हिमस्य शीतम्। गुडस्य मधुरो रसः। 'मनोऽधिकं शीघ्रमिहाश्ववृन्दम्' इत्यत्र यथातथात्व एव शब्दाः मतुब्लोपाद् अभेदोपचाराद्वा सामानाधिकरण्येन गुणिनि वर्तन्ते। तथा गुणयोगोपाधिनैव विशेष्यनिघ्नः। यथा शुक्लः पटः। शुक्ला शाटी। शुक्लं वस्त्रम्। शीतो वायुः। शीता आपः। शीतं जलमित्यादि।

किं च येषां समर्थकुशलनिपुणादिशब्दानां [8]सर्वत्रापि परप्रधानत्वेन केवलं धर्मिसामानाधिकरण्येनैव प्रयोगः, तेषामप्युत्साहविवेचकत्वादिगुणयोग एव वाच्यलिङ्गत्वे निमित्तम्। यथा—समर्थः कुशलश्च पुरुषः। समर्था सेना। समर्थं कलत्रमित्यादि। येषां रूपरसादिशब्दानां सर्वथा स्वार्थप्रधानतया धर्मिणा सह वैयधिकरण्येनैव प्रयोगः, तेषामपि स्वार्थप्रवृत्तौ रूपत्वरसत्वादिरेव प्रवृत्तिनिमित्तत्वेन गुणयोगलक्षणोपाधेरभावाद् न [9]वाच्यलिङ्गत्वशङ्कावकाशः। न च रूपरसादिशब्दानां शुक्लादिशब्दवदेव मतुबारोपाद्वा अर्शआदित्वाद्वा अभेदोपचाराद्वा धर्मिसामानाधिकरण्यमस्तीति वाच्यम्। अनभिधानशिरस्कत्वात् सामानाधिकरण्ये। अभिधानलक्षणा हि कृत्तद्धितसमासा इति शाब्दिकन्यायः। यथा च ततो रूपरसादिशब्देभ्यो मत्वर्थीयप्रत्ययोत्पत्त्या धर्मिपरत्वेन श्रूयते। तथा गुणयोगलक्षणोपाधिसद्भावात् तेषां परोपगत्वमप्रतिहतमेव। यथा रूपवान् पुत्रः। रूपवती भार्या। रूपवत् कलत्रम्। गन्धवान् वायुः। गन्धवती पृथिवी। ज्ञानी मुनिः। ज्ञानवान् मुनिः। [10]स्मृतिमानित्यादि।

द्रव्ययोगे यथा—दण्डी देवदत्तः। दण्डिनी स्त्री। दण्डि यदुकुलमिति। क्रियायोगे[11] यथा—'क्रियां कुर्वद्धि कारकम्' इति क्रियायोगः कारकमात्रस्यास्ति। तत्र कर्तरि यथा—वाचकः पुरुषः। वाचिका जाया। वाचिकं कलत्रम् इति। कर्मणि यथा—पचति स्म पक्वमन्नम्। पक्वा शष्कुली। पक्व ओदन इति। करणे यथा—वृश्चते येन वृश्चिकः परशुः। वृश्चनं शस्त्रम्। वृश्चनी शस्त्री। अपादाने यथा—यो बिभेति यस्मात् स भीमः पुरुषः। भीमो राक्षसः। भीमं दुर्गम्। अधिकरणे यथा—पच्यतेऽत्रेति पचनः पिठरः। पचनी स्थाली। पचनं कुण्डमित्यादि ॥ ४४ ॥

[1] B5, B6 add उत्तरपूर्वा इत्यादि [2] वर्तते Tv [3] B5, B6 add परगामिन प्रधानभूतस्य न यस्यार्थ स विशेष [4] विशेषणत्वेन Tv [5] Gm1, Gm3 omit मतभेदेन [6] Tj1 adds रसा पुंसि सित गुणे [7] स्वप्रधानतया Tj2 [8] सर्वथापि Tj2 [9] °लिङ्गशङ्का° Gm3 [10] Tj2 omits [11] क्रियायोगेन Gm3.

(पा ) बहुव्रीहिरदिग्नाम्नाम् । अदिङ्नाम्ना बहुव्रीहिर्वाच्यलिङ्ग । चित्रा गावो यस्य चित्रगु पुमान्, चित्रगु स्त्री । अदिग्नाम्नामित्यनेन [1]दिङ्नामबहुव्रीहौ न भवति । दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तराल सा दक्षिणपूर्वा । पूर्वोत्तरा इत्यादि ।। गुणद्रव्य––परगामिन । गुणद्रव्यक्रियाभि [2]योगोपाधय योगप्रवृत्तिनिमित्तभूतशब्दा वाच्यलिङ्गा । शुक्ल पट । शुक्ला पटी । शुक्ल पटम् । दण्डिनी गोपालिका । दण्डी गोपालक । [3]दण्डि गोपकुलम् । पाचिका देवदत्ता । पाचको देवदत्त । पाचक कललमित्यादि ।। ४४ ।।

[1] दिक्समास° B3 [2] A1 omits [3] A1 omits the sentence

**कृतः कर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि ।**
**अणाद्यन्तास्तेन रक्ताद्यर्थे नानार्थभेदकाः ।। ४५ ।।**

इति वाच्यलिङ्गशेष

(वि ) कृत कर्तर्यसज्ञायाम् । असज्ञाया कर्तृकारके विहिता कृत [1] कृत्सज्ञका परगामिनो भवन्ति । उदाहरणानि––भर्ता, भर्त्री, भर्तृ । साधक, साधिका, साधकमित्यादि । कृत्या कर्तरि कर्मणि । कर्तरि कर्मणि च कारके विहिता कृत्यप्रत्ययान्ता शब्दा असज्ञाया वर्तमाना परगामिनो वाच्यलिङ्गा भवन्ति । कर्तरि कृत्यप्रत्ययान्तो यथा––वास्तव्या विप्रा । वास्तव्या लक्ष्मी । वास्तव्य [2]धनमित्यादि । कर्मणि कृत्यप्रत्ययान्तो यथा––कर्तव्य कट । कर्तव्या [3]शाटी । कर्तव्य वस्त्रमित्यादि ।। अणाद्यन्तास्तेन रक्ताद्यर्थे । तेन रक्तमित्येतस्मिन्नर्थे आदिग्रहणात् तेन [4]युक्तमित्यर्थे च विहिता [5]अणादिप्रत्ययान्ता शब्दा असज्ञाया वर्तमाना परगामिन स्यु । अण्प्रत्ययो यथा––[6]काषाय पट । काषायी पटी[7] । काषाय वस्त्रमित्यादि । ठक्प्रत्ययो यथा––लाक्षया रक्त पट लाक्षिक । लाक्षिकी । लाक्षिकम् इत्यादि ।। नानार्थभेदका । ये नानार्थाना भेदका ते

शब्दा परगामिनो भवन्ति । अत्रोदाहरणानि—शिवो रुद्र । शिवा गौरी । शिव [8]भद्रमित्यादि ॥ ४५ ॥

इति वाच्यलिङ्गशेषप्रकरणम्

[1] $K_5$ adds कृत्प्रत्ययान्ता शब्दा [2] कुलम् $J_2$ [3] पटी $J_2$ [4] तेन प्रोक्तम् $J_2$ [5] $K_4$ adds ठक् [6] $J_2$, $K_4$ add कषायेण रक्त काषाय [7] शाटी $J_2$, $K_3$ [8] रत्नम् $K_4$

(विव.) कृतः कर्तर्यसंज्ञायाम् । कर्तृकारकविहिताः कृत्प्रत्ययान्ताः संज्ञाव्यतिरिक्तार्थाः परोपगा भवन्ति । यथा—सुखकरो वायुः। सुखकरी वृष्टिः। सुखकरं सज्जनसंभाषणमित्यादि । कर्तरि यथा—कर्ता, कर्त्री, कर्तृ इत्यादि । असज्ञायामिति किम्? हिनस्तीति सिंहः। व्याजिघ्रतीति व्याघ्रः इत्यादीना परोपगत्वं मा भूत् ॥ कृत्याः कर्तरि—नानार्थभेदकाः। 'तव्यत्तव्यानीयरः' (३. १. ९६) इत्यादिपाणिन्याचार्यपठिताः चित्याग्निचित्यादयश्च (३. १. १३२) कृत्यसञ्ज्ञकाः । तदन्ताः परोपगा भवन्ति । ते च कृत्याः कर्तरि कर्मणि वा भवन्ति । अत्राप्यसंज्ञायामित्येव । कर्तरि यथा—'वसेस्तव्यत् कर्तरि णिच्च' (वा. ३. १. ९६) इति वास्तव्यो विप्रः। वास्तव्या लक्ष्मीः। वास्तव्यं ब्राह्मणवृन्दम् । 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापत्या वा' (३. ४. ६८) इति । भवतीति भव्यम् । गायतीति गेयम् । गेयो माणवकः साम्नामित्याद्युदाहरणानि द्रष्टव्यानि (काशिका. १, पृ. २५२) ।

कर्मणि कृत्या यथा—'तयोरेव कृत्यक्तखलर्थाः' (३. ४. ७०) इति । तयोः भावकर्मणोरित्यर्थः। पक्तव्यास्तण्डुलाः। पक्तव्यं पायसम्। पचनीय ओदनः। पचनीया यवागूः इति । 'अचो यत्' (३. १. ९७) इति यत्प्रत्ययः। वह्यो रथः। वह्या अशीतिः। वह्यं शतमित्यादौ करणार्थेऽपि कृत्यप्रत्ययान्तस्य परोपगत्वमस्ति। अणाद्यन्ता इति । अत्राप्यसंज्ञायामित्यनुवर्तते । अस्यार्थः—'तेन रक्तं रागात्' (४. २. १.) इत्यारभ्य 'निष्प्रवाणिश्च' (५. ४. १६०) इत्येतदन्तेषु[1] संज्ञाव्यतिरिक्तार्थेषु विहिता ये अणादयः प्रत्ययाः, तदन्ताः शब्दा नानार्थभेदकाः, अनेकेषामर्थाना भेदका विशेषेण प्रतिपादकाः सन्तः परोपगा भवन्ति । यथा—कषायेण रक्तः काषायः। कुसुम्भेन रक्तः कौसुम्भः। माञ्जिष्ट इत्यादौ 'तेन रक्तं

रागात्' (४. २. १) इत्यण् । तथा—'लाक्षारोचनाशकलकर्दमाट्ठक्' (४. २. २) इति ठक् । लाक्षिकः, रौचनिक इति । 'शकलकर्दमाभ्यामणपीष्यते' (वा. ४. २. २) इति शाकलिकः, शाकलः ; कार्दमिकः, कार्दमः इत्यादि[2] । तथा—'नील्या अन् वक्तव्यः' (वा. ४. २. २) इति । नीलः पटः । नीला शाटी । नीलं वस्त्रमित्यादि[3] ।

'नक्षत्रेण युक्तः कालः' (४. २. ३) इत्यनेन कृत्तिकाभिर्युक्तमहः कार्तिकमहः । कार्तिको दिवसः । कार्तिकी तिथिः इत्यादि । 'परिवृतो रथः' (४. २. १०) इति । वस्त्रेण परिवृतो रथः वास्त्रो रथः । 'पाण्डुकम्बलादिनिः' (४. २. ११) इति । पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली इति । 'द्वैपवैयाघ्रादञ्' (४. २. १२) इति । द्वीपिनो विकारो द्वैपम् । तेन परिवृतो रथः द्वैपो रथः । एवं वैयाघ्रः । 'सास्य देवता' (४. २. २४) इति । इन्द्रो देवता अस्येति ऐन्द्रं हविः । ऐन्द्रः पुरोडाशः । ऐन्द्री दिक् इत्यादीनि बहून्युदाहरणानि ज्ञेयानि । असंज्ञायामिति किम्? 'सास्मिन् पौर्णमासीति संज्ञायाम्' (४. २. २१) इति संज्ञायां कन् । तस्य संज्ञाविषयत्वात् कार्तिको मास इति पुंलिङ्गत्वमेव । न तु अयनसंक्रान्त्यादिव्यावर्तकतया लिङ्गान्तरत्वम् । तथा—'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' (४. २. ९६) इति । कौलेयकः सारमेयः । कौक्षेयकः खड्गः । ग्रैवेयकं कण्ठभूषा इत्यादिसंज्ञाविषये विशेष्यनिघ्नत्वाभावात् । नानार्थभेदका इति किम्? नामैव नामधेयमित्यादौ[1] स्वार्थे कप्रत्ययानां प्रकृतिलिङ्गत्वम् । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यप्यतिवर्तन्ते' इति । अपीति वचनात् चत्वारो वर्णाः चातुर्वर्ण्यम् । देव एव देवता इत्यादौ प्रकृतिलिङ्गातिवृत्तिरपि भवति । तथा दौस्तिकम्, औष्ट्रकम्, राजकम्, गव्या, गोत्रा, पाश्या, गल्या इत्यादीनामणाद्यन्तभेदकत्वाभावात् नियतलिङ्गत्वमेव । न तु परोपगत्वमित्यादि विवेचनीयम् ॥ ४५ ॥

इति परोपगलिङ्गप्रकरणम्

[1] Gm3, Tj2 add सूत्रेषु [2] एव लाक्षिक रौचनिक शाकलिक कार्दमिकमित्यादि Gm3, Tj2 [3] B5, B6 add 'पीतात् कन् वक्तव्य इति । पीतक पट । पीतक वस्त्रम् । तथा 'हरिद्रामहारजनाभ्यामञ्' इत्यञ् । हारिद्र पट । हारिद्रा शाटी । हारिद्र वस्त्रम् इत्यादि. [4] 'भागरूपनामभ्यो धेय प्रत्ययो वक्तव्य' (वा ५ ४ २५).

(पा ) कृत कर्तर्यसज्ञायाम् । कर्त्रर्थे विहिता कृतो वाच्यलिङ्गा । कर्ता, कर्त्री, [1]कर्तृ । कारक , कारिका, कारकम् । असज्ञायामित्यनेन सज्ञाया न भवति । हिनस्तीति सिंह । व्याजिघ्रतीति व्याघ्र ॥ कृत्या कर्तरि कर्मणि । कर्तृकर्मणोर्विहिता कृत्यप्रत्यया वाच्यलिङ्गा । भव्य , भव्या, भव्यम् । वसतीति वास्तव्य [2]। वास्तव्यम् । क्रियत इति कर्तव्य । कर्तव्यम् । असज्ञायामेव । तिष्य । सूर्य ॥ अणाद्यन्तास्तेन रक्ता । 'तेन रक्त रागात्' (४ २ १) इत्याद्यर्थे विहिता अणाद्यन्ता वाच्यलिङ्गा । हरिद्रया रक्तो हारिद्र पट । हारिद्र [3]वस्त्रम् । इन्द्रो देवता अस्य [4]ऐन्द्रचरु । ऐन्द्र हविरित्यादि । असज्ञायामेव । कार्तिकी पौर्णमासी ॥ नानार्थभेदका । नानार्थविशेषणानि वाच्यलिङ्गानि । पुण्यो लोक [5] । पुण्यमह ॥ ४५ ॥

इति वाच्यलिङ्गशेष

[1] A1 omits [2] B3 adds वास्तव्या [3] पटम् C1, B3 adds हारिद्री पटी. [4] B3, C1 add ऐन्द्री ऋक् [5] पुण्या प्रजा B3

**षट्सज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्ययम् ।**
**परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः ॥ ४६ ॥**
**(इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**सामान्यकाण्डस्तृतीयः साङ्ग एव समर्थितः ॥)** *

* अय श्लोक दाक्षिणात्यव्याख्यानेषु न दृश्यते

(वि ) षट्सज्ञका —तिङव्ययम् । षट्सज्ञका षकारान्ता नकारान्ता सख्याशब्दा युष्मदस्मच्छब्दा तिङन्ताश्च शब्दा अव्ययसज्ञकाश्च शब्दा त्रिषु लिङ्गेषु समा एकरूपा । लिङ्गनिबन्धनरहिता[1] इत्यर्थ । षट्सज्ञा यथा—पञ्च बाणा । पञ्च स्त्रिय । पञ्च फलानि । युष्मदस्मच्छब्दा यथा—त्व पुमान् । त्व स्त्री । त्व नपुसकम् इत्यादि । अह पुमान् । अह स्त्री । अह नपुसकमित्यादि । तिङन्तो यथा—स तिष्ठति । सा तिष्ठति । तत् तिष्ठति । अव्ययसज्ञका यथा—नाना पुरुषा । नाना स्त्रिय । नाना रूपाणि ॥ पर विरोधे । अस्मिन् [2]वर्गे पूर्वापरविरोधे सति पर परलिङ्ग भवति । शेष तु ज्ञेय शिष्टप्रयोगत । इहास्मिन्

लिङ्गादिसंग्रहवर्गे शेषमनुक्तं लिङ्गशेषं शिष्टप्रयोगत. वृद्धव्यवहारतो ज्ञेयम् । यथा—अयं पचति । इयं पचति । वेदा. प्रमाणमित्यादि सर्वमनवद्यम् ॥ ४६ ॥

इति श्रीवङ्गलकामयभट्टोपाध्यायसूनुलिङ्गयसूरि-
विरचितायाममरकोशपदविवृतौ लिङ्गादिसंग्रहवर्ग.[3]

[1] °रूपविशेषरहिता $K_4$, $K_5$   [2] सर्गे $K_4$   [3] $J_2$ adds तृतीयकाण्ड समाप्त.। करकृतमपराधं क्षन्तुमर्हन्ति सन्त  $K_4$ adds 'यादृश पुस्तक दृष्ट तादृश लिखित मया । अबद्ध वा सुबद्ध वा मम दोषो न विद्यते ॥ $K_6$ adds पार्थिवाब्दे नभोमाससितकामदिने ददौ । सीतारामप्रभोर्लिङ्गाभट्टीय केशवद्विज ॥

(विव.) इह हि शब्दा द्विविधाः। व्यक्तलिङ्गाः, अव्यक्तलिङ्गाश्च। तत्र व्यक्तलिङ्गानामनुशासनं कृतम्। अन्येषामप्यभिधेयतया [1]प्रतिज्ञाताया अनभिधाने लिङ्गानुशासनपूर्णतोक्तेर्व्याहतिः स्यादिति मन्वानः संप्रत्यलिङ्गान्[2] निरूपयति—षट्संज्ञकाः—तिङव्ययम् इति। 'ष्णान्ता षट्' (१. १. २४), 'डति च' (१. १. २५) इति सूत्रद्वयेन पाणिन्यादिभिराचार्यैः षकारान्तस्य षट्शब्दस्य नकारान्ताना [3]पञ्चादीनामष्टादशपर्यन्तानां कतिशब्दस्य च षट्संज्ञया व्यवहारः कृतः। 'तिप् तस् झि' इत्यादीनां [4]लादेशानामष्टादशानां प्रत्ययानां 'तिङ्' इति संज्ञा परिभाषिता। तदुभयानुसारेणेदमुच्यते। [5]षट्संज्ञकाः शब्दाः युष्मदस्मच्छब्दाश्च तिङन्ताश्च अव्ययसंज्ञकाश्च त्रिषु लिङ्गेषु[6] समाः एकरूपाः, लिङ्गभेदनिबन्धनरूपविशेषरहिता इत्यर्थः। यथा—षट् कुम्भाः। षड् योषितः[7]। षट् कुण्डानि[8]। इमे पञ्च। इमाः[9] पञ्च। इमानि[10] पञ्च। दश पुत्राः। दश योषितः। दश कलत्राणि इत्यादि। 'संख्यासर्वनामतदन्तकाः' (श्लो. ४३) इति परोपगप्रकरणोक्तानामेव केषाचित् संख्यासंज्ञादिशब्दानां लिङ्गत्रयेऽप्यैकरूप्याद् अव्यक्तलिङ्गत्वेनेहाभिधानमित्यवधेयम्।

तथा त्वं पुमान्। त्वं भार्या। त्वं नपुसकम्। अहं पुमान्[11]। अहं भार्या[12]। अहं कलत्रम्। अयं पचति। इयं[13] पचति। इदं कलत्रं पचति। उच्चैर्वृक्षः। उच्चैः शाला। उच्चैर्गृहम्। नाना पुरुषाः। नाना स्त्रियः। नाना कुलानीत्यादि। अत्र शेषकारः—'षड्युष्मदस्मदन्ताश्च तत्प्रधानाः समास्त्रिषु' इति। तत्प्रधानाः युष्मदस्मच्छब्दप्रधानाः, षड्युष्मदस्मच्छब्दान्ताः त्रिषु लिङ्गेषु समा समाना[14]

भवन्ति । यथा--परमपञ्च । परमषट् । परमसप्त । परमत्वम् । परमाहमित्यादि । तत्प्रधाना इति किम् ? पञ्चपानिमान् पश्य । पञ्चषा इमाः पश्य । पञ्चषाणीमानि पश्येति । उपपञ्चान् । उपपञ्चाः । उपपञ्चानि । युष्मानतिक्रान्तान् अतियुष्मान् । अत्यस्मानिति ॥

## इत्यलिङ्गप्रकरणम्

[1] प्रतिज्ञा पराहता स्यात् Tj1, Tj2 [2] अव्यक्तलिङ्गान् Tj2. [3] पञ्चन्नादीनाम् Tj2. [4] °लादिप्रत्ययाना Tj1. [5] पकारनकारान्ता· सख्याशब्दा. कति शब्दश्च B5, B6 [6] Gm3 omits [7] स्त्रिय Tj1. [8] फलानि Tj1. [9] Tj1 adds स्त्रिय [10] फलानि Tj1 [11] राजा Tj1, Tj2 [12] स्त्री Tj1, Tj2 [13] Tj2 adds स्त्री. [14] समानरूपा. Tj1.

इह ग्रन्थे लिङ्गविशेषविधेरेव[1] पूर्वविध्यपेक्षया प्राबल्यमुक्तम् । अधुना लिङ्गविशेषस्थयोरेव विध्योर्मिथो विरोधे [2]कस्य प्राबल्यमित्यपेक्षायामाह--परं विरोधे । अत्र वर्गे पूर्वापरविरोधे [3]परमेव लिङ्गं भवतीत्यर्थः । यथा--'[4]पुंस्त्वे सभेदानुचराः सपर्यायाः सुरासुराः' (श्लो. ११) इति । सुरासुरवाचकशब्दानां पुंलिङ्गत्वमुक्तम् । अनन्तरं तेषामेव शब्दानां 'द्विचतुःषट्पदोरगाः जातिभेदाः' (श्लो. ३७) इति स्त्रीपुंसकत्वमुक्तम् । तथा असुरपर्यायतया रक्षःशब्दस्य पुंलिङ्गत्वमुक्तम् । अनन्तरं 'द्व्यचक्कर्मसिसुसन्नन्तम्' (श्लो. २४) इति नपुंसकलिङ्गत्वमुक्तम्[5] । तयोर्विरोधे परत्वाद् नपुंसकमेव भवतीत्यादि ॥

इह आचार्यः स्वग्रन्थे नाम्नां लिङ्गानामनुशासनस्य साकल्येनाकृतत्वाद् न्यूनतादोषमाशङ्क्य 'संपूर्णमुच्यते' (१, पृ. ३) इति स्वकृतिप्रतिज्ञाया व्याहतिं परिहरति[6]--शेषं तु ज्ञेयं शिष्टप्रयोगतः इति । अयमर्थः--इहास्माभिरज्ञानाद् अस्मरणाद् [7]अत्यन्तोपयोगाभावेन ग्रन्थगौरवभयाद्वा यद् नाम्नां नानुशिष्टं तत् सर्वं शिष्टानां महाकवीनां प्रयोगानालोच्य शिष्टानुशिष्टग्रन्थानप्याकलय्य[8] सम्यगवगन्तव्यमिति[9] । यथा--विष्णुपर्यायेषु [10]मुञ्जकेशादयः शब्दा नाभिहिताः । [11]शंभुपर्यायेषु अहिर्बुध्न्यादयो नोक्ताः । समुद्रभेदेषु क्षीरोदवाचककलशाम्बुधिशब्दः परित्यक्तः । बिन्दुपर्यायेषु तुन्तुरपशब्दो न स्मृतः । एवमादयः शब्दा बहवः तत्पर्यायानुशासनप्रस्तावेषु न गणिताः । तथा [12]वृक्षलतापक्षिसरीसृपभेदा नानुशिष्टाः ।

[1] °विधिरेव $B_5$　　[2] कथ निर्णय $Tj_1$　　[3] परविध्युपस्थायि तमेव लिङ्ग ग्राह्यम् $Tj_1$　　[4] सुरासुरपर्यायाणा पुंलिङ्गत्वमुक्तम् $Tj_1$　　[5] उपस्थापितम् $Tj_2$　　[6] आशङ्क्य आह $Tj_1$, $Tj_2$　　[7] उपयोगातिशयाभावेन $Tj_1$　　[8] °शिष्टप्रयोगाना° $Gm_3$　　[9] परिज्ञातव्यम् $Tj_1$, $Tj_2$　　[10] मुञ्जकेश्यादि नाभिहितम् $Tj_2$　　[11] Tv adds अनुशिष्टेष्वपि क्वचित क्वचित् केचन पर्याया न निबद्धा　　[12] °लताधान्य° $Gm_3$

तथा नानार्थवर्गेऽपि कतिचिदेव [1]नानार्थवाचकाः शब्दाः कथिताः । तेषामपि अन्त्यवर्णस्यैव नियमतो वर्गीकरणम् । वर्गान्तरस्य तदर्थानामपि कियतामेवाभिधानम् । न तु सर्वेषामर्थानाम् । तथा कोरकमौक्तिकादिशब्दानां [2]विद्यमानेऽप्यनेकलिङ्गत्वं नाभिहितम्[3] । [4]किंच लिङ्गसंग्रहेऽपि बहुवक्तव्यमस्ति । यथा—'इक्श्तिपौ धातुनिर्देशे' (वा. ३. ३. १०८) इत्यनेन धातुमात्रनिर्देशे प्रत्ययद्वयं शास्त्रे कथितम् । तदिह नोक्तम्[5] । अपि च [6]स्वार्थिकप्रत्ययानामपि कतिचिदेव नानार्थवाचकाः शब्दाः कथिताः । केषाचित् प्रकृतिलिङ्गातिवृत्तिर्दृश्यते । यथा—चत्वारो वर्णा एव चातुर्वर्ण्यम् । छन्दसामण्प्रत्यये गायत्र्येव गायत्रम् । त्रिष्टुबेव त्रैष्टुभम् । जगत्येव जागतम् । तथा समासविधेः [7]तयप्प्रत्ययान्तस्य स्त्रीनपुसकोभयलिङ्गत्वं दृश्यते । यथा—'अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे' (नैषध. १. २३) । 'स्तनद्वयं चारु तथा प्रवृद्धम्' (कु सं. १. ४०) । 'जगत्त्रयीपण्डितमण्डितैषा सभा न भूता न च भाविनी सा' (नैषध. १०. ७१) । 'भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम्' (नैषध. २. १८) इत्यादि । अथ नियतलिङ्गा·—वेदाः प्रमाणम् । स्मृतयः प्रमाणम् । तन्मे प्रमाणं शिवः । प्रमाणमिव ब्रह्मणि । गमने मङ्गलं ब्राह्मणाशिषः । विप्राशिषो भद्रमित्यादिकमनेकमिह[8] शब्दराशेर्निबन्द्धुमशक्यतया सामान्यतः प्रकृतिप्रत्ययमुखेनैव चिरंतनशिष्टानुशिष्टप्रबन्धपरिशीलिना च नामलिङ्गानि परिज्ञातव्यानीत्युपदेशः नामलिङ्गानुशासनप्रभेद एवेति तदुक्तिप्रतिज्ञाया न काचिद् व्याहतिः । किंतु सपूर्णतैव निर्व्यूढेत्यभिप्रायः ॥ ४६ ॥

[1] शब्दा नानार्थवाचकत्वेनोक्ता $Tj_2$　　[2] विद्यमानमपि $Tj_1$　　[3] नाख्यातम् $Gm_3$　　[4] $Tj_1$, $Tj_2$ add अव्ययवर्गेऽपि अव्ययाना तदर्थाना च साकल्य नैव दृश्यते　　[5] भिदि छिदि , पचति , पठति (काशिका १, पृ २२३)　　[6] स्वार्थे कप्रत्ययानामपकर्षे केषाचित् . . . $B_5$, $B_6$　　[7] 'सङ्ख्याया अवयवे तयप' । 'द्वित्रिभ्या तयस्यायज्वा'　　[8] इह बहुभिरुदाहर्तव्यम् $Gm_3$.

इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।
तृतीयकाण्डः सामान्यः साङ्ग एव समर्थितः ॥

निगदव्याख्यानमेतत् ।

व्याचष्टामरसिंहोक्ते नामलिङ्गानुशासने ।
बोम्मगण्टचप्पयाचार्यो वर्गं लिङ्गादिसंग्रहम् ॥
इह यत् त्यक्तमज्ञानादालस्याद् यदुपेक्षितम् ।
प्रमादादन्यथोक्तं यद् विद्वद्भिस्तद् विशोध्यताम् ॥

Additional verses in Gm1, Gm3

आद्यो वेदविदां कणादकपिलव्यासाहिराडङ्घ्रिद्-
ग्जैमिन्यादिसमष्टिमूर्तिरवधिः स्मार्तक्रियावेदिनाम् ।
व्याचष्टामरसिंहनाथरचितं ग्रन्थं निघण्टूत्तमं
ख्यातं शिष्यहितार्थमप्पयसुधीः श्रीमारपोताभिधः ॥
रेचर्लवंशसंभूतेरास्थान्यां शिङ्गभूपतेः ।
बोम्मगण्ड्यप्पयाचार्यमूर्त्या जागर्ति शारदा ॥
कुमारशिङ्गभूपेन लक्ष्यलक्षणवेदिना ।
शोधितश्चेदयं ग्रन्थः किं शोध्यं शोधकान्तरैः ॥
कुमारशिङ्गभूपेन यः कदापि न शोधितः ।
स ग्रन्थः शोधितोऽप्यन्यैः किं बुधैर्व्यवह्रियते ॥
काव्यालंकारनानार्थतत्त्वभावितमानसः ।
कुमारशिङ्गभूपाल एक एवास्ति नापरः ॥
कुमारशिङ्गभूपालकृतयस्तस्य नित्यशः ।
एधयन्ति मुदं दृष्ट्वा दृष्टाल्लाकृतिनः परम् ॥
जैवातृकं बुधगुरुं निलयं कलानां
सर्वज्ञमूर्धमणिमाश्रितशुद्धपक्षम् ।
श्रीबोम्मकण्ठ्युपपदाङ्कितमप्पयार्यं
सर्वेष्टितोषितसुरं द्विजराजमाहुः ॥
व्याख्यद् यो गौतमीयं कणभु . . . शास्त्रं समस्तं
येन व्याकारि भाष्यं फणिपतिगदितं कैयटं वीक्ष्य . . ।

. यत्नप्रयोगः शबरमुनिमतं व्याकृतं द्विप्रभेदं
व्याकर्ता व्यासवाचा स जयति भुवने बोम्मगण्टचप्पयार्यः ॥

The scribe adds

श्रीबोम्मकण्ठचप्पयवाक्यवृत्ति
संजीवनीं सत्सदि शाब्दिकानाम् ।
मत्वा तदीयामरसिंहटीका
पतञ्जलि. प्रौढमुखो लिलेख ॥
सौम्यनामसवत्सर वैशाख शु. सोमवार वरकु व्रासिनेनु

(पा) षट्सञ्ज्ञकास्त्रिषु समा । षट्सञ्ज्ञका शब्दा त्रिलिङ्गेषु समा सरूपा । पञ्च नरा । पञ्च स्त्रिय । कति नरा । कति स्त्रिय । युष्मदस्मत्तिङव्ययम् । युष्मदादय त्रिलिङ्गचा सरूपा । त्व पुमान् । त्व स्त्री । त्वमपत्यम् । अह पुमान् । अह स्त्री । स गच्छति । सा गच्छति । स इव । सेव ॥ पर विरोधे । पूर्वलिङ्गपरलिङ्गयो विप्रतिषेधे परलिङ्ग ग्राह्यम् । द्व्यह । त्र्यह । 'अदन्तैद्विगुरेकार्थे' (पृ ६५६, श्लो ३) इति स्त्रीलिङ्ग न भवति ॥ पुण्याहम्, सुदिनाहम् । 'अह्नाहान्ता' (पृ ६८४, श्लो १२) इति पुलिङ्ग न भवति ॥ शेष तु ज्ञेय शिष्टप्रयोगत । अनुक्तशेषलिङ्गानि शिष्टप्रयोगाद् बोध्यानि । तथा चोक्तम्—

'वक्ता वाचस्पतिर्यत्र श्रोता शक्रस्तथापि तौ ।
शब्दपारायणस्यान्त न गतौ तत्र के वयम्' ॥
इति श्रीवत्सनृसिहसूरिसुतमल्लिनाथसुधीविरचिते
अमरपदपारिजाते लिङ्गादिसग्रहवर्गं
श्रीवत्सान्वयमान्यन मल्लिनाथेन निर्मिते ।
व्याख्यानेऽमरसिंहस्य तृतीय काण्ड उम्भित ॥
वामा वामाङ्कभूपामधरमधुसुधा याचिते पुष्टिराजे
रत्नैरापूर्णकुम्भ मम दिशसि यदि त्व गृहाणेत्यवादीत् ।
नेत्येव ता ब्रुवाणे जठरफणिपतेर्दर्शमात्रे स तस्मिन्
केशीभार मयूर गतवति च सदा सान्त्वयन् व पुनातु ॥

पद्मानि वोधयत्यर्कः काव्यानि कुरुते कविः ।
तत्सौरभं नभस्वाश्च सन्तो जानन्ति तद्‌गुणान् ॥
कवेरमरसिंहस्य कृतिरेया सुनिर्मला ।
आचन्द्रतारक स्थेयान्नामलिङ्गानुशासनम् ॥
प्रागल्भ्य प्रकटीकृतं पदकलाकूपारपारीणधी-
गन्धाढयैर्वुधसिन्धुरैरमरकृन्द्भावार्थजात्यन्धकैः ।
तैः किं नो जगतीतले विधिवचोलीलासुधीः . . .
जानीते नितरा स एव तदनु श्रीमल्लिनाथः स्वयम् ॥

अमरकोशः समाप्तः